# श्रीसिद्धान्तशिखामणिसमीक्षा

## ( षड्दर्शनीतुलनात्मिका )



श्री जगद्गुरु डॉ. चन्द्रशेखर शिवाचार्य महास्वामी जी

*शोधप्रकाशन ग्रन्थमाला–७३*

# श्रीसिद्धान्तशिखामणिसमीक्षा

## (षड्दर्शनीतुलनात्मिका)

## राष्ट्रभाषानुवादसहिता

*प्रणेता*
काव्य-सर्वदर्शनतीर्थ, वेदान्ताचार्य, विद्यावारिधि, विद्यावाचस्पति
विश्वाराध्यज्ञानसिंहासनाधीश्वर
**श्रीजगद्गुरु डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी**



*हिन्दी अनुवादक*
**श्रीमती भुवनेश्वरी भारद्वाज**
सहायकप्रोफेसर संस्कृत एवं प्राकृतभाषा विभाग
लखनऊ विश्वविद्यालय, लखनऊ

**शैवभारती शोध प्रतिष्ठान**
जंगमवाडी मठ, वाराणसी

*Research Publications Series–73*

# ŚRĪSIDDHĀNTAŚIKHĀMAṆISAMĪKṢĀ

**(A Comparative study with six Indian schools of thought)**

*By*

**Śrī Jagadguru Viśvārādhya Jñānasiṁhāsanādhīśvara**
**Śrī 1008 Jagadguru Dr. Candraśekhara Śivācārya**
**Mahāswāmījī**
Jangamawadimath, Varanasi



*Hindi Translation By*

**Mrs. Bhuvaneśvarī Bhāradwāj**
Assistant Professor, Department of Sanskrit & Prakrīt
Lucknow University, Lucknow

**SHAIVA BHARATI SHODHA PRATISHTHAN**
Jangamawadimath, Varanasi

*Published by*
**SHAIVA BHARATI SHODHA PRATISHTHAN**
D. 35/77, Jangamawadimath
Varanasi-221001



First Published : 2014

ISBN : 978-93-82639-13-8

Price : Rs. 1000/- (One thousand Only)

*DTP*
**Design Point,** Varanasi

*Printed at*
**Mittal Offset**
Kaushalesh Nagar
Sundarpur, Varanasi

# Dedication



**The book is dedicated to
Shri 1008 Jagadguru
Vishveshwar Shivacharya Mahaswamiji
on the occasion of
Silver Jubilee of Punyaradhane (29-09-2014)
on behalf of all the
Jagadgurus of Jnanasimhasan Peeth**



**Shri 1008 Jagadguru**
**Dr. Chandrashekhar Shivacharya Mahaswamiji's**
**Silver Jubilee of Coronation - 11-11-2014**

।।श्रीकाशीविश्वेश्वरः शरणम्।।

# अनुशंसा

**समुच्छलन्त्यै जगदात्मिकायै शान्तस्वरूपाय सदाशिवाय।**
**सते भवन्त्यै भवते च सत्यै नमः शिवायै च नमः शिवाय।।**

श्रीशिवा से लाडितचरणारविन्द भगवान् शिव उन समस्त जीवों के सर्वोच्च उपास्य एवं प्राप्य है; जो शिव की विश्वमयी अवस्था में उपस्थित रहते हैं।

श्रीशिवप्राप्ति, श्रीशिवानुग्रह बिना सम्भव नहीं होती। तद्वत् श्रीशिवार्चन बिना श्रीशिवानुग्रह-प्राप्ति सम्भव नहीं है एवम् अर्चन-बोध श्रीसद्गुरु के कृपापूर्ण मार्गदर्शन बिना सम्भव नहीं है। इन का सम्यक् प्रबोध एवं अनुष्ठान-आचरण हेतु समस्त ज्ञान-विज्ञान के आकर निगम (शिवनिःश्वास) तथा आगम (शिवमुख-निःसृत शिववाक्) का सम्प्रवर्तन हुआ –यह सर्वविदित है।

निगमागमवन में विखरे हुए सिद्धान्तों का दार्शनिक विवेचन **श्रीसिद्धान्तशिखामणि** – दर्शनग्रन्थरत्न में किया गया है। इसमें सर्वश्रुतिप्रामाण्य का पूर्ण समादर प्राप्त है। वीरशैवागमदर्शन के साथ अन्य दार्शनिक प्रस्थानों के महान् अध्येता डॉ० चन्द्रशेखर शर्मा हिरेमठ महोदय ने 'श्रीसिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा' शीर्षक शोधकार्य अत्यन्त नैपुणी एवं सुबोध शैली में गुरुदेव डा० देवस्वरूपमिश्रमहोदय के मार्गदर्शन में सम्पूर्णानन्द संस्कृत विश्वविद्यालय में सम्पन्न किया था।

१९८९ ई० में इस शोधप्रबन्ध का सिद्धाशिखामणिसमीक्षा – नाम से ग्रन्थरूप में प्रथम प्रकाशन किया गया था। जिज्ञासुजन की प्रार्थना से श्री १००८ जगद्गुरु डॉ० चन्द्रशेखरशिवाचार्यमहास्वामी (पूर्वनाम डा० चन्द्रशेखर शर्मा हिरेमठ) जी की आज्ञा से मेरी ज्येष्ठपुत्री श्रीमती भुवनेश्वरीभारद्वाज (धर्मपत्नी– डॉ० पवनकुमारदीक्षित) ने नैपुणी के साथ इस ग्रन्थ का राष्ट्रभाषा (हिन्दी) में अनुवाद किया है।

षड्दर्शनों के साथ वीरशैवदर्शन के मुख्य सिद्धान्तों का सूक्ष्म स्वरूपबोध तथा साधना-पद्धति (वीरशैवागमसम्मत) का पूर्ण अवबोध इस ग्रन्थ **श्रीसिद्धान्तशिखामणि** (षड्दर्शनीतुलनात्मिका) राष्ट्रभाषानुवादसहिता के अध्ययन से अल्पायास द्वारा हिन्दी-भाषा के माध्यम से भी जिज्ञासु पाठक एवम् साधक को समान रूप से प्राप्त होगा। इस ग्रन्थ में षड्दर्शनी-न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसा तथा उत्तरमीमांसा के सिद्धान्तों की तुलना के साथ श्रीसिद्धान्तशिखामणि ग्रन्थ में प्रतिपादित वीरशैवागम दर्शन के सिद्धान्त-रत्नों का समीक्षात्मक आलोक प्रसृत होता है।

मैं मूलग्रन्थकार एवम् अनुवादिका के मङ्गलमय आयुष्य की कामना करता हूँ।

निवेदक –

**प्रो० कमलेश झा**
अध्यक्ष, धर्मागमविभाग
संस्कृतविद्याधर्मविज्ञानसंकाय
काशीहिन्दूविश्वविद्यालय
वाराणसी-२२१००५

आवाससंकेत–
बी. ३४/१४०ए ३ के
गायत्रीनगर, शुकुलपुरा
वाराणसी-२२१०१०

श्रीमद्रम्भापुरीवीरसिंहासनाधीश्वराणां श्री १००८ जगद्गुरुप्रसन्नरेणुक-
वीररुद्रमुनिशिवाचार्यभगवत्पादमहास्वामिनां

# शुभाशीर्वचनम्

मानवकल्याणार्थं प्रवृत्तेषु भारतीयदर्शनेषु विशिष्टमिदं वीरशैवदर्शनम्। द्वैताद्वैतश्रुतीनां समन्वयसिद्धान्तप्रतिपादनमेवास्य वैशिष्ट्यम्। तदुक्तं भगवता भाष्यकारेण श्रीपतिपण्डिताराध्येन–

श्रुत्येकदेशप्रामाण्यं द्वैताद्वैतमतादिषु।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः।।इति।

एवं श्रुतिसमन्वयाय प्रवृत्तोऽयं सिद्धान्तः कामिकादिवातुलान्तानां सिद्धान्तागमानामुत्तरभागे निरूपितोऽस्ति। स एव सिद्धान्तः शिवयोगिशिवाचार्येण सिद्धान्तशिखामण्याख्ये ग्रन्थे विस्तरेण प्रतिपादितः। वीरशैवदार्शनिकतत्त्वनिरूपकेषु ग्रन्थेषु सिद्धान्तशिखामणिरेव प्राचीनतमः प्रामाणिकश्च ग्रन्थः।

ग्रन्थेऽस्मिन् भगवत्पादरेणुकाचार्येण महर्षिमगस्त्यमुद्दिश्योपदिष्टः षट्स्थल-सिद्धान्त एकोत्तरशतस्थलेषु विस्तारितः। तेषु चतुश्चत्वारिंशत्स्थलान्यङ्गस्थलानीति, सप्तपञ्चाशत्स्थलानि लिङ्गस्थलानीति प्रख्यातानि सन्ति। अत्र प्रतिपादितः सिद्धान्तो ज्ञानकर्मसमुच्चयात्मकः। तदुक्तं तत्रैव–

ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते।
फलाभिसन्धिरहितं तस्मात् कर्म न सन्त्यजेत्।।
ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्।।इति।

सिद्धान्तशिखामण्युक्तो हि सिद्धान्तः समन्वयात्मकः। अत एव श्रीरेणुकभगवत्पादाः–

अगस्त्य बहुधा ख्याताः सिद्धान्ता रुचिभेदतः।
भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः।।
सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
एतानि मानभूतानि न हन्तव्यानि युक्तिभिः।।

इत्यत्र कस्यापि दर्शनस्य खण्डनं न विधेयमिति सुस्पष्टमादिष्टवन्तः।

वीरशैवसिद्धान्ते चिच्छक्तिविशिष्टः परशिवो हि परमं तत्त्वम्। तस्यैवांशरूपा अणुभूताश्च जीवाः। आणवादिमलत्रयावृतत्वेन जीवात्मानो नानादुःखभाजो भवन्ति। त एव यदा शक्तिनिपातपूर्वकेण सद्गुरुकृतवेधादि-दीक्षात्रयसंस्कारेण षट्स्थलज्ञानोपदेशेन च निर्धूतमलाः सन्तः शिवज्ञानिनो भवन्ति, तदा मुक्ता इत्युच्यन्ते। तदुक्तम्–

**जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।**
**निरस्यते गुरोर्बोधाद् ज्ञानशक्तिः प्रकाश्यते।।** इति।

जीवस्य मुक्तावस्था ह्यत्र शिवेन सह सामरस्यरूपा। तदुक्तं पूज्यपादैः–

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितः।**
**परब्रह्मणि लीनात्मा विभागेन न दृश्यते।।इति।**

सिद्धान्तेऽस्मिन् सृष्ट्यादिपञ्चकृत्यानि तु शक्तिविशिष्टस्य परशिवस्य लीलारूपाणीत्यभ्युपगम्यते।

कर्नाटकप्रदेशीयगुलेदगुड्ड-अमरेश्वरमठाध्यक्षेणाबाल्यं सरस्वतीसमुपासकेन विद्वद्वरेण्येन डॉ० चन्द्रशेखरशिवाचार्येण 'सिद्धान्तशिखामणिसमीक्षा' इत्याख्येस्मिन् शोधप्रबन्धे उपर्युक्तानां शिव-जीव-जगद्-बन्ध-मोक्षाख्यानां वीरशैवदार्शनिक-सिद्धान्तानां भारतीयषड्दर्शनाभिमतदार्शनिकसिद्धान्तैः सह सम्यक् समीक्षा विहिता। एतदवलोक्य महानानन्दो जातः। एतद्ग्रन्थाध्ययनेन छात्रा विद्वांसश्च बहुलाभान्विता भविष्यन्तीत्यत्र न शङ्कालवलेशोऽपि। अन्ते वयं भूयो भूय आशीर्वादप्रदानेनाशास्महे यदनेन लेखकेनैतादृशानि कृतिरत्नानि विपुलानि विरचितानि भवेयुरिति शिवम्।

जङ्गमवाडीमठः,
१४.१०.१९८९.

समस्तसन्मङ्गलानि भवन्तु
इत्यनन्तशिवाशिषः

# विद्वत्संमतयः

-१-

निजशक्तिभित्तिनिर्मितनिखिलजगज्जालचित्रनिकुरुम्बः।
स जयति शिवः परात्मा निखिलागमसारसर्वस्वम्।।

(श्रीकण्ठाचार्यकृतब्रह्मसूत्रभाष्ये)

सन्ति दर्शनप्रस्थानानि बहूनि बहुमुखानि चिराय प्रतिष्ठितानि भारते। भिद्यन्ते चेमानि प्रस्थानानि बहुधा। विवदन्ते विप्रतिपद्यन्ते चापि क्वचित् क्वचिदिमानि शतधा परस्परम्। दृश्यन्ते चैकस्मिन्नेव दर्शने प्रस्थानभेदास्तत्तदाचार्यप्रवर्तितमतभेदाधीनाः। यथा शाङ्करमद्वैतदर्शनं प्रस्तुत्याभ्यधायि श्रीमदप्पय्यदीक्षितेन्द्रैः सिद्धान्तलेशसंग्रहे–

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभेदान् सम्प्राप्य शौरिपदोद्गता।

यथा विष्णुपादोद्गता गङ्गावारिधारा तांस्तान् भूविशेषान् प्राप्य धारयत्युच्चावचान् रूपभेदान्, तथैवाद्वैतब्रह्मतत्त्वघोषिणी शाङ्करी वचनधारापि तैस्तैस्तदुपबृंहणकर्तृभिराचार्यैः सहस्रधा भिन्नानि रूपाणि ग्राहितेति दीक्षितपद्याशयः। एवं स्थिते एकस्मिन्नेव दर्शने प्रस्थानवैषम्ये विभिन्नाचार्यप्रवर्तितेषु विभिन्नोद्देश्यसाधनाय प्रवृत्तेषु स्थितानां वैषम्याणां विषये किमु वक्तव्यम्। परमिदं चित्रं प्रतिभाति यदिमानि विभिन्नपथगामीन्यपि दर्शनानि परमसुखप्राप्तिरूपचरमलक्ष्यविषये सम्मन्यन्ते संवदन्ते सम्मिलन्ति च। अत एव दर्शनरहस्यज्ञा आचार्याः सर्वदर्शनसामरस्यसिद्धान्तं स्वीचक्रुस्तत्र तत्र स्वग्रन्थेषु। प्रसिद्धा चेयं घोषणा बृहदारण्यकवार्त्तिके सुरेश्वराचार्याणाम्–

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता।।इति।

तदिदं दर्शनसामरस्यतत्त्वं काव्यपथेन प्रत्यपीपदन् कविवरा नीलकण्ठदीक्षिता अपि शिवलीलार्णवे महाकाव्ये–

एकमातृप्रसूतानामैकमत्यप्रवर्तिनाम् ।
स्ववैमत्येन वैमत्यं शास्त्राणां बालिशा जगुः।।इति।

इमामेव वाग्धोरणीमनुरुणद्धिरभाणि वर्तमानयुगे भारतीयं दर्शनं पश्चिमदिक्प्रतिष्ठेषु विदेशेषु व्याचक्षाणैर्विवेकानन्दस्वामिपादैः–"तावद् वर्धन्तामिमे दार्शनिकाः प्रस्थानभेदा यावदेकैकोऽपि पुरुषो भवेत् प्रस्थानमेकम्। प्रस्थानानीमानि भवन्ति सङ्केताः प्राणशक्तेः। यथा यथा प्रवर्धते प्रवाहावेगस्तथा तथा खलु भूयिष्ठं भवन्त्येवावर्तगर्तास्तरङ्गभङ्गाः कल्लोलमालाश्च" इति।

तदिदं परमरमणीयं दर्शनभेदतात्पर्यसारमनवधारयद्भिरेव प्रस्थानभेदमाश्रित्य कलहायितं कटु भाषितं क्वचित्, आक्रुष्टं विद्विष्टं वा क्वचित् क्वचित्। अत एवैतत्परिहारायाभिलषणीया भवति सर्वैः सर्वत्र सौमनस्यमतिः। सोऽयं सर्वदर्शनसामरस्यमार्गो विशेषतः साम्प्रतिके युगे उपादेयो भवति समाजस्य। अत एव साम्प्रतिकसमाजप्रतिष्ठैः सर्वैरप्यवधातव्यः श्रोतव्यो मन्तव्यश्च भवति सर्वदर्शनतत्त्वसारः। अत एवानया दिशा बहूपादेयो भवति वीरशैवदर्शनधुरन्धरेण शिवयोगिशिवाचार्येण (ख्रि० श० ८००) प्रणीतः सिद्धान्तशिखामणिर्वीर-शैवसिद्धान्तप्रस्थानस्य सरलसरससंग्रहात्मकः, यस्य सर्वजनहृदयंगमा समीक्षा क्रियतेऽस्मिन् ग्रन्थे तरुणैर्विद्वद्भिः डॉ० चन्द्रशेखरशर्म(चन्द्रशेखरशिवाचार्य) हिरेमठमहोदयैरस्मद्विश्वविद्यालयवेदान्तविद्यावंशप्रसूनैः। ग्रन्थोऽयमेतेषां विद्यावारिध्युपाध्यर्थं समर्पितः स्वीकृतश्चेति भूयिष्ठं परितोषपदं नः।

तमेनं भारतसर्वकारस्य शिक्षामन्त्र्यालयस्यार्थिकेन साहाय्येन, जङ्गमवाडीमठस्थेन शैवभारतीभवनाख्येन प्रकाशनसंस्थानेन प्रकाशितं पाठकहस्तेषु समर्पयतां नः समुदेति प्रहर्षभूमा। तत्रेमे सन्ति हेतवो बहवः– लेखकोऽस्मद्विश्वविद्यालयस्य छात्रः शोधछात्रश्चेति तस्मिन्नात्मीयभावः प्रथमः। आह स्म किल महाकविः कालिदासः–"सर्वः कान्तमात्मीयं पश्यति" इति। तत्रापि छात्रेष्वयमध्ययनपरायणः स्वशास्त्रे सम्यग् व्युत्पन्नश्चेति द्वितीयः। समीक्षितो ग्रन्थश्चायं वीरशैवसिद्धान्तजिज्ञासूनां परमोपकारकः प्राचीनतमः प्रामाणिकश्चेति तृतीयः। ग्रन्थस्यास्य श्रेष्ठताविषये मन्य इदमेव पर्याप्तं मनसि कर्तुं यदेनं ग्रन्थं समीक्षकोऽयं तुलयति श्रीमद्भगवद्गीतयेति (दृश्यतां पृ० ३४)। समीक्षा या चात्र कृता डॉ० चन्द्रशेखरशिवाचार्येण, सापि बहुदर्शनतोलनपरा नितरां साधीयसी श्रेयसी सर्वजनमनोहारिणी चेति तुरीयः। ग्रन्थस्यास्य प्रकाशनं

च काशीनगरे चिराय प्राप्तप्रतिष्ठेन जङ्गमवाडीमठेन क्रियत इति पञ्चमः। तदेवमस्मिन् ग्रन्थप्रकाशने समवेतान् बहुविधान् बहून् गुणान् वीक्ष्य "भवन्ति भव्येषु हि पक्षपाताः" इति न्यायेन जातादरा वयमाशास्महे ग्रन्थोऽयं लब्धभूयिष्ठप्रचारो विद्वत्परितोषाय प्रकल्पतामिति।

इदमप्यत्र कल्पते परितोषभूम्ने नो यदिदं वीरशैवमिति नामापि आपाततो 'वीर'शब्दप्रयोगेण सामरस्यप्रतिभटत्वेन प्रतिभासमानमपि परमार्थतः सामरस्योपष्टम्भकं प्रत्यपादि एतद्ग्रन्थकारैः। अतो वीरशैवशब्दस्येयं व्युत्पत्तिर्वैय्याकरणमार्गविरुद्धापि धारयत्येव विशिष्टं चारिमाणं कमपि–

विरोधार्थो विशब्दः स्याद् रशब्दो रहितार्थकः।
विरोधरहितं शैवं वीरशैवं विदुर्बुधाः।।

अन्ते चेदमेवाशास्महे क्रियासमभिहारेण, समेधतां सर्वत्र जगतीदृशी सर्वसमन्वयदृष्टिर्लोककल्याणकारिणीति सर्वं सर्वतो भद्रम्।

वाराणसी<br>
१७.८.१९८९<br>
(श्रावणी पूर्णिमा २०४६ वि०सं०)

प्रो० वि० वेङ्कटाचलम्<br>
कुलपतिः<br>
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

- २ -

अमरीकबरीभारभ्रमरीमुखरीकृतम् ।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम्।।

अस्ति किल वीरशैवदर्शनं शक्तिविशिष्टाद्वैतापरपर्यायं विज्ञविज्ञेयं पारिभाषिकपदपदार्थमतिगुम्फितं लोकप्रसिद्धम्। तद्विषयनिरूपणपरपरम-प्रकर्षप्राप्तभूमयो यद्यपि सन्ति बहवो ग्रन्था लघवो महान्तश्च, किन्तु तेषु परमशिरोमणिः सिद्धान्तशिखामणिग्रन्थ इत्यत्र न संशयलेशोऽपि। तमेव ग्रन्थमधिकृत्य तथाविधेनैव विदुषा डॉ० चन्द्रशेखरशर्मणा (शिवाचार्येण) वेदान्ताचार्येण सिद्धान्तशिखामणिसमीक्षेतिनामा ग्रन्थः प्रणीतः। तत्र च कटुकौषधशमनीयस्य रोगस्य सितशर्कराशमनीयत्वे कस्य रोगिणः प्रवृत्तिः साधीयसी न स्यादिति शिष्टोक्तसूक्तिसुयुक्तिन्यायेन तेषु तेषु ग्रन्थेषु यत्र तत्र साधारणजनाग्राह्यतां प्राप्तान् पदार्थान् क्वचित् स्पष्टान् क्वचिन्निगूढान् क्वचिदवश्यव्याख्येयानाकलय्य ग्रन्थकृता रचितोऽयं प्रबन्धः। मया तु ग्रन्थोऽयं श्रुतः पठितो मतोऽनुध्यातश्च।

वीरशैवदर्शनस्य शक्तिविशिष्टाद्वैतवेदान्तस्य संरक्षणाय परिवर्धनाय च प्राचीनैराचार्यैः काले काले यत्नो विहितः। अत एव शिवावतारत्वेन जगति प्रसिद्धैरशेषशास्त्रनिष्णातैर्महामहोपाध्यायशिवकुमारशास्त्रिचरणैर्लिङ्गधारण-चन्द्रिकाग्रन्थस्य शरन्नाम्नी व्याख्या लिखिता। तल्लेखार्थं काशीजङ्गमवाडीमठाधीश्वरैः पूज्यचरणाः प्रातःस्मरणीयाः श्रीमन्तः शिवकुमारमिश्राः समायोजिताः। येषां कृते श्लोकोऽयं तत्रोल्लेखितः—

प्रस्तावे विदुषां यस्य प्रथमं नाम गृह्यते।
सोऽयं शिवकुमाराख्यः पण्डितः पण्डिताग्रणीः।।इति।

इत्थं च कदाचित् स्वयं वीरशैवाचार्यैः कदाचित्तन्मतनिष्णातैरनुयायिभिः कर्हिचित् परमविद्वद्भिरन्यैश्च निबन्धा लिखिताः।

तस्यामेव सरणौ श्रीमान् चन्द्रशेखरशिवाचार्योऽपि लेखकत्वेन परिगणनीयः स्मरणीयश्च। समेषां दर्शनानां सिद्धान्ताः अनेन स्पष्टया प्रवाहमय्या संस्कृतभाषया माधुर्यगाम्भीर्यपूरितया निरूपिताः। शक्तिविशिष्टाद्वैतवेदान्तस्य साधनानि साध्यं तत्स्वरूपं च चारुसुचारुरूपेण एनेन न्यरूपि।

अनुवेलमवलोकनेनापि मनागपि मनो नोद्वेगमाप्नोति प्राप्नोति चामन्दमानन्दं स्मारयति चास्याचार्यस्य वाङ्माधुरीम्, "कण्ठे सुधा वसति वै भगवज्जनानाम्" इति वचनस्य सार्थक्यं च। मया यथानुभूतं तथैवोक्तं नैवार्थवादरूपेण। इदमप्याकलितं यद् यथा वेदान्तादिसमस्तदर्शन-सिद्धपदार्थनिरूपणपरं नूतनदोषोद्भावनतन्निराकरणचणं गीताव्याख्यामधुसूदनी-व्याख्यानं गूढार्थतत्त्वालोकाख्यं सर्वदर्शनकान्तारकेशरिपरमोदार-परमनैयायिक-भारतभूसमलङ्कारश्रीधर्मदत्ताभिधेयबच्चाझानाम्ना प्रसिद्धै रचितं सरसमनुद्वेगकरं परमप्रसादकरं प्रसादगुणगुम्फितम्, यथा श्रीमद्भिः शङ्करचैतन्यभारतीस्वामिभिः खण्डनखण्डखाद्यव्याख्या शारदानाम्नी परमगम्भीरा नव्यन्यायसरणिमनुसृतापि मधुरा, यथा च समस्तसंस्कृतवाङ्मय-प्रसिद्धशास्त्रतत्त्वानुलोडनवित्तैः महाभाष्यपरिपाठनचणैः श्रीदुर्गाराधना-वाप्तसमस्तप्राप्तव्यतत्त्वैरस्मद्गुरु-चरणैर्दिगन्तविश्रान्तकीर्तिभिः श्रीरघुनाथ-शर्मभिर्वाक्यपदीयस्य मधुरा स्पष्टा शब्दतदर्थकार्पण्यविधुरा मधुरा प्रसङ्गप्राप्तपदार्थनिरूपणावश्याश्रयणीय-दृष्टान्तनिरूपणमुखेनापि चिरन्तनाज्ञा-स्पष्टविषयविषयकसुखावबोधोद्भावनेन परमप्रसादकरी अम्बाकर्त्रीनाम्नी व्याख्या लिखिता, तथैव श्रीमता धीमता धीरधौरेयेण श्रीचन्द्रशेखर-शिवाचार्यवर्येण ग्रन्थोऽयं रचित इति सम्यगनुभूय सत्यं विलिखामि।

तेन स्वयमेकत्र वीरशैवानां परिभाषा परिदर्शिता पूर्वाचार्योक्तिमूलिका, तेषां विभागश्च कृतः सामान्यविशेषनिराभारसंज्ञाभिः। सामान्यनियमान् यः परिपालयति सः सामान्यवीरशैवः। विशिष्टधर्मानुष्ठानाद्विशेष इति कथ्यते। यः किल षट्स्थलोपासकः स विशिष्टवीरशैवः। षट्स्थलानि च भक्तमाहेश-प्रसादिप्राणलिङ्गिशरणैक्यानि। निवृत्तकर्मभारत्वान्निराभार इति स्मृत इति।

आसां तिसृणामवस्थानां क्रमेणोत्कर्षो विवक्षितः। अवस्थाद्वयी साधनरूपेण प्रोक्ता, अन्त्या च फलावस्था। निवृत्तसर्ववैरः शिवोपासनफलभूतकृतकृत्यो वीतरागो जीवन्मुक्तो निःस्पृहो निःसङ्गो यो भवति, स निराभार इति शब्दव्यपदेश्यः।

अस्माकं परमप्रियोऽयं ग्रन्थलेखकः श्रीमान् डॉ० चन्द्रशेखरशर्मा हिरेमठः साम्प्रतं तृतीयभूमिकारूढ इति विज्ञापयामि, बाल्यादस्य दर्शनेन स्वभावेन साधनसंपत्त्या धैर्येण गाम्भीर्येण नित्यमध्यात्मपरायणभावेन

साधनावस्थासाध्यावस्थापरिप्रेक्षणेन च कथनात्। परापरविद्याविचक्षणो महान् पुरुष इति कथनमपि परिच्छिन्नामेव वाचं परिज्ञापयति, "वाग्जन्म-वैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत्" इति हर्षोक्तिमनुसृत्य मया स्वात्मरक्षार्थमावेदितम्। इदं च फलमनेन भगवतः शिवस्य समाराधनादाप्तम्, 'य एनं वृणुते' इति श्रुतेः, 'फलमत उपपत्तेः' इति सूत्रात्, 'न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः' इति महिम्नस्तोत्रतश्चेति शम्।

वाराणस्यां
विजयादशम्यां
वि० सं० २०४६

डॉ० देवस्वरूपमिश्रः
वरिष्ठाचार्यो वेदान्तविभागीयाचार्योऽध्यक्षश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्।

— ३ —

सावहितमवलोकितो मया सिद्धान्तशिखामणिसमीक्षानामा ग्रन्थः। अष्टपरिच्छेदात्मकोऽयं ग्रन्थो रचितः श्रीमता चन्द्रशेखरशिवाचार्येण सम्पूर्णा-नन्दसंस्कृतविश्वविद्यालयतो विद्यावारिध्युपाधिलब्धये। अत्र विदुषा लेखकेन प्रथमे परिच्छेदे वीरशैवदर्शनस्येतिहास उपक्षिप्तः, द्वितीये च ग्रन्थस्यास्य परिचयः प्रदत्तः। तृतीये परिच्छेदे परमात्मनः, चतुर्थे च जीवात्मनः स्वरूपं षड्दर्शनीं सिद्धान्तशिखामणिं चधिकृत्य निरूपितम्। पञ्चमे परिच्छेदे तयैव पद्धत्या सृष्टिमीमांसा, षष्ठे च बन्धमोक्षयोः स्वरूपमुन्मीलितम्। सप्तमे सर्वानेतान् सिद्धान्तान् समीक्ष्य सिद्धान्तशिखामणिनिर्दिष्टानां निष्कर्षाणां सर्वातिशायिता साधिता। अन्तिमे चाष्टमे परिच्छेदेऽष्टावरणानां पञ्चाचाराणां च वीरशैवसिद्धान्तजीवातुभूतानां स्वरूपं स्पष्टीकृत्य तेषां सामयिक उपयोगो नानायुक्तिभिः साधितः। उपसंहारे खलु सर्वमेतत् सिंहावलोकितकन्यायेन नातिविस्तरेण नूतनया शैल्या पुनरीक्षितम्।

ईश्वरजीवयोः कीदृशं स्वरूपम्? कीदृश तयोः परस्परं सम्बन्धः? कीदृशं खलु बन्धमोक्षयोः स्वरूपम्? कथं नु किल प्रवर्तते सृष्टिसंहारप्रक्रिया? ईदृशानां प्रश्नानां समाधानमुखेन प्रवर्तते नाम भारतीयं दर्शनम्। ग्रन्थेऽस्मिन् प्रश्नानामेषां समाधानमुखेन प्रवृत्ता न्यायवैशेषिक-सांख्ययोग-मीमांसावेदान्तानां मीमांसायामपि

च कुमारिलप्रभाकरयोः सिद्धान्ता यथा संक्षेपेण समुपस्थापिताः, यथा च ते तार्किकया पद्धत्या समालोचिताः, तेन ग्रन्थकारस्य सर्वत्राप्रतिहतं वैदुष्यं स्फुटीभवति।

जानीमो वयं सिद्धान्तशिखामणिर्वीरशैवदर्शनस्य प्रतिनिधिभूतो ग्रन्थ इति। सिद्धान्तशिखामणिकारस्य जीवेश्वरयोर्भेदाभेदात्मकः सम्बन्धोऽभिप्रेतः। द्वैत-द्वैताद्वैत-अद्वैतभेदविभक्तेषु शैवागमेषु द्वैताद्वैतागमा जीवेश्वरयोर्भेदाभेदात्मकं सम्बन्धमेवाङ्गीकुर्वन्ति। शैवागमानामुत्तरभागं कूर्म-लिङ्ग स्कन्द-शिवादिपुराणानि सूतसंहितासदृशांश्च ग्रन्थान् प्राधान्येन प्रमाणीकृत्य प्रवृत्तमिदं द्वैताद्वैतवादि दर्शनम्। अपि च, वेदान्तप्रस्थानेऽपि भर्तृप्रपञ्चभास्कर-यादवप्रकाश-निम्बार्कप्रभृतयो बभूवुर्भेदाभेदवादिन आचार्याः। आचार्या एते मोक्षं प्रति ज्ञानकर्मणोः समसमुच्चयवादमभिप्रयन्ति। द्वैताद्वैतापरपर्यायभेदाभेदवादोऽयं ज्ञानकर्मसमुच्चयवादश्च कूर्मपुराणादिष्वपि विततः। जैनदर्शनमनेकान्तवादमाश्रयति। उत्पादव्ययध्रौव्ययुक्तं सदिति तत्रत्यं सतो लक्षणं द्वैताद्वैतवादमनुकरोतीव। प्रस्तुते ग्रन्थेऽस्मिन् न्यायकन्दलीकारादयो वैशेषिकाः, प्रभाकरादयश्च मीमांसका ज्ञानकर्मसमुच्चयवादमभ्युपगच्छन्तीति वैतत्येन निरूप्य, सिद्धान्तशिखामणि-पद्धत्याऽवस्थाभेदेन द्वैताद्वैतवादयोः संगतिं प्रदर्श्य मोक्षं प्रति ज्ञानकर्मणोरुभयोरपि प्रयोजकत्वं सयुक्तिकं मनोरमया पद्धत्या, शास्त्रीयया प्रामाणिकया दृष्ट्या च निरूपितमिति ग्रन्थस्यास्यानतरसाधारणं वैशिष्ट्यं विद्योततेतराम्। विद्यावारिध्युपाधयेनिबध्यमानेषु महानिबन्धेषु समुपस्थाप्यन्त एतादृशा अपि महत्त्वपूर्णा ग्रन्था इति सन्तोषस्यायं विषयः।

किञ्च, "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा। एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।" (५।४) इति हि वर्तते सिद्धान्त-शिखामणिकारस्य समन्वयात्मिका दृष्टिर्महाभारतमहिम्नस्तवादिषु प्रतिपादिता। तेन हि किलात्र मानवमनसो विकासक्रमेण सर्वेषां दर्शनानां यथायथमुपयोगः प्रदर्शितः। भक्तिवेदान्तसरितोः संगमयिता मधुसूदनसरस्वतीपादैः स्वीये प्रस्थानभेदाख्ये लघुग्रन्थे तामिमामेव सरणिमनुससार। परस्परं खण्डनादिकं निराकृत्य समन्वयात्मकं दृष्टिकोणं प्रस्थापयति वीरशैवदर्शनमिति सत्यमीदृशानि दर्शनानि सर्वस्यापि जगतो हिताय अभ्युदयाय च प्रभवेयुरिति प्रस्थापना ग्रन्थकारस्य अतीव सामयिकी युक्तिभरिता रुचिरा चेति निभालयन्तु नाम ग्रन्थेऽस्मिन् सचेतसो विद्वांसः।

द्वैताद्वैतशैवागमानां द्वैताद्वैतवादिवेदान्ताचार्याणां पुराणानामनेकान्तवादिनो जैनदर्शनस्य च द्वैताद्वैतवादो वीरशैवदर्शनप्रतिपादितद्वैताद्वैतवादेन सह कियत्साम्यं वैषम्यं वा धत्त इति विषयस्यास्य तौलनिकमनुशीलनमपेक्षितम्। वाचस्पत्युपाधये संग्रथ्यमाने ग्रन्थे श्रीमान् चन्द्रशेखरशर्मा शिवाचार्यः कांश्चन शैवागमीयान् सिद्धान्ताननयैव पद्धत्या समालोचयत्यपि प्रसन्नताया अयं विषयः। शैवाचार्याः सम्पूर्णाया मानवतायाः कल्याणाय श्रेयसे च प्रयतितवन्त इति तामिमां परम्परां परिवर्धयन् सुरभारतीं समाराधयंश्च शिवाचार्योऽयं चिरं जीव्यात्, ऐहिकीं पारलौकिकीं च समुन्नतिसरणिमारुहेदिति किल भगवान् विश्वेश्वरोऽन्नपूर्णासहायः प्रार्थ्यते।

वाराणस्यां — ब्रजवल्लभद्विवेदः
शरत्पूर्णिमा, संवत् २०४६ — सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
१४.१०.८९ ई० — सांख्ययोगतन्त्रागमविभागाध्यक्षचर आचार्यश्च

—४—

भारते वर्षे चिराद् दृश्यते दार्शनिकचिन्तनपरम्परा। दर्शनं नामाभ्यन्तरं चक्षुः। भौतिकानामाध्यात्मिकानां च पदार्थानां समुद्भासनात् संजायते तद्विव्रियमाणत्वसौकर्यम्। वैदिकीषु संहितासु दार्शनिकानि तत्त्वानि यत्र तत्र विकीर्णानि समासाद्यन्ते। तासां बहुविधविषयजातवर्णनपरत्वाद् दर्शनविषयोऽनूनकतया तत्र नोपवर्णितो भाव्यते। तस्योपबृंहणं समजनि तावदुपनिषत्सु यथायथम्। तत्र श्वेताश्वतरोपनिषदि शिवरुद्रयोः स्वरूपं दार्शनिक्या दृशा बाढं निरूपितमास्ते। शुक्लयजुर्वेदमाध्यन्दिनसंहितायां तु रुद्रमुद्दिश्य तावदष्टावध्याया उपनिबद्धाः सन्ति। एवं सत्यपि शैवागमा विरुन्धन्ति निगमान् न समन्वियन्तीति केचन कोविदब्रुवा विप्रतिपद्यन्ते, तन्न विचारसहम्। आस्तिकानां सर्वोषामेव दर्शनानां वेदोपोद्बलकत्वमुपपद्यत एव। वेदाः स्वत एवाविर्भवन्ति, आगमानां तु पारम्पर्यपरत्वमास्थीयते। तेषामाद्य उपदेष्टा पार्वतीजानिः शिव एव पार्वतीमुपदिदेश तद्रहस्यजातम्। तदुक्तम्—

आगतं शिववक्त्रात् तु गतं च गिरिजामुखे।
मतं श्रीवासुदेवेन आगमस्तेन कीर्तितः।।इति।

आगमोपदेशे साक्षाद् गुरुपरम्परासंबन्धात् काचिदनुशिष्टिर्वर्तते। आगमैर्गुरवः शिष्याननुशिंषन्तीत्यागमानां शास्त्रत्वम्। अतो हेतोर्भर्तृहरिणा महाभाष्यमप्यागमतया व्यपदिष्टम्–'पर्वतादागमं लब्ध्वा' इति। यद्यप्यागमपर्यायतया शास्त्रव्यपदेशेन तन्त्रशब्दोऽपि प्रयुक्तो विलोक्यते कातन्त्रादिव्याकरणसम्प्रदाये, तथापि परतस्तस्य तन्त्रमन्त्रसमन्विते ग्रन्थराशौ व्यवहारेण सामान्यशास्त्रपदार्थावबोधबाधः समुपतिष्ठते स्म। प्रायोगिकः पक्षस्तन्त्रेषु सैद्धान्तिकस्त्वागमेष्विति केचिदाचक्षते। वस्तुतस्तूभयोः परमार्थतो नास्ति पार्थक्यम्।

वैदिकं बौद्धं जैनं चेति त्रैविध्यं तन्त्राणाम्। तत्रोपास्यदेवताभेदेन वैदिकस्य तन्त्रस्य खलु शैववैष्णवशाक्तभेदेन पुनस्त्रैविध्यं वीक्ष्यते। शैवागमानां पञ्चविधत्वं प्रसिध्यति–द्वैत–अद्वैत–द्वैताद्वैत–विशिष्टाद्वैत–शक्तिविशिष्टाद्वैतेति भेदेन। तत्र पाशुपतं सिद्धान्तशैवं च द्वैतम्, प्रत्यभिज्ञादर्शनं (काश्मीरशैवदर्शनम्) अद्वैतम्, लकुलीशपाशुपतं तावद् द्वैताद्वैतम्, श्रीकण्ठशैवदर्शनं च विशिष्टाद्वैतमाख्यायते। वीरशैवदर्शनं तु विशेषाद्वैतापरपर्यायं शक्तिविशिष्टाद्वैतत्वेन प्रथते।

श्रीकण्ठसूरिमतेन शिववचनभूतानां शैवागमानां सिद्धान्तपदवाच्यत्वमस्ति। यथा–

'आप्तोक्तिरत्र सिद्धान्तः शिव एवाप्तिमान् यतः'

इत्युक्त्या सर्वेषां शिवचनस्वरूपाणामष्टाविंशतिसंख्याकानामेव शैवागमानां सिद्धान्तपदवाच्यत्वं समाम्नातमिति शैवागमसिद्धान्तशब्दयोः पर्यायवाचित्वामास्थेयम्।

अघोरशिवाचार्येण रत्नत्रये सिद्धान्तशब्दं व्याख्यातवता सिद्धान्त-शब्देनाष्टाविंशतिसंख्याकानेव शैवागमान् परिगृह्य तत्र सिद्धान्तशब्दो योगरूढो मतः पङ्कजादिशब्दवत्। तद्यथा–"सिद्धान्तशब्दः पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशतन्त्रेषु प्रसिद्धः" इति। तस्य यौगिकोऽर्थस्तु–सिद्धस्य = शिवस्य, अन्तः = निश्चय उपदेशो वेति बोद्धव्यः। देवीपुराणे सिद्धिपदेन दुर्गाऽभिप्रेताऽस्ति।

कामिकादिवातुलान्तानामष्टाविंशतिसंख्याकानामागमानां नामानि क्रियासारे त्वित्थं प्राप्यन्ते–

कामिकं योगजं चिन्त्यं कारणं त्वजितं तथा।
दीप्तं सूक्ष्मं सहस्रं च अंशुमान् सुप्रभेदकम्।।
विजयं चैव निश्वासं स्वायम्भुवमथानिलम्।
वीरं च रौरवं चैव मुकुटं विमलं तथा।।
चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा।
सिद्धं सन्तानशर्वोक्तं पारमेश्वरमेव च।।
किरणं वातुलं चैव–अष्टाविंशतिसंख्यया।इति।।

अष्टाविंशतिसंख्याका एते शैवागमा अपि शिवरुद्राभ्यामुपदेशक्रमेण द्वेधा विभज्यन्ते। वैदिके वाङ्मये खलु रुद्रशिवेति रूपद्वयमुल्लिख्यते। यथा वाजसनेयिमाध्यन्दिनशुक्लयजुर्वेदसंहितायाम् (१६.२.४९)–

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि।।
या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी।
शिवा रुतस्य भेषजी तया नो मृड जीवसे।।इति।

प्रथमायाः शिवमूर्तेर्दुःखनिवर्तकत्वम्, मृत्युञ्जयत्वं धनपुत्रस्वर्गादिप्रदायकत्वं चोररीक्रियते, द्वितीयायास्तु रुद्रमूर्तेरात्मज्ञानमोक्षप्रदायकत्वमभ्युपगम्यते। श्रीमन्महाभारते शिवरुद्रमूर्त्योः स्वरूपविश्लेषणमित्थं क्रियते–

द्वे तनू तस्य देवस्य देवज्ञा ब्राह्मणा विदुः।
घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः।।इति।

अष्टाविंशतिसंख्याकेष्वागमेष्वाद्या दशागमाः शैवागमा आख्यायन्ते, औत्तराहा अष्टादशागमास्तु रुद्रागमत्वेन प्रथन्ते। यद्यप्युत्तरवर्तिष्वागमेषु वीरागमोऽन्यतमत्वेन गण्यते, तथाप्युभयभागस्थितानामागमानामन्तिमोंऽशो वीरशैवागमे गृह्यत इति सर्वेषामागमानां समन्वयस्वरूपोऽयमागमो मतः–

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्।।इति।

एवं तावच्छिवस्य शिवरुद्रात्मकमुभयात्मकं समन्वितं स्वरूपमत्र परिगृह्यत इति वीरशैवागमनाम्न्यपि तयोर्द्वयोः रुद्रशिवयोः समावेशः कृतो दृश्यते। वीरशैब्देन भैरवः (रुद्रः) उच्यते। तदुक्तं महार्थमञ्जर्याम्– "तत्र वीरो

नाम विविधमीरयति विश्ववैचित्र्यमिति भगवान् शब्दराशिभट्टारक उच्यते" इति। वैदिकोऽयं वीरशब्दो भारोपीयभाषा अभिव्याप्नोति। आर्या 'वीरोस्' इत्याख्यया संकीर्त्यन्ते स्मेति पाश्चात्त्यविद्याविदो मनीषिणोऽभ्युपयन्ति। यद्यपि वीरशैवदर्शने वीरशब्दः खलु पारिभाषिको मतः, तथापि शिवरुद्रयोरुभयोरविरोधात्मकं समन्वितस्वरूपं वीरशब्देन वीरशैवदर्शनेऽप्यभ्युपेयते–

**विरोधार्थो विशब्दः स्याद् रशब्दो रहितार्थकः।**
**विरोधरहितं शैवं वीरशैवं विदुर्बुधाः।।इति।**

अष्टाविंशत्यागमेषु समुपस्थितानां द्वैत–अद्वैत–द्वैताद्वैत–विशिष्टाद्वैत–प्रभृतीनां विरोधानां समन्वयार्थं पूर्वोक्तागमैकैकान्त्यभागं निर्मथ्य विभीषणकालिकेन भगवता रेणुकाचार्येण भक्तानामनुग्रहाय श्रीमद्भगवद्गीता–सादृश्यमावहन्ती रेणुकगीता समुपदिष्टा। श्रीमद्भगवद्गीतायां यथा भगवान् श्रीकृष्णोऽर्जुनाय विश्वरूपं दर्शयामास, तथैव रेणुकभगवत्पादाचार्याः स्वकीयं त्रिकोट्याचार्यरूपमाधाय विभीषणाय विश्वरूपं साक्षात्कारयामासुः। रेणुकगीताया उपदेशको रेणुकाचार्यः श्रोता चागस्त्यमुनिरासीदिति सम्प्रदायः।

विनेयजनहिताकाङ्क्षया परमकृपालुना शिवयोगिशिवाचार्यमहोदयेन रेणुकागस्त्यसंवादाख्यं ग्रन्थमाश्रित्य शिवागमांश्च पर्यालोड्य शक्तिविशिष्टा–द्वैतसिद्धान्तशिखामणिरिव सिद्धान्तशिामणिनामको ग्रन्थो विरचितः। तदुक्तम्–

**रेणुकागस्त्यसंवादं निगमागमविश्रुतम्।**
**प्रदीपयति गुप्तार्थमुद्धृत्य शिवयोगिराट्।।इति।**

"स कालेनेह महता योगो नष्टः परन्तप" इति न्यायेन रेणुकागस्त्यसंवादाख्यो ग्रन्थो सम्प्रति नोपलभ्यते। सिद्धान्तशिखामणौ तावदुपासनार्थं बहूनि साधनासोपानानि निदर्शितानि सन्तीत्यनन्यसाधारण्यमेतदीयं साधनाविषयकं समाम्नायते।

तत्रानुषङ्गिकतया स्थाने स्थाने दार्शनिकेषु तत्त्वेषु विकीर्णेष्वपि नैतावच्चिरं केनापि जिज्ञासुना प्रवृत्तमनुसन्धित्सया तेषां समन्वयदिक्समुद्भासनाय। विद्यासमाराधनैकतत्परेण सौशील्यादिविविधगुणगणपरिमण्डितेन डॉ० चन्द्रशेखरशिवाचार्येण दर्शनान्तरीयैः सिद्धान्तैः सह सिद्धान्त–शिखामणिसमीक्षाया अनन्यसामान्यमनुसन्धानकार्यमनुष्ठितम्। तत्र जीवजगत्परमेश्वरबन्धमोक्षेति पञ्च

तत्त्वानि प्राधान्यतो विवेचनविषयीकृतानि सन्ति। तत्र षण्णां दर्शनानां दार्शनिकान् सिद्धान्तान् विवृत्य शक्तिविशिष्टाद्वैतदृशा तेषां यत् समन्वयकार्यं श्रीरेणुकभगवत्पादाचार्येण—"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा। एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।" इत्येवं संकल्पितमासीत्, तन्मूर्तीकृतमिव डॉ० चन्द्रशेखरशिवाचार्येण।

विविधदर्शनानां मतेन यत्र दार्शनिकेषु सिद्धान्तेषु विरोधा उद्भाव्यन्ते, तत्रैव वीरशैवदर्शनदृष्ट्या विरोधोपशमं विधायं विधायं समस्थापि समन्वयः श्रीहिरेमठेन। तत्र परमशिवस्वरूपविमर्शः, सृष्टेर्लीलारूपत्वसमीक्षा, वैषम्यनैर्घृण्यदोषपरिहारसमीक्षा, जीवस्वरूपनिरूपणम्, जीवेश्वरयोर्भोग-साङ्कर्यनिरासः, जीवस्याणुपरिमाणसमीक्षा, जीवपरमात्मनोर्भेदाभेदः, बन्धमोक्ष-विमर्शः, ज्ञानकर्मणोः समुच्चयरहस्यम्, मुक्तिसोपानविमर्श इत्यादिविषया-स्तौलनिक्या दृष्ट्या विरोधपरिहारपूर्वकमिदम्प्रथमतया सुनिपुणं निरूपिताः सन्ति। दर्शनक्षेत्रेषु प्रतिष्ठां समर्जयेदयं गवेषणाप्रबन्ध इत्येतदीयां विषयोपन्यासविधां विषयनिरूपणशैलीं च विभाव्य ध्रुवं मनुते।

शरत्पूर्णिमायां<br>
२०४६ वै०<br>
वाराणस्याम्

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'<br>
अनुसन्धानसंस्थाननिदेशकः<br>
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

।। श्रीकाशीविश्वेश्वरो विजयते।।

# प्रकाशकविज्ञप्तिः

पूज्यचरण श्रीकाशीविश्वाराध्यज्ञानसिंहासनाधीश्वर १००८ श्री जगद्गुरु डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी द्वारा विरचित श्रीसिद्धान्तशिखामणिसमीक्षा नामक संस्कृत मूलग्रन्थ को राष्ट्रभाषा हिन्दी अनुवाद के साथ शोध-प्रकाशन ग्रन्थमाला-७३ तम पुष्पस्वरूप का प्रकाशन कर इसे जिज्ञासुपाठकों को उपलब्ध कराते हुए हमें अतिशय आनन्द का अनुभव हो रहा है।

श्री शिवाचार्य द्वारा शोधप्रबन्ध के रूप में उपस्थापित तथा सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी द्वारा विद्यावारिधि (पी.एच.डी.) उपाधि-प्राप्ति के अनन्तर मानव संसाधन मन्त्रालय, भारत सरकार के आर्थिक सहायता से मूल संस्कृत ग्रन्थ के रूप में उक्त प्रबन्ध शिवधर्मग्रन्थमाला-३३ तम पुष्पस्वरूप का प्रथम प्रकाशन १९८९ ई० में शैवभारतीभवन द्वारा किया गया था।

इस ग्रन्थ का अवलोकन कर प्रमुदितान्तःकरण श्रीमान् रम्भापुरी वीरसिंहासनाधीश्वर श्री १००८ जगद्गुरु प्रसन्नरेणुक वीररुद्रमुनि शिवाचार्य महास्वामी जी ने शुभाशीर्वचन (लेखबद्ध) प्रदान किया था। मैं उनके चरणकमलों में अनन्त प्रणामाञ्जलि अर्पित करता हूँ।

तद्वत् विद्वत्सम्मति प्रदान करने वाले सम्पूर्णानन्द संस्कृत विश्वविद्यालय के तदानीन्तन कुलपति प्रो० वि० वेङ्कटाचलम् महोदय उक्त विश्वविद्यालय के तदानीन्तन वेदान्त विभागाध्यक्ष आचार्य प्रो० देवस्वरूप मिश्र महोदय, उक्त विश्वविद्यालय के प्राक्तन सांख्ययोग तन्त्रागम विभागाध्यक्ष राष्ट्रिय पण्डित आचार्य व्रजवल्लभ द्विवेदी महोदय तथा उक्त विश्वविद्यालय के तदानीन्तन अनुसन्धान संस्थान निदेशक आचार्य डॉ० भगीरथप्रसाद त्रिपाठी महाभाग (सम्प्रति विद्यमान) के प्रति हम अपनी कृतज्ञता ज्ञापित करते हैं।

पूज्यचरण जगद्गुरुजी द्वारा आज्ञप्त श्रीमती भुवनेश्वरी भारद्वाज (असिस्टेन्ट प्रोफेसर, संस्कृत एवं प्राकृतभाषा विभाग, लखनऊ

विश्वविद्यालय, लखनऊ) ने दार्शनिक तथा वीरशैवागमसाधनाविषयकज्ञानार्थ अत्यन्त उपयोगी संस्कृतग्रन्थरत्न श्रीसिद्धान्तशिखामणिसमीक्षा का हिन्दी अनुवाद किया है, मैं उनकी कल्याण-कामना श्री साम्बसदाशिव भगवान् से करता हूँ।

मैं राष्ट्रभाषानुवादसहित श्रीसिद्धान्तशिखामणिसमीक्षा ग्रन्थ के सुन्दर अतिशुद्ध टङ्कण करने वाले श्री गौरीशंकर सिंह जी तथा मुद्रण को मनोयोगपूर्वक अल्पकालावधि में करने वाले मित्तल ऑफसेट के स्वामी श्री जय मित्तल जी एवं कर्मचारीगण को साधुवाद प्रदान करता हूँ।

।। शिवार्पणमस्तु ।।

जङ्गमवाडीमठः<br>वाराणसी<br>११.१०.१४

डॉ० जी.सी. केन्डदमठ<br>कार्यदर्शी<br>शैवभारती शोध प्रतिष्ठान

# भूमिका

ॐ नमो घनलिङ्गाय सच्चिदानन्दरूपिणे।
शक्तिसम्पद्विशिष्टाय शिवाय परमात्मने।।

अथायं समुपस्थाप्यते तत्त्वचिन्तकानां विदुषां पुरतो नूतनया शैल्या सज्जीकृतो वैदिकषड्दर्शनानां वीरशैवदर्शनस्य च तारतम्यप्रतिपादकः 'सिद्धान्तशिखामणिसमीक्षा' (सिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा) इति नामकः शोधप्रबन्धः।

वर्तते किल काचन परम्परा भूमिकालेखनस्य। सा हि कस्यचिद् ग्रन्थस्य शोधप्रबन्धस्य चादौ विलिख्यते। भूमिका हि नाम विषयावतारणानुकूलो व्यापारः। यथा हि लोके गृहस्य मूलभागः 'नींव' शब्देन हिन्दीभाषायामुच्यमानः प्रबलो भवति चेत् स्थिरश्च, तदा महानपि प्रासादोऽचलो भवति। तन्नयायेन ग्रन्थेऽपि भूमिकाभागो गृहभूमिकावत् सुदृढो भवेच्चेत्, तत्प्रयोज्यो ग्रन्थभागोऽपि नूनमेव तदनुकारी सम्पद्यते।

## प्रवृत्तिनिमित्तम्

ईशवीये १९७३ तमे वर्षे तदानीन्तनवाराणसेयसंस्कृतविश्वविद्यालयेऽ-धीयानोऽहं शाङ्करवेदान्ताचार्यपरीक्षामुत्तीर्णवान्। अतः परं कस्मिन् व्यापारे प्रवृत्तः स्वाध्यायस्य सार्थक्यं सम्पादयिष्यामीति चिन्तयन्तं मामाहूय काशीज्ञानसिंहासनाधीश्वराः श्री १००८ जगद्गुरुविश्वेश्वरशिवाचार्यमहास्वामिन आज्ञापितवन्तः– अतः परं भवता वीरशैवधर्मग्रन्थोपरि अनुसन्धानं विधेयमिति। तैराज्ञप्तो विद्यागुरुभिर्वेदान्तविभागाध्यक्षपदमलङ्कुर्वद्भिर्मय्यकारणकरुणाशालिभिः डा० देवस्वरूपमिश्रमहानुभावैश्चानुज्ञप्तोऽहं वीरशैवदर्शनस्य प्राचीनं प्रधानं च सिद्धान्तशिखामणिग्रन्थमुद्दिश्य गवेषणं कर्तव्यमिति निश्चयं व्यदधाम्।

सिद्धान्तशिखामण्युपरि कया रीत्या शोधकार्यं विधेयमिति जिज्ञासया तद्ग्रन्थानुशीलनेन मयाज्ञायि यत्–

अगस्त्य खलु सिद्धान्ता विख्याता रुचिभेदतः।
भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः।।
सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।
वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने।
वेदानुसरणादेषां प्रामाण्यमिति निश्चितम्[1]।।

इत्येवं श्रीरेणुकभगवत्पादा महर्षिमगस्त्यं प्रति सांख्यादिदर्शनानि वेद-मूलकानि सन्ति, अतस्तेषां खण्डनादिकं न कर्तव्यमित्युपदिश्य, पुनरग्रे-

वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने।
सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते।।
शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत् सदा।।
सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्[2]।।

इति वेदसम्मतानामपि सांख्यादिदर्शनानां वेदैकदेशवर्तित्वम्, सर्ववेदमयस्य सिद्धान्तागमस्योत्तरभागे निर्दिष्टस्य वीरशैवदर्शनस्य च वेदमयत्वमिति प्रतिपादितवन्तः।

तदेतद्ग्रन्थसन्दर्भं पठितवतो मम मनसीयं जिज्ञासा समुत्पन्ना-ननु कथं सांख्यादीनां वेदैकदेशवर्तित्वम्? कथं वा वीरशैवदर्शनस्य सर्ववेदमयत्वम्? इति। तदनया जिज्ञासया प्रेरितोऽहं वैदिकषड्दर्शनानां न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसा- उत्तरमीमांसाख्यानां दार्शनिकसिद्धान्तैः सह सिद्धान्तशिखामण्युक्तवीरशैवदर्शनाभिमतदार्शनिकसिद्धान्तानां समीक्षा कर्तव्येति निश्चित्य 'सिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा' इति विषयमवलम्ब्य गवेषणाकार्यमारब्धवान्।

---

१. सि० शि० ५।३-५ पृ० ५३-५४

२. सि० शि० ५।७-८, १४, पृ० ५५-५७

## शोधप्रबन्धक्षेत्रनिर्धारणम्

प्रकृते 'सिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा' इति शोधप्रबन्धस्य नामानुरूपं दर्शनविषये किमप्यावेद्यते। दर्शनं हि नाम वस्तु-याथात्म्यावबोधकः शास्त्रविशेषः। अत्र 'सिद्धान्तशिखामणिः' शक्तिविशिष्टाद्वैत-वेदान्तापरपर्यायस्य वीरशैवदर्शनस्य प्रधानो ग्रन्थः। अस्मिन् ग्रन्थरत्ने प्रतिपादितानाम् ईश्वर-जीव-जगद्-बन्ध-मोक्षाख्याणां दार्शनिकसिद्धान्तानां दर्शनान्तरेषु निरूपितैस्तैरेव दार्शनिकसिद्धान्तैः सह समीक्षा हि प्रकृतप्रबन्धस्य प्रधानो विषयः। अत्र "अन्यद् दर्शनं दर्शनान्तरम्" इति व्युत्पत्त्या वीरशैवदर्शनभिन्नानि सर्वाण्यपि दर्शनानि समागच्छन्ति, किन्तु प्रकृतप्रबन्धे दर्शनान्तरशब्देन षड्वैदिकदर्शनान्यभिप्रेतानि।

प्रायो दर्शनेषु प्रमाणानि प्रमेयानि च प्रतिपादनीयानि भवन्ति। प्रकृते सिद्धान्तशिखामणिग्रन्थे वीरशैवाभिमतप्रमेयाणामेव विस्तरेण विश्लेषणं वर्तते न तु प्रमाणानाम्। अतोऽत्र सिद्धान्तशिखामण्युक्तवीरशैवाभिमतेश्वर-जीव-जगद्-बन्ध-मोक्षाख्यानां दार्शनिकसिद्धान्तानां षड्वैदिकदर्शनाभिमतैस्तैरेव दार्शनिकसिद्धान्तैः सह साम्य-वैषम्य-वैशिष्ट्यादिरूपेण समीक्षा विहिता।

## शोधप्रबन्धविषयस्य महत्त्वम्

तत्र द्वैतप्रतिपादकेषु न्याय-वैशेषिक-सांख्य-योग-पूर्वमामांसादर्शनेषु "द्वा सुपर्णा सयुजा सखाया"[१], "ज्ञाज्ञौ द्वावजावीशानीशौ"[२] इत्यादि- द्वैतश्रुतीनां मुख्यार्थे प्रामाण्यस्वीकारे- तत्त्वमसि"[३], "सर्वं खल्विदं ब्रह्म"[४] इत्याद्यद्वैतश्रुतीनां गौणार्थत्वमभ्युपगम्यते। उत्तरमीमांसाख्येऽद्वैतवेदान्ते चाद्वैतश्रुतीनां मुख्यार्थे प्रामाण्याङ्गीकारेऽपि द्वैतश्रुतीनां लोकप्रसिद्धद्वैतानुवादकत्वं व्यवस्थाप्यते। तस्माद् द्वैतदर्शनेष्वद्वैतश्रुतीनामनवकाशः, अद्वैतवेदान्ते च द्वैतश्रुतीनामनवकाश इति वैदिकषड्दर्शनानां वेदैकदेशित्वम्। वीरशैवदर्शने संसारदशायां भेदोऽपि

---

१. श्वे० उ० ४।६

२. श्वे० उ० १।९

३. छा० उ० ६।८।७

४. छा० उ० ३।१४।१

सत्यः, मुक्तावस्थायामभेदोऽपि पारमार्थिक इत्यङ्गीकारादत्रोभयविधश्रुतीनां समानरूपेण प्रामाण्यस्वीकाराद् द्वैताद्वैतात्मकमिदं दर्शनं सर्वश्रुतिसमन्वयात्मकमिति श्रीरेणुकभगवत्पादा वीरशैवमतस्य वेदमयत्वं प्रतिपादयामासुः। अत एव भाष्यकाराः श्रीपतिपण्डिताराध्यभगवत्पादा अपि–

श्रुत्येकदेशप्रामाण्यं द्वैताद्वैतमतादिषु।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञिते।।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः[1]।।

इति द्वैताद्वैतात्मके वीरशैवदर्शने सर्वश्रुतिसमन्वयं निरूपितवन्तः।

यद्यप्ययं भेदाभेदवादो बादरायणात् प्राचीनेन 'औडुलोमि' इत्याख्येनाचार्यवर्येण प्रतिपादितः, किन्तु ततः पूर्वमेव श्रीरेणुकभगवत्पादा महर्षिमगस्त्यं प्रति तं वादमुपदिष्टवन्तः। ततोऽपि पूर्वमयं भेदाभेदवादः शिवेन पार्वत्यै षण्मुखाय च शिवागमेषु प्रतिपादित इत्ययं वादः प्राचीनतम इत्यवधार्यते। अमुमेव वादमङ्गीकृत्य वीरशैवाचार्यवर्याः समन्वयसिद्धान्तं प्रतिष्ठापयामासुः। तदनुसारं प्रकृतप्रबन्धेऽपि तत्र तत्र प्रसङ्गानुसारेण परस्परविरुद्धानां श्रुतीनां समन्वयः सिद्धान्तशिखामणिग्रन्थाधारेण प्रदर्शितः।

## ग्रन्थस्वरूपनिर्देशः

प्रबन्धेऽस्मिन् अष्टौ परिच्छेदाः सन्ति। तत्रोपोद्घाताख्ये प्रथमपरिच्छेदे वैदिकषड्दर्शनानां दिग्दर्शनं वीरशैवदर्शनस्य संक्षिप्त इतिहासश्च निरूपितः। वैदिकषड्दर्शनानां विस्तृत इतिहासस्तत्र तत्र बहुषु ग्रन्थेषु प्रतिपादित इति दिग्दर्शनमात्रं कृतमत्रेति विदाङ्कुर्वन्तु विद्वांसः।

सिद्धान्तशिखामणि–परिचयाख्ये द्वितीयपरिच्छेदे ग्रन्थस्य कालः, ग्रन्थ–कर्तुरैतिह्यम्, सिद्धान्तशिखामणेः संस्कृत–प्राकृतटीकाकाराः, अर्वाचीनेषु वीरशैवग्रन्थेषु सिद्धान्तशिखामणेः प्रभाव इत्यादिविषयाः सप्रमाणं यथामति सम्यग् निरूपिताः।

ईश्वरस्वरूपविमर्शाख्ये तृतीयपरिच्छेदे वैदिकषड्दर्शनाभिमतेश्वरस्वरूपम्,

---

१. ब्र० सू० श्रीकर० मङ्गलश्लो० १५

तदङ्गीकरणे किं प्रयोजनम्, ईश्वरमनङ्गीकुर्वतां सांख्य-मीमांसकानां किमैदम्पर्यम्, सिद्धान्तशिखामण्यनुसारेण वीरशैवाभिमत-परशिवस्वरूपं कीदृशम्, किमर्थं वा वीरशैवदर्शने ईश्वरोऽङ्गीकृत इत्यादिविषयाः समालोचनपुरस्सरं प्रतिपादिताः।

जीवस्वरूपविमर्शाख्ये चतुर्थपरिच्छेदे न्यायादिषड्दर्शनानुसारेण जीवात्मनः स्वरूपम्, सिद्धान्तशिखामण्यनुसारेण वीरशैवाभिमतजीवस्वरूपं च पृथक् पृथग् विस्तरेण निरूपितम्।

सृष्टिमीमांसाख्ये पञ्चमपरिच्छेदे षड्दर्शनानुसारेण, सिद्धान्तशिखामण्यभिमतवीरशैवदर्शनानुसारेण च सृष्टिप्रक्रियाया विमर्शो विहितः। अत्र आरम्भवाद-सत्कार्यवाद-प्रवाहनित्यत्ववाद-विवर्तवाद-अविकृतपरिणामवादाः सप्रमाणं विस्तरेणालोचिताः।

बन्ध-मोक्षस्वरूपविमर्शाख्ये षष्ठपरिच्छेदे वैदिकषड्दर्शनानुसारेण, सिद्धान्तशिखामण्यनुसारेण च हेयम्, हेयहेतुः, हानम्, हानोपायश्चेति चिकित्साशास्त्रवन्मोक्षशास्त्रे प्रतिपादिताश्चत्वारो व्यूहा निरूपिताः सन्ति।

दार्शनिकसिद्धान्तसमीक्षाख्ये सप्तमपरिच्छेदे इतः प्राक् षट्सु परिच्छेदेषु पृथक् पृथगालोचितानाम् ईश्वर-जीव-जगद्-बन्ध-मोक्षाख्यानां षड्-दर्शनाभिमतसिद्धान्तानां सिद्धान्तशिखामणिग्रन्थोक्तैस्तैरेव दार्शनिक-सिद्धान्तैः साम्य-वैषम्य-वैशिष्ट्य-युक्तत्व-अयुक्तत्वरूपा समीक्षा विहिता।

सिद्धान्तशिखामणेर्विशिष्टाः सिद्धान्ता इत्याख्येऽष्टमपरिच्छेदे दर्शनान्तर-विलक्षणानां वीरशैवदर्शनासाधारणसिद्धान्तानाम् अष्टावरणपञ्चाचाराख्यानां विस्तरेण विश्लेषणं कृत्वा वीरशैवदार्शनिकानां नित्यजीवने तेषामुपयोगित्वम्, तैश्च कथं सामाजिकव्यवस्था स्याद् इत्यादिविषयाः प्रतिपादिताः।

अन्ते चोपसंहारे न्यायादिवैदिकषड्दर्शनानां क्रमिकविकासरूपत्वं निरूप्य द्वैताद्वैतभेदेन प्रतिपक्षिणां तेषां वादानां द्वैताद्वैतश्रुतीनां च वीरशैवदर्शने कथं समन्वयः सम्भवतीति दिग्दर्शनं कृत्वा वीरशैवसिद्धान्तस्य दार्शनिकदृष्ट्या साम्प्रदायिकदृष्ट्या च दर्शनान्तरापेक्षया लोकोपयोगित्वं निरूपितम्।

# विशेषतोऽवधेयानि स्थलानि

प्रकृतप्रबन्धस्य उपोद्घातपरिच्छेदे वीरशैवशब्दस्य धार्मिक-दार्शनिक-दृष्ट्या निर्वचनम्, तत्र डॉ० एस्०एन्० दासगुप्तकृतस्याक्षेपस्य परिहारः, वीरशैवमतसंस्थापनाचार्याणामैतिह्यम्, श्रीबसवेश्वरस्य वीरशैवधर्मसंस्थापकत्वभ्रमनिरासः, वीरशैवसाहित्यं तत्प्रणेतारश्चेत्यादयो विषयाः सप्रमाणं प्रतिपादिताः सन्ति।

द्वितीयपरिच्छेदे ग्रन्थनामरहस्यम्, सिद्धान्तशिखामणिकालनिर्णये डॉ० एस्० एन्० दासगुप्तस्यानवधानतायाः प्रकटनपूर्वकं खण्डनम्, भगवत्पादरेणुकाचार्याणामवतारत्वसमीक्षा, श्रीरेणुक-अगस्त्ययोर्गुरुशिष्यत्व-समर्थनमित्यादिस्थलानि विशेषतोऽवधेयानि।

तृतीयपरिच्छेदे षड्वैदिकदर्शनेषु वीरशैवदर्शने चेश्वरस्याङ्गीकारेऽनङ्गीकारे च किं प्रधानं बीजमिति तत्तत्सिद्धान्तदृष्ट्या सम्यक् पर्यालोचितम्।

चतुर्थपरिच्छेदे आत्मा प्रतिशरीरं भिन्नः, सर्वत्र कार्योपलम्भाद्विभुः, अग्नेरूर्ध्वज्वलन-वायोस्तिर्यक्पवनाभ्यामात्मनो विभुत्वमित्यादिन्याय-वैशेषिक-सिद्धान्तपर्यालोचनम्, "जनन-मरण-करणानां प्रतिनियमात्" इत्यस्य सांख्याभिमत-पुरुषबहुत्वसाधकस्य हेतोः समीक्षणम्, वीरशैवदर्शने जीवस्य परमात्मनोऽङ्गत्वे कथं न जीवसुखदुःखाभ्यामीश्वरस्य सुखित्व-दुःखित्वप्रसङ्गः, श्रुत्युक्तोत्क्रान्तिगत्यागत्यन्यथाऽनुपपत्त्या जीवस्याणुत्वमेव कथं युक्तमित्यादिविषया विशेषतः समीक्षिताः सन्ति।

पञ्चमपरिच्छेदे सिद्धान्तशिखामण्युक्तवीरशैवाभिमताविकृतपरिणामवादस्य विवेचनं विशेषतोऽवलोकनीयं वर्तते।

षष्ठपरिच्छेदे किं कर्मणा मोक्षः? उत ज्ञानेन? अथवा उभाभ्याम्? पतिकर्म-पशुकर्मणोर्विभागः, वैशेषिकाभिमतपदार्थानां साधर्म्य-वैधर्म्यात्मकं तत्त्वज्ञानं कथं मोक्षसाधनम्? योगदर्शनाभिमताष्टाङ्गयोगविमर्शः, अद्वैतवेदान्ताभिमतसप्तभूमिकाविचारः, वीरशैवाभिमतानां मुक्तिसोपानानां षट्स्थलानां स्वरूपविमर्श इत्यादिस्थलानि विशेषतोऽवधेयानि सन्ति।

दार्शनिकसिद्धान्तसमीक्षाख्यः सप्तमपरिच्छेदोऽस्य शोधप्रबन्धस्य प्राणभूतः। प्रबन्धेऽस्मिन् गवेषणापूर्णं यत्किञ्चिन्नावीन्यमस्ति तद्स्मिन् परिच्छेदे बाहुल्येन वर्तत इति विदाङ्कुर्वन्तु विद्वांसः। अतः समग्रोऽयं परिच्छेदोऽवश्यमवलोकनार्हः। उपसंहारे च सम्पूर्णस्य प्रबन्धस्य निष्कर्षान् संक्षेपेण प्रस्तुत्य को नाम वीरशैवसिद्धान्तस्य साम्प्रतिक उपयोग इति च यथावसरं व्याख्यातम्।

## कृतज्ञताज्ञापनम्

अतः परं कष्टसाध्येऽस्मिन् महाकार्ये साफल्यप्राप्त्यर्थं महापुरुषैर्मनीषिभिश्च गुरुवर्यैर्बहु स्वल्पं वा साहाय्यमकारि, येषामत्र कार्ये मनागपि साहाय्यं वरीवर्ति, तेषां सर्वेषामहमधमर्णः। अतः किञ्चिदपरं कर्तुमहमप्रभुरपि तदीयोपकारस्मरणावन-द्धकन्धरः सन् सप्रयासं कृतज्ञताज्ञापनं तु करोम्येव।

तत्र प्रथमतस्तत्रभवतां श्रीमतां परोपकारैकव्रतानां परमवैराग्यशालिनां करुणावताराणां साम्प्रतं त्यक्तकलेवराणामपि यशःशरीरेण विद्योतमानानां मम धर्मगुरूणां श्री ष०ब्र० अमरेश्वरशिवाचार्यमहास्वामिनां चरणकमलयोः श्रद्धया शिरसा शतशः ,प्रणामान् निवेदयामि, येषां सत्कृपया सत्प्रेरणया साहाय्येन चाहं प्रथमतः संस्कृताध्ययनाय प्रवृत्तः।

अतः परमहं पण्डितप्रकाण्डेभ्यः सोलापुरस्थ (महाराष्ट्र) श्रीमद्वीरशैवगुरुकुलस्य प्राचार्यचरेभ्यः साम्प्रतं त्यक्तकलेवरेभ्योऽनुगोण्ड-शालामठीयेभ्यो गङ्गाधरशास्त्रिमहाभागेभ्यः प्रणामाञ्जलिभिः कृतज्ञतां समर्पयामि, यैर्महानुभावैरहं षट्सु हायनेषु संस्कृताक्षरादारभ्यं काव्यतीर्थोपाधिपर्यन्तं प्रपाठितः। तस्मिन्नेव समये भाषाग्रन्थमाध्यमेन वेदान्तविद्यामध्यापितवतां परिव्राजकानां श्रीमहादेवमहास्वामिनामपि चरणयोः शिरोनति-प्रणामेन कृतज्ञतां समर्पयामि।

अथाहमद्वैतविद्यागुरूणां महामहिमशालिनां निखिलशास्त्रवेतॄणां शास्त्रार्थकलाविशारदानां विनेयानहर्निशमध्यापयतां सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयस्य पूर्वकुलपतीनां साम्प्रतं तत्रैव वेदान्तविभागाध्यक्षपदमलङ्कुर्वतां डॉ० देवस्वरूपमिश्रमहाभागानां चरणयोरहं सश्रद्धं प्रणामाञ्जलिभिः कृतज्ञतां

समर्पयामि। एतैर्महानुभावैरहं वेदान्तशास्त्रग्रन्थान् सुतनिर्विशेषतया सम्पाठ्य वेदान्ताचार्यपदवीं प्रापितः, ततश्चानुसन्धाने प्रवृत्तस्य मम निर्देशकत्वमङ्गीकृत्य सम्यङ्मार्गनिर्देशनं कृत्वा शोधप्रबन्धस्य पूर्णता प्रापिता। एतेषां कुशलमार्गनिर्देशनेनैव मम शोधप्रबन्धे नावीन्यमागतम्। भारतसर्वकारस्य धनसाहाय्येन मुद्रितममुं दृष्ट्वा प्रमुदितान्तरङ्गा एते महानुभावाः स्वाभिप्रायपरां सम्मतिं विलिख्य मामनुगृहीतवन्तः। एतेषामेव महानुभावानामनुकम्पया ग्रन्थोऽयं शक्तिविशिष्टाद्वैतवेदान्ताचार्यपरीक्षायां पाठ्यग्रन्थरूपेण स्वीकृतोऽस्ति।

अतः परं शैवशाक्त-तान्त्रिकादिवाङ्मये विश्वविश्रुतयशस्केभ्यः सर्वोपकारकर्तृभ्यः सततलेखननिरतेभ्यः कर्मयोगिभ्यः सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयस्य सांख्य-योग-तन्त्रागमविभागाध्यक्षचरेभ्यः श्रीमद्भ्यः पं० व्रजवल्लभद्विवेदमहोदयेभ्यः सविनयं सश्रद्धं प्रणामाञ्जलिमुपहरामि। एते महानुभावा एतत्प्रबन्धमामूलाग्रं समवलोक्य मम लेखनगता अशुद्धीः परिमार्ज्य निर्दोषमिमं प्रबन्धं कृत्वा स्वाभिप्रायपरां सम्मतिं च विलिख्य ममोत्साहं परिवर्धितवन्तः।

अथाहं ग्रन्थस्यास्य मुद्रणे आर्थिकसाहाय्यं कृतवद्भ्यो भारतसर्वकारस्य मानवसंसाधनविकासमन्त्र्यालयस्य शिक्षाविभागस्याधिकारिवर्गेभ्यस्तथा नान्देड-मण्डलान्तर्गतशिराढोणग्रामस्य भीमशङ्करसंस्थानमठाधीशेभ्यः श्रीमद्भ्यः ष० ब्र० षडक्षरशिवाचार्येभ्यश्च कृतज्ञतां समर्पयामि।

साम्प्रतमहं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिमहोदयेभ्यः प्रो० वि० वेङ्कटाचलंमहोदयेभ्यस्तथास्यैव विश्वविद्यालयस्यानुसन्धानसंस्थान-निदेशकेभ्यो डॉ० भागीरथप्रसादत्रिपाठिमहाभागेभ्यश्च सविनयं कृतज्ञतां समर्पयामि। एते च महानुभावा मम ग्रन्थमेनमामूलाग्रं विलोक्य विद्वत्पूर्णां स्वसम्मतिं प्रदाय महदुपकृतवन्तः।

अतः परं काशीजङ्गवाडीमहामठसंस्थानाधीश्वराणां साम्प्रतं शिवसामरस्यं प्राप्तवतां श्री १००८ जगद्गुरुविश्वेश्वरशिवाचार्यमहास्वामिनां दिव्यचरणारविन्दयोः कोटिशः प्रणामान् समर्प्य स्वकृतज्ञतां विज्ञापयामि। एते महानुभावा अध्ययनार्थं काशीं समागताय मह्यमेतादृशे महर्घेऽपि काले विंशतिवर्षं यावद् निःशुल्कावासभोजनादिकं प्रेम्णा प्रदाय मामुपकृतवन्तः। विद्यानुरागिणा-

मेतेषामकारणकारुण्येनाप्लावितोऽहं कृतोपकारसन्निभां काञ्चित् सेवां कर्तुमप्रभुरपि ग्रन्थकुसुममेनं तच्चरणारविन्दयोः समर्प्यात्मानं कृतार्थयितुमिच्छामि।

अथाहं श्रीमद्रम्भापुरीवीरसिंहासनाधीश्वराणां श्री १००८ जगद्गुरुप्रसन्न-रेणुकवीररुद्रमुनिशिवाचार्यमहास्वामिनां पवित्रचरणारविन्दयोः सहस्रशः प्रणामाञ्जलिमुपहरामि। एते महाचार्या ग्रन्थमेनं विलोक्य सन्तुष्टचित्ताः सन्तः शुभाशीर्वचनप्रदानेन मामनुगृहीतवन्तः।

एतदतिरिक्तं प्रबन्धेऽस्मिन् येषां विदुषां तत्कृतीनां वोपयोगो विहितस्तेभ्यः सर्वेभ्यो वर्तमानेभ्यः प्राचीनेभ्यश्च सश्रद्धं प्रणामाञ्जलिमावहामि। अन्तेऽहं विदुषां पुरतो ग्रन्थमेनं 'श्रीसिद्धान्तशिखामणिसमीक्षा' इति नामानं प्रस्तुवन्निदमनुभवामि–

यदि भवति मदीये ग्रन्थमध्ये प्रमादः
क्वचिदपि स महिम्ना शोधनीयो महद्भिः।
स्खलति गगनचारी प्रायशो नात्र चित्रं
भवति च गुरुहस्तालम्बनोऽपि प्रकारः।।इति।

जङ्गमवाडीमठः, वाराणसी — विदुषां वशंवदः
शरत्पूर्णिमा, २०४६ वि० — चन्द्रशेखरशर्मा हिरेमठः

# सन्दर्भग्रन्थसंकेतसूची

| | |
|---|---|
| अध्यात्मो० | अध्यात्मोपनिषत् |
| अध्या० उ० | ,, |
| अनु० सू० | अनुभवसूत्रम् |
| अ० पू० | अन्नपूर्णोपनिषत् |
| अ० ब्र० सि० | अद्वैतब्रह्मसिद्धिः |
| अमरको० | अमरकोशः |
| अर्थसं० | अर्थसंग्रहः |
| अ० सं० | ,, |
| अ० सि० | अद्वैतसिद्धिः |
| ई० उ० | ईशावास्योपनिषत् |
| ई० उ० शा० व्या० | ईशावास्योपनिषदः शाङ्करीव्याख्या |
| उप० | उपस्कारः |
| एका० एकाक्षर० को० | एकाक्षरनामकोष-संग्रहः |
| कठो० | कठोपनिषत् |
| कारि० | कारिकावली |
| किर० | किरणावली |
| किरात० | किरातार्जुनीयम् |
| कुलार्णव० | कुलार्णवतन्त्रम् |
| कौषी० | कौषीतकिब्राह्मणो-पनिषत् |
| क्रि० सा० | क्रियासारः |
| गुरु० का० | गुरुवंशकाव्यम् |
| च० ज्ञा० आ० | चन्द्रज्ञानागमः |
| छा० उ० | छान्दोग्योपनिषत् |
| जा० द० | जाबालदर्शनोपनिषत् |
| जै० सू० | जैमिनिसूत्रम् |
| त० चि० | तत्त्वचिन्तामणिः |
| त० नि० | तन्त्राधिकारनिर्णयः |
| तत्त्व० प्र० | तत्त्वप्रदीपिका (चित्सुखी) |
| त० वै० | तत्त्ववैशारदी |
| तत्त्ववै० | ,, |
| तत्त्वा० | तत्त्वावली |
| तन्त्रा० | तन्त्रालोकः |
| त० भा० | तर्कभाषा |
| तर्कभा० | ,, |
| तर्कसं० | तर्कसंग्रहः |
| तर्कसं० दी० | तर्कसंग्रहदीपिका |
| तर्कसं० दी० नृसिंह० व्या० | तर्कसंग्रहदीपिकाया नृसिंहीयव्याख्या |
| तर्कसं० नी० | तर्कसंग्रहदोपिकाया नीलकण्ठव्याख्या |
| तर्कसं० वा० वृ० | तर्कसंग्रहस्य वाक्यवृत्तिः |
| ते० बि० उ० | तेजोबिन्दूपनिषत् |
| तै० उ० | तैत्तिरीयोपनिषत् |
| तै० सं० | तैत्तिरीयसंहिता |

| | |
|---|---|
| त्रि० ता० | त्रिपुरातापिन्युपनिषत् |
| त्रि० म० ना० | त्रिपाद्विभूतिमहानारायणोपनिषत् |
| दशश्लो० | दशश्लोकी |
| दिन० | दिनकरी |
| दृ० दृ० वि० | दृग्दृश्यविवेकः |
| न० वि० | नयविवेकः |
| ना० वि० उ० | नादबिन्दूपनिषत् |
| नृसिंहो० | नृसिंहोत्तरतापिन्युपनिषत् |
| नै० च० | नैषधीयचरितम् |
| नैष्क० सि० | नैष्कर्म्यसिद्धिः |
| नै० सि० | ,, |
| न्या० क० | न्यायकन्दली |
| न्या० कु० | न्यायकुसुमाञ्जलिः |
| न्या० को० | न्यायकोशः |
| न्या० बो० | न्यायबोधिनी |
| न्या० म० | न्यायमञ्जरी |
| न्या० मु० | न्यायसिद्धान्तमुक्तावली |
| न्या० मु० प्र० | न्यायसिद्धान्तमुक्तावल्याः प्रभाटीका |
| न्या० र० | न्यायरत्नाकरः |
| न्या० ली० | न्यायलीलावती |
| न्या० वा० ता० | न्यायवार्त्तिकतात्पर्यटीका |
| न्या० सा० | |
| न्यायसारः | |
| न्या० सु० | |
| न्यायसुधा | |

| | |
|---|---|
| न्या० सू० | न्यायसूत्रम् |
| न्या० सू० भा० | न्यायसूत्रभाष्यम् |
| न्या० सू० वा० | न्यायसूत्रवार्त्तिकम् |
| न्या० सू० वृ० | न्यायसूत्रवृत्तिः |
| पञ्च० | पञ्चदशी |
| पा० तन्त्र० | पारमेश्वरतन्त्रम् |
| पा० सू० | पाणिनिसूत्रम् |
| पारा० स्मृ० | पाराशरस्मृतिः |
| प्र० प० | प्रकरणपञ्चिका |
| प्रत्यभिज्ञा० | प्रत्यभिज्ञाहृदयम् |
| प्र०पा०भा० | प्रशस्तपादभाष्यम् |
| प्र०मा० | प्रश्नोत्तररत्नमालिका |
| प्र० वि० | प्रभाकरविजयः |
| प्रश्नो० | प्रश्नोपनिषत् |
| बृ०उ० | बृहदारण्यकोपनिषत् |
| बृ०उ०शा०भा० | ,, शाङ्करभाष्यम् |
| बृ०वा०सा० | बृहदारण्यकवार्त्तिकसारः |
| ब्र०शा०मा० | ब्रह्मज्ञानावलीमाला |
| ब्र०बि०उ० | ब्रह्मबिन्दूपनिषत् |
| ब्र०वि० | ब्रह्मविद्योपनिषत् |
| ब्र०सू० | ब्रह्मसूत्रम् |
| ब्र०सू० पूर्णप्रज्ञ०भा० | ब्रह्मसूत्रस्य पूर्णप्रज्ञभाष्यम् |
| ब्र०सू०भा० | ब्रह्मसूत्रशाङ्करभाष्यस्य भामती |
| ब्र०सू०शा०भा० | ब्रह्मसूत्रशाङ्करभाष्यम् |
| ब्र०सू०शा०वृ० | ब्रह्मसूत्रशाङ्करीवृत्तिः |
| ब्र०सू०श्रीकर० | ब्रह्मसूत्रशीकरभाष्यम् |

| | | | |
|---|---|---|---|
| भ०गी० | भगवद्गीता | यो० सू० भा० | योगसूत्रभाष्यम् |
| भ०गी०मधु० | ,, मधुसूदनीव्याख्या | यो० सू० भो० वृ० | योगसूत्रभोजवृत्तिः |
| भ०गी०शं०व्या० | ,, शङ्करानन्दीव्याख्या | यो० सू० वा० | योगसूत्रवार्त्तिकम् |
| भ०गी०शा०भा० | ,, शाङ्करभाष्यम् | रघु० | रघुवंशमहाकाव्यम् |
| भ०स०उ० | भवसन्तरणोपनिषत् | र० त्र० | रत्नत्रयम् |
| भागव०, भाग० | भागवतम् | व० उ० | वराहोपनिषत् |
| भागव०वीर०व्या० | भागवतस्य | वायुपु० | वायुपुराणम् |
| | वीरराघवव्याख्या | वा० शु० त० | वातुलशुद्धाख्यतन्त्रम् |
| भास्करी | भास्करी | वा० सं० | वाजसनेयसंहिता |
| म०उ० | महोपनिषत् | वा० सु० | वाक्यसुधा |
| मनुस्मृ० | मनुस्मृतिः | वि० चू० | विवेकचूडामणिः |
| मनुस्मृ०मन्वर्थ० | मनुस्मृतेर्मन्वर्थ | विष्णुपु० | विष्णुपुराणम् |
| | मुक्तावलिव्याख्या | वि० प्र० सं० | विवरणप्रमेयसंग्रहः |
| म० भा० | महाभारतम् | वि० सा० | विचारसागरः |
| म० स्तो० | महिम्नस्तोत्रम् | वी० आ० च० | वीरशैवानन्दचन्द्रिका |
| महाना० | महानारायणोपनिषत् | वी० ध० शि० | वीरशैवधर्मशिरोमणिः |
| मा० मे० | मानमेयोदयः | वी० स० सं० | वीरशैवसदाचारसंग्रहः |
| मी० प्र० | मीमांसान्यायप्रकाशः | वृ० प्र० | वृत्तिप्रभाकरः |
| मी० प्र० प्रभा | ,, प्रभाटीका | वे० क० | वेदान्तकल्पलतिका |
| मी० सू० | मीमांसासूत्रम् | वे० प० | वेदान्तपरिभाषा |
| मुण्ड० | मुण्डकोपनिषत् | वे० वी० चि० | वेदान्तसारवीरशैव- |
| याज्ञ० स्मृ० | याज्ञवल्क्यस्मृतिः | | चिन्तामणिः |
| या० स्मृ० | ,, | वे० सा० | वेदान्तसारः |
| यो० वा० | योगवासिष्ठम् | वे० सि० मु० | वेदान्तसिद्धान्तमुक्तावली |
| यो० सा० सं० | योगसारसंग्रहः | वैराग्यश० | वैराग्यशतकम् |
| यो० सू० | योगसूत्रम् | वै० सू० | वैशेषिकसूत्रम् |
| यो०सू०तत्त्ववै० | योगसूत्रव्यासभाष्यस्य | वै० सू० उप० | वैशेषिकसूत्रोपस्कारः |
| | तत्त्ववैशारदीव्याख्या | वै०सू०रसा० | वैशेषिकसूत्ररसायनव्याख्या |

| | |
|---|---|
| श॰ वि॰ द॰ | शक्तिविशिष्टाद्वैतदर्शनम् |
| श॰ वि॰ सि॰ | शक्तिविशिष्टाद्वैतसिद्धान्तः |
| शङ्करदि॰ | शङ्करदिग्विजयः |
| शाण्डि॰ उ॰ | शाण्डिल्योपनिषत् |
| शा॰ दी॰ | शास्त्रदीपिका |
| शिवगी॰, शि॰ गी॰ | शिवगीता |
| शि॰ द॰ | शिवाद्वैतदर्पणः |
| शि॰ परि॰ | शिवाद्वैतपरिभाषा |
| शिवपु॰ | शिवमहापुराणम् |
| शिव॰ रत्ना॰ | शिवतत्त्वरत्नाकरः |
| शि॰ सू॰ | शिवसूत्रम् |
| शि॰ सू॰ वि॰ | शिवसूत्रविमर्शिनी |
| श्लो॰ वा॰ | श्लोकवार्त्तिकम् |
| श्लो॰ वा॰- | श्लोकवार्त्तिकस्य |
| न्यायरत्ना॰ | न्यायरत्नाकरव्याख्या |
| श्वे॰ उ॰ | श्वेताश्वतरोपनिषत् |
| षड्॰ स॰ | षड् दर्शनसमुच्चयः |
| ष॰ स॰ | ,, |
| सं॰ शा॰ | संक्षेपशारीरकम् |
| सं॰ द॰ सं॰ | सर्वदर्शनसंग्रहः |
| सं॰ प॰ | सप्तपदार्थी |
| सर्वम॰ सं॰ | सर्वमतसंग्रहः |
| सां॰ का॰ | सांख्यकारिका |

| | |
|---|---|
| सां॰ त॰ कौ॰ | सांख्यतत्त्वकौमुदी |
| सां॰ त॰ कौ॰ | सांख्यतत्त्वकौमुद्याः |
| सा॰ बो॰ | सारबोधिनी |
| सां॰ सू॰ | सांख्यसूत्रम् |
| सां॰ सू॰ अ॰ वृ॰ | ,, अनिरुद्धवृत्तिः |
| सां॰ सू॰ प्र॰ भा॰ | ,, प्रवचनभाष्यम् |
| सा॰ सु॰ | सारस्वती सुषमा |
| सि॰ कौ॰ | सिद्धान्तकौमुदी |
| सि॰ च॰ | सिद्धान्तचन्द्रोदयः |
| सि॰ बि॰ | सिद्धान्तबिन्दुः |
| सि॰ ले॰ सं॰ | सिद्धान्तलेशसंग्रहः |
| सिद्धान्तशिखो॰ | सिद्धान्तशिखोपनिषत् |
| सिद्धान्तशिखो॰ वी॰भा॰ | सिद्धान्तशिखोपनिषदो वीरशैवभाष्यम् |
| सि॰ शि॰ | सिद्धान्तशिखामणिः |
| सि॰शि॰तत्त्व॰ | सिद्धान्तशिखामणेस्तत्त्व प्रदीपिकाख्या व्याख्या |
| सु॰प॰प॰प्र॰ | सुप्रभेदागमान्तर्गतपञ्चाचार्य पञ्चमोत्पत्तिप्रकरणम् |
| सूक्ष्मा॰ | सूक्ष्मागमः |
| स्क॰ पु॰ | स्कन्दपुराणम् |
| स्या॰ म॰ | स्याद्वादमञ्जरी |
| हनुमन्ना॰ | हनुमन्नाटकम् |



# विषयानुक्रमणी

## तृतीयः परिच्छेदः



## चतुर्थः परिच्छेदः

## पञ्चमः परिच्छेदः

## षष्ठः परिच्छेदः

## सप्तमः परिच्छेदः



## अष्टमः परिच्छेदः

# शिवस्तुतिः

त्रैलोक्य-सम्पदालेख्य-समुल्लेखन-भित्तये ।
सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः ।।

ब्रह्मेति व्यपदेशस्य विषयं यं प्रचक्षते।
वेदान्तिनो जगन्मूलं तं नमामि परं शिवम्।।

यस्योर्मिबुद्बुदाभासः षट्त्रिंशत्तत्त्वसञ्चयः।
निर्मलं शिवनामानं तं वन्दे चिन्महोदधिम्।।

---

हिन्दी भाषानुवाद मङ्गलाचरण—

अन्नपूर्णा जगन्माता विश्वनाथो जगत्पिता ।
आभ्यामधिष्ठिता काशी त्रयीयं विदधातु शम् ।।१।।
वीरशैवप्रसाराय राष्ट्रभाषानुवादकृत् ।
श्रीसिद्धान्तशिखामणि-समीक्षा-ग्रन्थमाश्रये ।।२।।

## शिव की स्तुति

त्रिलोकी की विचित्र नाना सम्पदाओं के चित्र प्रतिबिम्ब को स्वात्मसंवित्स्वरूप आदर्शतल में स्वेच्छाबल से चित्रित (भेदाभेदरूपतया आभासित) करने वाले सच्चिदानन्द ब्रह्मरूप शिव को नमस्कार अर्पित हो ।।१।।

वेदान्ती लोग जिनको ब्रह्म-शब्द से व्यपदेश्य कहते हैं तथा जो सम्पूर्ण जगत् के मूलकारण हैं; आगमों में परमशिव शब्द से सम्बोध्य उनको मैं अपनी प्रणति निवेदित करता हूँ ।।२।।

चिन्मय भगवान् शिव में जीव-सुलभ आणव, मायीय अथवा कार्ममल का अस्तित्व नहीं होता। वह महासागर-सदृश हैं। उनके अन्दर छत्तीस-तत्त्वों का संसार, तरङ्ग एवं बुलबुले की तरह आभासित होता है। मैं उनके प्रति अभिवादन एवं स्तुति करता हूँ ।।३।।

---

१. सि० शि० १।१-१२

यद्भासा भासते विश्वं यत्सुखेनानुमोदते।
नमस्तस्मै गुणातीतविभवाय परात्मने।।

सदाशिवमुखाशेषतत्त्वोन्मेषविधायिने।
निष्कलङ्कस्वभावाय नमः शान्ताय शम्भवे।।

स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने।
स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे।।

यत्र विश्राम्यतीशत्वं स्वाभाविकमनुत्तमम्।
नमस्तस्मै महेशाय महादेवाय शूलिने।।

---

परमात्मा शिव स्वप्रकाश होने के साथ परप्रकाश भी हैं। सम्पूर्ण विश्व परमेश्वर के प्रकाश से ही प्रकाशित होता है। जगत् में विद्यमान आनन्द परमेश्वर के आनन्द का लवलेशमात्र है। परमेश्वर त्रिगुणातीत हैं तथा अमायीय वैभवों (अनन्त शक्तियों) से आपूरित हैं; उन्हें नमस्कार अर्पित हो ।।४।।

शान्त शम्भु=महेश्वर, विश्वसुलभ दोषों से वर्जित हैं तथा सदाशिवप्रभृति पृथिवी-पर्यन्त सूक्ष्मरूप से निज-निलीन निखिल तत्त्वों का उन्मेष अर्थात् बाह्यतया आभासन करते हैं। मैं उनके प्रति नमस्कार अर्पित करता हूँ ।।५।।

जो महेश्वर स्वेच्छा से दिव्य विग्रह धारण करते हैं, स्वच्छ व्यवहार के स्वच्छन्द व्यवहर्ता हैं तथा अपनी इच्छा शक्ति के बल से त्रिलोकी की रचना (नैपुणी से) करते हैं। ऐसे साम्ब (जगदम्बा भवानी सहित) शम्भु भगवान् को हमारे नमस्कार अर्पित हैं ।।६।।

जिस प्रभु में स्वाभाविक अमायीय ईश्वरता अपने उत्कृष्टतम रूप से निवास करती है; उन त्रिशूली (इच्छा, ज्ञान एवं क्रियाशक्ति) से समुल्लसित महादेव कहलाने वाले भगवान् महेश्वर को हमारे नमस्कार अर्पित हैं ।।७।।

# शक्तिस्तुतिः

यामाहुः सर्वलोकानां प्रकृतिं शास्त्रपारगाः।
तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम्।।

यया महेश्वरः शम्भुर्नामरूपादिसंयुतः।
तस्यै मायास्वरूपायै नमः परमशक्तये।।

शिवाद्याऽऽदिसमुत्पन्ना शान्त्यतीतपदोत्तरा।
मातरं तां समस्तानां वन्दे शिवकरीं शिवाम्।।

इच्छाज्ञानादिरूपेण या शम्भोर्विश्वभाविनी।
वन्दे तां परमानन्दप्रबोधलहरीं शिवाम्।।

---

# शक्तिस्तुतिः

## शक्ति-शिवा की स्तुति

जिनको शास्त्रज्ञ विद्वज्जन समस्त लोकों की प्रकृति अर्थात् मूलकारण बताते हैं उन धर्मचारिणी, शम्भु की अर्द्धाङ्गिनी परमशिवा (भवानी) को मैं अपनी प्रणति निवेदित करता हूँ ।।८।।

जिनके बल से महेश्वर (शम्भु) नाम, रूप एवं कल्याणगुणों से युक्त विग्रह धारण करते हैं उन मायारूपिणी परमशक्ति को नमस्कार अर्पित हो ।।९।।

शिवतत्त्व से पृथिवीतत्त्वपर्यन्त जिन कलाओं (निवृत्तिकला से लेकर शान्त्यतीता कला तक) की स्थिति शास्त्रों में प्रतिपादित है उनसे ऊर्ध्वभूमि में निवास करने वाली मङ्गलविधायिनी जगन्माता शिव-शक्ति का मैं अभिवादन तथा स्तुति करता हूँ ।।१०।।

जो देवी, शम्भु की इच्छाशक्ति, ज्ञानशक्ति एवं क्रियाशक्ति रूपों में अभिव्यक्त होकर सम्पूर्ण विश्व की मङ्गलमयी भावना का विधान करती है; परमानन्द प्रबोधमय ज्ञानसिन्धु की लहरी उन शिवादेवी को मैं भावमयी वन्दना अर्पित करता हूँ ।।११।।

अमृतार्थं प्रपन्नानां या सुविद्याप्रदायिनी।
अहर्निशमहं वन्दे तामीशानमनोरमाम्।।

---

अमृततत्त्व मोक्ष की प्राप्ति हेतु शरणागत भक्तजन को जो देवी सदैव सद्विद्या प्रदान करती है उन ईशान-मनोरमा=प्रिया शिवा का सदा मैं अभिवन्दन करता हूँ ॥१२॥

श्रीगणेशाय नमः

# श्रीसिद्धान्तशिखामणिसमीक्षा

## प्रथमः परिच्छेदः

### दार्शनिकपृष्ठभूमिः

दर्शनप्रधानेऽस्मिन् भारते वर्षे सन्ति बहूनि दर्शनानि। 'दृशिर् प्रेक्षणे' (भ्वा०१०५७) इति धातोर्ल्युटि, अनादेशे दर्शनशब्दो निष्पद्यते। तस्माद् 'दृश्यते साक्षात्क्रियते परमतत्त्वं येन, तद् दर्शनम्' इति व्युत्पत्त्या तत्त्वज्ञानसाधनं शास्त्रं दर्शनमित्युच्यते।

---

श्री गणेश (गणपति परमेश्वर) को नमस्कार अर्पित हो।

# श्रीसिद्धान्तशिखामणिसमीक्षा

## प्रथम परिच्छेद

भारतवर्ष को विश्व के सभी देशों का शिरोमणि माना जाता रहा है। क्योंकि भारत देश में अनादि काल से अध्यात्म-शास्त्र की प्रधानता रही है। यहाँ अनेक प्रकार के दर्शन शास्त्र प्रसिद्ध हैं। पाणिनीय धातुपाठ के भ्वादिगणपठित (दृशिर् प्रेक्षणे १०५७) धातु से करण अर्थ में ल्युट्=(यु) प्रत्यय होता है। यु के स्थान पर ''युवोरनाकौ'' सूत्र से ''अन'' आदेश होने पर तथा ''पुगन्तलघूपधस्य च'' सूत्र से लघूपधगुण करने के अनन्तर ''उरण्रपरः'' सूत्र से रपर होने पर दर्शन शब्द निष्पन्न होता है। ''दृश्यते=साक्षात्क्रियते परमतत्त्वं येन तद्-दर्शनम् इस व्युत्पत्ति के आधार पर दर्शनशब्द से निम्नाङ्कित अर्थ का लाभ होता है—

जिस शास्त्र का अनुशीलन करने से परमतत्त्व का आत्म-साक्षात्कार होता है वह दर्शनशास्त्र कहलाता है। भगवान् श्रीकृष्ण ने इसे **अध्यात्मविद्या** शब्द से सर्वोच्च सम्मान प्रदान किया है।

निष्कर्ष यह है— धर्म, अर्थ, काम एवम् मोक्ष— इन चार पुरुषार्थों में मोक्ष को परमपुरुषार्थ कहा जाता है। स्वयं श्रुति मोक्ष की प्रशंसा करती है— ''न स पुनरावर्तते।'' मुक्तपुरुष को सांसारिक क्लेशमय बन्धन की आवृत्ति नहीं होती। मोक्ष

## दर्शनानां परिगणना

भारते कति दर्शनानि सन्तीति विषये विदुषां नैकमत्यं दरीदृश्यते। "रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषाम्"[१] इत्यत्र शिवकविः पुष्पदन्तः संक्षेपेण दर्शनानां बहुत्वं प्रदर्शितवान्। भगवत्पादशङ्कराचार्याः-

न सांख्यं न शैवं न तत्पाञ्चरात्रं
न जैनं न मीमांसकादेर्मतं वा[२]।

इत्यत्र सांख्य-शैव-पाञ्चरात्रागम-जैन-मीमांसकानां मतान्युल्लिख्यादि-शब्दप्रयोगेण तेषामानन्त्यं प्रदर्शितवन्तः। श्रीमाधवाचार्याः सर्वदर्शनसंग्रहे चार्वाक-बौद्ध-जैन-रामानुज-पूर्णप्रज्ञ-नकुलीशपाशुपत-शैव-प्रत्यभिज्ञा-रसेश्वर-वैशेषिक-न्याय-जैमिनीय-पाणिनीय-सांख्य-योग-शाङ्करवेदान्ताख्यानां

---

की प्राप्ति, विवेकपुरःसर आत्मतत्त्वज्ञान के बिना सम्भव नहीं है। इस तत्त्वज्ञान के साधन अर्थात् बोध कराने वाले शास्त्र को दर्शनशास्त्र कहा जाता है।

## दर्शनशास्त्रों की संख्या का विचार

भारत में कितने दर्शन शास्त्र हैं? इस प्रश्न के सन्दर्भ में विद्वज्जन में मतैक्य दृष्टिगोचर नहीं होता। पुष्पदन्त नामक भक्तशिवकवि संक्षेप में दर्शनों की बहुलता को प्रतिपादित करते हैं— "रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषाम्।" आशय यह है— साधक मानवों में रुचि-वैचित्र्य देखा जाता है। ऋजुमार्ग अथवा कुटिल मार्ग से सबके प्राप्तव्य एक ही भगवान् हैं जैसे सभी नदियों के जल का एकमात्र प्राप्तव्य सागर होता है।

भगवत्पाद शङ्कराचार्य ने अपने **दशश्लोकी** में कतिपय दर्शनशास्त्रों का उल्लेख किया है। तद्यथा— "न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसाकादेर्मतं वा।" इस पद्यांश में आपने सांख्य, शैव, पाञ्चरात्र, जैन एवं मीमांसा दर्शन के साथ आदिपद का प्रयोग किया है। एतावता आपने अनेकविध दर्शनशास्त्रों को स्पष्ट रूप से मान्यता प्रदान की है। आचार्य सायण माधव ने अपने **सर्वदर्शनसंग्रहग्रन्थ** में सोलह दर्शनों की गणना की है। तद्यथा— १. चार्वाकदर्शन, २. बौद्धदर्शन, ३. जैनदर्शन, ४. रामानुजदर्शन, ५. पूर्णप्रज्ञदर्शन, ६. नकुलीशपाशुपतदर्शन, ७.

---

१. म० स्तो० ७ श्लो०।

२. दशश्लो० ४.

षोडशदर्शनानां परिगणनां कृतवन्तः।

तदेवं भारते कति दर्शनानि सन्तीति निश्चितरूपेण न केनापि संग्रहः कृतः। एतदवलोक्य श्रीनारायणमिश्रः कथयति–पूर्वोक्ताः सर्वेऽपि दर्शनाभ्युपगन्तारः पक्षपातिन एव प्रतिभान्तीति।[१]

## आस्तिक-नास्तिकदर्शनानि

भारतवर्षीयो दार्शनिकसम्प्रदायः प्राय अस्तिको नास्तिकश्चेति भागद्वयेन विभक्तोऽस्ति। तत्र नास्तिक–आस्तिकशब्दयोरर्थनिर्णयविधौ दृश्यते विमतिः पण्डितेषु। भगवता पाणिनिना–"अस्ति–नास्ति–दिष्टं मतिः"[२] इत्यस्तित्ववादिन आस्तिकाः, नास्तित्ववादिनश्च नास्तिका इत्यास्तिकनास्तिकशब्दयोर्निर्वचनं प्रदर्शितम्। तत्रास्तित्व–नास्तित्वशब्दाभ्यां यस्य पदार्थस्य सम्बन्धोऽस्ति तस्य विचारः परमावश्यकः, अन्यथा यस्य कस्यचित्पदार्थस्य यस्मिन् कस्मिंश्चिद्रूपेऽस्तित्वाङ्गीकारे सर्वेषामास्तिकत्वापत्तौ नास्तिकसंज्ञाप्रयोगस्थलस्यैव दौर्लभ्यप्रसङ्गः। तत्र स पदार्थः कः? इति जिज्ञासायां पूर्वोक्तस्य भगवतः

---

शैवदर्शन, ८. प्रत्यभिज्ञादर्शन, ९. रसेश्वरदर्शन, १०. वैशेषिकदर्शन, ११. न्यायदर्शन, १२. जैमिनीयदर्शन, १३. पाणिनीयदर्शन, १४. सांख्यदर्शन, १५. योगदर्शन तथा १६. शांकरवेदान्तदर्शन।

उपर्युक्त विवेचना से सुस्पष्ट है कि किसी विद्वान् के द्वारा निश्चयरूप से निःशेष संग्रह नहीं किया जाता है कि भारत में कितने प्रकार के दर्शन-शास्त्र हैं। इस बात का अवलोकन कर श्रीनारायणमिश्र का निष्कर्ष कथन है— सभी विद्वज्जन दर्शनशास्त्रों की परिणगना करते हुए पक्षपाती प्रतीत होते हैं।

## आस्तिक एवं नास्तिक दर्शन

भारतवर्ष का दार्शनिक सम्प्रदाय प्रायेण आस्तिक एवं नास्तिक इन दो विभागों में विभक्त है। नास्तिक एवम् आस्तिक इन दो शब्दों के अर्थ-निर्धारण-विधि में पण्डितों में वैमत्य देखा जाता है। भगवान् पाणिनि ने "अस्ति नास्ति दिष्टं मतिः" सूत्रद्वारा आस्तिक एवं नास्तिक शब्दों का निर्वचन किया है। तदनुसार अस्तित्ववादी आस्तिक कहलाते हैं एवं नास्तित्ववादी नास्तिक कहलाते हैं। यहाँ अस्तित्व तथा नास्तित्व

---

१. द्र० न्यायदर्शनस्य प्रस्तावना, पृ. १२. चौ. सं. सी. वाराणसी, १९७० ई०।

२. पा० सू० ४।४।६०.

पाणिनेः सूत्रस्य व्याख्यानावसरे वामन[१]-कैयट[२]-भट्टोजिदीक्षितादिभिः[३] परलोकोऽस्तीति यस्य मतिरस्ति स आस्तिकः, तद्विपरीतो नास्तिक इति व्याख्यातम्। श्रीकुल्लूकभट्टो[४]ऽप्यस्तित्व-नास्तित्वशब्दविषयतया परलोक- (जन्मान्तर) मेवाभ्युपगच्छति। एवमेव श्रीमद्वीरराघवः-"आस्तिक्यम्, अस्ति परलोक इति मतिर्यस्य स आस्तिकः, तस्य भाव आस्तिक्यम्"[५] इति परलोकाङ्गीकारस्यैवास्तिकतां प्रतिपादयामास। श्रीधराचार्येणापि-"आस्तिक्यम्, अस्ति परलोक इति निश्चयः"[६] इति पूर्वोक्त एवाभिप्रायः प्रकटीकृतः।

श्रीमाधवाचार्याः-"नास्तिकशिरोमणे! तावदीर्ष्याकषायिते चक्षुषी निमील्य परिभावयतु भवान्"[७] इति जगत्स्रष्टृत्वेनेश्वरानङ्गीकर्तृन् मीमांसकान्

---

शब्दों का सम्बन्ध जिस पदार्थ के साथ सापेक्ष है उसका विचार किया जाना परमावश्यक है। अन्यथा (विचार के अभाव में) जिस किसी पदार्थ का जिस किसी रूप में अस्तित्व मानने पर सभी जनों दर्शनों की आस्तिकता प्राप्त होगी। ऐसी स्थिति में नास्तिक संज्ञा का प्रयोगस्थल दुर्लभ हो जायेगा। अतः उक्त पदार्थ की जिज्ञासा होने पर उपर्युक्त सूत्र के व्याख्यान में काशिकावृत्तिकार वामन, महाभाष्यप्रदीपकार कैयट तथा कौमुदीकार भट्टोजिदीक्षित प्रभृति विद्वज्जन ने सुस्पष्ट कहा है— परलोक है- ऐसी मति वाले को आस्तिक कहा जाता है तथा तद्विपरीत को नास्तिक कहा जाता है। मनुस्मृति की टीका **मन्वर्थमुक्तावली** में श्रीकुल्लूकभट्ट ने भी परलोक अर्थात् जन्मान्तर को ही अस्तित्व तथा नास्तित्व शब्दों का विषय बतलाया है। श्रीमद्भागवत की अपनी व्याख्या में आचार्य श्रीमद् **वीरराघव** ने उपर्युक्त अर्थ का अनुमोदन किया है। तद्यथा— अस्ति परलोक इति मतिर्यस्य स आस्तिकः, तस्य भाव आस्तिक्यम्। अपनी **श्रीधरी टीका** में आचार्य श्रीधर ने भी उपर्युक्त अभिप्राय का ही समर्थन किया है। तद्यथा— आस्तिक्यम् = अस्ति परलोक इति निश्चयः।

श्रीमाधवाचार्य ने मीमांसकों को नास्तिक शब्द से सम्बोधित किया है क्योंकि

---

१. द्र० पा० सू० ४।४।६० काशिकावृत्तिः।
२. तत्रैव महाभाष्यप्रदीप०।
३. द्र० सि० कौ०, पृ० २६४.
४. द्र० मनुस्मृ० ४।१६३, मन्वर्थमुक्तावली।
५. भागव० ७।११।२३. वीर० व्या०।
६. भ० गी० १८-४२, श्रीधरी।
७. स० द० सं०, पृ० ५१०.

नास्तिकशब्देन सम्बोधयामासुः। एतेन ईश्वरोऽस्तीति मतिर्येषां त आस्तिकाः, ईश्वरो नास्तीति मतिर्येषां ते नास्तिका इत्यस्तित्व-नास्तित्वशब्दाभ्यामीश्वरो विषयीक्रियत इति ज्ञायते।

पुनरन्ये च यस्यास्तित्व-नास्तित्वाभ्यां सम्बन्धः स पदार्थो वेद इति पक्षं रोचन्ते। तथाहि-तत्रभवान्मनुः-"नास्तिको वेदनिन्दकः"[१] इति, श्रीशङ्करभगवत्पादाः-"आस्तिक्यमास्तिकभावः, श्रद्दधानता आगमार्थेषु"[२] इति, श्रीवीरराघवाचार्याः-"आस्तिक्यं शास्त्रार्थे सत्यतानिश्चयः,"[३] "आस्तिक्यं शास्त्रार्थविश्वासः"[४] इति प्रतिपादयामासुः। एतन्मतानुसारेण "अस्ति वेदः प्रमाणमिति मतिर्येषां ते आस्तिकाः", "नास्ति वेदः प्रमाणमिति मतिर्येषां ते नास्तिकाः" इति व्युत्पत्त्या वेदप्रामाण्याभ्युपगन्तार आस्तिकाः, तद्विपरीताश्च नास्तिका इति सिद्ध्यति।

---

मीमांसक, जगत् के कर्ता रूप में ईश्वर को नहीं स्वीकारते हैं। तद्यथा— नास्तिक शिरोमणे! तावदीर्ष्याकषायिते चक्षुषी निमील्य परिभावयतु भवान् इति। इसमें सुस्पष्ट रूप से मीमांसक को नास्तिकशिरोमणि कहा गया है। तथा ईर्ष्या से दूषित नेत्रों को मूँदकर शान्तभाव से युक्तिसंवलित विचार करने की मन्त्रणा उन्हें दी गई है। उपर्युक्त कथन से यह ज्ञात होता है— जिनकी मति है- ईश्वर होता है वे आस्तिक होते हैं तथा जिनकी मति है- ईश्वर नहीं होता है वे नास्तिक होते हैं। इस प्रकार इनके (द्वितीय) मत में अस्तित्व एवं नास्तित्व शब्दों का विषय ईश्वर हैं न कि जन्मान्तर।

उपर्युक्त दो मतों से भिन्न तृतीय मत भी इस सन्दर्भ में प्राप्त होता है। इस मत के पोषक आचार्य का अभिमत पक्ष है— अस्तित्व एवं नास्तित्व शब्दों के साथ जिस पदार्थ का सम्बन्ध है वह वेद (आगम) है। तद्यथा— पूज्य मनुने अपनी स्मृति में वेद-निन्दक को नास्तिक कहा है। भगवत्पाद आद्य शङ्कराचार्य ने आस्तिक्यम् अथवा आस्तिकभाव का अभिप्रेतार्थ आगम (वेद) प्रतिपादित अर्थों में श्रद्धाभाव को बताया है। भागवत के व्याख्याकार श्री वीरराघवाचार्य ने स्पष्ट शब्दों में प्रतिपादित

---

१. मनुस्मृ० २।११.

२. भ० गी० १८-४२ शा० भा०।

३. भागव० ११।१७।१८ वीर० व्या०।

४. तत्रैव ११।१९।३३ वीर० व्या०।

तदेवमेतेभ्यः प्राचीनप्रवादेभ्यः परलोकस्य, ईश्वरस्य, कर्मफलस्य, वेदस्य च प्रामाण्ये श्रद्धा आस्तिक्यम्, तद्विपरीतं च नास्तिक्यमित्यायाति। अत एव महाभारते द्रौपदीं प्रति युधिष्ठिरो धर्मेश्वरादिष्वस्तिताबुद्धिरेव आस्तिक्यमित्युक्तवान्। तथाहि–

**न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः।**
**यष्टव्यं च प्रयत्नेन दातव्यं चानसूयया।।**
**कर्मणां फलमस्तीह तथैतद्धर्म-शाश्वतम्।**
**ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः।।**
**तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु।**
**व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज।।**

---

किया है— (१) वेद-शास्त्रों में प्रतिपादित अर्थों में सत्यता का निश्चय होना आस्तिक्य बुद्धि है। (२) वेद-शास्त्र-प्रतिपादित अर्थों में विश्वास बुद्धि 'आस्तिक्य'' कहलाती है।

इस मत में आस्तिक शब्द की व्युत्पत्ति है— आस्तिक वे लोग हैं जिनकी मति है— वेद प्रमाण हैं। तद्वत् नास्तिक शब्द की व्युत्पत्ति है— नास्तिक वे लोग हैं, जिनकी मति है- वेद प्रमाण नहीं है। उपर्युक्त व्युत्पत्ति के आधार पर आस्तिक शब्द का अर्थ-निष्कर्ष है- वेदप्रामाण्य को स्वीकारने वाला सम्प्रदाय। तद्वत् नास्तिक शब्द का अर्थनिष्कर्ष है— वेदप्रामाण्य को स्वीकार नहीं करने वाला सम्प्रदाय।

उपर्युक्त नानाविध व्युत्पत्ति के आधार पर प्राचीन आचार्यों के सिद्धान्तों के अनुसार आस्तिक्य की परिभाषा है— परलोक, ईश्वर, कर्मफल तथा वेदप्रामाण्य के प्रति श्रद्धाभाव होना। आस्तिक्य से विपरीत नास्तिक होता है। यह फलितार्थ है। अत एव महाभारत में युधिष्ठिर ने द्रौपदी से कहा है— ''धर्म, ईश्वर, परलोक एवं इनके अस्तित्वबोधक वेदप्रामाण्य की अस्तिताबुद्धि को आस्तिक्य शब्द प्रतिपादित करता है। तद्यथा— यागादि-पूर्ति के साथ फल की उपलब्धि नहीं होने से धर्म के विषय में शंका नहीं करना चाहिये। तद्वत् ''देवता'' जिनके उद्देश्य से मन्त्रोच्चारादि विधि से द्रव्य-त्याग किया जाता है उनके विषय में भी शंका करना उचित नहीं है। प्रयत्नपूर्वक सोत्साह यागादि का अनुष्ठान तथा असूया-रहित होकर दान देना चाहिये। कर्म जो वेद विहित हैं उनका फल अनिवार्यतया कालान्तर में प्राप्त होते हैं। अतः इस लोक में धर्म को शाश्वत अर्थात् अविनाशी समझो- ऐसा ब्रह्माजी ने कश्यप ऋषि से उपदिष्ट होकर अपने पुत्रों को कहा था। अतः श्रीकृष्ण प्रभु के

ईश्वरं चापि भूतानां धातारं मा च वै क्षिप।।[1]इति।

अत्रेदं विचारणीयमस्ति—यदीश्वरास्तित्वमनभ्युपगन्तार एव नास्तिकाः स्युः, तदा कपिलजैमिनिप्रभृतिदार्शनिकमहर्षिगणस्यापीश्वरानङ्गीकारांशे नास्तिकत्वापत्तिः। तत्र कर्मफलार्थमपूर्वमङ्गीकुर्वन्ति जैमिनीयाः। कर्मफलदातृत्वेन नाऽत्रापीश्वरोऽङ्गीकृतः। तत्र मीमांसानिर्मातुर्महर्षिजैमिनेर्नास्तिकत्वे वेदोक्तनित्यनैमित्तिककर्मानुष्ठानरूपाऽऽर्याचारस्यापि नास्तिकतापोषकत्वापत्तिः। सांख्याचार्यस्य कपिलमहर्षेर्नास्तिकत्वे पवित्रस्य सांख्यतत्त्वस्यापि नास्तिकतापोषकत्वापत्तिः, परं न क्वापि शास्त्रेषु कपिलादीनां नास्तिकत्वेन नामनिर्देश उपलभ्यते, प्रत्युत तन्मतं सर्वे आस्तिकधिया गृह्णन्ति मानयन्ति च।

---

सन्दर्भ में जो संशय तुझे है वह सूर्यातप से नीहार की तरह नष्ट हो जाय। परलोक, जन्मान्तर, ईश्वर तथा वेद प्रामाण्य ये सबके सब सत्य हैं ऐसा निश्चय करके नास्तिक्यभाव का परित्याग करो। जो ईश्वर, सभी प्राणियों के धाता हैं उनकी उपेक्षा मत करो। (४.½)''

इस प्रसङ्ग में यह विचार करना आवश्यक है— यदि ईश्वरास्तित्व का अस्वीकार करने वाले को नास्तिक कहा जाय तो कपिल एवं जैमिनि प्रभृति महर्षिगण भी ईश्वर को स्वीकार नहीं करते हैं अतः आंशिक रूप से उन लोगों में नास्तिकता का आपादान (आरोप) होगा। कर्मपूर्ति तथा कर्मफल-प्राप्ति के अन्तराल में कर्म एवम् फल के योजक **अपूर्व** को जैमिनि के अनुयायी मीमांसक स्वीकारते हैं। किन्तु मीमांसक-सिद्धान्त में कर्मफलदाता रूप से ईश्वर स्वीकृत नहीं है। मीमांसा दर्शन के निर्माता (प्रवर्तक) महर्षि जैमिनि को कथमपि नास्तिक नहीं कहा जायेगा। यदि उन्हें नास्तिक माना जायेगा तो वेदोक्त नित्यनैमित्तिक कर्मों के अनुष्ठान स्वरूप आर्यों के आचार में भी नास्तिकता के पोषण का आरोप होना आवश्यक हो जायेगा। तद्वत् सांख्य के प्रवर्तक आचार्य कपिल महर्षि को भी ईश्वरानङ्गीकार करने के कारण यदि नास्तिक माना जायेगा तो पवित्र सांख्य दर्शन के तत्त्वज्ञान में भी नास्तिकता के पोषण का आरोप होना अनिवार्य हो जायेगा। इस आरोप को इष्टापत्ति के रूप में स्वीकार नहीं किया जा सकता है क्योंकि शास्त्रों में कहीं भी कपिल एवं जैमिनि महर्षि का नास्तिकरूप में निर्देश प्राप्त नहीं होता। शास्त्रकार तो इन महर्षियों को

---

१. म० भा० व० पर्व० ३१।३८-४१.

यदि च, "अस्ति परलोकः (जन्मान्तरम्) इति मतिर्येषां ते आस्तिकाः" इति कुल्लूकभट्टाद्युक्तया व्युत्पत्त्या आस्तिक-नास्तिकयोर्विभागः क्रियते, तर्हि जैनबौद्धदर्शनयोरप्यास्तिकदर्शनेष्वन्तर्भावापत्तिः, तयोरपि कर्मसिद्धान्तस्याङ्गीकारात्। अतः प्रायः सर्वेऽप्यालोचकाश्चार्वाक-जैन-बौद्धदर्शनानां नास्तिकत्वप्रतिपादनार्थं "नास्तिको वेदनिन्दकः"[१] इति मनुस्मृतिं प्रमाणयन्तो वेदप्रामाण्याभ्युपगन्तॄणां न्याय-वैशेषिक-सांख्य-योग-पूर्वोत्तरमीमांसादर्शनानामास्तिकत्वम्, चार्वाक-जैन-बौद्धानां च नास्तिकत्वं व्यवस्थापितवन्तः, जैनैर्बौद्धैस्तत्रापि विशेषतश्चार्वाकैर्वेदनिन्दायाः क्रियमाणत्वात्[२]।

---

आस्तिकबुद्धि से देखते हैं तथा सम्मान-दान करते हैं।

यदि कुल्लूकभट्ट प्रभृति व्याख्याकारों की व्युत्पत्ति— "अस्ति परलोकः इति मतिर्येषां ते आस्तिकाः" पर आधारित आस्तिक एवं नास्तिक को विभाजित करते हैं तो जैन एवं बौद्ध दर्शनों का भी अन्तर्भाव आस्तिक दर्शनों में मान्य करना होगा। क्योंकि इन दर्शनों में भी कर्मसिद्धान्त का अस्तित्व स्वीकार्य है। अतः विभाजक रेखा के निर्धारण हेतु सभी आलोचकों ने प्रायेण वेदनिन्दक को नास्तिक मानने की मनूक्ति को प्रमाण वचन माना है। तदनुसार वेदप्रामाण्य को स्वीकारने वाले न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा एवम् उत्तरमीमांसा = कुल छह दर्शनों की "आस्तिक दर्शन" की श्रेणी में गणना होती है तथा चार्वाक, जैन, एवं बौद्ध (प्रस्थान-चतुष्टय) दर्शनों की गणना नास्तिक दर्शन की श्रेणी में की जाती है। जैन एवं बौद्ध दर्शन सामान्यरूप से तथा चार्वाक दर्शन विशेषरूप से वेद की निन्दा में प्रवृत्त दिखते हैं। वस्तुस्थिति यह है— ईश्वर, वेद एवं परलोक आस्तिकता के परिचायक हैं। इसमें से एक लक्षण से भी युक्त होने पर दर्शन को आस्तिक श्रेणी में गिना जाता है। तद्वत् तीनों परिचायकों में किसी एक के भी अभाव होने से दर्शन को नास्तिक श्रेणी में गिना जाता है। **वस्तुतः**- कथन डॉ० शिवाचार्य जी का स्वाभिप्रेत सिद्धान्त है। जैन दर्शन तथा बौद्ध दर्शन में आस्तिकता के परिचायक कर्मसिद्धान्तमूलक परलोक के स्वीकार्य होने से इन दोनों दर्शनों को निबिड नास्तिक नहीं कहा जाता। परिणामतः एकमात्र चार्वाक दर्शन ही (पूर्णतया) नास्तिकदर्शन है। कारण सुस्पष्ट है— चार्वाक दार्शनिकों ने न तो ईश्वर को स्वीकारा है, न परलोक को और न

---

१. मनुस्मृ० २।११.

२. त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः।
जर्भरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम्।। सं० द० सं०, पृ० २४.

वस्तुतस्त्वीश्वर-वेद-परलोकाख्येष्वास्तिकत्वपरिचायकेषु लक्षणेष्वेकतरस्यापि सत्त्वे तदास्तिकदर्शनमिति, एकतमस्याप्यभावे तन्नास्तिकदर्शनमित्येवाङ्गीकर्तव्यम्। जैन-बौद्धदर्शनयोरास्तिकत्वपरिचायकेषु परलोकस्य अर्थात् कर्मसिद्धान्तस्य स्वीकारात् तौ न नास्तिकाविति चार्वाकदर्शनमेव नास्तिकमिति पर्यवस्यति, यतो हि चार्वाकैर्नेश्वरोऽङ्गीकृतः, नापि परलोकः, न च वेदानां प्रामाण्यमङ्गीकृतम्। श्रीबलदेवोपाध्यायः[1], श्रीनारायणमिश्रमहोदयश्च[2] एनमेव पक्षमङ्गीकुर्वतः।

किञ्चेदमत्रावधेयम्-वेदप्रामाण्याऽप्रामाण्याभ्यां दर्शनानामास्तिकनास्तिकभेदं कृतवतां पूर्वाचार्याणामयमाशयः स्यात्-पूर्वोक्तेष्वास्तिकत्वपरिचायकेष्वीश्वर-परलोकादिविषयेषु प्रमाणान्तराभावाद् वेद एव प्रमाणम्। उक्तं च भगवता श्रीकृष्णेन-

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि।।[3]इति।

अतएतद्वचनानुसारेण वेदस्यैव लौकिक-पारलौकिकजीवनस्य

---

ही वेदों के प्रामाण्य को। श्री बलदेवोपाध्याय ने अपने भारतीयदर्शन में तथा श्रीनारायण मिश्रने न्यायदर्शन की प्रस्तावना में इसी पक्ष का समर्थन किया है।

प्रस्तुत सन्दर्भ में एक बात पर विशेषरूप से ध्यान देना आवश्यक है। पूर्वाचार्यों ने वेद-प्रामाण्य एवं वेदाप्रामाण्य के आधार पर दर्शनों का आस्तिक एवं नास्तिक भेदों में जो विभाजन किया है उसका आशय यह है— उपर्युक्त आस्तिकत्व के परिचायक ईश्वर एवम् परलोक के विषय में श्रुतिभिन्न प्रत्यक्षादि प्रमाण के अभाव होने से एकमात्र वेद ही प्रमाण होते हैं। अत एव भगवान् श्रीकृष्ण ने सुस्पष्ट कहा है— "हे अर्जुन! यह कार्य है तथा यह अकार्य है इस प्रकार की व्यवस्था के निर्णय हेतु तुझे प्रमाणस्वरूप एक मात्र शास्त्र ही प्राप्त है। अतः शास्त्र में विधिरूप से प्रोक्त कर्म को अच्छी तरह से ज्ञात कर लेने के अनन्तर तुम विहित कर्म का अनुष्ठान कर सकते हो ।"

अतः हम निष्कर्ष को प्राप्त करते हैं— उपर्युक्त भगवान् कृष्ण के वचनानुसार

---

१. द्र० भारतीय दर्शन, पृ० १६.
२. द्र० न्यायदर्शनस्य प्रस्तावना, पृ० १५, चौ० सं० सी०, वाराणसी, १९७० ई०।
३. भ० गी० १६।२४.

व्यवस्थापकत्वात् तदनुसारमेव लोके प्रवर्तितव्यम्। तदेवं जीवनव्यवस्थापकस्य वेदस्यैव वचनेषु येषां न विश्वासस्ते नास्तिकाः, येषां च विश्वासस्त आस्तिका इति।

तदेतदभिप्रायानुसारेण वेदप्रामाण्यमङ्गीकुर्वाणा न्यायवैशेषिक-सांख्य-योग-पूर्वोत्तरमीमांसा वैदिकदर्शनानि, अत एव तान्यास्तिकदर्शनानीत्यपि कथ्यन्ते। अन्ये च चार्वाक-जैन-बौद्धाख्यान्यवैदिकानीति तानि नास्तिक-दर्शनानीति व्यपदिश्यन्ते। एतेषामास्तिकदर्शनानां विस्तरो ग्रन्थान्तरेषु वर्तते एव। प्रकृते वीरशैवदर्शनस्य एतैः साकं समीक्षायाः क्रियमाणत्वाद् वीरशैवदर्शनविषयकविचार आवश्यक इति तस्य किञ्चिदितिवृत्तं प्रस्तूयते।

## वीरशैवदर्शनेतिहासः

इह खलु भारतवर्षे निगमागमाख्ये द्वे एव शास्त्रे प्रसिद्धतया प्रचारपथे वर्तेते। ते च न परस्परप्रतिद्वन्द्विनौ, किन्तु परमात्मनिःश्वसितरूपो निगमः,

---

वेद-शास्त्र ही लौकिक जीवन एवम् पारलौकिक जीवन को व्यवस्थित स्वरूप प्रदान करते हैं। इसलिये तदनुसार ही लोकव्यवहार में हमें प्रवृत्त होना चाहिये। जिनका विश्वास जीवन को व्यवस्थित स्वरूप प्रदान करने वाले वेद के वचनों में नहीं है वे नास्तिक हैं। इसके विपरीत वेदवचनों में जिनका विश्वास है, वे आस्तिक हैं।

उपर्युक्त अभिप्राय के अनुसार वेद प्रामाण्य को स्वीकारने वाले भारतीय शास्त्र-न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा, एवम् उत्तरमीमांसा को वैदिक दर्शन कहा जाता है। साथ ही इन्हें आस्तिक दर्शन की संज्ञा से भी विभूषित किया जाता है। इनसे भिन्न भारतीय दर्शन चार्वाक, जैन एवं बौद्ध, अवैदिक दर्शन कहलाते हैं। साथ ही इन्हें नास्तिक दर्शन भी कहा जाता है। उपर्युक्त आस्तिक दर्शनों का विशद विवेचन उनसे सम्बद्ध अनेक ग्रन्थों में प्राप्त होता है। प्रकृत प्रबन्ध में इन्हीं आस्तिक दर्शनों के साथ वीरशैव दर्शन की समीक्षा उद्देश्य है। अतः वीरशैव दर्शन विषयक विचार करना आवश्यक है अतः इसके इतिवृत्त (ऐतिह्य) की किञ्चित् प्रस्तुति की जाती है।

## वीरशैवदर्शन का इतिहास

इस भारतवर्ष में निगम एवं आगम संज्ञक दो शास्त्र ही प्रसिद्ध होने से सुप्रचारित

आगमस्तु वाग्रूप इति सर्वजननिश्चप्रचम्। अत एव "निश्चयेन तत्त्वं गमयतीति निगमः" इति निगमस्य, "आप्तवचनादाविर्भूतमर्थविशेषसंवेदनमागमः" इत्यागमस्य च व्युत्पत्तिः सङ्गच्छते। अगाधज्ञानभाण्डारस्य निगमस्य विरुद्धनानावादिसंशयास्पदत्वादनेन सामान्यजनानामुपयोगो न भवेदिति निश्चित्य लोकरक्षणबद्धपरिकरः श्रीशङ्करः सर्वजनोपयोगिवेदार्थविवरणरूपानागमान् देव्यै पार्वत्यै समुपदिदेश। तथा चोक्तम्–

> आगतं शिववक्त्रात्तु गतं च गिरिजामुखे।
> मतं श्रीवासुदेवेन आगमस्तेन कीर्तितः[१]।।इति।

अयं चागमशब्दस्य रूढार्थः। अस्य यौगिकार्थस्तु–"आसमन्ताद् अर्थं गमयतीति आगमः" इति। श्रीमन्तो वाचस्पतिमिश्रमहाभागाः–"आगच्छन्ति

---

हैं। इन दोनों में परस्पर प्रतिद्वन्द्विता नहीं है। प्रत्युत निगम परमेश्वर के निःश्वसित हैं तथा आगम परमेश्वर के मुख से निर्गत वाक् हैं— यह विद्वज्जगत् में सुविदित किंवा निर्णीत है। एतावता इनमें परस्परपोषण भाव की विद्यमानता है। इसलिये निगम की व्युत्पत्ति है— निश्चयरूप से तत्त्वाधिगम कराने वाला पारमेश्वर शास्त्र निगम कहलाता है। इसके अनुरूप आगमशब्द की व्युत्पत्ति है— आप्त (परमेश्वर) के वचन से आविर्भूत अर्थविशेष का संवेदन (प्रबोध) कराने वाला शास्त्र आगम कहलाता है। अतः निगम एवम् आगम द्विविध शास्त्रों में परस्पर सामञ्जस्य विद्यमान है। निगम अगाध ज्ञान का महाकोश है। इनके वाक्यविशेष से तात्पर्य ग्रहण कर विभिन्न शास्त्रकारों ने परस्पर विरुद्ध सिद्धान्तवादों को उपस्थापित कर निगम को संशयास्पद बना दिया है। इसलिये कतिपय सुबुद्ध जन ही निगम से उपकृत तथा अनुगृहीत हो पाते हैं। सामान्य जन के लिये निगमोपयोग नहीं हो पा रहा है ऐसा सुनिश्चित कर लोकमात्र (समस्त लोकों) की रक्षा हेतु बद्धपरिकर श्रीशङ्कर भगवान् ने सर्वजनोपयोगी वेदार्थ-विवरणात्मक आगमों का उपदेश, पुत्र-वात्सल्यभरित जगदम्बा पार्वती देवी के प्रति किया है। तदनुरूप यह सुप्रसिद्ध सूक्ति है— आगम-शब्द की नैरुक्तिकी व्याख्या कर "आ" से शिवमुख से आगत अर्थ गृहीत होता है। "ग" से गिरिजामुख में ज्ञानपुरःसर वाक् स्वरूप में गत अर्थ परिज्ञात होता है। तद्वत् "म" से श्री वासुदेवभगवान् द्वारा मत अर्थ परिज्ञात होता है। इस प्रकार की ज्ञानमय प्रभु-वाक्

---

१. भास्करी, द्वि० भागः, पृ० ८५.

बुद्धिमारोहन्ति यस्माद् अभ्युदयनिःश्रेयसोपायाः स आगमः"[१] इत्यागमशब्दस्य व्युत्पत्तिं प्रदर्शितवन्तः।

आगमस्यैव 'तन्त्रम्' इत्यपरं नामधेयमस्ति। "तन्यते विस्तार्यते ज्ञानमनेन" इति व्युत्पत्त्या तन्त्रशब्दस्य यौगिकार्थं प्रतिपादयन्ति तन्त्रज्ञाः।

तदुक्तं कामिकागमे–

तनोति विपुलानर्थान् तन्त्रमन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते।।इति।

**तन्त्राणां भेदाः**

तत्र तावत् तन्त्राणां ब्राह्मणतन्त्रम्, बौद्धतन्त्रम्, जैनतन्त्रं चेति त्रयः प्रभेदा भवन्ति। पुनर्ब्राह्मणतन्त्रमपि उपास्यदेवताभेदेन शैव-वैष्णव-शाक्तभेदेन त्रिधा

---

आगम कहलाती है।।१।।

इस सूक्ति द्वारा आगम शब्द का उपर्युक्त रूढ अर्थ प्रतीत होता है। इसके यौगिक अर्थ का प्रतिपादन इस वाक्य से होता है— "आसमन्ताद् = सभी प्रकार से अर्थ = पुरुषार्थोपयोगी पदार्थ को प्रबोधित करने वाला शास्त्र आगम कहलाता है।" टीकाकार श्रीमान् वाचस्पतिमिश्र महाशय ने आगमशब्द की व्युत्पत्ति प्रतिपादित की है— "जिस दिव्य शब्दराशि से अभ्युदय एवं निःश्रेयस के उपाय, बुद्धि में आरूढ़ होते हैं, वह आगम-शब्द-व्यपदेश्य है।"

आगम का ही दूसरा नाम "तन्त्र" है। तन्त्रवेत्ता विद्वज्जन तन्त्रशब्द का यौगिक अर्थ बताते हैं— जिस दिव्य शब्दराशि से ज्ञान का तनन अर्थात् विस्तारण होता है उस आगम संज्ञक शब्दराशि को "तन्त्र" (पर्याय) शब्द से व्यवहृत किया जाता है। इस यौगिक तन्त्रशब्दार्थ को कामिकागम में प्रकाशित किया गया है— "तन्त्र-मन्त्र से समन्वित=युक्त, अर्थबहुल का तनन "तन्" से गृहीत होता है तथा "त्र" से अनुग्राह्य भक्त एवम् उपासक का त्राण=रक्षण अर्थ सुविदित है। इस प्रकार तन्त्र शब्द का विलक्षण अर्थ प्रयुक्त होता है।

**तन्त्रों के प्रभेद**

तन्त्रों के तीन प्रभेद होते हैं— ब्राह्मणतन्त्र, बौद्धतन्त्र एवं जैनतन्त्र। पुनश्च उपास्यदेवता के भेद से ब्राह्मणतन्त्र के अवान्तर तीन भेद हैं— शैवतन्त्र, वैष्णवतन्त्र

---

१. यो० सू० १।१५ तत्त्ववैशारदी।

विभज्यते। तत्र वैष्णवागमाः (पाञ्चरात्रागमाः वैखानसागमाश्च) विशिष्टाद्वैत-प्रतिपादकाः, शाक्तागमा अद्वैतप्रतिपादकाः, शैवागमाश्च द्वैत-अद्वैत-द्वैताद्वैत-विशिष्टाद्वैत-विशेषाद्वैताभिधशक्तिविशिष्टाद्वैतप्रतिपादका भवन्ति। तत्र पाशुपतं सिद्धान्तशैवं च द्वैतम्, प्रत्यभिज्ञादर्शनम् (काश्मीरशैवदर्शनम्) अद्वैतम्, लकुलीशपाशुपतं द्वैताद्वैतम्, श्रीकण्ठशैवदर्शनं शैवविशिष्टाद्वैतम्, वीरशैवदर्शनं च विशेषाद्वैताभिधशक्तिविशिष्टाद्वैतं सिद्धान्ततयाप्रतिपादयन्तीति विज्ञेयम्।

**शैवागमाः (सिद्धान्तागमाः)**

शिवोक्ताः कामिकादिवातुलान्ता अष्टाविंशत्यागमाः शैवागमा इति कथ्यन्ते। तेषामेव सिद्धान्तागमशब्देनापि व्यवहारो दरीदृश्यते। तद्यथा- "आप्तोक्तिरत्र सिद्धान्तः शिव एवाप्तिमान् यतः" इत्यस्य श्रीकण्ठसूरेर्वचनस्य व्याख्यानावसरे तत्रभवता अघोरशिवाचार्येण-"सिद्धान्तशब्दः पङ्कजादि-शब्दवद्योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशतन्त्रेषु प्रसिद्धः"[१] इत्येवं कामिकाद्यष्टाविंशत्यागमाः सिद्धान्तागमा इति व्यवहृतम्। ते चागमाः-

---

तथा शाक्ततन्त्र। पाञ्चरात्र एवम् वैखानस प्रभेदों में विभाजित वैष्णवागम, विशिष्टाद्वैत के प्रतिपादक हैं। शाक्तागम, अद्वैतसिद्धान्त के प्रतिपादक हैं। तद्वत् शैवागम, निम्नलिखित सिद्धान्तों के प्रतिपादक हैं— द्वैत, अद्वैत, द्वैताद्वैत, विशिष्टाद्वैत तथा विशेषाद्वैत के अपरपर्याय शक्तिविशिष्टाद्वैत। पाशुपतशैव एवम् सिद्धान्तशैव आगम, द्वैतसिद्धान्त के प्रतिपादक हैं। प्रत्यभिज्ञादर्शन अर्थात् काश्मीरशैवागम अद्वैतसिद्धान्त के प्रतिपादक हैं। लकुलीश पाशुपत दर्शन द्वैताद्वैतसिद्धान्त के प्रतिपादक हैं। श्रीकण्ठशैवदर्शन (शैव)-विशिष्टाद्वैतसिद्धान्त के प्रतिपादक हैं।

**शैवागम (सिद्धान्तागम)**

शिवप्रोक्त २८ आगमों को शैवागम कहा गया है। कामिकागम से वातुलागम पर्यन्त २८ आगमों को शैवागम एवं सिद्धान्तागम शब्दों से सम्बोधित किया जाता है। तद्यथा— श्रीकण्ठसूरि आचार्य का वचन है— आप्तवचन को आगमजगत् में सिद्धान्तशब्द से सम्बोधित किया जाता है। आप्तिमान् अर्थात् आप्तपुरुष के रूप में शिव गृहीत हैं और उनके द्वारा प्रोक्त २८ आगम हैं अतः इन्हें सिद्धान्त आगम कहा जाता है। इस वचन के व्याख्यानप्रसङ्ग में पूज्य अघोर शिवाचार्य ने कहा है—

---

१. र० त्र०, पृ० ५.

कामिकं योगजं चिन्त्यं कारणं त्वजितं तथा।
दीप्तं सूक्ष्मं सहस्रञ्च अंशुमत् सुप्रभेदकम्।।
विजयञ्चैव निश्वासं स्वायम्भुवमथानिलम्।
वीरञ्च रौरवं चैव मुकुटं विमलं तथा।।
चन्द्रज्ञानञ्च बिम्बञ्च प्रोद्गीतं ललितं तथा।
सिद्धं सन्तानशर्वोक्तं पारमेश्वरमेव च।।
किरणं वातुलं चैव अष्टाविंशतिसंख्यया[1]।

इत्यष्टाविंशतिसंख्याकाः सन्ति। एतेषु प्राथमिका दशागमाः 'शैवागमाः' इति, अवशिष्टा अष्टादश 'रुद्रागमाः' इति चाख्यायन्ते। श्रीमन्तो नीलकण्ठशिवाचार्याः–

ताल्वोष्ठपुटनिष्पन्दपूर्वकं शिवभाषिताः।
अष्टाविंशतिसंख्याकाः शिवोक्तास्ते शिवागमाः[2]।।

इति उपर्युक्ताष्टाविंशत्यागमानां शिवागमत्वं प्रतिपादयामासुः।

---

"सिद्धान्त शब्द, पङ्कज-जलज इत्यादि शब्दों के समान योगरूढ़ि के आश्रयण से शिवरचित कामिकादि वातुलान्त १०+१८=२८ तत्वों के लिये प्रयुक्त होता है। इस प्रकार कामिकादि २८ आगमों को सिद्धान्त आगम कहा जाता है। क्रियासार ग्रन्थ में सार्ध तीन श्लोकों में इन्हें गिनाया गया है। तद्यथा— कामिक, योगज, चिन्त्य, कारण, अजित, दीप्त, सूक्ष्म, सहस्र, अंशुमत्, सुप्रभेद, विजय, निश्वास, स्वायम्भुव, अनिल, वीर, रौरव, मुकुट, विमल, चन्द्रज्ञान, बिम्ब, उद्गीत, ललित, सिद्ध, सन्तान, शर्व, पारमेश्वर, किरण तथा वातुल आगमों की संख्या- २८ है। ये २८ आगम सिद्धान्तागम कहलाते हैं। इनके आरम्भ से १० आगमों को "शैवागम" तथा शेष १८ आगमों को "रुद्रागम" कहा जाता है। श्रीमान् नीलकण्ठशिवाचार्य ने क्रियासार में उपर्युक्त २८ आगमों को शिवागम शब्द से सम्बोध्य बताया है। तद्यथा— २८ आगमों (कामिकादि-वातुलान्त) को भगवान् शिव ने अपने तालु-ओष्ठपुटादि को व्यापारित कर यतः उच्चारित किया है। अतः इन्हें शिवागम अथवा शैवागम शब्दों से जाना जाता है।

---

१. क्रि० सा०, भा० १, पृ० ९.
२. तत्रैव भा० १, पृ० ९.

## वीरशैवदर्शनस्यागममूलकत्वम्

तत्र तावत् सिद्धान्तशिखामणौ श्रीरेणुकभगवत्पादैः–

शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत् सदा।।
वेदधर्माभिधायित्वात्सिद्धान्ताख्यः शिवागमः।
वेदबाह्यविरोधित्वाद्वेदसम्मत उच्यते।।
वेदसिद्धान्तयोरैक्यमेकार्थप्रतिपादनात्।
प्रामाण्यं सदृशं ज्ञेयं पण्डितैरेतयोः सदा।।
सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्[१]।।

इति महर्षिमगस्त्यं प्रति वेदोक्तभस्म-लिङ्ग-रुद्राक्षादिधारणरूप-धर्मप्रतिपादकत्वाद् वेदबाह्यजैनचार्वाकादिमतनिरासकत्वाच्च सिद्धान्ताख्यः शिवागमो वेदसम्मतः। तथा च 'सर्ववेदेषु यत् दृष्टं तत्सर्वं तु शिवागमे' इति

---

### वीरशैवदर्शन की आधारभूमि आगम प्रमाण हैं।

सिद्धान्तशिखामणि ग्रन्थ में भगवत्पाद आचार्य श्रीरेणुक प्रोक्त जो चार श्लोक यहाँ उद्धृत किये गये हैं उनका अर्थ निम्नांकित है— शिवप्रोक्त होने से २८ आगम शैवतन्त्र एवम् सिद्धान्तागम कहे जाते हैं। इन आगमों में प्रतिपादित विषय वेदार्थ से भिन्न नहीं है अतः इन आगमों का वेदतुल्य प्रामाण्य है।।१। सिद्धान्तागम अर्थात् शिवागम यतश्च वेदधर्मों का ही अभिधान करते हैं तथा वेदबाह्य चार्वाकादि सिद्धान्तों का विरोध करते हैं अतः इन्हें वेदसम्मत कहा जाता है।।२।। समान अर्थों का प्रतिपादन करने से वेदों और सिद्धान्तागमों का ऐक्य अर्थात् अभेद माना जाता है। अतः पण्डितों ने इन दोनों का एक समान प्रामाण्य प्रतिपादित किया है।।३।। कामिक से वातुल पर्यन्त शिवप्रोक्त २८ महातन्त्रों को सिद्धान्तागम कहा जाता है। इनके उत्तर भाग में श्रेष्ठ वीरशैवमत का निर्देश प्राप्त होता है।।४।।

उपर्युक्त श्लोक महर्षि अगस्त्य के प्रति उपदिष्ट हैं। तदनुसार वेदोक्त धर्मों— भस्मधारण, लिङ्गधारण तथा रुद्राक्षादि-धारण— का प्रतिपादन करने के साथ वेदबाह्य (जैन-बौद्ध-चार्वाक) मतों का निराकरण किये जाने के कारण सिद्धान्ततन्त्र अथवा

---

१. सि० शि० ५/८, १२, १३, १४, पृ० ५५-५७.

वीरागमोक्त्यनुसारं वेदसिद्धान्तयोरेकार्थकत्वाद्वेदवत् सिद्धान्तोऽपि प्रमाणमिति प्रतिपाद्य, शिवोक्तस्य कामिकादिवातुलान्तस्य सिद्धान्तोऽपि प्रमाणमिति प्रतिपाद्य, शिवोक्तस्य कामिकादिवातुलान्तस्य सिद्धान्ताख्यस्य महातन्त्रस्योत्तरभागे परं सर्वोत्कृष्टं वीरशैवमतमुपदिष्टमिति प्रतिपादितम्। तस्माद्वीरशैवदर्शनं सिद्धान्ताख्यशैवागमसम्मतमिति निश्चप्रचम्। अत एव पारमेश्वरतन्त्रे–

**वीरशैवं वैष्णवं च शाक्तं सौरं विनायकम्।**
**कापालमिति विज्ञेयं दर्शनानि षडेव हि[1]।।**

इत्यागमसम्मतषड्दर्शननिरूपणावसरे वीरशैवस्यापि गणना कृता।

## वीरशैवशब्दार्थनिर्वचनम्

वीरशैवमतं धर्मो दर्शनं चेत्युभयरूपं विद्यते। तस्माद्वीरशैवशब्दस्य दार्शनिकदृष्ट्या धार्मिकदृष्ट्या च निर्वचनं कुर्वन्त्याचार्याः। तदेवात्र क्रमशो विचार्यते।

---

२८ शिवागम को वेदसम्मत कहा गया है। तद्वत् वीरागम में कहा गया है— सभी वेदों में जो प्रतिपादित हैं वही पदार्थ, शिवागमों में भी प्राप्त होते हैं। तदनुसार वेद एवं सिद्धान्तागमों का समानार्थक होना स्वयंसिद्ध है। अतः वेद के समान सिद्धान्तागमों का प्रामाण्य प्रतिपादित किया गया है। तदनन्तर शिवप्रोक्त कामिकादि वातुलान्त सिद्धान्तसंज्ञक २८ महातन्त्र के उत्तरभाग में सर्वोत्कृष्ट वीरशैवमत का उपदेश किया गया है— ऐसा प्रतिपादित है। एतावता यह स्वरसतः सिद्ध होता है कि वीरशैवदर्शन सिद्धान्तशैवागम- सम्मत है। यही कारण है कि पारमेश्वर तन्त्र में आगमसम्मत षड्दर्शन निरूपण के अवसर पर वीरशैवदर्शन की गणना भी की गई है। तद्यथा— वीरशैवदर्शन, वैष्णवदर्शन, शाक्तदर्शन, सौरदर्शन, विनायक (गाणपत्य) दर्शन तथा कापाल (कापालिक) दर्शन- ये षड्विध दर्शन होते हैं।

**वीरशैव-शब्द के अर्थ की निरुक्ति (कथन)**

वीरशैवमत, धर्म एवं दर्शन— इन दो रूपों में प्रतिष्ठित है। अतएव आचार्यों ने वीरशैवशब्द की निरुक्ति, दार्शनिक एवं धार्मिक दृष्टि से की है। इन दोनों की विचारणा क्रमशः यहाँ की जाती है।

---

१. पा० तन्त्र० १।२२-२३.

**दार्शनिकदृष्ट्या वीरशैवशब्दार्थनिर्वचनम्**

**वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका।**
**तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः।।**
**विद्यायां शिवरूपायां विशेषाद्रमणं यतः।**
**तस्मादेते महाभागा वीरशैवा इति स्मृताः।।**
**वेदान्तजन्यं यज्ज्ञानं विद्येति परिकीर्त्यते।**
**विद्यायां रमते तस्यां वीर इत्यभिधीयते[१]।।**

इति श्रीरेणुकभगवत्पादा वीरशैवशब्दस्य दार्शनिकव्युत्पत्तिं प्रदर्शितवन्तः।

अत्रेदमाकूतम्—पाणिनीयधातुपाठे 'वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु' (अदादि० ११२३) इति गत्याद्यर्थको वीधातुर्वर्तते। 'ये गत्यर्थकास्ते ज्ञानार्थकाः' इत्युक्त्या गत्यर्थकस्य वीशब्दस्य ज्ञानं, विद्या वाऽर्थो भवति। र-शब्दस्य च रमणमित्यर्थः। तस्माद् वीरशब्दाभिप्रेतायां शिवजीवैक्यबोधिकायां

---

**दार्शनिक दृष्टि से वीरशैव-शब्द के अर्थ का कथन**

वीरशब्द में दो भाग हैं— **''वी''** तथा **''र''**। वी-शब्द से वह विद्या (अर्थ) गृहीत होती है जो शिव एवं जीव में ऐक्य अर्थात् अभेद का बोध कराती है। र-शब्द से रमण अर्थ गृहीत होता है। जो शिवभक्त, शिव एवं जीव के अभेद बोध कराने वाली विद्या में रमण करते हैं वह शिवभक्तजन **वीरशैव** कहलाते हैं। शिवस्वरूपा विद्या में विशेष रूप से रमण करने के कारण सौभाग्यशाली शिवभक्तगण **वीरशैव** कहलाते हैं। वेदान्त वाक्यों से लभ्य ज्ञान को **''विद्या''** कहा जाता है। इस विद्या में रमण करने के कारण शिवभक्तों को **''वीर''** कहा जाता है।

उपर्युक्त तीन श्लोकों के माध्यम से भगवत्पाद श्रीरेणुकाचार्य ने **वीरशैव**-शब्द की दार्शनिक व्युत्पत्ति को प्रदर्शित किया है। यहाँ का रहस्यभूत अर्थ यह है— पाणिनीय धातुपाठ के अदादिगण में ११२३— ''वी गतिव्याप्तिप्रजनन-कान्त्यसनखादनेषु'',गत्यादि अर्थ का बोधक **वी**-धातु पठित है। गति अर्थ में पठित सभी धातु ज्ञानार्थक होते हैं— इस नियम के अनुसार **वी**-धातु का अर्थ ज्ञान है। ज्ञानविशेष को **विद्या** कहा जाता है। **''र''** का अर्थ रमण होता है। एवंच समुदित **वीर** शब्द का समुदितार्थ है— शिव एवं जीव में अभेद बोध कराने वाली विद्या

---

१. सि० शि० ५।१५-१६, १८, पृ० ५७-५८.

विद्यायां ये शैवाः शिवभक्ता रमन्ते, त एव वीरशैवा इति।

## डॉ० एस्० एन्० दासगुप्तस्याक्षेपस्तत्परिहारश्च

श्रीदासगुप्तमहाभागः सिद्धान्तशिखामण्युक्तवीरशैवशब्दव्युत्पत्तावेवं सन्दिहते–

"The Siddhānta Śikhāmaṇi gives a fanciful interpretation of the word, "Vīra" as being composed of "Vi" meaning knowledge of identity with Brahman, and "ra" as meaning someone who takes pleasure in such knowledge. But such an etymology, accepting it to be correct, would give the form "Vira" and not "Vīra". No explanation is given as to how "vī" standing for "Vidya"

---

में रमण करने वाला ऐसे शिवभक्त वीरशैव कहलाते हैं।

## डॉ० एस. एन. दासगुप्त का आक्षेप एवम् उसका परिहार

श्रीदासगुप्त महाशय ने सिद्धान्तशिखामणि ग्रन्थ में प्रतिपादित वीरशैवशब्द की व्युत्पत्ति में निम्नाङ्कित रीति से सन्देह प्रदर्शित किया है— सिद्धान्तशिखामणि ग्रन्थ में वीर शब्द की काल्पनिक व्याख्या प्रस्तुत की गई है। जिसमें ''वी'' तथा ''र'' शब्दखण्डों से वीर शब्द को बनाया गया है। वी शब्द से ब्रह्मविद्या अर्थ लिया जाना बताया गया है। अर्थात् शिव एवं जीव में अभेद होने का ज्ञान, ''विद्या'' कहलाता है— इस विद्या का बोधक वी शब्द है। ऐसी ब्रह्मविद्या में रमण अर्थात् आनन्द अनुभव करने वाले साधक शिवभक्त ''वीरशैव'' कहलाते हैं। ऐसा बताया गया है। इस सन्दर्भ में प्रथम आक्षेप यह है कि विद्या अर्थ को बताने वाला 'वि'' शब्द ह्रस्व इकार से युक्त होगा जबकि वीरशब्द में दीर्घ ईकार पाया जाता है। इसका कोई भी कारण नहीं बताया गया है जिसके आधार पर विद्यावाचक ''वि'' शब्द के ह्रस्व इकार को दीर्घ ईकार बनाया जा सके। दूसरा आक्षेप यह है कि जिस व्युत्पत्ति से वीरशब्द बनता है उसके आधार पर वीरशब्द, वीरशैव सम्प्रदाय वाले लोगों के लिये ही कैसे प्रयुक्त होगा? यहाँ वीरशब्द, केवल वीरशैव साधकों को उपर्युक्त व्याख्या के आधार पर सत्यापित करता हो, अन्य वेदान्ती एवं काश्मीर शैवागम साधकों को नहीं— यह बात ठीक-ठीक समझने में कठिनाई महसूस होती है। प्रत्युत अधिकतर वेदान्त की विचार पद्धतियों में ही उपर्युक्त वीर शब्द की व्याख्या अनुगत प्रतीत होती है। क्योंकि अभेदात्मक ब्रह्मविद्या में रमण अर्थात् कृपापूर्ण आनन्द की अनुभूति, वेदान्त की विचारपद्धतियों में प्रचुररूप से प्रतिपादित की गई है। इस प्रकार हम देखते हैं कि उपर्युक्त व्याख्या द्वारा वीरशब्द, अन्य धर्मावलम्बी सम्प्रदाय

would lengthen its vowel in to "Vī". I therefore find it difficult to accept this etymological interpretation as justifying the application of the word "Vīra" to Vīra-Śaiva. Moreover, most systems of Vedāntic thought could be called Vīra in such an interpretation, for most types of Vedānta would feel enjoyment and bliss in true knowledge of identity. The word "Vīra" would thus not be a distinctive mark by which we could distinguish Vīra-Śaivas from the adherents of other religions. Most of the Āgamic Śaivas also would believe in the ultimate identity of individuals with Brahman or Śiva"[1].इति।

आक्षेपस्यायं भावः–''सिद्धान्तशिखामणौ 'वीर' शब्दस्य व्युत्पत्तिरतीव विचित्रा वर्तते। 'विद्यायां रमते' इति व्युत्पत्त्या 'विर' इत्येव स्यात्, न तु 'वीर' इति। तस्माद् विद्याशब्दस्य 'वि' कथं 'वी' अभूत्? अपरञ्च, शिव-जीवैक्यबोधिकायां विद्यायां रमणं तु वेदान्तिभिस्तथाऽद्वैतवादिभिः कैश्चिदागमसाम्प्रदायिकैः

---

वेदान्ती से वीरशैवधर्मावलम्बी सम्प्रदाय को व्यावर्तन करने की क्षमता को आत्मसात् (धारित) नहीं करता है। इतना ही नहीं अधिकतर आगमिक सम्प्रदायों (काश्मीरशैव, सिद्धान्तशैव तथा शाक्त) में भी जीव के वास्तविक स्वरूप को ब्रह्म अथवा शिव से अभिन्न होने का सिद्धान्त पार्यन्तिक रूप से प्रतिपादित किया गया है। साधकों को इस तरह की अनुभूति ही, सर्वातिशायी स्थिति में प्रतिष्ठित करती है। डा० दासगुप्ता, उपर्युक्त दो आक्षेपों को असमाधेय अनुभव करते हैं। इस उल्लेख को उपस्थापित कर उनके आशय को बताकर डॉ० शिवाचार्यजी सुहृद् बुद्धि से समाधान भी प्रस्तुत करेंगे। आक्षेप का आशय यह है— सिद्धान्तशिखामणि ग्रन्थ में वीर-शब्द की व्युत्पत्ति अत्यन्त विचित्र है। विद्या में रमण करता है इस व्युत्पत्ति से ''विर'' शब्द बन सकता है न कि ''वीर'' शब्द। एतावता एक आक्षेप है वि के स्थान में वी की उपस्थिति कैसे हो जाती है? दूसरा आक्षेप है— शिव एवं जीव में ऐक्य=अभेद का बोधन कराने वाली विद्या में रमण का अङ्गीकार, अद्वैतवादी वेदान्तिजन एवम् आगमिक काश्मीर शैवजन भी करते हैं। ऐसी स्थिति में विद्या में रमण करने वाले इस प्रकार की व्युत्पत्ति से युक्त **वीर शब्द** को शैव का विशेषण बनाने से वीरशैवों की इतर से व्यावृत्ति कैसे हो सकती है। क्योंकि उपर्युक्त व्युत्पत्ति से निष्पन्न वीर शब्द, (विशेषण) अद्वैतवेदान्ती एवम् काश्मीर शैवागमभक्तों में भी प्रयुक्त हो सकता है।

---

1. A History of Indian Philosophy. Vol. 5, P. 44.45.

शैवैरप्यङ्गीक्रियते। तस्माद् विद्यायां रमत इति व्युत्पत्तिसिद्धेन 'वीर' इति विशेषणेन कथं वीरशैवानामितरेभ्यो व्यावृत्तिः सम्भवति, तादृशस्य 'वीर' इति विशेषणस्याद्वैतवेदान्त्यादिषु भवितुर्महत्वात्'' इति।

अत्रेदं समाधानम्–सिद्धान्तशिखामणौ 'वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका' इति विद्यावाचकः शब्दो 'वी' इत्येवोक्तः, न तु 'वि' शब्दः। तस्माद्ध्रस्वो 'वि' शब्दः कथं दीर्घोऽभूदिति शङ्काया अवसर एव नास्ति।

यदि तु 'विद्यायां रमते' इति वीर इति व्युत्पत्तिसिद्धं प्रातिपदिकं गृह्यते, तदापि दीर्घत्वे न किमपि बाधकम्। तथाहि–'ईर् गतौ कम्पने च' (अदादि १०८८) इति धातोर्विद्यायामीर्ते गच्छति प्रवृत्तो भवतीति व्युत्पत्त्या 'विर्' इति रूपं भवति। तदा 'अन्येष्वपि दृश्यते'[1] इति सूत्रेण डप्रत्यये सति 'विर' इति, पुनः 'व्यत्ययो बहुलम्'[2] इत्यनेन सूत्रेण दोर्घे च सति 'वीर' इति रूपं निष्पद्यते।

---

उपर्युक्त आक्षेपों का समाधान यह है— सिद्धान्तशिखामणि में प्राप्त वचन का स्वरूप है— ''वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका।'' इस श्लोकांश में विद्यावाचक शब्द ''वी'' (दीर्घ ईकारान्त शब्द) प्रयुक्त है न कि ह्रस्व इकारान्त ''वि'' शब्द। अतः ''वि'' शब्द में दीर्घ ईकार आदेश किस विधि से होता है इस प्रकार की आशंका (आक्षेप) निरस्त हो जाती है।

यदि आक्षेप का आशय निम्नाङ्कित है— ''विद्यायां रमते'' असौ वीरः ऐसा व्युत्पत्तिसिद्ध प्रातिपादिक ह्रस्व इकार से युक्त होगा न कि दीर्घ ईकार से युक्त। व्युत्पत्ति पक्ष के आश्रयण करने पर भी दीर्घ ईकार से युक्त वीरशब्द की निष्पत्ति में बाधक की भ्रान्ति नहीं है। तद्यथा— ईर गतौ कम्पने च १०८८ अदादिगणपठित धातु से विद्यायाम् ईर्ते=गच्छति=प्रवृत्तो भवति इस व्युत्पत्ति से सवर्ण दीर्घ द्वारा वीरशब्द की निष्पत्ति निर्बाध है। तद्वत् विद्यायां रमते इस व्युत्पत्ति से भी वीर शब्द की निष्पत्ति निर्बाध है। तथाहि विपूर्वक रम्-धातु से ''अन्येष्वपि दृश्यते' सूत्र से ''ड'' प्रत्यय होने पर डित् अप्रत्यय पर में रहते रम् का टिसंज्ञक ''अम्'' है इसका डित्त्व-सामर्थ्यात् लोप होने से 'वि-र्-अ'' की स्थिति में ''व्यत्ययो बहुलम्'' सूत्र से दीर्घ हो जाने पर ''वीर'' शब्द की निष्पत्ति होती है। यह वीरशब्द, व्युत्पत्ति-पक्षाश्रयण से प्रातिपादिक संज्ञा का लाभ ''कृत्तद्धितसमासाश्च'' सूत्र से प्राप्त करता है।

---

१. पा० सू० ३।२।१०१.

२. पा० सू० ३।१।८५.

किञ्च, यदुक्तं तादृशविद्यारमणरूपवीरविशेषणस्याद्वैतवेदान्त्यादिषु भवितुमर्हत्वात् कथमनेन वीरविशेषणेनेतरव्यावृत्तिः सम्भवतीति। तदयुक्तम्, सम्प्रदायापरिज्ञानात्। श्रूयतां रहस्यम्–'अथातो ब्रह्मजिज्ञासा'[१] इत्यस्य शारीरकसूत्रस्य भाष्ये को वा ब्रह्मजिज्ञासाया अधिकारीत्याकाङ्क्षायां श्रीशङ्करभगवत्पादैः–'तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदिश्यते'[२] इति विवेकादिसाधनचतुष्टयसम्पन्नोऽधिकारीति प्रतिपाद्य अथशब्दस्य तादृशसाधनचतुष्टयप्राप्त्यनन्तरमित्यर्थोऽभिहितः। वीरशैवदर्शनाभिमतश्रीकरभाष्ये श्रीपतिपण्डिताराध्यभगवत्पादैः–'अदीक्षितस्य मलत्रयविध्वंसाभावान्न

---

उपर्युक्त द्वितीय आक्षेप का निराकरण भी अतीव सुगम है। द्वितीय आक्षेप का स्वरूप है— यतश्च वीरशब्द का अर्थ-शिव एवं जीव में ऐक्य बोधिका विद्या में रमण करने वाला शिवभक्त होता है। अतः इस अर्थ का वाचक वीरशब्द, अद्वैत वेदान्ती एवं काश्मीर शैवागम साधक का भी विशेषण होने से व्यावर्तक नहीं हो पाता है। परं च यह आक्षेप युक्तियुक्त नहीं है। सम्प्रदाय के यथार्थ ज्ञान के अभाव में ही इस तरह का आक्षेप उपस्थापित किया जाता है। इस सन्दर्भ में सम्प्रदाय के रहस्य का भेदन शास्त्रश्रवण से होता है। "अथातो ब्रह्मजिज्ञासा" शारीरक सूत्र-भाष्य में भगवत्पाद आद्य शंकराचार्य ने ब्रह्मजिज्ञासा का अधिकारी कौन है— इस आकांक्षा की पूर्ति हेतु कहा है— उपयुक्त हेतुओं के बल पर सूत्रस्थ अथशब्द से ग्राह्य साधनचतुष्टय-सम्पत्ति के अनन्तर ब्रह्मजिज्ञासा होती है। एतावता सुस्पष्ट है— विवेकादिसाधनचतुष्टयसम्पन्न प्रमाता ब्रह्मजिज्ञासा का अधिकारी है। तभी तो अथशब्द का अर्थ है— साधनचतुष्टय सम्पत्ति के अनन्तर- ऐसा भगवत्पाद ने सुस्पष्ट कहा है। यह तो हुई अद्वैत वेदान्त की बात। आइये अब हम वीरशैवदर्शन की बात इस सन्दर्भ में करते हैं। तदभिमत श्रीकरभाष्य में भगवत्पाद श्रीपति पण्डिताराध्य ने उपर्युक्त अथशब्दार्थ को अस्वीकार कर दिया है। आगमिक साधना में अदीक्षित का अधिकार प्रतिषिद्ध है। मलत्रयापनयन दीक्षा के बिना सम्भव नहीं है। यतश्च अदीक्षित का मलत्रयापनयन सम्भवन नहीं है। अतः साधनचतुष्टय-सम्पत्ति का आनन्तर्य ब्रह्मजिज्ञासा के प्रति स्वीकार्य नहीं हो सकता। अनेकधा युक्त्यादि का परीक्षण करने के अनन्तर श्रीकरभाष्य में सन्दर्भित विशद विवेचना प्राप्त होती है। तथाहि-वीरशैवमत में निगम एवम् आगम उभयविध वेदान्त का समादर समान रूप से किया जाता है। तीन

---

१. ब्र० सू० १।१।१.

२. ब्र० सू० शा० भाष्यम्, १।१।१.

साधनचतुष्टयानन्तर्यम्,.....निगमागमोभयवेदान्तप्रतिपादितभक्ति-क्रिया-ज्ञान-काण्डत्रयविहित- स्थूलसूक्ष्मचिदचित्प्रपञ्चप्रकाशकषट्स्थलपरशिवसाक्षात्कार-कारणबहुजन्मकृतशिवार्पितयजनयाजनतपोध्यानाद्यनेकपुण्यापूर्वफलकशरीर-त्रयगतमलत्रयध्वंसककारुण्यकल्याणकैवल्य-विभूतित्रयप्रदायकाष्टावरण-पञ्चाचार-सद्गुरुकरुणाकटाक्षलब्ध-शक्तिपाताद्यवच्छिन्नपरशिवस्येष्टलिङ्गधारणात्मक-पाशुपतदीक्षाऽऽनन्तर्यमित्यथशब्दार्थो निर्णीयते'[१] इत्यथशब्दस्य मलत्रयनिवारक-दीक्षात्रयेण गुरुकारुण्यात् प्राप्तेष्टलिङ्गधारणानन्तरमिति प्रतिपादित्वादिष्टलिङ्गधारिणो भूत्वा ये शिवजीवैक्यबोधिकायां विद्यायां रमन्ते त एव वीरशैवा इत्याचार्याभिप्रायः प्रतीयते।

---

काण्डों (भक्ति, क्रिया एवम् ज्ञान) में विहित यजनादि का वेदान्तोदित ध्यानादि की तरह अवश्यानुष्ठेयता वीरशैवमत में पूर्ण समादृत है। यजनादि कर्मों को शिवार्पण-वुद्धि से अनेक जन्मों में अनुष्ठित किये जाने से साधक में परशिव परमात्म-साक्षात्कार के प्रति कारणता का आधान होता है। परशिव- साक्षात्कार के फलभूत मुक्ति की प्राप्ति, साधक भक्त को षड्विध सोपान क्रम से होती है जिन्हें षट्स्थल (भक्तादि-ऐक्यान्त) कहा जाता है। परशिव को स्थूल चिदचित् एवं सूक्ष्मचिदचित् प्रपञ्च का प्रकाशक कहा जाता है। यजन, याजन, तपस, ध्यान एवम् अन्य अनेक पुण्यकर्मानुष्ठान से अपूर्व की उत्पत्ति होती है। इस अपूर्व का फल है— शरीरत्रयगत मलत्रय का ध्वंस तदनन्तर वीरशैव साधकों में कारुण्य, कल्याण तथा कैवल्य उदित होने की पात्रता आती है। इन तीन विभूतियों के प्रदायक अष्टावरणस्वरूप अङ्गों एवम् पञ्चाचारस्वरूप प्राणों से उपेत शिव हैं। पर, शक्तिपात के विना सद्गुरू की अवाप्ति नहीं होती। शक्तिपातवशोन्मिषित सद्गुरु के करुणा कटाक्ष से लब्ध होती है— परशिव के इष्टलिङ्ग धारणस्वरूप **पाशुपत दीक्षा**। ऐसी दीक्षा का आन्तर्य ही वीरशैवदर्शन में अथ शब्द का अर्थ माना जाता है। तादृशदीक्षा का आनन्तर्य ब्रह्मजिज्ञासा में वर्तमान रहता है। एतावता सुस्पष्ट है— मलत्रय का निवारण, त्रिविध दीक्षा से होता है। पुनश्च गुरु की करुणा से इष्टलिङ्गधारणरूप पाशुपत दीक्षा प्राप्त होती है। इस दीक्षा का आनन्तर्य ही अथ शब्द का अर्थ वीरशैवमत में प्रतिपादित है। एतावता निष्कर्षवचन यह प्राप्त होता है— जो इष्टलिङ्गधारण करने के अनन्तर शिव एवं जीव के ऐक्य-बोधन कराने वाली विद्या में रमण करते हैं वे ही वीरशैव कहलाते हैं— यह आचार्य का अभिप्रेतार्थ है।

---

१. ब्र० सू० श्रीकर० १।१।१.

एवमिष्टलिङ्गधारणं नाद्वैतवेदान्तिभिर्नान्यैः शैवसाम्प्रदायिकैः क्रियते। तस्माद्वीरशैवशब्दगतं व्युत्पत्तिसिद्धं वीरपदं नातिव्याप्तमिति वीरविशेषणेन वेदान्तिभ्य इतरशैवेभ्यश्च वीरशैवानां व्यावृत्तिः सम्भवत्येव।

इत्थं च वीरशैवशब्दो योगरूढ इति विवेक्तव्यम्। 'अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यद्धि प्रवृत्तिनिमित्तम्' इति न्यायाद् व्युत्पत्तिलभ्यस्यार्थस्य कथञ्चिद् अन्यनिष्ठत्वेन शङ्कितस्यापि वीरशैवसिद्धान्तसिद्धेष्टलिङ्ग-धारणरूपसाधनविशेषविशिष्टसाधकविशेषेषु रूढत्वेन नातिव्याप्त्यवसरः।

अत एव 'गच्छतीति गौः' इति व्युत्पत्तिलभ्यस्यार्थस्य महिष्यादि-निष्ठत्वेऽपि न गोपदवाच्यत्वव्यवहारः। तदेवं वीरशैवशब्दस्य दार्शनिकव्युत्पत्तौ न डॉ० एस० एन्० एन्० दासगुप्तोक्ताक्षेपावसर इति विदाङ्कुर्वन्तु विद्वांसः।

---

उपर्युक्त प्रकार से इष्टलिङ्गधारण न तो अद्वैत वेदान्ती करते हैं और नहीं अन्य शैव सम्प्रदाय के लोग। अतः वीरशैव के वीरशब्द की अतिव्याप्ति अन्यत्र नहीं होती है। वीर विशेषण के द्वारा वेदान्तियों एवं इतर शैवों से वीरशैवों की व्यावृत्ति असम्भावित नहीं है।

इस प्रकार वीरशैव शब्द को योगरूढ़ की श्रेणी में रखा जाता है। संस्कृत वाङमय में प्रसिद्ध न्यायं है— अन्यद्धि शब्दानाम् इत्यादि। इसका अर्थ है— शब्दों में व्युत्पत्तिनिमित्त अन्य होता है तथा प्रवृत्ति निमित्त तद्भिन्न होता है। उदाहरणस्वरूप गोशब्द को लेते हैं। ''गो'' का व्युत्पत्ति-निमित्त है— ''गच्छतीति गौः।'' गम् धातु से कर्ता अर्थ में गमेर्डोः - औणादिक सूत्र से डो-प्रत्यय होने पर गोशब्द निष्पन्न होता है। पर केवल गो में चलना सीमित नहीं है— सारे जंगम प्राणियों में यह पाया जाता है। अतएव गो में प्रवृत्ति निमित्त सास्नादिमत्त्व को माना गया है। सास्नादि से युक्त जानवर में ही गामानय-वाक्यश्रवण से प्रवृत्ति लोक में देखी जाती है।

तद्वत् वीरशब्द का व्युत्पत्तिलभ्य अर्थ कदाचित् अन्यनिष्ठतया आशङ्कित हो जाय- यह सम्भव है। किन्तु वीरशैव-सिद्धान्त-प्रसिद्ध इष्टलिङ्ग-धारण साधन-विशेष से युक्त शैव साधक-विशेष में रूढ़ वीरशब्द की अतिव्याप्ति सर्वथा असम्भव है। व्युत्पत्तिलभ्य अर्थ को लेकर अतिव्याप्ति का आपादन नहीं किया जाता है। अतएव गोशब्द के व्युत्पत्तिलभ्य अर्थ को लेकर महिष्यादि में गोपदव्यवहार्यता को आरोपित नहीं किया जाता। इस प्रकार वीरशैव शब्द की दार्शनिक व्युत्पत्ति की जागृति में

## धार्मिकदृष्ट्या वीरशैवशब्दार्थनिर्वचनम्

अत्र हि वीरशैवसिद्धान्ते गुरुर्दीक्षायामिष्टलिङ्गं प्रदाय तद् यावज्जीवं शरीरे कदाचिद्वियोगं विना प्राणवद्धारणीयमित्युपदिशति। तथा चोक्तम्—

प्राणवद्धारणीयं तत्प्राणलिङ्गमिदं तव।
कदाचित् कुत्रचिद् वापि न वियोजय देहतः[1]।।इति।

एवं गुर्वादेशानुसारेण यो गुरुप्रदत्तमिष्टलिङ्गं शरीरे सावधानं धारयन् कदाचित् प्रमादाद् लिङ्गे पतिते सति स्वप्राणान् त्यक्ष्यामीति वीरव्रतं परिपालयति, स एव वीरशैव इति वीरशैवशब्दस्य धार्मिकं निर्वचनम्। तदुक्तं चन्द्रज्ञानागमे—

इष्टलिङ्गवियोगे वा व्रतानां वा परिच्युतौ।
तृणवत् प्राणसन्त्याग इति वीरव्रतं मतम्।।
भक्त्युत्साहविशेषोऽपि वीरत्वमिति कथ्यते।

---

डा. एस.एन. दास के आक्षेप का अवसर प्राप्त नहीं होता है— यह सर्वथा सुधीजनवेद्य विषय है।

### धार्मिक दृष्टि से वीरशैवशब्द के अर्थ का निर्वचन

इस वीरशैव सिद्धान्त में गुरु की महनीय भूमिका है। वह दीक्षा के समय शिष्य को इष्टलिङ्ग प्रदान करता है तथा उसे यह उपदेश करता है कि प्राण की भाँति जीवन भर (वियोग बिना) इष्टलिङ्ग का शरीर के साथ धारण करो। एतदर्थ प्रमाण वचन है— यह इष्टलिङ्ग तुम्हारा प्राणलिङ्ग है। इसे प्राणवद् धारण करो। किसी स्थान विशेष में अथवा क्षणात्मककाल में भी इस लिङ्ग का देह से वियोग नहीं होने दो।

उपर्युक्त गुरुप्रदत्त आदेश के अनुसार जो साधक गुरु से प्राप्त इष्टलिङ्ग को सावधानता के साथ शरीर में धारण करता है। साथ ही यह संकल्प लेता है कि कदाचित् प्रमाद से लिङ्ग पतित हो जाय तो अपने प्राणों का परित्याग कर दूँगा— एतादृश वीरव्रत का परिपालन करने वाला वह साधक ही वीरशैव है। वीरशैव शब्द का यह धार्मिक निर्वचन है। इसका प्रतिपादन चन्द्र ज्ञानागम में प्राप्त है— इष्टलिङ्ग वियोग होने पर अथवा व्रतों की त्रुटि होने पर तृणवत् प्राण-त्याग कर लेना वीरव्रत कहलाता है। भक्तिविषयक उत्साह विशेष वीरता कहलाती

---

१. सि० शि० ६।५, पृ० ९०.

वीरव्रतसमायोगाद् वीरशैवं प्रकीर्तितम्[१]।।इति।

तस्मात् 'वीरश्चासौ शैवश्च वीरशैवः' इति व्युत्पत्तिसिद्धेन वीरशैवशब्देनास्य परशिवे भक्तेः पराकाष्ठा परिदर्शिता भवति। अत एवात्र वीरत्वं न शारीरबलप्रयुक्तम्, किन्तु भक्तिप्रयुक्तमिति मन्तव्यम्। तदुक्तं श्रीमता षडक्षरमन्त्रिणा–

वीरत्वमस्य न धनेन न वा बलेन
नो कार्यतश्च विहितं दृढशम्भुभक्त्या।
वीरस्तुरीय इति शङ्करभाषणेन
श्रीवीरशैवमतगान्न परोऽस्ति कश्चित्[२]।।इति।

रणाङ्गणे यथा भटो वीराविष्टः सन् स्वामिभक्त्या स्वात्मानं समर्पयति, तथाऽयं शिवभक्तोऽपि स्वशरीरादिषु मोहरहितः सन् सति प्रसङ्गे परशिवार्थं स्वप्राणत्यागे विकल्परहितो भवति। तदुक्तं भगवत्पादैर्नीलकण्ठशिवाचार्यैः–

---

है। शैव का समायोग वीरव्रत के साथ हो जाय तो वह साधक वीरशैव कहलाता है। अतः वीरश्चासौ शैवश्च इस व्युत्पत्तिबल से वीरशैवशब्द की निष्पत्ति होती है। यह व्युत्पत्ति, शिव के प्रति साधक की पराकाष्ठा की भक्ति को प्रकाशित करती है। इस मत में शारीरबल प्रयुक्त वीरता अभिप्रेत नहीं है— प्रत्युत भक्तियुक्त वीरता स्पृहणीय है। श्रीमान् षड़क्षरमन्त्री ने सुस्पष्ट कहा है— साधक की वीरता न तो धनहेतुक है, न बलहेतुक और न कार्यहेतुक। सुदृढ़ शम्भुभक्तिमूलक वीरता ही वीरशैव मत में स्पृहणीय है। शङ्कर भगवान् ने दृढ़ शम्भुभक्तिमूलक तुरीय वीरता की प्रशंसा की है। अतः प्रगाढ़ भक्तिसम्पन्न श्रीवीरशैव साधक से श्रेष्ठ अन्य कोई साधक नहीं होता है।

रणभूमि में जैसे कोई योद्धा वीरभाव में समाविष्ट होकर स्वामिभक्ति से स्वयं को समर्पित कर देता है। वैसे ही यह शिवभक्त भी निजशरीर प्राणादि में मोह रहित होकर प्रसङ्ग उपस्थित होने पर परशिव के निमित्त अपने प्राणों के परित्याग में विकल्पवर्जित रहता है। भगवत्पाद नीलकण्ठ शिवाचार्य ने स्पष्ट कहा है— विकल्पार्थ वि शब्द एवं रहितार्थक र शब्द के योग से निष्पन्न वीर शब्द का अर्थ होता है— विकल्पवर्जित शैव। ऐसे साधक को वीरशैव कहा जाता है।

---

१. च० ज्ञा० आ० क्रियापादः, १०।३३-३४.
२. वी० ध० शि० १।१९.

**विशब्दो वा विकल्पार्थो रशब्दो रहितार्थकः।**
**विकल्परहितं शैवं वीरशैवं प्रचक्षते[1]।।इति।**

स्कन्दपुराणान्तर्गतशङ्करसंहितायां करपीठे इष्टलिङ्गार्चको वीरशैवपदेनाभिहितः। तथाहि—

**यो हस्तपीठे निजमिष्टलिङ्गं विन्यस्य तल्लीनमनःप्रचारः।**
**बाह्यक्रियासंकुलनिःस्पृहात्मा सम्पूजत्यङ्ग स वीरशैवः।।इति।**

तदेवमिष्टलिङ्गधारणादिरूपविशिष्टगुणयुक्तोऽयं शिवभक्तो लौकिकपारमार्थिकादिव्यवहारेषु सर्वलोकविलक्षणत्वेन प्रतीयमानत्वाद् वीरशैव इति व्यवह्रियते। तदुक्तं वातुलशुद्धाख्यतन्त्रे–

**विशिष्ट ईर्यते यस्माद्वीर इत्यभिधीयते।**
**शिवेन सह सम्बन्धं शैवमित्यादृतं बुधैः।।**
**उभयोः सम्पुटीभावाद्वीरशैवमिति स्मृतम्।**
**शिवायार्पितजीवत्वाद् वीरतन्त्रसमुद्भवात्।।**

---

स्कन्दपुराण के अन्तर्गत शङ्कर संहिता है। इसमें बताया गया है कि जो साधक करपीठ पर इष्टलिङ्ग की पूजा करता है वह वीरशैव कहलाता है। तद्यथा— जो साधक अपने करपीठ पर निज इष्टलिङ्ग को रखकर तल्लीनता के साथ मन को आवर्जित कर लेता है। फलस्वरूप वह बाह्य सांसारिक क्रियाकलापों से निःस्पृह होकर उस लिङ्ग का पूजन करता है, वह वीरशैव कहलाता है।

इस प्रकार यह शिवभक्त इष्टलिङ्ग धारण करने वाला है, प्राप्तदीक्ष है एतावता विशिष्ट गुणयुक्त है अतएव लौकिक एवं पारमार्थिक व्यवहारों में यह सर्वलोकविलक्षणतया विद्यमान होता है। ऐसे शिवभक्त को वीरशैव कहा जाता है। वातुलशुद्धतन्त्र में वीरशैव का छन्दोमय प्रतिपादन किया गया है— जिसके प्राप्य विशिष्ट होते हैं वह वीर कहलाता है। उपास्य शिव का उपासक होने से शैव कहलाता है। उपर्युक्त दो भावों से सम्पुटित विलक्षण शिवभक्त वीरशैव कहलाता है। जिसने शिव प्रभु को इष्टदेव स्वीकारा हो और अपने जीवन को शिव के लिये अर्पित कर दिया हो तथा शिवागम-प्रोक्त वीरशैवानुशासन को आत्मसात् कर लिया हो वह वीरशैव कहलाता है।

---

१. क्रि० सा०, भा० १, पृ० ११.

वीरशैवसमायोगाद् वीरशैवमिति स्मृतम्[१]।।इति।

श्रीमद्भिर्नीलकण्ठशिवाचार्यैः—'विरोधरहितं शैवं वीरशैवम्' इति वीरशैवपदं विरोधरहितार्थकं व्युत्पाद्य वीरशैवानां लोकानुरागित्वं प्रतिपादितम्। तथाहि—

विरोधार्थो विशब्दः स्याद् रशब्दो रहितार्थकः।
विरोधरहितं शैवं वीरशैवं विदुर्बुधाः[२]।।इति।

तदेवं वीरशैवशब्दस्य दार्शनिकधार्मिकव्युत्पत्तीनां पर्यालोचनेनेदं ज्ञायते यद् दीक्षायां गुरुणा प्रदत्तमिष्टलिङ्गं स्ववक्षःस्थले सदा सावधानं धारयन्, प्रसङ्गे सति परशिवार्थं स्वप्राणत्यागरूपवीरव्रतं च परिपालयन् यः शिवजीवैक्यबोधिकायां विद्यायां रमते स वीर इति। तादृशवीरविशेषणविशिष्टः शैव एव वीरशैव इति।

---

श्रीमान् आचार्य नीलकण्ठ शिवाचार्य ने एक विलक्षण व्युत्पत्ति से वीरशैव की परिभाषा प्रतिपादित की है। विरोधरहित अर्थात् विरोध-पराङ्मुख शिवभक्त वीरशैव कहलाता है। निज प्रभुमय जगत् को देखने वाला शिवभक्त किसी भी व्यक्ति से विरोध कर नहीं सकता। इस कारण वीरशैव के प्रति लोकानुराग (गाढ) प्राप्त होता है। तद्यथा— वीर-शब्द के ''वि'' का विरोध अर्थ एवं ''र'' का रहित अर्थ होने से विरोधवर्जित शैव को ''वीरशैव'' शब्द से विद्वज्जन सम्बोधित करते हैं।

उपर्युक्त प्रकार से वीरशैव शब्द की दार्शनिक एवं धार्मिक व्युत्पत्तियों के आकलन करने से यह ज्ञात होता है— दीक्षा-संस्कार में गुरु से प्रदत्त इष्टलिङ्ग को निजवक्षःस्थल पर सदा सावधान भाव से धारण करने वाला जो साधक विशेष प्रसङ्ग प्राप्त होने की स्थिति में परशिवनिमित्त स्वप्राणत्याग के प्रगाढभक्तिमय व्रत को परिपालन करता हो वह शिवजीवैक्य-प्रबोधिनी विद्या में गाढ़ानन्द की अनुभूति करता है। ऐसा साधक ''वीर'' कहलाता है। तादृश वीर विशेषण से विशिष्ट शिवभक्त वीरशैव कहलाता है। डा० शिवाचार्य जी ने पूर्वोत्तर पक्षों की युक्तिप्रमाणायत्त समीक्षा द्वारा इस निष्कर्ष को प्रकाशित किया है।

---

१. वा० शु० तन्त्रम्, १०।२७-२९.
२. क्रि० सा०, भा० १, पृ० ११.

## वीरशैवानां लिङ्गायततापरपर्यायत्वम्

वीरशैवास्तावल्लिङ्गायतशब्देनापि व्यवहृता भवन्ति। 'लिङ्गमायतिर्यस्य स लिङ्गायतः' इति व्युत्पत्त्या 'उत्तरः काल आयतिः' इत्यमरकोशप्रामाण्याच्च यस्य जीवनस्यायतिरुत्तरकालो लिङ्गमेव, अर्थात् लिङ्गप्रधानं भवति, स लिङ्गायत इति। दीक्षानन्तरमुत्तरकालो येन लिङ्गपूजाध्यानादिनैव याप्यते, स लिङ्गायत इति तात्पर्यम्। अत एव महर्षिणा वेदव्यासेन–

**शैलादेन महाभागा विचित्रा लिङ्गधारकाः।**
**शवस्योपरि लिङ्गञ्च ध्रियते च पुरातनैः।।**
**लिङ्गेन सह पञ्चत्वं लिङ्गेन सह जीवितम्[१]।**

इति लिङ्गधारिणां वीरशैवापरपर्यायाणां लिङ्गायतानां लिङ्गनिष्ठा निरूपिता।

---

## वीरशैवों को लिङ्गायत-संज्ञा से भी सम्बोधित किया जाना

वीरशैव साधकों के लिये लिङ्गायत शब्द भी प्रयुक्त होता है। लिङ्गायत शब्द की निष्पत्ति बहुव्रीहि समासाश्रित है— लिङ्गम् आयतिः यस्य'' स लिङ्गायतः — ऐसी व्युत्पत्ति वीरशैव साधकों को अनुगत है। उत्तरकाल को आयति-शब्द का अर्थ बताया गया है। अमरकोश की उक्ति ''उतरः काल आयतिः'' से उपर्युक्त शक्तिग्रह सुगृहीत होता है। एतावता सुविदित होता है— जिस साधक के जीवन का उत्तरकाल (आयति) इष्टलिङ्ग अर्थात् लिङ्गप्रधान हो वह वीरशैव ''लिङ्गायत'' कहलाता है। तात्पर्य सुस्पष्ट है। कारुणिक गुरु से दीक्षाविधि में इष्टलिङ्गधारण करने के अनन्तर जो साधक अपने जीवन के उत्तर काल को शिवलिङ्ग की पूजा तथा उसके ध्यानानुध्यान से ओतप्रोत होकर यापन करता हो वह ''लिङ्गायत'' इस अन्वर्थ नाम से विदित एवं प्रथित होता है। अतएव महर्षि वेदव्यास ने निम्नाङ्कित सार्द्धश्लोक द्वारा लिङ्गधारी अर्थात् लिङ्गायत शैवों की सान्द्रलिङ्गनिष्ठा को प्रतिपादित किया है—

शैलादेन महाभागा...........लिङ्गेन सह जीवितम् ।।१½।।

---

१. स्क० पु० केदारखण्डे, ७।४१-४२.

**वीरशैवप्रभेदाः**

तदयं वीरशैवः सामान्य-विशेष-निराभारित्वेन त्रिधा विभज्यते। तदुक्तं सूक्ष्मागमे-

> वीतरागादिदोषत्वादात्मतत्त्वविचारणात्।
> विकल्पाकल्पशून्यत्वाद्वीरशैवमिति स्मृतम्।।
> सामान्यं प्रथमं प्रोक्तं विशेषश्च द्वितीयकम्।
> निराभारं तृतीयं स्यात् क्रमाल्लक्षणमुच्यते[1]।।इति।

तत्र गुरुप्रदत्तेष्टलिङ्गे निष्ठावान् भूत्वा गुरु-लिङ्ग-जङ्गमानां सेवारूपवीरशैवीयसामान्यनियमान् यः परिपालयति, स 'सामान्यवीरशैवः'[2] इत्युच्यते।

वीरशैवागमोक्तेष्टलिङ्गपूजादिरूपकर्मानुष्ठानेन परिपक्वान्तःकरणो भूत्वा 'विशिष्टधर्मानुष्ठानाद्विशेष इति कथ्यते' इत्यागमोक्त्यनुसारेण लिङ्गाङ्गानुसन्धा-

---

**वीरशैवों के प्रभेद**

विलक्षण शिवभक्त वीरशैवों को तीन प्रभेदों में विभाजित किया जाता है— सामान्य वीरशैव, विशेष वीरशैव तथा निराभारि वीरशैव। सूक्ष्मागम में वीरशैव तथा उसके प्रभेद का सूक्ष्म प्रतिपादन किया गया है— जिन साधकों ने रागादि दोषों को उत्तीर्ण कर लिया है क्योंकि उनके द्वारा सतत आत्मतत्त्व की विचारणा की जाती है। अतएव जिनके हृदय से विकल्पों की आसमन्तात् कल्पनाओं का पलायन हो जाता है। उन साधकों को शास्त्रकारों ने "वीरशैव" संज्ञा से विभूषित किया है। वीरशैव के तीन प्रभेद प्रतिपादित हैं— १. सामान्य, २. विशेष, ३. निराभार। इनके लक्षण क्रमशः बताये जायेंगे ।।२।।

इनमें सामान्यवीरशैव उन साधकों को कहा जाता है जो श्रीगुरु-प्रदत्त इष्टलिङ्ग में निष्ठा-आस्था के साथ गुरु, लिङ्ग तथा जङ्गम यति के प्रति वीरशैव के सामान्य नियमों का पालन करते हुए सेवाव्रत को अपनाते हैं।

वीरशैवागम में प्रतिपादित "इष्टलिङ्ग-पूजा" प्रभृति कर्मों के अनुष्ठान से जब

---

१. सूक्ष्मा० ७।२९-३०.
२. द्र० तत्रैव ७।३१-३८.

नात्मकैकोत्तरशतस्थलप्रभेदभिन्नषट्स्थलरहस्यं गुरुमुखाद् यो विशेषेण जानाति स 'विशेषवीरशैवः'[१] इत्यभिधीयते।

अयं विशेषवीरशैव एव यदा 'निवृत्तकर्मभारत्वान्निराभार इति स्मृतः' इत्यागमोक्त्या कृतकृत्यः सन् सर्वाभिमानपरित्यागेन निःस्पृहवृत्त्या च जीवन्मुक्तवज्जीवनं यापयति, तदा 'निराभारवीरशैवः'[२] इत्याख्यायते।

**वीरशैवमतस्य दर्शनशब्दवाच्यत्वम्**

दृश्यते स्वात्मरूपेण साक्षात्क्रियते परशिवतत्त्वं येन तद् दर्शनमिति व्युत्पत्त्या वीरशैवमतमपि दर्शनपदवाच्यं भवत्येव, अत्रापि मुक्तावस्थायां जीवस्य परशिवरूपत्वाङ्गीकारात्।

---

साधक का अन्तःकरण परिपक्व हो जाता है तब ऐसे साधक के साथ यह आगम की सूक्ति चरितार्थ होती है— विशिष्ट धर्म के अनुष्ठान से साधक स्वयं विशेष कहलाता है। सूक्ति के अनुसार साधक, लिङ्गाङ्गों के अनुसन्धान से षट्स्थल को उनके १०१ प्रभेदों के साथ रहस्यावबोधपुरःसर निजगुरुमुख से विशेष रूप से जान लेता है। फलस्वरूप वह "**विशेष वीरशैव**" कहलाता है। पुनश्च विशेषवीरशैव के साथ आगमसूक्ति चरितार्थ होती है— "कर्मभार की बोझ जिस साधक के शिर से उतर जाता है। वह निराभार की उत्तमश्रेणी में प्रविष्ट हो जाता है।"

विशिष्ट धर्मानुष्ठान की पराकाष्ठा की स्थिति में साधक कृतकृत्यता की अनुभूति करता है। वह समस्त अभिमान का परित्याग कर देता है। परिणामस्वरूप वह निःस्पृहवृत्ति से जीवनन्मुक्त की तरह जीवन-यापन करता है। ऐसी स्थिति में साधक "निराभार वीरशैव" की संज्ञा से विभूषित होता है।

**वीरशैवमत भी अन्य दर्शन की तरह दर्शनशास्त्र है**

दृश्यते येन तत् दर्शनम् - यह दर्शन शब्द की व्युत्पत्ति है। वीरशैवमत के द्वारा साधक परशिवतत्त्व का स्वात्मरूप से साक्षात्कार करता है। अतः व्युत्पत्ति के आधार पर वेदान्त दर्शन की तरह वीरशैवदर्शन भी दर्शनपद-वाच्य है। इस दर्शन में भी मुक्तावस्था में जीव की परशिवस्वरूपता का अङ्गीकार किया जाता है।

---

१. द्र० तत्रैव ७।३९-६३.

२. द्र० तत्रैव ७।६४-९१.

## वीरशैवदर्शनस्य पर्यायनामानि

तत्र तावद्वीरशैवसाहित्ये विशेषाद्वैत-शक्तिविशिष्टाद्वैत-शिवाद्वैतादीन्यस्य दर्शनस्य पर्यायनामानि निरुक्तानि। एभिर्नामभिरस्य दर्शनस्य सिद्धान्ताः संसूच्यन्ते। तेषां व्युत्पत्तिस्तावत् प्रस्तूयते।

(१) **विशेषाद्वैतम्**–"विश्व शेषश्च = विशेषौ = ईश-जीवौ, तयोरद्वैतं = विशेषाद्वैतम्" इत्यस्य व्युत्पत्तिः। अत्रायं भावः–'विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि'[1] इति नैघण्टुकेषु विशब्दस्य परमात्मवाचकत्वं सूचितम्। वात्युत्पादयतीति व्युत्पत्त्या च विशेब्देन जगत्कारणत्वेनेश्वरस्यैव सिद्धिर्भवति। किञ्च 'द्वा सुपर्णा सयुजा सखाया[2]...........' इति श्रुतिरपि परमात्मानं पक्षिरूपेण वर्णितवती। तस्माद् 'विः' इत्यस्य प्रकृते 'परमात्मा' इत्यर्थो गृह्यते। शेषशब्देन च तस्यांशो जीवोऽभिप्रेतः, 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः'[3] इति

---

## वीरशैवदर्शन के अनेक पर्याय नाम हैं

वीरशैव-साहित्य अति विपुल है। इसमें वीरशैवदर्शन के अनेक पर्याय नाम कहे गये हैं। इनके पर्याय नाम इस दर्शन के विशिष्ट सिद्धान्तों को सूचित करते हैं। इन शब्दों की व्युत्पत्ति क्रमशः प्रस्तुत की जाती है।

### १. विशेषाद्वैत

इस शब्द की व्युत्पत्ति है— विश्व शेषश्च इत्यनयोः इतरेतरयोगद्वन्द्वः। **वि** और **शेष** का द्वन्द्व समास होने से विशेषौ रूप की सिद्धि होती है। "वि" का अर्थ ईश्वर होता है तथा "शेष" का अर्थ जीव होता है। विशेषयोः अद्वैतम् - षष्ठी तत्पुरुष समास होने पर **विशेषाद्वैतम्** - शब्द रूप की सिद्धि होती है। आशय यह है— एकाक्षरकोष में पठित वचन के अनुसार नैघण्टुक में "वि" शब्द के चक्षु, व्योम, परमात्मा एवं पक्षी अर्थ बताये गये हैं। वाति=**उत्पादयति इति विः** इस व्युत्पत्ति के आधार पर विशब्द का अर्थ जगत्कारण परमेश्वर होता है। मुण्डकोपनिषद् में **द्वा सुपर्णा सयुजा सखाया...** इत्यादि मन्त्र पठित है। यह श्रुति, परमात्मा को पक्षी रूप में प्रतिपादित करती है। अतः विशेष के "वि" पद से वाङ्मय-प्रसिद्ध परमेश्वर अर्थ गृहीत होता है। शेष शब्द से

---

१. एकाक्षरकोषः, पृ० १८.

२. मुण्डको० ३।१।१.

३. बृहदारण्यको० २।१।२०.

सदृष्टान्तं जीवस्य शिवांशत्वश्रवणात्। एवम्भूतयोः शिव-जीवयोः 'यथा नद्यः स्यन्दमानाः[१]........' इति श्रुत्याऽद्वैतमुपदिष्टम्। तदेवं संसार्यवस्थायां परस्परभिन्नयोरंशांशिनोः शिव-जीवयोर्मुक्तावभेद-प्रतिपादकमिदं दर्शनं विशेषाद्वैतशब्देन व्यवह्रियते। तदुक्तं भाष्यकारैः श्रीपतिपण्डिताराध्यैः-

विशब्देनोच्यते शम्भुर्हंसहंसेति मन्त्रतः।
शेषशब्देन शारीरो यथाग्नेरिति मन्त्रतः।।
अद्वैतेन भवेद्योगो यथा नद्य इति श्रुतेः[२]।।इति।

(२) शक्तिविशिष्टाद्वैतम्-'शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ जीवेशौ, तयोरद्वैतं शक्तिविशिष्टाद्वैतम्' इत्यस्य व्युत्पत्तिः। जीवः

---

परमेश्वर का अंश "जीव" अर्थ गृहीत होता है। बृहदारण्यकोपनिषद् में अग्नि और विस्फुलिङ्ग का दृष्टान्त उपस्थापित कर जीव को शिव का अंश प्रतिपादित किया गया है। शिव अंशी है तथा जीव अंश है। इन दोनों में अभेद को प्रतिपादित करने हेतु नदी एवं समुद्र जल का दृष्टान्त मुण्डकोपनिषद् में अग्नि और विस्फुलिंग का दृष्टान्त उपस्थापित कर जीव को शिव का अंश प्रतिपादित किया गया है। शिव अंशी है तथा जीव अंश है। इन दोनों में अभेद को प्रतिपादित करने हेतु नदी एवं समुद्रजल का दृष्टान्त मुण्डकोपनिषद् में उपस्थापित किया गया है। इस प्रकार श्रुत्यर्थों का सामञ्जस्येन अनुगम करने से यह विदित होता है— संसारी अवस्था में शिव अंशी तथा जीव अंश है अतः इन दोनों में स्फुटभेद मान्य है। पर मुक्तावस्था में उपर्युक्त अद्वैत श्रुति के बल पर शिव और जीव में अभेद का प्रतिपादन करने वाले वीरशैवदर्शन को **विशेषाद्वैत** शब्द से भी सम्बोधित किया जाता है। श्रीपतिपण्डिताराध्य (भाष्यकार) ने शिव और जीव के अद्वैत को इस प्रकार से उपपादित किया है— "विशब्द से शम्भु अर्थ का बोधः," "**हंसः हंसः**" मन्त्र से प्रतिबोधित होता है। तद्वत् "**यथाग्नेः**" इत्यादि मन्त्रश्रुति से शेषशब्द से "शारीर-जीव" अर्थ का बोध होता है। एवमेव "यथानद्यः स्यन्दमानाः" इत्यादि श्रुति के आधार पर मुक्त्यवस्था में **वि** और **शेष** का अद्वैत-प्रतिबोध अबाधित रूप से जागृत होता है।।१½।।

## २. शक्तिविशिष्टाद्वैत

इस शब्द की व्युत्पत्ति है— शक्तिश्च शक्तिश्च - इति शक्ती। **सरूपाणामेकशेष एकविभक्तौ** सूत्र से एकशेष होता है। ताभ्यां विशिष्टौ जीवेशौ, तयोः अद्वैतं,

---

१. मुण्डको० ३।२।८.
१. ब्र० सू० श्रीकर-मङ्गलश्लो० १६.

स्थूलचिदचिच्छक्तिविशिष्टः, शिवस्तु सूक्ष्मचिदचिच्छक्ति-विशिष्टः। अत्र स्थूला चित् किञ्चिज्ज्ञत्वरूपा, स्थूला अचित् किञ्चित्कर्तृत्वरूपा। एवमेव सूक्ष्मा चित् सर्वज्ञत्वरूपा, सूक्ष्मा अचित् सर्वकर्तृत्वरूपा, अर्थाज्जीवः किञ्चिज्ज्ञत्व-किञ्चित्कर्तृत्वशक्तिविशिष्टः, शिवः सर्वज्ञत्व-सर्वकर्तृत्वरूपशक्तिविशिष्ट इति सिद्धम्। एवम्भूतयोर्जीवशिवयोः 'जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम्'[१] इति रेणुकभगवत्पादोक्त्याऽद्वैतं प्रतिपाद्यत इतीदं दर्शनं शक्तिविशिष्टा-द्वैतदर्शनमित्युच्यते।

(३) **शिवाद्वैतम्**-'शिवश्च शिवश्च शिवौ, तयोरद्वैतं शिवाद्वैतम्' इति ह्यस्य व्युत्पत्तिः। अत्रापि प्रथमशिवपदस्य सूक्ष्मचिदचिच्छक्तिविशिष्टं शिवाभिधं लिङ्गमित्यर्थः, अपरशिवपदस्य स्थूलचिदचिच्छक्तिविशिष्टोऽनाद्यविद्याऽ-

---

शक्तिविशिष्टाद्वैतम्। जीव जिस शक्ति से विशिष्ट है वह स्थूलचिदचित्शक्ति है। तद्वत् शिव जिस शक्ति से विशिष्ट है वह सूक्ष्मचिदचित् शक्ति है। स्थूल चित् शक्ति **किञ्चिज्ञता** है तथा स्थूल अचित् **किञ्चित्कर्तृता** है। तद्वत् सूक्ष्म चित् **सर्वज्ञता** है तथा सूक्ष्म अचित् सर्वकर्तृता है। आशय यह है— जीव किञ्चिज्ज्ञत्व एवं किञ्चित्कर्तृत्व शक्तियों से विशिष्ट है तथा शिव सर्वज्ञत्व एवं सर्वकर्तृत्वशक्तियों से विशिष्ट है। शक्तिविशिष्ट जीव और ईश्वर का अद्वैत प्रतिपादित किया जाता है। श्रीरेणुकभगवत्पाद ने "सिद्धान्तशिखामणि" में नदीजल का समुद्रजल में न्यस्त हो जाने के दृष्टान्त के साथ जीव एवम् ईश के अभेद का उपपादन किया है। तद्यथा—

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम्** ।।½।।

एतादृश शिवजीवों (शक्तिविशिष्टों) में अद्वैत प्रतिपादन को पार्यन्तिक सिद्धान्ततया अङ्गीकार करने से वीरशैवदर्शन का **शक्तिविशिष्टाद्वैत** शब्द से व्यपदेश किया जाता है।

**३. शिवाद्वैत**

यहाँ भी शिवश्च शिवश्च - इति शिवौ। पूर्ववत् एकशेष होता है। तयोः अद्वैतम् - षष्ठीतत्पुरुष समास होता है। प्रथम शिवपद लिङ्ग अर्थ का बोधक है। सूक्ष्मचिदचिच्छक्तिविशिष्टलिङ्ग, शिवशब्द-वाच्य है। द्वितीय शिव "अङ्ग" का बोधक है। स्थूलचिदचिच्छक्तिविशिष्ट जीव "अङ्ग" कहलाता है। यह जीव अनादि अविद्या से अभिभूत होता है तथा अंशी शिव का अंश होता है। जिस मल से यह आवृत

---

१. सि० शि० २०।१२, पृ० २१०.

भिभूतशिवांशस्वरूपः शिवदीक्षयाऽपह्रियमाणमलो जीवोऽङ्गमित्यर्थः। एवंभूतयोर्लिङ्गयोर्यदद्वैतं तत् शिवाद्वैतमित्यर्थः।

तदेवं वीरशैवदर्शनस्योपर्युक्तानां नामत्रयाणामपि व्युत्पत्त्या इदमेव ज्ञायते यद्वीरशैवदर्शने बद्धावस्थायां परमात्मनो भिन्नानां जीवानां मुक्तावस्थायामभेदः प्रतिपाद्यत इति।

**वीरशैवधर्मसंस्थापकाचार्याः**

यदा यदा हि धर्मस्य ग्लानिर्भवति भूतले।
तदा तदाऽवतारोऽयं गणेशस्य महीतले।।

इति स्कन्दपुराणोक्त्या यथा धर्मग्लानिसमये शिवः स्वगणान् प्रेष्य धर्मं

---

होता है उस मल का अपनयन एक मात्र शिवदीक्षा से होता है। विद्या के उदय से अविद्या का क्षय हो जाने पर मलरहित अङ्ग का लिङ्ग-शिव के साथ (शिवगुरु के अनुग्रह से) अद्वैत अर्थात् अभेद होता है। यह अद्वैत **शिवाद्वैत** संज्ञा से विभूषित होता है। इस शिवाद्वैत का प्रतिपादक होने से वीरशैवदर्शन भी शिवाद्वैत शब्द से प्रतिपादित होता है।

इस प्रकार वीरशैव दर्शन के पर्याय उपर्युक्त तीन नाम की व्युत्पत्ति प्रतिपादित होती है। तदनुसार यह विदित होता है कि बद्धावस्था में जीव, परमात्मा से भिन्न होते हैं किन्तु मुक्तावस्था में इनका परमात्मा से अभेद होता है। ऐसा सुस्पष्ट प्रतिपादन वीरशैवदर्शन में प्राप्त होता है।

**वीरशैवधर्म के संस्थापक आचार्य**

"जब जब भूतल पर धर्म की कान्तिक्षीण होती है तब तब महीतल में गणेश का यह अवतार होता है।।१।।

स्कन्दपुराण की इस उक्ति से विदित होता है कि यथा धर्मग्लानि के समय भगवान् शिव स्वगण को प्रेषित कर धर्म की पुनः स्थापना करते हैं। तद्वत् वीरशैवधर्म के सनातन होने पर भी प्रत्येक युग के आरम्भ में पाँच आचार्य शिवगण इसकी पुनः संस्थापना करते हैं— ऐसा स्वीकार किया जाता है। वीरशैव धर्म के संस्थापक ये पाँच आचार्य प्रत्येक युग में परशिव के पाँच मुख— सद्योजात, वामदेव, अघोर, तत्पुरुष एवम् ईशान से प्रादुर्भूत होते हैं। यथा कृतयुग में इनके नाम होते हैं— एकाक्षर शिवाचार्य, द्व्यक्षर शिवाचार्य, त्र्यक्षर शिवाचार्य, चतुरक्षर शिवाचार्य एवम् पञ्चाक्षर शिवाचार्य। इसका उल्लेख "वीरशैव सदाचार संग्रह" ग्रन्थ के निम्नाङ्कित

पुनः संस्थापयतीति ज्ञायते, तथा सनातनस्यापि वीरशैवधर्मस्य प्रतियुगारम्भं शिवगणैः पञ्चभिराचार्यैः संस्थापितत्वमङ्गीक्रियते।

वीरशैवधर्मसंस्थापकाचार्याः पञ्चाचार्याः प्रतियुगं परशिवस्य सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशानाख्येभ्यः पञ्चवक्त्रेभ्यः प्रादुर्भवन्तीति विज्ञायते। युगभेदेन एषां नामान्यपि भिद्यन्ते। तत्र तावत् कृतयुगे-एकाक्षर-शिवाचार्यः, द्व्यक्षरशिवाचार्यः, त्र्यक्षरशिवाचार्यः, चतुरक्षरशिवाचार्यः, पञ्चाक्षरशिवाचार्य इति नामानि भवन्ति। तथा ह्युक्तम्-

एतेषां प्रतिनामानि युगभेदेन च शृणु।
एकाक्षरो द्व्यक्षरश्च त्र्यक्षरश्चतुरक्षरः।।
पञ्चाक्षरः कृतयुगे पञ्चनामानि सर्वशः[1]।।इति।

एत एव यदा त्रेतायुगेऽवतरन्ति, तदा एकवक्त्रशिवाचार्यः, द्विवक्त्रशिवाचार्यः, त्रिवक्त्रशिवाचार्यः, चतुर्वक्त्रशिवाचार्यः, पञ्चवक्त्रशिवाचार्य इति तेषां नामानि भवन्ति। तथा ह्युक्तम्-

एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रश्चतुराननः।
पञ्चवक्त्र इति ख्यातस्त्रेतायां तु महेश्वरि[2]।।इति।

द्वापरयुगावतारे च तेषां नामानि रेणुकशिवाचार्यः, दारुकशिवाचार्यः, घण्टाकर्णशिवाचार्यः, (शङ्कुकर्णशिवाचार्यः) धेनुकर्णशिवाचार्यः,

---

श्लोक वचनों में प्राप्त होता है— "युगभेद से ५ आचार्यों के नामभेद होते हैं। मैं इन्हें बताता हूँ आप सुनें। कृतयुग में पाँच नाम हैं— एकाक्षर, द्व्यक्षर, त्र्यक्षर, चतुरक्षर एवं पञ्चाक्षर।।१½।।

ये ही आचार्य जब त्रेतायुग में अवतरित होते हैं तब इनके परिवर्तित नाम होते हैं— एकवक्त्र शिवाचार्य, द्विवक्त्र शिवाचार्य, त्रिवक्त्र शिवाचार्य, चतुर्वक्त्र शिवाचार्य एवं पञ्चवक्त्र शिवाचार्य।।१।।

उपर्युक्त ग्रन्थ के निम्नाङ्कित श्लोक में इन नामों का उल्लेख प्राप्त होता है— भगवान् महेश्वर महेश्वरी को सम्बोधित कर प्रतिपादित करते हैं— त्रेता में वीरशैव के संस्थापक आचार्यों के नामभेद होते हैं— एकवक्त्र.........पञ्चवक्त्र शिवाचार्य ।।१।।

पुनश्च द्वापरयुग में अवतरित होने वाले इन्हीं ५ आचार्यों के नाम होते हैं— रेणुक शिवाचार्य, दारुक शिवाचार्य, घण्टाकर्ण शिवाचार्य (शङ्कुकर्ण शिवाचार्य)

---

१. वी० स० सं० १।३०-३१.
२. तत्रैव १।३१-३२.

विश्वकर्णशिवाचार्यश्चेति भवन्ति। तथा ह्युक्तम्–

द्वापरे रेणुकश्चेति दारुकश्च द्वितीयकः।
तृतीयः शङ्कुकर्णश्च चतुर्थो धेनुकर्णकः।।
पञ्चमो विश्वकर्णाख्यः पञ्च नामानि वै श्रृणु[1]।।इति।

कलियुगे एतेषां नामानि–रेवणाराध्यः, मरुळाराध्यः, एकोरामाराध्यः, पण्डिताराध्यः, विश्वाराध्यश्चेति भवन्ति। तदेवोक्तम्–

रेवणो मरुळश्चैकोरामः पण्डित एव च।
विश्वाराध्य इति प्रोक्तः कलावपि मम प्रिये[2]।।इति।

कलियुगीनाश्चैते आचार्याः परशिवस्य पञ्चमुखत्वेन प्रसिद्धेभ्यः पञ्चशिव–लिङ्गेभ्यः प्रादुर्भूताः। तेषां क्रमशो विवरणं प्रस्तूयते।

**( १ ) रेवणाराध्यः**– आन्ध्रप्रदेशस्य कुल्यपाक(कोनलुपाक) क्षेत्रस्थ-सोमेश्वराख्यशिवलिङ्गाद् रेवणाराध्यः प्रादुर्भूय धर्मप्रचारार्थं कर्णाटके

---

धेनुकर्ण शिवाचार्य तथा विश्वकर्ण शिवाचार्य।

उपर्युक्त ग्रन्थ के निम्नाङ्कित श्लोक वचनों में इन नामों का उल्लेख प्राप्त होता है। द्वापरे रेणुकश्चेति.........................नामानि वै श्रृणु ।।१½।।

अर्थ सुस्पष्ट है। पुनश्च कलियुग में अवतरित होने वाले इन्हीं ५ आचार्यों के नाम होते हैं— रेवणाराध्य, मरुलाराध्य, एकोरामाराध्य, पण्डिताराध्य एवं विश्वाराध्य।

उपर्युक्त ग्रन्थ के निम्नाङ्कित श्लोक में इन नामों का उल्लेख किया गया है— रेवणो.......................मम प्रिये।।१।।

श्लोक का अर्थ सुस्पष्ट है। कलियुग के इन पाँच आचार्यों का प्रादुर्भाव परशिव के पञ्चमुखरूप में प्रसिद्ध पाँच शिवलिङ्गों से हुआ है। इनका विवरण क्रमशः प्रस्तुत किया जाता है—

## १. रेवणाराध्य

आन्ध्र प्रदेश के कुल्यपाक (कोलनुपाक) क्षेत्र में स्थित सोमेश्वर लिङ्ग से रेवणाराध्य का प्रादुर्भाव हुआ। इन्होंने धर्मप्रचार हेतु कर्नाटक के चिक्कमगलूरु मण्डल

---

१. तत्रैव १।३२-३३.
२. तत्रैव १।३४.

चिक्कमगलूरुमण्डलस्थ–बालेहोन्नूरग्रामे पीठमेकं संस्थापितवान्। तदद्यापि 'रम्भापुरीपीठम्' इति नाम्ना प्रसिद्धमस्ति। अनेनैव रेवणाराध्यमहाभागेन वीरगोत्रं पडिविडिसूत्रं च प्रवर्तितम्। अस्य रेणुकशाखा सिंहासनं च वीरसिंहासनमिति कथ्यते[1]। एतत्पीठपरम्परायामधुना ११९ तमपीठाधीश्वरत्वेन श्रीजगद्गुरुः प्रसन्नरेणुकवीररुद्रमुनिदेवशिवाचार्यो विराजतेतराम्।

(२) **मरुलाराध्यः–** मध्यप्रदेशेऽवन्तिकानगरस्य (उज्जैनपत्तनस्य) वटक्षेत्रस्थसिद्धेश्वरमहालिङ्गाद् मरुलाराध्यः प्रादुर्बभूव। कारणान्तरेण अवन्तिकां परित्यज्य कर्णाटके बल्लारिमण्डलस्य उज्जयिनीग्राममागत्य श्रीमरुळाराध्यस्तत्रैव धर्मप्रचारार्थ पीठमेकं संस्थापयामास। तदधुना 'सद्धर्मपीठम्' इति नाम्ना प्रख्यातमस्ति। सद्धर्मपीठाधिपतिर्मरुळाराध्य एव नन्दिगोत्रस्य वृष्टिसूत्रस्य च प्रवर्तकः। अस्य 'दारुकशाखा', सिंहासनं च सद्धर्मसिंहासनमित्याख्यायते। उज्जयिनीनगरेऽपि (मध्यप्रदेशे) सद्धर्मसिंहासनस्य शाखामठमेकमासीदिति

---

(जिला) में स्थित बालेहोन्नूर - ग्राम में एक पीठ की स्थापना की। वह आज भी **रम्भापुरी पीठ** नाम से प्रसिद्ध है। ये ही आचार्य रेवणाराध्य ''वीरगोत्र'' एवं ''पडिविडिसूत्र'' ग्रन्थों को प्रवर्तित किये थे। इसकी रेणुकशाखा एवं सिंहासन को ''वीरसिंहासन'' कहा जाता है। इस पीठ के परम्परा में सम्प्रति (ग्रन्थ लेखनकाल में) १२०वें पीठाधीश्वर श्रीजगद्गुरु प्रसन्नरेणुक वीरसोमेश्वर शिवाचार्य विराजमान हैं।

### २. मरुलाराध्य

मध्य प्रदेश के अवन्तिका नगर अर्थात् उज्जैन (पत्तन) के वटक्षेत्र में स्थित सिद्धेश्वर महालिङ्ग से मरुलाराध्य का प्रादुर्भाव हुआ था। किसी कारण से अवन्तिका का परित्यागकर श्रीमरुलाराध्य, कर्नाटक के बल्लारिमण्डल के उज्जयिनी-ग्राम में आ गये। वहाँ पर उन्होंने धर्मप्रचार निमित्त एक पीठ की स्थापना की। आज की तिथि में यह ''सद्-धर्मपीठ'' नाम से विख्यात है। सद्धर्मपीठाधिपति मरुलाराध्य ने ही ''नन्दिगोत्र'' एवम् ''वृष्टिसूत्र'' ग्रन्थों का प्रवर्तन किया था। इसकी ''दारुकशाखा'' तथा सिंहासन को सद्धर्मसिंहासन कहा जाता है। मध्य प्रदेश के उज्जैन नगर में भी सद्धर्म सिंहासन का एक शाखामठ पूर्व में था—ऐसा सुना जाता है। इस पीठ की परम्परा में सम्प्रति (ग्रन्थलेखन काल में) १०९वें पीठाधीश्वर श्रीमान् जगद्गुरु

---

१. द्र० वी० स० सं० १।३७-३९; हिन्दुत्व (रामदास गौड), पृ० ६९५-६९६.

श्रूयते[२]। एतत्पीठपरम्परायामधुना १०९, ११० तमपीठाधीश्वरौ श्रीजगद्गुरुसिद्धेश्वरशिवाचार्य-मरुळाराध्यशिवाचार्यौ विराजेते।

(३) एकोरामाराध्यः–द्राक्षारामक्षेत्रस्य रामनाथलिङ्गात् प्रादुर्भूत एकोरामाराध्य उत्तरप्रदेशीय-केदारेश्वरसमीपे पीठमेकं संस्थापयामास। तत् 'केदारपीठम्' इति कथ्यते। केदारपीठाधिपतिरेकोरामाराध्य एव भृङ्गिगोत्रस्य, लम्बनसूत्रस्य च प्रवर्तकः। अस्य धेनुकर्ण (शङ्कुकर्ण) शाखा, सिंहासनं च वैराग्यसिंहासनमिति कथ्यते। तद् वैराग्यसिंहासनमधुना 'ओखीमठे' प्रख्यातमस्ति।

जनमेजयमहाराजः स्वकीयमातापित्रोः शिवलोकप्राप्त्यर्थं सूर्यग्रहणपर्वकाले तदानीन्तनवैराग्यसिंहासनाधीश्वराय आनन्दलिङ्गजङ्गमाख्याचार्याय मन्दाकिनी-क्षीरगङ्गासरस्वत्याख्यनदीनां सङ्गमक्षेत्रमध्येऽवस्थितं केदारक्षेत्रं दानरूपेण समर्पयत्। एतद्दानसूचकं ताम्रपत्रमेकं ओखीमठेऽधुनापि विद्यते। तद्दानपत्रमेवं वर्तते–

---

सिद्धेश्वर शिवाचार्य एवम् ११०वें पीठाधीश्वर श्री जगद्गुरु मरुलाराध्ये शिवाचार्य विराजमान हैं।

### ३. एकोरामाराध्य

द्राक्षारामक्षेत्र के रामनाथलिङ्ग से प्रादुर्भूत एकोरामाराध्य आचार्य ने उत्तरप्रदेश के केदारेश्वर के समीप एक पीठ की स्थापना की थी। यह ''केदारपीठ'' कहलाता है। इसके अधिपति एकोरामाराध्य आचार्य ने ही ''भृङ्गिगोत्र'' एवम् ''लम्बनसूत्र'' ग्रन्थों का प्रवर्तन किया था। इसकी घण्टाकर्ण (शङ्कुकर्ण) शाखा है तथा सिंहासन-**वैराग्य सिंहासन** कहलाता है। इस समय यह सिंहासन ओखीमठ-नाम से प्रख्यात है।

जनमेजय महाराजा ने अपने माता-पिता को शिवलोक की प्राप्ति हेतु सूर्यग्रहण-पर्वकाल में तत्कालीन वैराग्यसिंहासनाधीश्वर आनन्दलिङ्ग जङ्गमाचार्य को दानस्वरूप केदारक्षेत्र प्रदान किया था। यह क्षेत्र मन्दाकिनी, क्षीरगङ्गा तथा सरस्वती नदियों की त्रिवेणी के संगमक्षेत्र के मध्य में स्थित है। जिस ताम्रपत्र में इस दान का उल्लेख किया गया है वह आज भी ओखीमठ में सुरक्षित है।

---

२. द्र० तत्रैव १।४०-४३; हिन्दुत्व, पृ० ६९५-६९६.

।।श्रीकेदारेश्वराय नमः।।

स्वस्ति श्रीजयाभ्युदये युधिष्ठिरशके प्लवङ्गाख्ये एकोननवतिवत्सरे सहसि मासि अमावास्यायां सोमवासरे श्रीमन्तो महाराजाधिराजपरमेश्वर-वैयाघ्रपद-गोत्रजश्रीजनमेजयभूपा इन्द्रप्रस्थनगरीसिंहासनस्थाः सकलवर्णाश्रमधर्मपरिपालका उत्तरहिमालये श्रीकेदारक्षेत्रे तत्रत्यमुनिरुषामठस्य श्रीगोस्वामि-आनन्दलिङ्गजङ्गमः श्रीमच्छिष्यज्ञानलिङ्गजङ्गमद्वारा आराधित-श्रीकेदारनाथस्य पूजार्थं चतुस्सीमा-परिमितिक्रमः। पूर्वभागे दक्षिणवाहिनी मन्दाकिनी, पश्चिमदक्षिणभागे क्षीरगङ्गा, उत्तरपश्चिमे मधुगङ्गा, पूर्वोत्तरभागे स्वर्गद्वारनदी, दक्षिणे सरस्वतीमन्दाकिन्योः संगमः। एतन्मध्ये श्रीकेदारक्षेत्रम्। भवच्छिष्यपरम्परया चन्द्रार्कपर्यन्तं निधिनिक्षेपजल-पाषाणा-गामिसिद्धसाद्ध्यतेजःस्वाम्यसहितं स्वबुद्ध्यानु-कूल्येनास्मन्मातृपितृणां शिवलोकप्राप्त्यर्थं श्रीकेदारेश्वरसन्निधावुपरागसमये सहिरण्यमन्दाकिनीजलधारा-पूर्वकं क्षेत्रमिदं हस्ते दत्तवानस्मि। एतद्धर्मसाधनस्य साक्षिणः-

---

।। श्रीकेदारेश्वर शिव को नमस्कार अर्पित हो ।।

स्वस्ति श्रीजयाभ्युदय युधिष्ठिर शक के प्लवङ्ग नामक ८९वत्सर के सहसमास की अमावस्या तिथि तदनुसार सोमवार को श्रीमान् महाराजाधिराज परमेश्वर वैयाघ्रपद-गोत्रोत्पन्न श्रीजनमेजय दानदाता नृप हैं। ये नृप इन्द्रप्रस्थनगरी के सिंहासन पर स्थित हैं तथा सकल वर्णाश्रम-धर्म के परिपालक हैं। दानग्रहण कर्ता श्री गोस्वामी आनन्दलिङ्ग जङ्गम हैं। वह उत्तरहिमालय द्वारा आराधित श्रीकेदारक्षेत्र में उषामठ के मुनि हैं। शिष्यज्ञानलिङ्गजङ्गम द्वारा आराधित श्रीकेदारनाथ की पूजा हेतु दान में दी जाने वाली वस्तु केदारक्षेत्र की चतुर्दिक् सीमा इस प्रकार है— पूर्वभाग में दक्षिणवाहिनी मन्दाकिनी है, पश्चिम-दक्षिण भाग में क्षीरगङ्गा है, उत्तर-पश्चिम में मधुगंगा है, पूर्वोत्तरभाग में स्वर्गद्वार नदी है तथा दक्षिण में सरस्वती और मन्दाकिनी का संगम है। उपर्युक्त सीमा के अन्तर्गत केदार क्षेत्र स्थित है। इस क्षेत्र को राजा ने आनन्दलिङ्ग जङ्गम मुनि को सुवर्ण एवं मन्दाकिनी की जलधारा से संकल्प कर सूर्य के राहूपराग (ग्रहण) वेला में दानस्वरूप दे दिया। इस दान को राजा जनमेजय ने स्वबुद्धि से आनुकूल्य की स्थिति में अपनी मातृपितृ-पूर्वजों की शिवलोक प्राप्ति के उद्देश्य से दिया था। उल्लेख में स्पष्ट कहा गया है कि श्रीकेदारेश्वर प्रभु की सन्निधि में मुनि की शिष्यपरम्परा से यावत् चन्द्रदिवाकर पर्यन्त निधिनिक्षेप प्रभृति तेजः स्वाम्यसहित केदारक्षेत्र दान में दिया गया है। इस धर्म-कृत्य के साक्षी का भी उल्लेख श्लोकोपस्थापन द्वारा

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानन्ति नरस्य वृत्तम्।।
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।
दानात्स्वर्गमवाप्नोति पालनाद्द्विगुणं फलम्।।
स्वदत्ताद् द्विगुणं पुण्यं परदत्तानुपालने।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत्।।
स्वदत्ता पुत्रिका ज्ञेया पितृदत्ता सहोदरा।
अन्यदत्ता तु जननी दत्तभूमिं परित्यजेत्।।
अन्यैस्तु छर्दितं भुङ्क्ते स्वार्थैश्च छर्दितं न तु।
ततः कष्टस्ततो नीचः स्वयं दत्तापहारकः।।
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः।।इति।।६।।

---

किया गया है। तद्यथा— सूर्य, चन्द्र, वायु, अग्नि, द्युलोक, भूलोक, जल, हृदय, यम, दिवस, रात्रि, दोनों सन्ध्याकाल एवं धर्म प्राणियों के शुभाशुभ कर्म के साक्षी होते हैं।।१।।

दान देना तथा दान में लिये धन का सम्यक् पालन इन दोनों में दान की अपेक्षया पालन को अधिक फलदायी माना जाता है। दान से स्वर्गप्राप्ति होती है पर, पालन से द्विगुणित फल-प्राप्ति होती है।।२।।

स्वदत्त से द्विगुण पुण्य परदत्तानुपालन में होता है। परदत्तापहार से स्वदत्त भी निष्फल हो जाता है।।३।।

जिस भूमि का दान स्वयं करे उसे अपनी पुत्री समझना चाहिये। पिता के द्वारा दी गई भूमि को अपनी बहन समझना चाहिये तथा अन्य द्वारा दी गई दान भूमि को अपनी माँ समझना चाहिये। इस प्रकार प्रदत्तभूमि का सर्वथा परित्याग ही करना चाहिये।।४।।

अन्य छर्दित भोग एवं स्वार्थ छर्दित भोग से भी नीच कर्म एवम् अधिक कष्टदायी कर्म है दान में दी हुई वस्तु का अपहरण कर लेना ।।५।।

स्वदत्त अथवा परदत्त ब्रह्मवृत्ति का अपहरण करने वाला व्यक्ति साठ हजार वर्षों तक विष्ठा का कीड़ा बनकर दुःख भोगता है।।६।।

एतद्दानपत्रप्रमाणेन ओखीमठः (उषामठः) पञ्चसहस्रवर्षप्राचीन इत्यैतिहासिका अभ्युपगच्छन्ति[१]। एतत्पीठपरम्परायामधुना ३२३ तमपीठाधीश्वरत्वेन "रावल्"श्रीजगद्गुरुः सिद्धेश्वरलिङ्गशिवाचार्यो धर्माधिकारी विराजतेतराम्।

(४) **पण्डिताराध्यः**–आन्ध्रप्रदेशे श्रीशैलक्षेत्रीयमल्लिकार्जुनाख्यज्योतिर्लिङ्गात् श्रीपण्डिताराध्यः प्रादुर्बभूव। अयं श्रीशैलक्षेत्र एव पीठमेकं संस्थापयामास। तदधुना 'सूर्यसिंहासनपीठम्' इति नाम्ना प्रख्यातमस्ति। सूर्यसिंहासनाधिपतिरयं श्रीपण्डिताराध्यो वृषभगोत्रस्य, मुक्तागुच्छसूत्रस्य च प्रवर्तकः। अस्य धेनुकर्णशाखा, सिंहासनं च सूर्यसिंहासनमित्याख्यायते[१]। एतत्पीठपरम्परायामधुना श्रीजगद्गुरु–उमापतिपण्डिताराध्यो विराजते।

(५) **श्रीविश्वाराध्यः**– श्रीकाशीक्षेत्रस्य विश्वनाथाख्यज्योतिर्लिङ्गात् श्रीविश्वाराध्यः प्रादुर्बभूव। तथाऽयं धर्मप्रचारार्थं काश्यामेव पीठमेकं

---

इस दान पत्र के साक्ष्य से ओखीमठ (उषामठ) की प्राचीनता ५ हजार वर्ष से कम नहीं है ऐसा ऐतिहासिकों का कहना है। सम्प्रति (ग्रन्थ लेखन काल में) इस पीठ परम्परा के ३२३वें पीठाधीश्वर "रावल" श्री जगद्गुरु सिद्धेश्वरलिङ्ग शिवाचार्य धर्माधिकारी विराजमान हैं।

**४. पण्डिताराध्य**

आन्ध्रप्रदेश में श्रीशैल क्षेत्र के मल्लिकार्जुन ज्योतिर्लिङ्ग से श्रीपण्डिताराध्य का प्रादुर्भाव हुआ था। इन्होंने श्रीशैल क्षेत्र में ही एकपीठ की स्थापना की थी। वह पीठ सम्प्रति **सूर्यसिंहासनपीठ** नाम से विख्यात है। इस पीठ के अधिपति श्रीपति पण्डिताराध्य ने **वृषभगोत्र** एवम् **मुक्तागुच्छसूत्र**-ग्रन्थों का प्रवर्तन किया था। इनकी धेनुकर्णशाखा है तथा इनका सिंहासन सूर्यसिंहासन कहलाता है। इस पीठ-परम्परा के ग्रन्थलेखनकाल में श्रीउमापतिराम पण्डिताराध्य जगद्गुरु विराजमान हैं।

**५. विश्वारारध्य**

श्रीकाशीक्षेत्र के श्रीविश्वनाथ-ज्योतिर्लिङ्ग से श्रीविश्वाराध्य आचार्य का प्रादुर्भाव हुआ था। इन्होंने धर्म-प्रचार हेतु काशी में ही एक पीठ की स्थापना की थी। यह

---

१. द्र० हिन्दुत्व (रामदास गौड), पृ० ६९५–६९६.
१. द्र० वी० स० सं० १।४७–५०.

संस्थापयामास। तद् ज्ञानपीठमिति कथ्यते। अधुना तदेव 'जङ्गमवाडीमठ' इति नाम्ना प्रसिद्धमस्ति। श्रीविश्वाराध्यः स्कन्दगोत्रस्य, पञ्चवर्णसूत्रस्य च प्रवर्तकः। अस्य विश्वकर्णशाखा, सिंहासनं च ज्ञानसिंहासनमित्यभिधीयते काशीस्थमिदं जङ्गमवाडीमठमपि बहुप्राचीनं वर्तते। काशीनरेशस्य जयनन्ददेवस्य दानपत्रेणेदं चतुरधिकैकसहस्रवर्षप्राचीनमित्यैतिहासिकाः प्रमाणितवन्तः। हिन्दीभाषामयस्य श्रीजयनन्ददेवप्रदत्तदानपत्रस्य संस्कृतानुवाद एवं वर्तते–

**।।श्रीगणेशाय नमः।।**

**श्रीविश्वेश्वरः**

'स्वस्ति श्रीमहाराजाधिराजश्रीमहाराजजयनन्ददेवकाशीनरेशादेशात् श्रीविश्वाराध्यसिंहासनस्य मल्लिकार्जुनजङ्गमशिवयोगिभ्यः प्रदत्तमिदं भूदानशासनम्। कर्दमेश्वरमहादेवगङ्गानद्योर्मध्ये गोसञ्चरद्वनमध्ये शिवप्रीत्यर्थं प्रदत्तम्। भूमेश्चतुर्दिक्प्रमाणं पूर्वपश्चिमदिशोः अष्टशतपरग (८००) परिमाणम्, उत्तरदक्षिणदिशोः अष्टशतपरग (८००) परिमाणम्। एतत्परिमाणयुतभूमौ

---

ज्ञानपीठ के नाम से सुविदित है। सम्प्रति जङ्गमवाडीमठ नाम से इसकी प्रसिद्धि है। आचार्य श्रीविश्वाराध्य ने **स्कन्दगोत्र** एवम् **पञ्चवर्णसूत्र** ग्रन्थों की प्रवर्तना की थी। इसकी शाखा को विश्वकर्ण शाखा तथा सिंहासन को ज्ञानसिंहासन कहा जाता है। काशी स्थित यह जङ्गमवाडी मठ भी अति प्राचीन है। काशी नरेश श्रीजयनन्ददेव के दानपत्र से इस मठ की प्राचीनता १००४ वर्षों की प्रतीत होती है। यह इतिहास वेत्ता का कहना है। श्रीजयनन्ददेव प्रदत्त दानपत्र हिन्दीभाषा में उल्लिखित है। इसका संस्कृतानुवाद ग्रन्थ लेखक ने निम्नाङ्कित रूप में किया है।

।। श्री गणेश को नमस्कार अर्पित हो ।।

।। श्रीविश्वेश्वर बिजयशील हैं ।।

स्वस्ति श्री महाराजाधिराज श्रीमहाराज जयनन्ददेव काशीनरेश के आदेश से श्री विश्वाराध्य सिंहासन के मल्लिकार्जुन जङ्गमशिवयोगी को प्रदत्त भूदान शासन पत्र। कर्दमेश्वर महादेव एवं गङ्गानदी के मध्य में चरती विचरती हुई गो से युक्त वन के मध्य में स्थित भूभाग को शिवप्रीति हेतु प्रदत्त किया गया। दान में दिये गये का चार दिशाओं में कितना परिमाण है? पूर्व से पश्चिम ८०० परग परिमाण हैं एवम् उत्तर से दक्षिण दिशा में भी ८०० परग परिमाण है। इतनी नापकी भूमि में जो

यदुत्पद्यते, तत्सर्वं मल्लिकार्जुनजङ्गमसाम्प्रदायिकाः सर्वदाऽनुभवन्तु। एतद्भूमौ यः पातयेन्मन्ददृष्टिं सोऽवश्यं नश्येत्।

स्वदत्तां परदत्तां वा यो हरेत्पृथिवीमिमाम्।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः।।१।।

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानन्ति नरस्य वृत्तम्।।२।।

दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।
दानात् स्वर्गमवाप्नोति पालनादद्भुतं पदम्।।३।।

स्वदत्ताद् द्विगुणं पुण्यं परदत्तानुपालनम्।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत्।।४।।

विक्रमाब्दीयैकत्रिंशदधिकषट्शत (६३१) संख्यान्वितकार्तिकशुद्ध-देवोत्थानैकादश्यां तिथौ (११)।

एकत्रिंशदधिकषट्शतसंख्यायुताब्दे (६३१) जयनन्ददेवकाशीनरेशेन दत्तदानशासनस्याविकलप्रतिलिपिरियं वर्तते। अस्माभिरवलोकितं शासनम्। तदतिजीर्णीभूतमित्येतत्ताम्रफलके लिखितम्। द्व्यशीत्यधिकैकोनविंशतिशत- (१९८२)

---

उपजता है वह सब आय धन, मल्लिकार्जुन जङ्गम सम्प्रदाय के लोगों के स्वामित्व के अधीन होगा। इस भूमि पर लोभ की दृष्टि से कोई व्यक्ति यदि अपनी मन्ददृष्टि डालेगा वह अवश्य नष्ट हो जायेगा।

स्वदत्तां......................जायते कृमिः ।।१।।

आदित्यचन्द्रावनिलोडनलश्च.................नरस्य वृत्तम् ।।२।।

दानपालनयोर्मध्ये...................पालनादद्भुतं पदम् ।।३।।

स्वदत्ताद्.......................निष्फलं भवेत् ।।४।।

यह दान पत्र वि. सं. ६३१ कार्तिकशुद्ध देवोत्थान एकादशी तिथि में लिखा गया है। ६३१ वि.सं. में काशीनरेश श्रीजयनन्ददेव के द्वारा प्रदत्त दानशासन पत्र की अविकल प्रतिलिपि है। हमने अपने पूर्वज के उक्त दानपत्र शासन का अवलोकन कर लिया है। वह पत्र अत्यन्तजीर्ण हो गया है अत: उस उल्लेख को ताम्रफलक पर लिखा गया है। १९८२ वि. सं. आषाढ़ शुक्ल अष्टमी तिथि में यह लिखा

संख्यान्विताब्दाषाढशुद्धाष्टम्यां (८) तिथौ लिखितमिदम्। 'प्रभुनारायणसिंहः काशीराजः[१]।' इति।

अत्रेदमवधेयम्—श्रीजयनन्ददेवलिखितं कर्गजदानपत्रमतीव जीर्णमिति कृत्वा तद्वंशीयः प्रभुनारायणसिंहस्तद्दानपत्रमेव ताम्रपत्रे पुनर्विलिख्य प्रदत्तवान्। ते उभे अपि दानपत्रे जङ्गमवाडीमठेऽधुनापि विलसतः। एतदतिरिक्तं हुमायूँ–अकबर–जहाँगीर–शाहजहाँ–औरङ्गजेबप्रभृतीनां यवनराजानामपि दानपत्राणि मठेऽस्मिन् उपलभ्यन्ते। एतत्पीठपरम्परायामधुना ८५ तमपीठाधीश्वरत्वेन श्रीजगद्गुरुर्विश्वेश्वर-शिवाचार्यो विराजतेतराम्।

अस्य जङ्गमवाडीमठस्यैव शाखामठो नेपालदेशीयभक्तपुरे (भातगाँव) वर्तते। तत्रापि नेपालनरेशेन ६९२ विक्रमाब्दे प्रदत्तं भूमिदानविषयकशिलाशासनमद्यापि विलसति।

एते च रेवणाराध्य–मरुळाराध्य–एकोरामाराध्य–पण्डिताराध्य–विश्वाराध्याख्या आचार्याः 'पञ्चाचार्याः' इति व्यवह्रियन्ते। एतैरेव पञ्चाचार्यैर्वीरशैवमतं

---

गया है। (तत्कालीन राजा) प्रभुनारायण सिंह काशीराज ।।इति।। (हस्ताक्षर)

यहाँ यह ध्यातव्य है— श्रीजयनन्ददेव लिखित कागज का दानपत्र अत्यन्त जीर्ण हो गया इस कारण उनके वंशज प्रभुनारायण सिंह ने उस दानपत्र को ही ताम्रपत्र में पुनः लिखकर दे दिया। उक्त दोनों दानपत्र जङ्गमवाडीमठ में आज भी विद्यमान है। इसके अतिरिक्त हुमायूँ, अकबर, जहाँगीर, शाहजहाँ तथा औरङ्गजेब प्रभृति यवनराजाओं के दानपत्र भी इस मठ में उपलब्ध हैं। इस पीठ की परम्परा में सम्प्रति (ग्रन्थलेखन काल में) ८५वें पीठाधीश्वर के रूप में जगद्गुरु श्री डॉ. चन्द्रशेखर शिवाचार्य विराजमान हैं।

इस जंगमवाडीमठ का ही शाखामठ, नेपाल देश के भक्तपुर (भातगाँव) में भी है। वहाँ भी नेपाल-नरेश द्वारा ६९२ विक्रमसंवत् में प्रदत्त भूमिदान का **शिलालेख शासन** आज भी मौजूद है।

उपर्युक्त रेवणाराध्य, मरुलाराध्य, एकोरामाराध्य, पण्डिताराध्य एवम् विश्वाराध्य संज्ञक आचार्य "पञ्चाचार्य" कहलाते हैं। इन पाँच आचार्यों द्वारा वीरशैवमत की स्थापना

---

१. वीरशैवेन्दुशेखरः, पृ० १७१, जंगमवाडीमठप्रकाशनम्, १९३२ ई०।

संस्थापितम्। एभिराचार्यवर्यैः संस्थापितेषु पञ्चपीठेषु वीरशैवमाहेश्वर (जङ्गम) वंशोत्पन्ना एव परम्परया आचार्यपट्टाभिषिक्ता भवन्ति। एत एव वीरशैवानां प्रधाना गुरवः। परम्परागतपञ्चपीठाधिकारिणो महाचार्याः, जगद्गुरव इति च कथ्यन्ते। कर्णाटक-आन्ध्र-महाराष्ट्रप्रदेशेषु प्रतिग्रामं वीरशैवीयमठा विद्यन्ते। ते सर्वे उपर्युक्तपञ्चमहापीठेष्वेकतरस्य शाखानुवर्तिनो भवन्ति[२]।

**श्रीबसवेश्वरस्य धर्मसंस्थापकत्वभ्रमनिरासः**

प्रवादोऽयं श्रूयते यत् ख्रि० द्वादशाब्दीयेन चालुक्यवंशस्य बिज्जलाख्य-महाराजस्य प्रधानमन्त्रिणा श्रीबसवेश्वराख्यमहापुरुषेणेदं वीरशैवमतं संस्थापितमिति। तदयुक्तम्, यतो हि ब्राह्मणवंशोत्पन्नो बसवेश्वरोऽष्टमे वर्षे ब्राह्मणोचितोपनयनसंस्कारं विहाय श्रीकूडलसंगमक्षेत्राधिपतेः श्रीजातवेदमुनिरित्याख्यवीरशैवाचार्यात् वीरशैवोचितेष्टलिङ्गदीक्षां गृहीतवान् इति हि तच्चारित्र्येण परिज्ञायते। एवं

---

की गई है। इन्हीं श्रेष्ठ आचार्यों द्वारा स्थापित पाँचपीठों में वीरशैव माहेश्वर (जङ्गम) वंशोत्पन्न ही परम्परा से आचार्य पद पर पट्टाभिषिक्त होते हैं। ये ही वीरशैव भक्तों के प्रधान गुरु होते हैं। परम्परागत इन पाँच पीठों के अधिपति महाचार्य एवम् जगद्गुरु कहलाते हैं। कर्णाटक, आन्ध्र तथा महाराष्ट्र प्रदेशों के प्रत्येक ग्राम में वीरशैव सम्प्रदाय के मठ विद्यमान हैं। ये मठ भी उपर्युक्त पाँच महापीठों में किसी एक के शाखानुवर्ती होते हैं।

**श्रीबसवेश्वर वीरशैवधर्म के संस्थापक थे—इस भ्रान्ति का निराकरण**

यह प्रवाद सुना जाता है कि ईशा की १२वीं शताब्दी में चालुक्य वंश बिज्जल महाराजा के प्रधानमन्त्री श्री बसवेश्वर महापुरुष ने वीरशैवमत की स्थापना की थी। यह युक्ति-विरुद्ध है। कारण है— ब्राह्मणवंश में उत्पन्न बसवेश्वर ने अष्टम वर्ष में ब्राह्मणोचित उपनयन संस्कार को छोड़कर श्रीकूडल संगमक्षेत्राधिपति श्रीजातवेद मुनि नामक वीरशैवाचार्य से वीरशैवोचित इष्टलिङ्ग-दीक्षा को ग्रहण किया था यह उनके

---

२. वीरशैवधर्मसंस्थापकानां पञ्चाचार्याणां सुविस्तृतमैतिह्यं "वीरशैवपञ्च-पीठपरम्परे" नामके कन्नडभाषामये ग्रन्थेऽस्माभिः प्रतिपादितं वर्तते।
स च ख्रि० १९८८ तमेऽब्दे "श्रीचन्नचेतनप्रकाशनम्" (बृहच्छिलामठ, होन्नाली, कर्नाटक) इत्याख्यया प्रकाशनसंस्थया प्रकाशितोऽस्ति। कन्नडभाषाभिज्ञैर्जिज्ञासुभिरवश्यमवलोकनीयः।

श्रीबसवेश्वरो वीरशैवधर्मे दीक्षित इति कृत्वाऽयं धर्मस्ततोऽपि प्राचीन इति सहजतयैव विज्ञायते।

इदं तु निश्चितरूपेण वक्तुं शक्यते यद् वीरशैवधर्मे दीक्षितोऽयं श्रीबसवेश्वरोऽस्य धर्मस्य पुनरुज्जीवनं कृतवान् इति। यथाऽद्वैतवेदान्तस्य भगवत्पादशङ्कराचार्यात्प्राग्विद्यमानत्वेऽपि पूज्यपादैरेवास्याधिकः प्रचारः सञ्जात इति श्रीशङ्करभगवत्पादा अद्वैतमतसंस्थापनाचार्या इति स्वीक्रियन्ते, तथा श्रीबसवेश्वरादस्य वीरशैवधर्मस्याधिकः प्रचारो जात इति तस्य धर्मसंस्थापकत्वेन व्यवहारः प्रचलितः। किन्त्वयं वादोऽर्थवादमात्रम्।

आधुनिकैतिहासज्ञा दार्शनिकाश्च श्रीबसवेश्वरस्य वीरशैवधर्मप्रचारकत्वमेव प्रतिपादयन्ति, न तु संस्थापकत्वम्। तथाहि डॉ० कान्तिचन्द्रपाण्डेयमहोदयाः कथयन्ति यद् वीरशैवमतानुयायिनो बसवेश्वरस्य वीरशैवमतस्थापकत्वं न स्वीकुर्वन्ति, तं तस्य पुनरुज्जीवकमेव मन्यन्ते। इदं मतं समीचीनमेव प्रतिभाति। यतो हि राजशेखरः स्वीयषड्दर्शनसमुच्चये केचन शैवमतानुयायिनः

---

चरित्र से ज्ञात होता है। एतावता श्री बसवेश्वर वीरशैवधर्म में दीक्षित हुए इतनी बात से ही यह स्वतःसिद्ध होता है—यह धर्म उससे पूर्व से ही विद्यमान था तभी तो इस धर्म में उसने दीक्षा ग्रहण की थी।

यह तो निश्चितरूप से कहा जा सकता है कि वीरशैवधर्म में दीक्षित यह श्रीबसवेश्वर, इस धर्म का पुनरुज्जीवन किये थे। यथा अद्वैतवेदान्त भगवत्पाद शङ्कराचार्य से पूर्व काल में भी विद्यमान था। इसका अधिक प्रचार-प्रसार पूज्य भगवत्पाद के द्वारा किया गया अतः श्रीशंकराचार्य को अद्वैत मत का संस्थापक आचार्य माना जाता है। तद्वत् श्रीबसवेश्वर महोदय द्वारा इस वीरशैव धर्म का अधिक प्रचार हुआ अत एव इन्हें इस धर्म का संस्थापक आचार्य कहा जाने लगा। दृष्टान्त के आधार पर इस कथन को अर्थवादवाक्य के रूप में स्वीकार किया जा सकता है।

आधुनिक इतिहासवित् एवं दार्शनिक विद्वद्-गण श्रीबसवेश्वर को वीरशैवधर्म का प्रचारक ही मानते हैं, संस्थापक नहीं। उदाहरणार्थ डॉ. कान्तिचन्द्र पाण्डेय महोदय का कथन है— वीरशैवमतानुयायी लोग बसवेश्वर को वीरशैवमत का संस्थापक नहीं मानते हैं प्रत्युत पुनरुज्जीवक मानते हैं। पाण्डेय महोदय का यह मत सर्वथा उपयुक्त (सही) प्रतीत होता है। क्योंकि राजशेखर ने अपनी रचना "षड्दर्शन समुच्चय"

प्राणलिङ्गानि धारयन्ति स्मेति कथयति। श्रीपतिपण्डितश्च श्रीकरभाष्ये प्राणलिङ्गधारणं सदानन्दोपनिषदि सामजैगीषीयशाखीयायामामप्युक्तमिति प्रकटयति। अस्य रेणुक-दारुक-एकोराम-पण्डिताराध्य-विश्वाराध्यनामकाः प्रसिद्धाचार्या इतीदं पञ्चाचार्यमतमित्यपि प्रसिद्धम्[१] इति।

डॉ० यदुवंशीमहाभागाः कथयन्ति-"दक्षिण में एक नये सम्प्रदाय का भी प्रादुर्भाव हुआ, जिसका आगे चलकर बड़ा महत्व हुआ। यह था 'लिङ्गायत' अथवा 'वीरशैव' सम्प्रदाय। इस सम्प्रदाय का जन्म कब और कैसे हुआ और इसका संस्थापक कौन था, यह अभी तक विवादास्पद विषय है। परन्तु एक बात तो निश्चित है कि प्रख्यात 'बसव' इस सम्प्रदाय के जन्मदाता नहीं थे; यद्यपि उन्होंने इसको बहुत सहायता दी[२]" इति।

श्री के० ए० नीलकण्ठशास्त्रिमहाभागाः- "Lingāyat tradition avers that the sect is very old and was founded by five ascetics–Ekorāma, Panditaradhya, Revana, Marula and Vishvārādhya who were held to have sprung from the five heads of Śiva. Basava, they say, was but the reviver of the faith."[3] इत्येवं वीरशैवमतस्य प्राचीनत्वम्, तस्य च शिवस्य पञ्चमुखोद्भूतैरेकोराम-पण्डिताराध्य-रेवणमरुळ-विश्वाराध्याख्यैः पञ्चाचार्यैः संस्थापितत्वं

---

में स्पष्टतया कहा है— कतिपय शैवमतानुयायी लोग प्राणलिङ्गों का धारण करते थे। श्रीपतिपण्डित महोदय ने भी श्रीकरभाष्य में उल्लेख किया है कि सदानन्दोपनिषद् की सामजैगिषीय शाखा में प्राणलिङ्गधारण प्रोक्त है। वीरशैवमत के पाँच प्रसिद्ध आचार्य हैं— रेणुक, दारुक, एकोराम, पण्डिताराध्य एवम् विश्वाराध्य। अतएव यह पञ्चाचार्यमत नाम से भी प्रसिद्ध है।

डॉ. यदुवंशी महोदय ने अपने **शैवमत** ग्रन्थ में हिन्दीभाषामाध्यम से यह बताया है कि— "दक्षिण (भारत) में एक नये ....... बहुत सहायता दी।

श्री के. ए. नीलकण्ठ शास्त्री महोदय ने अंग्रेजी भाषा माध्यम से यदुवंशी जी के जिज्ञासात्मक कथन का समाधान प्रस्तुत किया है— ........आशय यह है— वीरशैमत प्राचीन हैं। इसके संस्थापक पाँच आचार्य हैं— एकोराम, पण्डिताराध्य,

---

१. सारस्वती सुषमा, १५ व०, १-४ अङ्काः।
२. शैवमत, पृ० १५८-१५९, बिहार राष्ट्रभाषा, पटना १९५५ ई०।
3. A History of South India, p. 435. Oxford University Press, 1966.

प्रतिपाद्य, श्रीबसवेश्वरस्य च पुनरुज्जीवकत्वं प्रतिपादयामासुः।

डॉ० एस्० सी नन्दीमठमहोदयाः—"The darkness surrounding the early history of the sect has led almost all scholars (Dr. Bhandārkar excepted) to conclude that it was founded by Basava, the minister of Kalacuri King Bijjala (1122-1167 A.D.). However, this is far from the truth, for none of the books on Vīraśaivism, either in Kannada or in Sanskrit, ascribe the foundation of the sect to Basava."[1]

अर्थात् "डॉ० भाण्डारकरव्यतिरिक्ताः प्रायः सर्वेऽपि संशोधकाः कलचूरिबिज्जलभूपतेः प्रधानमन्त्रिणा बसवेश्वरेण वीरशैवधर्मः संस्थापित इति प्रतिपादितवन्तः, तन्न सत्यम्, यतो हि कन्नडसंस्कृतभाषामयेषु वीरशैवधर्मग्रन्थेषु कुत्रापि 'बसवेश्वरो धर्मसंस्थापकः' इति नोल्लिखितम्" इति बसवेश्वरस्य धर्मसंस्थापकत्वं निराकृतवन्तः।

मि० इ० थर्स्टननामकः प्रसिद्ध इतिहाससंशोधकः—"The five great Gotrakārās established five great religious centres in different parts of India, viz., Ekorama at Kedara in the Himālayās, Viswacharya at Benaras, Marulāchārya at Ujjain, Panditāchārya at Sriśaila in Cuddapah district, and

---

रेवण, मरुल एवं विश्वाराध्य। इन पाँच आचार्यों की उत्पत्ति, भगवान् शिव के पाँच मुखों से हुई थी। श्री बसवेश्वर महानुभाव ने इस धर्म का पुनरुज्जीवन किया है।

डा. एस. सी. नन्दीमठ महोदय ने अपनी रचना में अंग्रेजी भाषा माध्यम से स्वाभिमत का प्रतिपादन किया है। तदनुसार डॉ. भाण्डारकर से अतिरिक्त प्रायशः सभी संशोधकों ने जो यह स्वीकार किया है— कलचूरि बिज्जल राजा के प्रधानमन्त्री बसवेश्वर ने वीरशैवधर्म की स्थापना की थी— यह सत्य नहीं है क्योंकि कन्नड़ एवं संस्कृतभाषा के वीरशैवधर्म-ग्रन्थों में कहीं भी यह उल्लेख नहीं है— बसवेश्वर वीरशैवधर्म के संस्थापक थे। इस प्रकार नन्दीमठ महोदय ने बसवेश्वर के धर्म-संस्थापक होने का निराकरण किया है।

प्रसिद्ध इतिहासशोधक मि. इ. थर्स्टन ने वीरशैवमत के सन्दर्भ में अंग्रेजी भाषा- माध्यम से स्वाभिमत प्रतिपादित किया है। तदनुसार वीरशैव पञ्चगोत्र के प्रवर्तक पाँच आचार्यों ने भारत के विभिन्न प्रदेशों में पाँच महामठों की स्थापना की थी। उनमें आचार्य एकोराम ने हिमालय के केदारक्षेत्र में, विश्वाचार्य ने काशी में, मरुलाचार्य ने उज्जैन में, पण्डिताचार्य ने श्रीशैल में तथा रेणुकाचार्य ने मैसूर प्रदेश के बालेहोन्नूर

---

3. A Handbook of Virasaivism, P. 2. Motilal Banarasidas, 1979.

Reṇukachārya at Balehalli or Balehonnur in Koppa taluk (of Mysore), at all of which places the mutts still exist."[1] इति।

अर्थाद् वीरशैवपञ्चगोत्रप्रवर्तकाः पञ्चाचार्या भारतस्य विभिन्नप्रदेशेषु पञ्चमहामठान् संस्थापयामासुः। तेषु एकोरामो हिमालयस्य केदारक्षेत्रे, विश्वाचार्यः काश्याम्, मरुळाचार्य उज्जयिन्याम्, पण्डिताचार्यः श्रीशैले, रेणुकाचार्यश्च मैसूरप्रान्ते बालेहोन्नरग्रामे मठं प्रतिष्ठापयामास। एते पञ्चमठा अधुनापि विद्यन्त इति वीरशैवधर्मस्य प्राचीनत्वं सूचयामास।

डॉ० जे० एन्० फर्क्युहरमहोदयः–"The Traditon is tha the sect was founded by five ascetics–Ekorāma, Panditāradhya, Revaṇa, Marula, Vishwaradhya who are held to have sprung from the five heads of Śiva, incarnate age after age. These are regarded as very ancient and Basava is said to have been but the reviver of the faith"[२]इति।

अर्थात् "प्रतियुगं शिवस्य पञ्चमुखोद्भूता एकोराम-पण्डिताराध्य-रेवण-मरुळ-विश्वाराध्याः पञ्च यतय इदं धर्मं प्रतिष्ठापयामासुः। एते चातीव प्राचीनाः। बसवेश्वरस्तु पुनरुज्जीवकः" इत्युपर्युक्तैः पञ्चाचार्यैरेव वीरशैवधर्मस्य संस्थापितत्वं समर्थयामास।

तदेवमैतिहासिकानां मतावलोकनेन श्रीजगद्गुरुरेणुकादिपञ्चाचार्या एव

---

ग्राम में मठ को प्रतिष्ठापित किया था। ये पाँच मठ आज भी विद्यमान हैं। इस प्रकार इन्होंने वीरशैवधर्म की प्राचीनता की सूचना दृढ़ता से दी है।

डॉ. जे. एन. फर्क्युहर महोदय ने अपनी सम्बद्ध समीक्षा अंग्रेजीभाषा माध्यम से की है। तदनुसार प्रत्येक युग में शिव के मुख से उद्भूत एकोराम प्रभृति पाँच आचार्य यति महानुभावों द्वारा वीरशैवधर्म की प्रतिष्ठापना की जाती है। अतः इस धर्म के प्रतिष्ठापक आचार्य अतीव प्राचीन हैं। बसवेश्वर तो इस धर्म के पुनरुज्जीवक हैं। इस समीक्षा के आलोक में वीरशैवधर्म के संस्थापक रूप में उपर्युक्त आचार्यों को ही समर्थन दिया गया है।

इस प्रकार उपर्युक्त ऐतिहासिकों के मतों का अवलोकन करने से यह निष्कर्ष प्राप्त होता है— जगद्गुरु श्रीरेणुकाचार्य-प्रभृति पाँच आचार्य ही वीरशैवधर्म के संस्थापक थे तथा महात्मा बसवेश्वर इस धर्म के पुनरुज्जीवक मात्र है। वीरशैवधर्म

---

1. Castes and Tribes of Southern India, pp. 264-265. Government Press, Madras, 1909.
2. An Outline of the Religious Literature of India, p. 260, Oxford University Press, Bombay, 1920.

वीरशैवधर्मस्य संस्थापकाः, महात्मा बसवेश्वरस्तु पुनरुज्जीवक एवेति निश्चीयते। पञ्चाचार्याणां वीरशैवधर्मसंस्थापकत्वविषयकप्रमाणानामितोऽपि विस्तरः कलियुगव्यासेतिप्रख्यातै रायचूरचन्द्रशेखरशास्त्रिमहाभागैः कृते "श्रीजगद्गुरुपञ्चाचार्यरि वीरशैवमतस्थापकरु[1]" इत्याख्ये कन्नडग्रन्थे जिज्ञासुभिरवलोकनीयः।

**वीरशैवसाहित्यं तत्प्रणेतारश्च**

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्[2]।।

इति रेणुकभगवत्पादोक्त्या शिवोपदिष्टानां कामिकादिवातुलान्तानां शैवागमानामुत्तरभाग एव वीरशैवदर्शनस्य प्रधानं स्रोतो वर्तते। अतस्तदनुरुध्यैवावशिष्टस्य साहित्यस्य प्रादुर्भावो जातः।

वीरशैवधर्मसंस्थापकेषु पञ्चाचार्येषु रेवणसिद्ध-मरुळसिद्ध-एकोरामभगवत्पादाचार्या वेदानां उपनिषदां च वीरशैवसिद्धान्तपरत्वेन भाष्याणि कृतवन्त इति श्रीकरभाष्यादवगम्यते[3]; किन्तु तानि भाष्याण्यधुना नोपलभ्यन्ते।

---

के संस्थापक पाँच आचार्य थे— इस सन्दर्भ में विस्तृत रूप से प्रमाणों की विवेचना कन्नड़ग्रन्थ— "श्रीजगद्गुरु पञ्चाचार्यरि वीरशैवमतस्थापकरू" में की गई है। इसकी रचना रायचूर चन्द्रशेखर शास्त्रीजी ने की थी जिन्हें कलियुग का व्यास बताया जाता है। जिज्ञासुजन को इस ग्रन्थ का अवलोकन करना चाहिये।

**वीरशैवसाहित्य एवम् उसके रचनाकार**

कामिकागम-प्रभृति शिवप्रोक्त सिद्धान्तसंज्ञक तन्त्रों के उत्तरभाग में उत्कृष्ट वीरशैवमत निर्दिष्ट है— यह उक्ति आचार्य रेणुक भगवत्पाद की है। तदनुसार शिवोपदिष्ट कामिक से वातुल पर्यन्त शैवागमों का उत्तरभाग, वीरशैवदर्शन का प्रधान स्रोत है। अतः तदनुरोधेन अवशिष्ट वीरशैव साहित्य की रचना मानी जाती है।

श्रीकरभाष्य के अवलोकन से विदित होता है कि संस्थापक पाँच आचार्यों में तीन आचार्य ऐसे हैं जिन्होंने वेदों एवम् उपनिषदों के वीरशैवसिद्धान्त परक भाष्यों की रचना की थी। इनके नाम हैं— रेवणसिद्ध, मरुलसिद्ध तथा एकोरामभगवत्पाद। किन्तु सम्प्रति वे भाष्य उपलब्ध नहीं है।

१. ग्रन्थोऽयं 'गिरिजा प्रिन्टर्स रायचूर' इत्यत्र ख्रि० १९७१ तमाब्दे प्रकाशितः।
२. सि० शि० ५।१४, पृ० ५७.
३. द्र० ब्र० सू० श्रीकरभाष्यम्, १।१।१; ३।३।४; ३।३।४०.

**अगस्त्यमुनिः**

**अगस्त्यमुनिचन्द्रेण कृतां वैयासिकीं शुभाम्।**
**सूत्रवृत्तिं समालोक्य कृतं भाष्यं शिवङ्करम्**[१]**।।**

इति श्रीपतिपण्डिताराध्यवचनेन अगस्त्यमुनिकृता वीरशैवदर्शनपरा ब्रह्मसूत्रवृत्तिरासीदिति ज्ञायते। इयं च लघुसूत्रवृत्तिरिति नाम्ना प्रसिद्धाऽऽसीत्। अस्याः प्रतिकृतिरेका कुम्भकोणनगरे वर्तत इति श्रूयते[२]।

**श्रीशिवयोगिशिवाचार्यः**–'ख्रि० अष्टमशताब्दीयोऽयमाचार्यः शैवागमानामाधारेण सिद्धान्तशिखामण्याख्यं पद्यात्मकं ग्रन्थं विरचयामास। उपलभ्यमानेषु वीरशैवदर्शनग्रन्थेष्वयमेव प्राचीनः प्रामाणिकश्च वर्तते।

---

**अगस्त्यमुनि**

ब्रह्मसूत्र श्रीकरभाष्य का मङ्गलश्लोक है— अगस्त्यमुनिचन्द्रेण... इत्यादि। इसका अर्थ है— अगस्त्यमुनि ने व्यासरचित ब्रह्मसूत्र की सुन्दर वृत्ति विरचित की थी— उसका अवगाहन करने के अनन्तर श्रीपति पण्डिताराध्य नें कल्याणकारी श्रीकरभाष्य की रचना की थी।।१।।

श्रीपति पण्डिताराध्य के उपर्युक्त श्लोकवचन से ज्ञात होता है कि अगस्त्यमुनि द्वारा विरचित ब्रह्मसूत्रवृत्ति, श्रीकरभाष्य का उपजीव्य ग्रन्थ थी। यह वीरशैवदर्शनपरक रचना थी। इसकी प्रसिद्धि **लघुसूत्र-वृत्ति** नाम से थी। श्रीकरभाष्यभूमिका के अनुसार इसकी एक प्रति कुम्भकोणनगर में सुरक्षित थी।

**श्रीशिवयोगि शिवाचार्य**

ईसा के अष्टमशताब्दी के सुमहान् इस शिवाचार्य ने शैवागमों पर आधारित सिद्धान्तशिखामणि नामक पद्यात्मक ग्रन्थ की रचना की थी। उपलभ्यमान वीरशैवदर्शन-ग्रन्थों में यही ग्रन्थ प्राचीन होने के साथ प्रामाणिक है। इस ग्रन्थ का विशेष परिचय, सारस्वती सुषमा में प्रकाशित निबन्ध— ''सिद्धान्तशिखामणिसमयसमीक्षा'' (श्री चन्द्रशेखर शिवाचार्य रचित) में अवलोकनीय है। इसी प्रस्तुत ग्रन्थ के द्वितीय परिच्छेद में भी इसका परिचय द्रष्टव्य है।

---

१. ब्र० सू० श्रीकर० मङ्गलश्लो० १७.
२. द्र० श्रीकरभाष्यभूमिका, पृ० ११५, मैसूर O.R.I. प्रकाशनम्, १९७७ ई।

ग्रन्थस्यास्य विशेषपरिचयः "सिद्धान्तशिखामणिसमयसमीक्षा"[१] इत्याख्ये मम निबन्धे, अस्यैव ग्रन्थस्य द्वितीयपरिच्छेदे च द्रष्टव्यः।

**श्रीनीलकण्ठशिवाचार्यः**–वीरशैवाचार्यपरम्परायां द्वौ नीलकण्ठशिवाचार्यौ वर्तेते। तत्राद्यो ब्रह्मसूत्रस्य भाष्यकारः, द्वितीयो भाष्यार्थस्य कारिकारूपेण संग्राहकश्च। भाष्यकारो नीलकण्ठशिवाचार्य आद्यशङ्कराचार्याणां समकालीनः। तयोश्च मिथः शास्त्रार्थः सम्पन्न आसीदिति शङ्करदिग्विजयादवगम्यते[२]।

शक्तिविशिष्टाद्वैतसिद्धान्तप्रतिपादकस्य आद्यनीलकण्ठशिवाचार्यविरचितस्य नीलकण्ठभाष्यस्य काठिन्यपरिहारार्थमाधुनिकनीलकण्ठशिवाचार्या सरलया सुरगिरा कारिकाः विरचयामासुः। तथा ह्युक्तम्–

**मयापि तस्य तात्पर्यं श्रोतृणां सुखबुद्धये।**
**कारिकारूपतः सर्वं क्रमेणैव निबध्यते[३]।।इति।**

कारिकारूपोऽयं ग्रन्थः 'क्रियासार' इति नाम्ना प्रसिद्धोऽस्ति। क्रियासारस्य

---

**श्रीनीलकण्ठ शिवाचार्य**

वीरशैवाचार्यों की परम्परा में नीलकण्ठ शिवाचार्य नाम से दो आचार्य प्राप्त होते हैं। उनमें प्रथम आचार्य, ब्रह्मसूत्र के भाष्यकार हैं तथा द्वितीय आचार्य, भाष्यार्थ के कारिकात्मक संग्रहकार। भाष्यकार नीलकण्ठ शिवाचार्य आद्यशङ्कर भगवत्पाद के समकालिक हैं। शङ्कर दिग्विजय ग्रन्थ से विदित होता है कि उपर्युक्त आचार्यों के मध्य शास्त्रार्थ हुआ था।

आद्यनीलकण्ठ शिवाचार्य द्वारा रचित नीलकण्ठभाष्य में शक्तिविशिष्टाद्वैतसिद्धान्त का प्रतिपादन किया गया है। इसके काठिन्य को दूर करने के लिये द्वितीय नीलकण्ठशिवाचार्य ने सरल संस्कृत शब्दों द्वारा कारिकाओं की रचना की थी। उन्होंने स्वयं कहा है— श्रोतृगण के सुखबोध हेतु मैं नीलकण्ठभाष्य के तात्पर्यार्थ को यथाक्रम कारिकारूप से उपनिबन्धन करता हूँ। कारिकात्मक यह ग्रन्थ "क्रियासार"

---

१. द्र० सारस्वती सुषमा, व० ३४, अं० १-२.

२. इति युक्तिशतैः स नीलकण्ठः कविरक्षोभयदद्वितीयपक्षम्।
निगमान्तवचः प्रकाशमानं कलभः पद्मवनं यथा प्रफुल्लम्।।
(शङ्करदिग्वि० १५।४९)

३. क्रि० सा० १।३३.

रचनाकालः ख्रि० १४०० तमाब्द इति प्रतिपाद्यते। ग्रन्थोऽयं ख्रि० १९५४, ५७, ५८, तमाब्देषु मैसूरनगरस्थितेन प्राच्यविद्यासंशोधनालयेन खण्डत्रयेषु प्रकाशितोऽस्ति।

**श्रीपतिपण्डिताराध्यः**–ख्रि० ११ तमशताब्दीयोऽयमाचार्यः शारीरकसूत्राणां विशेषाद्वैतापरपर्यायं शक्तिविशिष्टाद्वैतसिद्धान्तप्रतिपादकं भाष्यमचीकरत्। इदं च 'श्रीकरभाष्यम्' इति नाम्ना प्रसिद्धमस्ति। ख्रि० १९७७-७८ तमेऽब्दे प्राच्यविद्यासंशोधनालयेन खण्डद्वये प्रकाशितोऽयं ग्रन्थः।

**श्रीमायिदेवः**–ख्रि० १५ तमशताब्दीयोऽयं वीरशैवपण्डिताग्रणीर्बहून् ग्रन्थान् अरचयत्। तेषु अनुभवसूत्राख्यः प्रधानो ग्रन्थः। अयं वातुलतन्त्रानुसारं विनिर्मितो वर्तते। अस्य विशेषार्थप्रकाशिकाख्यो ग्रन्थोऽस्यैवानुभवसूत्रस्योत्तरार्धमिति–

इति पूर्वोत्तरभागद्वयसमुचितमेतदभिहितं विहितम्।
शिवसिद्धान्तं तन्त्रं शिवानुभवसूत्रमत्र सम्पूर्णम्[१]।।

---

नाम से प्रसिद्ध है। क्रियासार का रचनाकाल, ईसा की चौदहवीं शताब्दी है— ऐसा ऐतिह्यविदों का मानना है। यह ग्रन्थ १९५४, ५७, ५८ ई. वर्षों में मैसूर नगर में स्थित प्राच्यविद्या संशोधनालय द्वारा तीन खण्डों में प्रकाशित हुआ है।

**श्रीश्रीपति पण्डिताराध्य**

ईसा की ग्यारहवीं शताब्दी के इस सुमहान् आचार्य द्वारा शारीरक सूत्रों का विशेषाद्वैत अर्थात् शक्तिविशिष्टाद्वैत-सिद्धान्त का प्रतिपादक भाष्य निर्मित हुआ। यह भाष्य "श्रीकरभाष्य" नाम से प्रसिद्ध है। यह भाष्य-ग्रन्थ ईसवीय १९७७-७८ वर्षों में प्राच्यविद्या संशोधनालय द्वारा दो खण्डों में प्रकाशित किया गया।

**श्रीमायिदेव**

ईसा की १५वीं शताब्दी के इस आचार्य ने वीरशैवपण्डितों में अपनी अग्रणी उपस्थिति उपार्जित की थी। इन्होंने बहुत सारे ग्रन्थों की रचना की थी। उनमें प्रधानग्रन्थ है— अनुभवसूत्र। इसकी रचना वातुलतन्त्र पर आधारित है। इसके "**विशेषार्थप्रकाशिका**" नामक ग्रन्थ को अनुभवसूत्र का उत्तरार्द्ध माना जाता है। इसका परिज्ञान **विशेषार्थप्रकाशिका** के इस श्लोक से प्राप्त होता है— "शैवसिद्धान्ततन्त्रप्रोक्त पदार्थों का अभिधान जिस पूर्वोत्तर भागात्मक शिवानुभवसूत्र

---

१. विशेषार्थप्रकाशिका, ५।२०८.

इत्यनेन विशेषार्थप्रकाशिकोक्तश्लोकेन परिज्ञायते। एतदतिरिक्तमनेन "वीरशैवोत्कर्षः", "शतकत्रयम्", "प्रभुगीता" इत्यादिग्रन्था अपि विनिर्मिताः।

**श्रीनन्दिकेश्वरः–** ख्रि० १५ तमाब्दीयोऽयं "लिङ्गधारणचन्द्रिका" इत्याख्यं ग्रन्थं विनिर्ममे। ग्रन्थेऽस्मिन् वैदिकमन्त्रप्रमाणेन इष्टलिङ्गधारणसिद्धान्तस्य वैदिकत्वं प्रसाधितं वर्तते। प्राचीनस्यास्य ग्रन्थस्य शरन्नामिका व्याख्या श्रीकाशीक्षेत्रस्थमहामहोपाध्यायपण्डितशिवकुमारमिश्रमहाभागैः १९६० तमे विक्रमाब्दे विनिर्मिता वर्तते। ग्रन्थोऽयं तदानीन्तनजङ्गमवाडी–मठाधिपतिना श्रीजद्गुरुराजेश्वरमहास्वामिना ख्रि० १९०५ तमाब्दे प्रकाशित आसीत्। सोऽधुना ख्रि० १९८८ तमेऽब्दे हिन्दीभाषानुवादेन साकं प्रो० व्रजवल्लभद्विवेदमहोदयानां सम्पादकत्वे पुनर्मुद्रितोऽस्ति काशीजङ्गमवाडीमठस्थेन शैवभारतीभवनेन।

**श्रीस्वप्रभानन्दशिवाचार्यः**–श्रीस्वप्रभानन्दशिवाचार्यः काश्मीरदेशीय-वीरशैवाचार्य आसीत्। अनेन "शिवाद्वैतमञ्जरी" नामको ग्रन्थो विरचितः।

---

में किया गया है वह ग्रन्थ सम्पूर्णता को प्राप्त हुआ है— ऐसा विशेषार्थ प्रकाशिका ५/२०८ में उल्लिखित है। इस आचार्य द्वारा अन्य ग्रन्थों की रचना की गई है— (१) वीरशैवोत्कर्ष (२) शतकत्रय तथा (३) प्रभुगीता प्रभृति।

**श्रीनन्दिकेश्वर**

ईसा की १५वीं शताब्दी के इस महान् आचार्यद्वारा "लिङ्गधारणचन्द्रिका" ग्रन्थ की रचना की गई थी। इस ग्रन्थ में वैदिकमन्त्र-प्रमाण के बल पर इष्टलिङ्गधारण के सिद्धान्त की वैदिकता की प्रतिष्ठा की गई है। इस प्राचीन ग्रन्थ की शरत्-टीका, वि.सं.-१९६० में श्रीकाशी क्षेत्र के महामहोपाध्याय पण्डित शिवकुमार मिश्र महानुभाव द्वारा निर्मित की गई। यह टीका ग्रन्थ तात्कालिक जङ्गमवाडी मठ के अधिपति जगद्गुरु श्री राजेश्वर महास्वामी द्वारा १९०५ ई. में प्रकाशित की गई थी। वही ग्रन्थ सम्प्रति १९८८ ई. में हिन्दी भाषानुवाद के साथ प्रो. व्रजवल्लभ द्विवेदी महोदय के सम्पादकत्व में पुनर्मुद्रित हुआ है। इसका प्रकाशन, काशी जङ्गमवाडीमठ में स्थित शैवभारतीभवन द्वारा किया गया है।

**श्रीस्वप्रभानन्द शिवाचार्य**

आप काश्मीरदेशोत्पन्न वीरशैव आचार्य थे। आपने "शिवाद्वैतमञ्जरी"-ग्रन्थ की रचना की थी। इस ग्रन्थ में पूर्वपक्षतया अद्वैतमत का मण्डन किया गया है। तदनन्तर

ग्रन्थेऽस्मिन् प्रथमं पूर्वपक्षरूपेणाद्वैतमतस्य मण्डनम्, तदनन्तरं तस्य खण्डनम्, अन्ते च शक्तिविशिष्टाद्वैताभिधवीरशैवदर्शनस्य मण्डनं सुचारुरूपेण कृतं वर्तते। पुस्तकमिदमस्माभिः सम्पादितम्, ख्रि० १९८६ तमेऽब्दे प्रकाशितञ्च वाराणसीस्थेन जङ्गमवाडीमठेन। श्रीस्वप्रभानन्दशिवाचार्यस्य समयः ख्रि० १७ तमशतक इति प्रतिपाद्यते।

**श्रीमरितोण्टदार्यः**–ख्रि० १७ तमशताब्दीयेन श्रीमरितोण्टदार्याख्येन विदुषा वीरशैवानन्दचन्द्रिकाख्यः स्वतन्त्रो ग्रन्थो विरचितः। अयं क्रिया-वाद-कथाख्यकाण्डत्रयान्वितो वर्तते। एतेषु वादकाण्डभागः कर्नाटकप्रदेशीय-हुबलीनगरस्थितेन मूरुसाविरमठेन ख्रि० १९३६ तमेऽब्दे प्रकाशितोऽस्ति। अस्मिन् वादकाण्डे चार्वाक-बौद्ध-जैन-मीमांसक-सांख्य-शाक्त-गौतमीय-योग-शङ्कर-रामानुज-मध्वमतानि सम्यग्विमृश्य तानि निराकृत्य च वीरशैवमतोत्कर्षः संवादरूपेण सम्यक् साधितो वर्तते। एतदतिरिक्तं श्रीमरितोण्टदार्येण सिद्धान्तशिखामणेस्तत्त्वप्रदीपिकाख्या व्याख्या च व्यरचि।

---

उसका खण्डन किया गया है। पुनश्च अन्त में शक्तिविशिष्टाद्वैतसिद्धान्त को पोषण कर वीरशैवदर्शन का मण्डन सुचारु रूप से किया गया है। इस पुस्तक का सम्पादन हमने किया है।[१] १९८६ ई. में वाराणसी में स्थित जङ्गमवाडीमठ ने इसका प्रकाशन किया है। श्रीस्वप्रभानन्द शिवाचार्य का स्थितिकाल, ईसा की १७वीं शताब्दी में माना जाता है।

**श्री मरितोण्टदार्य**

ईसा की १७वीं शताब्दी में श्रीमरितोण्टदार्य नामक इस विद्वद्रत्न द्वारा वीरशैवानन्द-चन्द्रिका नामक स्वतन्त्र ग्रन्थ की रचना की गई थी। इस ग्रन्थ में क्रिया, वाद एवम् कथा— इन तीन काण्डों की योजना की गई है। इनमें वादकाण्डभाग का प्रकाशन, कर्नाटक प्रदेश के हुबली नगर के निवासी मूरुसाविरमठ द्वारा १९३६वीं शताब्दी में किया गया था। इस वादकाण्ड में चार्वाक, बौद्ध, जैन, मीमांसक, सांख्य, शाक्त, न्याय, योग, शङ्कर, रामानुज तथा मध्व के मतों का सम्यक्तया विमर्शन करने के पश्चात् उनका निराकरण किया गया है। तदनन्तर वीरशैवमत का उत्कर्ष, संवाद रूप से समीचीनतया प्रतिष्ठापित किया गया है। इसके अतिरिक्त श्रीमरितोण्टदार्य द्वारा सिद्धान्तशिखामणि ग्रन्थ की तत्त्वप्रदीपिका नामक व्याख्या की रचना की गई

एतद् व्याख्याविशिष्टः सिद्धान्तशिखामणिः ख्रि० १९०५ तमेऽब्दे सोलापुरनगरस्थितेन वारदप्रकाशनेन खण्डद्वये प्रकाशितः।

**श्रीकेलदीबसवभूपालः**– अयं ख्रि० १७ तमशताब्दे कर्णाटकप्रदेशीय-केलदीसंस्थानस्य राजा आसीत्। संस्कृतभाषाविदुषाऽनेन शिवतत्त्वरत्नाकर-सुभाषितसुरद्रुम-सूक्तिसुधाकराख्याः सर्वविद्वज्जनमनस्तुष्टिकरास्त्रयो ग्रन्था विरचिता इति ज्ञायते। तदुक्तं मरितोण्टदार्येण–

**सुधामधुरया गिरा बसवभूमिपालाग्रणीः**
**सुभाषितसुरद्रुमं सशिवतत्त्वरत्नाकरम्।**
**सुधाकरमचीकरत्तदनु सूक्तिशब्दादिमं**
**कृतित्रितयमप्यदः सरससन्मनस्तुष्टये**[1]।।इति।

एतेषु सूक्तिसुधाकरो नोपलभ्यते। सुभाषितसुरद्रुमस्तु मैसूरप्राच्यविद्या-संशोधनालयग्रन्थालये विद्यते; किन्त्वद्यावधि न प्रकाशितः। शिवतत्त्वरत्नाकरस्तु प्रथमतः १९२७ तमे ख्रिस्ताब्दे बि० रामराव०विद्वान्-पि० सुन्दरशास्त्री-

---

है। इस व्याख्या से युक्त सिद्धान्तशिखामणि ग्रन्थ का दो खण्डों में प्रकाशन, १९०५वीं ईसवी में सोलापुर नगर स्थित वारद प्रकाशन द्वारा किया गया है।

**श्रीकेलदी बसवभूपाल**

श्रीकेलदी बसव, ईसा की १७वीं शताब्दी में कर्नाटक प्रान्त के केलदी संस्थान के राजा थे। संस्कृतभाषा के इस विद्वद्-रत्न द्वारा तीन ग्रन्थों की रचना की गई थी— (१) शिवतत्त्वरत्नाकर, (२) सुभाषितसुरद्रुम तथा (३) सूक्तिसुधाकर। ये ग्रन्थ विद्वज्जन के मनोरम हैं। स्वयं ग्रन्थकार ने शिवतत्त्वरत्नाकर की भूमिका में स्पष्टतया इस बात का उल्लेख किया है— बसव भूमिपालों में अग्रणी इस विद्वद्-रत्न (स्वयम्) ने शिवतत्त्वरत्नाकर सूक्तिसुधाकर एवम् सुभाषितसुरद्रुम इन तीन ग्रन्थों की रचना, सरस विद्वज्जन के मनस्तोष के लिये की थी।

उपर्युक्त ग्रन्थों में सूक्तिसुधाकर अप्राप्य है। सुभाषितसुरद्रुम ग्रन्थ, मैसूर प्राच्यविद्या संशोधनालय के ग्रन्थालय में विद्यमान है किन्तु प्रस्तुत समीक्षा ग्रन्थ के प्रकाशन काल तक इसका प्रकाशन नहीं किया गया है। तृतीय ग्रन्थ शिवतत्त्वरत्नाकर का प्रथम प्रकाशन १९२७ ईसवी में मद्रपुरी (मद्रास) से हुआ था। इसका प्रकाशन,

---

१. द्र० शिवतत्त्वरत्नाकरस्य भूमिका, पृ० ५, मैसूर O.R.I. प्रकाशनम्, १९६४ ई०।

इत्येताभ्यां मद्रपुरीतः प्रकाशित आसीत्। अनन्तरं मैसूरविश्वविद्यालयस्य प्राच्यविद्यासंशोधनालयतः १९६४ तमे ख्रिस्ताब्दे प्रथमभागः, १९६९ तमे ख्रिस्ताब्दे द्वितीयभागः, १९८८ तमे ख्रिस्ताब्दे तृतीयभागश्च प्रकाशितः। शिवतत्त्वरत्नाकरः शा० श० १६३१ तमे वर्षे सर्वधारिसंवत्सरे भाद्रपदमासे शुक्रवासरे पौर्णमास्यां परिपूर्णोऽभूदिति–

श्रीमत्युन्नतशालिवाहनशके चन्द्राग्न्यृतुक्ष्मामिते
वर्षे विश्रुतसर्वधारिणि तथा मासे नभस्याह्वये।
वारे निर्जरवैरिणामपि गुरोः श्रीपौर्णमासीतिथौ
ग्रन्थोऽयं परिपूर्णतामवहत प्रख्यातसारार्थयुक्[1]।।
इत्यनेन ग्रन्थस्थश्लोकेन सुस्पष्टमवगम्यते।

विचित्रानेकरत्नानामाकरत्वात्समुद्रस्य रत्नाकर इति संज्ञा, तद्वच्छिवेन परमात्मना साक्षात् परम्परया वा निर्मितानां तत्त्वरत्नानां प्रतिपाद्यविषय-रूपाणामाकरत्वादस्य ग्रन्थस्य शिवतत्त्वरत्नाकर इत्यन्वर्था संज्ञा। यद्यप्यत्र प्रतिपाद्या विषयास्तत्र तत्र पुराणेतिहासादिषु प्रसिद्धा एव; अथापि तावद्-ग्रन्थपर्यटनं विनाऽनायासेनैकत्रैव तावतामपि विषयाणामवगन्तुमनुकूलत्वादयं

---

बि-रामराव एवं पि० सुन्दरशास्त्री इन दो विद्वज्जन के मिलित प्रयास से किया गया था। तदनन्तर मैसूर विश्वविद्यालय के प्राच्यविद्या संशोधनालय से १९६४ ईसवी में प्रथम भाग का, १९६९ ईसवी में द्वितीय भाग का तथा १९८८ ईसवी में तृतीय भाग का प्रकाशन किया गया था। शिवतत्त्वरत्नाकर ग्रन्थ की रचनापूर्ति शालिवाहन शकाब्द के १६३१ वर्ष में सर्वधारि संवत्सर के भाद्रपद पौर्णमासी (तदनुसार) शुक्रवार को हुई थी। शिवतत्त्वरत्नाकर ग्रन्थ के अन्त में उल्लिखित श्रीमृत्युन्नतशालिवाहन शके इत्यादि श्लोक के अन्तःसाक्ष्य से उपर्युक्त कथन की सम्पुष्टि होती है।

यथा विचित्र अनेक रत्नों का आकर होने से समुद्र की संज्ञा है— रत्नाकर तद्वत् परमात्मा शिव द्वारा साक्षात् अथवा परम्परया निर्मित तत्त्वरत्नों को प्रतिपाद्यविषय के रूप में स्वीकार करने वाला इस आकर ग्रन्थ का अन्वर्थ नाम है— शिवतत्त्वरत्नाकर। इस ग्रन्थ के प्रतिपाद्य विषय पुराणेतिहासादि ग्रन्थों में प्रसिद्ध हैं तथापि उन अनेक ग्रन्थों के आलोडन के बिना एकमात्र इस ग्रन्थ में उन समस्त

---

१. शिवतत्त्वरत्नाकरः, पृ० ४३४, मद्रासप्रकाशनम् १९२७ ई०।

ग्रन्थः संस्कृतवाङ्मयस्य विश्वकोश इव विलसति। अत एव ग्रन्थकारो ग्रन्थारम्भे–

विचित्रनानाविषयाभिरामे मनोजबन्धेऽत्र महाप्रबन्धे।
वेद्यावबोधार्थमहं प्रमेयसंक्षेपमुद्देशमुखेन कुर्वे[1]।।

इति प्रतिज्ञातवान्।

**श्रीशङ्करशास्त्रिणः (ख्रि० श० १९३०)**– धर्मरत्नपदवीविभूषिताः श्रीशङ्करशास्त्रिमहाभागा ईश–केन–मुण्डक–सिद्धान्तशिखोपनिषदामुपरि भाष्याणि विरचयामासुः। एतदतिरिक्तं श्रीशास्त्रिमहाभागैर्व्याससूत्राणां वीरशैवसिद्धान्तपरा वृत्तिर्लिखिता। सेयं "ब्रह्मसूत्रवृत्तिः" इति नाम्ना प्रसिद्धाऽस्ति। एते सर्वेऽपि ग्रन्था मैसूरुश्रीशङ्करविलास–संस्कृतपाठशालाध्यक्षैः श्रीमदुज्जयिनीसद्धर्मसिं-हासनचरपट्टाध्यक्षैर्मरुळाराध्यशिवाचार्य–महास्वामिभिः प्रकाशिताः सन्ति।

एतदतिरिक्तं संस्कृतभाषायां वीरशैवसाहित्यं सुमहद्वर्तते। तदेवाधः

---

विषयों का सुगम बोध प्राप्त होता है। अतः यह ग्रन्थ संस्कृत वाङ्मय के विश्वकोश रूप से विलसित होता है। अतएव शिवतत्त्वरत्नाकर ग्रन्थ के आरम्भ में स्वयं ग्रन्थकार ने विचित्र-नानाविध-वेद्यावबोधन हेतु प्रमेय निरूपण की प्रतिज्ञा "विचित्र नाना विषयाभिरामे" इत्यादि श्लोक द्वारा की है।

**श्री शङ्करशास्त्री जी**

१९३० ई० में धर्मरत्नपदवी से विभूषित श्रीशंकर शास्त्रीजी ने ईश, केन, मुण्डक एवं सिद्धान्तशिखा उपनिषदों की भाष्यों की रचना की थी। इसके अतिरिक्त श्रीशास्त्रिमहाशय ने ब्रह्मसूत्रों की वीरशैवसिद्धान्त-निरुपण-प्रवण **वृत्ति** की भी रचना की थी। यह "ब्रह्मसूत्रवृत्ति" नाम से प्रसिद्ध है। ये सभी ग्रन्थ, मैसूर के श्रीशंकर विलास संस्कृत पाठशाला के अध्यक्ष एवम् उज्जयिनी सद्धर्म सिंहासन के पट्टाध्यक्ष महास्वामी श्रीमरुलाराध्य शिवाचार्य द्वारा प्रकाशित किये गये हैं।

उपर्युक्त वीरशैवग्रन्थों के अतिरिक्त संस्कृतभाषा में उपनिबद्ध वीरशैवसाहित्य अतिविशाल एवं समृद्ध है। उसका विवरण (संक्षिप्त) निम्नांकित है—

---

१. शिवतत्त्वरत्नाकरः, पृ० १, मद्रासप्रकाशनम्, १९२७ ई०।

संक्षेपतः सूच्यते। तथाहि–

| ग्रन्थनाम | ग्रन्थप्रणेतुर्नाम | तत्समयः |
|---|---|---|
| १. अमृतेश्वरभाष्यम् | सर्वेश्वरयतिः | खि. श. १६०० |
| २. अनादिवीरशैवसारसंग्रहः | गुलूरुसिद्धवीरणाचार्यः | ,, ,, |
| ३. आनन्दगीता | मल्लिकार्जुनपण्डिताराध्यः | ,, ,,११३० |
| ४. एकोत्तरशतस्थली | जक्कणार्यः | |
| ५. कविकर्णरसायनम् | यत्नन्दूरुषडक्षरकविः | ,, ,,१६६५ |
| ६. कामिकाद्यष्टविंशत्यागम-वृत्तयो दीपिकाश्च | सकलागमाचार्यः | ,, ,,११५० |
| ७. कैवल्योपनिषत्सादाशिव-भाष्यम् | सदाशिवशिवाचार्यः | ,, ,, १९४८ |
| ८. कैवल्यसारः | मरितोण्टदार्यः | ,, ,, १६६० |
| ९. चन्नवसवपुराणम् | कुमारस्वामिशास्त्री | |
| १०. चोल-रेणुकसंवादः (शिवाधिक्यशिखामणिः) | सोसलेरेवणाराध्यः | खि. श. १६६० |
| ११. ज्ञानशतकम् | सर्पभूषणशिवयोगी | |

| क्र. | ग्रन्थनाम | रचयिता के नाम | ई० श० रचनाकाल |
|---|---|---|---|
| १. | अमृतेश्वरभाष्य | सर्वेश्वरयति | १६०० |
| २. | अनादिवीरशैवाचारसंग्रह | गुरुसिद्ध वीरणाचार्य | १६०० |
| ३. | आनन्दगीता | मल्लिकार्जुन पण्डिताराध्य | ११३० |
| ४. | एकोत्तरशतस्थली | जक्कणार्य | ११३० |
| ५. | कविकर्णरसायन | यलन्दूरु षडक्षकर कवि | १६६५ |
| ६. | कामिकादि २८ आगमों की वृत्तियाँ तथा दीपिकायें | सकलागमाचार्य | ११५० |
| ७. | कैवल्योपनिषद् का सदाशिवभाष्य | सदाशिव शिवाचार्य | १९४८ |
| ८. | कैवल्यसार | मरितोण्टदार्य | १६६० |
| ९. | चन्नबसवपुराण | कुमारस्वामिशास्त्री | १६६० |
| १०. | चोलरेणुक संवाद (शिवाधिक्य शिखामणि) | सोसले रेवणाराध्य | १६६० |
| ११. | ज्ञानशतक | सर्पभूषण शिवयोगी | १६६० |

| | | |
|---|---|---|
| १२. नन्दिकेश्वरकारिका | नन्दिकेश्वरशिवाचार्यः | |
| १३. नीलकण्ठभाष्यम् (ब्रह्मसूत्रस्य) | नीलकण्ठशिवाचार्यः | ,, ,,८०० |
| १४. पण्डिताराध्यचरितम् | गुरुराजकविः | |
| १५. प्रश्नरेणुकम् (हस्तलेखः) | रुद्रमुनीश्वरः | |
| १६. बसवराजीयम् | पाल्कुरिकेसोमनाथः | ,, ,, ११८० |
| १७. बसवेशविजयम् | कञ्चिशङ्कराराध्यः | |
| १८. भक्ताधिक्यरत्नावलिः | षडक्षरदेवः | ,, ,, १६६५ |
| १९. भगवद् गोतावीरशैवभाष्यम् | टी.जी.सिद्धप्पाराध्यः | ,, ,, १९६६ |
| २०. भीमेश्वरगद्यम् | मल्लिकार्जुनपण्डिताराध्यः | ,, ,, ११३० |
| २१. महानारायणोपनिषद्-भाष्यम् | वृषभपण्डिताराध्यः | ,, ,, १४०० |
| २२. माचिदेवमनोविलासः | बसवलिङ्गशिवयोगी | |
| २३. रेणुकचम्पूः | ईशानशिवगुरुः | ,, ,, ९५० |
| २४. रेणुकविजयचम्पूः | सिद्धनाथशिवाचार्यः | ,, ,, ९६० |
| २५. रेवणसिद्धचरितम् | ईशानशिवगुरुः | ,, ,, ९५० |

---

| | | |
|---|---|---|
| १२. नन्दिकेश्वरकारिका | नन्दिकेश्वर शिवाचार्य | १६६० |
| १३. नीकण्ठभाष्य (ब्रह्मसूत्र) | नीलकण्ठ शिवाचार्य | ८०० |
| १४. पण्डिताराध्य चरित | गुरुराजकवि | ८०० |
| १५. प्रश्नरेणुक (हस्तलेख) | रुद्रमुनीश्वर | ८०० |
| १६. बसवराजीय | पाल्कुरिके सोमनाथ | ११८० |
| १७. बसवेशविजय | कञ्चिशङ्कराराध्य | ११८० |
| १८. भक्ताधिक्य रत्नावलि | षडक्षरदेव | १६६५ |
| १९. भगवद्गीता वीरशैवभाष्य | टी.जी. सिद्धपाराध्य | १९६६ |
| २०. भीमेश्वरगद्य | मल्लिकार्जुन पण्डिताराध्य | ११३० |
| २१. महानारायणोपनिषद् भाष्य | वृषभपण्डिताराध्य | १४०० |
| २२. माचिदेवमनो विलास | बसवलिङ्ग शिवयोगी | १४०० |
| २३. रेणुकचम्पू | ईशान शिवगुरु | ९५० |
| २४. रेणुकविजयचम्पू | सिद्धनाथ शिवाचार्य | ९६० |
| २५. रेवणसिद्ध चरित | ईशान शिवगुरु | ९५० |

| | | |
|---|---|---|
| २६. लिङ्गराजीयः | लिङ्गराजः (कोडगुनृपः) | ,, ,, १८०० |
| २७. लिङ्गोद्भवकाव्यम् | मल्लिकार्जुनपण्डिताराध्यः | ,, ,, ११३० |
| २८. वातुलोत्तरव्याख्यानम् | गुब्बिमल्लणार्यः | ,, ,, |
| २९. वीरमाहेश्वराचारसंग्रहः | नीलकण्ठनागनाथाचार्यः | ,, ,, १३०० |
| ३०. वीरमाहेश्वराचारसारोद्धारः | लक्ष्मीधराराध्यः | |
| ३१. वीरशैवधर्मशिरोमणिः | षडक्षरमन्त्री | ,, ,, १७०० |
| ३२. वीरशैवप्रदीपिका | मरितोण्टदार्यः | ,, ,, १६६० |
| ३३. वीरशैवविलासः | पादपूजाबसवलिङ्गदेशिकेन्द्रः | |
| ३४. वीरशैवसदाचारसंग्रहः | श्रीनागनाथाचार्यः | |
| ३५. वीरशैवान्वयचन्द्रिका | आराध्यवीरेशशास्त्री | |
| ३६. वीरशैवाचारकौस्तुभः | मौनप्पपण्डितः | १७०० |
| ३७. वीरशैवाचारप्रदीपिका | गुरुदेवकविः | खि श. |
| ३८. वीरशैवाचारसुधानिधिः | गुरुबसवः | ,, ,, १७०० |
| ३९. वीरशैवाष्टावरण-प्रमाणाष्टकाभरणम् | इवटूरिनन्दिकेश्वरशास्त्री | |

---

| | | |
|---|---|---|
| २६. लिङ्गराजीय | लिङ्गराज (कोडुगु-नृप) | १८०० |
| २७. लिङ्गोद्भव काव्य | मल्लिकार्जुन पण्डिताराध्य | ११३० |
| २८. वातुलोत्तरव्याख्यान | गुबिव मल्लणाचार्य | १३०० |
| २९. वीरमाहेश्वराचार्यसारोद्धार | लक्ष्मीधराराध्य | १३०० |
| ३०. वीरमाहेश्वराचारसारोद्धार | लक्ष्मीधराराध्य | १३०० |
| ३१. वीरशैवधर्मशिरोमणि | षडक्षरमन्त्री | १७०० |
| ३२. वीरशैवप्रदीपिका | मरितोण्टदार्य | १७०० |
| ३३. वीरशैवविलास | पादपूजाबसवलिङ्गदेशिकेन्द्र | १७०० |
| ३४. वीरशैवसदाचारसंग्रह | श्रीनागनाथाचार्य | १७०० |
| ३५. वीरशैवान्वयचन्द्रिका | आराध्य वीरेशशास्त्री | १७०० |
| ३६. वीरशैवाचारकौस्तुभ | मौनप्पण्डित | १७०० |
| ३७. वीरशैवाचारप्रदीपिका | गुरुदेव कवि | १७०० |
| ३८. वीरशैवाचार सुधानिधि | गुरुबसव | १७०० |
| ३९. वीरशैवाष्टावरण प्रमाणाष्ट-काभरण इवटूरि | नन्दिकेश्वर शास्त्री | १७०० |

| | | |
|---|---|---|
| ४०. वीरशैवेन्दुशेखरः | पण्डितसदाशिवशास्त्री | ,, ,, १९२० |
| ४१. वीरशैवोत्कर्षसंग्रहः | पी. आर. करिबसवशास्त्री | ,, ,, १९०८ |
| ४२. वीरभद्रदण्डकम् | षडक्षरदेवः | ,, ,, १६६५ |
| ४३. विवेकचिन्तामणिः | लिङ्गराजः (कोडगुनृपः) | ,, ,, १८०० |
| ४४. वीरशैवोत्कर्षप्रदीपिका | चन्नबसवदेशिकः | |
| ४५. वेदान्तसारवीरशैव-चिन्तामणिः | निट्टूरुनञ्जणाचार्यः | |
| ४६. श्वेताश्वतरोपनिषद्वीर-शैवभाष्यम् | टी. जी. सिद्धप्पाराध्यः | ,, ,, १९६५ |
| ४७. शक्तिविशिष्टाद्वैतदर्शनम् (शोधप्रबन्धः) | ,, ,, ,, | ,, ,, ,, ,, |
| ४८. शङ्करगीता | मल्लिकार्जुनपण्डिताराध्यः | ,, ,, ११३० |
| ४९. शरणगीता (कन्नडवचनानां पद्यानुवादः) | टी. जी. सिद्धप्पाराध्यः | ,, ,, १९६६ |
| ५०. शिवाधिक्यरत्नाकरः | केलदीबसवभूपालः | ,, ,, १६०० |

---

| | | |
|---|---|---|
| ४०. वीरशैवन्दुशेखर | पण्डित सदाशिव शास्त्री | १९२० |
| ४१. वीरशैवोत्कर्षसंग्रह | पी. आर. करिबसव शास्त्री | १९०८ |
| ४२. वीरभद्रदण्डकम् | षडक्षर देव | १६६५ |
| ४३. विवेकचिन्तामणि | लिङ्गराज (कोडगु नृप) | १८०० |
| ४४. वीरशैवत्कर्षप्रदीपिका | चन्नबसव देशिक | १८०० |
| ४५. वेदान्तसार वीरशैव चिन्तामणि | निट्टूर नञ्जनाचार्य | १८०० |
| ४६. श्वेताश्वतरोपनिषद् (वीरशैवभाष्य) | टी.जी. सिद्धप्पाराध्य | १९६५ |
| ४७. शक्तिविशिष्टाद्वैतदर्शनम् (शोधप्रबन्ध) | | १९६५ |
| ४८. शंकरगीता | मल्लिकार्जुन पण्डिताराध्य | ११३० |
| ४९. शरणगीता (कन्नड़ वचनों का पद्यानुवाद) | टी.जी. सिद्धप्पाराध्य | १९६६ |
| ५०. शिवाधिक्य रत्नाकर | केलदी बसवभूपाल | १६०० |

| | | |
|---|---|---|
| ५१. शिवाधिक्यरत्नावलिः | षडक्षरदेवः | ,, ,, १६६५ |
| ५२. शिवाद्वैतपरिभाषा | हूलीनीलकण्ठशिवाचार्यः | ,, ,, १९२० |
| ५३. शिवाद्वैतदर्पणः | शिवानुभवशिवाचार्यः | |
| ५४. शिवपञ्चस्तवव्याख्या | विश्वाराध्यपण्डितः | |
| ५५. शिवपञ्चविंशतिलीलाशीः-शतकम् (हस्तलेखः) | श्रीकाशीजगद्गुरुवीरभद्रशिवाचार्याः | ,, ,, १९४५ |
| ५६. शिवप्रसङ्गरत्नाकरः | वृषभलिङ्गशिवयोगी | ,, ,, १०९० |
| ५७. शिवमन्त्रजपविधिः (संग्रहात्मकः) | मूरुसाविरमठगङ्गाधरस्वामी | ,, ,, १९२१ |
| ५८. शिवयोगप्रदीपिका | चन्नसदाशिवयोगी | |
| ५९. शिवलिङ्गसूर्योदयः (वीरशैवधर्मबोधकनाटकम्) | मल्लणाराध्यः | |
| ६०. शिवज्ञानदीपिका | मल्लार्यगुरुः | ,, ,, १२०० |
| ६१. शिवसहस्रनामभाष्यम् | सङ्गमेश्वरयतिः | ,, ,, १७८० |
| ६२. शिवज्ञानप्रदीपिका | विश्वनाथाचार्यः | |

---

| | | |
|---|---|---|
| ५१. शिवाधिक्य रत्नावलि | षडक्षर देव | १६६५ |
| ५२. शिवाद्वैतपरिभाषा | हूली नीलकण्ठ शिवाचार्य | १९२० |
| ५३. शिवाद्वैतदर्पण | शिवानुभव शिवाचार्य | १९२० |
| ५४. शिवपञ्चस्तव व्याख्या | विश्वाराध्य पण्डित | १९२० |
| ५५. शिवपञ्चविंशति लीला-शतक | श्री का.ज. वीरभद्र शिवाचार्य | १९४५ |
| ५६. शिवप्रसङ्ग रत्नाकर | वृषभलिङ्ग शिवयोगी | १९९० |
| ५७. शिवमन्त्र जपविधि (संग्रह संकलन) | मुरुसाविरमठ गंगाधर स्वामी | १९२१ |
| ५८. शिवयोग प्रदीपिका | चन्नसदाशिवयोगी | १९२१ |
| ५९. शिवलिङ्ग सूर्योदय (वीरशैव धर्म बोधक नाटक) | मल्लणाराध्य | १९२१ |
| ६०. शिवज्ञानदीपिका | मल्लार्य गुरु | १२०० |
| ६१. शिवसहस्रनाम भाष्य | सङ्गमेश्वर यति | १७८० |
| ६२. शिवज्ञान प्रदीपिका | विश्वनाथाचार्य | १७८० |

| | | |
|---|---|---|
| ६३. शिवज्ञानबोध: | शिवाग्रयोगीन्द्रज्ञानशिवाचार्य: | |
| ६४. शिवज्ञानभाष्यम् | ,, ,, | |
| ६५. शिवज्ञानसमुच्चय: | जगदाराध्यनागेशगुरु: | ,, ,, १२०० |
| ६६. शैवरत्नाकर: | श्रीमज्ज्योतिर्नाथ: | ,, ,, ११०० |
| ६७. श्रीबसवोदाहरणम् | पाल्कुरिकिसोमनाथ: | ,, ,, ११८० |
| ६८. श्रुतिसारभाष्यम् | श्रीशिवपूजाशिवलिङ्गशिवयोगीन्द्र: | ,, ,, १७४५ |
| ६९. सव्याख्या पञ्चश्लोकी | श्रीमत्केलदीबसववसुमतीवास: | |
| ७०. सानन्दचरितम् | पद्मराज: (केरेयपद्मरस:) | ,, ,, ११८० |
| ७१. सारोद्धार: | लक्ष्मीदेवगुरु: | ,, ,, १२०० |
| ७२. सिद्धान्तसारावलि: | त्रिलोचनशिवाचार्य: | |
| ७३. सिद्धार्थबोधिनी (सिद्धान्त-शिखामणे: कन्नडटीका) | सोसलेरेवणाराध्य: | ,, ,, १६६० |
| ७४. स्तवनमञ्जरी | अभिनवकालिदासो बसवप्पशास्त्री | |
| ७५. हरलीला | उद्भटाराध्य:[1] | ,, ,, १०२० |

---

| | | |
|---|---|---|
| ६३. शिवज्ञानबोध | शिवाग्रयोगीन्द्रज्ञान शिवाचार्य | १७८० |
| ६४. शिवज्ञांनभाष्य | शिवाग्रयोगीन्द्रज्ञान शिवाचार्य | १७८० |
| ६५. शिवज्ञानसमुच्चय | जगदाराध्य नागेशगुरु | १२०० |
| ६६. शैवरत्नाकर | श्रीमज्ज्योतिर्नाथ | ११०० |
| ६७. श्रीबसवोदाहरण | पाल्कुरिकि सोमनाथ | ११८० |
| ६८. श्रुतिसार भाष्य | श्री शिवपूजा शिवलिङ्ग शिवयोगीन्द्र | १७४५ |
| ६९. व्याख्यायुक्त पञ्चश्लोकी | श्रीमत् केलदी बसव वसुमती वास | १७४५ |
| ७०. सदानन्दचरित | पद्मराज (केरेयपद्मरस) | ११८० |
| ७१. सारोद्धार | लक्ष्मीदेवगुरु | १२०० |
| ७२. सिद्धान्तसारावलि | त्रिलोचन शिवाचार्य | १२०० |
| ७३. सिद्धार्थबोधिनी (सिद्धान्त शिखामणि कन्नड टीका) | सोसले रेवणाराध्य | १६६० |
| ७४. स्तवनमञ्जरी | अभिनव कालिदास बसवप्प शास्त्री | १६६० |
| ७५. हरलीला | उद्भटाराध्य | १०२० |

१. उपर्युक्तानां संस्कृतग्रन्थानां लेखकतत्कालादिविचारा: श्रीबी०शिव-मूर्तिशास्त्रिकृतस्य 'वीरशैवसाहित्यं तदितिहासश्च, (भा. १) इत्याख्यस्य कन्नडग्रन्थस्य तथा

एवं संस्कृतभाषायामितोऽप्यधिका ग्रन्थाः सन्ति। संस्कृतभाषातिरिक्तं कन्नड-मराठी-तेलगु-आङ्गल-तमिलभाषासु च विपुलं वीरशैवसाहित्यं वरीवर्ति। प्रबन्धगौरवभयादत्र केवलं संस्कृतभाषामयस्य प्रमुखवीरशैव-साहित्यस्यैव दिग्दर्शनं कृतम्। मन्येऽनेन जिज्ञासूनां वीरशैवदर्शनेतिहासविषयकाः प्रायः सर्वा जिज्ञासाः समाहिता भवेयुरिति।

---

इस तरह के (संस्कृतभाषा) में अन्य ग्रन्थ भी हैं। तदतिरिक्त कन्नड़, मराठी, तेलगू, अंग्रेजी एवं तमिल भाषाओं में भी विशाल वीरशैवसाहित्य विद्यमान है। प्रबन्ध के मोटापन की भीति से यहाँ केवल संस्कृतभाषा में उपनिबद्ध प्रमुख वीरशैव साहित्य का ही उल्लेख किया गया है। डा. शिवाचार्य को यह विश्वास है कि ग्रन्थ के इस प्रथम परिच्छेद से जिज्ञासुओं की वीरशैवदर्शन के इतिहास विषयक प्रायः सभी जिज्ञासायें समाहित हो जायेंगी।

***

---

मैसूरुविश्वविद्यालयस्य प्रबुद्धकर्णाटकाख्य-कन्नडपत्रिकायां (वर्ष ५८, अङ्क १, १९७६ ई०) प्रकाशितस्य 'संस्कृते वीरशैवसाहित्यम्' इत्याख्यस्य श्रीजि०मरुसिद्धय्यकृतस्य कन्नडलेखस्य, एवमेव चिदिरेमठीयवीरभद्रशर्मणा लिखितस्य 'रेणूकविजयमु' इत्याख्यस्य तेलगुभाषापुस्तकस्य (शिवधर्मग्रन्थमाला, सिकन्दराबाद १९४३) प्रस्तावनाया आधारेण लिखिताः।

श्रीमते रेणुकाचार्याय नमः

# द्वितीयः परिच्छेदः

## सिद्धान्तशिखामणिग्रन्थपरिचयः

अस्मिन् प्रबन्धे सिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा तावत् क्रियते। तदत्र जिज्ञासूनां मनसि कोऽयं सिद्धान्तशिखामणिर्नामा ग्रन्थः? कस्य दर्शनस्येदं पुस्तकम्? ग्रन्थकारः कः? तस्यैतिह्यं किम्? ग्रन्थरचनाकालः कः? ग्रन्थस्यास्य को वा सिद्धान्तः? इत्याद्यनेके प्रश्नाः सम्भवन्ति। एवमत्र सम्भाव्यमानानां सर्वेषामपि प्रश्नानामुत्तरं यथामति सप्रमाणं प्रस्तूयते।

सिद्धान्तशिखामणिर्हि वीरशैवधर्मदर्शनयोः सिद्धान्तप्रतिपादकः प्रधानः प्रामाणिकश्च ग्रन्थः। यथा वेदान्तप्रस्थानत्रये प्रसिद्धा सकलोपनिषत्सारभूता गीता भगवता श्रीकृष्णेन महाभारतयुद्धक्षेत्रेऽर्जुनं प्रत्युपदिष्टा, या च पुनः कृष्णार्जुन-

---

।। श्रीमान् रेणुकाचार्य जी को नमस्कार अर्पित हो ।।

# द्वितीय परिच्छेद

## सिद्धान्तशिखामणि ग्रन्थ का परिचय

इस शोधप्रबन्ध में सिद्धान्तशिखामणि की अन्य दर्शनों के सिद्धान्तों के साथ समीक्षा कर्तव्य है। अतः यहाँ जिज्ञासुजन के मन में अनेक प्रकार के प्रश्नों का उदित होना स्वाभाविक है। तद्यथा— (१) सिद्धान्तशिखामणि नामक ग्रन्थ का क्या स्वरूप है? (२) यह पुस्तक किस दर्शन से सम्बद्ध है? (३) इस ग्रन्थ के रचयिता कौन है? (४) उनका ऐतिह्य क्या है? (५) ग्रन्थ का रचनाकाल क्या है? (६) इस ग्रन्थ का प्रतिपाद्य सिद्धान्त क्या है? इत्यादि। इस तरह के सम्भावित सभी प्रश्नों के उत्तर, डॉ. शिवाचार्य जी ने सप्रमाण स्वबुद्धिवैभव के बल पर इस परिच्छेद में प्रतिपादित किया है।

**सिद्धान्तशिखामणि** वीरशैव के धर्म एवं दर्शनों के सिद्धान्तों का प्रतिपादक प्रधान व प्रामाणिक ग्रन्थ है। यथा वेदान्त के प्रस्थानत्रय के अन्तर्गत प्रसिद्ध **गीता** (सकल उपनिषदों की सारसर्वस्वभूता) महाभारत-युद्धक्षेत्र में श्रीकृष्ण द्वारा अर्जुन के प्रति उपदिष्ट हुई। पुनश्च वही गीता श्रीकृष्णार्जुन संवादरूप से महर्षि व्यास

संवादरूपेण महर्षिणा व्यासेन ग्रथितेति विज्ञायते, तथाऽयं सिद्धान्तशिखामणिरपि कामिकादिवातुलान्तानां शैवागमानां सारभूतो वीरशैव-सिद्धान्तप्रतिपादको ग्रन्थो मुनिकुलतिलकाय अगस्त्याय भगवत्पादै रेणुकाचार्यैरुपदिष्टः। सोऽयमुपदेश आचार्यवर्येण श्रीमता शिवयोगिशिवाचार्येण रेणुक-अगस्त्ययोः संवादरूपेण ग्रथितो वर्तते। तदुक्तं श्रीमरितोण्टदार्येण—

रेणुकागस्त्यसंवादं निगमागमविश्रुतम्।
प्रदीपयति गुप्तार्थमुद्धृत्य शिवयोगिराट्[1]।।इति।

भगवता श्रीकृष्णेनोपदिष्टोपदेशः पद्यात्मक इति यथा स भगवद्गीतेति कथ्यते, तथाऽयं सिद्धान्तशिखामणिरपि पद्यात्मकत्वात् 'रेणुकगीता' इत्याख्ययापि समाख्यायते।

किञ्च, भगवद्गीताया यथैकादशाध्याये भगवता श्रीकृष्णेनार्जुनाय विश्वरूपं प्रदर्शितम्, तथा सिद्धान्तशिखामण्या एकविंशतितमपरिच्छेदेऽपि विभीषणस्य प्रार्थनानुसारेण युगपत् त्रिकोटिशिवलिङ्गसंस्थापनार्थं श्रीरेणुकभगवत्पादास्त्रिकोट्याचार्यरूपं[2] परिधाय विभीषणाय विश्वरूपं प्रदर्शितवन्त इतीयं रेणुकगीता

---

द्वारा ग्रन्थरूप में निर्मित हुई— यह विज्ञजनों को सुविदित है। तद्वत् यह सिद्धान्तशिखामणि भी **कामिक** से **वातुल** पर्यन्त २८ आगमों का **सारसर्वस्व** है तथा वीरशैव सिद्धान्तों का प्रतिपादक है। इसका उपदेश भगवत्पाद श्रीरेणुकाचार्य ने मुनिकुलश्रेष्ठ श्री अगस्त्य जी के प्रति किया था। इस उपदेश को सुमहान् यति श्रीमान् शिवयोगी शिवाचार्य जी ने रेणुक-अगस्त्य-संवाद रूप से ग्रन्थरूप प्रदान किया है। इसे श्री मरितोण्टदार्य ने सुस्पष्ट किया है— निगम एवं आगम की उद्यान-वाटिका में सुवासित रेणुकागस्त्य-संवाद के सुगुप्तार्थ के रहस्योद्घाटन विधि से शिवयोगी शिवाचार्यजी ने प्रकाशित किया है।

भगवान् श्रीकृष्ण द्वारा किया गया पद्यात्मक उपदेश यद्वत् भगवद्गीता है, तद्वत् पद्यात्मक सिद्धान्तशिखामणि भी "रेणुकगीता" नाम से भी आख्यायित है।

यह भी ध्यातव्य है—भगवद्गीता के एकादश अध्याय में भगवान् श्रीकृष्ण ने अर्जुन को यथा विश्वरूप का दर्शन कराया था तद्वत् "सिद्धान्त शिखामणि

---

१. सिद्धान्तशिखामणिः, भा० १, पृ० १.
२. कोटित्रयं तु लिङ्गानां यथाशास्त्रं यथाविधि।
त्रिकोट्याचार्यरूपेण स्थापितं तेन तत्क्षणे।। (सि० शि० २१।२३, पृ० २२६)

श्रीमद्भगवद्गीतायास्तुल्यकोटिकेत्यत्र न कोऽपि सन्देहः।

ग्रन्थेऽस्मिन् एकविंशतिपरिच्छेदाः, तत्राहत्य चाष्टनवत्युत्तरत्रयोदशशत-(१३९८) श्लोकाः सन्ति। ग्रन्थस्य प्रथमतश्चतुर्थपरिच्छेदपर्यन्ते भागे तथैकविंशतिपरिच्छेदे च एकोनसप्तत्युत्तरद्विशत (२६९)- श्लोकेषु चारित्रिको विषयो वर्तते। पुनः पञ्चमपरिच्छेदाद्विंशतिपरिच्छेदपर्यन्तमेकोनत्रिंशदुत्तरैकादशशत (११२९) श्लोकेषु वीरशैवषट्स्थलसिद्धान्तः प्रतिपादितोऽस्ति। ग्रन्थोऽयं रेणुकागस्त्यसंवादः, रेणुकगीता, सिद्धान्तशिखामणिरिति नामत्रयेणापि व्यवह्रियते, अथापि 'सिद्धान्तशिखामणिः' इत्येवास्य प्रसिद्धं नाम।

### ग्रन्थनामरहस्यम्

तत्रभवान् शिवयोगिशिवाचार्यः स्वरचितस्य श्रीरेणुक-अगस्त्ययोः संवादात्मकस्य ग्रन्थस्य 'सिद्धान्तशिखामणिः' इति नामकरणमकरोत्। अत्राऽयं हेतुः-शिवोक्ताः कामिकादिवातुलान्ता अष्टाविंशत्यागमाः 'सिद्धान्तः' इति नाम्ना प्रसिद्धाः। अत एवाघोरशिवाचार्यः-'सिद्धान्त-शब्दः पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशतन्त्रेषु प्रसिद्धः'[१] इति निरूपयामास। तेषां

---

के एकविंशति (२१वें) परिच्छेद में विभीषण की प्रार्थना से युगपत् तीन करोड़ शिवलिङ्ग की संस्थापना हेतु श्रीरेणुक भगवत्पाद ने त्रिकोट्याचार्यस्वरूप को धारण कर विभीषण को विश्वरूप का दर्शन कराया था। एवं च रेणुकगीता, श्रीमद्भगवद्गीता की समतुल्य है—यह निःसन्दिग्ध है।

सिद्धान्तशिखामणि ग्रन्थ में २१ परिच्छेद हैं। सभी परिच्छेदों के श्लोकों का योग करने से १३९८ श्लोक हैं। ग्रन्थ के १-४ परिच्छेदों तथा २१वें परिच्छेद के कुल २६९ श्लोकों में चरित्रसम्बद्ध विषयों का वर्णन किया गया है। पुनश्च ५-२० परिच्छेदों में कुल ११२९ श्लोकों में वीरशैव के षट्स्थल सिद्धान्तों का प्रतिपादन किया गया है। यह ग्रन्थ तीन नामों से व्यवहृत होता है— (१) रेणुकागस्त्यसंवाद (२) रेणुकगीता एवं (३) सिद्धान्तशिखामणि। इनमें सर्वाधिक प्रसिद्धनाम "सिद्धान्तशिखामणि" है।

### ग्रन्थनामरहस्य

पूज्य शिवयोगी शिवाचार्य जी ने स्वरचित ग्रन्थ (रेणुक-अगस्त्यसंवाद) का नामकरण "सिद्धान्तशिखामणि" किया था। उसमें हेतु यह है— शिवप्रोक्त कामिक

---

१. रत्नत्रयम्, पृ० ५.

सिद्धान्तशब्दितशिवागमानामुत्तरभागे वीरशैवसिद्धान्तः प्रतिपादितोऽस्ति। तदुक्तं श्रीरेणुकभगवत्पादैः—

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्[1]।।इति।।

एवं सर्वेषां शैवसिद्धान्तानामुत्तरभागे शिखामणिरिव निरूपितस्य वीरशैवसिद्धान्तस्य सारोऽत्र श्रीमता शिवयोगिशिवाचार्येण संगृहीत इति ग्रन्थोऽयं 'सिद्धान्तानां शिखामणिः = सिद्धान्तशिखामणिः' इति व्युत्पत्तिसिद्धमन्वर्थं च नाम धारयति। तदेवोक्तं ग्रन्थकारेणापि—

सर्वेषां शैवतन्त्राणामुत्तरत्वान्निरुत्तरम्।
नाम्ना प्रतीयते लोके यत्सिद्धान्तशिखामणिः[2]।।इति।

---

प्रभृति वातुलपर्यन्त २८ आगमों का प्रसिद्ध एक नाम है— ''सिद्धान्त''। अतः अघोर शिवाचार्य ने सुस्पष्ट कहा है— सिद्धान्त शब्द, पङ्कज-प्रभृति शब्दों की तरह योगरूढ़ि द्वारा शिवरचित (उपदिष्ट) कामिकादि २८ तन्त्रों के वाचकरूप में प्रसिद्ध है। उन सिद्धान्तशब्द वाच्य शिवागमों के उत्तरभाग में वीरशैव सिद्धान्त प्रतिपादित है। श्रीरेणुकभगवत्पाद ने इस बात को स्वयं ही कहा है—

सिद्धान्ताख्ये महातन्त्रे............वीरशैवमतं परम् ।।१।।

एवञ्च सकल शैवसिद्धान्तों के उत्तरभाग में शिखामणिस्थानितया निरूपित वीरशैवसिद्धान्त-सारसर्वस्व इस सिद्धान्तशिखामणि ग्रन्थ में शिवयोगी शिवाचार्य जी ने संकलित किया है। अतः यह ग्रन्थ, सिद्धान्तानां शिखामणिः इस षष्ठीतत्पुरुष समासलभ्य व्युत्पत्ति सिद्ध ''सिद्धान्तशिखामणि'' (स्वानुरूप) नाम को धारण करता है। ग्रन्थकार ने भी स्वयं इस बात को प्रतिपादित किया है— सभी शैव तन्त्रों के उत्तरभाग में यह स्थित है। यह निरुत्तर अर्थात् सर्वश्रेष्ठ सिद्धान्त है। क्योंकि वीरशैवसिद्धान्त से उत्तर अर्थात् श्रेष्ठ कोई भी अन्य सिद्धान्त नहीं है। सर्वश्रेष्ठ सिद्धान्त होने से ही वीरशैव सिद्धान्त की सर्वसिद्धान्तों में शिखामणि स्थानीय श्रेष्ठता सिद्धान्तशिखामणि-नाम से ही प्रतिपादित हो जाती है।

---

१. सि० शि० ५।१४, पृ० ५७.
२. सि० शि० १।३१, पृ० १०.

## ग्रन्थकर्तुरैतिह्यं ग्रन्थनिर्माणकालश्च

तत्रभवता श्रीशिवयोगिशिवाचार्येण ग्रन्थारम्भे—

कश्चिदाचारसिद्धानामग्रणीः शिवयोगिनाम्।
शिवयोगीति विख्यातः शिवज्ञानमहोदधिः।।
तस्य वंशे समुत्पन्नो मुक्तामणिरिवामलः।
मुद्ददेवाभिधाचार्यो मूर्धन्यः शिवयोगिनाम्।।
तस्यासीन्नन्दनश्शान्तः सिद्धनाथाभिधः शुचिः।
शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः।।
तस्य वीरशिवाचार्यशिखारत्नस्य नन्दनः।
अभवच्छिवयोगीति सिन्धोरिव सुधाकरः[1]।।

इति स्ववंशवर्णनं कृतम्। एतावताऽयं शिवयोगिनः प्रपौत्रः, मुद्ददेवस्य पौत्रः, सिद्धनाथस्य च पुत्र इत्येव ज्ञायते। एतदतिरिक्तं न वा तस्य देशः, नापि कालोऽत्र निर्दिष्टः।

---

## सिद्धान्तशिखामणि-ग्रन्थकार का ऐतिह्य एवं ग्रन्थ-रचना-काल

पूज्य शिवयोगी शिवाचार्य जी ने ग्रन्थ के आरम्भ में स्ववंश का वर्णन किया है— आचारसिद्ध शिवयोगियों में अग्रणी तथा शिवज्ञान के महोदधितुल्य विलक्षण **शिवयोगी** नामक सिद्ध सुविख्यात थे। उनके वंश में निर्मल मुक्तामणिसदृश, शिवयोगियों में श्रेष्ठ **मुद्ददेव** नामक मूर्धन्य आचार्य उत्पन्न हुए थे। उनके पुत्र **सिद्धनाथ** संज्ञक शान्त एवं पवित्र शिवाचार्य थे जो शिवसिद्धान्तों का निर्णयकर्ता एवं लोक में शिवात्मरूप से वन्दनीय थे। यथा सिन्धु से सुधाकर **चन्द्र** की उत्पत्ति हुई तद्वत् सिद्धनाथ (वीर शिवाचार्यों में शिखारत्न के सदृश) के आत्मज **शिवयोगी** जी सर्वलोकश्लाघ्य एवं समस्त जनतापहर्ता के रूप में लोकवन्द्य थे।।१-४।।

उपर्युक्त वर्णन से यह विदित होता है कि सिद्धान्तशिखामणि के रचयिता शिवयोगी के प्रपौत्र थे, मुद्ददेव के पौत्र थे तथा सिद्धनाथ के पुत्र थे। इसके अतिरिक्ति ग्रन्थकार द्वारा स्वदेश अथवा काल का कुछ भी निर्देश नहीं किया गया है।

---

१. सि० शि० १।१३-२०, पृ० ५-७.

ग्रन्थकर्तुः शिवयोगिशिवाचार्यस्य प्रपितामहस्यापि नाम शिवयोगिशिवाचार्य इत्येवासीत्। लोके परिपाटिरियं वर्तते यत् पितामह-प्रपितामहादीनां नामानि तद्वंश उत्पन्नेभ्यः पुत्र-पौत्रेभ्यः पुनः प्रदीयन्ते। तद्वद् ग्रन्थकारः शिवयोगिशिवाचार्यः स्वप्रपितामहस्य नाम्नैवात्र प्रसिद्धिं जगाम।

सिद्धान्तशिखामणेस्तत्त्वप्रदीपिकाख्यसंस्कृतव्याख्याकारेण श्रीमता मरितोण्टदार्येण (ख्रि० १७००) ग्रन्थारम्भे-"अत्र कलिकालप्रवेशानन्तरं लोकहितार्थं रेणुकगणेश्वर इति प्रसिद्धो रेवणसिद्धेश्वरः कुम्भसम्भवाय वीरशैवशास्त्रमुपदिष्टवान्। तदनन्तरं रेवणसिद्धेश्वरदृष्टिगर्भसम्भूतसिद्धरामेश्वर-सम्प्रदायप्रसिद्धः सकलनिगमागमपारगः शिवयोगीश्वर इत्यभिधानवान् कश्चिद् माहेश्वरस्तद्रेणुकागस्त्यसंवादं निर्विघ्नेन स्वशिष्यान् बोधयितुं स्वमनसि कृतसकलसिद्धान्तश्रेष्ठनिगमागमैक्यगर्भीकारलक्षणस्वेष्टदेवतानमस्काररूपमङ्गलं शिष्यशिक्षार्थं सप्तभिः श्लोकैर्निबध्नाति"[1] इत्यवतरणिकायां ग्रन्थकारः

---

ग्रन्थकार शिवयोगिशिवचार्य के प्रपितामह का नाम भी स्वतुल्य शिवयोगिशिवाचार्य ही था। लोक में यह परिपाटी विद्यमान है कि पितामह-प्रपितामह इत्यादि के नाम, वंशोत्पन्न पुत्र-पौत्र प्रभृति में पुनः प्रदत्त होते हैं। तदनुसार प्रस्तुत ग्रन्थकार ने स्वप्रपितामह के शिवयोगिशिवाचार्य-नाम से ही प्रसिद्धि प्राप्त की थी।

सिद्धान्तशिखामणि की तत्त्वप्रदीपिका नामक संस्कृत व्याख्या के रचयिता श्रीमान् मरितोण्टदार्य (१७०० ई०) है। उन्होंने ग्रन्थारम्भ में अवतरणिका के माध्यम से "ग्रन्थकार शिवयोगिशिवाचार्य को जिस सोलापुर सिद्धरामेश्वर का वंशज कहा है, वह रेवणसिद्धेश्वर के वरप्रसाद से लब्धजन्मा थे।" ऐसा प्रतिपादन किया है। तद्यथा— इस भूलोक में कलिकाल के प्रविष्ट होने पर लोककल्याण के उद्देश्य से रेणुकगणेश्वर नाम से प्रसिद्ध रेवणसिद्धेश्वर ने कुम्भसम्भव महर्षि अगस्त्य को वीरशैवशास्त्र का उपदेश किया था। तदनन्तर रेवणसिद्धेश्वर-दृष्टिपूत श्रीसिद्धरामेश्वर सम्प्रदाय में प्राप्त सिद्धि श्री शिवयोगीश्वर नामक विलक्षण आचार्य सकल निगमागमों के पारावारीण विद्वान् एवं माहेश्वर यतिवर ने रेणुकागस्त्यसंवाद को निर्विघ्न रूप से स्वशिष्य- प्रबोधनार्थ स्वमनस् में आचरित सकल सिद्धान्तों में श्रेष्ठ निगमागम संवादित सिद्धान्तरत्न से अन्वित इष्टदेवता नमस्कारात्मक मङ्गल

---

१. सि० शि०, भा० १, पृ० १-२.

शिवयोगिशिवाचार्यो रेवणसिद्धेश्वरवरप्रसादेन समुत्पन्नस्य सोल्लापुरसिद्धरामेश्वरस्य वंशज इति प्रतिपादितम्।

अत्रेदमवधेयम्–तत्र तावन्महाराष्ट्रप्रान्ते 'सोल्लापुरम्' इति सुप्रसिद्धं पत्तनमेकं वर्तते। तत्पत्तनस्थमुद्दगौड–सुग्गलादेव्योर्दम्पत्योः षष्टिवर्षे वयसि श्रीरेवणसिद्धेश्वराख्यस्य वीरशैवाचार्यस्याशीर्वादविशेषेण सिद्धरामेश्वराख्यः पुत्रः संजातः। स चाग्रे सिद्धरामशिवयोगीति नाम्ना ख्रि० १२०० तमाब्दे प्रसिद्ध आसीत्।[१] स च कन्नडभाषायां स्वानुभवपद्यानि लिलेख। तान्यधुना 'सिद्धरामेश्वरवचनगलु' इति नाम्ना प्रथितानि सन्ति। श्रीमरितोण्टदार्यः (ख्रि० १७००) सिद्धान्तशिखामणेर्व्याख्यानावसरे कविवंशे समागतं 'मुद्दवेवः' इति नाम दृष्ट्वा, स च पूर्वोक्तसिद्धरामेश्वरस्य पिता मुद्दगौड एव स्यादिति निर्णीय–

तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः।
शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः[२]।।

इत्यस्य श्लोकस्य व्याख्यायाम्–"तस्य मुद्ददेवस्य........सिद्धनाथाभिधः सिद्धरामेश्वराभिधासंयुक्तः सिद्धनाथाचार्याख्यो नन्दनः कुमार आसीदभवदित्यर्थः"[३]

---

को शिष्य शिक्षार्थ सात श्लोकों में विभाजित कर उसे ग्रन्थादि में उपनिबद्ध किया है— ऐसा प्रतिपादन संस्कृत व्याख्याकार ने किया है। यहाँ ध्यातव्य है कि महाराष्ट्र प्रदेश में सोलापुर नामक सुप्रसिद्ध पत्तन है। उसके निवासी मुद्दगौड एवं सुग्गला देवी दम्पति ने ६० वर्ष की वय में श्री रेवण सिद्धेश्वर नामक वीरशैवाचार्य के आशीर्वाद से सिद्धरामेश्वर नामक पुत्ररत्न को प्राप्त किया था। आगे चलकर यही बालक सिद्धशिवरामयोगी के नाम से १२०० ई० समकाल में विश्रुत हुआ। इन्होंने कन्नडभाषा में स्वानुभूतिमय पद्यों का निर्माण किया। वह पद्य आज "सिद्धरामेश्वर वचनगलु" नाम से प्रसिद्ध हैं। १७०० ईसवीय समकालिक श्रीमरितोण्टदार्य ने सिद्धान्तशिखामणि की व्याख्या के प्रसङ्ग में कविवंश में समागत "मुद्ददेव" नाम को देखकर वह मुद्ददेव, सिद्धरामेश्वर के पिता मुद्दगौड से अभिन्न हैं ऐसा निश्चय कर— तस्यासीन्नन्दनः.....शिवाचार्यः शिवात्मकः।।१।। इस श्लोक की व्याख्या में कहा है— उस मुद्ददेव के सिद्धनाथ संज्ञक अर्थात्

---

१. 'सिद्धरामशिवयोगि' एम्० बी० कोट्रशेट्टिविरचितः कन्नडशोधप्रबन्धः, पृ० ६९–८५, कर्नाटक० वि० वि० प्रकाशनम्, १९७५ ई०।
२. सि० शि० १।१७, पृ० ६.
३. सि० शि० तत्त्व० १।१७, पृ० ६–७.

इति मुद्ददेवस्य पुत्रं सिद्धनाथं सिद्धरामेश्वर इति व्याख्याय, पुनः–

तस्य वीरशिवाचार्यशिखारत्नस्य नन्दनः।
अभवच्छिवयोगीति सिन्धोरिव सुधाकरः[१]।।

इति श्लोकव्याख्याने च–"सिद्धनाथाचार्यस्य नन्दनः कुमारः सिन्धोः समुद्रस्य सुधाकर इव शिवयोगीत्यासीत् प्रसिद्धो जात इत्यर्थः"[२] इति सिद्धरामेश्वराभिधस्य सिद्धनाथस्य पुत्रोऽयं शिवयोगिशिवाचार्य इत्यवधार्य शिवयोगिशिवाचार्यं सिद्धरामेश्वरवंशोत्पन्नत्वेन प्रतिपादितवान्।

एवमनया मरितोण्टदार्योक्त्या सिद्धान्तशिखामणेः कालो द्वादशशताब्दीय–सिद्धरामेश्वर–बसवेश्वरादिभ्योऽर्वाचीन इति प्रतीयते; किन्तु कविकालवंश–विषयको मरितोण्टदार्यस्य पक्षो न क्षोदक्षम इति वीरशैवविदुषामाशयः।

तत्र डॉ० ज० च० नि० महाभागाः–"मरितोण्टदार्यवचनानुसारेण मुद्ददेवस्य पुत्रः सिद्धनाथ एव सिद्धरामेश्वरः, तत्पुत्रश्च शिवयोगिशिवाचार्य इत्यङ्गीकर्तुं न शक्यते। यतो हि सोल्लापुरसिद्धरामेश्वरस्त्वविवाहितः। विनैव

---

सिद्धरामेश्वर नाम से युक्त सिद्धनाथाचार्य नामक नन्दन अर्थात् कुमार (पुत्र) उत्पन्न हुए थे। इस अर्थ को बताने के अनन्तर निष्कर्ष व्याख्यान यह प्राप्त हुआ कि मुद्ददेव के पुत्र सिद्धनाथ-सिद्धरामेश्वर थे। तदनन्तर- तस्य वीरशिवाचार्य......... सिन्धोरिव सुधाकर;।।१।। श्लोक की व्याख्या करते हुए उन्होंने सुधाकर के समान शिवयोगी सर्वलोक में प्रसिद्ध हुए थे। अतः सिद्धरामेश्वर संज्ञक सिद्धनाथ के पुत्र शिवयोगिशिवाचार्य हैं ऐसा निश्चय करके उन्होंने शिवयोगिशिवाचार्य को सिद्धरामेश्वर-वंशोत्पन्न कहा है।

इस प्रकार मरितोण्टदार्य की उपर्युक्त उक्ति से सिद्धान्तशिखामणि का रचनाकाल, १२वीं ई० शताब्दी के सिद्धरामेश्वर एवं बसवेश्वर प्रभृति से अर्वाचीन है— ऐसा प्रतीत होता है। किन्तु कविकाल एवं कविवंश से सन्दर्भित मरितोण्टदार्य का पक्ष क्षोदक्षम नहीं है- यह वीरशैव-विद्वज्जन का आशय है।

इस सन्दर्भ में डा० ज. च. नि. महोदय का मन्तव्य है— मरितोण्टदार्य-वचन को प्रमाण मानकर मुद्ददेव के पुत्र सिद्धनाथ ही सिद्धरामेश्वर हैं तथा उनके

---

१. सि० शि० १।२०, पृ० ७.
२. सि० शि० ततत्व० १।२०, पृ० ७.

विवाहं कथं पुत्रसम्भवः? यदि सिद्धरामेश्वर एव शिवयोगिशिवाचार्यस्य पिता स्यात्, तर्हि शिवयोगिशिवाचार्यः स्वपितुर्नामोल्लेखने 'सिद्धरामः' इत्येव वक्ष्यति स्म, न तु 'सिद्धनाथः' इति। न च छन्दोभङ्गशङ्कालवलेशोऽपि। तथाहि– 'तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः' इति वक्तव्ये 'तस्यासीन्नन्दनः शान्तः सिद्धरामाभिधः शुचिः' इति वक्तुं शक्यते स्म। किञ्च, सोल्लापुरसिद्धरामेश्वरस्य पितुर्नाम मुद्दगौडः, न तु मुद्ददेवः। अतः किञ्चिन्नामसाम्येन नैवं वक्तुं योग्यम्।

यदि च शिवयोगीति प्रसिद्ध आचार्य एव सिद्धरामेश्वरः, स च ग्रन्थकारस्य प्रपितामह इत्युच्यते, तर्हि तदप्ययुक्तम्; यतो हि शिवयोगिशिवाचार्यो ग्रन्थलेखनावसरे–

**आलोक्य शैवतन्त्राणि कामिकाद्यानि सादरम्।**
**वातुलान्तानि शैवानि पुराणान्यखिलानि तु[१]।।**

इत्यादिश्लोकानुक्त्वा स्वप्रपितामहस्य वचनशास्त्रमपि दृष्टवानिति वक्ष्यति स्म; तन्नोक्तम्, अतः शिवयोगीति विख्यातो ग्रन्थकारवंशमूलपुरुषोऽपि न सोल्लापुरसिद्धरामेश्वरः। तदेवं ग्रन्थारम्भे शैवागमानां पुराणानां च

---

पुत्र शिवयोगिशिवाचार्य हैं- ऐसा स्वीकार नहीं किया जा सकता। कारण यह है— सोलापुर के सिद्धरामेश्वर अविवाहित थे। विवाह के बिना पुत्र-सम्भावना कैसे हो सकती है। दूसरी बात यह है कि सिद्धरामेश्वर ही शिवयोगिशिवाचार्य के पिता होते तो ग्रन्थकार अपने पिता का नामोल्लेख "सिद्धराम" करते न कि "सिद्धनाथ" कहते। छन्दोभङ्ग का भी कोई प्रसङ्ग नहीं था। तद्यथा- "तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः।" के स्थान पर "तस्यासीन्नन्दनः शान्तः सिद्धरामाभिधः शुचिः" ऐसा कहा जा सकता है। तीसरी बात यह है कि सोलापुर सिद्धरामेश्वर के पिता का नाम मुद्दगौड था न कि मुद्ददेव। अतः थोड़ा सा नामसाम्य होने मात्र से कल्पना का ताना-बाना नहीं बुना जा सकता। यदि ऐसा कहे कि शिवयोगी नाम से प्रसिद्ध आचार्य ही सिद्धरामेश्वर थे। वह ग्रन्थकार के प्रपितामह थे। तो ऐसा भी नहीं कहा जा सकता। कारण यह है- शिवयोगिशिवाचार्य ग्रन्थलेखन के अवसर पर यद्वत् **आलोक्य शैवतन्त्राणि...... पुराणान्यखिलानि तु** ।।१।। इत्यादि श्लोकों का उल्लेख किया है तद्वत् अपने पितामह के वचनशास्त्र

---

१. सि० शि० १।२५, पृ०.८.

नामोल्लेखनेन वचनशास्त्रस्य चानुल्लेखनेनाऽयं सिद्धान्तशिखामणिकारः शिवयोगिशिवाचार्यो वचनशास्त्रकर्तृभ्यः सिद्धरामेश्वर-बसवेश्वरादिभ्योऽपि प्राचीन इत्यवधार्यते।

अपि च शिवयोगिशिवाचार्यः स्ववंशावल्यां ग्रामस्य मातुर्वा नाम नोक्तवान्। अतोऽस्य वंशक्रमो न गृहस्थाश्रमिक; अपि त्वौत्तराश्रमिकाचार्यपरम्परानुवर्तीति सम्भावयितुं शक्यते। अपरं च-

**येन रक्षावती जाता शिवभक्तिः सनातनी।**
**बौद्धादिप्रतिसिद्धान्तमहाध्वान्तांशुमालिना[1]।।**

इत्यनेन श्लोकेन शिवयोगिशिवाचार्यस्य समये बौद्धाद्यवैदिकधर्माणामधिकः प्रसार आसीत्, तन्निरासायैवाऽयं ग्रन्थमिमं प्रणिनायेति ज्ञायते। द्वादशाब्दीयसिद्धरामेश्वर-बसवेश्वरादिसमये कर्णाटकप्रदेशे बौद्धमतप्राबल्यं

---

को भी उन्होंने पढ़ा-देखा था- ऐसा कहे होते। किन्तु ऐसा उन्होंने कहा नहीं। अत: शिवयोगी नाम से विख्यात आचार्य ही सोलापुर सिद्धरामेश्वर थे।

निष्कर्षत: यह कहा जा सकता है कि ग्रन्थ के आरम्भ में शैवागमों एवं पुराणों का नामोल्लेख किया गया है किन्तु वचनशास्त्र का अनुल्लेख है एतावता सिद्धान्त-शिखामणिकार शिवयोगी शिवाचार्य, वचनशास्त्ररचयिता सिद्धरामेश्वर एवं बसवेश्वर प्रभृति विद्वज्जन से प्राचीन हैं— यह निर्णय समीचीन प्रतीत होता है।

यह भी ध्यातव्य है— शिवयोगी शिवाचार्य ने अपनी वंशावली में निजग्राम एवं माँ का नालोल्लेख नहीं किया है। अत: इनका वंशक्रम गृहस्थाश्रम पर आधारित न माना जाय प्रत्युत उत्तराश्रम पर आधारित आचार्य परम्पराश्रित वंशक्रम की सम्भावना बलवती हो उठती है।

सिद्धान्तशिखामणि के अन्त:साक्ष्यभूत "येन रक्षावती जाता.......महाध्वान्तांशु-मालिना"।।१।। श्लोक से विदित होता है कि शिवयोगि शिवाचार्य के समकाल में बौद्धादि अवैदिक धर्मों का अधिक प्रचार-प्रसार था। उनके निरासहेतु ही शिवाचार्य ने इस ग्रन्थ का प्रणयन किया था। यह इस श्लोक से विदित होता है। १२वीं शताब्दी के सिद्धरामेश्वर तथा बसवेश्वर प्रभृति के समकाल में कर्नाटक प्रदेश में बौद्धमत का प्राबल्य था ही नहीं। अत: कवि शिवयोगी सिद्धराम, बसवेश्वर प्रभृति शिवशरणों से प्राचीन थे— इस वक्तव्य में कोई कठिनाई नहीं है।

---

१. सि० शि० १।२[२], पृ० ८.

नासीदेव। तस्मादयं कविः सिद्धराम-बसवेश्वरादिशिवशरणेभ्यः प्राचीन इति वक्तव्ये न किमपि काठिन्यम्[१]।

मैसूरास्थानविद्वान् प० एन्० आर्० करिबसवशास्त्री–"ग्रन्थस्यास्य कर्ता शिवयोगिशिवाचार्यः पीठिकायां स्ववंशानुक्रमं प्रतिपादितवान्। तावता तस्य कः कालः? को वा देश इति न स्पष्टमवगम्यते। सोल्लापुरसिद्धरामेश्वरस्य वंशज इति कथने न किञ्चित् प्रबलं प्रमाणम्। तथाप्ययं ग्रन्थो बसवादिभ्यः प्राचीनः"[२] इत्युक्त्वा पूर्वोक्तस्य मरितोण्टदार्यवचनस्यानौचित्यं सूचयन् स्वसूक्ताभिप्रायं प्रकटितवान्।

### ग्रन्थकालनिर्णये श्रीदासगुप्तानामनवधानता

सिद्धान्तशिखामणेः कालनिरूपणावसरे डॉ० एस्० एन्० दासगुप्तमहाभागाः–"सिद्धान्तशिखामणौ बसवेश्वरस्योल्लेखो वर्तते, श्रीपतिश्च स्वकीयश्रीकरभाष्ये सिद्धान्तशिखामणिं प्रमाणत्वेनोल्लिखितवान्। अतः

---

मैसूर के आस्थान विद्वान् पं. एन.आर. करिबसवशास्त्री का कथन है—"सिद्धान्तशिखामणि ग्रन्थ के रचयिता शिवयोगिशिवाचार्य ने पीठिका में निजवंशानुक्रम को बतलाया है। तावन्मात्र से ग्रन्थकार के स्थितिकाल अथवा देश की स्पष्टप्रतिपत्ति नहीं हो पाती। इसके अतिरिक्त सोलापुर सिद्धरामेश्वर का वंशज ऐसा कहने में कुछ भी प्रबल प्रमाण नहीं है। परञ्च शास्त्री जी ने इस ग्रन्थ को बसवादि विद्वज्जन से प्राचीन होने की बात बतायी है। ऐसे कथन से पूर्वोक्त मरितोण्टदार्य के अनौचित्य की सूचना देते हुए उन्होंने स्वसूक्ताभिप्राय को प्रकाशित किया है।

### ग्रन्थ-निर्माण-काल के निर्धारण में श्रीदासगुप्त की असावधानी

सिद्धान्तशिखामणि के रचनाकाल-निरूपण के अवसर पर डा. एस. एन. दासगुप्त महोदय ने कहा है कि— सिद्धान्तशिखामणि ग्रन्थ में बसवेश्वर का नामोल्लेख है। अथ च श्रीपति ने अपने श्रीकरभाष्य में सिद्धान्तशिखामणि को प्रमाणरूप से उल्लिखित किया है। इससे प्रमाणित होता है कि सिद्धान्तशिखामणि की रचना बसवेश्वर के पश्चात् तथा श्रीपति से पूर्वकाल में की गई है। इस प्रकार

---

१. डॉ० ज० च० नि० कृता कन्नडमणिकान्तिपीठिका, पृ० १६-२०; सन्मार्गपुस्तकमाला निडुमामिडि० १९५१ ई०।

२. सि० शि० कन्नडप्रस्तावना, पृ० ५, ग्रन्थप्रसारमण्डली, मैसूर १९२१ ई०।

सिद्धान्तशिखामणिर्बसवेश्वरादनन्तरं श्रीपतेश्च प्राग् निर्मितः स्यात्"[१] इति तर्कद्वयं समुपस्थापितवन्तः। तयोर्मध्ये श्रीपतिः श्रीकरभाष्ये सिद्धान्तशिखामणेः श्लोकान् प्रमाणत्वेनोल्लिखितवानित्ययं ग्रन्थः श्रीपतेरपि प्राक्तन इति तर्कस्य सत्यत्वेऽपि सिद्धान्तशिखामणौ बसवेश्वरस्योल्लेखो वर्तते, अतोऽयं बसवेश्वरादर्वाचीन इति तर्कस्तु प्रमादपूर्णः प्रतिभाति। तथाहि श्रीदासगुप्ताः– "शिवनिन्दकस्य वध आवश्यक इति बसवेश्वरविचारः सिद्धान्तशिखामणावुल्लिखितः"[२] इत्युक्त्वा तत्प्रमाणत्वेन–अथ वीरभद्राचार-बसवेश्वराचारं सूचयन् भक्ताचारभेदं प्रतिपादयति–

शिवनिन्दाकरं दृष्ट्वा घातयेदथवा शपेत्।
स्थानं वा तत् परित्यज्य गच्छेद् यद्यक्षमो भवेत्[३]।।

इति सिद्धान्तशिखामणेरंशमुदाहृतवन्तः। उद्धृतांशे बसवेश्वरस्योल्लेखो न मूलग्रन्थेऽस्ति किन्तु टीकाकारस्य श्रीमरितोण्टदार्यस्यावतरणिकायां वर्तते।

---

दो तर्कों को आपने उपस्थापित किया है। दन दो तर्कों में प्रथम तर्क सत्य है। तदनुसार श्रीपतिने श्रीकरभाष्य में सिद्धान्तशिखामणि के श्लोकों को प्रमाणरूप से उल्लेख किया है अतः यह ग्रन्थ श्रीपति से भी प्राचीन है। किन्त दूसरा तर्क प्रमादपूर्ण है। जिसमें बताया जाता है कि सिद्धान्तशिखामणि में बसवेश्वर का उल्लेख है इसलिये शिखामणिकार बसवेश्वर से अर्वाचीन हैं। यह कैसे प्रमादपूर्ण तर्क है— इसे समझना आवश्यक है। श्रीदासगुप्त जी ने यह कहा कि शिवनिन्दक का वध आवश्यक है यह बसवेश्वर का विचार है तथा शिखामणि में उल्लिखित है। इस कथन में प्रमाण देने हेतु कहा कि "अथ वीरभद्राचार-बसवेश्वराचारं सूचयन् भक्ताचारभेदं प्रतिपादयति— शिवनिन्दाकरं ...... गच्छेद् यद्यक्षमो भवेत्॥१॥ अवतरणिका के साथ शिखामणि ग्रन्थ के वचन को प्रमाण माना जा सकता है। दासगुप्त महोदय द्वारा उद्धृत अंश में बसवेश्वर का नामोल्लेख मूलग्रन्थ में प्राप्त नहीं है। टीकाकार मरितोण्टदार्य की अवतरणिका में नामोल्लेख है।

यहाँ ध्यान देने योग्य बात यह है— शिवनिन्दाकरं दृष्ट्वा - इत्यादि मूलस्थ श्लोक (उपर्युक्त) में वीरशैव-सम्मत पञ्चाचार के अन्तर्गत गणाचार का स्वरूप

---

1. A History of Indian Philosophy, Vol. 5, P. 44.
२. तत्रैव Vol 5, P. 45.
३. सि० शि० ९।३६, पृ० १४८.

अत्रेदमवधेयम्–उपर्युक्त–श्लोके वीरशैवाभिमतः[१] पञ्चाचारान्तर्गतो गणाचारस्वरूप उपवर्णितः, अर्थाच्छिवभक्तो यदि सक्षमस्तर्हि शिवनिन्दको दृष्टश्चेत् तं शपेदथवा घातयेत्। शिवभक्तेन न कदापि शिवनिन्दा श्रोतव्येति हि गणाचारस्वरूपमत्र निदर्शितम्। तत्र श्लोकस्यास्य व्याख्यानावसरे श्रीमरितोण्टदार्योऽवतरणिकायां श्रीवीरभद्रस्य श्रीबसवेश्वरस्य च नाम दृष्टान्तत्वेनोदाहृतवान्।

अस्यायं भावः– यथा हि शिवापमानकारकं दक्षब्रह्मणो यागं दृष्ट्वा श्रीवीरभद्रस्तद्यागं तं च विनाशितवान्, यथा वा बिज्जलभूपते राजधान्यां कल्याणनगर्यां राजभटैः साकं शिवभक्तानां कलहे सञ्जाते सति तत्र राजभटैः क्रियमाणं बहूनां शिवभक्तानां हिंसाकृत्यं दृष्ट्वा तदसहमानः शिवभक्तो बसवेश्वरो बिज्जलभूपतेः प्रधानमन्त्रिपदं त्यक्त्वा बीजापुरमण्डलान्तर्गत-सङ्गमक्षेत्रमगच्छत्, तथा शिवभक्तः सक्षमश्चेद् वीरभद्रवत् शिवनिन्दकं

---

प्रतिपादित किया गया है। श्लोकार्थ है— शिवभक्त यदि समर्थ है तो शिवनिन्दक को देखते ही उसे प्रताड़ित अथवा आहत करे। यदि ऐसा करने में असमर्थ हो तो अपने कानों को बन्द कर ले और उस स्थान को परित्याग कर अन्यत्र चला जाय। आशय यह है कि शिवभक्त किसी भी परिस्थिति में शिवनिन्दा का श्रवण नहीं करे - यह गणाचार का स्वरूप है जिसका निर्देश इस श्लोक में किया गया है। इस श्लोक का व्याख्यान करते हेतु अवतरणिका में श्रीमरितोण्टदार्य ने श्रीवीरभद्र एवं श्रीबसवेश्वर का नाम दृष्टान्त-विधि से उदाहृत किया है।

इस प्रकरण की विशदता के साथ यह भावार्थ है— जिस प्रकार दक्षप्रजापति के शिवापमानकारक याग को देखकर श्री वीरभद्र जी ने उस याग एवं दक्ष का विनाश किया तद्वत् बिज्जलभूपति की राजधानी कल्याण नगरी में राजभट (सिपाहियों) के साथ शिवभक्तों का कलह होने पर वहाँ राजभटों द्वारा बहुत सारे शिवभक्तों के हिंसा कृत्य को देखकर उसका सहन नहीं कर पाने से शिवभक्त श्री बसवेश्वर ने बिज्जलभूपति के प्रधानमन्त्री पद का त्याग कर बीजापुर जिले के सङ्गमक्षेत्र में चले गये। एवञ्च समर्थ शिवभक्त, वीरभद्र की तरह शिवनिन्दक का हनन करे यदि असमर्थ है तो श्री बसवेश्वर की तरह जहाँ

---

१. लिङ्गाचारः सदाचारः शिवाचारस्तथैव च।
भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः।। (चन्द्रज्ञाना० क्रियापादः, ९।४)

घातयेत्, यदि चाक्षमस्तर्हि श्रीबसवेश्वरवत् तत्स्थानं परित्यजेदिति गणाचारस्य दृष्टान्तत्वेन श्रीवीरभद्राचारः श्रीबसवेश्वराचारश्चोदाहृतः।

तदेवं श्रीबसवेश्वरस्य नामोल्लेखः किं मूलग्रन्थेऽस्ति, उत टीकाकार-कृतावतरणिकायामिति सम्यगपर्यालोच्यैव डॉ. एस्. एन. दासगुप्तमहाभागस्य प्रतिपादनं दृष्ट्वा कथं वा पर्यालोचका न परिहसेयुः। अतः सिद्धान्तशिखा-मणिर्बसवेश्वरादर्वाचीन इति श्रीदासगुप्तवचनं प्रमाणशून्यं प्रमादपूर्णञ्चास्ति।

एतदतिरिक्तं श्रीदासगुप्तानामपरोऽपि प्रमादः प्रदर्श्यते। श्रीबसवेश्वरः स्वबाल्यावस्थायां विशेषशिक्षणार्थं बिज्जलभूपतेः प्रधानमन्त्रिणः स्वमातुलस्य श्रीबलदेवस्यान्तिकमाजगामेतीतिहासो वर्तते। बिज्जलभूपस्य राजधानीत्वेन प्रसिद्धं कल्याणनगरं कर्णाटकप्रान्तस्य बोदरमण्डलेऽस्ति। एतदितिहासमपर्यालोच्यैव डॉ० एस० एन्० दासगुप्तमहाभागाः–"श्रीबसवेश्वरो बाल्यावस्थायामेव स्वजन्मस्थानाद् 'बागेवाडी' तो बम्बईसमीपस्थं कल्याणनगरं जगाम, यत्र हि ख्रि० ११५७–११६७ पर्यन्तं बिज्जलभूपतेः प्रशासनमासीत्, पुनर्यत्र च श्रीबलदेवस्य रुग्णावस्थायां तत्स्थाने श्रीबसवेश्वरः प्रधानमन्त्रित्वेन नियुक्तोऽभूत्"[१] इति कल्याणनगरं

---

शिवनिन्दा का प्रसङ्ग हो उस स्थान का परित्याग करे— अतः गणाचार के दृष्टान्त रूप में श्री वीरभद्राचार एवं श्री बसवेश्वराचार का उदाहरण प्रस्तुत किया गया है।

एवञ्च श्री बसवेश्वर का नामोल्लेख मूल ग्रन्थ में है अथवा टीकाकार की अवतरणिका में है- इस बात का ध्यानपूर्वक पर्यालोचन किये बिना ही डा. एस. एन. दासगुप्त द्वारा प्रतिपादन किया गया है। ऐसे प्रतिपादन को देखकर समीक्षक पर्यालोचक लोग परिहास क्यों नहीं करेंगे। अतः सिद्धान्तशिखामणि, बसवेश्वर से अर्वाचीन है- ऐसा श्री दासगुप्त का वचन प्रमाणशून्य एवं प्रमादपूर्ण है।

इसके अतिरिक्त श्रीदासगुप्त जी का दूसरा प्रमाद भी दिखाया जा रहा है— श्रीबसवेश्वर अपनी बाल्यावस्था में विशेष शिक्षण हेतु बिज्जल नरेश के प्रधानमन्त्री अपने मातुल (मामा) श्री बलदेव के पास आये थे यह इतिहास सत्य है। बिज्जल नरेश की राजधानी रूप से प्रसिद्ध कल्याणनगर, कर्नाटक प्रदेश के 'बीदर' जिला में स्थित है। ऐसे इतिहास की पर्यालोचना के बिना ही डा. एस. एन. दासगुप्त महोदय ने कह डाला- "श्री बसवेश्वर बाल्यावस्था में ही अपने जन्मस्थान 'बागेवाडी' से बम्बई समीपस्थ कल्याणनगर चले गये; जहाँ १९५७-१९६७ तक बिज्जल नरेश का प्रशासन था। पुनश्च वहीं पर श्री बलदेव के रुग्ण हो जाने

बम्बईसमीपस्थमुपवर्णितवन्तः। बिज्जलभूपतेः शासनं बम्बईसमीपस्थकल्याणनगर आसीदिति श्रीदासगुप्तवचनं श्रुत्वा कस्य वेतिहासज्ञस्य मनसि खेदो न सञ्जायेत। एवमेवान्यदर्शनेतिहासविषयेऽपि तेषां लेखनी कियत् तथ्यं प्रतिपादितवतीति तत्तत्सम्प्रदायविद्वांस एव जानन्तु। तस्मात् सिद्धान्तशिखामणेः कालविषये 'ग्रन्थोऽयं बसवेश्वरादर्वाचीनः' इति दासगुप्तोक्तिर्न स्वीकारार्हा।

अपरञ्च–

**प्रसादाद् देवताभक्तिः प्रसादो भक्तिसम्भवः।**
**यथैवाङ् कुरतो बीजं बीजतो वा यथाङ्कुरः[२]।।**

'.....आप जिस पर प्रसन्न हैं, वही धन्य है, जग में पावन है; कूडलसंगमदेव[१]।' इत्यस्मिन् श्रीबसवेश्वरवचने प्रमाणत्वेनोदाहृतः संस्कृतश्लोकः

---

पर उनके स्थान पर श्री बसवेश्वर प्रधानमन्त्री पद पर नियुक्त किये गये।'' ऐसा कहकर उन्होंने राजधानी कल्याणनगर को बम्बई के पास में बता दिया। बिज्जल नरेश का शासन बम्बई के पास कल्याणनगर में था- ऐसा दासगुप्त-वचन सुनकर इतिहासवेत्ता का खिन्न होना स्वाभाविक होगा। इसी प्रकार अनर्गल प्रलाप को उगलने वाली उनकी लेखनी, अन्य दर्शनों के इतिहास में भी तथ्य का याथातथ्येन उपस्थापन कर सकी होगी- इसको सम्प्रदायविद् (भिन्न-भिन्न दर्शनों के) ही बतायेंगे।

अतः सिद्धान्तशिखामणि के रचनाकाल-निर्धारण में ''सिद्धान्तशिखामणि-ग्रन्थ बसवेश्वर से अर्वाचीन है'' ऐसी दासगुप्त की उक्ति कथमपि स्वीकार्य नहीं है। सिद्धान्त- शिखामणि, बसवेश्वर से प्राचीन है— इस पक्ष में साक्ष्य प्रस्तुत करने हेतु अपरञ्च इत्यादि पक्तियों का उल्लेख किया गया है। तद्यथा- कूडलसंगमदेव जी ने ''बसवेश्वर के वचन'' ग्रन्थ में सिद्धान्त शिखामणि के श्लोक को प्रमाणरूप से उद्धृत करते हुए लिखा है—

**प्रसादाद् देवताभक्तिः ........यथाङ्कुरः ।।१।।**

आप जिस पर प्रसन्न हैं, वही धन्य है, जग में पावन है। ''बसवेश्वर के वचन'' ग्रन्थ में प्रमाण रूप से उल्लिखित उपर्युक्त श्लोक सिद्धान्तशिखामणि के नवम परिच्छेद का ग्यारहवाँ श्लोक है। अतः सिद्धान्तशिखामणि, बसवेश्वर से

---

1. A History of Indian Philosophy, vol. V. P. 42. Cambridge University Press, 1955.
२. सि० शि० ९।११, पृ० १४०, यद्यप्यत्र 'प्रसादादेव सा भक्तिः' इति वर्तते; तथापि स पाठभेदो भवितुमर्हति।

सिद्धान्त-शिखामणेर्नवमपरिच्छेदस्यैकादशश्लोको वर्तते। तस्मात् सिद्धान्तशिखामणिर्बसवेश्वरात् प्राचीन इत्यत्रोपर्युक्तं श्रीबसवेश्वरस्य वचनमेव प्रबलं प्रमाणम्।

अपि च श्रीदेवरदासिमय्य-बसवेश्वर-अक्कमहादेवी-अल्लमप्रभुदेव-प्रभृतीनां द्वादशशताब्दीयवीरशैववचनकाराणामुपरि सिद्धान्तशिखामणेः प्रभाव आसीदिति डॉ० ज० च० नि० महाभागाः सोदाहरणं प्रतिपादितवन्तः[2]। तस्मात् सर्वविधपर्यालोचनेनेदं ज्ञायते यत् सिद्धान्तशिखामणिर्बसवेश्वरादिशरणयुगात् प्रागेव प्रमाणत्वेन प्रसिद्ध आसीदिति।

**श्रीकरभाष्यात् सिद्धान्तशिखामणेः प्राचीनत्वम्**

ननु सिद्धान्तशिखामणिर्बसवेश्वरात् प्राचीन इति तु निश्चितम्, किन्तु ततः कियत् प्राचीनमिति जिज्ञासायामुच्यते। तत्रभवन्तः श्रीपतिपण्डिताराध्यभगवत्पादाः श्रीकरभाष्ये-"पवित्रं ते'[3] इति ऋग्वेदमन्त्रस्य-

---

प्राचीन है- तथ्य निर्धारण में उपर्युक्त वचनग्रन्थ ही प्रबल प्रमाण है।

शिखामणि ग्रन्थ के प्राचीन होने में अन्य प्रमाण भी हैं। १२वीं शताब्दी के वीरशैववचनकार श्री देवरिदासमय्य, बसवेश्वर, अक्कमहादेवी एवं अल्लमप्रभुदेव आदि विद्वज्जन सिद्धान्तशिखामणि ग्रन्थ से प्रभावित थे— ऐसा डा. ज.च.नि. महाशय ने सोदाहरण प्रतिपादित किया है।

इस प्रकार उपर्युक्त सर्वविध पर्यालोचना के आधार पर विदित होता है कि सिद्धान्तशिखामणि, बसवेश्वरादि शरणयुग से पूर्वकाल में ही प्रमाणरूप से प्रसिद्ध हो चुका था।

**सिद्धान्तशिखामणि, श्रीकरभाष्य से प्राचीन है।**

इसके पूर्व किये गये विवेचन से शिखामणि का बसवेश्वर से प्राचीन होना वर्णित हो चुका है। अब जिज्ञासा उदित होती है- कितना प्राचीन? उसका समाधान आगामी विवेचन से सापेक्ष है। पूज्य भगवत्पाद श्रीपति पण्डिताराध्य अपने

---

१. 'बसवेश्वर के वचन' भा०१, पृ०१०७. कर्नाटकविश्वविद्यालय-प्रकाशनम्, १९७६ ई०।

२. मणिमकुरप्रभायाः कन्नडभाषाया अनुबन्धः, पृ० ११७-१२०, सम्पादकः पञ्चाक्षरी हिरेमठः, ताराग्रन्थप्रकाशनम्, धारवाड़ १९७६ ई०।

३. पवित्रं ते विततम् (ऋ० ९.८३.१).

ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते।
तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमनामयम्।।
.......................................................
दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तमम्[१]।।

इति सिद्धान्तशिखामणौ श्रीरेणुकाचार्येण लिङ्गधारणपरत्वेन निर्देशात्"[२] इत्याद्यनेकस्थलेषु सिद्धान्तशिखामणेः श्लोकान् सादरं प्रमाणत्वेनोपस्थापितवन्तः। एतेन श्रीपतेरपि प्रागयं ग्रन्थः प्रामाणिकत्वेन प्रसिद्ध आसीदिति सुनिश्चितम्।

श्रीपतिपण्डिताराध्यस्य कालविषये कश्चन विवादो वर्तते। तदेवात्र संक्षेपेण प्रस्तूयते। श्रीकरभाष्ये तत्र तत्र नीलकण्ठ[३]-भट्टभास्कर-[४]श्रीकण्ठ-

---

"श्रीकरभाष्य" में "पवित्रं ते विततम्" इत्यादि ऋग्वेद मन्त्र के व्याख्यानात्मक निम्नांकित शिखामणि वचनों का उल्लेख करते हैं-

"ऋगित्याह पवित्रं ते......धार्यं शैवमनामयम्।" एवं

"दीक्षया रहितः....लिङ्गमुत्तमम् ।"

तदनन्तर स्पष्ट शब्दों में वर्णन करते हैं कि- सिद्धान्तशिखामणि ग्रन्थ में इस वचन श्रीरेणुकाचार्य ने लिङ्गधारण के प्रमाणरूप से निर्देश किया है। भाष्यकार ने इस तरह के अनेक स्थलों में सिद्धान्तशिखामणि के श्लोकों को बहुमानपुरःसर उपस्थापित किये हैं। एतावता ये सुनिश्चित होता है कि आचार्य श्रीपति से भी प्राग्वर्ती यह शिखामणि ग्रन्थ प्रमाणरूप से प्रथित एवं सुगृहीत था।

श्रीपति पण्डिताराध्य के स्थिति काल के सन्दर्भ में विवाद (मतभेद) है। सम्प्रति उस मतभेद का संक्षेप से उपस्थापन किया जाता है। श्रीकरभाष्य में स्थलभेद से नीलकण्ठ, भट्टभास्कर, घण्टानाथ, श्रीकण्ठ एवं रामानुज प्रभृति आचार्यों का नामोल्लेख पुरःसर उनके सिद्धान्तों का यथायोग्य समर्थन एवं खण्डन

---

१. सि० शि० ६।३७-३९, पृ० १८-१९.

२. ब्र० सू० श्रीकर० १।१।१.

३. "नीलकण्ठभगवत्पाद-भट्टभास्कर-घण्टानाथ-ज्योतिर्नाथादिपूर्वाचार्यैश्छान्दोग्यभाष्य......व्याख्यातम्" (ब्र० सु० श्रीकर० १।१।२१)।

४. अत्र शिवाग्रगण्यशअरीकण्ठशिवाराध्यकृतब्रह्मसूत्रमीमांसाभाष्ये विशिष्टाद्वैतं स्वाभिप्रेतत्वेन प्रसाधितम् (ब्र० सू० श्रीकर० २।१।२२)।

रामानुजादीनां[१] नामग्रहणपूर्वकं तदीयसिद्धान्तानामभिमतत्वस्यानभिमतत्वस्य च प्रतिपादितत्वादयं श्रीपतिरेतेभ्योऽर्वाचीन इति ज्ञायते।

तत्र श्रीनीलकण्ठस्य समयावधारणे साधनाऽनुपलब्ध्या तस्यातीव-प्राचीनत्वमङ्गीक्रियते। श्रीभट्टभास्करस्य सिद्धान्तः कुसुमाञ्जलिकारेण ख्रि० ९८० तमाब्दीयेनोदयनाचार्येण विमर्शित इति श्रीभास्करस्य समयः ख्रि० ९०० तमाब्द इति डॉ० सर्वपल्लिराधाकृष्णन् महोदयाः कथयन्ति।[२] तैरेव श्रीरामानुजस्य समयः ख्रि० १०२७ तमाब्द इति निरूपितम्[३]।

चिदरेमठस्य श्रीवीरभद्रशर्ममहोदयाः श्रीकण्ठाचार्यकालोऽपि ख्रि० १०६४ तमाब्द इति समर्थयन्ति[४]। तदेवं श्रीकण्ठ-नीलकण्ठ-भट्टभास्कर-रामानुजादिभ्योऽर्वाचीनस्य श्रीपतिपण्डिताराध्यस्य कः समय स्यादिति

---

किया गया है। अतः आचार्य श्रीपति का नीलकण्ठादि आचार्यों की अपेक्षया अर्वाचीन होना प्रतीत होता है।

उपर्युक्त आचार्यों में श्रीनीलकण्ठ आचार्य के स्थितिकाल-निर्धारण में साक्ष्य की अनुपलब्धि होने से उनकी अत्यधिक प्राचीनता मानी जाती है। श्रीभट्टभास्कर के सिद्धान्त की ९८० ई० समकाल में न्यायाचार्य श्रीमानुदयनाचार्य द्वारा कुसुमाञ्जलि ग्रन्थ में समीक्षा की गई है। इसको आधार मानकर डा. सर्वपल्लि राधाकृष्णन् महोदय ने ९०० ई० समकाल में भास्कर का स्थितिकाल निर्णीत किया है। उन्होंने ही श्रीरामानुजाचार्य का स्थिति काल १०२७ ई० समकाल में निर्धारित किया है।

चिदरेमठ के श्री वीरभद्र शर्माजी ने श्रीकण्ठाचार्य का स्थितिकाल १०६४ ई० समकाल होने का समर्थन चतुःसूत्रीपीठिका में किया है। इस प्रकार यह निर्णीत होता है कि श्रीकण्ठ, नीलकण्ठ, भट्टभास्कर एवं रामानुज प्रभृति से अर्वाचीन श्रीपतिपण्डिताराध्य

---

५. चिदाचिदीश्वरपरिभाषाप्रधानरामानुजशास्त्रं वेदमूलकत्वाभावादवैदिकमिति घण्टाघोषः (ब्र० सू० श्रीकर० २।२।४१)।

3. Indian Philosophy, Vol. 2, P. 670. Published by D. R. Bhagi, Bombay 1977.

4. Indian Philosophy, Vol. 2, P. 665.

५. श्रीकण्ठाचार्यकालोऽपि ख्रि० १०४० तमाब्द इत्यघोरशिवाचार्यकृते महोत्सवविधौ स्वकालस्य ख्रि०श० ११५४ तमाब्दत्वेन निर्देशात्, श्रीकण्ठस्य स्वप्रपितामहत्वकथनाच्च निश्चीयते (श्रीकरभाष्यचतुःसूत्रीपीठिका, पृ० ४, जङ्गमवाड़ीमठ-वाराणसीप्रकाशनम्, १९५६ ई०)।

जिज्ञासायां श्री टी० एस्० नारायणशास्त्रिमहाभागाः प्राचीनशिलाशासनाधारेण श्रीपतेः कालः ख्रि० १०७२ तमाब्द इति निर्णीतवन्तः[१]। आचार्यबलदेवोपाध्यायमहोदया अपि श्रीपतेः कालः ख्रि० १०६० इति निरूपतिवन्तः[२]। तदेतावता श्रीकरभाष्यस्य समयः ख्रि० एकादशशततमाब्दीति निश्चीयते।

## सी० हयवदनरावमहोदयस्य भ्रमनिरासः

तत्र बेङ्गलोरनिवासिनो मध्वमतानुयायिनः सी० हयवदनरावमहोदयाः श्रीकरभाष्ये—"मध्वाद्वैतक्षपणकतार्किकादयः[३] (तार्किकादिभिः) जीवानां विभुत्वाङ्गीकारात् तन्निरासार्थमेतदधिकरणप्रारम्भः"[४] इत्यत्र मध्वशब्दं दृष्ट्वाश्रीकरभाष्यं मध्वाचार्यादर्वाचीनमिति साधयन्ति[५]। तदयुक्तम्, यतो ह्यत्रत्यो मध्वशब्दः प्रक्षिप्त एव। तथाहि—श्रीपतिपण्डिताराध्याः "उत्क्रान्तिगत्यागतीनाम्"[६]

---

हैं। इनका स्थिति काल क्या हो सकता है ऐसी जिज्ञासा में श्री टी.एस. नारायणशास्त्री महोदय ने प्राचीन शिलाशासन के अनुसार श्रीपति का काल १०७२ ई० समकाल होने का निर्णय लिया है। आचार्य बलदेवोपाध्यायने श्रीपति का काल १०६० ई० समकाल को स्वीकार किया है। इस प्रकार श्रीकरभाष्य का समय (रचनाकाल) ११वीं शताब्दी में माना जाना सुनिश्चित होता है।

## सी० हयवदनराव महोदय की भ्रान्ति का निराकरण

बेंगलोर निवासी मध्वमतानुयायी सी० हदयवदनराव महोदय, श्रीकरभाष्य को मध्वाचार्य से अर्वाचीन होना प्रतिपादित करते हैं। इसमें प्रमाण के रूप में श्रीकरभाष्य के वाक्य (अन्तःसाक्ष्य) में प्रयुक्त मध्व शब्द का उल्लेख करते हैं। वाक्य का स्वरूप है— मध्वाद्वैतक्षपणतार्किकादयः (तार्किकादिभिः) जीवानां विभुत्वाङ्गीकारात् तन्निरासार्थमेतदधिकरण प्रारम्भः।

---

1. The Indian Review, Vol. 16, May 1915 N. 5.
२. भारतीयदर्शनम्, पृ० ४६९. चौखम्भा ओरियन्टालिया १९७६ ई०।
३. अत्र मध्वाद्वैतक्षपणकतार्किकादय इति प्रथमान्तपाठस्थाने तृतीयान्तः पाठ उचितः प्रतिभाति।
४. ब्र० सू० श्रीकरभा० २।३।१८, पृ० २६३.
५. सी० हयवदनरावकृता श्रीकरभाष्यस्याङ्गलभाषामयभूमिका, पृ० ९४-९८, बेङ्गलोर प्रेस, बेङ्गलोर १९३६ ई०।
६. ब्र० सू० २।३।१८.

इत्यस्य बादरायणसूत्रस्य भाष्यलेखनावसरे जीवात्मनो व्यापकत्वे तस्योत्क्रन्तिगत्यागतीनां सम्भवाभावदात्मनोऽणुत्वमेव स्वीकर्तव्यमिति सिद्धान्तयितुमात्मनो विभुत्ववादिनां मतं निरास्थन्। तत्राद्वैततार्किकादिभिरात्मनो विभुत्वाङ्गीकारेण तेषां निरास्यत्वसम्भवेऽपि मध्वस्य तदसम्भवः, तत्राप्यात्मनोऽणुत्वस्वीकारात्। तदुक्तं मध्वाचार्यैरेव–"हेतूनां सकाशादणुरेव"[१] इति, "अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते, यथा हरिचन्दनविप्लुष एकदेशपतितायाः सर्वशरीरव्याप्तिः"[२] इति च।

तस्मात्–"मध्वाद्वैतक्षपणकतार्किकादयः(दिभिः) जीवानां विभुत्वाङ्गीकारात् तन्निरासार्थमेतदधिकरणप्रारम्भः" इत्यस्मिन् श्रीपतिपण्डिताराध्यवचने विद्यमानो मध्वशब्दोऽप्रासङ्गिकोऽसमञ्जसश्चेति तस्य प्रक्षिप्तत्वं सुलभवेद्यमेव। एवमेवान्यत्र

---

किन्तु यह मत समीचीन नहीं है। क्योंकि उक्त वाक्य में मध्व शब्द प्रक्षिप्त है। तथाहि— श्रीपति पण्डिताराध्य "उत्क्रान्तिगत्यागतीनाम्" इस बादरायणसूत्र के भाष्यलेखन के अवसर प्राप्त होने पर प्रतिपादित किया है कि जीवात्मा को व्यापक मानने के पक्ष में उसकी उत्क्रान्ति, गति एवं आगति की सम्भावना निरस्त हो जाती है। अत: आत्मा की अणुपरिमाणता ही स्वीकार्य होना समुचित है— इस सिद्धान्त की दृढ़ता के लिये आपने आत्मा के विभुत्ववादियों के मत का निराकरण करते हेतु उपर्युक्त वाक्य की अवतारणा की है। इस प्रसङ्ग में अद्वैत दार्शनिक एवं तार्किक प्रभृति यतश्च आत्मा की विभुता को स्वीकारते हैं अत: उनके मत का निराकण किया जाना उपयुक्त है किन्तु मध्वमत का निराकरण करना उपयुक्त नहीं है। क्योंकि उनके मत में आत्मा की अणुता स्वीकार्य है। स्वयं मध्वाचार्य ने पूर्णप्रज्ञभाष्य में कहा है— "अनुकूल हेतुओं के साक्ष्य से आत्मा को अणु मानना ही समीचीन है। तथा अणु होने पर भी जीव की सर्वशरीरव्याप्ति युक्त्युपेत है। यथा हरिचन्दनबिन्दु शरीर के एक भाग में रहकर भी सर्वशरीर को सुगन्धित=सुवासित करती है।

इस प्रकार सुस्पष्ट है कि मध्वाद्वैतक्षपणकतार्किकादयः — इत्यादि उपर्युक्त वाक्य में मध्व शब्द की अप्रासङ्गिकता एवं असमञ्जसता है। अत: मध्व शब्द का अज्ञानात् प्रक्षेप होना सुनिश्चित होता है— यह अनायास ही सुविदित होता है। इसी प्रकार अन्यत्र उन-उन स्थलों श्रीकरभाष्य में उपलब्ध मध्वशब्द का प्रक्षेप ही है—

---

१. ब्र० सू० पूर्णप्रज्ञभाष्यम् २।३।२०.
२. ब्र० सू० पूर्णप्रज्ञभाष्यम् २।३।२४.

तत्र तत्र श्रीकरभाष्ये[१] विद्यमानो मध्वशब्दः प्रक्षिप्त इत्येव पर्यवस्यति।

अपरञ्च, श्रीकरभाष्यस्य मातृकारूपेषु लिखितपुस्तकेषु मध्वपदं न कुत्रापि दृश्यत इति श्री एम्० जी० नञ्जुण्डाराध्यमहोदयाः प्रतिपादयन्ति।[२]

किञ्च, चिदरेमठस्य श्रीवीरभद्रशर्ममहोदयाः– "शङ्कर–रामानुजभाष्यवाक्यानि यथा श्रीकरभाष्ये यथामूलं दृश्यन्ते, न तथा मध्वभाष्यवाक्यमेकमप्युलभ्यते। अत्र भाष्ये दृश्यमानेऽपि द्वैतखण्डने न तन्मध्वाचार्यमतमित्येव परिगण्यते, किन्तु प्राचीनद्वैतमित्येवावगन्तव्यम्"[३] इति श्रीकरभाष्यस्थमध्वशब्दस्य प्रक्षिप्तत्वमेव समर्थयन्ते।

अपि च, श्रीमध्वाचार्यः ख्रि० १२ तमशताब्दीय इति डॉ० सर्वपल्लिराधाकृष्णन्महोदयाः[४] प्रतिपादयन्ति इति श्रीपतेर्मध्वादर्वाचीनत्वं सम्भवति। टी० एस्० नारायणशास्त्रिणोऽपि श्रीमध्वाचार्यस्य श्रीपतेरर्वाचीनत्वं कथयन्ति[५]।

---

यह अनायासगम्य है। इतना ही नहीं श्रीकरभाष्य के मातृकाग्रन्थों=हस्तलेखों में कहीं भी मध्वशब्द का प्रयोग प्राप्त नहीं है— ऐसा श्री एम. जी. नञ्जुण्डाराध्य महोदय ने सुस्पष्ट प्रतिपादित किया है।

यह भी ध्यातव्य है— चिदरेमठ के श्री वीरभद्र महोदय ने स्पष्ट कहा है— श्रीकरभाष्य में शारीरकभाष्य एवं श्रीभाष्य के वाक्य मूलरूप से यद्वत् प्राप्त होते हैं तद्वत् मध्वभाष्य का एक भी वाक्य प्राप्त नहीं होता। श्रीकरभाष्य में द्वैतमत का खण्डन जिस किसी भी स्थल में किया गया है— वह मध्वाचार्यमत नहीं है। वह द्वैतमत अन्य होने के साथ प्राचीन है। एतावता उन्होंने भी "श्रीकरभाष्य में मध्वशब्द का प्रक्षेप ही है"— इसका प्रबल समर्थन किया है।

अन्य समीक्षकों की दृष्टि का भी अवलोकन करें। डा० सर्वपल्लि राधाकृष्णन् महादेय श्री मध्वाचार्य का स्थिति काल १२वीं शताब्दी में प्रतिपादित करते हैं। श्रीपति के सन्दर्भ में उपर्युक्त समीक्षाधारित निर्णय किया जा चुका है कि उनका

---

१. ब्र० सू० श्रीकरभा० २।२।४१, पृ० २३७.
   ,, ,, २।३। ४०, पृ० २७३.
२. श्रीकरभाष्यभूमिका, पृ० १२१, मैसूरविश्वविद्यालयप्रकाशनम्, १९७७ ई०।
३. श्रीकरभाष्यचतुःसूत्री (पीठिका, पृ० १०) जङ्गमवाडीमठप्रकाशनम्।
4. Indian Philosophy, Vol. 2, P. 738.
5. The Indian Review, Vol. 16, may 1915 N.5.

तदेवं श्रीकरभाष्यस्य ख्रि० ११ तमशताब्दीभवत्वनिश्चयेन श्रीकरभाष्ये प्रमाणत्वेनोदाहृतः सिद्धान्तशिखामणिस्ततोऽपि प्राचीन इति निर्णीयते।

**श्रीकण्ठभाष्यात् सिद्धान्तशिखामणेः प्राचीनत्वम्**

श्रीकण्ठविरचिते ब्रह्मसूत्रश्रीकण्ठभाष्ये 'अविभागेन दृष्टत्वात्'[१] इत्यत्र 'मुक्तः शिवसमो भवेत्'[२] इति सिद्धान्तशिखामणेरंशः प्रमाणत्वेनोदाहृतः।

श्रीकण्ठस्य च समयः ख्रि० दशमशताब्दीतः पूर्वमेव प्रतिपादित इति ततोऽपि प्राचीनोऽयं सिद्धान्तशिखामणिरित्यवधार्यते।

अपरञ्च, डा० ज० च० नि० महाभागाः—"ग्रन्थकाराः शिवयोगिशिवाचार्याः ख्रि० अष्टमशताब्द्यां सालुहट्टि(सालोटगी) विद्यापीठे प्राचार्या आसन्निति श्रूयते। तदिदानीं बीजापुरमण्डलान्तर्गते 'इण्डो' नगरसमीपे विद्यते। तत्र शिवयोगीश्वरस्य समाधिरेको वर्तते" इति प्रतिपादयन्ति।[३] एतेन

---

स्थितिकाल ११वीं शताब्दी है। अतः सुस्पष्ट है कि आचार्य श्रीपति प्राचीन है तथा उनसे अर्वाचीन श्रीमध्वाचार्य है। प्रसिद्ध समीक्षक श्री टी. एस. नारायणशास्त्री भी आचार्य श्रीपति की अपेक्षा श्री मध्वाचार्य को अर्वाचीन प्रतिपादित करते हैं।

इस प्रकार श्रीकरभाष्य का रचनाकाल ११वीं शताब्दी सिद्ध हो जाने से श्रीकरभाष्य में प्रमाणरूप से जिसके वचन उल्लिखित हुए हैं— वह सिद्धान्तशिखामणि ग्रन्थ, श्रीकरभाष्य से भी प्राचीन है— ऐसा सुनिश्चित होता है।

**श्रीकण्ठभाष्य से प्राचीन है - सिद्धान्तशिखामणि-ग्रन्थ**

श्रीकण्ठ द्वारा निर्मित श्रीकण्ठभाष्य (ब्रह्मसूत्र ४/४/४ अविभागेन दृष्टत्वात्) में सिद्धान्त शिखामणि का वाक्य— "मुक्तसाधक शिवसमान हो जाता है।" का प्रमाणरूप से उल्लेख किया गया है। आचार्य श्रीकण्ठ का स्थिति काल १०वीं शताब्दी है— ऐसा पूर्व में प्रतिपादन किया जा चुका है। अतः उनसे भी सिद्धान्तशिखामणि ग्रन्थ की प्राचीनता सिद्ध होती है।

दूसरे समीक्षक डा. ज.च.नि. महाशय है। आपने कहा है कि "सिद्धान्तशिखामणि ग्रन्थ के रचयिता शिवयोगी शिवाचार्य जी ८वीं शताब्दी में

---

१. ब्र० सू० ४।४।४.

२. सि० शि० ९।१४, पृ० १४१.

३. सिद्धान्तशिखामणेः सौन्दर्यदर्शनस्य कन्नडपीठिका, पृ० १०-१२, १९७६ ई०।

सिद्धान्तशिखामणे रचनाकालोऽपि अष्टमशताब्दीति निश्चीयते।

अपरञ्च, गुरुवंशकाव्ये, शिवतत्त्वरत्नाकरे च रेणुकभगवत्पादाना-मपरावतारिणा रेवणसिद्धाख्येन महायोगिनाऽऽद्यशङ्कराचार्याय चन्द्रमौलीश्वरलिङ्गं रत्नगर्भगणपतिश्च प्रदत्ते इत्यैतिह्यं वर्तते। विषयममुं शिवयोगिशिवाचार्यो न जानाति। अन्यथा ईशानशिवगुरु-चतुर्मुखबोम्मरसादयो यथा स्वकीयेषु रेणुकचम्पू-रेवणसिद्धेश्वरपुराणादिषु श्रीरेणुकभगवत्पादानां लीलानिरूपणावसरे रेवणसिद्धमहायोगिनाऽऽद्यशङ्कराचार्याय चन्द्रमौलीश्वर-लिङ्गप्रदानविषयं प्रतिपादितवन्तस्तथा शिवयोगिशिवाचार्योऽपि सिद्धान्तशिखामणौ विषयममुं किमर्थं न लिखितवान्। अतः शिवयोगिशिवाचार्य आद्यशङ्कराचार्यादपि प्राचीन इत्यवधार्यते। एतेन सिद्धान्तशिखामणेः समयः ख्रि॰ अष्टमशताब्दात् प्राचीन इति निश्चीयते। किञ्च, प॰श्रीकाशीनाथशास्त्रिणः—

---

सालोटगी में स्थित विद्यापीठ के प्राचार्य थे— ऐसा सुना जाता है। वह विद्यापीठ सम्प्रति बीजापुर मण्डल में के अन्तर्गत ''इण्डी'' नगर के पास है। वहाँ के ग्रन्थकार शिवयोगी की एक समाधि विद्यमान है।'' इस कथन से यह निष्कर्ष प्राप्त होता है कि सिद्धान्तशिखामणि का रचनाकाल भी ८वीं शताब्दी है।

अन्य प्रमाण भी यह है। ''गरुवंश' काव्य तथा ''शिवतत्वरत्नाकर'' में ऐतिह्य प्राप्त होता है। तदनुसार यह विदित होता है— रेणुभगवत्पाद के अपर अवतार महायोगी रेवणसिद्ध ने आद्य शंकर भगवत्पाद को दो उपहार प्रदान किये थे— (१) चन्द्रमौलीश्वर लिङ्ग एवं (२) रत्नगर्भगणपति। इस प्रकार समाचार से शिवयोगी अनभिज्ञ थे। अन्यथा जिस प्रकार ईशान शिवगुरु तथा चतुर्मुखबोम्मरस प्रभृति आचार्यों ने अपने ग्रन्थों (रेणुकचम्पू एवं रेवणसिद्धेश्वर पुराण प्रभृति) में रेवणसिद्ध महायोगी द्वारा आद्यशंकराचार्य को चन्द्रमौलीश्वर लिङ्ग प्रदान करने की बात बतायी है। तद्वत् शिवयोगी शिवाचार्य भी सिद्धान्त शिखामणि में अवश्य इस बात का उल्लेख करते। एतावता यह निर्णय लिया जाना स्वाभाविक है कि शिखामणि ग्रन्थकार, आद्य शंकर भगवत्पाद से भी प्राचीन थे। अतः सिद्धान्तशिखामणि का रचना-काल ईसा की अष्टम शताब्दी से भी प्राचीन सिद्ध होता है।

अन्य प्रमाण यह भी है— पं. श्री काशीनाथ शास्त्री ने कहा है— ''येन रक्षावती ...... ...... ..... ॥१॥ इत्यादि शिखामणि-श्लोक से ''बौद्ध प्रभृति दार्शनिकों के प्रतिद्वन्द्वी शिवयोगी द्वारा सनातन शिवभक्ति रक्षित हुई'' — विदित

''येन रक्षावती जाता शिवभक्तिः सनातनी।
बौद्धादिप्रतिसिद्धान्तमहाध्वान्तांशुमालिना[१]।।

इत्यस्मिन् श्लोके शिवयोगिशिवाचार्यः स्वात्मानं बौद्धादिप्रतिद्वन्द्विभिः सनातनशिवभक्ते रक्षकं प्रतिपादितवान्। भरतखण्डे च द्विसहस्रवर्षात् प्राग् बौद्धधर्मस्य प्रबलः प्रचार आसीदिति शिवयोगिशिवाचार्यस्य तत्कृतसिद्धान्तशिखामणेश्च कालो द्विसहस्रवर्षप्राचीन इतीमामपि युक्तिं प्रदर्शयन्ति[२]।

तदेवं सिद्धान्तशिखामणिर्द्विसहस्रवर्षात् प्राचीन इति संभाव्यमानत्वेऽपि ख्रि० अष्टमशताब्दात् प्राचीन इति तु निश्चप्रचमेवास्माकं प्रतिभाति।

## शिवयोगिशिवाचार्यस्य देशविचारः

शिवयोगिशिवाचार्यः सिद्धान्तशिखामणौ कुत्रापि स्वदेशस्य नाम नोल्लिखितवान्। अथापि स्वपितामहो मुद्ददेव इति कथनेनाऽयं कर्नाटकदेशीय इति प० श्रीकाशीनाथशास्त्रिणामाशयः। ते कथयन्ति-मुद्दशब्दः कन्नडभाषाया

---

होती है। यह भी सर्वविदित है कि भरत खण्ड में २ हजार वर्ष पूर्व में बौद्धधर्म का प्रबल प्रचार था। इस आधार पर शिवयोगी शिवाचार्य एवं उनकी रचना सिद्धान्तशिखामणि की २ हजार वर्ष के पूर्व में स्थिति थी – यह निर्णय असंदिग्ध है।

उपर्युक्त विश्लेषणों से यह निर्णय लिया जाता है— सिद्धान्तशिखामणि दो हजार वर्ष प्राचीन ग्रन्थ है— ऐसी सम्भावना है। इतना तो निश्चय है कि यह अष्टम शताब्दी से पूर्व की रचना है।

## शिवयोगी शिवाचार्य का देश (स्थान) विचार

शिवयोगी शिवाचार्य ने अपनी रचना सिद्धान्तशिखामणि में कहीं भी निजदेश (स्थान विशेष) का नामोल्लेख नहीं किया है। जो उन्होंने मुद्ददेव को निज पितामह प्रतिपादित किया है उससे ग्रन्थकार का कर्नाटक प्रान्तीय होना प्रतीत होता है— ऐसा श्रीकाशीनाथ शास्त्री का अभिमत है। इसका विश्लेषण करते हुए उन्होंने

---

१. सि० शि० १।२३, पृ० ८.

२. सिद्धान्तशिखामणेः प्रस्तावना पृ० ७, काशीनाथग्रन्थमाला, मैसूर। १९७२ ई०।

वर्तते। कन्नडभाषायामस्यार्थः 'प्रीतिः' इति भवति। ईदृशं कन्नडशब्दमेव 'मुदं ददातीति मुद्दः' इति व्युत्पाद्य–

मुद्दानात् सर्वजन्तूनां प्रणतानां प्रबोधतः।
मुद्ददेवेति विख्यातसमाख्या यस्य विश्रुता[1]।।

इति प्रतिपादितत्वादयं कर्णाटकदेशीय इति ज्ञायते[2]।

## सिद्धान्तशिखामणेर्मातृकाः

तत्र तावद् धारवाडनगरस्थ-कर्नाटकविश्वविद्यालयस्य कन्नडाध्ययन-पीठस्थहस्तलेखभाण्डागारे सिद्धान्तशिखामणेः पञ्च तालपत्रीयहस्तलेखाः सन्ति। तेषां क्रामाङ्काः १५०७, १५६०, २३४१, २३७७, २४६८ इति सन्ति। एतेषु २४६८ संख्यात्मकस्तेलुगुलिप्यात्मको वर्तते। अन्ये च सर्वे हस्तलेखाः कन्नडलिप्यात्मकाः सन्ति। कन्नडलिप्यात्मकेषु हस्तलेखेषु २३७७ संख्याको हस्तलेखः कन्नडटीकायुक्तश्च वर्तते।

---

बताया है— "मुद्-द" शब्द कन्नडभाषा में प्रयुक्त होता है। कन्नडभाषा में मुद्द शब्द प्रीति अर्थ में प्रयुक्त है। "मुदं ददाति" इस अर्थ में मुद्द शब्द की व्युत्पत्ति को स्वयं ग्रन्थकार ने स्वीकारा है। तदनुसार उन्होंने "मुद्दानात् .....यस्य विश्रुता ।।१।। श्लोक की रचना अपने ग्रन्थ में की है। उसका अर्थ है— समस्त जन्तुओं को प्रीति प्रदान करने से तथा शरणागत जन को ज्ञानदान देने से मेरे पितामह का मुद्द-देव नाम लोक में विश्रुत है। इस अन्तःसाक्ष्य के आधार पर शिखामणि का कर्नाटक प्रदेशीय होना सुनिश्चित होता है।

## सिद्धान्तशिखामणि की मातृकायें

धारवाड नगर के कर्नाटक विश्वविद्यालय के कन्नड-अध्ययन-पीठ के अन्तर्गत हस्तलेख-भाण्डागार में सिद्धान्तशिखामणि के पाँच तालपत्र हस्तलेख उपलब्ध हैं। उनके क्रमांक हैं— १५०७, १५६०, २३४१, २३७७ एवं २४६८ । इनमें २४६८ क्रमांकीय हस्तलेख तेलुगु लिपि में उपलब्ध है। तद्भिन्न चारों हस्तलेख कन्नडलिखि में उपनिबद्ध है। इनमें २३७७ क्रमांकीय हस्तलेख की कन्नडटीका भी उपलब्ध है।

---

१. सि० शि० १।१६, पृ० ६.

२. सिद्धान्तशिखामणेः प्रस्तावना, पृ० ७, काशीनाथग्रन्थमालाप्रकाशनम्।

कर्णाटकविश्वविद्यालयस्यैव कन्नडानुसन्धानसंस्थायां तालपत्रात्मक एकः सिद्धान्तशिखामणिर्वर्तते। तस्य क्रमाङ्कः २९४ इति वर्तते। एते सर्वेऽस्माभिर्विलोकिता; सन्ति।

मद्रपुर्याः 'गवर्नमेण्ट ओरियण्टल मैन्युस्क्रिप्ट्स लाइब्रेरी' इत्यस्य तालपत्रीयहस्तप्रतिग्रन्थसूच्यवलोकनेन ज्ञायते यत्तत्र वाल्यूम १०, बुक नं० ५११९, ५१२०; वाल्यूम ९, बुक नं० ५५५१ इति त्रयः सिद्धान्तशिखामणे-स्तालपत्रीयहस्तलेखाः सन्ति। ते सर्वे तेलुगुलिप्यात्मका वर्तन्ते।

## सिद्धान्तशिखामणेः संस्कृत-प्राकृतटीकाकाराः

सिद्धान्तशिखामणेष्टीकाकारेषु पद-वाक्यप्रमाणपारावारधुरीणश्री-मरितोण्टदार्यमहाभागाः सर्वप्रथमाः। एते ख्रि० सप्तदशशततमाब्द्यामासन्निति ज्ञायते[1]। एतैर्महाभागैर्देववाण्यां तत्त्वप्रदीपिकाख्या व्याख्या विरचिता। अनया व्याख्यया युक्तः सिद्धान्तशिखामणिः प्रथमतः कन्नडाक्षरेषु मैसूरनगरनिवासिना स्व० वै० वीरसंगप्पमहोदयेन प्रकाशितः। तदनु च सोल्लापुरस्य स्व०

---

कर्नाटक विश्वविद्यालय की कन्नड अनुसन्धान संस्था में तालपत्ररूप में एक सिद्धान्तशिखामणि उपलब्ध है। उसका ग्रन्थक्रमांक है— २९४ । गवेषणा-क्रम में समीक्षा-ग्रन्थकार ने उपर्युक्त समस्त हस्तलेखों का अवलोकन किया है।

मद्रपुरी (मद्रास) के "गर्वनमेण्ट ओरियण्टल मैन्युस्क्रिप्ट्स लाइब्रेरी" के तालपत्रीय हस्तग्रन्थसूची के अवलोकन से विदित होता है कि वहाँ वाल्यूम १० के अन्तर्गत पुस्तक सं.— ५११९ एवं ५१२० तथा वाल्यूम ९ के अन्तर्गत पुस्तक सं. ५५५१ के उल्लेखानुसार सिद्धान्तशिखामणि के तालपत्रीय हस्तलेखों की संख्या- तीन है। ये सभी तेलुगु लिपि में आबद्ध हैं।

## सिद्धान्तशिखामणि के संस्कृत टीकाकार एवं प्राकृतटीकाकार

सिद्धान्तशिखामणि के टीकाकारों में सर्वप्रथम हैं— पदशास्त्र, वाक्यशास्त्र एवं प्रमाणशास्त्र के तलस्पर्शी विद्वान् श्रीमरितोण्टदार्य महाभाग। वीरशैवानन्दचन्द्रिका की भूमिका में आपका स्थितिकाल १७वीं शताब्दी में निर्धारित किया गया है। इनके द्वारा संस्कृत में तत्त्वप्रदीपिका व्याख्या लिखी गयी है। इस व्याख्या के साथ शिखामणि का प्रथम प्रकाशन, मैसूरवासी स्व. वै. वीरसंगप्पा

---

१. वीरशैवानन्दचन्द्रिकाया भूमिका, पृ० ३.

वारदमल्लप्पमहाभागा अमुमेव ग्रन्थं भागद्वये देवनागराक्षरेण ख्रि० १९०५ तमाब्दे प्रकाशितवन्तः।

श्रीवीरणाराध्यपौत्रः सिद्धय्यस्य च पुत्रः सोसलेरेवणाराध्यः ख्रि० १७ तमाब्द्यां सिद्धान्तशिखामणेः 'सिद्धार्थबोधिनी' इत्याख्यां कन्नडव्याख्यां विरचयामास।

मैसूरमहाराजस्याऽऽस्थानविद्वांसो लिं० एन्० आर० करिबसवशास्त्रिणः सिद्धान्तशिखामणेस्तात्पर्यदीपिकाख्यां कन्नडव्याख्यां कृतवन्तः। तट्टीकायुक्तः सिद्धान्तशिखामणिर्मैसूरनगरे ख्रि० १९१९ तमाब्दे प्रथममुद्रणम्, ख्रि० १९२१ तमाब्दे च द्वितीयमुद्रणमवाप।

लिं० प० श्रीकाशीनाथशास्त्रिमहाभागाः सिद्धान्तशिखामणिं भावप्रकाशाख्यया कन्नडव्याख्यया सनाथीकृत्य मैसूरनगरे श्रीपञ्चाचार्य-विद्युन्मुद्रणालयतः प्रकटितवन्तः। सोऽयं लोकप्रियतया ख्रि० १९७२ तमाब्दं यावत् पञ्चवारं पुनर्मुद्रितोऽस्ति।

मैसूरनगरनिवासी श्री० एम्० एल्० नागण्णमहोदयो

---

महोदय द्वारा कन्नडाक्षरों में किया गया था। तत्पश्चात् सोलापुर के स्व. वारदमल्लप्पा महाशय ने १९०५ ई० में देवनागराक्षर में दो भागों में इसका प्रकाशन किया था। १७वीं शताब्दी में श्री वीरणाराध्य के पौत्र एवं श्री सिद्धय्या के पुत्र श्री सोसले रेवणाराध्य ने सिद्धान्तशिखामणि की सिद्धार्थ-बोधिनी नामक कन्नडव्याख्या लिखी थी।

मैसूरमहाराज के आस्थान विद्वान् लि. एन.आर. करिबसव शास्त्री जी ने सिद्धान्तशिखामणि की तात्पर्यदीपिका नामक टीका की रचना की थी। इस टीका के साथ सिद्धान्तशिखामणि का प्रथम प्रकाशन १९१९ ई० में तथा द्वितीय प्रकाशन १९२१ ई० में मैसूर नगर में हुआ था।

लि. पं. श्री काशीनाथ शास्त्री जी ने सिद्धान्तशिखामणि का भावप्रकाश नामक कन्नडव्याख्या के साथ प्रकाशन, मैसूर स्थित श्री पञ्चाचार्य विद्युन्मुद्रणालय से किया था। लोकप्रिय होने से १९७२ ई० तक इसका पाँच बार पुनःप्रकाशन सम्पादित किया जा चुका था।

मैसूर नगर निवासी श्री एम. एल. नागण्ण महोदय ने मरितोण्टदार्य द्वारा

मरितोण्टदार्यविरचिततत्त्वप्रदीपिकाख्याया व्याख्यायाः कन्नडानुवादं कृत्वा सिद्धान्तशिखामणिं कन्नडलिप्यां ख्रि० १९५९ तमाब्दे प्रकाशयामास।

साहित्यपारावारीणा डॉ० ज० च० नि० महाभागाः सिद्धान्तशिखामणेः समग्रान् श्लोकान् कन्नडभाषायां पद्यरूपेणानूदितवन्तः। सोऽयं ग्रन्थः 'मणिमुकुर' इति नाम्ना प्रसिद्धोऽस्ति। एतदतिरिक्तमेभिः 'जीवनसिद्धान्त' इति नाम्ना षट्सु संपुटेषु सिद्धान्तशिखामणेः प्रतिपाद्यविषयाः कन्नडभाषायां सुदीर्घमालोचिताः। ग्रन्थोऽयं १९६९-१९७० तमाब्दे निडुमामिडिपुस्तकभण्डार-बेंगलूर इत्यत्र प्रथमवारं मुद्रितोऽस्ति।

कर्णाटकप्रदेशीयेन बीजापुरनगरवासिना ज्ञानयोगाश्रमसंस्थापकेन श्रीमल्लिकार्जुनस्वामिमहोदयेन सिद्धान्तशिखामणेः श्लोकानां कन्नडमराठिभाषयोः शब्दानुवादो भावानुवादश्च विहितः। तावुभावपि पृथक्पृथक् प्रकाशितौ वर्तेते। तयोः कन्नडानुवादयुतो ग्रन्थः ख्रि० १९६६ तमेऽब्दे 'शिवानन्दमठ गदग' इत्याख्यया प्रकाशनसंस्थया प्रकाशितोऽस्ति।

कर्नाटकप्रदेशीयचित्रदुर्गनिवासी 'निजगुणसिद्ध' इति काव्याभिधानवान्

---

रचित तत्वप्रदीपिका का कन्नड अनुवाद करके सिद्धान्तशिखामणि का कन्नडलिपि में प्रकाशन, १९५९ ई० में किया।

साहित्यक्षेत्र (काव्य एवं अलंकार शास्त्र) के तलस्पर्शी विद्वान् डा. ज.च.नि. महाशय ने सिद्धान्तशिखामणि को १९५९ ई० में कन्नड भाषा में पद्यानुवाद किया था। यह ग्रन्थ ''मणिमुकुर'' नराम से प्रसिद्ध है। इसके अतिरिक्त इन्होंने ''जीवनसिद्धान्त'' नाम से ६ भागों में सिद्धान्तशिखामणि के प्रतिपाद्य विषय को कन्नडभाषा में विस्तृत आलोचना के साथ प्रकाशित किया था। यह ग्रन्थ १९६९-७० ई० में बेंगलूर के निडुमामिडि पुस्तकभण्डार से प्रथम बार मुद्रित हुआ था।

कर्नाटक प्रान्त के बीजापुर नगर के निवासी तथा ज्ञानयोगाश्रम के संस्थापक श्री मल्लिकार्जुन स्वामी ने सिद्धान्तशिखामणि के श्लोकों का कन्नड एवं मराठी भाषाओं में शब्दानुवाद तथा भाषानुवाद किया है। ये दोनों पृथक्-पृथक् प्रकाशित किये गये हैं। इनमें कन्नडानुवाद से युक्त ग्रन्थ १९६६ में 'शिवानन्दमठ, गदग' नामक प्रकाशन संस्था से प्रकाशित किया गया है।

कर्नाटक प्रदेशीय चित्रदुर्ग निवासी ''निजगुणसिद्ध'' काव्य नाम से प्रसिद्धि

एस० एम० सिद्धय्यमहोदयो ग्रन्थममुं 'श्रीरेणुकगीतेति' नाम्ना भामिनिषट्पदाख्ये कन्नडछन्दस्यनूदितवान्। ग्रन्थोऽयं सरलः काव्यशैल्या लिखितः सुमधुरश्च वर्तते।

बेंगलोरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षेण डॉ० एम० शिवकुमारस्वामिमहोदयेन सिद्धान्तशिखामणिराङ्ग्लभाषयाऽनूदितः। ख्रि० १९६८ तमेऽब्दे प्रकाशितोऽयं ग्रन्थः "श्रीरेणुकगीता" इति नाम्ना। अनेनैव सिद्धान्तशिखामणेः कालसिद्धान्तयोः संशोधनपूर्णः "सिद्धान्तशिखामणि; ओन्दु अध्ययन" इति नामकः कन्नडभाषामयो लघुग्रन्थः ख्रि० १९८७ तमेऽब्दे प्रकाशितः।

काशीविद्यापीठे कन्नडभाषाप्राध्यापको डॉ० शान्तशर्मा (श्री० ष० ब्र० श्रीपतिपण्डिताराध्यशिवाचार्य) हिरेमठः सिद्धान्तशिखामणेर्भावमञ्जूषाख्यां हिन्दीव्याख्यां विहितवान्। साऽधुना यन्त्रस्था वर्तते। मन्ये, शीघ्रमेव प्रकाशिता भविष्यतीति।

कर्नाटकप्रदेशीय-गुलेदगुड्ड-अमरेश्वरमठीयैरस्माभिरस्य ग्रन्थस्य सुविस्तृता कन्नडव्याख्या विरचिताऽस्ति। सा तावदेकोत्तरैकशत-(१०१)-भागेषु प्रकाशनीयेति प्रकाशनयोजना निर्धारिता श्रीगुरु-अमरेश्वर प्रकाशनम्

---

प्राप्त श्री एस. एम. सिद्धय्या महोदय ने इस ग्रन्थ का "श्रीरेणुकगीता" नाम से "भामिनिषट्पद" नामक कन्नडछन्द में अनुवाद किया है। काव्यशैली में उपनिबद्ध यह ग्रन्थ सरल एवं सुमधुर है।

बेंगलूरू विश्वविद्यालय के संस्कृत विभागाध्यक्ष डा. एम. शिवकुमार स्वामी महोदय ने सिद्धान्तशिखामणि का अंग्रेजी भाषा में अनुवाद किया है। १९६८ ई० में यह ग्रन्थ श्रीरेणुकगीता नाम से प्रकाशित हुआ है।

काशीविद्यापीठ में कन्नडभाषा के प्राध्यापक डा. शान्तशर्मा (श्री ष.ब्र. श्रीपतिपण्डिताराध्य शिवाचार्य) हिरेमठ जी ने सिद्धान्तशिखामणि की भावमञ्जूषा नाम की हिन्दी व्याख्या की थी। ग्रन्थ प्रकाशन के समय यह प्रकाशनाधीन थी।

कर्नाटक प्रदेश के गुलेदगुड्ड अमरेश्वर मठ के हम सदस्यों द्वारा इस ग्रन्थ की सुविस्तृत कन्नडव्याख्या लिखी गई है। श्रीगुरु अमरेश्वर प्रकाशन संस्था द्वारा प्रकाशन योजना बनायी गई है। तदनुसार इस व्याख्या को १०१ भागों में प्रकाशन किया जाना है। उक्त योजना के अन्तर्गत अद्यावधि "सिद्धान्तशिखामणि-प्रवचन

(अमरेश्वरमठ, गुलेदगुड्डु; जि० बीजापुर, कर्नाटक) इत्याख्यया प्रकाशनसंस्थया। तत्र खलु योजनायामद्यावधि षड् भागाः प्रकाशिताः सन्ति "सिद्धान्तशिखामणि-प्रवचनप्रभे इति" नामधेयेन। कन्नडव्याख्याया अस्या अवशिष्टभागाः क्रमशो दशसु हायनेषु प्रकाशिता भवेयुरिति संभाव्यते।

**श्रीजगद्गुरुरेणुकाचार्याणामवतारसमीक्षा**

भगवत्पादरेणुकाचार्यैरगस्त्यायोपदिष्टसिद्धान्तसंग्रहात्मकोऽयं सिद्धान्त-शिखामणिरिति पूर्वमेव प्रतिपादितम्। तदत्र तेषामाचार्यवर्याणामवतारः कदाऽभूत् कथं चाभूदिति विमृश्यते।

वीरशैवधर्मसंस्थापका रेणुक-दारुक-घण्टाकर्ण-धेनुकर्ण-विश्वकर्णाख्याः पञ्च महाचार्या इत्यागमप्रसिद्धिः। एते च कैलासनिवासिनः शिवस्य प्रधानाः प्रमथगणा इति कीर्त्यन्ते।

एतेष्वाचार्येषु रेणुक-दारुकाख्यौ गणेश्वरौ चन्द्रमौलेर्विश्वस्तावन्तः-पुरद्वारपालावास्ताम्[1]। एकदा कलधौतशिलामये कैलासे रत्नमयसिंहासनोपरि भवान्या सह समासीनं परमेश्वरं त्रयस्त्रिंशत्कोटिदेवताः परितः सिषेविरे। सर्वेषां

---

प्रभा" नाम से छः भाग प्रकाशित हो चुके हैं। इस कन्नड व्याख्या के अवशिष्ट भाग क्रमशः दस वर्षों में प्रकाशित होंगे— ऐसी सम्भावना की जाती है।

**श्रीजगद्गुरु रेणुकाचार्य की अवतार समीक्षा**

भगवत्पाद श्रीरेणुकाचार्य द्वारा महामुनि अगस्त्य को उपदिष्ट सिद्धान्तों का संग्रहात्मक यह सिद्धान्तशिखामणि ग्रन्थ है— ऐसा इस ग्रन्थ में पूर्व में ही प्रतिपादित किया जा चुका है। अतः सम्प्रति यह विचार किया जा रहा है कि आचार्यवर्य श्रीरेणुकाचार्य का अवतार कब हुआ और कैसे हुआ?

वीरशैव धर्म के संस्थापक ५ महान् आचार्य हैं— रेणुक, दारुक, घण्टाकर्ण, धेनुकर्ण एवं विश्वकर्ण–यह आगम जगत् में प्रसिद्ध है। ये आचार्य कैलासवासी होने के साथ शिव के प्रधान प्रमथगण हैं।

इनमें दो आचार्य रेणु एवं दारुक गणेश्वर हैं तथा चन्द्रमौलि भगवान् के अतिविश्वस्त अन्तःपुर के द्वारपाल हैं। एक समय की बात है— कलधौत शिलामय

---

१. गणेश्वरौ रेणुकदारुकावुभौ विश्वासभूतौ नवचन्द्रमौलेः।
अन्तःपरद्वारगतौ सदा तौ वितेनतर्विश्वपतेस्तु सेवाम्।। सि० शि० २।३३, पृ० १९

सेवां गृह्णंस्ताननुगृह्णंश्च कदाचित् सभामध्यगतं मुख्यं प्रसिद्धं परमप्रेमास्पदं च रेणुकगणेश्वरं ताम्बूलप्रसादं दातुं शिरसा समाह्वयत्। शम्भोराह्वानसन्तुष्टो रेणुकगणेश्वरः पार्श्ववर्तिनं दारुकं समुल्लङ्घ्य शिवान्तिकं जगाम[1]। एवं भक्तोल्लङ्घनापराधमसहमानः शिवः–

अविचारेण मद्भक्तो लङ्घितो दारुकस्त्वया।
एष त्वं रेणुकानेन जन्मवान् भव भूतले[2]।।

इति रेणुकं समादिदेश। तदा रेणुकः–हे करुणानिधे! क्षितिमण्डले मे मानुषो भावो यथा न भवेत् तथा प्रसादं विधेहीति शिवं प्रार्थयामास। एवं प्रार्थितवन्तं रेणुकं मा भेषीस्त्वयि मानुषो भावो नाऽऽयास्यतीत्यभयं प्रदाय,

श्रीशैलस्योत्तरे भागे त्रिलिङ्गविषये शुभे।
कोल्लिपाक्यभिधानोऽस्ति कोऽपि ग्रामो महत्तरः।।
सोमेश्वराभिधानस्य तत्र वासवतो मम।
अस्पृशन्मानुषं भावं लिङ्गात् प्रादुर्भविष्यसि।।

---

कैलास में रत्नमय सिंहासन पर भवानी के साथ उपविष्ट परमेश्वर भगवान् की सेवा में ३३ कोटि परिमित देवगण उपस्थित हुए। समस्त देवगण से सेवा को स्वीकारने वाले परमेश्वर ने उन्हें अनुगृहीत करने के क्रम में यथासमय सभामध्यगत परमप्रेमास्पद रेणुकगणेश्वर को ताम्बूल प्रसाद देने हेतु शिर से इङ्गित किया। भगवान् शम्भु के आदेश से सन्तुष्ट रेणुकगणेश्वर ने पाश्ववर्ती दारुक जी का उल्लङ्घन कर शिवपरमेश्वर के समीप चले गये। यह भक्तोल्लङ्घन नामक अपराध है। इसको सहन न करने वाले शिवप्रभु ने दण्डानुग्रह का विधान किया— "हे रेणुक! आपने विचारशून्यता के साथ मेरे भक्त दारुक का लङ्घन किया है अत; इसके प्रतिफल के रूप में भूतल में जाकर जन्म ग्रहण करो"।।१।। इस शिवानुशासन को सुनने के पश्चात् रेणुक ने भगवान् शिव से प्रार्थना की। हे करुणानिधि! क्षितितल में मेरा मानुषभाव में शिवविस्मृति न हो ऐसा कृपाप्रसाद मुझे उपलब्ध करायें। प्रार्थनाशील रेणुक को भगवान् ने कहा— डरो मत, तेरे अन्दर मानुषभाव नहीं आयेगा। इस प्रकार अभय वरदान देने के अनन्तर भगवान् ने उन्हें आदेश प्रदान किया—

---

१. शम्बोराह्वानसंतोषसंभ्रमेणैव दारुकम्।
उल्लङ्घ्य पार्श्वमगमल्लोकनाथस्य रेणुकः।। (सि० शि० ३।६७, पृ० ३५)

२. तत्रैव ३।७७, पृ० ३७.

मदद्वैतपरं शास्त्रं वेदवेदान्तसम्मतम्।
स्थापयिष्यसि भूलोके सर्वेषां हितकारकम्।।
मम प्रतापमतुलं मद्भक्तानां विशेषतः।
प्रकाशय महीभागे वेदमार्गानुसारतः[१]।।

इति समादिश्य च पार्वत्या सहितो नन्द्यादिगणैर्युक्तः सन् स्वकमन्तःपुरं जगाम। रेणुकगणेश्वरोऽपि शिवाऽऽदेशानुसारेण आन्ध्रप्रदेशीयकोल्लिपाकि-क्षेत्रस्थसोमेश्वरमहालिङ्गात् प्रादुर्बभूव[२]।

शिवलिङ्गात् प्रादुर्भूतमेनं दृष्ट्वा तत्रत्या जना विस्मिता बभूवुः। विस्मितांस्तान् समाश्वास्य स्वावतारप्रयोजनं चाख्याय व्योममार्गेण मलयाद्रिमुपागमत्[३]। तदा तत्रत्योऽगस्त्यः स्वदिव्यचक्षुषा एनं रेणुकाभिख्यं गणेन्द्रं ज्ञात्वा लोपामुद्राकराऽऽनीतैः कलशोदकैः शिवयोगिनः पादौ प्रक्षाल्य समुचितोपचारं च कृत्वा,

श्रीशैल के उत्तरभाग के शुभत्रिलिङ्गक्षेत्र में काल्लिपाक्यभिध महान् गाँव है वहाँ निवास करने वाले मेरे सोमेश्वर लिङ्ग से तुम प्रादुर्भुत होगे किन्तु तेरे अन्दर मानुषभाव नहीं आवेगा। तुम वेदवेदान्तसम्मत शिवाद्वैत शास्त्रसिद्धान्त की लोकमङ्गलकारिणी स्थापना करोगे। तुम वेदमार्गावलम्बनपुरःसर महीमण्डल में मेरे प्रताप को भक्तों के हित में प्रकाशित करो।।४।।

ऐसा आदेश देकर पार्वती सहित परमेश्वर, नन्दी प्रभृति गण से परिवृत होकर अपने अन्तःपुर में प्रविष्ट हो गये। रेणुक गणेश्वर भी शिवादेश को शिरसा स्वीकार कर आन्ध्र प्रदेश के कोल्लिपाक क्षेत्र में स्थित सोमेश्वर महालिङ्ग से प्रादुर्भुत हुए।

शिवलिङ्ग से प्रादुर्भूत श्रीरेणुकाचार्य को देखकर वहाँ के लोग आश्चर्यचकित हो उठे। तदनन्तर वे उन विस्मयापन्न जन को आश्वासित कर तथा अपने अवतार के प्रयोजन को बताकर व्योममार्ग से मलयाचल पर्वत को चले गये। उस समय वहाँ अगस्त्य जी रहते थे। उन्होंने अपनी दिव्यदृष्टि से इन्हें रेणुकगणेश्वर के रूप में पहचान लिया। तदनन्तर अपनी पत्नी लोपामुद्रा के हाथों से लाये गये

१. सि० शि० ३।८३-८४, ८६-८७, पृ० ३९.
२. तत्रैव ४।१, पृ० ४०.
३. तत्रैव ४।९-१३, पृ० ४२.

**स्थिरमद्य शिवज्ञानं स्थिरा मे तापसक्रिया।**
**भवद्दर्शनपुण्येन स्थिरा मे मुनिराजता।।**
**रेणुकं त्वां विजानामि गणनाथं शिवप्रियम्।**
**अवतीर्णमिमां भूमिं मदनुग्रहकाङ्क्षया।।**
**त्वन्मुखाच्छ्रोतुमिच्छामि सिद्धान्तं श्रुतिसंमतम्।**
**सर्वज्ञ वद मे साक्षाच्छैवं सर्वार्थसाधकम्[१]।।**

इति सम्प्रार्थयामास। तत्प्रार्थनानुसारेण भगवान् रेणुको नानागमश्रवणवर्तित-संशयिनं तं कृतार्थयितुं कामिकादिवातुलान्तानामष्टाविंशत्यागमानामुत्तरभागे विद्यमानं वीरशैवसिद्धान्तं समुपदिदेश। सोऽयमुपदेशोऽधुना 'सिद्धान्तशिखामणिः' इति नाम्ना प्रसिद्धोऽस्ति। तदा महर्षिः–

**अद्य मे सफलं जन्म गतो मे चित्तविभ्रमः।**
**संजाता पाशविच्छित्तिस्तपांसि फलितानि[२] मे।।**

---

कलशोदक से उन्होंने शिवयोगी के चरण कमलों को धोकर अवसरोचित उपचार द्वारा उनका सभाजन कर उनसे प्रार्थना की—

आपके दर्शनजनित पुण्य से आज मेरा शिवज्ञान सुस्थिर हुआ मेरी तपश्चर्या सुफल हुई तथा मुनिराज बनना चरितार्थ हुआ। मैं जानता हूँ आप शिव के प्रिय रेणुकगणेश्वर हैं। आप मेरे ऊपर अनुग्रह करने हेतु इस भूमि में अवतीर्ण हुए हैं। मैं आपके मुख से श्रुतिसम्मत सिद्धान्त को सुनना चाहता हूँ। हे सर्वज्ञ आचार्य! आप मुझे सभी पुरुषार्थों के साधक शैव (वीरशैव) सिद्धान्त का प्रबोधन करे।।५।।

अगस्त्यमुनि की इस प्रार्थना के अनुसार भगवान् श्रीरेणुकाचार्य ने नाना आगमों के श्रवण से संशयापन्न अगस्त्यमुनि को अनुगृहीत करने हेतु कामिक प्रभृति वातुल पर्यन्त २८ आगमों के पर्यन्तभाग में विलसित वीरशैवसिद्धान्त का उपदेश किया। वह उपदेश इस समय "सिद्धान्तशिखामणि" नाम से प्रसिद्ध है। तदनन्तर महर्षि अगस्त्य ने अपनी कृतकृत्यता प्रतिपादित की—

आज मेरा जन्म सफल हुआ, मेरे मन का भ्रम दूर हो गया। मेरा पाशबन्धन छिन्न हो गया तथा मेरे बहुविध तप फलित हो गये।।१।।

---

१. सि० शि० ४।४७, ५०, ५२, पृ० ५०-५१.
२. सि० शि० २०।६, पृ० २१५.

इति स्वकृतकृत्यतां ददर्श। तदानीं रेणुकगणेश्वरः–

स्थाप्यतां सर्वलोकेषु तन्त्रमेतत् त्वया मुने।
ईदृशं शिवबोधस्य साधनं नास्ति कुत्रचित्।।
अवतीर्णं मया भूमौ शास्त्रस्यास्य प्रवृत्तये।
प्रवर्तय शिवाद्वैतं त्वमपि ज्ञानमीदृशम्[३]।।

इत्यादिश्यान्तर्दधे। तदेतत् सिद्धान्तशिखामणिग्रन्थसन्दर्भेण रेणुका-गस्त्ययोर्गुरुशिष्यभावः समर्थितो भवति। अत एव भगवत्पादनीलकण्ठशिवाचार्याः–

अगस्त्यो जैमिनिश्चैव विश्वामित्रोऽथ काश्यपः।
भरद्वाजोऽङ्गिरा अत्रिर्वसिष्ठो रोमहर्षणः।।
एते सर्वे महाभागा अतिवर्णाश्रमे रताः।
वीरशैवाः समाख्याता जीवन्मुक्ता न संशयः[४]।।

---

तदनन्तर रेणुकगणेश्वर निम्नाङ्कित आदेश प्रदान कर अन्तर्धान हो गये—

हे मुनिवर! सर्वलोक में आप इस तन्त्रसिद्धान्त को स्थापित करें। शिवबोध का ईदृश साधन अन्यत्र दुर्लभ है। इस आगमशास्त्र की सर्वत्र प्रवृत्ति हेतु मैं अवतार ग्रहण किया हूँ। आप शिवाद्वैत के इस सिद्धान्तज्ञान को सर्वत्र प्रसारित करे।।२।।

सिद्धान्तशिखामणि ग्रन्थ के उपर्युक्त सन्दर्भ में रेणुकाचार्य एवं अगस्त्यमुनि के मध्य गुरुशिष्यभाव का समर्थन विदित होता है। अतएव भगवत्पाद नीलकण्ठ शिवाचार्य ने क्रियासार में प्रतिपादित किया है—

अतिवर्णाश्रम में व्यापृत नौ जीवन्मुक्त वीरशैवों का निम्नाङ्कित क्रम है—

अगस्त्य, जैमिनि, विश्वामित्र, काश्यप, भरद्वाज, अङ्गिरा, अत्रि, वसिष्ठ एवं रोमहर्षण।।२।।

यहाँ वीरशैव महर्षि की पङ्क्ति में महर्षि अगस्त्य को प्रथमस्थान में उल्लिखित किया है। शिवसिद्धान्त के तत्वज्ञ अगस्त्यमुनि ने रेणुक भगवत्पाद के आदेश का अनुसरण कर गुरुमुख से श्रुत वीरशैवसिद्धान्त के प्रचारार्थ बादरायण सूत्र पर वीरशैव सिद्धान्त प्रकाशक वृत्ति की रचना की थी। इस श्रीकरभाष्य की कारिका होती है—

मुनिश्रेष्ठ अगस्त्य द्वारा रचित व्याससूत्रवृत्ति का अवलोकन-मनन करने के अनन्तर मैंने कल्याणकारी भाष्य की रचना की है।।१।।

---

३. तत्रैव २०।१३, १७, पृ० २१७-२१८.

४. क्रि० सा०, भाग १, पृ० १२.

इति वीरशैवमहर्षिपङ्क्तौ महर्षिमगस्त्यं प्रथमत्वेन परिगणितवन्तः। शिवसिद्धान्ततत्त्वज्ञोऽयमगस्त्यो रेणुकभगवत्पादादेशानुसारेण स्वश्रुतवीर-शैवसिद्धान्तप्रचारार्थं च बादरायणसूत्रोपरि वीरशैवसिद्धान्तपरत्वेन वृत्तिं चकारेति,

अगस्त्यमुनिचन्द्रेण कृतां वैयासिकीं शुभाम्।
सूत्रवृत्तिं समालोक्य कृतं भाष्यं शिवङ्करम्[१]।।

इत्यनया श्रीकरभाष्यकारिकयाऽवगम्यते। उत्तरत्रापि–"किञ्चास्मिन् सूत्रेऽगस्त्यमुनिसार्वभौमेन कृतलघुसूत्रवृत्तौ "लिङ्गे सुषुप्तिः" इत्यादिबहुश्रुतिषु घट-कुम्भशब्दादिवद् ब्रह्म-लिङ्गशब्दयोः पर्यायत्वावगमात् तल्लिङ्गात् पूर्वोक्तदहरादिसर्वविद्योपास्यपरशिवा-प्रेरिताः सन्त आतिवाहिका मर्त्यलोक-शिवलोकान्तरालनिवासिदेवा दहरादिसर्वब्रह्मविद्योपासकं पुरुषं सौधसोपानाऽऽ-रोहणन्यायेन क्रमक्रमेण निरुपमानन्दनित्यवैभवं महाकैलासमानयन्तीति व्याख्यातम्, तदप्यविरुद्धम्"[२] इति श्रीपतिपण्डिताराध्यैरेव स्वभाष्ये उद्धृतागस्त्यवृत्तेरुद्धरणेन च सुस्पष्टमवगम्यते। अस्याश्च मुनिचन्द्रवृत्तिरित्यपि नामान्तरं श्रूयते। सा च कुम्भकोणे लभ्यत इति प्रतीतिः[३]।

---

उपर्युक्त मङ्गलपद्य के अतिरिक्त उत्तर ग्रन्थों में भी श्रीपतिपण्डिताराध्य ने स्पष्ट शब्दावली में अगस्त्यवृत्ति का उद्धरण प्रस्तुत किया है— 'ब्र.सू. ४।३।४' में अगस्त्यमुनि रचित लघुसूत्रवृत्ति में कहा गया है— "लिङ्गे सुषुप्तिः" इत्यादि अनेक श्रुतिवाक्यों में ब्रह्मशब्द एवं लिङ्गशब्द के पर्यायरूप से प्रयोग देखे जाते हैं यद्वत् घट शब्द एवं कुम्भ शब्द में। ब्रह्म के पर्याय होने से ही लिङ्ग शब्द से पूर्वप्रकरणप्रोक्त दहरादि सकलविद्याओं द्वारा उपास्य परशिव गृहीत होते हैं। उनसे प्रेरित हुए आतिवाहिक अर्थात् मर्त्यलोक एवं शिवलोक के मध्य निवास करने वाले देवगण दहर प्रभृति सर्वविद्या के उपासक साधक को सौधसोपानारोहणन्याय से (एक के बाद दूसरे सोपान पर आरूढ़ होते सौध पर पहुँच जाना की भाँति) निरुपम आनन्दमय नित्य वैभवमय महाकैलास पर पहुँचाते हैं— ऐसी व्यवस्था-भी अविरुद्ध है। इस वृत्ति का दूसरा नाम मुनिचन्द्रवृत्ति है। वह वृत्ति कुम्भकोण में प्राप्य है।

---

१. ब्र० सू० श्रीकर० मङ्गलश्लोक १७.
२. ब्र० सू० श्रीकर० ४।३।४.
३. श्रीकरभाष्यभूमिका, पृ० ११५. मैसूरविश्वविद्यालयप्रकाशनम्।

किञ्च, काश्यां लब्धजनुषा तत्रभवता विद्वद्वरेण श्रीभट्टोजिदीक्षितेनापि– "तेनातप्ततनूरज्ञ इत्यादिना, दीक्षया सहितः साक्षादाप्नुयाल्लिङ्गमुत्तममित्यन्तेन अगस्त्यं प्रति रेणुकेन पवित्रश्रुतेर्लिङ्गधारणपरकतया व्याख्यानात् तथा चायमर्थः"[१] इत्यत्र रेणुकेन कृतोऽगस्त्योपदेशः समर्थितः। तदेतावता श्रीरेणुकभगवत्पादैरुपदिष्टोऽगस्त्यस्तदादेशानुसारेण वीरशैवशास्त्रं प्रचारयामासेत्यत्र न शङ्काकलङ्कलवलेशोऽपि।

## अगस्त्यमुनेर्देशः कालश्च

श्रीकरभाष्यभूमिकायां श्री एम०जी० नञ्जुण्डाराध्यमहाभागा अगस्त्यमधिकृत्य वङ्गदेशीयेन ओ० सि० गाङ् गुलीमहाशयेन विरचितं 'पूर्वकालिकद्वीपान्तरसञ्चारी अगस्त्यः' इति लेखं विमृश्य श्री फ० गु० हलकट्टिमहोदयेन लिखितस्य कन्नडलेखस्य सारं संगृहीतवन्तः। तस्यैवांशोऽत्र विलिख्यते– श्रीगाङ्गुलीमहोदयस्याभिप्रायानुसारेणाऽगस्त्यः पूर्वं वाराणस्यामुवास। स च विन्ध्याटवीमुत्तीर्य दक्षिणापथमाजगाम। ततोऽयं नासिकप्रान्ते आश्रमं विनिर्ममे।

---

अन्य प्रमाणवचन भी प्राप्त है— काशी में लब्धजन्मा पूज्य विद्वद्वर श्रीभट्टोजि-दीक्षित ने— श्लोक समुदाय- "तेनातप्ततनूरज्ञः........आप्नुयाल्लिङ्गमुत्तमम्।" से अगस्त्य के प्रति रेणुक आचार्य ने पवित्रश्रुति का तात्पर्य लिङ्गधारण बताया है। अतः यह अर्थ निष्कर्ष प्राप्त होता है— ऐसा कहा है। दीक्षित जी की इस उक्ति से रेणुकाचार्य द्वारा अगस्त्य को उपदेश किया गया— यह सिद्धान्त समर्थित होता है। एतावता यह विदित होता है कि श्रीरेणुक भगवत्पाद से प्राप्तोदेश महामुनि अगस्त्य ने उनके आदेश से वीरशैव शास्त्र को प्रचारित किया था— इस निर्णय में शङ्काकलङ्क का लवलेश भी नहीं है।

## अगस्त्यमुनि का देश एवं काल

श्रीकरभाष्य की भूमिका में श्री एम. जी. नञ्जुण्डाराध्य महाशय ने बङ्गप्रदेश के ओ.सी. गाङ्गुली महोदय द्वारा रचित लेख को भलीभाँति विमर्शित किया था। अगस्त्य को सन्दर्भित इस लेख का शीर्षक है— "पूर्वकालिक-द्वीपान्तर-संचारी अगस्त्यः।" इसके अतिरिक्त भूमिकाकार ने श्री फ.गु. हलकट्टि महोदय द्वारा लिखित कन्नड लेख के सार का भी संग्रह किया। उनके द्वारा किये गये संकलन का सारभाग प्रस्तुत किया जा रहा है। "श्री गाङ्गुली महोदय के अभिप्रायानुसार

---

१. त० नि०, पृ० ५७.

तत्र वातापी-इल्वलनामकावसुरौ महर्षेः सङ्कल्पमात्रेण निहतौ[1]। ततोऽगस्त्यो दक्षिणे पाण्ड्यराज्यं प्रविश्य तत्र राजगुरुपदवीमलञ्चकार, तत्र तमिलभाषाया व्याकरणं 'अगति'नामकं व्यरचयच्च। कन्याकुमार्याः समीपस्थे 'पोधीय'नामके पर्वतेऽगस्त्योऽद्याप्यदृश्यः सन् तपोमग्न इति द्राविडानां दृढो विश्वासः. ततोऽगस्त्यः सागरमुत्तीर्य कम्बोडियाद्वीपमाजगाम। अमुमेवोदन्तं पौराणिकाः सप्तसागरपानत्वादिना[2] सोत्प्रेक्षं वर्णयन्ति। कम्बोडियागते 'ओङ्कारवाट'स्थिते शिलालेखे आर्यदेशीयः कश्चिद् अगस्त्यो नाम ब्राह्मणः काम्बोडियाद्वीपमागत्य शिवयोगसिद्धो भूत्वाऽलौकिकया शक्त्या भद्रेश्वरं समपूजयदित्युल्लेखो वर्तते।

जावादेशीयपूर्वभागगत-'दिनमया'ख्यग्रामसमीपस्थे कस्मिंश्चिद् शासने ख्रि० पू० ७६० तमेऽब्देऽगस्त्यनाम्ना काचन मूर्तिः समुत्कीर्णा। तत्रागस्त्यं 'शिवगुरुः, भट्टारकगुरुः' इत्याद्यभिधानैः कथयन्ति।

---

महामुनि अगस्त्य पहले वाराणसी में निवास करते थे। वह विन्ध्याटवी पार कर दक्षिणापथ को गये। वहाँ नासिक में उन्होंने अपना आश्रम बनाया। वहाँ पर वातापी तथा इल्वल नामक दो असुरों को उन्होंने अपने संकल्पमात्र से नष्ट कर दिया। तत्पश्चात् अगस्त्य जी ने दक्षिणभारत के ''पाण्ड्य''राज्य में प्रवेश कर वहाँ पर राजगुरु पदवी को अलंकृत की। वहाँ रहकर उन्होंने तमिलभाषा के व्याकरण (''अगति'' नामक) की रचना की। कन्याकुमारी के समीप ''पोधीय'' नामक पर्वत पर आज भी अदृश्य रूप में अगस्त्य जी तपोमग्न हैं ऐसा द्रविडनिवासी जन का दृढ़ विश्वास है।

अस्तु, तदनन्तर अगस्त्य जी सागर पार कर कम्बोडिया द्वीप पहुँच गये। इस कथानक को पौराणिक जन सप्तसागरपान के रूप से उत्प्रेक्षित कर उपवर्णित करते हैं। कम्बोडिया देश में ओङ्कारवाट के शिलालेख में उल्लेख प्राप्त होता है— आर्य देश निवासी कोई अगस्त्य नामक ब्राह्मण कम्बोडिया द्वीप आकर शिवयोग सिद्धस्वरूप हुआ और अलौकिक शक्ति से भद्रेश्वर का सम्यक् पूजन उसने किया।''

जावादेश के पूर्वभाग में दिनमय नामक ग्राम के समीप स्थित किसी शासन में ई०पू० ७६० में अगस्त्य नाम से कोई मूर्ति खुदाई में प्राप्त हुई। वहाँ अगस्त्य के लिये ''शिवगुरु'' एवं ''भट्टारकगुरु'' इत्यादि नामों से व्यवहार किया जाता है।

---

१. 'जीर्णस्ते जाठरे वह्नौ दृप्तो वातापिदानवः' (सि० शि० ४।४०, पृ० ४८)।
२. 'आचान्ता भवता पूर्वं पङ्कशेषाः पयोधयः' (तत्रैव ४।४०, पृ० ४८)।

श्री फ० गु० हलकट्टीमहोदयानामभिप्रायानुसारमगस्त्यस्य जन्मभूमिः कर्णाटराज्यान्तर्गतः 'कलशा'ख्यो ग्रामः (चिक्कमगलूर जिला)। तत्राद्यापि तत्स्मारकाणि विद्यन्ते। इदमेवास्य कुम्भसम्भवत्वादिकस्य[1] पौराणिकवर्णनादेर्मूलम्। गाङ्गुलीमहोदयस्तु मलयाद्रिं सुमात्राद्वीपस्थं प्रतिपादयति, परन्तु हलकट्टिमहोदयस्तन्निराकृत्य मलयाचलं दक्षिणभारते श्रीरेणुकभगवत्पादाचार्यस्य रम्भापुरीपीठसमीपस्थं कथयति। रेणुक-रेवणसिद्धयोरैतिह्याख्ये प्रबन्धेऽपि वि० जि० पाटील(रि० अ० ए० इन्स्पेक्ट्र-बेलगांव) महोदय उदन्तमिमं सोपपत्तिकं समर्थयति। अगस्त्यमहर्षये आदिरेणुकेनैव तत्त्वोपदेशः कृत इति निश्चित्य अगस्त्यस्य कालः ख्रि० पू० ७८० शताब्दात् पूर्व इत्यभिप्रैति सः[2]।

## श्रीरेणुकभगवत्पादानां त्रिकोट्याचार्यरूपधारणलीला

अगस्त्याय वीरशैवशास्त्रोपदेशानन्तरं निर्मलः स्वेच्छाचाररसिको रेणुकगणनायको लङ्कापुरीमाससाद। आगतमाचार्यमवलोक्य विभीषणस्तं स्वकं

---

श्री फ. गु. हलकट्टी महोदय के अनुसार अगस्त्यजी की जन्मभूमि कर्नाटक राज्य के अन्तर्गत "कलश" ग्राम है जो चिक्कमगलूर जिले के अन्तर्गत है। वहाँ आज भी उनका स्मारक बना हुआ है। पौराणिक वर्णन में कुम्भसम्भव बताया जाना - कलशग्राम में जन्म लेने के कारण ही युक्तिसंगत प्रतीत होता है।

गाङ्गुली महाशय मलयाद्रि को सुमात्रा द्वीप में स्थित बताते हैं किन्तु हलकट्टि महोदय उसका निराकरण कर मलयाचल को दक्षिण भारत में श्रीरेणुक भगवत्पाद के रम्भापुरी पीठ के समीपस्थ प्रतिपादित करते हैं। रेणुक एवं रेणवसिद्ध के इतिहास के विषय में रि. अ. ए. इन्स्पेक्टर-बेलगांव निवासी वि.जि. पाटील महोदय ने अपने प्रबन्ध- "रेणुक-रेवणयोरैतिह्यम्" में कलकट्टि सम्मत उदन्त (कथानक) को उपपत्ति के साथ समर्थन प्रदान किया है।

अगस्त्य महर्षि को आदि रेणुक-आचार्य ने ही तत्वोपदेश किया था। ऐसा निर्णय मानते हुए उन्होंने अगस्त्य का स्थितिकाल ईसा पूर्व ७८० से पूर्व में ही स्वीकारा है।

## श्री रेणुक भगवत्पाद की त्रिकोट्याचार्य रुप धारण की लीला

अगस्त्य को वीरशैवशास्त्र का उपदेश करने के अनन्तर निर्मल एवं स्वच्छस्वच्छन्द आचरण के रसिक रेणुक गणेश्वर लङ्कापुरी पहुँचे। आगत आचार्य

---

१. 'ददर्श स महायोगी मुनिं कलशसम्भवम्' (तत्रैव ४।३३, पृ० ४७)।

२. श्रीकरभाष्यभूमिका, पृ० १४४-१४५, मैसूर० वि० वि० प्रकाशनम्, १९७७ ई.।

गेहमानिनाय, निजे भद्रासने चोपावेशयत्। अर्घ्यपाद्यादिभिरुपचारैः सम्पूज्य च,

कृतार्था मे पुरी ह्येषा कृतार्थो राक्षसान्वयः।
जीवितं च कृतार्थं मे यस्य त्वं दृष्टिगोचरः[१]।।

इति तद्दर्शनेन स्वात्मानं कृतार्थमभिमत्य स्वमनसि स्थितां चिन्तां निरूपयामास। हे गणाधीश! मम भ्राता हि रावणोऽस्मिन् लङ्कापत्तने नवकोटिलिङ्गानि प्रतिष्ठाप्यानीति सङ्कल्प्य तत्र षट्कोटिलिङ्गानि स्थापयित्वा कालवशेन स्वचारित्र्यविपर्ययाद् विष्ण्ववतारेण रामेण रणे निहतः। रणे कण्ठस्खलितजीवितो मामवलोक्य,

कोटिषट्कं तु लिङ्गानां मया साधु प्रतिष्ठितम्।
कोटित्रयं तु लिङ्गानां स्थापनीयमतस्त्वया[२]।।

इति निवेद्य पञ्चत्वं गतः। तदाप्रभृति तदर्थमहं चिन्तितोऽस्मि। तस्मात् त्वमाचार्यभावमासाद्य मम वाञ्छितं पूरयेति निवेदयाञ्चक्रे। तदा रेणुकगणेश्वरः

---

को देखकर विभीषण जी उन्हें घर ले आये और निजभद्रासन पर उन्हें बिठाकर अर्घ्यादि उपचारों से उनकी पूजा करने के अनन्तर आचार्य-दर्शन से स्वयं को कृतार्थ माना। तद्यथा—

हे आचार्यवर! मेरी यह पुरी कृतकृत्य हुई, सम्पूर्ण राक्षसवंश कृतकृत्य हो गया तथा मेरा जीवन धन्य हो गया जिसके दृष्टिपथ में आपका अवतरण हुआ।।१।।

तदनन्तर उनसे उन्होंने अपनी मनोगत चिन्ताको व्यक्त की— हे गणाधीश! मेरे भ्राता रावण इस लङ्कानगरी में नौ करोड़ शिवलिङ्ग की सत्प्रतिष्ठा का संकल्प लिये थे। जिनमें ६ कोटि शिवलिङ्ग की स्थापना उन्होंने कर ली थी। तत्पश्चात् कालवशीभूत हुए वह चारित्र्यविपर्यय से श्रीविष्णु के अवतार श्रीराम द्वारा युद्धभूमि में मारे गये। रणभूमि में कण्ठगत प्राण होने पर उन्होंने निम्नाङ्कित वचन निवेदित कर पञ्चत्व की प्राप्ति की थी।

मैंने ६ कोटि शिवलिङ्गों की स्थापना कर ली है। शेष तीन कोटि लिङ्गों की स्थापना तुम कर लेना।।१।।

उस समय से मैं तदर्थ चिन्तित रहता हूँ। अतः आप आचार्यरूप में मेरे अभिलाष को पूर्ण करें ऐसा विभीषण ने आचार्यवर को सुनिवेदित किया। अनन्तर

---

१. सि० शि० २१।११, पृ० २२१.
२. तत्रैव २१।२७, पृ० २२५.

पौलस्त्यस्येष्टसिद्धये युगपत् त्रिकोट्याचार्यरूपं परिधाय यथाशास्त्रं विधिवत् कोटित्रयं लिङ्गानां स्थापयामास[1]।

विभीषणाऽभीष्टसिद्ध्यनन्तरं श्रीरेणुकगणेश्वरः प्रच्छन्नरूपेण प्रकटरूपेण च क्षितिमण्डले सञ्चरंस्तत्र तत्र कांश्चिज्जनान् करुणाकटाक्षेण, अन्यान् शिवाद्वैतोपदेशेन, अपरान् निर्मलसहवासेन च कृतार्थयन् यन्त्रमन्त्रादिचतुः-षष्टिकलासिद्धियुक्तान् कापालिकादिपरमतसिद्धमण्डलान् स्वसामर्थ्येन विजित्य च कामिकादिदशशिवागमसिद्धान्तं स्थापयित्वा निजावासं कोल्लिपाक्यभिधपुरमागत्य,

त्वदाज्ञया मयैतावत्कालमात्रं महीतले।
अचारि भवदुक्तानामागमानां प्रसिद्धये।।
अतः परं स्वरूपं ते प्राप्तुकामोऽस्मि शङ्कर।
अन्तरं देहि मे किञ्चिदनुकम्पाविशेषतः[2]।।

इति तत्रत्यं श्रीसोमेश्वरमहालिङ्गं सम्प्रार्थयामास। तदा तस्मात् शिवलिङ्गात् 'वत्सागच्छ महानुभाव भवतो भक्त्या प्रसन्नोऽस्म्यहम्'[3] इति

---

रेणुक गणेश्वर ने पौलस्त्य की अभीष्टसिद्धि हेतु एक बार ही त्रिकोटि आचार्य-स्वरूप को धारण कर यथाशास्त्र विधिवत् त्रिकोटि लिङ्गों की स्थापना सम्पन्न करायी।

विभीषण की अभीष्टसिद्धि के अनन्तर श्रीरेणुक गणाधीश ने प्रच्छन्न एवं प्रकटरूप में क्षितितल में भ्रमण करते हुए उस क्रम में कतिपय भाग्यवान् जन को करुणाकटाक्ष से कुछेक को शिवाद्वैत के उपदेश से तथा कुछ लोगों को निज सहवास से अनुगृहीत किया था। साथ ही उन्होंने यन्त्रमन्त्रादि चतुःषष्टि कला से उपेत कापालिकादि परमत- सिद्धमण्डल को स्वसामर्थ्य से जीतकर कामिक प्रभृति प्रोक्त वीरशैवागमसिद्धान्तों की स्थापना कर निजावासभूमि कोल्लिपाकि नगर वापस आकर वहाँ के सोमेश्वर महालिङ्ग से प्रार्थना की— "हे भगवन् शम्भो! अब मेरी अवतार-लीला पूर्ण हो गयी अब मैं आपके स्वरूप को प्राप्त करना चाहता हूँ। आप विशिष्ट अनुकम्पा प्रदान कर अपने स्वरूप में समाविष्ट कर लें।।२।।

तदनन्तर उस शिवलिङ्ग से ध्वनि सुनाई दी- हे वत्स आओ, मैं तेरी भक्ति

---

१. कोटित्रयं तु लिङ्गानां यथाशास्त्रं यथाविधि।
त्रिकोट्याचार्यरूपेण स्थापितं तेन तत्क्षणे।।　　(सि० शि० २१।३३, पृ० २२६)

२. सि० शि० २१।४९-५०, पृ० २३.

३. तत्रैव २१।५१, पृ० २३१.

ध्वनिर्निरगात्। सोमेश्वरलिङ्गादुद्भूतं सानुकम्पं शाङ्करं वचनं श्रुत्वा तत्रत्यैः शिवयोगिभिः स्तूयमानो भगवान् रेणुकः स्वप्रकाशं ज्योतिर्लिङ्गमनुप्राविशत्[१]।

तदेवं रेणुकभगवत्पादाः शिवादेशानुसारेण सोमेश्वरशिवलिङ्गात् प्रादुर्भूय, अगस्त्याय वीरशैवतत्त्वोपदेशं कृत्वा, विभीषणस्य प्रार्थनानुसारेण त्रिकोट्याचार्यरूपमवधार्य, युगपत् कोटित्रयं लिङ्गानां संस्थाप्य, तत्र तत्र दुष्टसिद्धान् विजित्य, शैवागमोक्तवीरशैवसमयं प्रतिष्ठाप्य, स्वावतारप्रयोजनं सम्पूर्य, पुनस्तस्मिन्नेव सोमेश्वरमहालिङ्गे लीनाअभूवन्निति सिद्धान्तशिखामणौ रेणुकभगवत्पादानामवतारस्तत्कृता लीलाश्च निरूपिताः सन्ति। एतादृशाऽसामान्यलिङ्गाऽऽविर्भाव-लिङ्गविलयाभ्यामस्याचार्यवर्यस्यालौकिकं माहात्म्यं ध्वन्यते। वीरशैवशिवशरणेषु प्रसिद्धा 'अक्कमहादेवी' स्वकीये कन्नडभाषामये वचने-

लिङ्गदिन्दुदयिसि, अङ्गविडिदिप्प पुरातनर
इङ्गितवनेनेन्दु बेसगोम्बिर्ययया?

---

से प्रसन्न हूँ। सोमेश्वर लिङ्ग से उद्भूत अनुग्रहपूर्ण भगवदीय वचन सुनकर उपस्थित शिवयोगियों द्वारा की जाने वाली स्तुति के मध्य भगवान् रेणुक, स्वप्रकाश ज्योतिर्लिङ्ग में सम्प्रविष्ट हो गये।

इस प्रकार संक्षिप्त निष्कर्ष कथन यह है— श्रीरेणुक भगवत्पाद श्रीशिवप्रभु की आज्ञा से सोमेश्वर शिवलिङ्ग से प्रादुर्भूत हुए। उन्होंने अगस्त्य को वीरशैवतत्त्व का उपदेश किया। अनन्तर उन्होंने विभीषण की प्रार्थना से त्रिकोटि आचार्यस्वरूप को धारण कर एक साथ त्रिकोटि शिवलिङ्गों की स्थापना करायी। अवतार-प्रयोजनों की पूर्ति के अनन्तर उस सोमेश्वर महालिङ्ग में वे लीन हो गये- यह कथा रेणुक भगवत्पाद के अवतार एवं उनकी लीलाओं को आत्मसात् करने वाली है। यह कथा, सिद्धान्तशिखामणि में प्रतिपादित की गई है।

इस प्रकार सुस्पष्ट है कि असामान्य लिङ्ग से आविर्भाव होना तथा लीलापूर्ति के अनन्तर ज्योतिर्लिङ्ग में ही विलीन होना-निश्चित रूप से श्रेष्ठ आचार्य के लोकोत्तर माहात्म्य को ध्वनित करते हैं। वीरशैवशिवशरणों में विश्रुत

---

१. श्रुत्वा लिङ्गाद्वचनमुदितं शाङ्करं सानुकम्पं
संहृष्टात्मा गणपतिरथो ज्योतिषा दीप्यमानः।
जातोत्कण्ठैः परमनुचरैर्योगिभिः स्तूयमानो
ज्योतिर्लिङ्गं परमनुविशत् स्वप्रकाशं तदानीम्।। (तत्रैव २१।५२, पृ० २३१)

अवर नडेये आगम, अवर नुडिये वेद;
अवर लोकद मानवरेन्दन्नबहुदे अय्या? अदेन्तेन्दडे साक्षि;
'वृक्षाद्भवति बीजं हि तद्वृक्षे लीयते पुनः।
रुद्रलोकं परित्यक्त्वा शिवलोके भविष्यति।।' यन्दुदागि,
अङ्कोलेय बीजदिन्दायित्तु वृक्षव;
आ वृक्ष मरलि आ बीजदोलडगित्तु
आप्रकारदल्लि लिङ्गदोलगिन्द पुरातनरुद्भविसि,
मरलि आ पुरातनरु आलिङ्गदोलगे बेरसिदरु नोडिर्‌यया,
इन्तप्प पुरातनरिगे नानु शरणेन्दु हुट्टुगेट्टेनय्या,
चन्नमल्लिकार्जुना[१]।

इत्येवमाचार्याणां लिङ्गोद्भवत्वं पुनस्तत्रैव लयत्वं च सदृष्टान्तमुपवर्णितवती। उपर्युक्तस्य कन्नडवचनस्यायं भावः–यथा बीजं वृक्षादुत्पन्नं सत् पुनर्वृक्षे प्रविलीयते, तथा आचार्याः शिवलिङ्गात् प्रादुर्भूय पुनर्लिङ्गे ऐक्यमापन्नाः। एतादृशानामाचार्याणां मुखोद्गतानि वाक्यान्येव वेदाः, तेषामाचरणान्येव आगमाः। एतान् प्रणम्याऽहं भवरोगमुक्तोऽभवमिति। एवमाचार्याणां माहात्म्यादेव तत्स्थापितवीरशैवधर्मस्याप्युत्कृष्टता प्रतिपादिता भवति।

---

"अक्कमहादेवी" जी ने अपने कन्नडभाषा-वचन में आचार्यों के लिङ्ग से प्राकट्य तथा विलय को सदृष्टान्त प्रतिपादित किया है— लिङ्गदिन्दुदयिसि.................. चन्नमल्लिकार्जुना ।।पद्यअनुच्छेद।।

उपर्युक्त कन्नडवचन का आशय यह है— यद्वत् बीज, वृक्ष से उद्गत होता है तथा वृक्ष में ही परिणत हो जाता है। तद्वत् शैव आचार्यगण शिवलिङ्ग से प्रादुर्भूत होकर पुनश्च लिङ्ग में ही अभेदापन्न हो गये। एतादृश आचार्यों के मुख से उद्गतवचन ही "वेद" कहलाते हैं। तथा उनके आचरण "आगम" कहलाते हैं। इनको प्रणाम कर मैं भवरोग से मुक्त हो गया हूँ। इस प्रकार के आचार्यों के माहात्म्य से उनके द्वारा स्थापित वीरशैवधर्म की भी उत्कृष्टता स्वयमेव प्रतिपादित होती है।

---

१. 'महादेवियक्कनवचनगलु' संख्या ९३, कर्नाटकवि० वि० प्रकाशनम् १९७३ ई०।

## कति रेणुकाभिख्या आचार्याः?

वीरशैवाचार्यपरम्परायां रेणुक-रेवण-रेवणसिद्ध-रेवणसिद्धेश्वराभिधा आचार्याः प्रसिद्धाः सन्ति। एते सर्वे भिन्नकालिकाः। श्रीरेणुकाचार्येणाऽगस्त्याय शिवाऽद्वैतसिद्धान्तोपदेशः, विभीषणस्य प्रार्थनानुसारं लङ्कायां दशाननसङ्कल्पितकोटित्रयशिवलिङ्गप्रतिष्ठा च कृतेति सिद्धान्तशिखामणि-परिशीलनेन परिज्ञायते। एतेन मूलाचार्यस्य रेणुकस्यापि कालोऽगस्त्यविभीषणयोः सम एव। अयमाद्य आचार्यः।

हरिभद्रसूरेः षड्दर्शनसमुच्चयाख्यस्य ग्रन्थस्य व्याख्यायां मणिभद्रसूरिणा,

उत्पलः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः।
वामनस्तूभयं वेत्ति न किञ्चिदपि रेवणः[२]।।

इत्युत्पल-प्रभाकर-वामनादिदार्शनिकेषु मध्ये रेवणस्यापि नाम गृहीतमित्ययमाचार्यो मणिभद्रसूरेः प्राक्तनः समकालिको वासीदिति ज्ञायते। अयं च द्वितीयः।

---

## रेणुक नाम से कितने आचार्य हुए हैं

वीरशैवाचार्यों की परम्परा में रेणुक, रेवण, रेवणसिद्ध तथा रेवणसिद्धेश्वर नामक आचार्य प्रसिद्ध हैं। ये आचार्य भिन्न कालवर्ती हैं। श्रीरेणुकाचार्य ने अगस्त्य मुनि को शिवाद्वैत सिद्धान्त का उपदेश किया था। इन्होंने विभीषण की प्रार्थना के अनुसार लङ्का में दशानन-संकल्पित कोटित्रय शिवलिङ्ग की प्रतिष्ठा की थी। सिद्धान्तशिखामणि के परिशीलन से उपुर्यक्त बातों की जानकारी सुलभ है। एतावता मूलाचार्य रेणुकभगवत्पाद का काल अगस्त्य एवं विभीषण के समकाल में ही निर्धारित होता है। यह प्रथम आचार्य है।

श्री हरिभद्रसूरि के षड्दर्शनसमुच्चय ग्रन्थ की व्याख्या में मणिभद्र सूरि ने उत्पल, प्रभाकर, वामन प्रभृति आचार्यों के मध्य आचार्य रेवण का नामोल्लेख किया है। अतः श्रीरेवण आचार्य, मणिभद्र सूरि से प्राचीन अथवा समकालिक निर्धारित होते हैं। यह द्वितीय आचार्य हैं। तद्यथा— उत्पलः कारिकां............ किञ्चिदपि रेवणः।।१।।

---

२. ष० स०, पृ० ४.

अथ तृतीयो रेवपणसिद्धनामकः। अस्मादेव आद्यशङ्कराचार्यश्चन्द्रमौलीश्वरलिङ्गं रत्नगर्भगणपतिं च प्राप्तवानिति गुरुवंशकाव्य-शिवतत्त्वरत्नाकरादि-ग्रन्थैर्विज्ञायते। तत्र श्रीशृङ्गेरीमठस्यास्थानविदुषा काशीलक्ष्मणशास्त्रिणा-

श्रीचन्द्रमौलीश्वरलिङ्गमस्मै सद्रत्नगर्भं गणनायकं च।
स विश्वरूपाय सुसिद्धदत्तं दत्त्वा न्यगादीच्चिरमर्चयेति[1]।।

इत्यत्र आदिशङ्करो रेवणसिद्धमहायोगिना प्राप्तं चन्द्रमौलीश्वरलिङ्गं रत्न-गर्भगणपतिं चार्चनाथं स्वप्रथमशिष्याय श्रीसुरेश्वराचार्याय प्रददाविति गुरुवंसकाव्याख्ये शङ्करचरिते प्रतिपादितम्। तेनैवोपर्युक्तश्लोकव्याख्यानावसरे "सुसिद्धेन = रेवासिद्धमहायोगिना" इति श्लोकस्थ-सुसिद्धपदस्य रेवणसिद्ध-इति व्याख्या चाकारि।

आचार्यश्रीबलदेवोपाध्यायमहाभागाः स्वसम्पादितशङ्करदिग्विजयस्य परिशिष्टे गुरुवंशकाव्यस्य वैशिष्ट्यनिरूपणावसरे रेवणसिद्धमहायोगिनः सकाशात् प्राप्तस्य चन्द्रमौलीश्वरलिङ्गस्य रत्नगर्भविनायकस्य च वृत्तान्तं प्रतिपादितवन्तः[2]।

---

तृतीय आचार्य रेवणसिद्ध हैं। इस आचार्यप्रवर से ही आद्यशङ्कर भगवत्पाद को चन्द्रमौलीश्वर लिङ्ग एवं रत्नगर्भ गणपति की प्राप्ति हुई थी। गुरुवंशकारण तथा शिवतत्त्वरत्नाकर प्रभृति ग्रन्थों से यह बात सुविदित होती है।

श्री शृङ्गेरीमठ के आस्थानविद्वान् श्री काशीलक्ष्मणशास्त्री ने गुरुवंश काव्य शङ्करचरित में निम्नाङ्कित श्लोक का उल्लेख किया है—

श्रीचन्द्रमौलीश्वरलिङ्गमस्मै................चिरमर्चयेदिति।।१।।

तदनुसार शङ्कराचार्य जी ने अर्चनीय देवविग्रहों को श्रीसुरेश्वराचार्य के हाथों में प्रसन्नता के साथ अर्चन हेतु सौंप दी थी। शास्त्री जी ने "सुसिद्धदन्तम्" इस श्लोकस्थ पद की व्याख्या भी की है— सुसिद्धेन=रेवणसिद्धमहायोगिना दत्तम् ।

आयार्य श्री बलदेव उपाध्याय जी ने स्वसम्पादित शङ्करदिग्विजय के परिशिष्ट में गुरुवंश काव्य वैशिष्ट्य को बताते हुए रेवणसिद्ध महायोगी से प्राप्त चन्द्रमौलीश्वर लिङ्ग एवं रत्नगर्भविनायक का वृत्तान्त प्रतिपादित किया है।

---

१. गुरु० का० ३।३३.

२. 'शङ्करदिग्विजयः' परिशिष्ट (क), पृ० ५८६-५८८ हरिद्वारप्रकाशनम्।

अपि च, केलदीबसवभूपालः स्वकीये शिवतत्त्वरत्नाकराख्ये ग्रन्थे–

ततः स रेवणासिद्धसम्प्रदायप्रवर्तिनाम्।
शङ्कराचार्यवर्याणां पारम्पर्यक्रमागतम्।।
संन्यासिनमुपाश्रित्य विनयावनतोऽधिकम्।
वृत्तान्तमखिलं तस्मै यतये स्वं व्यजिज्ञपत्।।
इत्युक्तेनार्थितस्तेन स संन्यासमुपादिशत्।
विद्यारण्य इति प्रादादाख्यां तस्मै ततः परम्।।
रेवणासिद्धसम्प्राप्तं चन्द्रमौलीशमप्यदात्।
आख्याच्चानेन लिङ्गेन तवाभीष्टाप्तिरित्यपि[१]।।

इति रेवणसिद्धमहायोगिना आद्यशङ्करभगवत्पादाय प्रदत्तं चन्द्रमौलीश्वरलिङ्गं परम्परया श्रीविद्यारण्यस्वामिनोऽपि प्राप्तवन्त इति विषयमुल्लिखितवान्। तच्च लिङ्गमधुनापि श्रीशृङ्गेरीपीठपरम्परागतैराचार्यैरभ्यर्च्यते। एतेनाचार्यशङ्करस्य समकालिकः कश्चन रेवणसिद्धाख्यो वीरशैवाचार्य आसीदिति विज्ञायते। शिवतत्त्वरत्नाकरस्य आङ्ग्लभाषामयभूमिकायां सुप्रसिद्धपुरातत्त्वविदुषा स्व० हो० कृष्णशास्त्रिमहोदयेन रेवणसिद्धो वीरशैव-(लिङ्गायत) सम्प्रदायस्याचार्य इति प्रतिपादितम्[२]।

---

तद्वत् केदली बसवभूपाल ने निजकृति शिवतत्त्वरत्नाकर में सुस्पष्ट प्रतिपादित किया है कि श्रीरेवण सिद्धमहायोगी द्वारा आद्यशंकर भगवत्पाद को प्रदत्त चन्द्रमौलीश्वर लिङ्ग को परम्परया श्रीविद्यारण्यस्वामी जी ने भी प्राप्त की थी। तद्यथा—

उपुर्यक्त लिङ्ग की अर्चना आज भी श्री शृङ्गेरीपीठ के परम्परागत आचार्यपाद के द्वारा की जाती है। एतावता यह सुनिर्णीत होता है कि वीरशैवाचार्य श्रीरेवणसिद्ध, आद्यशंकर भगवत्पाद के समकालिक थे। शिवतत्त्वरत्नाकर की अंग्रेजी भूमिका में सुप्रसिद्ध पुरातत्त्व के विद्वान् स्व.हो. कृष्णशास्त्री जी ने उपवर्णित किया है— लिङ्गायत (वीरशैव) सम्प्रदाय के आचार्य श्रीरेवणसिद्ध थे।

---

१. शिव० रत्ना० ४।१२।९-१०, २२-२३.

१. "रेवणसिद्ध We know, is a well known Saiva teacher, whom the Lingayats still claim as one of their earliest Acharya's." (Sivatattva Ratnakara, p. 10, Publishers– B.M. Nath & Co., Vepery, Madras, 1927)

अपरो रेवणसिद्धेश्वराख्य आचार्यः ख्रि० एकादशतमशताब्देऽवतीर्य सप्तोत्तरशत (१०७) वर्षाण्युषित्वा दिगन्तविश्रान्तकीर्तिरभूत्। अस्य च स्थानं सोल्लापुर (महाराष्ट्र) समीपे 'मासनूर' ग्रामे भीमानद्यास्तीरे वर्तते। अस्यैव महानुभावस्याशीर्वादेन षष्टिवर्षीयायाः सुग्गलादेव्याः कुक्षितः सोल्लापुरसिद्धरामेश्वरस्य जन्माभूदिति सिद्धरामचरितेन ज्ञायते[१]। अयमेव मासनूर-समीपस्थे कस्मिंश्चिद् ग्रामे निवासिनोर्जनपीडकयोर्यक्षदम्पत्योः संहारम्, कोल्हापुरनरेशस्य गोरक्षनाथस्य गर्वहरणम्, काञ्चीवरदराजमूर्तेः कम्पमानशिरस्तम्भनं च चकारेति तदैतिह्यादवगम्यते[२]।

एवं रेणुक-रेवण-रेवणसिद्ध-रेवणसिद्धेश्वराख्या आचार्या भिन्न-भिन्न-कालिका एव वर्तन्ते। एवं सत्यपि ख्रि० द्वादशशतकानन्तरकालीना वीरशैवसाहित्यकारा चतुर्णां चारित्र्यं क्रोडीकृत्य लिखितवन्तः। एतेन भ्रमोऽयं जातो यद् एकस्यैव रेणुकाचार्यस्य रेवण-रेवणसिद्ध-रेवणसिद्धेश्वराख्यानि

---

रेवणसिद्धेश्वर नामक दूसरे आचार्य ईसा की ११वीं शताब्दी में अवतीर्ण हुए थे। वे १०७ वर्षों के अपने जीवन में अपनी पवित्र कीर्ति को सर्वदिशाओं में प्रसारित किये थे। उनका स्थान सोलापुर-महाराष्ट्र के समीप भीमानदी के तट पर मासनूर ग्राम में विद्यमान है। इस आचार्य महाशय के आशीर्वाद से ६० वर्ष की सुग्लादेवी की कोख से सोलापुर सिद्धरामेश्वर का जन्म हुआ था। **सिद्धरामचरित** के अनुशीलन से यह सुविदित होता है। ये ही आचार्य मासनूर के समीप में स्थित किसी ग्राम के निवासी एवम् जनपीडापरायण यक्षदम्पती का संहार किये थे। आपने ही कोल्हापुर नरेश गोरक्षनाथ का गर्वहरण किया था तथा काञ्ची के वरदराजमूर्ति के कम्पनशील शिरस् का स्तम्भन किया था— ये सारी बातें उनके ऐतिह्य से सुविदित होती है।

इस प्रकार सुस्पष्ट है— रेणुक, रेवण, रेवणसिद्ध एवं रेवणसिद्धेश्वर नाम के आचार्य विभिन्न कालवर्ती थे। ऐसा होने पर भी ईसा की १२वीं शताब्दी के पश्चाद्वर्ती वीरशैव-साहित्यकारों ने चार आचार्यों के चरित्र को एक साथ कर लिखते रहे हैं। यही कारण है कि लोकसामान्य को यह भ्रम हो गया कि एक ही रेणुकाचार्य के पर्याय नाम हैं— रेवण, रेवणसिद्ध एवं रेवणसिद्धेश्वर। अतः इस

---

२. सिद्धरामशिवयोगि, पृ० ७५.

३. शिवाङ्ग, पृ० ३५०-३५५ (कल्याण) गोरखपुर, १९९० वि० संवत्।

पर्यायनामानि सन्तीति। तस्मात् तन्न वास्तविकमिति विदाङ्कुर्वन्तु विद्वांसः।

तदेतावता सिद्धान्तशिखामणिग्रन्थपरिचयसन्दर्भेण बहवोऽत्र विषया यथामति सप्रमाणं च प्रपञ्चिताः। मन्ये, एतदवलोकनेन जिज्ञासूनां सिद्धान्तशिखामणिविषयकाः प्रायः सर्वा जिज्ञासाः समाहिता भवेयुरिति।

---

भ्रान्ति को यथार्थ नहीं कहा जा सकता- ऐसा विद्वज्जन सुस्पष्ट समझ सकेंगे।

उपर्युक्त सिद्धान्तशिखामणिग्रन्थ-परिचय के सन्दर्भ में अनेक विषयों का सप्रमाण स्वबुद्धिविवेक के अनुरूप विवेचन किया गया है। समीक्षाग्रन्थ के रचयिता का विश्वास है- इस प्रकरण के अवलोकन से जिज्ञासुजन को सिद्धान्तशिखामणि से सन्दर्भित प्रायेण समस्त जिज्ञासाओं के प्रायेण समाधान हो जायेंगे।।

❋ ❋ ❋

श्रीरेवणाराध्याय नमः

# तृतीयः परिच्छेदः

## ईश्वरस्वरूपविमर्शः

तत्र तावद् भारतीयदार्शनिकेषु केचिज्जगदुत्पत्ति-स्थिति-संहारक्रियाव्यवस्थार्थम्, प्राणिनामदृष्टानुरूपं सुखदुःखफलप्रदानार्थम्, वेदानां प्रामाण्यव्यवस्थापनार्थं चास्मद्विलक्षणः सर्वज्ञत्वसर्वकर्तृत्वादिगुणगणसमन्वित ईश्वर आवश्यक इति तमागमानुमानादिप्रमाणैः साधयन्ति। केचन विनैवेश्वरं पूर्वोक्तानां समस्यानां समाधानं कुर्वन्ति। तदत्र वैदिकषड्दर्शनेषु कैरीश्वरोऽङ्गीकृतः? किमर्थं वाङ्गीकृतः? तदभिमतेश्वरस्वरूपं च कीदृशम्? किमर्थं वा तत्र तस्याङ्गीकारः कृत इत्यादिविषया विमृश्यन्ते।

---

।। श्रीमान् रेणुकाचार्य जी को नमस्कार अर्पित हो ।।

# तृतीय परिच्छेद

## ईश्वरस्वरूप-विमर्श

ईश्वर के सन्दर्भ में भारतीय दार्शनिकों में कतिपय प्रस्थानों के आचार्यों द्वारा जगत् की उत्पत्ति, स्थिति एवं संहार क्रिया की व्यवस्था हेतु प्राणियों के अदृष्ट (पुण्य एवं पाप) के अनुरूप सुख एवं दुःख फलों के देने वाले तथा वेदप्रामाण्य की व्यवस्था हेतु अस्मद् विलक्षण, (जीवातिरिक्त) सर्वज्ञत्व एवं सर्वकृर्तत्व प्रभृति गुणगण से युक्त ईश्वर अनिवार्य- रूप से स्वीकार्य हैं। अतः ये इन्द्रियादि से अगृहीत ईश्वर की सिद्धि, आगम एवं अनुमान- प्रभृति प्रमाणों द्वारा करते हैं। अन्य प्रस्थानों के आचार्य ईश्वर के बिना ही पूर्वोक्त समस्याओं का समाधान करते हैं। अतः इस परिच्छेद में निम्नाङ्कित विषयों पर आधारित विमर्श किया जाना है—

१. वैदिक षड्विध दर्शनों में कौन से आचार्य ईश्वर को स्वीकारते हैं?
२. ईश्वर का अङ्गीकार किस उद्देश्य की पूर्ति हेतु किया जाता है?
३. आचार्यों द्वारा अभिप्रेत ईश्वर का स्वरूप कैसा है?
४. जिन दार्शनिकों द्वारा ईश्वर का अङ्गीकार नहीं किया जाता है उनके मत में सृष्टि-प्रभृति व्यवहार की व्यवस्था कैसे की जाती है?
५. वीरशैव दर्शन में ईश्वर का स्वरूप कीदृश है?
६. किस उद्देश्य से इस दर्शन में ईश्वर को स्वीकार किया जाता है?

## न्यायवैशेषिकदर्शनयोरीश्वरस्वरूपम्

तत्र तावन्नैयायिका वैशेषिकाश्च परिदृश्यमानस्यास्य विचित्रविश्वस्य कर्ताऽस्मदादिविलक्षणः सर्वज्ञत्वादिगुणगणसमन्वित ईश्वरोऽस्तीत्यभ्युपगच्छन्ति। स एव प्राणिनामदृष्टनियामकः। तस्यैव कृपया जीवः पदार्थतत्त्वज्ञानं प्राप्यात्यन्तिकदुःखनिवृत्तिरूपमपवर्गमधिगच्छतीति चात्र स्वीक्रियते। तस्मादत्र तदीयेश्वरस्वरूपं तावद् विचारयामः।

महर्षिणा गौतमेन–"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्,[1] न पुरुषकर्माभावे फलानिष्पत्तेः",[2] "तत्कारित्वादहेतुः"[3] इति सूत्रत्रयेषु संक्षेपेण, किन्तु स्पष्टरूपेणेश्वरस्योल्लेखः कृतः।

अत्र प्रथमसूत्रेण विनैव जीवादृष्टमीश्वरो जगत्कारणमिति प्रतिपादकेन प्राचीनतमेनेश्वरवादेन पूर्वपक्षं विधाय, द्वितीयेन सूत्रेण च जीवादृष्टं विना

---

### न्याय एवं वैशेशिक दर्शनों में ईश्वर का स्वरूप क्या है?

वैदिक दर्शनों में न्याय एवं वैशेषिक दर्शन के आचार्य, "परिदृश्यमान विचित्र विश्व का कर्ता, जीव-विलक्षण सर्वज्ञत्वादि गुणों से युक्त ईश्वर है"— ऐसा स्वीकार करते हैं। वह ईश्वर ही प्राणियों के अदृष्ट के नियामक हैं। उन्हीं की कृपा से जीव, पदार्थ तत्वों का ज्ञान प्राप्त कर आत्यन्तिक दुःख-निवृत्ति-रूप अपवर्ग को प्राप्त करता है। अतः समानतन्त्र-न्यायवैशेषिक दर्शनों में ईश्वर स्वीकार्य हैं। अतः इन दर्शनों में तदभिमत ईश्वर स्वरूप का विचार अभी किया जा रहा है।

महर्षि गौतम ने निम्नाङ्कित तीन सूत्रों में अतिसंक्षिप्त किन्तु सुस्पष्ट रूप से ईश्वर का उल्लेख किया है।

१. ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ।

२. न पुरुषकर्माभावे फलानिष्पत्तेः ।

३. तत्कारित्वादहेतुः ।

उपर्युक्त प्रथमसूत्र से जीवादृष्ट के बिना ही ईश्वर, जगत् के कारण हैं— इस आशय का प्रतिपादक प्राचीनतम ईश्वरवाद का पूर्वपक्ष उपस्थापित किया गया है।

---

१. न्या० सू० ४।१।१९.

२. तत्रैव, ४।१।२०.

३. तत्रैव, ४।१।२१.

फलोत्पत्त्यभाव इति नेश्वरः कारणमितीश्वरं विनैव कर्ममात्रस्य कारणत्ववादिनां मतमुपन्यस्य, तृतीयेन स्वाभिमतः सिद्धान्तो महर्षिणा गौतमेन प्रकटीकृतः। तद्यथा– न केवलमीश्वरो जगत्कारणं भवितुमर्हति, वैषम्यनैर्घृण्यदोषापत्तेः। न वा केवलं प्राणिनामदृष्टं कारणं भवति, तस्याचेतनत्वादिति केवलेश्वरकारणवाद-केवलकर्मकारणवादयोर्मतं विखण्ड्याऽदृष्टसहकृत ईश्वर एव जगदुत्पत्ति-निमित्तकारणमिति मतमुपस्थापितम्। तस्मान्न्यायदर्शने ईश्वरास्तित्वं जगदुत्पत्तिनिमित्तकारणत्वेन प्राणिनामदृष्टनियामकत्वेन च स्वीकृतमिति वात्स्यायनभाष्यपरिशीलेन परिज्ञायते[१]।

## ईश्वरस्य लक्षणम्

भगवता भाष्यकारेण वात्स्यायनेन च–"गुणविशिष्टमात्मान्तरमीश्वरः, तस्यात्मकल्पत्वात् कल्पान्तरानुपपत्तिः। अधर्म–मिथ्याज्ञानप्रमादहान्या धर्म-ज्ञान–समाधि–सम्पदा च विशिष्टमात्मान्तरमीश्वरः, तस्य च

द्वितीय सूत्र से यह प्रतिपादित किया गया है कि जीवादृष्ट के बिना फलोत्पत्ति नहीं हो सकती है अत: ईश्वर की कारणता नहीं है प्रत्युत कर्ममात्र की कारणता है। ऐसे कर्ममात्र के कारणतावादी के मत का उल्लेख इस द्वितीय सूत्र में किया गया है।

तृतीय सूत्र से महर्षि गौतम ने स्वाभिमत सिद्धान्त का प्रतिपादन किया है। तद्‌यथा–केवल ईश्वर को कारण मानने में ईश्वर में विषमता तथा निष्कारुण्य दोष आपतित होगे। तद्‌वत् केवल प्राणियों के अदृष्ट को भी कारण नहीं माना जा सकता। क्योंकि अदृष्ट अचेतन होता है वह फलदान की विवेचना कैसे कर सकता है। अत: केवलेश्वरकारणवाद एवं केवलकर्मकारणवाद के मत का खण्डन कर अदृष्टसहकृत ईश्वर, जगत् की उत्पत्ति के प्रति निमित्तकारण हैं इस मत का उपस्थापन किया जाता है।

अत: न्यायदर्शन में जगत् की उत्पत्ति के प्रति निमित्त कारण के रूप में तथा प्राणियों के अदृष्ट का नियामक रूप में ईश्वर की स्वीकृति की गई है— ऐसा वात्स्यायन भाष्य के परिशीलन से सुविदित होता है।

## ईश्वर का लक्षण

भगवान् भाष्यकार आचार्य वात्स्यायन ने ईश्वर को द्वादशविध प्रमेय के अन्तर्गत स्वीकार किया है तथा उसका बोध आत्मशब्द से ही होता है। तद्‌यथा—

१. न्या० सू० भा० ४।१।१९–२१.

धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्यम्[२]" इति द्वादशविधप्रमेयान्तर्गतात्मशब्देनैव[३] ईश्वरस्यापि बोध इति प्रतिपादितम्।

तत्रभवान् अन्नम्भट्टोऽपि–"ज्ञानाधिकरणमात्मा। स द्विविधः जीवात्मा परमात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च[४]" इति ज्ञानाधिकरणत्वेनात्मलक्षणेन जीवेश्वरयोरुभयोरपि प्राप्तिः, तत्र ज्ञानस्य नित्यत्व-जन्यत्वरूपेण तयोर्विभाग इति निरूपितवान्।

श्रीकृष्णधूर्जटिदीक्षितमहोदयाः–"परमत्वं चोत्कृष्टत्वम्। तच्च प्रकृते सृष्टि-स्थिति-प्रलयकर्तृत्वम्"[५] इत्यन्नम्भट्टोक्तपरमात्मशब्दं व्युत्पाद्य तस्य जीवात्मविलक्षणत्वं प्रदर्शितवन्तः। तदेवं न्यायदर्शने सूत्रकारादारभ्याधुनिक-कालपर्यन्तमीश्वर उत्तरोत्तरं सुस्पष्टरूपेण प्रतिपादितो वर्तते।

---

गुणविशिष्ट जीवात्मभिन्न आत्मा ईश्वर है। वह आत्मकल्प है अत: कल्पान्तर नहीं माना जा सकता। अधर्म, मिथ्याज्ञान एवं प्रमाद की हानि से तथा धर्म, ज्ञान एवं समाधि- सम्पद् से विशिष्ट आत्मान्तर ईश्वर है। उनके धर्मसमाधि का फल अष्टविध ऐश्वर्य है।

पूज्य अन्नम्भट्ट ने ईश्वर के सन्दर्भ में निम्नाङ्कित बातें बतायी हैं। ज्ञान का समवाय सम्बन्ध से आश्रय-द्रव्य, आत्मा कहलाता है। आत्मा दो प्रकार का होता है— जीवात्मा और परमात्मा। इनमें परमात्मा एक ही है सर्वज्ञ है तथा ईश्वर कहलाता है। जीवात्मा प्रति- शरीर में भिन्न-भिन्न है, विभु है तथा नित्य है। एतावता ज्ञानाधिकरणता जीव एवं ईश्वर दोनों में रहती है तथा आत्मशब्द का प्रयोग इन दोनों के लिये होता है। ईश्वरज्ञान नित्य होता है जबकि जीवज्ञान जन्य होता है। ईश्वर एवं जीव में उक्त ज्ञान-भेद को लेकर ही भेद किया जाता है।

श्रीकृष्णधूर्जटि दीक्षित महोदय ने परमात्मशब्द के (अन्नम्भट्टप्रयुक्त) की व्युत्पत्ति बताकर उसकी जीवात्म विलक्षणता को प्रतिपादित किया है। तद्यथा— आत्मा में परमत्व अर्थात् उत्कृष्टविवक्षित है। सृष्टि, स्थिति एवं प्रलय का कर्तृत्व ही उत्कृष्टत्व है। इस प्रकार संक्षिप्तरूप से हम देखते हैं कि न्यायदर्शन में सूत्रकार

---

१. न्या० सू० भा० ४।१।२१.
२. "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" (न्या० सू० १।१।९)।
३. तर्कसं०, पृ० १९-२०.
४. सि० च०, पृ० २८.

वैशेषिकदर्शने महर्षिणा कणादेन न कुत्रापि साक्षादीश्वरस्योल्लेखः कृतः, किन्तु कणादसूत्राणां व्याख्याकर्तृभिः शङ्करमिश्रैः "तद्वचनादाम्नायस्य प्रामाण्यम्"[१] "संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्",[२] "प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः"[३] "सामयिकः शब्दादर्थप्रत्ययः"[४] इत्यादिसूत्रेषु तावदीश्वरसत्तां साधयितुं प्रयासः कृतः। तद्यथा–"तदित्यनुपक्रान्तमपि प्रसिद्धि–सिद्धतयेश्वरं परामृशति, यथा–"तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः"[५] इति गौतमीयसूत्रे तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते। तथा च "तद्वचनात्तेनेश्वरेण प्रणयनादाम्नायस्य वेदस्य प्रामाण्यम्,[६] संज्ञा–नाम, कर्म–कार्यं क्षित्यादि, तदुभयमस्मद्विशिष्टानामीश्वरमहर्षीणां सत्त्वेऽपि लिङ्गम्",[७] "यस्य स्वर्गापूर्वादयः

---

से आरम्भ कर आधुनिक काल पर्यन्त ईश्वर का स्वरूप उत्तरोत्तर सुस्पष्ट रूप से प्रतिपादित किया गया है।

वैशेषिक दर्शन में (महर्षि कणाद) कहीं भी साक्षात् ईश्वर का उल्लेख नहीं है। किन्तु कणाद सूत्रों के व्याख्याकार शङ्कर मिश्र ने "तद्वचनादाम्नायस्य प्रामाण्यम्", "संज्ञाकर्मत्वस्मद्विशिष्टानां लिङ्गम्", "प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः" एवं "सामयिकः शब्दादर्थप्रत्ययः" इत्यादि सूत्रों पर आधारित ईश्वरास्तित्व की सिद्धि हेतु प्रयत्न किया है। तद्यथा— तद्वचनादाम्नायस्य.........सूत्र में यद्यपि ईश्वर के सन्दर्भ में पूर्वतः उपक्रम नहीं किया गया है तथापि "तत्-" शब्द जिस तरह प्रकृत का परामर्शक होता है तद्वत् प्रसिद्धि पर आधारित वस्तु का भी परामर्शक होता है। उदाहरणार्थ— तदप्रामाण्यमनृतव्याघातपुनरुक्त-दोषेभ्यः - इस गौतमीय सूत्र को लिया जा सकता हैं इस सूत्र में वेद का उपक्रम पूर्वतः नहीं किया गया है। तथापि तत् शब्द से प्रसिद्धि पर आधारित वेद का परामर्श किया जाता है।

एवञ्च तद्वचनात् अर्थात् ईश्वर द्वारा रचित होने के कारण आम्नाय (वेद) का प्रामाण्य स्वीकार्य है। जो स्वर्ग, अपूर्व आदि संज्ञा=नाम है और जो कर्म=कार्य

---

१. वै० सू० १।१।३.
२. वै० सू० २।१।१८.
३. वै० सू० २।१।१९.
४. वै० सू० ७।२।२०.
५. न्या० सू० २।१।५८.
६. वै० सू० उप० १।१।३.
७. वै० सू० उप० २।१।१८.

प्रत्यक्षाः स एव तत्र स्वर्गापूर्वादिसंज्ञाः कर्तुमीष्टे, प्रत्यक्षे चैत्रमैत्रादिपिण्डे पित्रादेश्चैत्रमैत्रादिसंज्ञानिवेशनवत्। एवं च, घटपटादिसंज्ञानिवेशनमपीश्वर-संकेताधीनमेव",[१] "समय ईश्वरसङ्केतः, अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकः। यः शब्दो यस्मिन्नर्थे भगवता सङ्केतितः स तमर्थं प्रतिपादयति, तथा च शब्दार्थयोरीश्वरेच्छयैव सम्बन्धः, स एव समयस्तदधीन इत्यर्थः"[२] इत्यादिरूपेणेश्वरसत्ता प्रसाधिता।

भगवता भाष्यकारेण प्रशस्तपादेन–"द्रव्य–गुण–कर्म–सामान्य–विशेष-समवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः। तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव"[३] इतीश्वरेच्छाविशेषेण कार्यारम्भाभिमुखी-कृताद्धर्मादेव निःश्रेयसं भवतीति निःश्रेयसकारणीभूतधर्मोत्पादककार्यारम्भे जीवानां प्रेरकत्वरूपेणेश्वरस्याङ्गीकारः कृतः।

---

क्षित्यादि हैं— इन दोनों को आधार मानकर हम सामान्य जीवों से अतिरिक्त ईश्वर एवं महर्षियों के अस्तित्व को ज्ञात कर पाते हैं। जिस विशिष्ट चेतन को स्वर्ग एवं अपूर्व प्रभृति वस्तु का प्रत्यक्ष ज्ञान होता है वही उन वस्तुओं का नाम रख सकते हैं अन्य साधारण चेतन नहीं। जैसे पिता प्रत्यक्षदृष्ट पुत्र का नाम चैत्र अथवा मैत्र रखता है। जिन वस्तुओं के लिये घट अथवा पट नाम का व्यवहार चल रहा है वह भी ईश्वरसंकेत के अधीन ही है। ईश्वरसंकेत को शास्त्रीय भाषा में "समय" कहा जाता है। ईश्वर की यह इच्छा— "घट" शब्द से कम्बुग्रीवादिमान् अर्थ (वस्तु) का बोध होता है— समय अथवा संकेत कहलाती है। जिस शब्द को जिस अर्थ में ईश्वर ने संकेतित किया है- वह शब्द उस अर्थ का बोधक होता है। एवञ्च शब्द और अर्थ के मध्य विद्यमान सम्बन्ध ईश्वरेच्छा पर आधारित होता है। वह समय कहलाता है। यतश्च समय ईश्वराधीन है- अतः उपर्युक्त प्रकार से ईश्वर की सत्ता को उपस्कारकार शङ्कर मिश्र ने सिद्ध किया है।

भगवान् भाष्यकार **प्रशस्तपाद** ने सुस्पष्ट कहा है- द्रव्य, गुण, कर्म, सामान्य, विशेष तथा समवाय इन छह भावपदार्थों के साधर्म्य एवं वैधर्म्य पर आधारित तत्त्वज्ञान से निःश्रेयस की प्राप्ति होती है। यह तत्त्वज्ञान, ईश्वर की प्रेरणा से अभिव्यक्त धर्म से ही होता है- ऐसे कथन द्वारा सुस्पष्ट होता है कि ईश्वरेच्छाविशेष

---

१. वै० सू० उप० २।१।१९.
२. वै० सू० उप० ७।२।२०.
३. प्र० पा० भा०, पृ० १५-१८.

वैशेषिकदर्शनेऽपीश्वरः। पृथिव्यादिनवद्रव्येषु प्रतिपादितेनात्मद्रव्येणैव बोधगम्यो भवति। तददुक्तं श्रीधरभट्टेन–"ईश्वरोऽपि बुद्धिगुणत्वादात्मैव, न तु षड् गुणाधिकरणश्चतुर्दशगुणाधिकरणाद् गुणभेदेन्न भिद्यते, मुक्तात्मभिर्व्यभिचारात्"[1] इति। तदेवं वैशेषिकदर्शनेऽपि प्राचीनकालादेव द्रव्यत्वेनाभिमतस्यात्मन एव नित्यज्ञानवत्त्वानित्यज्ञानवत्त्वादिरूपेण परमात्मजीवात्मनोर्विभागं कृत्वा ईश्वरस्य समर्थनं कृतमिति विज्ञायते।

## ईश्वरस्य गुणाः

न्यायवैशेषिकदर्शनयोरीश्वरो द्रव्यान्तर्गत इति स सगुण एव, न निर्गुणः, द्रव्यसामान्यस्य गुणक्रियावत्त्वाङ्गीकारात्। अत एवेश्वरो न नित्य-ज्ञानस्वरूपः, किन्तु नित्यज्ञानस्य तद्गुणत्वात् तदाश्रय एव। उक्तं च हरिभद्रसूरिणा–

---

से प्रेरित कार्यारम्भाभिमुखीकृत धर्म से ही निःश्रेयस की प्राप्ति होती है। एतावता निःश्रेयस के कारण धर्म के उत्पादक कार्य का आरम्भ करने में जीव के प्रेरक रूप से ईश्वर का अङ्गीकार किया जाता है-ऐसा प्रशस्तपाद को अभिमत है।

वैशेषिक दर्शन में भी ईश्वर, पृथिवी-प्रभृति नवद्रव्यों के अन्तर्गत प्रतिपादित आत्मद्रव्य स्वरूप से बोधगम्य माने जाते हैं। श्रीधरभट्ट ने कहा भी है— ईश्वर भी बुद्धि-गुण का आश्रय होने से आत्मपदवेदनीय ही है। छह गुणों के आश्रय ईश्वर को चौदह गुणों के आश्रय जीव से गुणतारतम्य के आधार पर भिन्न माना जाना उपयुक्त नहीं है, क्योंकि मुक्तात्मा को लेकर आत्मलक्षण व्यभिचारित होने लगेगा। इस प्रकार हम देखते हैं कि वैशेषिक दर्शन में भी प्राचीनकाल से ही द्रव्यपदार्थ के रूप में स्वीकृत आत्मा को नित्यज्ञानवान् होने की स्थिति में परमात्मा तथा अनित्यज्ञानवान् होने की स्थिति में जीवात्मा कहा जाता है- इस तरह से विभाग कर ईश्वर का समर्थन किया गया है- यह सुस्पष्ट विदित होता है।

## ईश्वर के गुण

न्याय एवं वैशेषिक दर्शनों में ईश्वर, द्रव्य-पदार्थ के अन्तर्गत ही स्वीकृत हैं अतः वह सगुण ही हैं, निर्गुण नहीं। क्योंकि प्रत्येक द्रव्य को गुणवान् एवं क्रियावान् माना जाता है। अतएव इन पदार्थों में ईश्वर को वेदान्तदर्शन की तरह नित्यज्ञानस्वरूप नहीं माना गया है। नित्यज्ञान तो ईश्वराश्रित गुण है। इस ज्ञान का आश्रय ईश्वर है। हरिभद्र सूरि ने सुस्पष्ट कहा है—

---

१. न्या० क०, पृ० २६.

अक्षपादमते देवः सृष्टिसंहारकृच्छिवः।
विभुर्नित्यैकसर्वज्ञो नित्यबुद्धिसमाश्रयः[1]।।इति।

ईश्वरनिष्ठगुणविषये न्यायवैशेषिकाचार्याणां नैकमत्यं दरीदृश्यते तत्रभवान् भाष्यकारो वात्स्यायन ईश्वरे धर्म-ज्ञान-समाधीन् तदुत्थानणिमादिवशित्वान्तानष्टविधैश्वर्याख्यांश्च गुणान् प्रतिपादयामास। तथाहि— "धर्म-ज्ञान-समाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः, तस्य च धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्यम्। सङ्कल्पानुविधायी चास्य धर्मः। प्रत्यात्मवृत्तीन् धर्माधर्मसंचयान् पृथिव्यादीनि च भूतानि प्रवर्तयति"[2] इति।

श्रीजयन्तभट्टस्तु—"तदेवं नवभ्य आत्मगुणेभ्यः पञ्च ज्ञानसुखेच्छा-प्रयत्नधर्माः सन्तीश्वरे, चत्वारस्तु दुःखद्वेषाधर्मसंस्कारा न सन्तीत्यात्मविशेष एवेश्वरो न द्रव्यान्तरम्"[3] इत्यात्मविशेषगुणेषु नवसु पञ्चगुणानामेवेश्वरनिष्ठत्वं प्रतिपादयति। अस्य मते द्रव्यसामान्यस्य सामान्यगुणाः संख्या-परिमाण-पृथक्त्वसंयोग-

---

अक्षपाद के मत में महादेव, सृष्टि एवं संहार के कर्ता हैं, शिवपदवाच्य हैं, नित्यज्ञान के आश्रय हैं, विभु हैं, नित्य हैं तथा एकमात्र सर्वज्ञ हैं।।१।।

ईश्वरनिष्ठ गुण के सन्दर्भ में न्यायाचार्य एवं वैशेषिकाचार्य के मध्य मतभेद दृष्टिगोचर होता है। भाष्यकार आचार्य वात्स्यायन, ईश्वर में धर्म, ज्ञान, समाधि तथा अष्टविध ऐश्वर्य— अणिमा, महिमा, गरिमा, लघिमा, प्राप्ति, प्राकाम्य, ईशित्व तथा वशित्व- गुणों का अस्तित्व प्रतिपादित करते हैं। तथाहि- "धर्म, ज्ञान तथा समाधि सम्पद् से विशिष्ट जीवात्मा से भिन्न ईश्वर है। धर्म समाधि का फल अणिमा-प्रभृति अष्टविध ऐश्वर्य है। इनका धर्म संकल्पानुविधायी है। प्रत्येक जीवात्मा में विद्यमान धर्मों अधर्मों तथा पृथिव्यादि पञ्चभूतों के प्रवर्तक ईश्वर होते हैं।

श्री जयन्तभट्ट का अभिमत यह है- आत्मा के जो नौ गुण हैं उनमें पाँच गुण-ज्ञान, सुख, इच्छा, प्रयत्न एवं धर्म ईश्वर में रहते हैं। शेष चार गुण- दुःख, द्वेष, अधर्म तथा संस्कार ईश्वर में नहीं रहते हैं। अतः आत्म-विशेष को ईश्वर कहा जाता है, वह आत्मव्यतिरिक्त द्रव्यान्तर नहीं है। ऐसा कहकर उन्होंने नौ आत्मगुणों में पाँचगुणों को ईश्वराश्रित कहा है। इनके मत में द्रव्यमात्र में विद्यमान रहने वाले

---

१. ष० स०, १३ श्लो०।

२. न्या० सू० भा० ४।१।२१.

३. न्या० म०, भा० १, पृ० १८५.

विभागाख्या अपीश्वरे विद्यन्त इतीश्वरो दशगुणाधार इति सिद्ध्यति।

श्रीधरभट्टः–"अष्टगुणाधिकरणो भगवानीश्वर इति केचित्। अन्ये तु बुद्धिरेव तस्याव्याहता क्रियाशक्तिरित्येवं वदन्त इच्छाप्रयत्नावप्यनङ्गीकुर्वाणाः षड् गुणाधिकरणोऽयमित्याहुः"[१] इतीश्वरगुणविषये मतद्वयमुपस्थापितवान्।

श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्योऽपि ज्ञानेच्छाप्रयत्नाख्यास्त्रयोविशेषगुणाः, संख्यादिपञ्चसामान्यगुणाश्चेत्यष्टगुणाधारत्वमीश्वरस्याङ्गीचकार। तथा ह्युक्तम् –"संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे"[२] इति।

**ईश्वरसत्त्वे प्रमाणम्**

तत्रभवान् उदयनाचार्यो न्यायकुसुमाञ्जलौ–

**स्वार्गापवर्गयोर्मार्गमामनन्ति मनीषिणः।**
**यदुपास्तिमसावत्र परमात्मा निरूप्यते[३]।।**

---

सामान्य गुणों- (संख्या, परिमाण, पृथक्त्व, संयोग तथा विभाग) को भी ईश्वराश्रित बताया गया है। एतावता ईश्वर दश गुणों के आश्रयरूप से मान्य है।

श्रीधरभट्ट ने ईश्वराश्रित गुणों के सन्दर्भ में दो मतों का उपस्थापन किया है- (१) **केचित्** - पक्ष में ईश्वर को आठ गुणों का आश्रय माना जाता है। तथा (२) **अन्ये तु**- पक्ष में अव्याहत बुद्धि को क्रियाशक्ति मानकर इच्छा एवं प्रयत्न को भी अस्वीकृत कर ईश्वर को छह गुणों का ही आश्रय माना जाता है। भाषापरिच्छेदःकार भट्टाचार्य श्री विश्वनाथन्यायपञ्चानन ने ज्ञान, इच्छा तथा प्रयत्न इन तीन को विशेषगुण तथा संख्या, परिमाण, पृथकत्व, संयोग, एवं विभाग इन पाँचसामान्य गुण = योग करने से संख्या प्रभृति पाँच गुण, बुद्धि, इच्छा एवं प्रयत्न ये आठ गुण ईश्वर में विद्यमान होते हैं।

**ईश्वर के अस्तित्व में प्रमाण**

पूज्यचरण उदयनाचार्य जी ने अपनी न्यायकुसुमाञ्जलि में निम्नलिखित प्रतिज्ञा की है- "मनीषिजन जिनकी उपासना को स्वर्ग एवं अपवर्ग का मार्ग प्रतिपादित करते हैं उन परमात्मा का निरूपण मैं करूँगा"।।१।।

---

१. न्या० क०, पृ० १४२.

२. कारि० ३४ श्लो०

३. न्या० कु० १।२.

इति प्रतिज्ञाय बहुभिर्युक्तिभिः प्रमाणैश्चेश्वरं साधितवान्।

कार्याऽऽयोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः[४]।।

इत्यस्मिन् श्लोके श्रीमदुदयनाचार्य ईश्वरसाधकान् हेतून् निरूपितवान्। तेषां स्वरूपमत्र संक्षेपेण निरूप्यते–

१. कार्यात्–इह खलु कार्यं दृष्ट्वा कारणमनुमीयते। लोके सर्वेऽपि जानन्ति यद् घटरूपकार्यस्य चेतनः कर्ता कुम्भकारो वर्तत इति। एवमेवास्य विश्वस्यापि कार्यत्वात् तस्यापि कर्ता चेतनः पुरुषो भवितुमर्हति। तत्र–'तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम्' इति हि कर्तृत्वलक्षणम्। घटं प्रत्युपादानकारणीभूतमृत्तिकाया अपरोक्षज्ञानम्, तया मृत्तिकया घटोत्पादनेच्छारूपा चिकीर्षा, तदनुकूलः प्रयत्नश्च घटोत्पत्तेः प्राक् कुलाले

---

इस प्रतिज्ञा के पश्चात् उन्होंने विविध युक्तियों एवं प्रमाणों के बल पर ईश्वर के अस्तित्व को साबित कर दिखाया।

कार्यायोजनधृत्यादेः..............साध्यो विश्वविदव्ययः।।१।।

इस श्लोक में श्रीमान् उदयनाचार्य जी ने ईश्वरसाधक अनेक हेतुओं का प्रतिपादन किया है। उन हेतुओं का स्वरूप, संक्षेप से प्रतिपादित किया जायेगा।

**१. कार्यात्**

व्यवहार-जगत् में कार्य को देखकर कारण का अनुमान किया जाता है। लोक में सर्वविदित है कि घटकार्य है और उसका कर्ता कोई कुम्हार चेतन होता है। इस तर्क के आधार पर यह सम्पूर्ण विश्व कार्य है- इसका भी कर्ता कोई चेतन होगा। कर्ता की क्या परिभाषा है- इस जिज्ञासा का समाधान है- कार्य के उपादान विषयक अपरोक्ष ज्ञान, चिकीर्षा एवं कृति से युक्त व्यक्ति कर्ता कहलाता है। यथा घट कार्य है उसका उपादान कारण मृत्तिका (मिट्टी) हैं तद्विषयक अपरोक्ष ज्ञान (कुम्हार में) समवाय सम्बन्ध से विद्यमान रहता है। तद्वत् मिट्टी से घट बनाने की इच्छा=चिकीर्षा एवं तदनुकूल प्रयत्न भी घट की उत्पत्ति से पूर्व (कुलाल में) समवाय सम्बन्ध से विद्यमान रहते हैं। एतावता घट=कार्य की कर्तृता कुलाल=कुम्भकार में सिद्ध होती है। तद्वत् द्व्यणुक-कार्य के प्रति उपादानकारण पृथिव्यादि, परमाणु होते हैं। उनका अपरोक्ष ज्ञान होना, उन परमाणुओं से द्व्यणुक

---

४. न्या० कु० ५।१.

समवायसम्बन्धेन विद्यत इति तेन यथा कुलालस्य कर्तृत्वसिद्धिस्तथैव द्व्यणुकादिरूपं कार्यं प्रत्युपादानकारणीभूतानां पृथिव्यादिपरमाणूनामपरोक्षज्ञानम्, तेभ्यः परमाणुभ्यो द्व्यणुकाद्युत्पादनेच्छारूपा चिकीर्षा, तदनुकूलः प्रयत्नश्चेत्येषां समवायसम्बन्धेनाश्रयत्वमस्मादृशेषु न संभवतीति पारिशेष्यात् तेषामाश्रयत्वेनेश्वरस्य प्रपञ्चं प्रति कर्तृत्वसिद्धिः। यद्यपि परमाणुविषयकापरोक्षज्ञानं योगबलेन योगिनामपि भवत्येव, अथापि तेषां योगशक्तेः प्रागपि द्व्यणुकानां विद्यमानत्वाद् योगिनां द्व्यणुककर्तृत्वं नैव सम्भवति। तस्मात् 'क्षित्यादिकार्यं सकर्तृकं कार्यत्वाद् घटवत्' इत्यनुमानेन जगत्कर्तृत्वेनेश्वरस्य सिद्धिः।

२. **आयोजनात्**– अत्रायोजनं नाम संयोगः। सृष्ट्यारम्भे परमाणुद्वयसंयोगेन द्व्यणुकानामुत्पत्तिर्जायते। अयं च संयोगः परमाणुद्वयनिष्ठक्रियासापेक्षः। परमाणूनामचेतनत्वात् तयोर्मध्ये स्वतः क्रियाऽसम्भवाच्च तदर्थं प्रेरकस्यास्मदादिविलक्षणचेतनपुरुषस्याङ्गीकारः

---

को उत्पन्न करने की इच्छा=चिकीर्षा होना तथा तदनुकूल प्रयत्न होना— द्व्यणुक के कर्ता कहलाने हेतु अत्यावश्यक है। पार्थिव द्व्यणुक से लेकर पृथिवी=अन्त्यावयवी तक कार्य है। यही स्थिति जलादि के सन्दर्भ में है। सभी कार्यों का सामूहिक वर्ग विश्व कहलाता है।

प्रथम अवयवी द्व्यणुक, कार्य है। उसके उपादानकारण परमाणु हैं जिनकी अपरोक्षज्ञान, चिकीर्षा अथवा कृति, जीव में समवाय सम्बन्ध से विद्यमान नहीं रहती हैं- उनका आश्रय-स्वरूप जो भी चेतन होगा वह ईश्वर ही द्व्यणुक का कर्ता माना जायगा। अतः विश्व के कर्तारूप से हम जीवों में कोई सम्भावित नहीं है एतावता तादृश अपरोक्ष ज्ञानादि का आश्रय पारिशेष्यात् ईश्वर सिद्ध होते हैं। वह विश्व=प्रपञ्च- कार्य के रचयिता हैं। यद्यपि योगी के योगशक्ति के जागृत होने से पूर्व भी द्व्यणुक विद्यमान रहते हैं अतः योगिजन में द्व्यणुक की कर्तृता नहीं मानी जा सकती। निष्कर्षतः "क्षित्यादि (द्व्यणुकादि) कार्य-कर्तृजन्य है क्योंकि क्षित्यादि भी घट की तरह कार्य है।" -इस अनुमान से जगत् के कर्ता ईश्वर की सिद्धि होती है।

**(२) आयोजनात्**

कुसुमाञ्जलि-कारिका में प्रयुक्त आयोजन शब्द का अर्थ है- संयोग। सर्ग के आरम्भ में परमाणुद्वयसंयोग से द्व्यणुक की उत्पत्ति होती है। यह संयोग, परमाणुद्वय-निष्ठ क्रिया से सापेक्ष होता है। परमाणुओं के अचेतन होने से परमाणुद्वय के मध्य स्वतः क्रिया की सम्भावना नहीं हो सकती। एतदर्थ प्रेरक कोई (जीव विलक्षण)

कर्तव्यः। स एव चेश्वरः। तदनुमानस्वरूपं यथा–'सर्गाद्यकालीनद्व्यणुकारम्भक-परमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकम्, कर्मत्वात्, कपालनिष्ठकर्मवत्' इति। एतेनेश्वरप्रयत्नमात्रसिद्धावपि तादृशविलक्षणप्रयत्नाश्रयत्वेनेश्वरसिद्धिः।

३. धृत्यादेः–अत्रधृतिर्नाम धारणम्। गुरुत्वविशिष्टपदार्थस्याधःपतनाभावे तत्प्रतिबन्धकप्रभाव एव हेतुः। पतनप्रतिबन्धकानि तु संयोगः, वेगः, विधारकप्रयत्नश्चेति वर्तन्ते। तत्र शाखालग्नस्य फलस्याधःपतनाभावे संयोगो हेतुः। धनुर्निक्षिप्तस्य शरस्य किञ्चित्कालपर्यन्तमधःपतनाभावे वेगः कारणम्। आकाशे उड्डीयमानस्य पक्षिणोऽधःपतनाभावे विधारकप्रयत्नश्च कारणम्। तदेवं ब्रह्माण्डादीनां गुरुत्वविशिष्टानामधःपतनाभावात् तत्प्रतिबन्धकीभूतस्य

---

चेतन ही होगा। वह प्रेरक चेतन ईश्वर कहलाता है। इसका अनुमान स्वरूप है- "सृष्टि के प्रारम्भ में द्व्यणुक के आरम्भक परमाणुद्वयसंयोग का जनक कर्म, चेतनप्रयत्नपूर्वक होगा, कपालनिष्ठ कर्म की तरह कर्मत्व का आश्रय होने के कारण। इस अनुमान वाक्य में सर्गाद्यकालीन द्व्यणुकारम्भक परमाणुद्वयसंयोगजनक कर्म पक्ष है। उक्त पक्ष में चेतनप्रयत्नपूर्वकत्व साध्य है। कर्मत्व हेतु है तथा कपालनिष्ठकर्म दृष्टान्त है। प्रकृत अनुमान प्रमाण से (ईश्वर) प्रयत्न की सिद्धि होती है। इस विलक्षण प्रयत्न का समवाय सम्बन्ध से आश्रय चेतन-विशेष-ईश्वर सिद्ध होते हैं।

**३. धृत्यादिः**

कारिका में प्रयुक्त धृति का अर्थ है- धारण। जिस किसी पदार्थ में गुरुत्व=वजन है उसका अधःपतन होना चाहिये। अधःपतन के अभाव हेतु कोई पतन-प्रतिबन्धक अवश्य-स्वीकार्य है। यह प्रतिबन्धक तीन प्रकार का होता है- संयोग, वेग एवं विधारक-प्रयत्न। पेड़ की डाल में संलग्न फल के अधःपतन के अभाव के प्रति संयोग को कारण (प्रतिबन्धक) माना जाता है। धनुष से प्रक्षिप्त बाण में कुछ देर तक अधःपतन का अभाव देखा जाता है। उक्त अभाव का प्रतिबन्धक कारण "वेग" होता है। आकाश में उड़ते हुए पक्षी के अधःपतन के अभाव के प्रति पक्षिगत विधारक-प्रयत्न कारण होता है।

इस प्रकार गुरुत्व (वजन) से युक्त ब्रह्माण्ड, पृथिवी एवं अन्य में अधःपतनाभाव के प्रति प्रतिबन्धक कारण "विधारक-प्रयत्न" की सत्ता आवश्यक रूप से स्वीकार्य है। तादृश विलक्षण प्रयत्न का आश्रय चेतन के रूप में ईश्वर की सिद्धि कारिकोक्त तृतीय हेतु से होता है। इसका अनुमानाकार है— "पतनाभाववद् गुरुत्वाश्रयः ...... पक्षिवत्।"

विधारकप्रयत्नस्य सत्ताऽवश्यमङ्गीकर्तव्या। तादृशविलक्षणप्रयत्नाश्रयत्वेन चेश्वरसिद्धिः। अनुमानस्वरूपं तावत्–'पतनाभाववद्गुरुत्वाश्रयः पतनप्रतिबन्धकप्रयत्नप्रयुक्तः, धृतिमत्त्वात्, आकाशस्थ-पक्षिवत्' इति।

**४. प्रलयात्**–धृत्यादेरित्यत्रादिशब्देन प्रलयो ग्राह्यः। प्रलयकाले ब्रह्माण्डं विनश्यति। यथा घटप्रध्वंसेऽस्मदादिदण्डप्रहारादिप्रयत्नः कारणम्, तथा ब्रह्माण्डनाशेऽपि प्रयत्नः कल्पनीयः। तादृशसर्वब्रह्माण्डनाशकप्रयत्नस्य जीवात्मन्यभावात् तादृशविलक्षणप्रयत्नाश्रयत्वेन चेश्वरसिद्धिः। अनुमानस्वरूपं यथा–'ब्रह्माण्डनाशः प्रयत्नजन्यः, नाशत्वात्, घटनाशवत् इति।

**५. पदात्**–'पद्यते गम्यते (ज्ञायते) व्यवहाराङ्गमर्थोऽनेन' इति व्युत्पत्त्या पदशब्देन वृद्धव्यवहारो बोद्धयते। लोके हि कुलालो घटादिकं निर्माति। तन्निर्माणमप्यज्ञाततद्विधेर्न संभवतीति तस्य शिक्षकोऽङ्गीक्रियते। तस्यापि

---

इसमें पतनाभाववद्गुरुत्वाश्रय को पक्ष बनाकर उसमें पतनप्रतिबन्धकप्रयत्न-प्रयुक्तत्व को साध्य बनाया गया है। तद्वत् धृतिमत्त्व=धैर्य (धारण) को हेतु एवं आकाशस्थ पक्षी को दृष्टान्त बनाया गया है।

**४. प्रलयात्**

कार्यायोजनधृत्यादेः- कारिकांश में धृत्यादि के आदिपद से प्रलय अर्थ गृहीत होता है। प्रलयकाल में ब्रह्माण्ड नष्ट हो जाता है। लोक में विदित है कि घटप्रध्वंस के प्रति जीवीय दण्डप्रहार अथवा अन्य प्रयत्न कारण होता है। तद्वत् ब्रह्माण्ड-ध्वंस के प्रति प्रयत्नविशेष को कारण माना जाना चाहिये। यतश्च सम्पूर्ण ब्रह्माण्ड के ध्वंस के प्रति जीवप्रयत्न-विलक्षण-प्रयत्न की कारणता है अतः उस विलक्षण-प्रयत्न का आश्रय चेतन ''ईश्वर'' सिद्ध होता है। इस अनुमान का आकार है- ''ब्रह्माण्डनाश में प्रयत्नजन्यता होती है, यद्वत् घटनाश में नाशत्व रहता है तद्वत् ब्रह्माण्डनाश में भी नाशत्व रहता है।''

**५. पदात्**

इस कारिका में पदशब्द से वृद्धव्यवहार अर्थ को परिगृहीत किया जाता है। क्योंकि वृद्धव्यवहार से ही व्यावहारिक कार्य की विधि-प्रकिया विदित होती है। लोक में देखा जाता है कि कुम्हार घट को बनाता है। जब तक वह घट बनाने की विधि नहीं समझेगा तब तक घट-निर्माण सम्भव नहीं होगा। एतदर्थ कुम्हार को शिक्षक की आवश्यकता होती है। तद्वत् वर्तमान शिक्षक भी अपने शिक्षक से घट-निर्माण-विधि

शिक्षकान्तर इत्युत्तरोत्तरं गते सति य आद्यः शिक्षको निश्चीयते स एवेश्वरः। तस्यापि शिक्षकान्तरस्वीकारे चानवस्थापत्तिः। अनुमानस्वरूपं तावत्– 'घटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोगजन्यः (प्रथमप्रवर्तितः), व्यवहारत्वात्, आधुनिकसंगीतादिव्यवहारवत्' इति।

६. **प्रत्ययतः**:– प्रत्ययो नाम विश्वासः प्रामाण्यं वा। वाक्यानां प्रामाण्यं वक्तृगुणसापेक्षं भवति। अत एत्रोदात्ताभिप्रायव्यञ्जकानां वेदवाक्यानां प्रामाण्यमपि तद्वक्तुर्गुणजन्यमित्येव सिद्धम्। एतादृशविलक्षणोदात्तगुण-विशिष्टत्वमस्मदादिषु न संभवतीति पारिशेष्यात् तदाश्रयत्वेनेश्वरसिद्धिः। अनुमानस्वरूपं यथा– 'वेदवाक्यजन्या प्रमा वक्तृगुणजन्या, प्रमात्वात्, प्रत्यक्षादिप्रमाणवत्' इति।

७. **श्रुतेः**:– श्रुतिर्नाम वेदः। वेदोऽप्यायुर्वेदादिकमिव पौरुषेयः,

---

को समझता है। उत्तरोत्तर शिक्षकान्वेषण करने पर जो आद्यशिक्षक होगा वह "ईश्वर" (सर्वज्ञ) होगा। आद्य-शिक्षक का शिक्षकान्तर नहीं होगा- ऐसा होने से अनवस्था दोष आपतित होगा। अनुमान का आकार है- घटादि सम्प्रदाय का व्यवहार, पक्ष है। इसमें स्वतन्त्र-(प्रथम) पुरुष-प्रयोज्यत्व (प्रवर्तित्व) साध्य है। इसका हेतु है- पक्ष में व्यवहारत्व की विद्यमानता। एतदर्थ दृष्टान्त है- आधुनिक संगीतादि व्यवहार। यथा आधुनिक संगीतादि-व्यवहार, किसी ज्ञाता से प्रयोज्य होती है तथा घटादि-व्यवहार भी आद्य तज्ज्ञ से प्रयोज्य है। आद्य तज्ज्ञ सर्वज्ञ है उसे ईश्वर कहा जाता है।

**६. प्रत्ययतः**

प्रत्यय-शब्द का अर्थ है- विश्वास अथवा प्रामाण्य। वाक्यों का प्रामाण्य वाक्य के वक्ता के गुण से सापेक्ष होता है। यह लोकसिद्ध है। तद्वत् उदात्त अभिप्राय के अभिव्यञ्जक वेदवाक्यों का प्रामाण्य भी उसके वक्ता के गुण से सापेक्ष होगा। यतश्च तादृश-विलक्षण उदात्तगुणवैशिष्ट्य अस्मदादि जीव में सम्भव नहीं है अतः तादृश उदात्तगुण के आश्रय (चेतन) ईश्वर की सिद्धि होती है। तदनुरूप अनुमान का आकार है- वेदवाक्य-जन्य प्रमा, पक्ष है। इस पक्ष में वक्तृगुणजन्यत्व साध्य है। एतदर्थ हेतु है पक्ष में प्रमात्व की विद्यमानता। दृष्टान्त है प्रत्यक्ष-अनुमान आदि प्रमाण।

**७. श्रुतेः**

श्रुति का अर्थ वेद है। वेद भी आयुर्वेद आदि की तरह पुरुषनिर्मित है। अतः वेद का कर्ता सर्वज्ञ चेतन अस्मदादि-विलक्षण होगा। वह ईश्वर है। यहाँ

अतस्तत्कर्तृत्वेनेश्वरसिद्धिः अत्र 'वेदोऽसंसारिपुरुषप्रणीतः, वेदत्वात्, यन्नैवं तन्नैवम्, यथा काव्यम्' इत्यनुमानस्वरूपम्। यद्वा "एको देवः सर्वभूतेषु गूढः" (श्वे० उ० ६।११) इत्यादिश्रुतिवाक्यानुरोधेनेश्वरसिद्धिः।

**८. वाक्यात्**–यथा वाक्यात्मकेषु महाभारतादिषु व्यासादिपुरुषजन्यत्वेन पौरुषेयत्वम्, तथैव वेदानामपीश्वरप्रणीतवाक्यत्वात् पौरुषेयत्वमपरिहार्यमेव। वेदोत्पादको हि पुरुषः सर्वज्ञो भाव्यः। अन्यथाऽसन्दिग्धरूपेण सर्वपदार्थप्रतिपादकत्वं वेदे नोपलभ्येत। अतो वेदनिर्मातृपुरुषविशेषरूपेणेश्वरसिद्धिः। तदनुमानाकारो यथा–'वेदः पौरुषेयः, वाक्यत्वात्, भारतादिवत्' इति।

**९. संख्याविशेषात्**–तत्र परमाणुद्वयनिष्ठा द्वित्वसंख्या 'अयमेकः, अयमेकः' इत्याकारकापेक्षाबुद्धिजन्या भवति। सेयमपेक्षाबुद्धिः परमाणुविषयकापरोक्षज्ञानवत एव संभवतीति। जीवेषु च तादृशापरोक्षबुद्धेरसंभवात्

---

अनुमानाकार है- वेद पक्ष में असंसारि-पुरुष-रचितत्व साध्य है। हेतु है- वेद में वेदत्व की विद्यमानता। व्यतिरेकिदृष्टान्त है- यन्नैवम् तन्नैवं, यथा काव्यम्। जो असंसारि-पुरुष-रचित नहीं है वह वेद नहीं है यथा- रामायण, रघुवंश आदि।

श्रुति का अर्थ श्रुतिवाक्य है। यथा "एको देवः सर्वभूतेषु गूढः" यह श्रुतिवाक्य ईश्वर के अस्तित्व में प्रमाण है। श्रुतिवाक्यार्थ सुस्पष्ट है- देव=ईश्वर एक हैं। वह सभी प्राणी में अन्तर्यामी रूप से निगूढ़ रहते हैं।

**८. वाक्यात्**

वेदवाक्य की महाभारतादिवाक्यवत् पुरुषनिर्मित है। यथा महाभारत के रचयिता व्यास हैं तद्वत् वेद के रचयिता वेद की तरह सर्वज्ञ है। वह सर्वज्ञ रचयिता ईश्वर है। वेद के रचयिता (उद्भावक) सर्वज्ञ इसलिये माने जाते हैं क्योंकि वेद में सर्वथा असन्दिग्ध रूप से तथा अभ्रान्तरूप से सर्वपदार्थों की प्रतिपादकता उपलब्ध होती है। एतावता यह निष्कर्षकथन प्राप्त होता है- व्यासादिविलक्षण जिस पुरुषविशेष (सर्वज्ञ) द्वारा वेद की रचना की गई है वह सर्वज्ञ ईश्वर है। यहाँ अनुमान का स्वरूप है- "वेद..... भारतादिवत्।" इसमें वेद पक्ष है, पौरुषेयत्व साध्य है, वाक्यत्व हेतु है तथा भारतादि दृष्टान्त अथवा उदाहरण है।

**(९) संख्या-विशेषात्**

संख्याविशेष के बलपर ईश्वर की सिद्धि होती है। ईश्वर से प्रेरित कर्म से जन्य परमाणुद्वयसंयोग होता है। परमाणुद्वयसंयोग से जन्य द्व्यणुक होता है। परमाणु-

पारिशेष्येण तादृशपरमाणुद्वये द्वित्वसंख्योत्पादकापेक्षाबुद्धेराश्रयत्वेनेश्वरसिद्धिः। तथा ह्यनुमानस्वरूपम्–'द्व्यणुकपरिमाणजनिका संख्याऽपेक्षाबुद्धिजन्या, एकत्वान्यसंख्यात्वात् द्विघटनिष्ठद्वित्वसंख्यावत्' इति। तदेवमुक्तानामीश्वरसाधकहेतूनां विस्तृतं व्याख्यानं व्याख्यानान्तरं च कुसुमाञ्जलौ तथाऽन्यत्र च द्रष्टव्यम्।

**ईश्वरविषयकाक्षेपपरिहारः**

ननु पूर्वोक्तेष्वीश्वरसाधकहेतुषु 'प्रत्ययतः, श्रुतेः' इति हेतुद्वयमन्योन्याश्रयदोषग्रस्तम्। तथाहि –'प्रत्ययतः' इति हेतुना ईश्वरोच्चरितत्वेन वेदानां प्रामाण्यमिति, 'श्रुतेः' इति हेतुना च वेदवचनेनेश्वरसिद्धिरिति भवता प्रतिपादितत्वाद् ईश्वरोच्चरितत्वेन वेदानां प्रामाण्यम्, वेदवचनेन चेश्वरसिद्धिरिति सुस्पष्ट एवान्योन्याश्रय इति चेन्न; अविचारितरमणीयत्वात्। तथाहि–

---

परिमाण से विलक्षण द्व्यणुक-परिमाण के प्रति कारण होती है— परमाणुद्वय की द्वित्वसंख्या। इस द्वित्वसंख्या को जन्य माना जाता है तथा इसकी जनक होती है— अपेक्षाबुद्धि। अपेक्षाबुद्धि का आकार है— अयमेकः, अयमेकः- इत्याकारक। परमाणुविषयक यह अपेक्षाबुद्धि जीव में सम्भव नहीं है। जिसे परमाणुविषयक अपरोक्षज्ञान होगा। उसे ही तद्विषयक अपेक्षाबुद्धि होगी। जीवों में तादृश अपरोक्षज्ञान (बुद्धि) सम्भव नहीं है। अतः पारिशेष्यात् परमाणु- द्वयगतद्वित्वसंख्या की उत्पादिका अपेक्षाबुद्धि का आश्रय, अस्मदादि विलक्षण चेतन है। जिसे हम ईश्वर कहते हैं। अनुमान का आकार है— द्व्यणुकपरिमाणजनिका ......... द्वित्वसंख्यावत्। यहाँ द्व्यणुकपरिमाण की जनक संख्या, पक्ष है। अपेक्षाबुद्धिजन्यत्व साध्य है। एकत्वान्यसंख्यात्व हेतु तथा द्विघटनिष्ठ-द्वित्वसंख्या दृष्टान्त अथवा उदाहरण है।

इस प्रकार उपर्युक्त ईश्वर साधक नौ हेतुओं का विस्तृत व्याख्यान कुसुमाञ्जलि ग्रन्थ में किया गया है। अन्यविध व्याख्यान भी सन्दर्भित एवम् अन्य ग्रन्थों में द्रष्टव्य है।

**ईश्वरविषयक आक्षेप एवं परिहार**

उपर्युक्त ईश्वरसाधक हेतुओं में ''प्रत्यय' एवं ''श्रुति'' इन दो हेतुओं में अन्योन्याश्रय दोष पाया जाता है। तद्यथा- प्रत्यय-हेतु द्वारा ईश्वरोच्चरित (रचित) होने से वेद में प्रामाण्य की सिद्धि होती है। तद्विपरीत श्रुति-हेतु द्वारा वेदवचन के कारण ईश्वर की सिद्धि होती है। ऐसा न्यायवैशेषिक के आचार्य प्रतिपादित करते हैं। फलतः ईश्वरोच्चरित होने से वेदप्रामाण्य का होना एवं वेदवाक्य से ईश्वरसिद्धि

वस्तुनो हि विचारो द्विप्रकारकः—ज्ञानदृष्ट्या, अस्तित्वदृष्ट्या च। अस्तित्वदृष्ट्या त्वीश्वरः प्रथमः। स एव वेदान् रचयामास। अत एव वेदानां प्रामाण्यमिति। ज्ञानदृष्ट्या तु वेद एव प्रथमः, वेदवचनेनैवेश्वरज्ञानसम्भवात्। तस्माद् वेदेश्वरयोर्मध्ये नोत्पत्तावन्योन्याश्रयो नापि ज्ञप्तौ। वेदानामुत्पत्तावीश्वरसापेक्षत्वेऽपीश्वरोत्पत्तौ न वेदानां सापेक्षता, ईश्वरस्य नित्यत्वाभ्युपगमात्। एवमीश्वरज्ञाने वेदानामपेक्षायामपि वेदज्ञाने नेश्वरस्यावश्यकता, वेदज्ञानस्य गुरुमुखाद् भवितुमर्हत्वात्। तदुक्तं माधवाचार्यैः—"किमुत्पत्तौ परस्पराश्रयः शङ्क्यते ज्ञप्तौ वा? नाद्यः, आगमस्येश्वराधीनोत्पत्तिकत्वेऽपि परमेश्वरस्य नित्यत्वेनोत्पत्तेरनुपपत्तेः। नापि ज्ञप्तौ, परमेश्वरस्यागमाधीनज्ञप्तिकत्वेऽपि तस्यान्यतोऽवगमात्"[१] इति।

---

का होना— यह अन्योन्याश्रय दूषण सुस्पष्ट है। इस आक्षेप को अविचारित-रमणीय कहा जाता है। जब तक विचार का आरम्भ नहीं किया गया है तभी तक यह आक्षेप युक्तिसंगत प्रतीत होता है। विचार का आरम्भ करते ही यह आक्षेप धराशायी हो जाता है। तद्यथा— वस्तु का विचार दो प्रकार से किया जाता है। ज्ञानदृष्टि से तथा अस्तित्व दृष्टि से। अस्तित्व की दृष्टि से वेद की अपेक्षा ईश्वर प्रथम हैं। उन्होंने ही वेदों की रचना की है। इस कारण से ही वेदों का प्रामाण्य है। ज्ञान की दृष्टि से वेद प्रथम है। एतावता सुस्पष्ट है कि वेद एवं ईश्वर के मध्य में न तो उत्पत्ति को लेकर अन्योन्याश्रय है न ज्ञप्ति को लेकर। वेदों की उत्पत्ति में ईश्वर-सापेक्षता है किन्तु ईश्वर की उत्पत्ति में वेद-सापेक्षता नहीं है। कारण यह है— ईश्वर नित्य है, नित्य के सन्दर्भ में उत्पत्ति की कोई सम्भावना ही नहीं हो सकती। तद्वत् ईश्वर के ज्ञान में वेदों की अपेक्षा हमें होती है किन्तु वेद के ज्ञान में ईश्वर की अपेक्षा नहीं होती। क्योंकि हम अपने गुरु से प्राप्तोपदेश होकर वेदज्ञान प्राप्त कर लेते हैं। माधवाचार्य ने आक्षेपनिराकरण करते हुए कहा है— "क्या उत्पत्ति को लेकर वेद एवम् ईश्वर के मध्य अन्योन्याश्रय की आशङ्का है अथवा ज्ञप्ति=ज्ञान को लेकर। प्रथमपक्ष को लेकर अन्योन्याश्रय की सम्भावना नहीं हो सकती। आगमों (वेदों) की उत्पत्ति ईश्वराधीन है तद्विपरीत परमेश्वर नित्य है। अतः उनकी उत्पत्ति सम्भव ही नहीं है। द्वितीय पक्ष में भी (ज्ञप्ति को लेकर) उक्तदोष का आपादन नहीं किया जा सकता। क्योंकि परमेश्वर की ज्ञप्ति आगमाधीन है किन्तु वेदों की ज्ञप्ति हमें गुरुमुख से (अन्य से) ही हो जाती है।"

---

१. स० द० सं०, पृ० ५११.

नन्वीश्वरस्य जगत्कर्तृत्वे कुलालस्य इव सशरीरत्वापत्तिः, शरीरं विनैव कर्मणोऽसंभवादिति चेन्न; आक्षेपस्य निरर्थकत्वात्। यदीश्वरसिद्ध्यनन्तरमाक्षेपः क्रियते, तर्हि ईश्वरसिद्धौ नाऽयमाक्षेपो बाधकः। यदीश्वरसिद्धेः प्राग् आक्षेपस्ततोऽपि निरर्थक एव। तदुक्तं माधवाचार्यैः—'यदीश्वरः कर्ता स्यात्तर्हि शरीरी स्यादित्यादिप्रतिकूलतर्कजातं जागर्तीति चेत्, ईश्वरसिद्ध्यसिद्धिभ्यां व्याघातः"[१]इति।

नन्वीश्वरस्य जगत्कर्तृत्वे किं तस्य प्रयोजनं स्यात्? विनैव प्रयोजनं मन्दस्यापि प्रवृत्त्यसम्भवात्। ईश्वरस्य पूर्णकामत्वेन प्रयोजनासम्भवः। करुणया प्रवृत्तौ च सर्वस्यापि सुखित्वप्रसङ्ग इति चेन्न; करुणया प्रवृत्तस्यापीश्वरस्य

---

एक नया प्रश्न उपस्थित होता है— ईश्वर को जगत् का रचयिता (कर्ता) मानने पर घट के कर्ता कुलाल की तरह ईश्वर को सशरीर मानना होगा। शरीर के बिना कर्म (कार्य) सम्भव कैसे होगा। इस प्रश्न से उत्थापित आक्षेप निरर्थक है। ईश्वरसिद्धि हो जाने के अनन्तर यह आक्षेप यदि किया जाय तब भी ईश्वरसिद्धि हो चुकने के कारण आक्षेप अकिञ्चित्कर है। ईश्वरसिद्धि होने से पूर्व तो यह आक्षेप सुतरां निरर्थक है क्योंकि ईश्वरसिद्धि हो जाय तभी तो तद्विषयक आक्षेप किया जा सकता है। अतएव माधवाचार्य जी ने कहा है— यदि ईश्वर कर्ता होता तो वह शरीरी होता— यह प्रतिकूल तर्क एवम् अन्यविध प्रतिकूल तर्क निरर्थक ही है। क्योंकि ईश्वरसिद्धि होने के पश्चात् प्रतिकूल तर्क ईश्वर की सिद्धि में बाधक नहीं हो सकता। जब ईश्वर, सिद्ध नहीं है तब उनसे सन्दर्भित प्रतिकूल तर्क का उपस्थापन सर्वथा व्यर्थ है। नये ढंग से यह प्रश्न उपस्थित होता है— किस प्रयोजन से ईश्वर जगत् का निर्माण करते हैं। मन्द व्यक्ति भी बिना प्रयोजन किसी कार्य में प्रवृत्त नहीं होता। पुनश्च पूर्णकाम (आप्तकाम) ईश्वर का कोई भी प्रयोजन कैसे सम्भव हो सकता है। यदि यह कहें कि जीवों के प्रति करुणा होने से ईश्वर जगत् की सृष्टि में प्रवृत्त होते हैं तब तो उन्हें सभी जीवों को सुखी ही बनाना चाहिये। जबकि हम देखते हैं कि सृष्टि में विषमता स्पष्ट रूप से दिखाई देती है। इस आक्षेप को आचार्यों ने अत्यन्त सहजता से निराकृत कर दिया है। ईश्वर की प्रवृत्ति तो करुणा से ही होती है किन्तु जिस प्राणी या उसके भोग्य पदार्थ की सृष्टि की जाती है, उसके प्रति सृज्यमान प्राणी के अदृष्ट की सापेक्षता भी होती है। अत एव सृष्टि के वैषम्य एवं नैर्घृण्य का दोषापादन ईश्वर के प्रति नहीं किया जा सकता। श्रीमाधवाचार्य ने सुस्पष्ट कहा है— (आक्षेपकर्ता नास्तिक के प्रति) हे नास्तिकशिरोमणे! पहले आप

---

१. स० द० सं०, पृ० ५०७.

सृज्यमानप्राण्यदृष्टसापेक्षत्वान्न वैषम्यनैर्घृण्यदोषापत्तिः तदुक्तं श्रीमाधवाचार्यैः– 'नास्तिकशिरोमणे! तावदीर्ष्याकषायिते चक्षुषी निमील्य परिभावयतु भवान्। करुणया प्रवृत्तिरस्त्येव। न च निसर्गतः सुखमयसर्गप्रसङ्गः, सृज्यप्राणिकृतदुष्कृतसुकृतपरिपाकविशेषाद् वैषम्योपपत्तेः। न च स्वातन्त्र्यभङ्गः शङ्कनीयः, स्वाङ्गं स्वव्याघातकं न भवतीति न्यायेन प्रत्युत तन्निर्वाहात्''[१] इति।

तदेवं न्यायवैशेषिकदर्शनयोरीश्वरो जगदुत्पत्तौ घटस्य कुलाल इव निमित्तकारणम्। अस्य च ज्ञानेच्छादयो गुणा नित्याः। जगदुत्पत्तौ प्राण्यदृष्टसापेक्षत्वादस्य न वैषम्यनैर्घृण्यदोषसम्भवः। अयमेव प्राणिनामदृष्टनियामको वेदोत्पादकश्च वर्तते।

## सांख्ययोगदर्शनयोरीश्वरस्वरूपम्

सांख्यास्तावत् सत्कार्यवादमङ्गीकुर्वन्ति। कार्यमव्यक्तरूपेण स्वकारणे

---

ईर्ष्याकलुषित चक्षुओं को निमीलित कर लें तदनन्तर आप स्वच्छता से विचार-विमर्श करें। वस्तुस्थिति यह है कि ईश्वर की प्रवृत्ति तो करुणा से ही होती है। एतावता निसर्गसिद्ध सुखमय सृष्टि का आपादन नहीं किया जा सकता। कारण यह है कि सृज्यमान- प्राणि-द्वारा कृत सुकृत-दुष्कृतों के परिपाक को भी सृष्टि के प्रति सहकारिकारण शास्त्रकारों ने प्रतिपादित किया है। अतः सृष्टि की विषमता अनुपपन्न नहीं है। एतावता ईश्वर के स्वातन्त्र्य के व्याघात की आशङ्का नहीं की जानी चाहिये। स्वाङ्ग को स्वव्याघातक नहीं माना जा सकता- इस न्याय से उक्त आक्षेप का निरास स्वतः ही हो जाता है।

इस प्रकार निष्कर्षतः यह सिद्धान्त विदित होता है— न्यायवैशेषिक दर्शनों में घटोत्पत्ति में कुलाल की तरह जगत् की उत्पत्ति में ईश्वर को निमित्त कारण माना जाता है। ईश्वर के ज्ञान, इच्छा तथा कृति को लाघवात् नित्य एवं एक माना जाता है। जगत् की सृष्टि में यतश्च प्राणी के अदृष्ट की भी सापेक्षता होती है अतः ईश्वर में वैषम्य अथवा नैर्घृण्य दूषणों का उद्भावन नहीं किया जा सकता। यह ईश्वर ही प्राणियों के अदृष्टानुसार फलभोग के नियामक तथा वेदोत्पादक भी हैं।

## सांख्य एवं योग दर्शनों में ईश्वर का स्वरूप

सांख्य दार्शनिक सत्कार्यवाद को स्वीकारते हैं। कार्य अव्यक्त रूप से अपने

---

१. स० द० सं०, पृ० ५१०.

सर्वदा वर्तत इति हि तत्सिद्धान्तः। कार्यरूपस्यास्य प्रपञ्चस्य जडरूपत्वादस्य कारणमपि जडा प्रकृतिरेव। सत्त्वरजस्तमसां साम्यावस्थारूपेयं प्रकृतिश्चेतनपुरुषसान्निध्ये महदादिरूपेण परिणमत इति सांख्याः प्रतिपादयन्ति। अतोऽत्र सृष्टिरचनायां प्रकृतिपुरुषयोर्भिन्नः कश्चनेश्वरो नापेक्षितः।

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः[1]।।

इतीश्वरकृष्णोक्त्या पुरुषस्य भोगाऽपवर्गार्थं प्रवृत्ता प्रकृतिः कृतप्रयोजना सती नर्तकीव यदा निवर्तते, तदा तेन पुरुषेण संसारलयोऽपवर्गश्च प्राप्यते। तस्मादत्र प्रपञ्चविलये जीवस्य विमोक्षणे वा नेश्वरस्यावश्यकता प्रतीयते।

ननु प्रकृतिस्तु जडा। तादृशप्रकृतौ प्रयोजनासंभवात् कथं जीवविमोक्षणाय प्रकृतेः प्रवृत्तिरिति चेन्न; अचेतनायामपि प्रवृत्तिसंभवात्। तदुक्तमीश्वरकृष्णेन–

---

कारण में सदा (उत्पत्ति के पूर्व भी) विद्यमान रहता है— यह सत्कार्यवाद-सिद्धान्त है। यतश्च यह सम्पूर्ण जगत् जडस्वरूप है अत: इसका कारण भी जड प्रकृति, चेतन पुरुष के सान्निध्य में महदादिरूप से परिणामरूपता को प्राप्त होती है— ऐसा सांख्य दार्शनिक प्रतिपादन करते हैं। अत: इस दर्शन में सृष्टि-रचना हेतु प्रकृति एवं पुरुष से भिन्न ईश्वर का स्वीकार नहीं किया गया है।

रङ्गस्य दर्शयित्वा........विनिवर्तते प्रकृतिः।।१।।

यह ईश्वर कृष्ण की उक्ति है। इसका अर्थ है— पुरुष के भोग एवं अपवर्ग हेतु प्रवृत्त प्रकृति अपने प्रयोजनपूर्ति के अनन्तर कृतनृत्या रङ्गस्थलविनिवृत्ता नर्तकी की तरह निवृत्त हो जाती है। तावन्मात्र से पुरुष का संसारलय एवं अपवर्गावाप्ति हो जाती है। अतएव इस सिद्धान्त में प्रपञ्च के विलयनिमित्त अथवा जीव के मोक्षनिमित्त ईश्वर की आवश्यकता प्रतीत नहीं होती।

यहाँ यह जिज्ञासा उदित होती है— प्रकृति स्वयं जड है- ऐसी स्थिति में प्रयोजन की सम्भावना स्वतो निरस्त है। ऐसी स्थिति में जीवविमोक्षण के उद्देश्य से प्रकृति की प्रवृत्ति कैसे हो सकती है। इसका उत्तर यह दिया जाता है- अचेतना प्रकृति में भी प्रवृत्ति सम्भव है। अतएव आचार्य ईश्वरकृष्ण ने कहा है—

---

१. सां० का० ५९.

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य।।**[१]**इति।**

अस्यायमर्थः—यथाऽचेतनमपि क्षीरं वत्सविवृद्ध्यर्थं प्रवर्तते, एवमचेतनापि प्रकृतिः पुरुषविमोक्षणाय प्रवर्तिष्यत इति।

यदि प्रकृतेः प्रवृत्तावीश्वरः सञ्चालकरूपेण स्वीक्रियते, तर्हि तादृशचेतनस्य प्रवृत्तिः किमुद्देश्येन? किं स्वार्थेन, उत करुणया? नाद्यः, ईश्वरस्य नित्यतृप्तत्वात्। नापि द्वितीयः, सृष्टेः प्राग् जीवनादृष्ट-शरीराद्यभावेन तत्कृतबन्धनाभावात् तद्बन्धप्रहाणेच्छारूपा ईश्वरस्य करुणा कथं वा कल्पेत। सर्गानन्तरं दुःखिनो जीवानवलोक्य तत्प्रहाणेच्छारूपा करुणा संभवत्येवेश्वर इत्यप्ययुक्तम्, तथा सति कारुण्येन सृष्टिः, सृष्ट्या च कारुण्यमिति दुरुद्धरोऽयमन्योन्याश्रयः। तदुक्तं माधवाचार्यैः—"स किं सृष्टेः प्राक् प्रवर्तते, सृष्ट्युत्तरकालं वा? आद्ये शरीराद्यभावेन दुःखानुत्पत्तौ जीवानां दुःखप्रहाणेच्छानुपपत्तिः। द्वितीये परस्पराश्रयप्रसङ्गः, करुणया सृष्टिः सृष्ट्या च

---

वत्सविवृद्धि निमित्तं............प्रवृत्तिः प्रधानस्य।।१।।

इसका यह अर्थ है— जैसे मानवी एवं गो आदि का दुग्ध, अचेतन होता हुआ भी वत्स-विवृद्धि के निमित्त प्रवृत्त होता है तद्वत् प्रकृति, अचेतन होंने पर भी पुरुष-विमोक्ष- निमित्त से प्रवृत्त क्यों नहीं हो सकेगी?

यदि प्रकृति की प्रवृत्ति में ईश्वर को संचालक रूप से स्वीकार किया जाता है तो तादृश चेतन की प्रवृत्ति किस उद्देश्य से होगी? १. स्वार्थ से अथवा २. करुणा से। प्रथम विकल्प मान्य नहीं हो सकता क्योंकि ईश्वर नित्यतृप्त हैं उनका कोई स्वार्थ नहीं है। दूसरा विकल्प भी युक्तिसंगत नहीं है। कारण यह है- सृष्टि से पूर्व जीव-शरीरादि के अभाव रहने से तत्कृत बन्धन होता नहीं। ऐसी स्थिति में बन्धविनाशेच्छा स्वरूप ईश्वरकरुणा की कल्पना नहीं की जाएगी। यदि यह कहा जाय— सृष्टि के अनन्तर दुःखी बद्ध-जीवों का अवलोकन कर तत्प्रहाणेच्छा (करुणा) ईश्वर में सम्भव है– तो यह कथन भी अयौक्तिक होगा। क्योंकि इस सिद्धान्त में सृष्टि को कारुण्यमूलक एवं कारुण्य को सृष्टिमूलक मानना होगा। फलतः अन्योन्याश्रय दूषण का उद्धार नहीं होगा। अत एव सायाणमाधव ने कहा है— उसकी प्रवृत्ति सृष्टि से पूर्वकाल में होती है? अथवा उत्तरकाल में? आंद्य कल्प

---

१. सां० का० ५७.

कारुण्यमिति"[१] इति।

किञ्च, करुणया ईश्वरः सृष्टौ प्रवर्तते चेत्, सर्वानपि सुखिन एव सृजेत्। तथा सति सृष्टिवैचित्र्यभङ्गप्रसङ्गः, प्रत्यक्षविरोधापत्तिश्च। यदि च प्राणिनां शुभाऽशुभकर्मवैचित्र्यात् सृष्टिवैचित्र्यमित्युच्यते, तर्हि तादृशशुभाशुभकर्मसाहाय्येन प्रकृतिरेव प्रपञ्चस्य कर्त्रीति स्वीकारे ईश्वरस्त्वन्यथासिद्धः। प्रकृतेः प्रवृत्तौ न स्वार्थं न वा कारुण्यं प्रयोजकम्, किन्तु पारार्थ्यमात्रमिति नोक्तदोषप्रसङ्गः। तदुक्तं वाचस्पतिमिश्रैः—"करुणया प्रेरित ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान्। कर्मवैचित्र्याद्वैचित्र्यमिति चेत्, कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन, तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्मणः प्रवृत्त्युपपत्तेः, तत्कार्यशरीरेन्द्रिय-विषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात्। प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो न वा कारुण्यं प्रयोजकमिति नोक्तदोषप्रसङ्गः। पारार्थ्यमात्रं तु

---

में शरीरादि के अभाव में दुःख की अनुत्पत्ति होने से जीवों के दुःखप्रहाण की इच्छा अनुपपन्न होगी। दूसरे विकल्प में भी अन्योन्याश्रय दूषण की अतिप्रसक्ति होगी- करुणा से सृष्टि एवं सृष्टि से करुणा की उत्पत्ति के सिद्धान्त में अन्योन्याश्रय वज्रलेपायित होगा।

अन्य भी ध्यातव्य बात है— करुणा से ईश्वर, सृष्टि में यदि प्रवृत्त हों तो सबको वह सुखी ही बनाते। परिणामस्वरूप सृष्टिवैचित्र्य की भङ्गप्रसक्ति होगी। तद्वत् प्रत्यक्ष- विरोध की आपत्ति भी होगी। उपर्युक्त दूषणों से त्राण-प्राप्ति हेतु प्राणिकृत शुभाशुभ-कर्म-वैचित्र्यमूलक सृष्टिवैचित्र्य का अभ्युपगम किया जाय तो तादृश शुभाशुभ-कर्म-साहाय्य से प्रकृति में ही सृष्टिकर्तृता का स्वीकार कर लेने से अन्यथासिद्ध ईश्वर की कल्पना सर्वथा निरर्थक है। प्रकृति की प्रवृत्ति में न कोई स्वार्थ प्रयोजक होगा और न कोई करुणा। वह तो परार्थ के लिये ही प्रवृत्त होगी एतावता उपर्युक्त दूषण की अतिप्रसक्ति नहीं होगी। इस निष्कर्षकथन को आचार्य वाचस्पतिमिश्र ने सुस्पष्ट कहा है- "करुणा से प्रेरित ईश्वर सुखी जन्तुओं को ही सृष्टि करते, विषम-विचित्र की नहीं। कर्मवैचित्र्य से जगद्वैचित्र्य होगा- यह नहीं कह सकते। क्योंकि ऐसी स्थिति में प्रेक्षावान् ईश्वर को कर्माधिष्ठाता होने का कोई नया फल नहीं हो सकता। किसी अधिष्ठाता को स्वीकार किये बिना ही अचेतन कर्म की प्रवृत्ति अयौक्तिक नहीं होगी। कर्ममूलक शरीर, इन्द्रिय एवं विषय की उत्पत्ति के अभाव में दुःखोत्पत्ति का अभाव भी सुकर होगा। अचेतन प्रकृति की प्रवृत्ति

---

१. स० द० सं०, पृ० ६४४-६४५.

प्रयोजकमुपपद्यते इति। पारार्थ्यमात्रं नाम– परस्य अर्थः परार्थः, तस्य भावः पारार्थ्यम्, पारार्थ्यमेव पारार्थ्यमात्रम्, इति व्युत्पत्त्या परोऽर्थात् पुरुषः, तस्य योऽर्थः प्रयोजनं (मोक्षः) तदर्थः तदर्थमात्रमित्यर्थः।

तस्माद् यद्व्यतिरेकेऽनिष्टप्रसञ्जनं तद्वस्तु प्रामाणिकं भवतीति व्याप्तिः। यद्व्यतिरेके च नानिष्टप्रसक्तिस्तद्वस्तु नाङ्गीक्रियते। केवलं तद्वाचकशब्द-व्यवहारमात्रं भवति। यथा शशशृङ्गम्, गगनारविन्दमित्यादि। अत एव कारणत्वग्रहे व्यतिरेकस्य प्राधान्यमामनन्ति तर्कविदः। तथा चेश्वरव्यतिरेके सृष्टेः, अपरस्य वा कस्यापि कार्यस्य व्यतिरेकव्यतिरेकाद् ईश्वरव्यतिरेके नेष्टव्यतिरेकः। अतस्तस्य प्रामाणिकत्वाभावात् सांख्यमते नेश्वरसद्भावः, तत्प्रयोजकीभूतहेतोरभावात्। अत एवाद्यावधि तद्विषये दार्शनिकानां परस्परं विवादो विलसत्येव। कामं क्रियतां बुद्धिव्यायामस्तेन नहि तत्सद्भावसम्भावनापि। नह्यत्यन्तनिपुणेनापि कृतप्रयत्नेन नटेन घटः पटयितुमिश्यते। न वा शर्करा लवणीक्रियते। न वा दिवान्धो दिवा रूपग्राहकः सम्पाद्यते। अतो बहुकल्पितपदार्थवन्मनोरथकल्पित एवेश्वरपदार्थ इति सांख्यदृष्ट्या निरूपयितुं शक्यते। एवं सांख्यसिद्धान्ते सृष्ट्यर्थम्, तत्प्रलयार्थम्,

---

के सिद्धान्त में न स्वार्थ का आग्रह होगा और न करुणा को प्रयोजक मानना होगा- एतावता उपर्युक्त दूषणों का आपादन नहीं प्राप्त होगा। पारार्थ्यमात्र को प्रयोजक मानने से युक्तिविरोध आपादित नहीं होगा।''

यहाँ पारार्ध्य मात्र का यह अर्थ है- परस्य अर्थः=परार्थः, परार्थ का भाव पारार्थ्य है। पारार्थ्य से अनतिरिक्त (अर्थान्तर) पारार्थ्यमात्र है।

उपर्युक्त व्युत्पत्ति से लभ्य अर्थ है- पर=पुरुष, उसका अर्थ=प्रयोजन-मोक्ष है। तदर्थ=तन्मात्र प्रयोजन होने से किसी प्रकार का दूषण अतिप्रसक्त नहीं होता।

अतः जिसके अभाव में अनिष्टप्रसक्ति होती है वही वस्तु प्रामाणिक होती है— यह व्याप्ति सुस्थिर होती है। जिस वस्तु के अस्वीकार से कोई भी अनिष्टप्रसक्ति नहीं होती उस वस्तु का अङ्गीकार नहीं किया जाता है। ''शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'' इस योगसूत्र के अनुसार वाचकशब्द का व्यवहारमात्र होता है वहाँ कोई वस्तु नहीं होती। उदाहरण के रूप में सर्वविदित है— शशशृङ्ग एवं गगनकसुम आदि। अत एव तर्कवेत्ता लोग कारणता के ज्ञाननिर्धारण में **तदभावे तदभावः** इस व्यतिरेक-प्रणाली को प्रधान बताते हैं।

---

२. सां० त० कौ०, पृ० ४६४-४६६.

जीवस्य विमोक्षार्थं वा ईश्वरो नाङ्गीकृत इति सांख्यदर्शनं निरीश्वरसांख्यमिति हि प्रथितं लोके।

तत्रभवता महर्षिणा कपिलेन-"ईश्वरासिद्धेः, मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः, उभयथाऽप्यसत्करत्वम्, मुक्तात्मनः प्रशंसा उपासासिद्धस्य वा" इति चतुर्भिः[1] सूत्रैरीश्वराङ्गीकारो निषिद्धः। तत्र प्रथमसूत्रेणेश्वरनिषेधः प्रतिज्ञातः। द्वितीयेन सूत्रेण चेश्वरास्तित्वे स किं मुक्तपुरुषान्तर्गतः, उत बद्धपुरुषान्तर्गत इत्याक्षेपः कृतः। तृतीयेन सूत्रेण तस्य मुक्तपुरुषान्तर्गतत्वे सृष्टिप्रयोजकाभिमानाद्यभावान्न तेनेश्वरेण सृष्टिसंभवः, बद्धपुरुषान्तर्गतत्वे चास्य मूढत्वान्न सृष्ट्यादिक्षमत्वमित्युभयथाप्यनुपयुक्तत्वं प्रतिपाद्य चतुर्थेन

---

एवं च ईश्वर के अभाव में सृष्टि का अथवा अन्य किसी कार्य का व्यतिरेक नहीं आपादित होता है। अतः ईश्वर प्रमाणोपेत नहीं है। अत एव सांख्यमत में ईश्वरसद्भाव अमान्य है क्योंकि उसका प्रयोजक कोई हेतु नहीं है। अत एव अद्यावधि ईश्वरास्तित्व के विषय में दार्शनिकों का पारस्परिक विवाद बना ही है। चाहे जितना भी बुद्धिव्यायाम कर ले उससे ईश्वर के सद्भाव की सम्भावना भी नहीं बन पाती, अवश्यंभाविता एवं प्रामाणिकता तो दूर की बात है। नट कितना भी निपुण क्यों न हो नानाविध प्रयत्न भी करता रहे एतावता वह घट को लवण नहीं बना सकता। उलूक दिवान्ध है तो उसे कृतप्रयत्न भी दिवा में रूपग्रहणसमर्थ नहीं बना सकता है। अतः निष्कर्ष यही है— अन्य बहुत सारे कल्पित (कल्पनामात्रसार) वस्तु की तरह ईश्वर पदार्थ भी मनोरथ (कल्पनामात्र) ही है- ऐसा सांख्य दृष्टि से निरूपण किया जा सकता है। एवञ्च सांख्य-सिद्धान्त में सृष्टि, प्रलय अथवा जीवविमोक्ष हेतु ईश्वर अङ्गीकृत नहीं है अत एव सांख्यदर्शन, निरीश्वरसांख्य नाम से लोक में विश्रुत है।

पूज्यचरण महर्षि कपिल ने "ईश्वरासिद्धेः, मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः, उभयथाऽप्यसत्करत्वम्, मुक्तात्मनः प्रशंसा उपासासिद्धस्य वा - इन चार सूत्रों द्वारा ईश्वराङ्गीकार को सर्वथा निषिद्ध कर दिया है। इनमें प्रथम सूत्र से ईश्वरनिषेध की प्रतिज्ञा की गई है। द्वितीय सूत्र से यह आक्षेप किया गया है- ईश्वर का अस्तित्व होने पर उसे मुक्तपुरुष के अन्तर्गत माना जायगा अथवा बद्धपुरुष के अन्तर्गत? तृतीय सूत्र से दोनों कल्पों में ईश्वर को सृष्टि में अक्षम प्रतिपादित किया गया है- (१) ईश्वर को मुक्त पुरुष के अन्तर्गत मानने पर सृष्टिप्रयोजक अभिमानादि के अभाव होने से ऐसे ईश्वर से सृष्टिसम्भव अकथनीय है। (२) ईश्वर को बद्धपुरुष के

---

१. सां० सू० १।९२-९४.

सूत्रेणेश्वरप्रतिपादकवचनानां मुक्तात्मनां प्रशंसापरत्वेन नेयत्वं व्यवस्थापितम्।

पुनश्च–"प्रमाणाभावान्न तत्सिद्धिः, सम्बन्धाभावान्नानुमानम्, श्रुतिरपि प्रधानकार्यत्वस्य"[१] इति सूत्रत्रयेण ईश्वरास्तित्वे न प्रत्यक्षं प्रमाणं संभवति, इन्द्रियैः साकं सन्निकर्षाभावात्। नानुमानमपि, साध्यहेत्वोः सहचारादिदर्शनरूपप्रत्यक्षोपजीव्यत्वादनुमानस्य। न श्रुतिरपि, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः"[२] इति श्रुत्या प्रकृतेरेव जगत्स्रष्टृत्वस्य प्रतिपादितत्वात्, इतीश्वरसत्तायां प्रमाणाभावोऽपि प्रदर्शितो महर्षिणा कपिलेन।

अत्र सूत्रकारस्य महर्षेराशयो विज्ञानभिक्षुणा ईश्वरसाधनपरत्वेन व्यवस्थाप्यते। तथा हि–"अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढ़वादेनैवेति प्रागेव प्रतिपादितम्; अन्यथा हीश्वराभावादित्येवोच्येत"[३] इति। अस्यायमाशयः–नैभिः

---

अन्तर्गत मानने पर वह मूढ होगा परिणामस्वरूप वह अन्य बद्धपुरुषवत् सृष्ट्यादि में अक्षम ही होगा।

चतुर्थ सूत्र से ईश्वरप्रतिपादक वचनों को मुक्तपुरुषों के प्रशंसापरक मानकर उन्नेय होना प्रतिपादित किया गया है।

पुनरपि अन्य तीन सूत्र भी सम्बद्ध विषय में प्रमाणाभाव को उपदर्शित करते हैं- (१) प्रमाणाभावान्न तत्सिद्धिः (२) सम्बन्धाभावान्नानुमानम् तथा (३) श्रुतिरपि प्रधानकार्यत्वस्य।

प्रथमसूत्र से प्रतिपादित होता है- ईश्वर के अस्तित्व में प्रत्यक्ष प्रमाण सम्भव नहीं है क्योंकि इन्द्रियों के साथ ईश्वर का सन्निकर्ष नहीं होता। द्वितीय सूत्र से प्रतिपादित होता है— अनुमान प्रमाण भी नहीं है क्योंकि साध्य एवं हेतु का सहचार होना तथा व्यभिचार का अभाव होना- इस तरह से अनुमान, प्रत्यक्षप्रमाण का उपजीवी होता है। तृतीय सूत्र से प्रतिपादित होता है- श्रुति प्रमाण भी नहीं है क्योंकि "अजामेकाम्-इत्यादि श्रुति-द्वारा प्रकृति में ही जगत्सृष्टि की कारणता प्रतिपादित की गई है।

उपर्युक्त प्रकार से महर्षि कपिल ने ईश्वरसत्ता में प्रमाणाभाव को भी प्रदर्शित किया है।

---

१. सां० सू० ५।१०-१२.
२. श्वे० उ० ४।५.
३. सां० सू० १।९२ प्रवचनभाष्यम्।

सूत्रैरीश्वरखण्डने सूत्रकाराभिप्रायः। यद्येवं स्यात् तदा ईश्वराभावाद् इत्येवं सूत्रयेत्, न तु 'ईश्वरासिद्धेः' इत्याकारकं सूत्रं रचयेत्। तस्मान्महर्षिणा ईश्वरास्तित्वं निषेधितम्, नेश्वराभावः साधित इति।

डॉ० या० कु० मसीहमहाशया विज्ञानभिक्षोर्वचनमसङ्गतमिति प्रतिपादयन्ति। महर्षिणा ईश्वरास्तित्वं खण्डितम्, न तु तस्याभावः साधित इत्यनयोर्भेदाऽभावात्। ईश्वरास्तित्वखण्डनेनैव तदभावः सुतरां साधित इति पूर्वोक्तो विज्ञानभिक्षोस्तर्को नेश्वरसाधनसमर्थो भवति।[१]

श्रीमन्त उदयवीरशास्त्रिमहाभागाः सांख्यसूत्रेषु महर्षिणा कपिलेन जगदुपादानभूतस्यैवेश्वरस्यासिद्धिः कृता, न तु सर्वथा ईश्वरासिद्धिरिति प्रतिपादयन्ति। तथाहि—प्रथमाध्याये जगदुपादानभूतस्येश्वरस्यासिद्धिः प्रतिपादिता। जगदुपादानभूत ईश्वरः केनापि प्रमाणेन साधयितुं न शक्यः सांख्यनये,

---

विज्ञानभिक्षु ने सूत्रकार महर्षि कपिल के आशय को ईश्वरसाधनपरक व्यवस्था से उपपादित किया है। तद्यथा- "यह ईश्वर-प्रतिषेध, एकदेशी मत को प्रौढवाद मानकर किया गया है- ऐसा हमने पूर्व में ही प्रतिपादित कर दिया है। अन्यथा सूत्रकार महान् कण्ठ से "ईश्वराभावात्" सुस्पष्टतया कहे होते।" इस कथन का आशय यह है– उपर्युक्त सूत्रों द्वारा ईश्वर-खण्डन में सूत्रकार का अभिप्राय नहीं है। यदि यह अभिप्राय होता तो वह "ईश्वराभावात्" ऐसा सूत्र रचते न कि "ईश्वरासिद्धेः" इस सूत्र को रचे होते। अतः महर्षि द्वारा ईश्वरास्तित्व का निषेध किया गया है, न कि ईश्वराभाव का साधन किया गया है।

डॉ. या. कु. मसीह महाशय ने विज्ञानभिक्षु के वचन को असङ्गत कहा है- (१) महर्षि ने ईश्वरास्तित्व का खण्डन किया है तथा (२) महर्षि ने ईश्वर का अभाव साधित नहीं किया है। इन दोनों वचनों में कोई भेद अथवा अन्तर नहीं है। ईश्वर के अस्तित्व का खण्डन करने से ही ईश्वर का अभाव स्वतः साधित हो जाता है अतः विज्ञानभिक्षु का पूर्वोक्त तर्क ईश्वरसाधन में समर्थ नहीं है।

श्रीमान् उदयवीर शास्त्री जी का यह मत है- सांख्यसूत्रों में महर्षि कपिल ने जगदुपासनतया ईश्वर की असिद्धि प्रतिपादित की है, न कि सर्वथा ईश्वर की असिद्धि। तद्यथा- प्रथमाध्याय में जगदुपादानभूत ईश्वर की असिद्धि प्रतिपादित की गई है। किसी भी प्रमाण से सिद्ध नहीं किया जा सकता- ईश्वर जगत् का उपादान

---

१. निरीश्वरवाद भारतीय एवं पाश्चात्य, पृ० ४९-५३.

प्रकृतितत्त्वस्य सत्त्वरजस्तमोमयस्य तत्र जगदुपादानत्वस्वीकारात्। अत्र पुनस्तृतीयाध्याये सर्वजगदधिष्ठाता सर्वनियन्ता परमेश्वरः प्रतिपाद्यते। एवम्भूतस्य जगत्कर्तुरीश्वरस्य सिद्धिर्निश्चिता एवेति। अनयैव रीत्याऽनयोः प्रसङ्गयोराशङ्क्यमानो विरोधः शक्यः परिहर्तुम्। अत एव पञ्चमाध्याये परमेश्वरस्याधिष्ठातृत्वं प्रतिपाद्य "श्रुतिरपि प्रधानकार्यत्वस्य"[३] इत्युपसंहारसूत्रेण प्रकृतेरेव जगदुपादानत्वं प्रत्यपादयत् सूत्रकारः।

अत एव "ईश्वरासिद्धेः"[४] इत्यादिसूत्रदिशा परमेश्वरस्य जगदुपादानत्वं प्रतिषिध्य "तत्सन्निधानादधिष्ठातृत्वं मणिवत्"[३] इति प्रकरणोपसंहारसूत्रेण कपिलश्चेतनस्य सर्वजगन्नियन्तुः परमेश्वरस्यैव जगदधिष्ठातृत्वं प्रत्यस्थापयत्। सप्तदशसंख्याङ्कितकारिकाव्याख्याने 'अधिष्ठानात्' इति हेतुं विवृण्वन् माठरः– "ततः पश्यामोऽसौ परमात्मा अस्ति पुरुषो येनाधिष्ठितं

---

कारण है। क्योंकि सत्त्वरजस्तमोमय प्रकृतितत्त्व को जगत् का उपादान कारण माना गया है। पुनश्च तृतीय अध्याय में सम्पूर्ण जगत् के अधिष्ठाता तथा सर्वनियन्ता के स्वरूप में परमेश्वर प्रतिपादित किये गये हैं। एवञ्च जगत्-कर्ता ईश्वर की सिद्धि, निश्चित रूप से की गई है। इसीरीति से इन दो प्रसङ्गों के मध्य आशङ्कनीय विरोध का परिहार किया जा सकता है। अत एव पञ्चम अध्याय में परमेश्वर की कर्माधिष्ठातृता का प्रतिपादन कर "श्रुतिरपि प्रधानकार्यत्वस्य" इस उपसंहार-सूत्र द्वारा प्रकृति की ही उपादानकारणता का प्रतिपादन सूत्रकार ने किया है।

अत एव ईश्वरासिद्धेः इत्यादि सूत्रों के आधार पर परमेश्वर की जगदुपादान-कारणता का प्रतिषेध कर "तत्सन्निधानादधिष्ठातृत्वं मणिवत्" इस प्रकरणोपसंहार-सूत्र द्वारा महर्षि कपिल ने सर्वजगन्नियन्ता चेतन परमेश्वर की ही जगदधिष्ठातृता को प्रतिष्ठापित किया है। १७वीं कारिका के व्याख्यान में "अधिष्ठानात्" हेतु पद की व्याख्या करते हुए आचार्य माठर ने उपपत्ति को दर्शाया है- तब हम भलीभाँति यह देख पाते हैं- परमात्मा वह पुरुष है जिससे अधिष्ठित प्रधान उत्पन्न करता है- महद्, अहङ्कार, तन्मात्र, इन्द्रिय एवं भूतों को।

इसी हेतुपद के व्याख्यान में माठर एवं गौडपाद इन दोनों आचार्यों ने

---

३. सां० सू० ५।१२.

४. सां० सू० १।९२.

५. सां० सू० १।९६.

महदहङ्कारतन्मात्रेन्द्रियभूतान्युत्पादयति" इत्युपापादयत्। अस्यैव हेतुपदस्य व्याख्याने माठरगौडपादावुभावपि पञ्चशिखसूत्रमेकमित्थमुद्धरतः-"पुरुषाधिष्ठितं प्रधानं प्रवर्तते" इति। पुरुषपदं हि सांख्ये पारिभाषिकं चेतनमात्रपरम्। पूर्वोक्तरीत्या नहि चेतनो जीवात्मा मूलप्रकृतेरधिष्ठाता भवितुमर्हति। एवं च चेतनाधिष्ठितप्रधानस्य प्रवृत्तिं व्याचक्षाणः पञ्चशिखः सकलजगदधिष्ठातारं परमात्मानमेवोपपादयति। कापिलैश्चेतननिरपेक्षा प्रकृतिः प्रवर्तत इति मतं नाङ्गीक्रियत एव। एवं कपिलनाम्ना तादृङ्मतमाश्रित्य तन्निराकरणं यद्भगवानाचार्यः शङ्करश्चकार सर्वत्र ब्रह्मसूत्रभाष्ये, तत्सर्वं निराधारमेव सञ्जायते[1] इति।

नन्वेवं सति 'कपिलो निरीश्वरवादी' इति प्रवादो बहोः कालात् कथमिव प्रवर्तित इत्याकाङ्क्षायां श्रीमन्त उदयवीरशास्त्रिण एवमभिप्रयन्ति-सांख्याचार्यपरम्परायां वार्षगण्याख्योऽस्ति प्रसिद्धोऽतिप्राचीन आचार्यः। तेन च

---

पञ्चशिखाचार्य के एक सूत्र को इस प्रकार उद्धृत किया है- "पुरुषाधिष्ठितं प्रधानं प्रवर्तते" इति। सांख्यदर्शन में पुरुषपद पारिभाषिक है। जिसका अर्थ होता है-चेतनमात्र। पूर्वोक्तरीति से चेतन जीवात्मा, मूलप्रकृति का अधिष्ठाता नहीं हो सकता। एवं च चेतनाधिष्ठित प्रधान की प्रवृत्ति की व्याख्या करते हुए पञ्चशिख निश्चितरूप से सकल जगत् के अधिष्ठाता परमात्मा का ही उपपादन करते हैं। इस प्रकार कपिल के अनुयायी आचार्यगण कथमपि इस मत का अङ्गीकार नहीं करते- चेतन-निरपेक्ष प्रकृति प्रवृत्त होती है-

एवञ्च कपिल के नाम से तादृश मत का आश्रयण कर उसका निराकरण जो भगवान् आचार्य शंकर ने ब्रह्मसूत्र भाष्य में सर्वत्र किया है वह समस्त निराकरण निराधार ही सिद्ध होता है।

ऐसी परिस्थिति में "कपिल निरीश्वरवादी हैं"- ऐसा प्रवाद बहुकाल से कैसे (किस कारण से) प्रवर्तित है- यह आकाङ्क्षा स्वरसतः उदित होती है। इसके समाधानार्थ श्रीमान् उदयवीरशास्त्री अपना अभिप्राय यह प्रतिपादित करते हैं-सांख्याचार्य परम्परा में वार्षगण्य नामक कोई अति प्राचीन आचार्य प्रसिद्ध हैं। उन्होंने षष्टितन्त्र नामक ग्रन्थ की रचना की है। सांख्याचार्य होने के बावजूद इन्होंने कपिलमत को अनेक स्थलों में स्वीकार नहीं किया है। सांख्यकारिका की युक्तिदीपिका-व्याख्या

---

१. सा० सु०, व० १५, अंक १४, पृ० १०६-१०८.

षष्टितन्त्राख्यो ग्रन्थो विरचितः। सांख्याचार्योऽप्ययं कापिलमतमनेकेष्वङ्गेषु नाङ्गीकृवान्। युक्तिदीपिकाख्यायां सांख्यकारिकाव्याख्यायामस्य मतमेवमुद्धृतं वर्तते–"प्रधानप्रवृत्तिरप्रत्यया पुरुषेणाऽपरिगृह्यमाणाऽऽदिसर्गे वर्तते" इति। एतेन वार्षगण्याचार्यः प्रधानप्रवृत्तिं प्रति चेतनापेक्षां नाङ्गीकरोतीत्यवगम्यते।

कालान्तरे सर्वात्मना निरीश्वरवादिनो बौद्धाः स्वमतपोषणाय वार्षगण्यमतं सांख्यमतमिति कृत्वा प्रचारितवन्तः प्रसारितवन्तश्च। रहस्यमिदमजानद्भिर्जनैः सांख्यस्येदं मतमेव तदादिप्रवक्तुः कपिलस्य मतमित्यारोपितम्। तदाप्रभृत्येवायं प्रवादः प्रवर्तितः 'कपिलो निरीश्वरवादी' इति। अतो भगवत्पादैः शङ्कराचार्यैः प्रत्याख्यातं सांख्यमतं सांख्यान्तर्गतवार्षगण्यशाखारूपम्, न तु कापिलमिति निश्चप्रचम्[1]।

वस्तुतस्तु द्विविधा हि सांख्यविचारधारा प्रवहन्ती दृश्यते–सेश्वरसांख्यधारा, निरीश्वरसांख्यधारा चेति। एतच्च विज्ञानभिक्षुणापि स्वीकृतम्। तथा चोक्तं तेन–"अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढिवादेनैव[2] इति।

---

में इनका मत इस रूप से उद्धृत है- प्रधान की प्रवृत्ति अप्रत्यया अर्थात् पुरुष द्वारा अपरिगृह्यमाण है तथा आदि सर्ग में स्थित रहती है। इससे यह सुविदित होता है कि वार्षगण्य आचार्य प्रधानप्रवृत्ति के प्रति चेतनापेक्षा का अङ्गीकार नहीं करते।

गच्छता कालेन जो बौद्ध दार्शनिक सर्वात्मना निरीश्वरवादी हैं उन्होंने अपने मत की पुष्टि के लिये वार्षगण्यमत को सांख्यमत कहकर प्रचारित एवं प्रसारित कर दिये। जो इस वञ्चनारहस्य को नहीं जान पाये थे। ऐसे सामान्य जनों में सांख्य के इस एकदेशी मत को उसके आदि प्रवक्ता अथवा प्रवर्तक का मत समझा जाने लगा। उसी समय से यह प्रवाद चल पड़ा- "कपिल निरीश्वरवादी हैं।" अतः भगवत्पाद शङ्कराचार्य द्वारा प्रत्याख्यात सांख्यमत वार्षगण्य-स्वीकृत एकदेशिमत है- एतावता निराकृत सांख्यमत सांख्यशाखामत है कपिल शाखिमत नहीं- यह नितरां ध्यातव्य है।

वास्तविकरूप से विचार करने पर प्रतीत होता है कि दो प्रकार की सांख्यविचार- धारा प्रवाहित है- १. सेश्वर सांख्यधारा एवं २. निरीश्वर सांख्यधारा। इस बात से आचार्य विज्ञानभिक्षु सुपरिचित हैं। अतएव उनकी स्पष्टोक्ति है- "यह ईश्वरप्रतिषेध सांख्य के एकदेशिमत के प्रौढिवाद के कारण प्रतिपादित हुआ है।"

---

१. सा० सु०, व० १५ अंक १–४, पृ० १०८–१०९.

२. सां० सू० १।९२ प्रवचनभाष्यम्।

अत्र सेश्वरसांख्यानामपीश्वरो न नैयायिकाभिमतेश्वर इव नित्यसर्वज्ञत्वादिगुणयुक्तः, न वा प्रपञ्चकर्तृत्वसामर्थ्यवान्, किन्तु प्रकृतिप्रतिबिम्बितत्वात् पुरुषे सर्ववित्त्वसर्वकर्तृत्वाभिमानवान्। एतादृशाभिमानयुक्तः पुरुष एवेश्वरः। तदुक्तं वृत्तिकारेण–"यद्यस्मदभिमत आत्मा ईश्वरः, भवतु; न्यायाभिमते च प्रमाणं नास्ति"[1] इति। एवं सांख्याः कर्तारमीश्वरं निषेधयन्ति, न तु कर्तृत्वाद्यभिमानिनमात्मानमीश्वरमिति ज्ञायते। "स द्विविधः, परश्चापरश्च"[2] इति वृत्तिकारेणात्मनः परापरभेदेन द्वैविध्यं प्रतिपाद्य पर एवात्मा ईश्वर इति निरूपितम्।

तस्मात् सेश्वरसांख्याभिमतेश्वरे सर्वज्ञत्वसर्वकर्तृत्वादीनामवास्तविकत्वादत्र न सङ्कल्पपूर्वकं स्रष्टृत्वम्, किन्तु लोहसंचालनेऽयस्कान्तमणेरिव सन्निधानमात्रेणैव। तदुक्तं महर्षिणा कपिलेन–"तत्सन्निधानादधिष्ठातृत्वं मणिवत्"[3] इति। विज्ञानभिक्षुणाऽप्युक्तम्–

---

यह ध्यातव्य है कि सेश्वर सांख्यदार्शनिकों के अभीप्सित ईश्वर में नैयायिकों के अभिमत ईश्वर से सर्वथा साम्य नहीं है। सांख्यस्वीकृत ईश्वर नित्यत्व तथा सर्वज्ञत्वादि- गुणों से युक्त मान्य नहीं है। प्रपञ्चकर्तृत्व सामर्थ्य भी सांख्यसम्मत ईश्वर में स्वीकार्य नहीं है। एतन्मतानुसार प्रकृति में प्रतिबिम्बित होने पर पुरुष में सर्ववित्त्व (सर्वज्ञत्व) तथा सर्वकर्तृत्व की अभिमानिता उदित होती है। ईदृश अभिमान से युक्त पुरुष को ही इस मत में ईश्वर कहा जाता है। इसकी सुस्पष्टता वृत्तिकार के वचन से सुविदित होती है- यदि हम- सांख्यों का अभिमत आत्मा, (पुरुष) ईश्वरसंज्ञा से विभूषित होता है तो वह ईश्वर स्वीकार्य है। किन्तु न्यायाभिमत ईश्वर की स्वीकार्यता में कोई प्रमाण प्राप्त नहीं है।

इस प्रकार यह सुविदित होता है कि सांख्य दार्शनिक ईश्वर की जगत्कर्तृता का निषेध करते हैं। इस मत में कर्तृत्व-ज्ञत्व के अभिमानी आत्मा (पुरुष) के ईश्वर स्वीकार का प्रतिषेध नहीं किया जाता है।

वृत्तिकार की यह उक्ति है- "वह पुरुष (आत्मा) दो प्रकार का होता है- १. पर एवं २. अपर।" इसके आधार पर वृत्तिकार का अभिमत सुविदित होता है- पर एवं अपर के भेद से आत्मा दो प्रकार का होता है। इनमें पर आत्मा ईश्वरपदबोध्य होता है।

---

१. सा० सू० अ० वृ० ३।५७.

२. सां० सू० अ० वृ० २।१.

३. सां० सू० १।९६.

निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते।
सत्तामात्रेण देवेन तथा चायं जगज्जनः।।
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम्।
निरिच्छत्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः[४]।।इति।

अत एवात्र–"तदैक्षत बहु स्यां प्रजायेय"[५] इत्यादिश्रुतिस्तु कूलं पिपतिषतीतिवद् गौण्या वृत्त्या प्रवर्तते। तदेतावता पर्यालोचनेनेदमेव ज्ञायते यत् सांख्यदर्शने सेश्वरनिरीश्वरभेदेन द्वौ पन्थानौ वर्तेते। ये चेश्वरं नाङ्गीकुर्वन्ति, ते पुरुषस्य सान्निध्यमात्रेण प्रकृतेः सृष्टिकर्तृत्वादिकं व्यवस्थापयन्ति। ये चेश्वरमङ्गीकुर्वन्ति, ते त्वीश्वरसान्निध्येन प्रधानस्य व्यापारमुपवर्णयन्ति।

---

अतश्च यह सुविदित होता है कि सेश्वरसांख्य के ईश्वर में सर्वज्ञत्व एवं सर्वकर्तृतव का वास्तविकत्व अस्वीकार्य है। इसलिये यहाँ स्वीकार्य ईश्वर में संकल्पपूर्वक स्रष्टृता अभिमत नहीं है। लोहसंचालन में यद्वत् अयस्कान्तमणि सन्निधानमात्र से अनुग्राहक होता है तद्वत् सांख्याभिमत ईश्वर में सन्निधानमात्र से अधिष्ठातृता का अङ्गीकार किया गया है। महर्षि कपिल ने इस सिद्धान्त को अपने सूत्र द्वारा अत्यधिक सुस्पष्ट कर दिया है- पर आत्मा (ईश्वर) में सन्निधानमात्र से प्रकृति की प्रवृत्ति के प्रति अधिष्ठातृता वाञ्छित है यद्वत् लौहसंचालन में बिना संकल्प, सन्धिानमात्र से अयस्कान्तमणि की हेतुता गृहीत होती है।

आचार्य विज्ञानभिक्षु ने भी कहा है- "जैसे इच्छाशून्य रत्न के सन्निधान मात्र से लोहे में खिंचाव अथवा संचालन आरम्भ होता है वैसे ईश्वरपदवाच्य परमात्मा के सन्निधानमात्र से महदादि की उत्पत्ति हेतु प्रकृति की प्रवृत्ति होती है। एतावता सुविदित होता है कि पर आत्मा में इच्छाशून्यता की दृष्टि से अकर्तृता अभीप्सित है तथा सान्निध्यमात्र से प्रवर्तना की दृष्टि से कर्तृताप्रतिपादित की जाती है।।२।।

अतएव इस सिद्धान्त में प्रतिपादित किया जाता है- "तदैक्षत बहुस्यां प्रजायेय" इत्यादि ईक्षणपुरःसर सृष्टिसंकल्पनापरक श्रुति, लक्षणा (गौणी) वृत्ति से कूलं पिपतिषति= नदी तट (बाढ़ के समय) जलधारा में गिरना चाहता है=वाक्य की तरह प्रवृत्त मानी जाती है।

उपर्युक्त सूक्ष्म पर्यालोचन से यह सुविदित होता है कि सांख्यदर्शन में सेश्वर एवं निरीश्वर भेद से दो प्रस्थान विद्यमान हैं। जो आचार्य ईश्वर का अङ्गीकार नहीं

---

४. सां० सू० १।९६ प्रवचनभाष्यम्।
५. छा० उ० ६।२।३.

सेश्वरवादिनामपीश्वरो न्यायदर्शनाभिमतेश्वरवन्न नित्यः, तस्य नित्यत्वे सर्वसम्मत्यभावात्। अतो जन्य इत्येवाङ्गीक्रियते। तदुक्तं विज्ञानभिक्षुणा– "प्रकृतिलीनस्य जन्येश्वरस्य सिद्धिः "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः"[१] इत्यादिश्रुतिभ्यः सर्वसम्मतैव, नित्येश्वरस्यैव विवादास्पदत्वादिर्थः"[२] इति॥ अस्य च सङ्कल्पेन सृष्टिरित्यङ्गीकारे सङ्कल्पप्रयोजकस्य सर्वार्थत्वे ईश्वरत्वहानिः, कारुण्ये सृष्टिवैचित्र्याभाव इति सान्निध्यमात्रेणैव सृष्टिः प्रतिपाद्यते।

तत्र तावद्योगदर्शने समाधिसिद्धिरेव योगिनां चरमं लक्ष्यम्। स च समाधिः कैरुपायैः प्राप्यत इति जिज्ञासायामष्टाङ्गयोगः प्रोक्तः। भाष्यकारस्तत्रैव एवं शङ्कामुद्भावयति–"किमेतस्मादेवासन्नतरः समाधिर्भवति? अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वेति"[३] इति। तदा प्राह पतञ्जलिः–

करते वे पुरुष के सान्निध्यमात्र से प्रकृतिगत सृष्टिकर्तृत्वादि की व्यवस्था का अङ्गीकार करते हैं। जो आचार्य ईश्वर का अङ्गीकार करते हैं वे ईश्वर के सान्निध्य से प्रधान में व्यापार (प्रवृत्ति) का प्रतिपादन करते हैं। सेश्वरसांख्यप्रस्थान में भी ईश्वर, न्यायदर्शनाभिमत ईश्वर की तरह नित्य मान्य नहीं है। क्योंकि ईश्वर के नित्य होने में सर्वसम्मति नहीं है। अत एव ईश्वर, जन्यरूप में ही स्वीकार्य हैं। इस बात को विज्ञानभिक्षु जी ने सुस्पष्ट कहा है-"प्रकृतिलीन जन्य ईश्वर की सिद्धि "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" इत्यादि श्रुतिबल से सर्वसम्मत है। विवाद तो नित्य ईश्वर के सन्दर्भ में ही है।"

इस ईश्वर के संकल्प से सृष्टि होती है- ऐसा स्वीकार करने पर संकल्प का प्रयोजक होने से स्वार्थता आवेगी फलतः ईश्वरत्व की हानि होगी। यदि इनके कारुण्य को प्रवृत्तिप्रयोजक माना जाय तो सृष्टिवैचित्र्याभाव आपतित होगा अतः ईश्वर के सान्निध्यमात्र को सृष्टि का प्रयोजक प्रतिपादित किया गया है।

सांख्यदर्शन का समानतन्त्र योगदर्शन है। इसमें योगिजन का चरम लक्ष्य समाधिसिद्धि को बताया गया है। वह समाधि किन उपायों से प्राप्तव्य है- ऐसी जिज्ञासा होने पर अष्टाङ्गयोग का प्रतिपादन किया गया है। भाष्यकार ने इस सन्दर्भ में शङ्का को उद्भासित किया है- "क्या इस अष्टाङ्ग-योग के अनन्तर ही समाधि प्राप्त होती है? अथवा अष्टाङ्ग- योग के अतिरिक्त अन्य भी कोई उपाय, समाधि

१. मुण्ड० १।१।९.
२. सां० सू० ३।५७ प्र० भाष्यम्।
३. यो० सू० १।२३ अवतरणिकाभाष्यम्।

"ईश्वरप्रणिधानाद्वा"[1] इति। अस्यामर्थः–अत्र प्रणिधानो नाम भक्तिविशेषः। स च फलेप्सारहित्येन क्रियमाणानां कायिक–वाचिकमानसिकक्रियाणामीश्वरार्पणरूपः। तदुक्तं भगवता कृष्णेन–

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्[2]।।इति।

एतादृशभक्तिविशेषेण आवर्जितः प्रसन्नतापूर्वकमभिमुखीकृत ईश्वरोऽभिध्यानमात्रेण इदमस्याभिमतमस्त्विति सङ्कल्पमात्रेणैव तं योगिनमनुगृह्णाति। तदनुग्रहाद् योगिनामतिशीघ्रमेव समाधिफलं कैवल्यं सिद्ध्यतीति।

## ईश्वरस्य लक्षणम्

ननु यस्यानुग्रहेण शीघ्रमेव समाधिसिद्धिर्जायते, तस्येश्वरस्य किं लक्षणमिति जिज्ञासायामुक्तं महर्षिणा पतञ्जलिना–"क्लेशकर्मविपाकाशयैरपरामृष्टः

---

प्राप्ति के लिये अपेक्षित होता है?" इसका समाधान स्वयं पतञ्जलि ने ही किया है- ईश्वर के प्रणिधान से समाधि की प्राप्ति होती है ईश्वर प्रणिधान, अन्य निरपेक्ष होकर समाधि-प्राप्ति का उपाय है। इस सूत्र का स्वारसिक अर्थ है-शक्तिविशेषवाची सूत्रस्थ **प्रणिधान** शब्द है। फलप्राप्ति की इच्छा से रहित होकर क्रियमाण कायिक वाचिक तथा मानस कर्मों का ईश्वरार्पण ही शक्तिविशेष कहलाता है। स्वयं भगवान् श्रीकृष्ण ने इस सिद्धान्त का स्वमुख से उपदेश किया है-

"यत्करोषि.....मदर्पणम्"।।१।।

एतादृश भक्तिविशेष से ईश्वर, आवर्जित (प्रसन्नतापूर्वक अभिमुखीकृत) होते हैं। परिणामस्वरूप वह अभिध्यानमात्र से अर्थात् यह मेरे भक्त का अभिमत है अतः सम्पन्न हो जाय- ऐसे संकल्प (भगवदीय) मात्र से योगी को अनुगृहीत करते हैं। उनके अनुग्रह से योगिजन को अतिशीघ्र समाधिफल कैवल्य की प्राप्ति होती है।

## ईश्वर का लक्षण

जिज्ञासा होती है कि जिसके अनुग्रह से शीघ्र (सद्यः) समाधिसिद्धि होती है, उस ईश्वर का लक्षण (स्वरूप) क्या है? इसका उत्तर महर्षि पतञ्जलि ने स्वयं दिया है- "क्लेशः......ईश्वरः" ईश्वरलक्षण— "पुरुषः ईश्वरः" एतावन्मात्र

---

१. यो० सू० १।२३.
२. भ० गी० ९।२७.

पुरुषविशेष ईश्वरः"[६] इति। अत्र 'पुरुष ईश्वरः' इत्येतावन्मात्रस्य लक्षणत्वे बद्धपुरुषे (जीवे) लक्षणस्यातिव्याप्तिः यदि 'पुरुषविशेष ईश्वरः' इतीश्वरलक्षणं स्यात् तदा यत्किञ्चिद्विशेषधर्मयुक्ते जीवे पुनरतिव्याप्तिः। अतः क्लेशकर्मविपाकाशयैरपरामृष्ट इति विशेषणम्। तथा सति नातिव्याप्तिः, जीवस्वरूपपुरुषाणां क्लेशादिभिर्युक्तत्वात्।

ननु योगनये क्लेशादीनां चित्तधर्मत्वात् पुरुषे तदसंभव इति 'पुरुष'-शब्देनैव चित्तादस्य व्यावृत्तिः संभवतीति 'क्लेशकर्मविपाकाशयैरपरामृष्टः' इति विशेषणं व्यर्थमिति चेन्न, यद्यपि पुरुषेश्वरौ वास्तविकक्लेशादिभिरसम्पृक्तावेव, अथापि योद्धृगतजयपराजयौ यथा स्वामिनि व्यपदिश्येते, तथा बुद्धिगतक्लेशानामविवेकबलेन पुरुषे(जीवे) औपाधिकरूपेण व्यपदेशो भवति। तदेवं क्लेशानां चित्ते वास्तविकरूपेण, पुरुषे औपाधिकरूपेण विद्यमानत्वेऽपीश्वरस्य काल्पनिकरूपेणाप्यपरामृष्टत्वं सूत्रेण सूचितम्।

---

किया जाय तो यह लक्षण, बद्धपुरुष जीव में अतिव्याप्त हो जायेगा। परिणामस्वरूप लक्षण में अतिव्याप्ति नामक दोष आपतित होगा। इस अतिव्याप्ति के निराकरण हेतु "पुरुषविशेष: ईश्वर:" ऐसा ईश्वरलक्षण किया जाय तब भी यत्किञ्चिद् विशेषधर्म से युक्त जीव में लक्षण की अतिव्याप्ति अनिराकृत होगी। अत: विशेषणपद का उपादान किया गया है- "क्लेशकर्म-विपाकाशयैरपरामृष्ट:।" यतश्च जीव (बद्धपुरुष) मात्र क्लेशादि से युक्त है अत: ईश्वर के लक्षण का अतिव्याप्ति-दोष वारित हो जाता है।

सिद्धान्त की दृष्टि से जिज्ञासा उदित होती है- योगसिद्धान्त में क्लेशादि को चित्तधर्म माना गया है न कि पुरुषधर्म। ऐसी स्थिति में पुरुष में क्लेशादि का अस्तित्व सम्भव नहीं है तो पुरुषशब्द से ही क्लेशादि की व्यावृत्ति हो जाती है। एतावता विशेषण पद- "क्लेशकर्मविपाकाशयैरपरामृष्ट:" का वैयर्थ्य है। इसका समाधान यह है- पुरुष एवं ईश्वर वास्तविक रूप से क्लेश कर्मादि से असम्पृक्त होते हैं यद्वत् योद्धा शत्रुसैन्यों के साथ युद्ध में विजयी अथवा पराजित होते हैं किन्तु उक्त जय अथवा पराजय का व्यपदेश स्वामी (राजा) के लिये भी किया जाता है। तद्वत् बुद्धि अर्थात् चित्तधर्म होने पर भी क्लेशादि का व्यपदेश अविवेक होने के कारण जीव के लिये भी औपाधिकरूप से किया जाता है। इस प्रकार निष्कर्ष

---

६. यो० सू० १।२४.

किञ्च, "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष ईश्वरः" इतीश्वरस्य लक्षणत्वे पुनर्मुक्तपुरुषे प्रकृतिलीनपुरुषे वाऽतिव्याप्तिः स्यादिति 'पुरुष-विशेषः' इत्युक्तम्। ते तु केवलिनः पुरुषाः, न तु पुरुषविशेषाः।

अत्रेदमैदम्पर्यम्—योगदर्शने मुक्तपुरुषः, प्रकृतिलीनपुरुषः, पुरुषविशेषश्चेति पुरुषाणां त्रैविध्यमङ्गीकृतम्। तत्राधुना ये मुक्तास्ते पूर्वं बद्धा आसन्, अधुना च ये प्रकृतिलीनाः सन्ति तेषामग्रे बन्धनं भविष्यति, किन्तु यः पुरुषविशेषोऽस्ति, तस्य न पूर्वा बन्धकोटिरासीत्, न चोत्तरा बन्धकोटिः संभाव्यते। तस्मात् स सर्वदा मुक्त इत्यर्थः। अयमेव पुरुषान्तरेभ्योऽस्य विशेषः। तदुक्तं भाष्यकारेण— "कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः। ते हि त्रीणि बन्धनानि च्छित्वा कैवल्यं प्राप्ताः। ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी। यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते, नैवमीश्वरस्य। स तु सदैव मुक्तः सदैवेश्वरः"[1] इति।

---

रूप से विदित होता है- चित्त में वास्तविक रूप से क्लेशादि विद्यमान रहते हैं, पुरुष में ये औपाधिक रूप से विद्यमान रहते हैं किन्तु ईश्वर में काल्पनिक रूप से क्लेशादि अपरामृष्ट हैं- इस तथ्य की सूचना सूत्रद्वारा महर्षि पतञ्जलि ने दी है।

विशेष्यवाचक "पुरुषविशेषः" पद का पदकृत्य क्या होगा- इस जिज्ञासा का समाधान यह है- "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष ईश्वरः" - ऐसा लक्षण यदि किया जाता है तो इसकी अतिव्याप्ति मुक्त पुरुष एवं प्रकृतिलीन पुरुष में होगी अतः उक्त अतिव्याप्ति के निवारणार्थ पुरुषविशेषः- इस विशेष्यवाकच पद का उपादान आवश्यक है। केवली पुरुष को पुरुषविशेष नहीं कहा जा सकता- अतः अतिव्याप्ति निराकृत हो जाती है।

इस सन्दर्भ में निगूढ़ तात्पर्य को सम्यक्तया समझना आवश्यक है।- योगदर्शन में बद्धपुरुष से अतिरिक्त त्रिविध पुरुष अङ्गीकार्य है- १. मुक्तपुरुष, २. प्रकृतिलीन पुरुष एवं ३. पुरुषविशेष। जो सम्प्रति मुक्तपुरुष हैं वे पूर्व में बद्ध थे। जो सम्प्रति प्रकृतिलीन हैं वे आगामी सर्ग में प्राप्तबन्धन होंगे। इन दोनों से व्यतिरिक्त पुरुषविशेष हैं। उनकी पूर्व में बन्धन-कोटि नहीं थी तथा उत्तर में भी बन्धकोटि असम्भावित है। अतः उन दोनों से इनकी व्यतिरिक्तता है। वर्तमान में भी इनका बन्धन-राहित्य है। एतावता पुरुषविशेष की सर्वदा मुक्तिरूपता बनी रहती है। पुरुषान्तर की अपेक्षा इसी विशेष को लेकर इसे पुरुषविशेष शब्द से सम्बोधित किया जाता है। इस तात्पर्य को

---

१. यो० सू० भा० १।२४.

तदेवमीश्वरोऽविद्या-अस्मिता-राग-द्वेष-अभिनिवेशाख्यैः पञ्च[1] क्लेशैः, कृष्ण-शुक्ल-शुक्लकृष्ण-अशुक्लाकृष्णाख्यैश्चतुर्विधकर्मभिः,[2] जात्यायुर्भोगाख्यैस्त्रिविधविपाकैः,[3] कर्मणां विपाकानुगुणवासनाख्येन आशयेन[4] च त्रिकालेऽप्यपरामृष्टः पुरुषविशेष इति सिद्धम्।

अपरश्चायं विशेषो यत् तस्यैश्वर्यम्, साम्यातिशयाभ्यां विनिर्मुक्तमस्ति। यदि ईदृशमैश्वर्यं स्यात्तदा स एवेश्वर इति मन्तव्यम्। तस्माद्यत्रैश्वर्यस्य पराकाष्ठा प्राप्ता स एवेश्वरः। एवं तत्समानमपि कस्यचिदैश्वर्यं नास्ति। सत्त्वे च तुल्ययोर्द्वयोः परस्परविरोधियुगपत्कामितार्थप्राप्तिर्नैव सम्भवति, अभिलषितार्थस्य

---

भगवान् भाष्यकार ने सुस्पष्ट शब्दों में कहा है— पुरुषविशेष का (कैवल्यप्राप्त पुरुष) अर्थ करने से ईश्वर के अतिरिक्त बहुत सारे केवली हैं— जिनका ग्रहण होने लगेगा। किन्तु ये केवली पुरुष तीन प्रकार के बन्धनों का उच्छेद कर प्राप्तकैवल्य हैं। पुरुषविशेष ईश्वर है अन्य नहीं। ईश्वर को वर्तमान की तरह भूतकाल में भी बन्ध नहीं था भविष्यत् में भी बन्ध नहीं होगा। मुक्त पुरुष की पूर्वकालिक बन्धकोटि प्रज्ञात होती है- ईश्वर की नहीं। तद्वत् प्रकृतिलीन की उत्तरकालिक बन्ध कोटि सम्भावित है- ईश्वर की नहीं। ईश्वर तो सदा ही मुक्त है सदा ही ईश्वर है।''

इस प्रकार ईश्वर, पञ्चविध क्लेश- अविद्या, अस्मिता, राग, द्वेष एवं अभिनिवेश से त्रिकालाऽ स्पृष्ट हैं। तद्वत् वह चतुर्विध कर्म- कृष्ण, शुक्ल, शुक्लकृष्ण एवं अशुक्ल-अकृष्ण से त्रिकाल में अपरामृष्ट है। पुनश्च वह त्रिविध विपाक- जाति, आयु एवं भोग से त्रिकाल में असम्बद्ध है। तद्वत् वह आशय अर्थात् कृतकर्मों के विपाक के अनुगुण वासना से भी त्रिकाल में अपरामृष्ट है। तादृश पुरुषविशेष पुरुषान्तर से विलक्षण हैं एवं ईश्वर-पदवेदनीय है। यह निष्कर्ष प्राप्त होता है। ईश्वर का अनितर-साधारण यह वैशिष्ट्य भी है- इनका ऐश्वर्य साम्यवर्जित तथा अतिशयवर्जित है। यह वैशिष्ट्य (विशेष) जिस पुरुष में विद्यमान है वह ईश्वरपदवेदनीय है। ऐसा मानना चाहिये। अत: जिस पुरुष में ऐश्वर्य की पराकाष्ठा प्राप्त होती है वह पुरुष ही ईश्वर है। तद्वत् ईश्वर के समान ऐश्वर्य किसी अन्य का नहीं है। यदि ऐश्वर्य-साम्य अन्यत्र भी हो तो तुल्य दो के रहते एक समय

---

१. यो० सू० भा० २।३.
२. यो० सू० भा० ४।७ द्रष्टव्यम्।
३. यो० सू० २।१३.
४. यो० सू० २।१२.

विरुद्धत्वात्। तस्माद् यस्य साम्यातिशयैर्विनिर्मुक्तमैश्वर्यं स एवेश्वरः। तदुक्तं भाष्यकारेण–"तस्माद्यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वरः। न च तत्समान-मैश्वर्यमस्ति। कस्मात्? द्वयोस्तुल्ययोरेकस्मिन् युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्वित्येकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तम्। द्वयोश्च तुल्ययोर्युग-पत्कामितार्थप्राप्तिर्नास्ति, अर्थस्य विरुद्धत्वात्। तस्माद्यस्य साम्यातिशयैर्विनिर्मुक्तमैश्वर्यं स एवेश्वरः। स च पुरुषविशेष इति"[१] इति

## ईश्वरसत्त्वे प्रमाणम्

भगवान् पतञ्जलिः– "तत्र निरतिशयं सर्वज्ञबीजम्"[२] इति सूत्रेणेश्वरे ज्ञानस्यापि परां काष्ठां प्रतिपादितवान्। भाष्यकारोऽपि–"अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य, सातिशयत्वात्, परिमाणवत्"[३] इतीश्वरस्य सर्वज्ञत्वेऽनुमानं

---

में परस्पर विरुद्ध अर्थों का युगपत् अवस्थान असम्भव होता है। यदि तुल्य दो की समान कामना प्रतिनियत होगी तो दो का अभ्युपगम व्यर्थ ही होगा। अत: यह निर्दुष्ट ईश्वर-लक्षण है– जिसका ऐश्वर्य साम्य एवं अतिशय से वर्जित हो वह ईश्वर है। इसका विशद प्रतिपादन भाष्यकारने किया है- "अन्यविध परिभाषा होने पर लक्षण निर्दुष्ट नहीं हो पायेगा अत: जिस पुरुष में पराकाष्ठा का ऐश्र्वय हो वह पुरुषविशेष ईश्वर कहलाता है। उनके समान ऐश्वर्य अन्यत्र कहीं भी नहीं होता। ऐसा क्यों? दो को तुल्यैश्वर्य मानने पर एक के द्वारा समान काल में कामना होगी। (यह नव हो) तथा दूसरे की कामना होगी (यह पुराण हो) ऐसी स्थिति में किसी एक की कामनासिद्धि होने से दूसरे की कामनापूर्ति (विरुद्ध होने से) नहीं होगी तो उनका प्राकाम्यविघात होगा परिणामस्वरूप वह प्रथम से न्यून हो जायेंगे- समान नहीं हो सकेंगे। यदि दोनों की तुल्यता होगी तो युगपत् विरुद्ध कामितार्थों की प्राप्ति नहीं होगी क्योंकि कामितार्थों का परस्पर विरोध है। अत: जिस पुरुषविशेष का ऐश्वर्य साम्य एवं अतिशय से वर्जित हो वही ईश्वर है। वह पुरुषविशेष है।"

## ईश्वर की सत्ता में प्रमाण

भगवान् पतञ्जलि ने "तत्र निरतिशयं सर्वज्ञबीजम्" इस सूत्र से ईश्वर में ज्ञान की भी पराकाष्ठा को प्रतिपादित किया है। भाष्यकार ने भी तदनुरूप अनुमान-प्रमाण से ईश्वर की सर्वज्ञता (पराकाष्ठा) प्रतिपादित की है- "अस्ति काष्ठा प्राप्तिः सर्वज्ञ-

---

१. यो० सू० भा० १।२४.
२. यो० सू० १।२५.
३. यो० सू० भा० १।२५.

प्रदर्शितवान्। अत्रायं भावः—यथा सर्षपचणकामलकविल्वेषु पूर्वपूर्वापेक्षयोत्तरोत्तरेषु महत्परिमाणत्वम्, उत्तरोत्तरापेक्षया च पूर्वपूर्वेष्वणु-परिमाणत्वमिति दृष्टमेतेषु सातिशयत्वम्। अत एव परमाणुष्वणुत्वस्य, आकाशे महत्परिमाणत्वस्य च काष्ठाप्राप्तिर्वरीवर्ति। तथा कीट-पतङ्ग-पशुपक्षि-दानव-मनुष्य-मुनि-ज्ञानि-योग-देवादिषु यद् ज्ञानं वर्तते, तदपि पूर्वपूर्वापेक्षयोत्तरोत्तरवर्गेष्वाधिक्येन, उत्तरोत्तरापेक्षया पूर्वपूर्ववर्गेषु न्यूनत्वेन च विद्यत इति दृष्टमस्य सातिशयत्वम्। सातिशयस्यास्य कुत्रापि निरतिशयत्वेनावश्यं स्थितिर्भाव्या। अतो यत्र सर्वदा ज्ञानस्य पराकाष्ठा, अर्थाद् निरतिशयत्वम्, स एव पुरुषविशेष ईश्वर इति सिद्धमनेनानुमानेनेश्वरस्य सर्वज्ञत्वम्। श्रीवाचस्पतिमिश्रमहाभागाः—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य[१]।।
ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः।
स्त्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च।।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे[१]।

---

बीजस्य, सातिशयत्वात्, परिमाणवत्।'' इसका सुविशद आशय यह है- सरसों, चना, आँवला तथा बिल्वफल- इनमें पूर्व-पूर्व की अपेक्षया उत्तरोत्तर में महत् परिमाण होते हैं तद्वत् उत्तरोत्तर की अपेक्षया पूर्व-पूर्व में अणु-परिमाण होते हैं- यह सातिशयता पूर्वोक्तवस्तुगत परिमाणों में दृष्ट होती है। अतएव यथा परमाणुओं में अणुत्व की काष्ठाप्राप्ति विद्यमान है। तद्वत् आकाश में महत्परिमाणत्व की काष्ठाप्राप्ति विद्यमान है। तुल्यन्याय से कीट, पतंग, पशु, पक्षी, दानव, मनुष्य, मुनि, ज्ञानी, योगी एवं देवों में जो ज्ञान विद्यमान है वह पूर्व-पूर्व की अपेक्षा से उत्तरोत्तर वर्ग में अतिशयित है तथा उत्तरोत्तर की अपेक्षा से पूर्व-पूर्व वर्ग में क्रमशः न्यून है- यह सातिशयता कहलाती है। सातिशयज्ञान की निरतिशयता से कहीं न कहीं पर स्थिति आवश्यक है। अतः जहाँ सर्वदा ज्ञान की पराकाष्ठा अर्थात् निरतिशयता है वह पुरुषविशेष ईश्वर है। उपर्युक्त अनुमान से ईश्वर की सर्वज्ञता सिद्ध होती है। श्री वाचस्पतिमिश्र महानुभाव ने वायुपुराणोक्त दो प्रमाण-वचनों से ईश्वर के सर्वज्ञता-प्रभृति छह अङ्ग एवं ज्ञान-प्रभृति दश अव्यय-गुणों को प्रतिपादित किया है—सर्वज्ञता तृप्तिः.........महेश्वरस्य ॥१॥ एवं ज्ञानं वैराग्यमैश्वर्यम् .......... तिष्ठन्ति शङ्करे॥२॥

---

१. वायुपु० १२।३१.   १. वायुपु० १०।६०.

इति वायुपुराणोक्तप्रमाणाभ्यामीश्वरस्य सर्वज्ञत्वाद्यनन्तगुणगणसमन्वितत्वं प्रतिपादयामासुः[१]।

नन्वेतादृशगुणसमन्विता ब्रह्मादिदेवा अङ्गिरादिऋषयो वा स्युरित्याक्षेपे प्राह भगवान् पतञ्जलिः–"पूर्वेषामपि गुरुः कालेनानवच्छेदात्"[२] इति। अस्यायमर्थः–ब्रह्मादयो देवाः, अङ्गिरादिऋषयश्च प्रतिसर्गमुत्पद्यन्ते, प्रलये च विनश्यन्ति, अत एते कालावच्छिन्नाः। ईश्वरस्तु सदा सर्वदा वर्तत इति स न कालावच्छिन्नः। तस्मादीश्वरः सर्गादौ ब्रह्माणमुत्पाद्य तस्मै वेदान् प्रहिणोतीति श्रूयते। तथाहि–

**यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।**
**तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये[३]।।इति।**

भोजदेवोऽपि–"आद्यानां स्रष्टृणां ब्रह्मादीनामपि स गुरु उपदेष्टा, यतः स कालेन नावच्छिद्यते, अनादित्वात्"[४] इतीश्वरस्यानादित्वात् स एव पूर्वेषां

---

इन द्विविध प्रमाण-वचनों का अर्थ सुस्पष्ट है।

यहाँ एक आक्षेप उपस्थित होता है- उपर्युक्त गुणों से समन्वित ब्रह्मादि देव अथवा अङ्गिराप्रभृति ऋषि हो सकते हैं। इस आक्षेप का समाधान भगवान् पतञ्जलि ने किया है- "पूर्वेषामपि......अनवच्छेदात्।"

इसका सुविशद आशय है- ब्रह्मादि देव एवं अङ्गिराप्रभृति ऋषिगण प्रत्येक सर्ग में उत्पन्न होते हैं तथा प्रलय में विनष्ट होते हैं अत: ये काल से परिच्छिन्न होते हैं। ईश्वर की उत्पत्ति नहीं होती तथा उनका विनाश भी नहीं होता। वह सदा सर्वदा विद्यमान रहते हैं अत: कालावच्छेदवर्जित हैं। इसलिये यह श्रुतिश्रुत है- ईश्वर, सर्ग की आदि में ब्रह्मा को उत्पन्न करने के पश्चात् उन्हें वेद का ज्ञान कराते हैं-

"यो ब्रह्माणं...........शरणमहं प्रपद्ये।।१।।"

इस उपनिषद्वचन का अर्थ सुस्पष्ट है।

भोजदेव ने भी योगसूत्र-भोजवृत्ति में प्रतिपादित किया है- आद्य स्रष्टा ब्रह्मादि के भी वह ईश्वर गुरु हैं (उपदेशक हैं) क्योंकि ईश्वर, काल के अवच्छेदन से

---

१. यो० सू० तत्त्ववै० १।२५.
२. यो० सू० १।२६.
३. श्वे० उ० ६।१८.
४. यो० सू० भो० वृ० १।२६.

गुरुरिति प्रतिपादयामास।

यथा सास्नादिमत्पशुविशेषस्य गोशब्देन व्यवहारो भवति, तथा सर्वज्ञत्वादिधर्मविशिष्टस्य पुरुषविशेषस्य प्रणवशब्देन (ॐकारेण) व्यवहारो भवति। तदुक्तं महर्षिणा–"तस्य वाचकः प्रणवः"[1] इति। "प्रकर्षेण"[2] नूयते स्तूयतेऽनेनेति, नौति स्तौतीति वा प्रणव ॐकारः"[3] इति भोजदेवोक्तव्युत्पत्त्या ॐकारेणैवास्य विशिष्टा स्तुतिर्जायते। अत एव भगवान् पतञ्जलिः– "तज्जपस्तदर्थभावनम्"[4] इति समाधिसिद्धये योगिना प्रणवो जप्यः, तदर्थ ईश्वरश्च भावनीय इत्युक्तवान्। स्मर्यते च–

---

उत्तीर्ण हैं। इसमें हेतु है ईश्वर का अनादि होना अर्थात् अजन्मा होना। एतावता सुस्पष्ट है- ईश्वर अनादि हैं वह मेरे गुरु के तथा पूर्व-पूर्व गुरुओं के भी गुरु हैं- क्योंकि उनके अतिरिक्त गुरु सजन्मा हैं।

यद्वत् सास्नादि से युक्त पशुविशेष का गोशब्द से व्यवहार होता है तद्वत् सर्वज्ञत्वादि धर्म से विशिष्ट पुरुषविशेष का प्रणव (ॐकार) शब्द से व्यवहार होता है। अतः महर्षि पतञ्जलि ने सूत्रित किया है- "तस्य वाचकः प्रणवः।" ईश्वर का वाचक प्रणव है। प्रकर्षेण नूयते=स्तूयते अनेन इस करणव्युत्पत्ति से तथा प्रकर्षेण नौति=स्तौति इस कर्तृव्युत्पत्ति से प्रणवशब्द की निष्पत्ति होती है। प्रणव का अर्थ है ॐकार। भोजदेव-प्रोक्त इस व्युत्पत्ति से ॐकार=प्रणव से ही ईश्वर की विशिष्ट स्तुति सम्पादित होती है। अत एव भगवान् पतञ्जलि ने कहा है- "तज्जपस्तदर्थभावनम्" इस सूत्र द्वारा उन्होंने स्पष्ट रूप से प्रतिपादित किया है- समाधिसिद्धि हेतु योगी को प्रणव का जप करना चाहिये एतदर्थं ईश्वर की भावना भी करनी चाहिये। स्मृति में भी प्रतिपादित किया गया है- देव=ईश्वर का विग्रह

---

१. यो० सू० १।२७.

२. प्रपूर्वकात् "णू स्तवने" (तुदा० १४८९) इत्यस्माद्धातोः 'ऋदोरप्' (पा० सू० ३।३।५७) इति सूत्रेण अप्प्रत्यये, "सार्वधातुकार्धधातुकयोः" (पा० सू० ७।३।८४) इति सूत्रेण गुणे, "एचोऽयवायावः (पा० सू० ६।१।७८) इति सूत्रेणावादेशे, "उपसर्गादसमासेऽपि णोपदेशस्य" (पा० सू० ८।४।१४) इति सूत्रेण णत्वे, "कृत्तद्धितसमासाश्च" (पा० सू० १।२।४६) इति सूत्रेण प्रातिपदिकसंज्ञायाम्, 'सौ' अनुबन्धलोपे रुत्वे विसर्गे च 'प्रणवः' इति रूपं सिद्ध्यति।

३. यो० सू० भो० वृ० १।२७.

४. यो० सू० १।२८.

**अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।**
**तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति।।इति।**

अत्र 'अवतीति ओम्' इति व्युत्पत्त्या ईश्वर एव प्राणिमात्रस्य परिरक्षक इति तस्यान्वर्थकं नामधेयम् ॐ इति। प्रणव ईश्वरस्य वाचकः, स च वाच्यः। अनयोः सम्बन्धश्च योगदर्शने प्रवाहरूपेण नित्य इत्यङ्गीक्रियते।

अत्र प्रकृतेर्जडत्वात् पुरुषस्य चोदासीनत्वात् सृष्टिसंहारकारणभूतौ तयोः संयोगवियोगौ स्वतो नोत्पद्येते। अतस्तयोर्भिन्नः सर्वज्ञत्वादिगुणगणयुक्तः पुरुषविशेष ईश्वरोऽङ्गीकृतः। अस्यैव सङ्कल्पेन प्रकृतिपुरुषयोः संयोगवियोगौ संभवतः। तदुक्तं भोजदेवेन–"प्रकृतिपुरुषसंयोगवियोगयोरीश्वरेच्छा-व्यतिरेकेणानुपपत्तेः"[१] इति। उक्तं चान्यत्र–

**प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।**
**क्षोभयाभास सम्प्राप्ते सर्गकाले व्ययाव्ययौ।।इति।**

---

अदृष्ट है वह भावग्राह्य हैं अत एव मनोमय हैं। ओङ्कार=प्रणव ही उनका नाम है। वह ओंकार नाम से आहूत होने पर प्रसन्न होते हैं।।२।।

यहाँ प्रणवपर्याय ओम् की व्युत्पत्ति है "अवति इति ओम्।" अवति=रक्षति, व्युत्पत्ति के बल पर सुस्पष्ट विदित होता है कि ईश्वर ही प्राणिमात्र के रक्षक हैं अतः उनका अन्वर्थ नाम है- ॐ=प्रणव। प्रणव ईश्वर का वाचक है तथा प्रणव के वाच्यार्थ हैं- ईश्वर। इन दोनों के मध्य जो सम्बन्ध है वह प्रवाहरूप से नित्य है- ऐसा योगदर्शन में स्वीकार किया जाता है।

यतश्च योगदर्शन में सिद्धान्ततः प्रकृति में जडता एवं पुरुष में उदासीनता रहती है अतः सृष्टि के प्रति इन दोनों के संयोग तथा संहार के प्रति इन दोनों के वियोग को जो कारण माना गया है- ये संयोग एवं वियोग स्वतः उत्पन्न नहीं हो सकते। अतः इन दोनों से भिन्न सर्वज्ञत्वादि-गुणों से युक्त पुरुषविशेष=ईश्वर को योगदर्शन में स्वीकार किया गया है। इस ईश्वर के संकल्प से ही प्रकृति एवं पुरुष के मध्य संयोग एवं वियोग सुघटित होते हैं। इस बात को भोजदेव ने सुस्पष्ट कहा है- प्रकृति एवं पुरुष के मध्य संयोग तथा वियोग, ईश्वरेच्छा के बिना उत्पन्न नहीं होते। अन्यत्र भी कहा गया है- परिणामी प्रकृति एवं अपरिणामी पुरुष में स्वेच्छा से प्रविष्ट होकर श्रीहरि, सर्गकाल प्राप्त होने पर क्षोभ उत्पन्न करते हैं।।१।।

---

१. यो० सू० भो० वृ० १।२४.

## ईश्वरस्य वैषम्यनैर्घृण्यदोषाभावः

ननु नित्यतृप्तोऽयमीश्वरः किंनिमित्तं सृष्ट्यादिषु प्रवर्तत इति जिज्ञासायां योगदर्शनेऽपीश्वरस्य स्वतः प्रयोजनाभावाद् भूतानुग्रह एव प्रयोजनमित्यङ्गीकृतम्। तदुक्तं भाष्यकारेण–"तस्य आत्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्, ज्ञानधर्मोपदेशेन कल्प–प्रलय–महाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति"[1] इति।

किञ्च, जगति दृश्यमानं वैषम्यं दृष्ट्वा ईश्वरे वैषम्यदृष्टिः, अकारुण्यं वा नारोपयितुं शक्यते, जीवानामदृष्टस्य तत्र कारणत्वात्। तदुक्तं श्रीवाचस्पतिमिश्रैः–"शब्दाद्युपभोगविवेकख्यातिरूपकार्यकरणात् किल चरितार्थं चित्तं निवर्तते। ततः पुरुषः केवलो भवति। अतस्तत्प्रयोजनाय कारुणिको विवेकख्यात्युपायं कथयति। तेनाचरितार्थत्वाच्चित्तस्य जन्तूनामीश्वरः पुण्यापुण्यसहायः सुखदुःखे भावयन्नपि नाकारुणिकः"[2] इति।

---

## ईश्वर में विषमता अथवा निर्दयता का अभाव

यह जिज्ञासा उदित होती है— ईश्वर नित्यतृप्त हैं ऐसी स्थिति में वह किस उद्देश्य से सृष्टि अथवा संहार में प्रवृत्त होते हैं? इसका समाधान यह है- योगदर्शन में भी ईश्वर का स्वतः कोई भी प्रयोजन नहीं है, प्राणियों के ऊपर अनुग्रह करना ही एक मात्र प्रयोजन है अन्य नहीं। ऐसा भाष्यकार ने सुस्पष्ट कहा है- ईश्वर को आत्मानुग्रह नहीं कर्तव्य है ऐसी स्थिति में केवल भूतानुग्रह ही प्रयोजन है। अनुग्रह का क्या स्वरूप है? इसे बताने हेतु आगमी वाक्य है- ज्ञान-धर्मोपदेश द्वारा कल्प के प्रलय एवं महाप्रलयों में संसारी पुरुषों का उद्धार करूँगा।।१।।

अपरं च - जगत् में उपलब्ध वैषम्य को देखकर ईश्वर में वैषम्यदृष्टि अथवा निर्दयता=अकारुण्य का आरोप नहीं किया जा सकता क्योंकि वैषम्य के प्रति जीवों का अदृष्ट ही कारण है। इस बात को श्री वाचस्पतिमिश्र ने सुस्पष्ट प्रतिपादित किया है- शब्दादि का उपभोग एवं विवेकख्याति स्वरूप कार्यों के सम्पादन द्वारा चरितार्थ हुआ चित्त, संसार से निवृत्त होता है। तदनन्तर पुरुष केवली = कैवल्ययुक्त होता है। अतश्च पुरुष के भोगापवर्ग की सिद्धि हेतु कारुणिक ईश्वर विवेकख्याति के उपाय का उपदेश करते हैं। जब तक चित्त चरितार्थ नहीं हो जाता तब तक ईश्वर, जन्तु के पुण्य एवं अपुण्य को पुरस्कृत कर सुख-दुःखों का अनुभावन करने मात्र से अकारुणिक शब्द से लाञ्छित नहीं किये जा सकते।

---

१. यो० सू० भा० १।२५.

२. यो० सू० तत्त्ववै० १।२५.

वैषम्यं तावद् रागद्वेषाभ्यामेव भवति, न तु प्रवृत्तिमात्रेण। ईश्वरे च तयोरभावान्न वैषम्यनैर्घृण्यदोषप्रसक्तिः। तदेतावता पर्यालोचनेनेदमेव ज्ञायते यद् योगदर्शने भगवान् पतञ्जलिर्जगतः सृष्टि-स्थिति-संहारार्थमीश्वर आवश्यक इति स्पष्टं नोक्तवान्। "समाधिसिद्धिरीश्वरप्राणिधानात्"[३] इति तदुक्तसूत्रेण तद्दृष्ट्या ईश्वरो योगिनां शीघ्रतरसमाधिलाभायाऽनुग्राहक इति ज्ञायते। भाष्यकारवृत्तिकारादयस्तु ईश्वरं सृष्टिसंहारयोः कारणीभूतयोः प्रकृतिपुरुषयोः संयोगवियोगयोर्नियामकमङ्गीकुर्वन्ति। सेश्वरसांख्यैरीश्वरस्याङ्गीकृतत्वेऽपि तदभिमत ईश्वरो न नित्यसर्वज्ञत्व-सर्वकर्तृत्वादिसामर्थ्यवान्, किन्त्वौपाधिकसर्वज्ञत्वादियुक्तः। तथा च स नेक्षणपूर्वकं जगत् सृजति, किन्तु तत्सन्निधिमात्रेणैव तद् भवति। योगदर्शनाभिमत ईश्वरस्तु नित्यसर्वज्ञत्वादिगुणयुक्तः, तदिच्छया च प्रकृतिपुरुषयोः संयोगवियोगौ भवत इति सेश्वरसांख्याभिमतेश्वरापेक्षया उत्कृष्टः प्रतिभाति।

---

राग एवं द्वेष से ही विषमता होती है- प्रवृत्तिमात्र से नहीं। यतश्च ईश्वर में राग एवं द्वेष नहीं हैं अतः उनमें वैषम्य अथवा अकारुण्य दोष प्राप्त नहीं होते। इस प्रकार के पर्यालोचन से यह सुविदित होता है कि योगदर्शन में भगवान् पतञ्जलि ने यह बात स्पष्ट रूप से नहीं बतायी है कि सृष्टि, स्थिति एवं संहार हेतु ईश्वर आवश्यक है। ईश्वरप्रणिधान से समाधि-सिद्धि होती है- इस पातञ्जल-सूत्र से यह विदित होता है- पतञ्जलि की दृष्टि से ईश्वर, योगियों के शीघ्रतर समाधि लाभ में अनुग्रह विधान करते हैं। भाष्यकार तथा वृत्तिकार प्रभृति आचार्यों ने तो ईश्वर को सृष्टि-संहार के कारणीभूत प्रकृति-पुरुष के संयोग-वियोगों का नियामक मानते हैं।

सेश्वर सांख्य के आचार्य, ईश्वर का अङ्गीकार करने पर भी स्वाभिमत ईश्वर में नित्यसर्वज्ञत्व अथवा सर्वकर्तृत्वादि सामर्थ्य को नहीं मानते हैं। तदभिमत ईश्वर में सर्वज्ञत्वादि, स्वाभाविक नहीं प्रत्युत औपाधिक है। अतः सांख्याभिमत ईश्वर, ईक्षण=संकल्प के साथ जगत् की सृष्टि नहीं करते। ईश्वरसन्निधानमात्र से जगत् की सृष्टि होती है। किन्तु योगदर्शनाभिमत ईश्वर, सर्वज्ञत्वादि गुणों से नित्ययुक्त है तथा ईश्वरेच्छा से ही प्रकृति एवं पुरुष के संयोग अथवा वियोग होते हैं अतः सेश्वर सांख्यों की अपेक्षा योगाचार्यों के अभिमत ईश्वर में उत्कर्ष प्राप्त होता है।

---

३. यो० सू० २।४५.

## ईश्वरविषये मीमांसकमतम्

न्याय-वैशेषिक-योगदर्शनेष्वीश्वरसाधनायोपन्यस्तं हेतुद्वयं समानमेव दृश्यते-तत्र प्रथमं सृष्टिप्रलयसमर्थनम्, द्वितीयं वेदप्रामाण्यसमर्थनं चेति। पातञ्जलदर्शने च पूर्वोक्तयोः प्रयोजनयोरतिरिक्तं समाधिसाधनायापीश्वरानुग्रहोऽपेक्ष्यत इति प्रतिपादितम्। मीमांसादर्शने तु निष्प्रमाणक ईश्वरो निष्प्रयोजनश्चेत्यापाततः प्रतीयते। लोकप्रसिद्धिरप्यमुमेवार्थं द्रढयति।

तत्र सूत्रकृता जैमिनिना, भाष्यकारेण शबरस्वामिना चेश्वरविषये स्पष्टरूपेण न किमप्यवोचि। अत एव श्रीहर्षमिश्रो भीमसुतायाः स्वयंवरमण्डपे सरस्वत्या मुखेन काञ्चीनरेशस्य गुणवर्णनं श्रुत्वा दमयन्ती ईश्वरविषये मीमांसाशास्त्रमिव किमप्यनुक्त्वाऽग्रे ससर्पेति सदृष्टान्तं प्रतिपाद्येश्वरविषये मीमांसाचार्याणामौदासीन्यं सूचयामास। तथाहि-

**वेदैर्वचोभिरखिलैः कृतकीर्तिरत्ने हेतुं विनैव धृतनित्यपरार्थयत्ने।**
**मीमांसयेव भगवत्यमृतांशुमौलौ तस्मिन् महीभुजि तयानुमतिर्न भेजे।।**[1] इति।

---

## ईश्वर के विषय में मीमांसकों का मत

न्याय, वैशेषिक एवं योग दर्शनों में ईश्वरसिद्धि-हेतु उपन्यस्त दो हेतुओं में समानता उपलब्ध होती है। उनमें प्रथम है- सृष्टि-प्रलयों का समर्थन तथा द्वितीय हेतु है- वेदप्रामाण्य का समर्थन। पातञ्जलदर्शन में उपर्युक्त दो प्रयोजनों के अतिरिक्त समाधिसिद्धि में भी ईश्वरानुग्रह की अपेक्षा प्रतिपादित की गई है। मीमांसादर्शन में आपाततः यह प्रतीति होती है- ईश्वर में कोई प्रमाण नहीं है तथा ईश्वर का कोई प्रयोजन भी नहीं है। लोकसिद्धि से भी इसी अर्थ की पुष्टि होती है।

मीमांसकों में सूत्रकार जैमिनि तथा भाष्यकार शबरस्वामी ने ईश्वर के विषय में स्पष्टरूप से कुछ भी नहीं कहा है। अत एव श्रीहर्षमिश्र ने ईश्वर के विषय में मीमांसाचार्यों के औदासीन्य को सूचित किया है। नैषधीयचरित में भीमसुता के स्वयंवर-मण्डप में सरस्वती के मुख से काञ्चीनरेश के किये गये गुणवर्णन को सुनकर दपयन्ती ने कुछ भी नहीं कहा और वह आगे बढ़ गयी- इसमें दृष्टान्तरूप से उन्होंने यह बताया- ईश्वर के सम्बन्ध में उदासीन रहकर मीमांसाक कुछ भी बताये बिना अपने प्रतिपाद्य की ओर अग्रसर हो गये हैं। उक्त श्लोक है- "वेदैर्वचोभिरखिलै;..... नभेजे॥१॥

---

१. नै० च० ११।६४.

किञ्च, कुमाररिलभट्टपार्थसारथिमिश्रादिभिर्नैयायिकाभिमतेश्वरस्य खण्डनमवलोक्य तदुपजीष्येषु जैमिनिसूत्रेषु परमेश्वरनिरासबीजानि निगूहितानीत्यूह्यते। तथाहि भगवान् जैमिनिः "चोदनालक्षणोऽर्थो धर्मः"[२] इति धर्मलक्षणं प्रोवाच। अत्र–

प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः।
सा चोदनेति सामान्यं लक्षणं हृदये स्थितम्[३]।।

इति कुमारिलभट्टपादोक्त्या प्रवर्तकं निवर्तकं च वाक्यं चोदनाशब्दार्थः। प्रकृते चोदनासूत्रे चोदनैव लक्षणं प्रमाणं यस्मिन्नित्यन्ययोगव्यावृत्तिरूपैका प्रतिज्ञा, चोदना लक्षणं प्रमाणमेव यस्मिन्नित्ययोगव्यावृत्तिरूपा च द्वितीया प्रतिज्ञाऽभिप्रेता[४]। तस्मादीश्वराङ्गीकारे तस्य सर्वज्ञत्वमप्यभ्युपेयम्। तथा सति धर्मस्यापीश्वरीयज्ञानविषयत्वापत्तिः। तदङ्गीकारे धर्मस्य चोदनैकगम्यत्वं

---

समस्त वेदवचन जिनके यशोगान में व्यापृत हैं जो बिना किसी स्वार्थ से परार्थ प्रयत्नशील रहते हैं तादृश चन्द्रमौलि परमेश्वर के प्रति जैसे मीमांसा उदासीन रहती है उसी प्रकार काञ्चीनरेश के गुणों का सरस्वतीमुख से श्रवण करने पर भी दमयन्ती उदासीन रहकर कुछ भी बोले बिना आगे बढ़ गयी।

यह भी ध्यातव्य है कि कुमारिलभट्ट, पार्थसारथि मिश्र आदि मीमांसकों ने नैयायिकाभिमत ईश्वर का खण्डन किया है। उसे देखकर उपजीवकों के उपजीव्यस्वरूप जैमिनिसूत्रों में परमेश्वरनिरास के बीज निगूढ़ होंगे ऐसा ऊह किया जाता है। तथा हि भगवान् जैमिनि ने "चोदनालक्षणोऽर्थो धर्मः" इस सूत्र पर आधारित धर्मलक्षण को प्रतिपादित किया है। यहाँ कुमारिलभट्टपाद का निम्नाङ्कित वचन प्राप्त होता है-

प्रवृत्तौ वा निवृत्तौ वा .......... लक्षणं हृदये स्थितम् ॥१॥

तदनुसार चोदना=नोदना शब्द का अर्थ है प्रवर्तकवाक्य अथवा निवर्तकवाक्य। प्रकृत सूत्र में दो प्रकार की व्युत्पत्ति उपलब्ध होती है- (१) "चोदना एव लक्षणं=प्रमाणं यस्मिन्"- इस व्युत्पत्ति के आधार पर अन्ययोग की व्यावृत्तिस्वरूप एक प्रतिज्ञा की जाती है। (२) "चोदना लक्षणं प्रमाणमेव यस्मिन्"- इस व्युत्पत्ति के आधार पर अयोग्य की व्यावृत्तिस्वरूप दूसरी प्रतिज्ञा की जाती है। अतः ईश्वर के स्वीकार में उनकी सर्वज्ञता भी स्वीकार्य होनी चाहिये। यदि सर्वज्ञता स्वीकार

---

२. मी० सू० १।१।२.
३. श्लो० वा०, पृ० ८२.
४. श्लो० वा० न्यायरत्नाकरे, पृ० ३४

व्याहन्यते, धर्मस्येश्वरीयज्ञानाविषयत्वे च तस्य सर्वज्ञत्वहानिरित्युभयतः पाशारज्जुः। अतोऽत्र सूत्र ईश्वरनिराकरणबीजं निगूहितमिति तर्क्यते। एवमेव वेदापौरुषेयत्वाधिकरणे वेदकर्तृत्वेनाभिमतेश्वरस्य, अपूर्वाधिकरणे चापूर्वद्वारेणैव यागादेः कर्मणः फलजनकत्वस्य व्यवस्थापितत्वात् कर्मफलदातुरीश्वरस्य च निरासोऽप्यभ्यूह्यः।

न्यायवैशेषिकाभिमतेश्वरं खण्डयतां मीमांसकानामयमाशयः—मीमांसादर्शने "न कदाचिदनीदृशं जगत्" इति न्यायात्, महासृष्टौ महाप्रलये च प्रमाणाभावान्महासृष्टिमहाप्रलयावध्वरमीमांसकैर्नाङ्गीक्रियेते। तदुक्तं श्रीमता कुमारिलभट्टेन—

तस्मादद्यवदेवाऽत्र सर्गप्रलयकल्पना।
समस्तक्षयजन्मभ्यां न सिद्ध्यत्यप्रमाणिका[1]।।इति।

तस्मान्महासृष्टिमहाप्रलययोरनभ्युपगमेन तदर्थमीश्वर आवश्यक इति

---

कर ली जाती है तो ऐसी स्थिति में धर्म भी ईश्वरीयज्ञान का विषय बन जायगा। जैसे ही हम धर्म को ईश्वरीयज्ञान का विषय मानते हैं वैसे ही धर्म के सन्दर्भ में "चोदनैकगम्यता" का सिद्धान्त व्याहत हो जाता है। इस आरोप से बचने के लिये यदि धर्म को ईश्वरीयज्ञान का अविषय मानते हैं तो उनके सर्वज्ञत्व की हानि होती है- ऐसी स्थिति में दोनों ही स्थितियों में "उभयतःपाशा रज्जुः" के बन्धन से मुक्ति नहीं मिलती है। अतः ऐसा तर्क किया जाता है कि जैमिनि सूत्र (धर्मलक्षणप्रतिपादक) में ईश्वरनिराकरण के बीज का निगूढ़ होना आवश्यक है। इसी प्रकार वेदापैरुषेयत्वाधिकरण में वेदकर्तृत्वेन नैयायिकादि-दार्शनिकों द्वारा अभिमत ईश्वर के निरास का भी कोई बीज निगूढ़ है- ऐसा माना जाना चाहिये। तद्वत् अपूर्वाधिकरण में अपूर्वद्वारा यागादिकर्म में फलजनकता को व्यवस्थापित किये जाने से भी कर्मफल के प्रदाता ईश्वर के निरास का बीज निगूढ़ रूप से मान्य होना चाहिये।

न्याय-वैशेषिक सम्मत ईश्वर के खण्डनकर्ता मीमांसकों का आशय यह है- मीमांसादर्शन में "न कदाचिदनीदृशं जगत्" का सिद्धान्त स्वीकार्य है। तदनुसार अध्वरमीमांसक खण्डप्रलय मात्र का स्वीकार करते हैं। अत एव इनके मत में जगत् का सर्वथा अभाव अर्थात् महाप्रलय स्वीकार्य नहीं है। अत एव महासृष्टि भी स्वीकार्य नहीं है। इसको सुस्पष्टता से कुमारिलभट्ट ने कहा है-

तस्माद‌द्यवदेवात्र......... न सिध्यत्यप्रमाणिका।।१।।

---

१. श्लो० वा०, पृ० ४७७.

तार्किकतर्को निरस्तः।

किञ्च, सृष्टेरीश्वरकर्तृत्वाङ्गीकारे तस्य किमपि प्रयोजनं वक्तव्यम्। प्रयोजनसत्त्वे नित्यतृप्तत्वहानिः। अनङ्गीकारे च मन्दत्वापत्तिः। लीलार्थत्वे च पुनः कृतकृत्यताव्याघातः। जगत्सृष्टौ प्राणिनां कर्मापेक्षत्वे च स्वातन्त्र्यहानिप्रसङ्गः। तदुक्तं भट्टपादैः—

तथा चापेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते।
जगच्चासृजतस्तस्य किं नामेष्टं न सिद्ध्यति।।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।
एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत्।।
क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता[1]।इति।।

अपि च, इह हि कुलालो वा शिल्पकारो वा सर्व एव रचयितारः शरीरधारिण एव दृश्यन्ते। तस्मात् सकलजगन्निर्माणैकशिल्पिन ईश्वरस्य

---

यतश्च महासृष्टि एवं महाप्रलय का अभ्युपगम मीमांसामत में नहीं किया जाता है अत: आद्यशिक्षक के रूप में ईश्वर को मानना आवश्यक है- ऐसा तार्किकों का तर्क स्वत: निरस्त हो जाता है।

तार्किकसम्मत ईश्वर के सन्दर्भ में मीमांसाचार्यों ने अनेक प्रकार से विचार किया है। तद्यथा- सृष्टि की ईश्वरकर्तृता का स्वीकार करने पर ईश्वर का सप्रयोजन होना आवश्यक होगा। यदि किसी प्रयोजन का अस्तित्व तार्किकों द्वारा स्वीकार्य होगा तो ईश्वर की नित्यतृप्ति व्याहत होगी। यदि प्रयोजन की अस्तिता अस्वीकार्य होगी तो ईश्वर में मन्दता का आपादन होगा। लीलासम्पादनार्थ सृष्टिकर्तृता, ईश्वर में मानी जाय तब भी उनकी कृतकृत्यता का व्याघात होगा। जगत्सृष्टि में प्राणियों के कर्म की सापेक्षता ईश्वर में मानी जाय तो स्वातन्त्र्यहानि का आपादन, ईश्वर में प्राप्त होगा। इन विचारों को भट्टपाद ने अपनी निम्नाङ्कित कारिकाओं में आबद्ध किया है-

तथा चापेक्षमाणस्य.........विहन्येत कृतार्थता।।२½।।

इतना ही नहीं, ईश्वर को सृष्टि कर्ता मानने में अन्य भी कई विचार अपेक्षित है। जगत् में कुम्भकार हो अथवा कोई शिल्पकार सर्वविध कर्ता शरीरधारी ही देखे जाते हैं। तद्वत् सम्पूर्ण जगत् का निर्माण करने वाला एक मात्र शिल्पी ईश्वर की कर्तृता के पोषक ज्ञान, इच्छा एवं प्रयत्नों के निर्वाहार्थ शरीर, इन्द्रिय, मनस्प्रभृति

---

१. श्लो० वा०, पृ० ४६३.

कर्तृत्वज्ञानेच्छाप्रयत्नादिनिर्वाहाय शरीरेन्द्रियमनःप्रभृत्यवश्यमेवाऽऽस्थेयम्। ज्ञानादिकं शरीरावच्छेदेनैवाऽऽत्मनि जायते, ज्ञानसामान्यं प्रत्यात्ममनः-संयोगस्य हेतुत्वात्। ईश्वरस्येच्छाप्रयत्नादिव्यवस्थार्थं सशरीरत्वस्वीकारे स्वशरीरस्य स्वयं कर्तुमशक्यत्वादन्यकर्तृकत्वमङ्गीकर्तव्यम्, तथा सत्यनवस्थापत्तिः तदर्थमीश्वरस्य शरीराऽङ्गीकारे इच्छाद्यभावेन न स्रष्टृत्वसंभवः। तदुक्तं श्रीकुमारिलभट्टैः-

> **प्रवृत्तिः कथमाद्या च जगतः सम्प्रतीयते।**
> **शरीरादेर्विना चास्य कथमिच्छापि सर्जने।।**
> **शरीराद्यथ तस्य स्यात् तस्योत्पत्तिर्न तत्कृता।**
> **तद्वदन्यप्रसङ्गोऽपि..................................।।इति।**

नन्वीश्वरज्ञानेच्छाप्रयत्नानां नित्यत्वाङ्गीकारान्नोक्तदोषप्रसङ्ग इति चेन्न, नित्य ईश्वरप्रयत्नः किमेकः? उतानेकाः? एकत्वे कार्यवैचित्र्याभावः, अनेकत्वे

---

का अङ्गीकार्य होना आवश्यक होगा। कारण सुस्पष्ट है- ज्ञान, इच्छा एवं प्रयत्न शरीरावच्छेदेन आत्मा में उत्पन्न होते हैं। एतदतिरिक्त ज्ञानसामान्य के प्रति आत्ममनःसंयोग की कारणता दृष्टिगोचर होती है। एवञ्च ईश्वरीय इच्छादि की व्यवस्थित उपपत्ति हेतु ईश्वर को सशरीर मानें तो उनके शरीर उन्हीं से उत्पन्न माने नहीं जा सकते एतावता अन्यकर्तृक शरीर माने जाने पर अनवंस्थादोष अति प्रसक्त होगा।

दूषणों से छुटकारा पाने हेतु यदि ईश्वरीय शरीर का अङ्गीकार नहीं करते तो इच्छादि का शरीररहित आत्मा में अस्तित्व की उपपत्ति नहीं होने से ईश्वर में जगत्स्रष्टा की सम्भावना अनुपपन्न होगी। इस विचार को श्रीकुमारिलभट्ट ने निम्नाङ्कित कारिकाओं में आबद्ध किया है-

प्रवृत्तिः कथमाद्या च..........।।१।।

तद्वदन्य प्रसङ्गोऽपि ......।।२।।

यदि उपर्युक्त समस्त दोषों का एक साथ निराकरण करने हेतु ईश्वर के ज्ञान, इच्छा एवं प्रयत्नों को नित्य मान लेने मात्र से सर्वथा समाधान हो जाता है ऐसा तार्किक कहते हैं तो यह भी ठीक नहीं है। क्योंकि ईश्वरीय प्रयत्न एक होगा याअनेक होंगे। एक मानने पर कार्यवैचित्र्य की उपपत्ति नहीं होगी। यदि अनेक माने तो सृष्टि एवं प्रलय में कारणरूप से स्वीकार्य नित्य दो प्रयत्नों की एक काल में

च सृष्टिप्रलयकारणभूतयोर्नित्ययोः प्रयत्नयोरेककाले ईश्वरे विद्यमानत्वेनोभयोः परस्परविघातान्न सृष्टिः स्यात्, न प्रलयः। तदुक्तं पार्थसारथिमिश्रेण–"किञ्च, प्रतिकार्यं प्रयत्नभेदेन भवितव्यम्, अन्यो हि पादसंचरणे प्रयत्नः, अन्यश्च बाहूद्धरणे। तथा सति यद्यपीश्वरे प्रयत्नो नित्यः स्यात्तथापि तस्यैकत्वान्न विचित्रकार्योदयहेतुत्वं संभवतीति व्यर्थ एवासौ। यदि त्वनन्तकार्यानुरूपा अनन्ता एव प्रयत्नाः सर्वदैवेश्वरेऽवतिष्ठेरन्, तथा सति प्रलयकारणीभूतस्य परमाणुविश्लेषकस्य प्रयत्नस्य सर्गकालेऽप्यवस्थानात्, संयोजकस्य च सर्गहेतोः प्रलयकालेऽप्यवस्थानाद् उभयोः परस्परविघातान्न सृष्टिः स्यात्, न प्रलयः"[१] इति। तदेवं सृष्टिसंहारार्थमीश्वराङ्गीकारो न युक्तः।

ननु जगत्कर्तृत्वेनेश्वराभावेऽपि मनुष्यकृतानां शुभाऽशुभकर्मणां जडत्वेन तेषां स्वतः फलदातृत्वाऽसंभवात् तयोरधिष्ठाता सर्वज्ञः सर्वशक्तिमानीश्वरस्त्वावश्यक

---

ईश्वर में विद्यमानता होने से दोनों प्रयत्नों का परस्पर व्याघात उपस्थित होगा- एतावता सृष्टि भी रुकेगी और प्रलय भी रुक जायेगा। इसको पार्थसारथि मिश्र ने विशदता के साथ विचारित किया है। तद्यथा- किञ्च अन्य दूषण भी उपस्थित होगा। प्रत्येक कार्य के लिये भिन्न प्रयत्न स्वीकार्य है। लोक में देखा जाता है कि जिस प्रयत्न से पादसंचरण होता है उससे भिन्न प्रयत्न से बाहु का उठाना सम्भव होता है। ऐसी स्थिति में ईश्वर के प्रयत्न को नित्यमान लेने मात्र से समाधान नहीं होगा। कारण यह है कि वह प्रयत्न यदि एक होगा तो उसे विचित्र कार्योदय के प्रति हेतु नहीं माना जा सकेगा। अतः वह व्यर्थ ही होगा। यदि समाधान हेतु अनन्त कार्यों के अनुरूप अनन्त प्रयत्न मान्य हो तो उनकी स्थिति ईश्वर में सदैव रहेगी। ऐसी स्थिति में प्रलयकारणीभूत परमाणुविश्लेषक प्रयत्न की विद्यमानता सर्गकाल में भी होने से तद्वत् सर्गहेतुभूत संयोजकप्रयत्न की विद्यमानता प्रलयकाल में भी होने से द्विविध प्रयत्नों के परस्पर व्याघात होने से सृष्टि भी नहीं हो सकेगी तद्वत् प्रलय भी नहीं हो सकेगा। एतावता यह सुविदित होता है कि सृष्टि एवं संहार की उपपत्ति हेतु ईश्वर का अङ्गीकार किया जाना तार्किकों के लिये अयुक्तिक होने से सुखावह नहीं है।

एक जिज्ञासा उदित होती है- जगत् के निर्माता ईश्वर नहीं माने जा सकते हैं किन्तु मनुष्यकृत शुभ अथवा अशुभ कर्म स्वतः जड़ होते हैं अतः स्वयं फल देने में असमर्थ हैं। उन कर्मों का अधिष्ठाता सर्वज्ञ हो सर्वशक्तिमान् हो ऐसा ईश्वर तो आवश्यक रूप से मान्य होना चाहिये। इस पक्ष का सर्वथा खण्डन किया जाता

---

१. शा० दी० १।१।५, पृ० ११६.

इति चेन्न, अचेतनयोर्धर्माधर्मयोर्नियन्तृत्वेनेश्वरस्याभीप्सितत्वे नियम्यनियामकयोर्मध्ये कश्चन सम्बन्धो वक्तव्यः। तस्यास्तित्वे किं स संयोगः? उत समवायः? नाद्यः, द्रव्ययोरेव संयोगसंभवात्। प्रकृते धर्माधर्मयोर्गुणत्वान्नेश्वरेण तयोः संयोगसंभवः। नापि द्वितीयः, जीवात्मनि विद्यमानयोधर्माधर्मयोर्जीवेन साकं समवायसंभवेऽपीश्वरेण साकं तदसंभवात्। एवं संबन्धाभावेन कथङ्कारमीश्वरस्तयोर्नियमनं कुर्यात्? तदुक्तं शालिकनाथेन–"अपि चाऽधिष्ठानार्थोऽपि चिन्तनीयः। न तावत्संयोगः, गुणत्वेन धर्माधर्मयोः संयोगाभावात्। समवायोऽपि परपुरुषसमवायिनोर्धर्माधर्मयोरीश्वरं प्रत्यनुपपन्नः। वास्यादि तु तक्षादीनां करसंयोगादिरेवाऽधिष्ठानम्"[१] इति। तस्मान्मीमांसादर्शने देशकालावस्थादि-सहकारिसहिताभ्यां धर्माधर्माभ्यामेव फलम्, न तत्र चेतनव्यापारापेक्षा।

नन्वस्माच्छब्दादयमर्थो बोद्धव्य इत्ययं यो वृद्धव्यवहारो दरीदृश्यते, स

---

है। तद्यथा- धर्म एवं अधर्म अचेतन हैं उनके नियन्ता ईश्वर मान्य होंगे। ऐसा स्वीकार करने पर नियम्य एवं नियामक के मध्य किसी सम्बन्ध का स्वीकार करना होगा। वह स्वीकार्य सम्बन्ध संयोग होगा अथवा समवाय? प्रथम सम्बन्ध- संयोग नहीं मान्य होगा क्योंकि दो द्रव्यों के मध्य ही इस सम्बन्ध की स्वीकार्यता है। दूसरा सम्बन्ध- समवाय भी स्वीकार्य नहीं होगा। कारण यह है कि धर्म अथवा अधर्म जीवात्मा में रहने वाले हैं अतः इनका जीवात्मा के साथ समवाय सम्बन्ध मान्य है जीवभिन्न परमेश्वर के साथ नहीं। एतावता ईश्वर के साथ अदृष्ट का सम्बन्ध नहीं होने से ईश्वर धर्म एवं अधर्म के नियामक नहीं हो सकते। इस विशद विचार का उपस्थापन शालिकनाथ आचार्य ने किया है- "अधिष्ठान के अर्थ का चिन्तन भी किया जाना चाहिये। अदृष्ट एवं ईश्वर के मध्य संयोग सम्बन्ध नहीं हो सकता। धर्म एवं अधर्म गुण हैं, द्रव्य नहीं अतः उनके साथ संयोग सम्बन्ध का अङ्गीकार सम्भव नहीं है। समवाय भी उपपन्न नहीं होगा क्योंकि परपुरुष-समवायी धर्म अथवा अधर्म का समवाय ईश्वर में अमान्य होगा। व्यास्यादि उपकरण, बढ़ई के कर-संयोग पर आश्रित अधिष्ठानभाव में निमित्त बनता है।" अतः मीमांसादर्शन में सुविचारित सिद्धान्त स्वीकार्य है- देश, काल एवं अवस्था आदि के सहकारिकारण समवधान में धर्म एवं अधर्म ही फलप्रदान में हेतुरूप से स्वीकार्य हैं। एतदर्थ किसी कल्पित चेतन की व्यापारापेक्षा समुचित नहीं है।

एक नयी जिज्ञासा उदित होती है- इस शब्द से इस अर्थ का बोध करना

---

१. प्र० प०, पृ० १३८.

सर्गादौ ईश्वरेण संकेतित इति तादृशशब्दार्थयोः सम्बन्धोत्पादक ईश्वरोऽङ्गीकर्तव्य इति चेन्न, वृद्धव्यवहारस्य प्रवाहानादित्वान्न शब्दार्थयोः सम्बन्धोऽनित्यः, किन्तु नित्यः। तदुक्तं शालिकनाथेन–

औत्पत्तिकस्तु सम्बन्धः शब्दस्याऽर्थेन सम्मतः।
वृद्धसंव्यवहारस्य प्रवाहानादिता यतः[१]।।इति।

श्रीपार्थसारथिमिश्रेणाप्युक्तम्–"नावश्यं संबन्धकथनवाक्येनैव वृद्धेभ्यो बालाः संबन्धं प्रतिपद्यन्ते, किन्तु यदा वृद्धाः प्रसिद्धसंबन्धाः स्वकार्यार्थेन व्यवहरन्ति, तदा तेषामुपश्रृण्वन्तो बालाः संबन्धं प्रतिपद्यन्ते। यदा हि केनचिद् गामानयेत्युक्तः कश्चित् सास्नादिमन्तमानयति तदा समीपस्थो बालोऽवगच्छति– यस्मादयमेतद्वाक्यश्रवणानन्तरमस्मिन्नर्थे प्रवर्तते, तस्मादस्माद्वाक्यादयमर्थः प्रत्यायित इत्येवं संमुग्धरूपेणावगतं प्रत्यायकत्वम्, पश्चाद् बहुषु

---

चाहिये- यह वृद्धव्यवहार देखा जाता है। इसकी सृष्टि के आरम्भ में ईश्वरकृत संकेत होने से ही उपपत्ति हो सकती है। एतावता शब्द एवं अर्थ के मध्य, सम्बन्ध की उत्पत्ति ईश्वरकृत ही मान्य होगी अतः ईश्वर की अङ्गीकार्यता अनिवार्य है। इसका पुरजोर खण्डन मीमांसक जन करते हैं। घटपद से कम्बुग्रीवादिमान् अर्थ ग्राह्य होता है- एतादृश वृद्ध व्यवहार की अनादिप्रवाहरूप से गृहीता होने के कारण शब्द और अर्थ के मध्य विद्यमान सम्बन्ध को अनित्य मानकर उसके उत्पादक सर्गादिकाल में ईश्वर हैं ऐसा स्वीकार करना अनुचित है। क्योंकि शब्दार्थसम्बन्ध नित्य है। शालिकनाथ आचार्य ने सुस्पष्ट कहा है-

औत्पत्तिकस्तु..........प्रवाहानादिता यतः।। इति ।।१।।

इसका अर्थ सुस्पष्ट है- शब्द का अर्थ के साथ सम्बन्ध नित्य है, क्योंकि तादृश वृद्धव्यवहार को प्रवाह-की अनादिता प्राप्त है।

श्री पार्थसारथिमिश्र ने भी कहा है- सम्बन्ध प्रतिपादक वाक्य प्रयोग से ही वृद्धों से बालक शब्दार्थसम्बन्ध का परिज्ञान प्राप्त करते हैं-यह आवश्यक नहीं है। किन्तु प्रसिद्ध सम्बन्ध के ज्ञाता वृद्धजन शब्द प्रयोग के माध्यम से जब कार्यवस्तु के साथ व्यवहार करते हैं तब उन वृद्धों के व्यवहारपरायण शब्दों का श्रवण कर बालक स्वयं ही सम्बन्ध का परिज्ञान प्राप्त करते हैं। जब प्रयोजक वृद्ध द्वारा "गामानय" कहे जाने पर प्रयोज्य वृद्ध, सास्नादिमान् गोव्यक्ति को लाता है तब

---

१. प्र० प०, पृ० १३६.

प्रयोगेष्वन्वयव्यतिरेकाभ्यां वाक्यभागानां पदभागानां च प्रकृति-प्रत्ययानां वाक्यार्थभागेषु पदार्थेषु विविच्यते, तस्मान्न पौरुषेयः सम्बन्ध इति न तद्दर्शने पुरुषापेक्षास्तीति सिद्धमनपेक्षं वेदानां प्रामाण्यम्''[१] इति। तदेवं मीमांसादर्शने शब्दार्थयोः सम्बन्धस्य नित्यत्वात्, वेदानां चापौरुषेयत्वान्न वेदकर्तृत्वेनापीश्वरः सिद्ध्यति।

ननु वेदाऽपौरुषेयवादिभिर्मीमांसकैः स्वतःप्रामाण्याङ्गीकाराद् वेदेष्विन्द्रादिबहुदेवतानां स्वीकृतत्वात् कथमीश्वरो निषिध्यत इति चेन्न, नहि मीमांसका बहुदेवतावादिनः, वेदमन्त्रेषूपवर्णितानां देवानां मन्त्रमयत्वस्वीकारात्। मन्त्रमयास्ते देवा नोपास्यरूपाः, किन्तु मन्त्रोच्चारणे संबोधनार्था एव। देवतानुग्रहार्थं यागकरणे चैकस्मिन्नेव समयेऽनेकस्थलेष्वेकदेवतामुद्दिश्य हव्यादिकं दीयते। तदा स कुत्र वा गच्छेत्[२]। अतः पूजादिषु देवतानामावाहनविसर्जनादिकमयुक्तमेवेति मीमांसकाः प्रतिपादयन्ति। यागफलमपूर्वेणैव प्राप्यत इत्यपूर्वाधिकरणे प्रतिपादितत्वान्मीमांसकैस्तदर्थमपीश्वरानुग्रहो नापेक्षितः।

---

समीपस्थ बालक यह समझता है कि यतश्च इनके वाक्य को सुनकर प्रयोज्य व्यक्ति कार्यविशेष में प्रवृत्त होते हैं अतः इस वाक्य से यह अर्थ परिज्ञात होता है इस रूप से संमुग्ध (अविवेचित/समुदित) रूप से प्रत्यायकता (बोधकता) का ज्ञान होता है। तत्पश्चाद् बहुत स्थलों में प्रयोग होने पर अन्वय एवं व्यतिरेक के माध्यम से वाक्यभाग, पदभाग एवं प्रकृति-प्रत्ययों का वाक्यार्थ, पदार्थ, प्रकृत्यर्थ एवं प्रत्ययार्थों की विवचेना अवगत होती है। अतः पद एवं पदार्थ के मध्य पुरुषकृत जन्यसम्बन्ध नहीं है। अतश्च तदधीन पुरुष-सर्वज्ञ ईश्वर की सापेक्षता भी नहीं है। एवञ्च वेदों में ईश्वरसापेक्ष प्रामाण्य नहीं है। प्रत्युत निरपेक्षप्रामाण्य अङ्गीकृत है।।

इस प्रकार निष्कर्ष कथन प्राप्त होता है— मीमांसादर्शन में शब्द और अर्थ के मध्य विद्यमान सम्बन्ध को नित्य माना जाता है तथा वेदों का अपौरुषेय होना स्वीकार्य है। अतः वेदकर्ता होने से ईश्वर की सिद्धि का कथन उपयुक्त नहीं है।

यहाँ एक नयी जिज्ञासा उदित होती है- मीमांसक वेद को अपौरुषेय मानते

---

१. शा० दी० १।१।५, पृ० ११७.

२. प्र० प०, पृ० १८६.

तदेवं विचार्यमाणे सति मीमांसादर्शनं निरीश्वरवादात्मकमिति स्पष्टमवगम्यते। अयं च निरीश्वरवादी महर्षिणा जैमिनिना स्वसूत्रेषु बीजरूपेणोक्तः, शाबरभाष्ये स एवाङ्कुरितः, वार्त्तिके श्रीकुमारिलभट्टप्रयत्नेन पल्लवितः फलितश्च, शास्त्रदीपिकायां श्रीपार्थसारथिमिश्रेण स एव संगृहीतः सज्जितश्च। गच्छता कालेनार्वाचीनमीमांसका अनीश्वरवादाऽपवाददूरीकरणार्थं प्रयतितवन्त इति ज्ञायते। तत्र भवनाथमिश्रस्तु ईश्वरनिराकरणपरस्याऽस्य सर्वस्यापि प्रकरणस्याऽऽनुमानिकेश्वरनिराकरणे तात्पर्यमुपवर्णयन् वेदप्रमाणसिद्धमीश्वरमङ्गीचकार। तथा चोक्तम्–"एवं चेश्वरे परोक्तमेवाऽनुमानं निराकृतम्, नेश्वरोऽपि निरस्तः[१]" इति। अमुमेव पन्थानमनुसरन् नन्दीश्वरोऽपि–"एवं चानुमानिकत्वमेवेश्वरस्य निराकृतम्, नेश्वरोऽपि

---

हैं तथा वेदों में स्वतःप्रामाण्य का प्रतिपादन करते है। ऐसी स्थिति में अनेकशः इन्द्रप्रभृति देवताओं का स्वीकार करने पर भी ईश्वर का निषेध किया जाना असंगत प्रतीत होता है। मीमांसा में उपर्युक्त उपपत्ति का खण्डन किया जाता है। मीमांसकों का कहना है- बहुदेवतावाद हमें स्वीकार्य नहीं है क्योंकि वेदमन्त्रों में उपवर्णित देवों को मन्त्रमय माना गया है। मन्त्रमय इन्द्रादिदेव उपास्य नहीं है प्रत्युत मन्त्रोच्चारण में सम्बोधन-मात्र के लिये उनका उपयोग किया जाता है। देवता के अनुग्रह की प्राप्ति हेतु याग में एक ही समय में अनेक स्थलों में एक देवता को उद्देश्य करके हव्य-द्रव्य का त्याग किया जाता है। ऐसी स्थिति में हवनीय द्रव्य का अर्पण समकाल में अनेक स्थलों में कैसे प्राप्त होगा। अतः पूजादि क्रियानुष्ठान में देवताओं के आवाहन किंवा विसर्जनादि अयुक्त ही है- ऐसा मीमांसाक दार्शनिकों द्वारा प्रतिपादन किया जाता है। यागफल तो अपूर्व द्वारा ही प्राप्त होते हैं- ऐसा अपूर्वाधिकरण में युक्ति के साथ प्रतिपादित किया गया है अतः मीमांसकों ने एतदर्थ ईश्वरानुग्रह की सापेक्षता का अङ्गीकार नहीं किया है।

उपर्युक्त प्रकार से विचार-विमर्श करने के अनन्तर सुविदित होता है कि मीमांसादर्शन निरीश्वरवाद का पक्षधर है। यह निरीश्वरवाद महर्षि जैमिनि द्वारा सूत्रों में बीजरूप से प्रतिपादित हुआ है, शाबरभाष्य में यह सिद्धान्त अङ्कुररूप से निरूपित हुआ है तथा वार्तिक ग्रन्थ में श्रीकुमारिलभट्ट के सत्प्रयत्न से पल्लवित एवं फलित रूप में विशदीकृत हुआ है। श्रीपार्थसारथि मिश्र ने "शास्त्रदीपिका" ग्रन्थ में

---

१. न० वि०, पृ० १९९.

निराकृतः। अत एव न प्रभाकरगुरुभिरीश्वरनिरासः कृतः। तत्समर्थनं च वेदान्तमीमांसायां क्रियत इत्यभिप्रेतम्[२]" इत्युक्तवान्।

एवमेव मीमांसान्यायप्रकाशे आपदेवः–"सोऽयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः[३]" इति, अर्थसंग्रहे श्रीलौगाक्षिभास्करश्च–"ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः"[४] इति प्रतिपाद्य, उभावपीश्वरार्पणे–

---

निरीश्वरवाद सिद्धान्त का संग्रह कर इसे सुसज्जित रूप में प्रस्तुत किया है।

कतिपय शताब्दी के व्यतीत होने पर अर्वाचीन मीमांसकों का ध्यान अपने ऊपर अनीश्वरवाद के आपतित अपवाद को मिटाने की ओर आकृष्ट हुआ। एतदर्थ उनका प्रयास आरम्भ हुआ। परवर्ती श्रीभवनाथमिश्र ने ईश्वरनिराकरणपरक सम्पूर्ण पूर्वाचार्य के ग्रन्थसन्दर्भ को आनुमानिक ईश्वर के निराकरण में तात्पर्य का प्रतिपादन किया। परिणामस्वरूप वेदप्रमाणसिद्ध ईश्वर के अङ्गीकार में मीमांसकों के समर्थन को उन्होंने पुरस्कृत किया। उन्होंने अपना निष्कर्ष कथन सुस्पष्ट किया है- "इस प्रकार वादी दार्शनिकों द्वारा प्रतिपादित आनुमानिक ईश्वर के निराकरण मात्र में मीमांसकों का तात्पर्य है, वेदसिद्ध ईश्वर के निरास में नहीं।" इसी मार्ग का अनुसरण करते हुए नन्दीश्वर ने भी सुस्पष्ट कहा है- "मीमांसादर्शन में ईश्वर के अनुमानप्रमाणप्रसाधित स्वरूप का ही निराकरण किया गया है, वेदसिद्ध ईश्वर का निराकरण नहीं। यही कारण है कि प्रभाकर गुरु ने ईश्वरनिरासार्थ कोई प्रयत्न नहीं किया है। मीमांसा के इस सिद्धन्त का समर्थन, वेदान्तदर्शन के विचारप्रसङ्ग में स्पष्टरूप से किया गया है।।"

इसी प्रकार आचार्य आपदेव ने मीमांसा न्यायप्रकाश में कहा है- "वेद-प्रतिपादित धर्म जिस उद्देश्य से विहित है उस उद्देश्य से क्रियमाण होने पर उस उद्देश्य के प्रति कारण बनता है। यदि वेदोक्त धर्म श्रीगोविन्दार्पणबुद्धि से अनुष्ठित होता है तो वह नि:श्रेयस के प्रति कारण बनता है।" अर्थसंग्रह में श्रीलौगाक्षिभास्कर ने भी कहा है- "ईश्वरार्पणबुद्धि से क्रियमाण वेदविहित कर्म, नि:श्रेयस के प्रति कारण बनता है। उपर्युक्त प्रतिपादनों के माध्यम से दोनों आचार्यों ने ईश्वरार्पण के सन्दर्भ में निम्नाङ्कित गीतावचन को प्रमाणरूप से उदाहृत किया है–

---

१. प्र० वि०, पृ० ८२-८३.
२. मी० प्र०, पृ० २७७-२७८.
३. अ० सं०, पृ० १६२.
४. भ० गी० ९।२७.

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्[५]।।

इति गीतोक्तिं प्रमाणत्वेनोदाहृतवन्तौ। यद्यपीयं स्मृतिरीश्वरार्पणबुद्ध्याऽनुष्ठान एव प्रमाणम्, न तु तथाऽनुष्ठितस्य निःश्रेयसफलकत्वेऽपि, तथापि तत्रैव गीतायामेतच्छ्लोकानन्तरं पठितेन–

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि।।[६]

इति श्लोकेन पूर्वोक्तकर्मणो भगवद्रूपतावाप्तिफलकत्वमुपवर्णितं सिद्धं कृत्वैवमुक्तं ग्रन्थकृद्भ्यामित्यवगन्तव्यम्। यथा तत्तत्फलोद्देशेन विहितानामपि कर्मणां "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसाऽनाशकेन"[७] इति श्रुत्या संयोगपृथक्त्वन्यायेन विविदिषोद्देशेन सर्वयज्ञानां विधानम्, तद्वदनयापि स्मृत्या श्रीभगवदुक्तया तेनैव न्यायेनेश्वरार्पणबुद्ध्या-नुष्ठानविधानमिति भावः।

---

यत्करोषि..........तत्कुरुष्व मदर्पणम् ।।१।।

यद्यपि यत्करोषि......इत्यादि स्मृतिवचन ईश्वरार्पणबुद्धि से क्रियमाण अनुष्ठान मात्र में प्रमाण है, ऐसे अनुष्ठान से निःश्रेयसफल की प्राप्ति होने में नहीं। तथापि वहाँ गीता में यत्करोषि इत्यादि श्लोक के अनन्तर-

"शुभाशुभफलैः.......मामुपैष्यसि ।।१।।

यह श्लोक पठित है। इस श्लोकवचन से पूर्वोक्त कर्म का फल "भगवद्रूपतावाप्ति" प्रतिपादित किया गया है। उसको सिद्धवत् कर ही मीमांसान्यायप्रकाशकार एवं अर्थ-संग्रहकार ने उपर्युक्त मीमांसासिद्धान्त का ख्यापन किया है- ऐसा समझना चाहिये।

यथा विभिन्न फलों को उद्देश्य करके विहित कर्मों का "तमेतं वेदानुवचनेन" इत्यादि श्रुति के बल पर "संयोगपृथक्त्व"-न्याय से विविदिषा के उद्देश्य से समस्त यंज्ञों का विधान सिद्धान्तसम्मत है तद्वत् गीता के उपर्युक्त वचनों से श्रीभगवान् की उक्ति के बल पर संयोगपृथक्त्वन्याय से ईश्वरार्पणबुद्धि से अनुष्ठानविधान सिद्धान्त-सम्मत है।

---

६. भ० गी० ९।२८.
७. बृ० उ० ४।४।२२.

तदेवं प्राचीनमीमांसकेषु सूत्रभाष्यकारौ जैमिनि–शबरस्वामिनावीश्वर-विषये मौनमासाते। श्रीकुमारिलभट्ट–शालिकनाथ–पार्थसारथिप्रभृतयो न्यायवैशेषिकाभिमतेश्वरमनादृत्य कर्मणैव सर्वं व्यवस्थापितवन्तः। अत एव "कर्मेति मीमांसकाः" इति लोकोक्तिः प्रसिद्धिमगात्। अनन्तरं च भवनाथमिश्र-नन्दीश्वर–आपदेव–लौगाक्षिभास्करप्रभृतयो मीमांसका निरीश्वरवादापवाद-दूरीकरणार्थमीश्वरमङ्गीचक्रुः। तत्रापि लौगाक्षिभास्कर–आपदेवावीश्वरं यज्ञपतिरूपेणाङ्गीकृत्य श्रीमद्भगवद्गीताया वचनप्रामाण्येनेश्वरार्पणबुद्ध्या हुतं मोक्षप्रदायकमित्यूचतुः। मीमांसकाचार्याणामयमीश्वरविषयको विचारः क्रमिकविकासमवापेति विज्ञायते।

## अद्वैतवेदान्ते ईश्वरस्वरूपम्

तत्र तावदद्वैतवेदान्ते परमतत्त्वं 'ब्रह्म'शब्देन व्यवह्रियते। इदमेव जगतोऽधिष्ठानभूतम्। अस्मिन् सिद्धान्ते–"एकमेवाद्वितीयं ब्रह्म"[१], "नेह नानास्ति

---

इस प्रकार प्राचीन मीमांसासकों में सूत्रकार जैमिनि एवं भाष्यकार शबरस्वामी ईश्वर के विषय में मौनभाव का अवलम्बन करते हैं। श्रीकुमारिलभट्ट शालिकनाथ एवं पार्थसारथिमिश्र प्रभृति मीमांसक गण, न्यायवैशेषिकाभिमत ईश्वर का अनादर करके कर्म से ही सकल व्यवस्था की उपपत्ति प्रतिपादित करते हैं। इसी आधार पर "कर्मेति मीमांसकाः" यह लोकोक्ति प्रसिद्धि प्राप्त की थी।

तदनन्तर मीमांसक- भवनाथमिश्र, नन्दीश्वर, आपदेव एवं लौगाक्षिभास्कर प्रभृति आचार्यों ने मीमांसकों के ऊपर लगे निरीश्वरवाद के अपवाद को दूर करने हेतु ईश्वर का स्पष्ट अङ्गीकार कर लिया है। इनमें भी आचार्य लौगाक्षिभास्कर एवं आपदेव इन दो आचार्यों ने ईश्वर को यज्ञपतिरूप से स्वीकार कर श्रीमद्भगवद्गीता के वचन-प्रामाण्य से ईश्वरार्पणबुद्ध्या अर्पित हुत-हवन को मोक्षफलक प्रतिपादित किया है। मीमांसादर्शन के आचार्यों द्वारा ईश्वरविषयक उपर्युक्त विचार क्रमिक विकास को प्राप्त किया- ऐसा सुविदित होता है।

## अद्वैतवेदान्त में ईश्वर का स्वरूप

दर्शनों के मध्य अद्वैतवेदान्त में परमतत्त्व को "ब्रह्म"शब्द से व्यवहृत किया जाता है। यह ब्रह्म ही सम्पूर्ण जगत् का अधिष्ठान है। इस सिद्धान्त में "एकमेवाद्वितीयं

---

१. त्रि० म० ना० ३।२.

किञ्चन"[१], "इदं सर्वं यदयमात्मा[२]" इत्यादिश्रुतिबलेन ब्रह्मणः स्वगत-सजातीय-विजातीयभेदराहित्यं[३] देश-काल-वस्तुपरिच्छेदःशून्यत्वं[४] च प्रतिपाद्यते। श्रुतिषु सगुण-निर्गुणभेदेन ब्रह्मणः स्वरूपद्वयमुपवर्णितम्। तथा चोक्तम्-"द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च"[५] इति। तत्र-"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति"[६] इत्यादीनि सृष्टि-स्थितिसंहारप्रतिपादकानि वचनानि, तथा "सत्यं ज्ञानमनन्तं ब्रह्म"[७], "यो वै भूमा तत्सुखम्[८]","विज्ञानमानन्दं ब्रह्म[९]"

---

ब्रह्म", "नेहनानास्ति किञ्चन" एवं "इदं सर्वं यदयमात्मा" इत्यादि श्रुतिबल से ब्रह्म के स्वगतभेद, सजातीयभेद एवं विजातीयभेद से वर्जित होना प्रतिपादित किया जाता है। तद्वत् उसमें देशकृत, कालकृत एवं वस्तुकृत परिच्छेदः-शून्यता भी प्रतिपादित की जाती है। श्रुतिवाक्यों में ब्रह्म के द्विविध स्वरूप प्रतिपादित (प्राप्त) हैं- सगुण रूप एवं निर्गुण रूप। तद्यथा- "ब्रह्म के दो रूप हैं- मूर्त एवं अमूर्त।"

श्रुतिप्रोक्त "यतो वा इमानि..........तद् ब्रह्मेति" इत्यादि वचन सृष्टि-स्थिति-संहार के प्रतिपादक हैं तद्वत् सत्यं ज्ञानमनन्तं ब्रह्म, यो वै भूमा तत्सुखम्, विज्ञानमानन्दं ब्रह्म- इत्यादि श्रुतिवचन (स्वरूपप्रतिपादनार्थ प्रवृत्त) ब्रह्म के सगुण स्वरूप का प्रतिपादन करते हैं। इसके विपरीत "अस्थूलमनणु...." इत्यादि, अशब्दमस्पर्शम् इत्यादि निषेधश्रुतिवचन ब्रह्म के निर्गुण स्वरूप का प्रतिपादन करते हैं।

---

१. बृ० उ० ४।४।१९.

२. बृ० उ० २।४।६.

३. मनुष्यस्य शरीरगतैर्हस्तपादादीन्द्रियैर्यो भेदः स स्वगतभेदः। मनुष्यस्य मनुष्यान्तरेण यो भेदः स सजातीयभेदः। मनुष्यस्य पश्वादिभिर्यो भेदः स विजातीयभेद इत्युच्यते। ब्रह्मणः शरीराद्यवयवाभावान्न तस्य स्वगतभेदः, ब्रह्मसदृशब्रह्माऽन्तराऽभावान्न सजातीयभेदः, ब्रह्मातिरिक्तस्य सर्वस्यापि कल्पितत्वान्न विजातीयभेदः संभवतीति तात्पर्यम्।

४. परिच्छिन्नत्वं हि देशतः कालतो वस्तुतश्चेति त्रिविधम्। तत्र अत्यन्ताभावप्रतियोगित्वं देशपरिच्छिन्नत्वम्, न तु देशान्तरेऽसत्त्वं स्वदेशमात्रसत्त्वं वा। ध्वंस-प्रागभावयोः प्रतियोगित्वं कालपरिच्छिन्नत्वम्, अन्योन्याभावप्रतियोगित्वं च वस्तुपरिच्छिन्नत्वमिति विज्ञेयम्। ब्रह्मण आकाशवद् व्यापकत्वान्न तस्य देशपरिच्छेदः:, नित्यत्वान्न कालपरिच्छेदः:, सर्वाऽऽत्मकत्वाच्च न वस्तुपरिच्छेदः इति बोध्यम्।

५. बृ० उ० २।३।१.

६. तै० उ० ३।१.

७. तै० उ० २।१.

८. छा० उ० ७।२३।१.

९. बृ० उ० ३।९।२८.

इत्यादिस्वरूपप्रतिपादनपराणि च वचनानि ब्रह्मणः सगुणस्वरूपं प्रतिपादयन्ति। "......अस्थूलमनण्वह्रस्वमदीर्घमलोहितम्[६]", "अशब्दमस्पर्शमरूपमव्ययम्"[७] इत्यादिनिषेधवचनानि च ब्रह्मणो निर्गुणत्वे प्रमाणानि।

### ब्रह्मणः स्वरूपतटस्थलक्षणे

अद्वैतिनः स्वरूपतटस्थभेदेन ब्रह्मणो लक्षणद्वयं सङ्गिरन्ते। तत्र "स्वरूपं सद् व्यावर्तकं स्वरूपलक्षणम्", "कादाचित्कत्वे सति व्यावर्तकं तटस्थलक्षणम्" इत्युभयोर्लक्षणम्। तदनुसारेण सच्चिदानन्दरूपत्वं स्वरूपलक्षणम्, सृष्टि-स्थिति-संहारकर्तृत्वं च तटस्थलक्षणमिति पर्यवस्यति।

### अज्ञान-(अविद्या)स्वरूपम्

पूर्वोक्तेऽपरिच्छिन्ने ब्रह्मण्यनादिकल्पिततादात्म्यसंबन्धेनानादिकल्पिता मूलप्रकृतिस्तिष्ठति। सा च सत्त्वरजस्तमोगुणमयी। इयं च अविद्या-अज्ञान-प्रकृति-माया-शक्ति-प्रधानादिभिर्नामभिर्व्यवह्रियते। नैयायिकादयोऽज्ञानं नाम

---

### ब्रह्म के स्वरूपलक्षण एवं तटस्थलक्षण

अद्वैत मतावलम्बी दार्शनिक ब्रह्म के द्विविध लक्षणों का प्रतिपादन करते हैं- (१) स्वरूप लक्षण एवं (२) तटस्थ लक्षण।

(१) स्वरूप होकर अन्य से व्यावृत्त करने वाला स्वरूपलक्षण कहलाता है। तथा (२) कदाचित् विद्यमान रहकर अन्य से व्यावृत्त करने वाला तटस्थलक्षण कहलाता है। उपर्युक्त लक्षणों के आधार पर ब्रह्म की सच्चिदानन्दरूपता स्वरूपलक्षण कहलाती है तथा सृष्टिस्थितिसंहारकर्तृता ब्रह्म की तटस्थलक्षण कहलाती है।

### अज्ञान=अर्थात् अविद्या का स्वरूप

सर्वविध परिच्छेदःवर्जित ब्रह्म में अनादिकल्पित तादात्म्यसम्बन्ध से अनादि कल्पित मूलप्रकृति स्थित रहती है। यह सत्त्व, रजस्, एवं तमस् गुणों की साम्यावस्था स्वरूपा है। इसे अविद्या, अज्ञान, प्रकृति, माया, शक्ति एवं प्रधान आदि संज्ञाओं से शास्त्रों में व्यवहृत किया जाता है। नैयायिक एवं वैशेषिक दार्शनिकों ने अज्ञान का अर्थ ज्ञानाभाव प्रतिपादित करते हुए नञ् का अर्थ अभाव बताया है। इसके विपरीत अद्वैती आचार्यगण, अज्ञान में आवरण एवं विक्षेप नामक दो शक्तियों

---

६. बृ० उ० ३।८।८.

७. कठ० १।३।१५.

ज्ञानाभाव इति नञोऽभावार्थतां प्रतिपादयन्ति, किन्त्वद्वैतिन आवरणविक्षेप-शक्तिमदनादिभावरूपमज्ञानमित्यङ्गीकुर्वन्ति। तदुक्तं चित्सुखाचार्यैः–

अनादि भावरूपं यद्विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते[१]।।इति।

अस्य च विद्यया निवर्त्यमानत्वादविद्येति, प्रपञ्चस्योपादानत्वात् प्रकृतिः, प्रधानमिति वा, दुर्घटकार्यसम्पादकत्वाद् मायेति, स्वातन्त्र्याभावाच्छक्तिरिति च व्यवहारः। इदं चाज्ञानमत्र सिद्धान्ते सदसद्भ्यां विलक्षणमनिर्वचनीयरूपम्[२]। किञ्चात्र "न ज्ञानमज्ञानम्" इत्यत्र नञो नाऽभावरूपत्वम्, किन्तु विरुद्धार्थ-कत्वाद् भावरूपत्वम्, उत्पत्तिराहित्याच्चानादित्वम्, प्रकाशेनाऽन्धकारवद् ज्ञानेन निवर्त्यमानत्वाच्च सांशत्वं स्वीक्रियते।[३]

---

का अङ्गीकार करते हुए इसे अनादि भावरूप में स्वीकार करते हैं। जैसा कि चित्सुखाचार्य ने सुस्पष्ट कहा है-

"अनादि भावरूपं ....... लक्षणं सम्प्रचक्षते ॥१॥

जो अनादि है भावरूप है तथा विज्ञान से निवृत्त हो जाता है उसे प्राज्ञ वेदान्ताचार्यों ने अज्ञान शब्द से प्रतिपादित किया है।

यतश्च विद्या से यह निवर्त्य है अतः इसे "अविद्या" कहा जाता है। प्रपञ्च का उपादान कारण होने से यह "प्रकृति" कहलाती है। प्रकृति का ही अपर नाम "प्रधान" है। यतश्च यह दुर्घट कार्य का सम्पादन करती है अतः यह "माया" कहलाती है। स्वातन्त्र्यवर्जित होने के कारण यह "शक्ति" कहलाती है। इस प्रकार इसका अनेक शब्दों से शास्त्रों में व्यवहार किया गया है। यह अज्ञान वेदान्तसिद्धान्त में सद् एवं असद् से विलक्षण तथा अनिर्वचनीय बतलाया गया है। विशेषरूप से ध्यातव्य है कि "न ज्ञानम् = अज्ञानम् " इस व्युत्पत्ति में नञ् का अर्थ "अभाव" इस सिद्धान्त में मान्य नहीं है प्रत्युत भावरूप में मान्य अज्ञान है। उत्पत्तिवर्जित होने से यह अनादि है। यथा प्रकाश से अन्धकार नष्ट होता है तथा ज्ञान से इसकी निवृत्ति होती है अतः यह सांश अर्थात् सावयव माना जाता है।

---

१. तत्त्व प्र०, पृ० १७.

२. सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।
साङ्गाप्यनङ्गाप्युभयात्मिका नो महाद्भुताऽनिवर्चनीयरूपा।
(वि० चू० १११ श्लो०)

३. वृत्तिप्रभाकरे, पृ० ४१८-४१९.

## अज्ञानास्तित्वे प्रमाणम्

तत्र तावदज्ञाने 'अहमज्ञः' इति सर्वाऽनुभवसिद्धं प्रत्यक्षमेव प्रमाणम्। अथाप्यस्यानुभवस्य ज्ञानाभावात्मकत्वेन व्याख्यातॄन् तर्करसिकान् नैयायिकान् प्रत्यनुमानमप्युपस्थाप्यते। तदनुमानाकारं प्रदर्शितं श्रीमद्भिर्विद्यारण्यस्वामिभिः- "विमतं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरण-स्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रकाशवत्"[१] इति। अत्र ज्ञानमात्रस्य पक्षत्वेऽनुवादज्ञाने हेत्वसिद्धिः, तस्य प्रकाशितार्थप्रकाशकत्वात्। तस्मात् प्रमाणज्ञानमित्युक्तम्। किञ्च, धारावाहिकप्रमाणज्ञानव्यावृत्त्यर्थं विमतमिति प्रमाणज्ञानस्य विशेषणं प्रदत्तम्, अन्यथा सिद्धसाधनतापत्तेः। अत्राऽयं भावः-विषयेन्द्रियसंयोगेन घटस्य

---

## अज्ञान के अस्तित्व में प्रमाण

अज्ञान के अस्तित्व में प्रमाण है- "अहमज्ञः" यह प्रतीति = अनुभव। यह प्रत्यक्ष प्रमाण है। सर्वलोकसिद्ध होने से अनुभव का अपलाप नहीं किया जा सकता। ऐसा होने पर भी तर्करसिक नैयायिक लोग इस अनुभव की व्याख्या ज्ञानाभाव रूप से उपस्थापित करते हैं उनके विरुद्ध अद्वैती आचार्यों द्वारा प्रत्यनुमान का उपस्थापन किया जाता है। श्री विद्यारण्यस्वामी ने निम्नाङ्कित अनुमान प्रमाण को उपस्थापित किया है-

"विमतं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वदेशगतवस्त्वन्तर-पूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रकाशवत्।"

यहाँ ज्ञान को पक्ष मानने पर अनुवाद ज्ञान भी गृहीत होगा। उसमें प्रकाशित अर्थ का ही प्रकाशन होता है। यहाँ अप्रकाशितार्थप्रकाशकत्व हेतु अनुवादज्ञान में नहीं रहता है अतः पक्ष=अनुवादज्ञान में हेतु की असिद्धि=अविद्यमानता नामक दूषण आपतित होगा। इस दूषण के निराकरणहेतु प्रमाणज्ञान को पक्ष बनाया गया है। उपर्युक्त अनुमानाकार में प्रमाणज्ञान पक्ष है उसका विशेषण "विमत" पक्ष है। यदि विमतपद का उपादान नहीं करेंगे तो प्रमाणज्ञान पद से धारावाहिक ज्ञान भी गृहीत होगा। धारावाहिक ज्ञान को भी अप्रकाशितार्थप्रकाशक माना जाता है।

एतावता सिद्धसाधन दोष का आपादन होगा। एतदर्थ प्रमाणज्ञान के विशेषण रूप से विमत-पद का ग्रहण किया जाना चाहिये। यहाँ आशय यह है- विषय एवं इन्द्रिय के सहयोग से घट का प्रमात्मक ज्ञान उत्पन्न होता है। यह उदित ज्ञान, विरोधी अन्यज्ञान

---

१. वि० प्र० सं०, पृ० ५८.

प्रमात्मकं ज्ञानं भवति। तच्च विरोधिवृत्त्यन्तरोत्पत्तिपर्यन्तं दीपशिखेव 'अयं घटः, अयं घटः' इति रूपेण प्रवहत् तिष्ठति। इदं च धारावाहिकं ज्ञानं प्रथमोत्पन्नप्रमाणज्ञानस्य सजातीयमिति प्रमाणज्ञानमित्येवोच्यते। अत्रोत्तरोत्तरधारायः पूर्वपूर्वधारा तु वस्त्वन्तरं भवतीति तादृशपूर्वधारामादाय सिद्धसाधनतापत्तिरिति 'विमतम्' इति प्रमाणज्ञानस्य विशेषणम्। धारावाहिकज्ञाने वैमत्याऽभावान्न तत् पक्षकक्षामधिरोहति। एवमेव वस्तुपूर्वकमित्येवोक्ते स्वाश्रयेणाऽऽत्मान्तः-करणादिना सिद्धसाधनता स्यादिति वस्त्वन्तरेत्युक्तम्। पुनः स्वाश्रयातिरिक्तचक्षुरादिसामग्रीनिवारणाय स्वदेशगतेति, कार्यसामान्यं प्रति कारणस्यादृष्टस्य निवारणाय स्वनिवर्त्येति, प्रमाणज्ञानेन धर्मादीनां निवृत्त्यभावात्। पूर्वज्ञानवारणाय स्वविषयावरणेति, योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमेनोत्तरप्रमाणज्ञानेन पूर्वप्रमाणज्ञानस्य निवृत्तिसंभवेऽपि

---

की उत्पत्ति के पूर्व तक दीपशिखा की तरह धारावाहिक रूप से विद्यमान रहता है। इसको धारावाहिक ज्ञान कहा जाता है। यह धारावाहिक ज्ञान, प्रथमक्षण में उत्पन्न प्रमाणज्ञान का सजातीय है अतः प्रमाणज्ञान ही कहलाता है। यहाँ उत्तरोत्तर धारा से पूर्वपूर्वधारा वस्त्वन्तर होती है अत एव पूर्वधारा को लेकर सिद्धसाधनता का आपादन अनिवार्य हो उठेगा। उसके निराकरण हेतु ''विमत'' विशेषण प्रमाणज्ञान के साथ गृहीत किया गया है। धारावाहिक ज्ञान में किसी भी दार्शनिक को विमति नहीं है अतः वह ज्ञान पक्षकुक्षि प्रविष्ट नहीं होगा। एवमेव साध्यकुक्षि में वस्त्वन्तर पूर्वकत्व घटक अनन्तरपद का अनुपादान करने से तादृशवस्तु पूर्वकत्व को साध्य बनाने पर स्वाश्रय आत्मा अथवा मतभेद से अन्तःकरण को लेकर सिद्धसाधनता नामक दूषण, उपस्थित (आपतित) होगा। अतः वस्त्वन्तर पद का साध्य-घटकतया उपादान किया गया है। साध्यघटक- ''स्वदेशगत'' पद का अनुपादान करने पर स्वाश्रयातिरिक्त चक्षुरादिसामग्री का परिग्रह होने लगेगा अतः तन्निवारणार्थ स्वदेशग्रतपद का उपादान किया जाना आवश्यक है। कार्य-सामान्य के प्रति अदृष्ट को सामान्य कारण माना जाता है अतः तन्निवारणार्थ ''स्वनिवर्त्य'' पद का भी उपादान करना चाहिये। प्रमाणज्ञान से धर्मादि की निवृत्ति नहीं होती। पूर्वज्ञान-निवारणार्थ स्वविषया वरण पद का ग्रहण किया गया है। यह ध्यातव्य है कि ''योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वम्'' यह सिद्धान्त है। इस सिद्धान्त के आधार पर उत्तरकालिक प्रमाणज्ञान से पूर्वप्रमाणज्ञान की निवृत्ति तो सम्भव है पर पूर्वज्ञान से उत्तरज्ञान विषय का आवरण सम्भव नहीं हो सकता। तद्वत् कार्यमात्र के प्रति प्रागभाव की कारणता मानी जाती है। एवञ्च प्रागभाव को लेकर

पूर्वज्ञानेनोत्तरज्ञानविषयस्यावरणाऽसंभवात्, कार्यं प्रति प्रागभावस्यापि कारणत्वात् तादृशप्रागभावमादाय सिद्धसाधनताऽर्थान्तरो वा मा भूदिति स्वप्रागभावव्यतिरिक्तेति चोक्तम्। एवमुक्ताऽनुमानेनाभीप्सितस्य भावरूपज्ञानस्य सिद्धिः। उक्तं च सर्वज्ञात्ममुनिना–

**नाभावताऽस्य घटते वरणात्मकत्वान्नाभावमावरणमाहुरभावशौण्डाः।**
**अज्ञानमावरणमाह च वासुदेवस्तद्भावरूपमिति तेन वयं प्रतीमः[1]।।इति।**

**अज्ञानस्यावरणविक्षेपशक्तिमत्त्वम्**

तत्राज्ञाने आवरणविक्षेपाख्ये द्वे शक्ती वर्तेते। आवरणशक्तिर्ब्रह्मस्वरूपमावृणोति, विक्षेपशक्तिश्चाखिलमिदं जगत् तत्र कल्पयति। तदुक्तं शङ्करभगवत्पादैः–

**शक्तिद्वयं हि मायाया विक्षेपाऽऽवृत्तिरूपकम्।**
**विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेत्।।**

---

सिद्धसाधनता अथवा अर्थान्तर न हो जाय एतदर्थ साध्यदल में स्वप्रागभावव्यतिरिक्त पद का उपादान किया गया है। इस प्रकार उक्त अनुमान प्रयोग से वेदान्तदर्शनाभीप्सित भावरूप अज्ञान की सिद्धि होती है। सर्वात्ममुनि ने सुस्पष्ट किया है—

नाभावतास्य घटते.........तेन वयं प्रतीमः।।१ इति ।।

अर्थ यह है- अज्ञान=अविद्या की अभावरूपता सुघटित नहीं हो सकती क्योंकि अज्ञान द्वारा आवरण होता है जबकि अभाव द्वारा कोई भी आवरण सम्भव नहीं है। अभावविषयक पण्डितजन अभावकृत आवरण की सम्भावना का प्रतिषेध करते हैं। भगवान् वासुदेव ने "अज्ञानेनावृतं ज्ञानम्" कहकर स्पष्टरूप से अज्ञान को आवरण कहा है अतः अज्ञान, अभावविलक्षण भावस्वरूप है- ऐसा हमें सिद्धान्त रूप से अभिप्रेत है।

**अज्ञान की आवरणशक्ति एवं विक्षेपशक्ति**

अज्ञान=अविद्या में आवरण एवं विक्षेप नामक दो शक्तियों की विद्यमानता रहती है। आवरणशक्ति द्वारा ब्रह्म के स्वरूप का आच्छादन हो जाता है। तदनन्तर उस ब्रह्मस्वरूप के अधिष्ठान पर विक्षेपशक्ति द्वारा निखिल जगत् की सृष्टि उपकल्पित होती है। भगवत्पाद शङ्कराचार्य ने कहा है-

शक्तिद्वयं हि ............... सा संसारस्य कारणम् ।।२।।

---

१. सं० शा० १।३२०.

अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम्[१]।।इति।

ननु परिच्छिन्नेनाज्ञानेन कथं ब्रह्मण आवरणसंभव इति चेत्, सत्यम्। नह्यज्ञानस्य वस्तुतो ब्रह्माऽऽवरकत्वम्, अथापि यथा मेघोऽवलोकयितृनयन-पथपिधायकतयाऽनेकयोजनायतमादित्यमण्डलमाच्छादयन्निव प्रतिभाति, तथाऽज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायक्तयाऽऽच्छा-दयदिव प्रतीयते। तथा चोदाहृता हस्तामलकोक्तिः श्रीमता सदानन्दयतिना–

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः।
तथा बद्धवद् भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा[२]।।इति।

---

अर्थ सुस्पष्ट है माया=अविद्या (अर्थात् अज्ञान) की दो प्रकार की शक्ति होती है– विक्षेप और आवरण। विक्षेपशक्ति, लिङ्गशरीर से लेकर ब्रह्माण्डपर्यन्त जगत् की सृष्टि में कारण बनती है। दूसरी शक्ति आवरणसंज्ञक है। वह आभ्यन्तर स्तर पर दृक् एवं दृश्य के भेद को आवृत करती है तथा बाह्य स्तर पर ब्रह्म एवं सृष्टि को आवृत करती है। एतावता यह संसार की उत्पत्ति में कारणता की भूमिका को स्वीकार करती है। यहाँ जिज्ञासा उदित होती है कि परिच्छिन्न अज्ञान से ब्रह्म का आवरण कैसे सम्भव है? यह जिज्ञासा सचमुच असमाधेय एवं अर्धसत्य है। वस्तुतः अज्ञान में ब्रह्म को आवृत करने की क्षमता विद्यमान नहीं है। एक दृष्टान्त के माध्यम से इसकी सम्भावना प्रतिपादित होती है। यथा मेघ=बादल अल्पदेशवृत्ति होकर भी हमारी (अवलोकयिता) की दृष्टि को आच्छादित कर लेती है। मेघ के व्यवधान बन जाने से अनेक योजनों में फैले हुए आदित्यमण्डल को लघुमेघ खण्ड भी नयनपथ के आच्छादन से मानो आच्छादित कर लेता है ऐसा प्रतिभात होता है। तद्वत् अज्ञान यद्यपि आत्मा की अपेक्षा से अत्यन्त परिच्छिन्न=लघु है तथापि यह अपरिच्छिन्न असंसारी आत्मा को इसलिये आवृत कर लेता है कि इसके द्वारा अवलोकयिता जीव की बुद्धि ही पिहित हो जाती है। बुद्धि के आच्छादित हो जाने से असंसारी आत्मा=ब्रह्म भी हमारी समझ के परे हो जाते हैं। इस बात को सुविशदरूप से अवगम करने हेतु श्रीसदानन्दयति ने आचार्य हस्तामलक के वचनों को उदाहृत किया है—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं.........स्वरूपोऽहमात्मा।।१।।

अर्थ सुस्पष्ट है- यद्वत् अतिमूढ व्यक्ति घन=मेघ से दृष्टि के ढकने के कारण

---

१. वा० सु० १३, १५ श्लो०।
२. वे० सा०, पृ० १४.

**अज्ञानस्याश्रयत्वविषयत्वविचारः**

अद्वैतसिद्धान्तेऽज्ञानस्याश्रयत्वविषयत्वविषये परस्परवैमत्यं दृश्यते। तत्र सर्वज्ञात्ममुनिः—

**आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।**
**पूर्वसिद्धतमसो हि पश्चिमो नाऽऽश्रयो भवति नापि गोचरः।।**[1]

इत्यज्ञानस्याश्रयो विषयश्च शुद्धचैतन्यमेवेति पंक्षमुपस्थापयति। अज्ञानसिद्ध्युत्तरकाले हि जीवसिद्धिः। अत उत्तरकालीने जीवे न पूर्वतनाज्ञानस्याश्रयत्वं विषयत्वं वा संभवतीति मुनेस्तात्पर्यम्। एतन्मतानुसारेण 'अहमज्ञः' इति जीवे प्रतीयमानस्याज्ञानस्य नाऽहङ्कारविशिष्टं चैतन्यमाश्रयः, किन्त्वहङ्कारोपहितं शुद्धचैतन्यमेवेति विज्ञेयम्। शुद्धचैतन्याश्रितमप्यज्ञानं

---

सूर्य को ही आच्छादित एवं निष्प्रभ समझता है तद्वत् मुग्धबोध जीव नित्य-प्रत्यक्ष स्वस्वरूप ब्रह्म को आच्छादित=परोक्ष समझकर बद्ध=संसारी बनकर भटक रहा है।।

**अज्ञान के आश्रय एवं विषय के सम्बन्ध विचार**

अद्वैत सिद्धान्त में अज्ञान का आश्रय कौन है? तथा उसका विषय क्या है? इस सन्दर्भ में आचार्यों में वैमत्य दृष्टिगोचर होता है। इस सन्दर्भ में सर्वज्ञात्ममुनि ने कहा है— जीवेश्वरविभागरहित शुद्धचिति केवल चिद् कहलाती है। वही अज्ञान का आश्रय एवं विषय है। क्योंकि अज्ञान अनादि होने से पूर्व सिद्ध है उसका आश्रय एवं विषय भी पूर्वसिद्ध केवला चिति ही हो सकती है। अज्ञानमूलक भेद से जनित जीव अथवा ईश्वर पूर्वसिद्ध अज्ञान के आश्रय अथवा विषय इसलिये नहीं माने जा सकते क्योंकि ये दोनों अज्ञानसापेक्ष हैं तथा पश्चिमवृत्ति हैं। एवञ्च इनके मत में अज्ञान का आश्रय एवं विषय शुद्धचैतन्य ही है- यह पक्ष दृढ़ होता है। अज्ञानसिद्धि के उत्तरकाल में ही तदधीन जीव की सिद्धि होगी। एवं च स्वाभाविक रूप से उत्तरकालिक जीव में पूर्वतन अज्ञान की आश्रयता अथवा विषयता सम्भव नहीं है- यह मुनि का तात्पर्य है। इस मत में "अहमज्ञः" इस अनुभवबल से उन्नीत जीव में प्रतीयमान अज्ञान का आश्रय अहंकार-विशिष्ट-चैतन्य नहीं है अपितु अहंकारोपहित शुद्ध चैतन्य ही है। शुद्ध चैतन्य में आश्रित होने पर भी अज्ञान स्वप्रयुक्त संसारबन्धन को जीव में ही

---

१. सं० शा० १।३।१९.

स्वकृतसंसारबन्धनं जीव एव समुत्पादयति, उपाधेः प्रतिबिम्बपक्षपातित्वात्। तदुक्तं मुनिना–

सुकृतदुष्कृतकर्मणि कर्तृतां मतिगतात्मचितिप्रतिबिम्बकम्।
व्रजति तद्वददः परमात्मनो जगति याति तमः प्रतिबिम्बकम्[३]।।इति।

श्रीवाचस्पतिमिश्राः–"नाविद्या ब्रह्माश्रया, किन्तु जीवे। सा त्वनिर्वचनीया[४], विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः"[५] इत्यादिस्थलेष्वज्ञानस्य जीवाश्रितत्वं ब्रह्मविषयत्वं च प्रतिपादयामासुः। अत्राऽऽध्यासिकसम्बन्धेन ब्रह्मणि विद्यमानमप्यज्ञानमाच्छाद्यतासम्बन्धेन जीव एव वर्तते, न तु ब्रह्मणि। 'नास्ति ब्रह्म, न भाति ब्रह्म' इत्यसत्त्वाऽऽपादकाऽभानाऽऽपादकयोरावरणयोर्जीव एव सम्भवाज्जीवाश्रया ब्रह्मपदा ह्यविद्या इति कथयता श्रीमिश्रमहाभागानामाशय इति गुरुवर्याः प० देवस्वरूपमिश्रमहाभागाः समालोचयन्ति[६]।

---

उत्पादित करता है। सदैव उपाधि में प्रतिबिम्ब का पक्षपात देखा जाता है। संक्षेप शारीरककार ने सुस्पष्ट कहा है—

सुकृतदुष्कृतकर्मणि कर्तृतां........तमः प्रतिबिम्बकम् ।।१।।

आचार्य वाचस्पति मिश्र का मत उनसे भिन्न है। वह ब्रह्म को अविद्या का आश्रय नहीं मानते प्रत्युत जीव को मानते हैं। यतश्च अविद्या अनिर्वचनीय है परमार्थस्वभाव नहीं है अतः वह विद्यास्वभाव ब्रह्म में आश्रित होकर नहीं रह सकती। ब्र.सू.शा. भाष्य में अनेक स्थलों में उन्होंने अज्ञान में जीवाश्रितत्व तथा ब्रह्मविषयत्व का प्रतिपादन किया है। तदनुसार आध्यासिक सम्बन्ध से ब्रह्म में विद्यमान अज्ञान आच्छाद्यतासम्बन्ध से जीव में ही रहती है, ब्रह्म में नहीं।

"नास्ति ब्रह्म"- असत्त्वापादक आवरण है तथा "न भाति ब्रह्म" अभानापादक कारण है- ये द्विविध आवरण जीव में ही सम्भव है। यही आशय वाचस्पतिमिश्र के "जीवात्मा ब्रह्मपदा ह्यविद्या"- कथन का आशय है- ऐसा गुरुप्रवर पं. देवस्वरूप मिश्र महानुभाव की समालोचना हुआ करती थी।

---

३. सं० शा० १।३२.

४. ब्र० सू० भा० १।१।४.

५. ब्र० सू० भा० १।४।३.

६. सा० सु०, व० २७, अ० ४, पृ० ३०४.

## अज्ञानस्य माया-अविद्याभेदेन द्वैविध्यम्

इदं चाज्ञानं "माया चाविद्या च स्वयमेव भवति"[१] इति श्रुत्या माया, अविद्या चेति द्विविधं भवति। तत्र रजस्तमोभ्यामनभिभूतशुद्धसत्त्वगुणप्रधानतया 'माया' इति, रजस्तमोभ्यामभिभूताऽशुद्धसत्त्वगुणप्रधानतया च 'अविद्या' इति कथ्यते। इमे एव मायाऽविद्ये समष्ट्यज्ञानं व्यष्ट्यज्ञानमिति च व्यवह्रियेते। तत्र समष्ट्यज्ञानरूपा माया विक्षेपांशप्रधाना, व्यष्ट्यज्ञानरूपाविद्या चावरणांशप्रधानेति प्रतिपाद्यते। एतादृशशुद्धसत्त्वप्रधानमायोपाधिना च पूर्वोक्तब्रह्मचैतन्यमेव 'ईश्वरः' इति, मलिनसत्त्वप्रधानाविद्योपाधिना 'जीवः' इत्याख्यायते। तत्र मायोपाधेः शुद्धत्वादीश्वरः सर्वज्ञत्वादिगुणयुक्तः, अविद्योपाधेरशुद्धत्वाच्च जीवोऽल्पज्ञत्वादिगुणयुक्तः। तदुक्तं श्रीमता सदानन्दयतिना-"इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना। एतदुपहितं चैतन्यं सर्वज्ञत्व-सर्वेश्वरत्व-सर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते, सकलाज्ञानावभासकत्वात्,.............इयं व्यष्टिर्निकृष्टोपाधितया

---

### अज्ञान के दो प्रभेद- माया एवं अविद्या

उपर्युक्त अज्ञान "माया चाविद्या च स्वयमेव भवति"- इस श्रुति बल से दो प्रकार का होता है- (१) माया एवं (२) अविद्या। रजोगुण एवं तमोगुण से अनभिभूत शुद्धसत्वगुण की प्रधानता होने पर अज्ञान की संज्ञा- "माया" व्यवहृत होती है। तद्वत् रजोगुण एवं तमोगुण से अभिभूत अतएव अशुद्ध सत्त्वगुण की प्रधानता से अज्ञान की संज्ञा "अविद्या" व्यवहृत होती है। माया के लिये समष्टि-अज्ञान तथा अविद्या के लिये व्यष्टि-अज्ञान का व्यवहार भी होता है। समष्टि अज्ञान-स्वरूप माया में विक्षेपशक्ति की प्रधानता होती है। व्यष्टि-अज्ञानस्वरूप अविद्या में आवरणशक्ति की प्रधानता होती है।

उपर्युक्त शुद्धसत्त्वप्रधान माया उपाधि से उपहित ब्रह्मचैतन्य "ईश्वर" कहलाता है एवं मलिनसत्त्वप्रधान अविद्या उपाधि से उपहित ब्रह्मचैतन्य "जीव" कहलाता है। यतश्च माया उपाधि शुद्ध होती है अतः उससे विशिष्ट ईश्वर में सर्वज्ञत्वादि गुण विद्यमान होते हैं तद्वत् अविद्या उपाधि के अशुद्ध=मलिन होने से जीव में अल्पज्ञत्वादि गुण विद्यमान होते हैं। श्री सदानन्द यति ने सुस्पष्ट कहा है— "यह अज्ञान-समष्टि उत्कृष्ट उपाधि से युक्त होकर विशुद्ध सत्त्वप्रधान होती है। इससे उपहित चैतन्य में सर्वज्ञत्व, सर्वेश्वरत्व, सर्वनियन्तृत्व प्रभृति गुण विद्यमान होते हैं। ऐसे चैतन्य को

---

१. नृसिंहो० ९ खण्डे।

मलिनसत्त्वप्रधाना। एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ[१] इत्युच्यते, एकाज्ञानावभासकत्वात्[२]" इति।

### ईश्वरविषयेऽद्वैताचार्याणां पक्षाः

अद्वैतवेदान्ते आभासवादः प्रतिबिम्बवादः, अवच्छेदवाद इति जीवेश्वरस्वरूपनिरूपणे त्रयो वादा आचार्यैः स्वीकृताः। तत्र श्रीविद्यारण्यस्वामिनामाभासवादः। श्रीस्वामिनः–"जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति[३]" इति श्रुतिप्रामाण्येन शुद्धसत्त्वप्रधानायां मायायां ब्रह्मचैतन्यस्य य आभासः, स ईश्वर इति प्रतिपादयन्ति। तदुक्तम्–

> मायाभासेन जीवेशौ करोतीति श्रुतौ श्रुतम्।
> मेघाकाशजलाकाशाविव तौ सुव्यवस्थितौ।।

---

अव्यक्त, अन्तर्यामी, जगत्कारण एवं ईश्वर शब्द से व्यपदिष्ट किया जाता है। क्योंकि ईश्वर द्वारा सकल अज्ञान का अवभासन होता है। अज्ञान की व्यष्टि निकृष्ट उपाधि है एवं मलिन सत्त्वप्रधान है। इससे उपहित चैतन्य अल्पज्ञत्व, अनीश्वरत्व प्रभृति गुणों से युक्त होता है। यह प्राज्ञ शब्द से व्यपदिष्ट होता है क्योंकि जीव-प्राज्ञ द्वारा अज्ञान-व्यष्टि का अवभासन होता है।

### ईश्वर के सन्दर्भ में अद्वैतमत प्रतिपादक आचार्यों के अनेक पक्ष

जीव एवं ईश्वर के स्वरूपवर्णनप्रसङ्ग में अद्वैतवेदान्त में आचार्यों ने तीन वादों (सिद्धान्तों) को पुरस्कृत किया है— (१) आभासवाद, (२) प्रतिबिम्बवाद तथा (३) अवच्छेदवाद। श्रीविद्यारण्यस्वामी जी ने आभासवाद की प्रतिष्ठा की है। श्री स्वामीजी ने "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति"- इस श्रुति को प्रमाणवचन के रूप में स्वीकार कर शुद्धसत्त्वप्रधान माया में ब्रह्मचैतन्य के आभास को "ईश्वर" प्रतिपादित किया है। उनका वचन निम्नाङ्कित है—

मायाभासेन..........तेन सर्वज्ञ ईरितः।।३।।

उपर्युक्त वचन में श्रीविद्यारण्यस्वामी जी ने ईश्वर की सर्वज्ञता को सम्पादित

---

१. "अस्य जीवस्यास्पष्टोपाधितया रजस्तमोभ्यामभिभूतसत्त्वप्रधानव्यष्ट्यज्ञानोपाधिकत्वेन हेतुनाऽतिप्रकाशकत्वाभावात् प्राज्ञशब्दवाच्यत्वमित्यर्थः। प्रायेणाज्ञः प्राज्ञ इत्युक्तं भवति" (वे० सा० विद्वन्मनोरञ्जिनी, पृ० ९४)।

२. वे० सा०, पृ० ०-११.

३. नृसिंहो० ९ खण्डे।

मेघवद् वर्तते माया मेघस्थिततुषारवत्।
धीवासनाश्चिदाभासस्तुषारस्थखवत् स्थितः।।
अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः।
ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः[१]।।इति।

अत्रेश्वरस्य सर्वज्ञत्वसम्पादनार्थं श्रीविद्यारण्यस्वामिभिर्जीवानां बुद्धिवासनाविशिष्टमायायां य आभासः, स ईश्वर इति प्रतिपादितम्।

श्रीमतां विद्यारण्यस्वामिनामयं पक्षो न युक्त इति श्रीमन्तो निश्चलदासा विवेचयन्ति। तेषामयमाशयः—सर्वबुद्धिवासनानां मायाया विशेषणत्वे प्रलयकालं विना तेषां क्रोडीभावाऽभावात् प्रलयकाल एवेश्वरः सर्वज्ञः स्यात्, न सर्वदा। केवलबुद्धिवासनानामीश्वरोपाधित्वे किं वासनाभेदेन प्रतिबिम्बभेदः? उत सर्ववासनास्वेक एव प्रतिबिम्बः? आद्ये वासनाऽनन्त्यादीश्वरानन्त्यप्रसङ्गः। द्वितीये प्रलयं विना वासनानां सम्मेलनाभाव इति पूर्वोक्त एव दोषः। किञ्च, उपाधिभूतानां वासनानामानन्त्यादनेका एव प्रतिबिम्बाः स्युरिति नैकेश्वरत्वसम्भवः।

---

करने हेतु जीवों के बुद्धिवासनाविशिष्ट माया में प्रतिफलित आभास को ईश्वर कहा है। श्रीविद्यारण्यस्वामी का उपर्युक्त पक्ष युक्तिसंगत नहीं है- ऐसा श्रीनिश्चलदास जी विवेचन करते हैं। उनका यह आशय है- सकल बुद्धिवासनाओं को माया का विशेषण मानने पर प्रलय काल की उपस्थिति के बिना उन समस्त वासनाओं का क्रोडीभाव सम्भव नहीं होगा। एतावता केवल प्रलयकाल में ही ईश्वर की सर्वज्ञता प्राप्त होगी सर्गकाल (सर्वकाल) में नहीं। केवल बुद्धिवासनाओं को ईश्वर की उपाधि मानने पर वासनाभेद से प्रतिबिम्बभेद स्वीकार्य है? अथवा समस्त वासनाओं में एक ही प्रतिबिम्ब स्वीकार्य है? प्रथमपक्ष में वासनाओं के आनन्त्य से ईश्वर का आनन्त्य अतिप्रसक्त होगा। द्वितीय पक्ष प्रलयावस्था =प्रलयकाल के अतिरिक्त काल में वासनाओं का एकत्र सम्मेलन असम्भव होने से प्रलयकाल मात्र में ईश्वर की सर्वज्ञता प्राप्त होगी अन्यकाल में नहीं- ऐसा पूर्वोक्त दोष दुरुद्धर होगा। इतना ही नहीं- उपाधिभेद से उपहितभेद होना न्यायसिद्ध है। ततश्च उपाधियों के आनन्त्य से प्रतिबिम्ब का भी आनन्त्य ही होगा- एतावता एक ईश्वर की सिद्धि नहीं हो सकती है। अतः ईश्वर की सर्वज्ञता का समर्थन करने हेतु माया की शुद्ध-सत्वांशता की अनिवार्यता मान्य होगी। एवञ्च माया का स्वरूप बुद्धिवासनाविशिष्ट माना जाय- यह प्रतिपादन सर्वथा अनुपयुक्त है।

---

१. पञ्च० ६।५।५-५६, ६१.

तस्मात् सर्वज्ञत्वसमर्थनं मायायाः शुद्धसत्त्वांशेनैव संभवतीति न मायाया बुद्धिवासनाविशिष्टत्वप्रतिपादनं[१] युक्तमिति।

प्रतिबिम्बवादिषु जीवेश्वरयोरुभयोरपि प्रतिबिम्बत्वमित्येकः पक्षः, जीवस्यैव प्रतिबिम्बत्वं नेश्वरस्येत्यपरः पक्षः। तत्र विवरणानुसारिणः–

**विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने।**
**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति[२]।।**

इति श्रुतिबलेनैकमेवाज्ञानमङ्गीकृत्य तत्र बिम्बभूतं चैतन्यमीश्वरः, प्रतिबिम्बश्च जीव इति प्रतिपादयन्ति। ईश्वरस्यापि प्रतिबिम्बत्वे तस्य स्वातन्त्र्यहानिः स्यादित्येषामाशयः। तथा सत्येव प्रतिबिम्बपक्षपातिनोऽविद्यया जीवे संसारापादकत्वमपि संभवति।

---

जो अद्वैती आचार्य प्रतिबिम्बवाद का सिद्धान्त स्वीकार करते हैं उनमें भी दो पक्ष दृष्टिगोचर होते हैं- (१) जीव एवं ईश्वर दोनों की प्रतिबिम्बरूपता है तथा (२) जीव की ही प्रतिबिम्बरूपता है ईश्वर की नहीं। विवरणाचार्य के अनुयायिगण निम्नाङ्कित श्रुतिवचन को प्रमाणरूप से स्वीकार करते हैं-

"विभेदजनके ज्ञाने...........असन्तं कः करिष्यति।।१।।

अर्थ यह है- मुने! आत्मा एवं ब्रह्म के मध्य, भेद का बोध अज्ञान है। जब ज्ञान के उदित होने पर अज्ञान नष्ट हो जायेगा तो अज्ञान-कार्य भेद भी नष्ट हो जायेगा- ऐसी स्थिति में आत्मा तथा ब्रह्म के मध्य अविद्यमान भेद को कोई भी उत्पन्न कैसे कर सकता है। इस श्रुति प्रमाण के आधार पर एक अज्ञान को स्वीकार किया जाता है। उसमें बिम्बभूत चैतन्य ईश्वर कहलाता है तथा प्रतिबिम्बभूत चैतन्य जीव कहलाता है- ऐसा प्रतिपादन विवरणानुयायी के मत में किया जाता है। इनका आशय यह है- यदि ईश्वर को भी प्रतिबिम्बस्वरूप माने तो उनके स्वातन्त्र्य की हानि अतिप्रसक्त होगी। जीव में प्रतिबिम्बरूपता होने से स्वातन्त्र्य की हानि होती है अत एव जीव में अविद्याप्रयुक्त संसारिता=बन्धोपनिपातिता सम्भव होती है।

संक्षेपशारीरककार के मत में जीव एवं ईश्वर दोनों को प्रतिबिम्बरूप माना जाता है। एतदर्थ "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इस श्रुतिवचन को प्रमाण माना जाता है। कार्य एवं कारण इन दो प्रभेदों में विभाजित होने से द्विविध उपाधि

---

१. वृत्तिप्रभाकरे, पृ० ४२५-४२७.
२. जा० द० ४।६३.

संक्षेपशारीरककारास्तु–"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः[१]" इति श्रुत्या कार्यकारणभेदेनोपाधिद्वयस्य प्रतिपादितत्वात् कारणोपाध्याख्यायां मायायां चित्प्रतिबिम्ब ईश्वर इति, कार्योपाधावन्तःकरणे चित्प्रतिबिम्बो जीव इति जीवेश्वरयोरुभयोरपि प्रतिबिम्बत्वं प्रतिपादयामासुः। तदुक्तम्–"मायोपाधेरद्वय-स्येश्वरत्वं कार्योपाधेर्जीवता च प्रतीचः[२] इति। अस्मिन् पक्षे शुद्धं ब्रह्मचैतन्यमेव बिम्बरूपम्।

अवच्छेदवादिनो वाचस्पतिमिश्राः–नीरूपस्य चैतन्यस्य प्रतिबिम्बा-ऽसम्भवात्तदनङ्गीकुर्वद्भ्योऽवच्छदेवादो रोचते। ते तु–"नाविद्या ब्रह्माश्रया, किन्तु जीवे, सा त्वनिर्वचनीया[३]" इत्यादिस्थलेष्वज्ञानस्य जीवाश्रितत्वं

---

मानी जाती है- (१) कारणोपाधि माया एवं (२) कार्योपाधि अन्तःकरण। माया में प्रतिबिम्बित शुद्धचिति= विशुद्धब्रह्म, ईश्वर कहलाते हैं तथा अन्तःकरण में प्रतिबिम्बित होने से जीव कहलाते हैं। इस प्रकार ईश्वर तथा जीव दोनों की प्रतिबिम्बिता इस मत में प्रतिपादित की गई है। तदनुकूल वचन प्राप्त होता है- एक ही ब्रह्म की माया उपाधि के संयोग से ईश्वररूपता सुघटित होती है तथा अन्तःकरण (कार्योपाधि) उपाधि के संयोग से जीवरूपता भी घटित होती है। इस मत में शुद्ध चैतन्य की बिम्बरूपता स्वीकार्य है।

श्रीवाचस्पति मिश्र जी अवच्छेदसिद्धान्त को प्रतिष्ठापित करते हैं। यतश्च चैतन्य नीरूप है अतः उसका प्रतिबिम्ब सम्भव नहीं है। रूपवान् वस्तुओं का ही प्रतिबिम्ब देखा जाता है रूपरहित का नहीं। अत एव श्रीमिश्रजी प्रतिबिम्बवाद की उपेक्षा करते हैं तथा अद्वैत की स्थापना हेतु अवच्छेदवाद का आश्रय ग्रहण करते हैं। उन्होंने अनेक स्थलों में "अविद्या ब्रह्म में आश्रित नहीं हो सकती वह जीव में आश्रित हो सकती है तथा वह अविद्या सदसद्-विलक्षण होने से अनिर्वचनीय है ऐसा कहते हैं। एतावता आप स्पष्टरूप से जीवाश्रित एवं ब्रह्मविषयकअज्ञान- के सिद्धान्त का समर्थक हैं। अतश्च श्रीमिश्रमत में अविद्यावच्छिन्न चैतन्य जीव कहलाता है तथा अविद्या से अनवच्छिन्न चैतन्य ईश्वर कहलाता है- यह निर्विवाद है। श्रीनिश्चलदास अविद्यानवच्छिन्न चैतन्य को ईश्वर मानने के श्रीमिश्रसिद्धान्त से सहमत नहीं हैं। उनका आशय यह है- अविद्या से अनवच्छिन्न अथवा अन्तःकरण से अनवच्छिन्न चैतन्य को ईश्वर मानने पर ईश्वर की उपाधि-रहितता प्रतिपादित होती है।

---

१. त्रि० म० ना० ४।८.
२. सं० शा० ३।१४८.
३. ब्र० सू० भा० १।१।४.

ब्रह्मविषयत्वं चोचुः। अतस्तन्मतानुसारेणाविद्याऽवच्छिन्नं चैतन्यं जीवः, तदनवच्छिन्नं चैतन्यमीश्वर इति सिद्ध्यति। अत्राऽनवच्छिन्नं चैतन्यमीश्वर इति पक्षो न युक्त इति श्रीनिश्चलदासानां पक्षः। तेषामयमाशयः–अविद्ययाऽन्तःकरणेन वाऽनवच्छिन्नं चैतन्यमीश्वर इति कथनेनेश्वरस्योपाध्यभावः सूचितो भवति। ईश्वरस्य सर्वज्ञत्वादिगुणानामौपाधिकत्वाद् उपाधिं विना तस्य सर्वज्ञत्वादिकं न संभवति। अतस्तस्य सर्वज्ञत्वाद्युत्कृष्टगुणलाभार्थं मायावच्छिन्नं चैतन्यमीश्वर इति कथनमेव योग्यम्। तथा सत्येव मायायाः सर्वदेशगतत्वादीश्वरस्यापि सर्वाऽन्तर्यामित्वमपि सिद्ध्यतीति[1]।

तदेतावता निश्चीयते यदाभासवाद–प्रतिबिम्बवाद–अवच्छेदवादा यद्यपि प्रक्रियाभेदेनेश्वरस्वरूपं प्रतिपादयन्ति, तथापि सर्वत्रेश्वरः सर्वज्ञत्वसर्वकर्तृत्वादि–गुणयुक्त एवाभ्युपगतः। तस्माददद्वैतवेदान्ते सगुणं ब्रह्म एवेश्वरपदवाच्यम्। अयं चेश्वरो नैयायिकाभिमतेश्वरवज्जगन्निर्माणे न केवलं निमित्तकारणम्, किन्तु, "यथोर्णनाभिः सृजते गृह्णते च[2]" इति श्रुत्याऽभिन्ननिमित्तोपादानकारणम्।

---

यतश्च ईश्वर में सर्वज्ञत्व, सर्वकर्तृत्व प्रभृति गुणों की औपाधिकता है अतः उपाधि स्वीकार आवश्यक है। अन्यथा उपाधि स्वीकार के अभाव में उनकी सर्वज्ञताप्रभृति गुणावली की उपपत्ति सम्भव नहीं होगी। अतः ईश्वर के सर्वज्ञत्व प्रभृति उत्कृष्ट गुणों की उपपत्ति हेतु मायावच्छिन्न चैतन्य को ईश्वर मानना उपयुक्त होगा। ऐसा स्वीकार करने से यतश्च माया सर्वदेशगत है अतः तदवच्छिन्न ईश्वर की भी सर्वान्तर्यामिता सिद्ध होगी।

उपर्युक्त वादों की समीक्षा करने से यह निष्कर्ष प्राप्त होता है कि आभासवाद, प्रतिबिम्बवाद एवं अवच्छेदवाद में परस्पर विरोध प्रतीत होते हैं। एवञ्च ईश्वर स्वरूप के प्रतिपादन में प्रक्रियाभेद यद्यपि उपलब्ध हैं तथापि प्रत्येक सिद्धान्त में ईश्वर को सर्वज्ञत्व-सर्वकर्तृत्व प्रभृति गुणों से युक्त माना जाना एक समान है। अतः अद्वैतवेदान्त में सगुण ब्रह्म ही ईश्वरपदवाच्य है। वेदान्तसम्मत ईश्वर, नैयायिकमतसिद्ध ईश्वर की तरह जगत् के निर्माण में केवल निमित्तकारण रूप से मान्य नहीं हैं प्रत्युत "यथोर्णनाभिः सृजते गृह्णते च।" श्रुतिप्रमाण के बल पर अभिन्न निमित्तोपादान कारण माने जाते हैं। अद्वैत मत में ईश्वर की उपाधि माया उपादान कारण है तथा चैतन्यांश निमित्तकारण है- यह विवेचन ध्यातव्य है।

---

१. वृत्तिप्रभाकरे, पृ० ४३५–४३६.
२. मुण्ड० १।१।७.

अत्रेश्वरोपाधिभूता माया उपादानकारणम्, चेतनांशश्च निमित्तकारणमिति विज्ञेयम्।

**ईश्वरास्तित्वे प्रमाणम्**

अद्वैतवेदान्ते ईश्वरास्तित्वे–"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः[१]", "यः सर्वेषु भूतेषु तिष्ठन्[२]", "य इमान् लोकानीशत ईशनीभिः[३]", "जन्माद्यस्य यतः"[४], "शास्त्रयोनित्वात्[५]", 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति[६]" इत्यादिश्रुति–सूत्र–स्मृतयः प्रमाणानि।

**अद्वैतवेदान्ते ईश्वराङ्गीकारे प्रयोजनम्**

न्याय–वैशेषिक–योगदर्शनेष्विवाऽद्वैतवेदान्तेऽपि शुद्धचैतन्यस्येक्षणपूर्वक–स्रष्टृत्वाऽसम्भवाद् मायोपहितचैतन्यस्येश्वरत्वमङ्गीकृतम्। अत एव भगवत्पादभाष्यकाराः–"यतो वा इमानि भूतानि जायन्ते[७]" इति श्रुतिं

---

**ईश्वर के अस्तित्व में प्रमाण**

अद्वैतवेदान्त में ईश्वर के अस्तित्व में विभिन्न प्रमाण वचन प्राप्त (आदृत) हैं। तद्यथा- "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।", "यः सर्वेषु भूतेषु तिष्ठन्" तथा "य इमान् लोकानीशत ईशनीभिः।" इत्यादि श्रुतिवचन प्रमाण हैं। "जन्माद्यस्य यतः।" एवं "शास्त्रयोनित्वात्।" इत्यादि सूत्रवचन प्रमाण हैं। एवं "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।" इत्यादि स्मृतिवचन ईश्वर के अस्तित्व में प्रमाण हैं।

**अद्वैत वेदान्त में ईश्वर-स्वीकार का प्रयोजन**

न्याय, वैशेषिक एवं योग-दर्शनों की तरह अद्वैतवेदान्त दर्शन में भी शुद्ध चैतन्य में ईक्षण पूर्वक सृष्टिकारिता की सम्भावना निरस्त की गई है।

---

१. मुण्ड० १।१।९
२. बृ० उ० ३।७।१५
३. श्वे० उ० ३।२
४. ब्र० सू० १।१।२
५. ब्र० सू० १।१।३
६. भ० गी० १८।६१
७. तै० उ० ३।१

प्रमाणयन्तः शबलब्रह्मण एव जगत्कर्तृत्वादिकं प्रतिपादयन्ति। तथाहि–"अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकाल-निमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्म-स्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्म[१]" इति। एवमेव– "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि[२]" इति श्रुतिप्रामाण्येन भाष्यकाराः–"महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म"[३] इति वेदकर्तृत्वं चेश्वरस्य प्रतिपादयामासुः।

---

परिणामस्वरूप मायोपहित चैतन्य को ईश्वर माना जाता है। अत एव भगवान् भाष्यकार "यतो वा इमानि भूतानि जायन्ते।" इत्यादि श्रुतिवचन को प्रमाण रूप से स्वीकार कर शबल (सगुण) ब्रह्म को जगत् के प्रति कारण स्वीकार करते हैं। उपपत्ति प्रकार यह है— यह दृश्य जगत् नामरूपात्मक है, अनेक कर्ता तथा भोक्ता से युक्त है, कार्यकारणभावापन्न देशकाल-निमित्त-क्रियाफलों का आश्रयभूत है तथा इसकी विलक्षण रचना का चिन्तन भी मनस्= अन्तःकरण स्तर पर सम्भव नहीं है। एतादृश जगत् की सृष्टि, स्थिति एवं संहृति जिस सर्वज्ञ सर्वशक्तिसम्पन्न समर्थकारण से होती है वह ब्रह्मपदवेदनीय है।" तद्वत् अन्य भी उपपत्ति प्रकार द्रष्टव्य है- "अस्य महतो भूतस्य........सर्वाणि निःश्वसितानि।" इस श्रुतिवचन को प्रमाण रूप में स्वीकार कर शारीरकभाष्यकार का उपपादन प्रकार है- महान् ऋग्वेदादि शास्त्र, अनेक विद्यास्थानों में सुविशदरूप से उपबृंहित हैं। ये प्रदीपवत् समस्त अर्थों के प्रकाशक हैं तथा सर्वज्ञकल्प हैं। इनके प्रकाशक एवं निर्माता भी सर्वज्ञ ब्रह्म हैं। एतावता जगत् के निर्माता होने के साथ वेदों के निर्माता भी ईश्वर हैं- ऐसा भगवान् भाष्यकार का सुस्पष्ट प्रतिपादन (सिद्धान्त) है।

**सृष्टि की लीलारूपता**

जगत् की सृष्टि करने वाले ईश्वर की स्वयं किसी प्रयोजन से प्रवृत्ति मानी जाय तो उनकी नित्यतृप्तता व्याहत होगी। यदि निष्प्रयोजन प्रवृत्ति मानी जाय तो

---

७. ब्र० सू० शा० भा० १।१।२

८. बृ० उ० २।४।१०

९. ब्र० सू० शा० भा० १।१।३

**सृष्टेर्लीलारूपत्वम्**

जगत्कर्तुरीश्वरस्य स्वतः प्रयोजनसत्त्वे नित्यतृप्तत्वहानिः, प्रयोजनाभावे चोन्मत्तप्रवृत्तिप्रसङ्गस्तथा सर्वज्ञत्वहानिश्चेति सांख्यादिकृताऽऽक्षेपस्य परिहारमद्वैतिनो लीलावादेन कुर्वन्ति। तदुक्तं बादरायणेन–"लोकवत्तु लीलाकैवल्यम्"[१] इति। अत्राऽयं भावः– लीलाभिन्ना याः प्रवृत्तयस्तदर्थमेव प्रयोजनविशेषप्रतिसन्धान-स्यावश्यकता। याश्च पुनर्लीलारूपास्ताः प्रयोजनं नापेक्षन्त एव। यथा लोके आप्तकामस्य कस्यचिद् राज्ञस्तदमात्यादेर्वा क्रीडादिषु प्रवृत्तिः प्रयोजनमनुद्दिश्यैव भवति, तद्वदीश्वरस्यापि।

ननु महतीयं विश्वरचना कथं लीला इत्युच्यत इति चेत्, सत्यम्, अल्पज्ञानामल्पशक्तियुक्तानामस्माकं कृते विश्वरचना महतीव प्रतिभाति, अथापि सर्वज्ञस्य सर्वशक्तिसमन्वितस्येश्वरस्य कृते तु लीलैव केवलम्। नन्वेवं सति का नाम लीलाप्रवृत्तिरिति जिज्ञासायाम् इदमेव वक्तुं शक्यते यद् या

---

उनकी उन्मत्तवत् प्रवृत्ति का आपादन होगा। तद्वत् सर्वज्ञता की हानि भी अतिप्रसक्त होगी। ऐसे कई आक्षेप, सांख्य-योग-न्याय-वैशेषिक प्रभृति दर्शन की ओर से अद्वैतवेदान्त के प्रति आपतित होते हैं, उनका निराकरण करने हेतु लीलावाद का आश्रय ग्रहण किया जाता है। इसका संकेत सूत्र द्वारा स्वयं बादरायण=व्यासभगवान् ने किया है- "लोकवत्तु लीला-कैवल्यम्।" इस सूत्र का आशय यह है- लीलासम्पादन हेतु विभिन्न प्रकार की जो प्रवृत्तियाँ होती हैं तदर्थ प्रयोजनविशेष के प्रतिसन्धान की आवश्यकता होती है न कि अप्राप्त की प्राप्ति के उद्देश्य से। जो लीलास्वरूप कृत्य होते हैं उनका अन्य तृप्ति-प्रभृति कोई प्रयोजन नहीं होता। यथा लोक में आप्तकाम किसी राजा या महामात्य प्रभृति की क्रीडा आदि में प्रवृत्ति किसी प्रयोजन के उद्देश्य बिना ही होती है तद्वत् ईश्वर की भी प्रवृत्ति होती है।

यहाँ एक जिज्ञासा उदित होती है- यह विश्वरचना स्वयं में अतिमहती है तब इसे लीला कहकर लघुता क्यों डाली जाती है? इस जिज्ञासा को लीलासंज्ञा देने के नाम पर अर्द्धस्वीकार की सूचना "सत्यम्" कह कर दी गई है। साथ में समाधान भी किया गया है। हम जीव जो अल्पज्ञ तथा अल्पशक्तियुक्त हैं उनके लिये विश्वरचना अतिमहती प्रतिभासित हो यह समुचित है। किन्तु सर्वज्ञ एवं

---

१. ब्र० सू० २।१।३३

प्रवृत्तिरल्पायाससाध्या, विधेयनिष्पत्तिमात्रफलिका, लीलाकर्तुरुद्देश्यस्यासाधिका च सैव लीला। विश्वरचनाया अल्पाऽऽयाससाध्यत्वमुक्तं वाचस्पतिमिश्रैः—

निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि।
स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः[१]।।इति।

यद्यपि लौकिकलीलासु किञ्चिदपि प्रयोजनमुत्प्रेक्षितुं शक्यते, अथापि नेश्वरलीलायां तत्संभवः, "आप्तकामस्य का स्पृहा" इति तस्य नित्यतृप्तत्वप्रतिपादनात्। न चैवं सत्यप्रवृत्तिः, "यतो वा इमानि भूतानि

---

सर्वशक्तिसमन्वित ईश्वर के लिये तो विश्वरचना नितान्त लीलामात्र है। अब विचारणीय है कि लीलाप्रवृत्ति का स्वरूप क्या है? इस जिज्ञासा का समाधान तो यही है- अल्पप्रयत्न साध्य कार्य विशेष (प्रवृत्ति) को लीला कहते हैं अथवा विधेय की निष्पत्ति कर उसके अन्य फल की अनुपस्थिति लीला कहलाती है। तद्वत् लीलाकर्ता के उद्देश्यविशेष की साधिका नहीं हो ऐसी प्रवृत्ति भी लीला कहलाती है।

महान् आचार्यवाचस्पतिमिश्रजी ने विश्वरचना को ईश्वर के अत्यन्त अल्प आयास से साध्य प्रतिपादित किया है— 'निःश्वसितमस्य वेदाः........सुप्तं महाप्रलयः।।१।।

इसका अर्थ है—इस (परमेश्वर) के निःश्वासप्रयत्नतुल्य वेदरचना है, वीक्षणतुल्य पञ्चभूतोत्पत्ति है, स्मिततुल्य आयाससाध्य चराचर जगत है तथा शयनतुल्य आयासजनित महाप्रलय है।।१।।

यद्यपि लोक में विहित लीलाओं में यत्किञ्चित् प्रयोजन भी उत्प्रेक्षित किया जा सकता है तथापि ईश्वर-लीला में यह सम्भव नहीं है। इसका कारण सुस्पष्ट है। "आप्तकाम की कौन-सी स्पृहा हो सकती है"— इस न्याय से नित्य परितृप्त ईश्वर को किसी प्रकार की स्पृहा सम्भव ही नहीं है जिसे उद्देश्य के रूप में प्ररूपित किया जा सके। एतावता हम इस निष्कर्ष को भी प्राप्त नहीं कर सके— मन्द-प्रयोजन के नहीं होने से ईश्वर की प्रवृत्ति होगी ही नहीं। कारण यह है कि "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुति से विश्वरचना में ईश्वरप्रवृत्ति का स्पष्ट प्रतिपादन प्राप्त होता है। उन्मत्त की प्रवृत्ति यद्वत् निष्प्रयोजन परिदृष्ट होती है तद्वत् विश्वरचना में ईश्वर-प्रवृत्ति मान्य नहीं हो सकती। कारण यह

---

१. ब्र० सू० भा० मङ्गलश्लोकः २

जायन्ते"[१] इत्यादिश्रुत्या विश्वरचनायामीश्वरप्रवृत्तेः श्रवणात्। नाप्युन्मत्तप्रवृत्तिः, "यः सर्वज्ञः सर्ववित्"[२] इत्यादिना सर्वज्ञत्वप्रतिपादनात्। अत एव विश्वरचना लीलामात्रमित्येव प्रस्फुटम्।

**वैषम्यनैर्घृण्यदोषपरिहारः**

ननु लीलारूपस्य विश्वस्य वैचित्र्ये यदीश्वरः कारणं तदा तस्य वैषम्यनैर्घृण्यदोषापत्तिः, प्राणिनामदृष्टसापेक्षत्वे चेश्वरस्य प्रभुत्वहानिरिति चेन्न, "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति"[३] इति सूत्रे भगवता बादरायणेनादृष्टसापेक्षेणोक्तदोषस्य निराकृतत्वात्। भगवान् भाष्यकारः–"पुण्यः पुण्येन कर्मणा भवति पापः पापेन[४]" इति श्रुतिं प्रमाणयन् "अतः सृज्यमान-प्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः। ईश्वरस्तु पर्जन्यवद्

---

है "यः सर्वज्ञः सर्ववित्" इत्यादि श्रुतिवचनों द्वारा ईश्वर की सर्वज्ञता प्रमाणित होती है न कि उन्मत्तरूपता। एतावता विश्वरचना ईश्वर की लीलामात्र है— यह निष्कर्ष प्राप्त होता है।

**वैषम्य-नैर्घृण्य दोषपरिहार**

आशङ्का उदित होती है कि लीलास्वरूप विश्वके वैचित्र्य में यदि ईश्वर कारण हैं तो किसी को सुखी बनाना तथा किसी अन्य को दुःखी बनाना-इस विषमता तथा साथ ही निर्दयता की प्राप्ति, ईश्वर में होगी। यदि इन दूषणों का परिहार करने हेतु प्राणियों के विचित्र अदृष्ट की सापेक्षता को सहकारीकारण मानें तो ईश्वर की प्रभुता एवं स्वातन्त्र्य की हानि आपतित होगी। इस आशङ्का को निर्मूल ही समझना चाहिए। भगवान् बादरायण (वेदव्यास) ने "वैषम्यनैर्घृण्ये......." सूत्र का उल्लेख कर अदृष्टमूलक वैषम्य होने से अदृष्टसापेक्ष ईश्वर में वैषम्य अथवा नैर्घृण्य का अपादान प्रतिषिद्ध किया है। भगवान भाष्यकार ने इस सन्दर्भ में दृष्टान्तोपस्थापन के साथ व्यवस्था प्रदान की है। उन्होंने "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" इस श्रुति को प्रमाण वचन के रूप में परिगृहीत करते हुए अपना यह निर्णय दिया है— सृज्यमान प्राणियों के धर्म एवम् अधर्म की अपेक्षा से सृष्टि की विषमता होने से यह

---

१. तै० उ० ३।१

२ मुण्ड० १।१।९

३. ब्र० सू० २।१।३४

४. बृ० उ० ४।४।५

द्रष्टव्यः। यथाहि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति। देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति। एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यतीत्यदृष्टसापेक्षेण नेश्वरस्य वैषम्यादिदोषसंभवः"[१] इति व्यवस्थापयामास। अत्रैव श्रीवाचस्पतिमिश्रमहाभागाः– "न च कर्मापेक्षायामीश्वरस्य ऐश्वर्यव्याघातः। नहि सेवादिकर्मभेदापेक्षः फलप्रदः प्रभुरप्रभुर्भवति[२]" इति सृज्यमानप्राणिकर्मसापेक्षत्वेऽपि नेश्वरस्य प्रभुत्वहानिरिति सदृष्टान्तमूचुः।

तदेवमद्वैतवेदान्ते मायाशबलितं ब्रह्मचैतन्यमेवेश्वरः। मायास्थितशुद्ध-सत्त्वगुणप्राधान्येन तस्य सर्वज्ञत्वादिकं सिद्ध्यति। ईश्वरोपाधिभूतमायाया–

---

ईश्वरकृत अपराध नहीं है। ईश्वर को तो पर्जन्यवद् देखना चाहिए। यद्वत् पर्जन्य, व्रीहियवादि की सृष्टि में साधारण कारण होता है, व्रीहि, यव प्रभृति की विषमता में तत् तद् बीजगत असाधारण सामर्थ्य पर आधारित असाधारण कारण निर्धारित होता है। तद्वत् ईश्वर की साधारणकारणता है— देवमनुष्यपशुप्रभृति की सृष्टि में इसके अतिरिक्त उनके वैषम्य के प्रति असाधारण कारण तो जीवगत कर्म ही होते हैं। एतावता यह निष्कर्ष प्राप्त होता है कि ईश्वर प्राणिगत अदृष्ट सापेक्ष होकर विश्वरचना में प्रवृत्त होते हैं अतः वे वैषम्य एवं नैर्घृण्य दोषों से दूषित नहीं होते अतः अदृष्टसापेक्ष ईश्वर में वैषम्यादि का आपादन नहीं करना चाहिए।" प्रभुत्वव्याघात के सन्दर्भ में श्रीवाचस्पतिमिश्र जी ने सुस्पष्ट समाधान किया है। तद् यथा— "विश्वरचना में प्राणि कर्मसापेक्षता होने से ईश्वर के ऐश्वर्य का व्याघात होगा— ऐसा नहीं कहा जा सकता। कोई राजा विभिन्न सेवाप्रभृति कर्मभेद पर आधारित फलभेद का वितरक होने से अप्रभु नहीं हो जाता।" ऐसा कहकर उन्होंने दृष्टान्त का उपस्थापन करते हुए यह प्रतिपादित किया है कि सृज्यमान-प्राणिकर्म-सापेक्षता होने पर भी ईश्वर की प्रभुता व्याहत नहीं होती।

इस प्रकार अद्वैतवेदान्त में मायाशबलित ब्रह्म-चैतन्य ही ईश्वर है। मायास्थित शुद्ध सत्त्वगुण की प्रधानता होने से ईश्वर में सर्वज्ञत्वादि विशिष्टगुणों की सिद्धि होती है। ईश्वर की उपाधिमाया में आवरणशक्ति का अभाव होने से जीव की तरह ईश्वरस्वरूप का आवरण नहीं होता अतः वह नित्यमुक्त है। वह विश्व के निर्माण

---

१. ब्र० सू० शा० भा० २।१।३४

२. ब्र० सू० भा० २।१।३४

मावरणशक्तेरभावाज्जीववन्नेश्वरस्वरूपावरणमिति स नित्यमुक्तः। स च जगन्निर्माणे उपाध्यंशेनोपादानकारणम्, चेतनांशेन च निमित्तकारणमित्यूर्णनाभिवदभिन्ननिमित्तोपादानकारणमङ्गीक्रियते। किञ्चेदमप्यवगन्तव्यं यदत्रेश्वरो न पारमार्थिकः, किन्तु मायोपहित इति मायावत्तस्यापि मिथ्यात्वमेवाङ्गीक्रियते।

## सिद्धान्तशिखामण्यनुसारेण परशिवस्वरूपम्

तत्र तावद्वीरशैवदर्शने परमतत्त्वं स्थल[४]-लिङ्ग[५]-परशिवा[६]द्यभिधानैर्व्यवह्रियते। सोऽयं परशिवोऽत्र दर्शने सगुणनिर्गुणोभयरूपः। सगुणनिर्गुण- शब्दयोरत्र सकलनिष्कलशब्दाभ्यामपि व्यवहारो दरीदृश्यते। परशिवः स्वशक्तिसङ्कोचेन निर्गुण इति, तद्विकासेन च सगुण इति कथ्यते। तदुदाहृतं भगवत्पादैः श्रीपतिपण्डिताराध्यैः—

---

में उपाधिप्रयुक्त उपादान-कारण बनते हैं तथा चेतनांशप्रयुक्त निमित्तकारण बनते हैं। इस प्रकार ऊर्णनाभि की तरह विश्वसृष्टि में उनकी अभिन्ननिमित्तोपादनकारणता उपपन्न होती है। इतना ही नहीं, यह भी यहाँ ध्यातव्य है कि अद्वैतवेदान्त में ईश्वर को परमार्थतत्त्व नहीं माना गया है। यतश्च मायोपहित-चैतन्य ईश्वर कहलाते हैं अतः माया की तरह मायोपहित की भी मिथ्यारूपता ही सिद्ध होती है।

## सिद्धान्तशिखामणि के अनुसार परशिव का स्वरूप

वीरशैवदर्शन में परमतत्त्व को स्थल, लिङ्ग एवं परशिव इत्यादि नामों से व्यवहृत किया जाता है। यह परशिव इस दर्शन में सगुण निर्गुण उभय रूप हैं। सगुणशब्द के पर्याय सकलशब्द तथा निर्गुण शब्द के पर्याय निष्कलशब्द का व्यवहार भी यहाँ प्राप्त होता है। स्वयं परशिव स्वशक्तिसंकोच से निर्गुण कहलाते हैं तथा स्वशक्तिविकास से सगुण कहलाते हैं। भगवत्पाद श्रीपतिपण्डिताराध्य ने इसे विशदता से प्रतिपादित किया है—

सृष्टेः पूर्वं महादेवः....गुणवानिति कीर्त्यते।।२।।

---

१. यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः।
लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः।। (अनु० सू० २।४)

२. लगयत्यर्थयोर्हेतुभूतवात् सर्वदेहिनाम्।
लिङ्गमित्युच्येत साक्षाच्छिवः सकलनिष्कलः।। (अनु० सू० ३।४)

३. ब्रह्मेति व्यपदेशस्य विषयं यं प्रचक्षते।
वेदान्तिनो जगन्मूलं तं नमामि परं शिवम्।। (सि० शि० १।२, पृ० २)

सृष्टेः पूर्वं महादेवः शक्तिसङ्कोचहेतुना।
निर्गुणत्वेन शास्त्रेषु गीयते तत्त्ववेदिभिः।।
सृष्ट्यादौ परमेशस्य शक्तेः प्राचुर्यवैभवात्।
सर्वज्ञत्वादिकल्याणगुणवानिति कीर्त्यते[1]।।इति।

तस्माद्वीरशैवदर्शने–"अशब्दमस्पर्शमरूपमव्ययं.....[2]", ".....अस्थूल-मनण्वह्रस्वमदीर्घमलोहितम्[3]" इत्यादिनिर्गुणश्रुतीनां सृष्ट्यनुन्मुखपरमेश्वर-शक्तिसङ्कोचकालपरत्वम्, "स ईक्षां चक्रे[4]", "तदैक्षत बहु स्यां प्रजायेय[5]" इत्यादिसगुणश्रुतीनां सृष्ट्युन्मुखपरमेश्वरशक्तिविकासकालपरत्वं चोपपद्यते। किञ्चेदमत्राऽवधेयम्–अद्वैताभिमतं यन्निर्गुणं ब्रह्म तन्निर्विशेषमपि। न चैवमत्र निर्गुणः परशिवो निर्विशेषोऽपि। स्वस्थावस्थायां परशिवे शक्तेर्ज्ञानादिगुणानां

---

इसका अर्थ है— सृष्टि के पूर्व में महादेव यतः स्वशक्तिसंकोच कर लेते हैं अतः शास्त्रों में उनके लिए निर्गुण-शब्द का प्रयोग किया जाता है। सृष्टि के आरम्भ में परमेश्वर की शक्ति का प्राचुर्य अभिवृद्ध हो जाता है। एवंच सर्वज्ञत्व-प्रभृति कल्याणगुणों के उदित होने से परशिव को सगुणशब्द से व्यवहृत किया जाता है॥२॥

अतः वीरशैवदर्शन में "अशब्दमस्पर्शमरूपमयम्...."

".....अस्थूलमनण्वह्रस्वमदीर्घमलोहितम्" इत्यादि गुणनिषेधपरक निर्गुण श्रुतिवचनों का तात्पर्य सृष्टिविमुख परमेश्वर के शक्तिसंकोच काल में है। तद्वत् "स ईक्षांचक्रे" "तदैक्षत बहु स्यां प्रजायेय" इत्यादि सगुण श्रुतिवचनों का तात्पर्य सृष्ट्युन्मुख परमेश्वर के शक्तिविकास काल में है। इस प्रकार परशिव में निर्गुणरूपता तथा सगुणरूपता दोनों की उपपत्ति निर्बाध है।

एक बात अवश्य ध्यातव्य है कि अद्वैतवेदान्त का निर्गुणब्रह्म निर्विशेष कहलाता है। तादृश स्थिति वीरशैव दर्शन में नहीं है। यहाँ निर्गुण परशिव निर्विशेष नहीं है। स्वरूपस्थ की अवस्था में परशिव में शक्ति अर्थात् ज्ञानादि गुणों के विकासाभाव की स्थिति में वह निर्गुण कहलाते हैं तथापि उनमें सूक्ष्मरूप से शक्ति

---

१. ब्र० सू० श्रीकर० १।३।७
२. कठ० २।३
३. बृ० उ० ३।८।८
४. प्रश्नो० ६।३
५. छा० उ० ६।२।३

विकासाभावेन स निर्गुण इत्युच्यमानोऽपि सूक्ष्मरूपेण शक्तेस्तत्र सत्त्वात् स सविशेष इत्येवाङ्गीक्रियत इत्यद्वैतवेदान्तादस्य वैशिष्ट्यम्। अत एव श्रीरेणुकभगवत्पादाः–

**परिच्छेदःकथाशून्यं प्रपञ्चातीतवैभवम्।**
**प्रत्यक्षादिप्रमाणानामगोचरपदे स्थितम्।।**
**स्वप्रकाशं पराकाशमनौपम्यमनामयम्।**
**सर्वज्ञं सर्वगं शान्तं सर्वशक्तिनिरङ्कुशम्[१]।।**

इति निर्गुणपरशिवनिरूपणावसरे तस्य शक्तिमत्त्वं सूचितवन्तः।

### शक्तिस्वरूपम्

**औष्ण्यं हुताश इव शीतलिमानमिन्दौ शय्यासु मार्दवमिवाश्मसु कर्कशत्वम्।**
**बाह्येषु मोह इव योगिषु च प्रबोधः स्वातन्त्र्यमस्ति हि नियन्त्रयितुर्महम्ने।।**

इति महार्थमञ्जरीपरिमलधृतसंविदुल्लासोक्त्या जगति सर्वमपि वस्तुजातं

---

विद्यमान रहती है अत: वे सविशेषरूप से ही स्थित होते हैं। इस प्रकार अद्वैतवैदान्त की अपेक्षया यह वैशिष्ट्य वीरशैवदर्शन में प्राप्त है। अतएव श्रीरेणुकभगवत्पाद ने निम्नाङ्कित श्लोकों के माध्यम से निर्गुण परशिव के निरूपण अवसर में उनके शक्तिमान् होने का प्रतिपादन किया है—

परिच्छेद:कथाशून्यम् ....सर्वशक्तिनिरङ्कुशम्।।२।।

इसका अर्थ है— निर्गुण परशिव परिच्छेद:वर्जित है, प्रपञ्चत्तीर्णवैभव से युक्त हैं, प्रत्यक्षादि प्रमाणों के अविषय हैं। वह स्वप्रकाश हैं, पराकाशस्वरूप हैं, अनुपमेय एवम् अनामय हैं, सर्वज्ञ हैं, सर्वव्यापी हैं तथा नि:स्वामिक रहते हुए सर्वशक्तिसमन्वित हैं।।२।।

### शक्ति का स्वरूप–

औष्ण्यं हुताश इव....नियन्त्रयितुर्महन्मे।।१।।

वह्नि में उष्णता, चन्द्रमा में शीतलता, शय्या में मृदुता, लौह में कर्कशता, बाह्यवस्तुओं में मोह, योगिजन में प्रबोध यद्वत् स्थित रहता है तद्वत् सकल जीवजगत् के नियन्ता मुझमें निरवधिक स्वातन्त्र्य रहता है।।

---

१. सि० शि० २।४-५, पृ० १२

यत्किञ्चिदसाधारणशक्तिविशिष्टमेव दरीदृश्यते। एतादृशशक्तिविशिष्टस्य जगतो निर्माता परशिवोऽप्यद्भुतशक्तिविशिष्ट इत्यत्र न कोऽपि सन्देहः। परशिवस्येयं शक्तिः किंस्वरूपा? इति जिज्ञासायां श्रीशिवयोगिशिवाचार्याः–"तदीया परमा शक्तिः सच्चिदानन्दलक्षणा[1]", "गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी[2]" इति शक्तेः स्वरूपद्वयमुपवर्णितवन्तः।

अत्रेदमैदम्पर्यम्–यद्यपि शक्तिरेकैव, अथाप्यस्या द्वे अवस्थे वर्तेते, तत्रैकाऽविभागपरामर्शाख्या, द्वितीया च विभागपरामर्शाख्या। अविभागपरामर्श-दशायामियं शक्तिः परशिववत् सच्चिदानन्दस्वरूपा भवति, अर्थात् सच्चिदानन्दस्वरूपस्य परशिवस्य अस्मि, प्रकाशे, नन्दामीति योऽनुभवो भवति, स एवास्य विमर्शशक्तिरित्युच्चते। यद्ययमनुभवः परशिवे न स्यात्, तदा स स्वप्रकाशोऽपि स्फटिकादिवज्जडः स्यात्। इष्टापत्तौ च स्वीयं सच्चिदानन्द-स्वरूपमन्धस्य सौन्दर्यमिव व्यर्थमापद्येत। अतः परशिवे सच्चिदानन्दानुभवरूपा विमर्शशक्तिरवश्यमङ्गीकरणीया। अत एव श्रीशिवयोगिशिवाचार्यः–"वन्दे तां

---

यह वचन महार्थमञ्जरी की परिमल टीका में उद्धृत है जो मूल रूप से संविदुल्लास में पठित है। इस वचन से सुस्पष्ट है कि जगत् की प्रत्येक वस्तु असाधारण शक्ति से विशिष्ट ही है। एवं शक्तिविशिष्ट जगत् के निर्माता परशिव भी अद्भुतशक्तिविशिष्ट ही हैं, इसमें कोई सन्देह नहीं है। परशिव की यह शक्ति किंस्वरूप है? ऐसी जिज्ञासा होने पर श्री शिवयोगिशिवाचार्य ने कहा है— "परम शिव की परम-शक्ति सच्चिदानन्दस्वरूपिणी है।" "सत्त्वरजस्तमोगुणात्मिका सनातन-शक्ति ब्रह्मनिष्ठ है।" प्रथम वचन, प्रपञ्चोत्तीर्ण स्वरूप को प्रतिपादित करता है तथा द्वितीयवचन प्रपञ्चात्मक शक्तिस्वरूप को प्रतिपादित करता है। निष्कर्ष यह है— यद्यपि शक्ति एक है तथापि इसकी दो अवस्थायें होती हैं। (१) अविभागपरामर्शा तथा (२) विभागपरामर्शा। अविभागपरामर्शा शक्ति परशिववत् सच्चिदानन्दस्वरूपा है। यह शक्ति-अस्मि, प्रकाशे, नन्दामि इत्यादि रूप से परशिव (सच्चिदानन्दस्वरूप) में परामर्श रूप से उल्लसित (स्थित) होती है। इसका दूसरा नाम **विमर्शशक्ति** है। यह परामर्शस्वरूप अनुभव यदि शिव में नहीं रहेगा तो वह स्वप्रकाश होता हुआ भी स्फटिकादि के समान जड़ ही रह जायेगा। इसे इष्टापत्ति नहीं मानी जा सकती। यथा अन्धे व्यक्ति के लिए सौन्दर्य (नहीं दिख

---

१. सि० शि० २।१२, पृ० १४
२. सि० शि० ५।३८, पृ० ६५

परमानन्दप्रबोधलहरीं शिवाम्[१]" इति परमानन्दप्रबोधरूपत्वेन तां स्तुतवान्। इयमेव शक्तिर्जगदुत्पत्तिसमये इच्छाज्ञानादिरूपेण विभागपरामर्शदशामापन्ना सती सत्त्वादित्रिगुणात्मिका माया च भवति।

एवं च शक्तिर्वस्तुतः सच्चिदानन्दरूपिणी, माया तु तत्परिणामभूता। इयमेव विमर्शशक्तिश्चिच्छक्तिरित्यप्यभिधीयते। चन्द्रे चन्द्रिकावत् परशिवनिष्ठेयं विमर्शशक्तिर्विश्ववैचित्र्ये कारणं भवतीति तन्निमित्तेन परशिवब्रह्म विश्वभाजनमित्युच्यते। तदुक्तं रेणुकभगवत्पादैः–

**विमर्शाख्या पराशक्तिर्विश्ववैचित्र्यकारिणी।**
**यस्मिन् प्रतिष्ठिता ब्रह्म तदिदं विश्वभाजनम्।।**

---

सकने के कारण) व्यर्थ होता है तथा शिव का सच्चिदानन्दस्वरूप उक्त परामर्श के बिना व्यर्थ हो जायेगा। अतः परशिव में सच्चिदानन्द की अनुभवरूप विमर्शशक्ति का अङ्गीकार आवश्यक है। अतएव श्रीशिवयोगिशिवाचार्य ने निम्नाङ्कित वचन से शक्ति परमेश्वरी की परमानन्द प्रबोध-रूप में) स्तुति की है।

— "वन्दे.....शिवाम्।।

इसका अर्थ है— शिवा परमानन्द शिव की प्रबोधलहरी है मैं उनकी स्तुति करता हूँ।।

यही शक्ति, जगत् की उत्पत्ति के समय में इच्छा-ज्ञानादि रूप से विभागपरामर्श-दशा को प्राप्त कर सत्त्वरजस्तमोगुणस्वरूपा माया कहलाती है।

शक्ति की वस्तुतः सच्चिदानन्दरूपता है तथा माया उसका परिणामविशेष है। विमर्शशक्ति का दूसरा नाम चिच्छक्ति है। यथा चन्द्रमा में चन्द्रिका स्थित रहती है तद्वत् परशिव में विमर्शशक्ति विद्यमान रहती है। यह शक्ति ही विश्ववैचित्र्य का निर्माण करती है। शक्ति के बल पर ही परशिवसंज्ञक ब्रह्म को विश्वभाजन संज्ञा प्रदान की जाती है। इसका प्रतिपादन रेणुकभगवत्पाद ने किया है—

विमर्शाख्या......ब्रह्मणि स्थिरा।।२।।

विमर्शसंज्ञक पराशक्ति विश्ववैचित्र्य का विधान करती है। यतश्च यह ब्रह्म में सुप्रतिष्ठित रहती है अतः ब्रह्म (परमशिव) विश्वभाजन कहलाते हैं। जिस प्रकार चन्द्रमा में विद्यमान ज्योत्स्ना विश्ववस्तु को प्रकाशित करती है उस प्रकार

---

१. सि० शि० १।११, पृ० ५.

**यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।**
**तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा[४]।।इति।**

## शक्तिसद्भावे मानम्

ननु स्वरूपातिरिक्ता केयं शक्तिर्नाम ? किं वाऽत्र मानम्? इति जिज्ञासायां लोकानुभवेन श्रुतिप्रामाण्याच्च साऽङ्गीक्रियते। लोके हि अग्निः कदाचिद् दह्यमानः, कदाचिन्मणिमन्त्रादिना प्रतिबन्धे सत्यदह्यमानश्चानुभयते। एवमेव मूषिकाघ्रातं बीजं बीजान्तरसदृशमपि भूमावुप्तं सन्नाङ्कुरं जनयति। एतेन अग्निस्वरूपातिरिक्ता दहनशक्तिः, बीजस्वरूपातिरिक्ताऽङ्कुर-जननशक्तिश्चास्तीति युक्तितः सिद्ध्यति। एतादृशशक्तिशक्तिमतोर्नात्यन्तं भेदो नाप्यभेदः, किन्तु भेदाऽभेद एव। एवं सर्ववस्तुषु शक्तिसिद्धौ "परास्य शक्तिर्विविधैव श्रूयते

---

प्रकाशसंज्ञक ब्रह्म में विमर्शसंज्ञक शक्ति विद्यमान रहती है वह जगत् के षट्त्रिंशत् तत्त्वात्मक वस्तुओं की जन्मदात्री है।।

## शक्तिसद्भाव में प्रमाण

स्वरूप के अतिरिक्त शक्तिनामक वस्तु क्या होती है? शक्ति के सद्भाव में कौन सा प्रमाण है? ऐसी जिज्ञासा होने पर समाधान दिया जाता है कि लोक के अनुभव से तथा वेदप्रमाण के बल पर शक्ति को स्वीकारा जाता है। लोकव्यवहार में अग्नि, दाह से युक्त उपलब्ध होता है। वही अग्नि मणि, मन्त्र अथवा औषधि के प्रयोग से प्रतिबन्धक के सान्निध्य से दाहरहित कदाचिद् दृष्टिगोचर होता है— यह अनुभवसिद्ध है। तद्वत् चूहे से आघ्रात बीज देखने में तो दूसरे बीज की तरह लगता है किन्तु वह भूमि में वपन कर दिये जाने पर भी अङ्कुर के उत्पादन में असमर्थ होता है। इससे यह सिद्ध होता है कि अग्नि से अतिरिक्त दाहशक्ति का सद्भाव युक्तिसिद्ध होता है तद्वत् बीजस्वरूप से अतिरिक्त अङ्कुरजननशक्ति का सद्भाव युक्तिसिद्ध होता है। शक्ति एवं शक्तिमानं में न तो अत्यन्त भेद होता है और न अत्यन्त अभेद। इन दोनों में भेदाऽभेद की विद्यमानता रहती है। इस प्रकार प्रत्येक वस्तु में उसकी शक्ति की सिद्धि हो जाने पर श्रुति एवं स्मृति-वचनों के आधार पर परशिव में आश्रित शक्ति का सद्भाव प्रमाणित होता है। तद्यथा— "पराऽस्य शक्तिर्विविधैव....च।" तथा मायांतु.... महेश्वरम्, इन श्रुतिवचनों से तथा

---

४. सि० शि० २०।२, ४; पृ० २०१-२०२.

स्वाभाविकी ज्ञानबलक्रिया च"[१], "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"[२], "न शिवेन विना शक्तिर्न शक्तिरहितः शिवः"[३] इत्यादिश्रुतिस्मृतयश्च परशिवस्य शक्तिसद्भावे मानम्।

**शिवशक्त्योः सम्बन्धः**

शक्तिशक्तिमतोः सम्बन्धः समवाय इति, तादात्म्य इति चान्ये प्रतिपादयन्ति। किन्त्वत्र शिवाऽद्वैतसिद्धान्तेऽविनाभावाऽऽख्यः स्वीक्रियते। तस्मात् शिवशक्त्योरप्यविनाभावसम्बन्ध एव प्रतिपाद्यते। तत्रभवद्भिर्मरितोण्टदार्यैः–

न शिवेन विना शक्तिर्न शक्तिरहितः शिवः।
पुष्पगन्धवदन्योन्यं मारुताम्बरयोरिव[४]।।

इत्युपबृंहणवचनेन शिवशक्त्योरविनाभावः सम्बन्धो न्यरूपि। श्रीरेणुकभगवत्पादा अपि–

---

"न शिवेन.....रहितः शिवः।" इस स्मृति वचन से स्पष्ट रूप से परशिवाश्रित शक्ति की प्रामाणिकता सिद्ध होती है।

**शिव एवं शक्ति का पारस्परिक सम्बन्ध**

शक्ति एवं शक्तिमान् के मध्य समवाय सम्बन्ध होता है। कतिपय आचार्य इन दोनों के मध्य तादात्म्यसम्बन्ध मानते हैं। शिवाद्वैतसिद्धान्त में अविनाभाव सम्बन्ध स्वीकृत है। अतः शिव एवं शक्ति के मध्य अविनाभाव सम्बन्ध ही प्रतिपादित किया जाता है। पूज्य आचार्य मरितोण्डदार्य ने निम्नाङ्कित उपबृंहण वचन से शिव एवं शक्ति के मध्य अविनाभावसम्बन्ध प्रतिपादित किया है—

"न शिवेन विना....मारुताम्बरयोरिव।।१।।

अर्थ यह है— शिव के बिना शक्ति की स्थिति नहीं होती तथा शक्ति के बिना शिव की स्थिति नहीं होती। पुष्प एवं गन्ध जिस प्रकार एक दूसरे के बिना नहीं रहते। यद्वत् मारुत एवम् आकाश एक दूसरे के बिना नहीं रहते तद्वत् शिव एवं शक्ति की स्थिति एक दूसरे के बिना नहीं होती है।

---

१. श्वे० उ० ६।८.
२. श्वे० उ० ४।१०.
३. वी० आ० च०, पृ० ७.
४. वी० आ० च० पृ० ७.

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा[१]।।

इत्यत्र चन्द्रचन्द्रिकादृष्टान्तेन शिवशक्त्योरविनाभावं सम्बन्धं सूचयामासुः।

यथा पुष्पगन्धयोः, चन्द्रचन्द्रिकयोश्च परस्परं नात्यन्तं भेदो नाऽप्यभेदः, किन्तु भेदाभेदः; तथैव परशिवस्य केवलावस्थायां स्वस्था या शक्तिर्विमर्शनाम्नी सा तदभिन्नाऽपि लीलावस्थायां क्षुभिता सती विश्वाकारतां भजत इति शिवशक्त्योरवस्थाभेदेन कालभेदेन च भेदाभेदौ सम्भवत इत्युक्ताऽविनाभावसम्बन्धो भेदाभेदे पर्यवस्यति। तदुक्तं कूर्मपुराणे–

एषा शक्तिः शिवा ह्येतत् शक्तिमानुच्यते शिवः।
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः।।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः।।इति।

---

आचार्य श्रीरेणुकभगवत्पाद ने भी निम्नाङ्कित वचन के आधार पर चन्द्रचन्द्रिका दृष्टान्त से शिव एवं शक्ति के मध्य अविनाभावसम्बन्ध को सूचित किया है—

यथाचन्द्रे स्थिरा....ब्रह्मणिस्थिरा।।१।।

अर्थ यह है— यद्वत् चन्द्रमा में स्थित चन्द्रिका विश्ववस्तुओं को प्रकाशित करती है तद्वत् ब्रह्म = परशिव (प्रकाशसंज्ञक) में स्थित विमर्शसंज्ञक शक्ति, विश्ववस्तु (षट्त्रिंशत्-तत्त्वमय) को उद्भासित करती है।

यद्वत् पुष्प एवं गन्ध के मध्य अथवा चन्द्र और चन्द्रिका के मध्य न तो अत्यन्त भेद रहता है और न ही अभेद रहता है प्रत्युत भेदाभेद स्थित रहता है। तद्वत् परशिव की केवलावस्था में विमर्शसंज्ञक स्वनिष्ठ शक्ति, शिव से अभिन्ना रहती है तथा लीलावस्था में वही शक्ति क्षुभित होकर विश्वाकारता को ग्रहण करती है तथा शिव से भिन्नतया प्रतिभासित होती है। एवंच शिव एवं शक्ति के मध्य अवस्थाभेद से तथा कालभेद से भेदाभेद उभयरूपता सिद्ध होती है। इस प्रकार उपर्युक्त अविनाभाव सम्बन्ध भेदाभेद रूप में पर्यवसित होता है। यह सिद्धान्त कूर्म-पुराण के वचनों से भी संवादित एवं समर्थित होता है। तद्यथा— एषा शक्तिः शिवा......तत्त्वचिन्तकाः।।१½।।

प्रभु की यह शक्ति शिवा कहलाती है तथा शक्तिमान् प्रभु शिव कहलाते हैं। एतावता व्यवहार और व्यपदेश की दृष्टि से शक्ति एवं शक्तिमान् के मध्य

१. सि० शि० २०१४, पृ० २०२.

कविकुलगुरुः कालिदासोऽपि–

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ[1]।।**

इति शब्दार्थयोरिव शिवशक्त्योरपि भेदाऽभेदरूपं सम्बन्धं कथयामास।

**शक्तेर्भेदाः**

परशिवनिष्ठेयं शक्तिश्चिच्छक्ति–पराशक्ति–आदिशक्ति–इच्छाशक्ति–ज्ञानशक्ति–क्रियाशक्तिरिति भेदेन षड्रूपाऽङ्गीक्रियते। एतासु षट्शक्तिषु चिच्छक्तिः परशिवस्य सच्चिदानन्दस्वरूपस्य बोधिकेति परशिवेन साकं समरसीभूता वर्तते। सृष्टिसमये चिच्छक्तिविशिष्टपरशिवात् पञ्च शक्तयः क्रमेणैकैकस्य सहस्रांशतः प्रादुर्भवन्ति। तदुक्तं वातुलशुद्धाख्यतन्त्रे–

---

भेद का उल्लासन होता है। पर जो तत्त्व-चिन्तन-परायण योगिजन हैं वे लोग अध्यात्ममार्ग में सिद्ध साधक रूप से सुप्रतिष्ठ होने से इन दोनों के मध्य पारमार्थिक अभेद का दर्शन करते हैं।

कविकुलगुरु कालिदास भी इस सिद्धान्तके पोषक हैं—

वागर्थाविव...पार्वतीपरमेश्वरौ।।१।।

मैं वाणी एवम् अर्थ की मञ्जुल समन्वित प्रतिपत्ति हेतु शब्द और अर्थ की तरह परस्पर अभिन्न तथा जननी एवं जनकरूप में परस्पर भिन्न जगत् के निर्माणकर्ता पार्वती एवं परमेश्वर की वन्दना समन्वित रूप में करता हूँ।।

यहाँ शब्द एवं अर्थ के मध्य एवं शिव और शक्ति के मध्य भेदाभेद सम्बन्ध का उल्लासन सुस्पष्ट है।

**शक्ति के प्रभेद**

परशिव में स्थित यह शक्ति निम्नाङ्कित षड्विध रूपों में प्रतिभासित होती है— १. चिच्छक्ति २. पराशक्ति ३. आदिशक्ति ४. इच्छाशक्ति ५. ज्ञानशक्ति तथा ६. क्रियाशक्ति। इन षड्विध शक्तियों में प्रथम चित्-शक्ति है। वह परशिव के सच्चिदानन्द स्वरूप की बोधिका है। अत एव यह शक्ति परशिव के साथ सामरस्यापन्न होकर प्रतिष्ठित रहती है। सृष्टि समय में चिच्छक्तिविशिष्ट परशिव के सहस्रांश से पराशक्ति पुनश्च उसके सहस्रांश से आदिशक्ति तद्वत् आदिशक्ति

---

१. रघु० १।१.

योगिनामुपकाराय स्वेच्छया चिन्त्यते शिवः।
तच्छिवे तु पराशक्तिः सहस्रांशेन जायते।।
तच्छक्तेस्तु सहस्रांशादादिशक्तिसमुद्भवः।
आदिशक्तिसहस्रांशाद् इच्छाशक्तिसमुद्भवः।।
इच्छाशक्तिसहस्रांशाद् ज्ञानशक्तिसमुद्भवः।
ज्ञानशक्तिसहस्रांशात् क्रियाशक्तिसमुद्भवः।।
एता वै शक्तयः पञ्च निष्कलाश्चेति कीर्तिताः[१]।इति।।

## परशिवस्य महेश्वरशब्दाभिधेयत्वम्

पूर्वोक्ता पराशक्ति-आदिशक्ति-इच्छाशक्ति-ज्ञानशक्ति-क्रियाशक्त्याख्य-पञ्चाङ्गविशिष्टा सच्चिदानन्दबोधरूपेण परशिवेन साकं समरसीभूता विमर्शशक्त्यपरपर्याया चिच्छक्तिर्विभागपरामर्शदशायाम्, अर्थात् शिवस्य सृष्ट्युन्मुखावस्थायां सत्त्वादिगुणत्रयात्मिका भवति, सैवात्र सिद्धान्ते महामाया,

---

से इच्छाशक्ति, इच्छाशक्ति से ज्ञानशक्ति एवम् ज्ञानशक्ति से क्रियाशक्ति उत्पन्न होती है। इसकी विशद विवेचना वातुलशुद्धाख्यतन्त्र में प्रतिपादित की गई है—

"योगिनामुपकाराय....निष्कलाश्चेति कीर्तिताः।।३छ्व।।

इसका अर्थ है— योगिजन के उपकारार्थ चिच्छक्ति विशिष्ट शिव संकल्प एवं ईक्षण-परायण होते हैं। चिच्छक्ति के सहस्रांश से पराशक्ति उत्पन्न होती है। तद्वत् पराशक्ति के सहस्रांश से आदिशक्ति, उसके सहस्रांश से इच्छाशक्ति, उसके सहस्रांश से ज्ञानशक्ति तथा उसके सहस्रांश से क्रियाशक्ति उत्पन्न होती है। इन शक्तियों को सकल एवं निष्कल दो भागों में विभाजित किया जाता है।

## परशिव का महेश्वर शब्द से अभिधान

पूर्वोक्त षड्विध शक्तियों में अङ्गाङ्गिभाव सम्बन्ध स्वीकृत है। चिच्छक्ति अङ्गीशक्ति है तथा शेष शक्तियाँ— परा, आदि, इच्छा, ज्ञान तथा क्रिया अङ्गशक्ति कहलाती हैं। पञ्चविध अङ्गशक्तियों से विशिष्ट अङ्गीचिच्छक्ति सच्चिदानन्दलक्षण परशिव (शक्तिमान्) के साथ सामरस्यापन्न होकर प्रतिष्ठित रहती है। यह चिच्छक्ति ही विमर्शशक्ति नाम से भी व्यपदेश्य होती है। यह चिच्छक्ति विभागपरामर्शदशा में अर्थात् शिव की सृष्टि-उन्मुखावस्था में सत्त्वादिगुणत्रयात्मिका बनती है। वह

---

१. वा० शु० त० १।२४-२७.

परामाया, ऊर्ध्वमायेत्यादिभिर्नामभिर्व्यवह्रियते। एतादृशमहामायया युक्तः परशिव एव 'महेश्वरः' इत्यभिधीयते। तदुक्तम्—

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।**
**तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्[1]।।इति।**

यथा मायासम्बन्धेन परशिवस्य महेश्वर इत्यभिधानमागतम्, तथा परशिवसम्बन्धेन शक्तिरपि मायाशब्देनोच्यते। तदुक्तं सिद्धान्तागमे—

**मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।**
**मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी[2]।।इति।**

अत्र 'मं = शिवम्, अयति = स्वभावतः प्राप्नोतीति माया' इति व्युत्पत्त्या मायाशक्तेर्नित्यशिवसम्बन्धित्वं सूचितम्। तदेवं शक्तेश्चैतन्येन नित्यसम्बन्धात् तस्या मायेति, मायायुक्तत्वेन च चैतन्यस्य महेश्वर इत्युभे

---

शक्ति इस सिद्धान्त में महामाया, परामाया तथा ऊर्ध्वमाया प्रभृति नामों से व्यवहृत होती है। एतादृश महामाया से युक्त परशिव ही "महेश्वर" कहलाते हैं। उपनिषद् में स्पष्ट निर्देश है—

मायां तु प्रकृतिं....सर्वमिदंजगत्।।१।।

इसका अर्थ है— माया को प्रकृति से अनितिरिक्त समझना चाहिए तथा मायावान् को महेश्वर समझना चाहिए। उनके अवयवों एवम् निर्माणों से यह सम्पूर्ण जगत् व्याप्त है।

जिस प्रकार मायासम्बन्ध से परशिव की **महेश्वर** यह संज्ञा प्राप्त होती है। तद्वत् परशिव के साथ सम्बन्ध होने से शक्ति भी मायापद से व्यवहृत होती है। इसकी विवेचना सिद्धान्तागम में की गई है।

मं. शिवं परमं ब्रह्म.....ब्रह्मनिष्ठा सनातनी।।१।।

इसका अर्थ है— मं शिवं परमं ब्रह्म याति=प्राप्नोति-इति माया। जो परशिव = परम ब्रह्म को प्राप्त = आश्रित होती है वह माया कहलाती है। माया, ब्रह्म में स्थित रहने वाली शिव की सनातन शक्ति है।। यहाँ मं = शिवम् अयति = स्वभावतः प्राप्नोति इति माया। यह माया शब्द की निष्पत्ति हेतु व्युत्पत्ति बतलायी

---

१. श्वे० उ० ४।१०.
२. श० वि० सि०, पृ० ३.

अपि नामधेये अन्वर्थके संजाते। एतेनोभयोरनादित्वं नित्यत्वं च सूचितम्। इयं च परा माया शुद्धसत्त्वगुणप्रधाना भवतीति स्वाश्रयभूतं महेश्वरं न मोहयति, प्रत्युत तस्य सर्वज्ञत्वाद्युत्कृष्टगुणान् सम्पादयति। तदुक्तं रेणुकभगवत्पादाचार्यैः—

उपाधिः पुनराख्यातः शुद्धाऽशुद्धविभेदतः।
शुद्धोपाधिः परा माया स्वाश्रयाऽमोहकारिणी।।
मायाशक्तिवशादीशो नानामूर्तिधरः प्रभुः।
सर्वज्ञः सर्वकर्ता च नित्यमुक्तो महेश्वरः[१]।।इति।

## महेश्वराङ्गीकारे प्रयोजनम्

प्राय ईश्वरकर्तृकं सृष्ट्यादिकं व्यवस्थापयन्तो नैयायिक-वैशेषिक-योगाऽद्वैतवेदान्तिनस्तस्य सगुणरूपत्वमेवाङ्गीकुर्वन्ति। एवं वीरशैवदर्शनेऽपि

---

गई है। इस व्युत्पत्ति के आधार पर यह विदित होता है कि मायाशक्ति, शिव से नित्यसम्बद्ध है। यह विज्ञान होता है कि चैतन्य से नित्यसम्बद्ध होने के कारण शक्ति की माया संज्ञा यद्वत् अन्वर्थ है तद्वत् माया से विशिष्ट होने के कारण चैतन्य की महेश्वर-संज्ञा भी अन्वर्थ है। एतावता शक्ति एवं शक्तिमान् की अनादिता एवं नित्यता सूचित होती है। यह परासंज्ञक माया शुद्धसत्त्वगुणप्रधाना होती है अतः यह अपने आश्रय महेश्वर को सर्वज्ञत्वादि उत्कृष्ट गुणों से अलंकृत करती है। इस आशय का प्रकाशन भगवत्पाद आचार्य रेणुक ने किया है। तद्यथा— उपाधिः पुनराख्यातः........नित्यमुक्तो महेश्वरः।।२।।

शुद्ध एवं अशुद्ध भेद से उपाधि दो प्रकार की होती है। शुद्ध उपाधि परा माया कहलाती है। उत्कृष्ट होने से यह अपने आश्रय को व्यामोहित नहीं करती। प्रत्युत मायाशक्ति के बस से ईश्वर नानामूर्त्रूपधृक् होकर अभिवृद्ध ऐश्वर्य वाले होते हैं। महेश्वर की स्थिति को प्राप्त कर उल्लसित होने वाले शिव नित्यमुक्त होने के साथ सर्वज्ञ एवं सर्वकर्ता भी कहलाते हैं।।

## महेश्वर के स्वीकार का प्रयोजन

नैयायिक, वैशेषिक, योगदर्शनाचार्य तथा अद्वैतवेदान्ताचार्य, ईश्वरकर्तृक सृष्ट्यादि की व्यवस्था को उपपन्न करने हेतु ईश्वर के सगुणस्वरूप को स्वीकार करते हैं। तद्वत् वीरशैवदर्शन में भी प्राणियों के अदृष्ट से सापेक्ष सृष्टि-प्रभृति

---

१. सि० शि० ५।४४, ४६; पृ० ६९-७०.

पाणिनामदृष्टानुसारं सृष्ट्यादिव्यवस्थार्थं परशिवब्रह्मणः सगुणरूपोऽयं महेश्वरोऽङ्गीकृतः तदुक्तं शिवयोगिशिवाचार्यैः–

शिवाभिधं परं ब्रह्म जगन्निर्मातुमिच्छया।
स्वरूपमादधे किञ्चित्सुखस्फूर्तिविजृम्भितम्।।
विशुद्धज्ञानकरणं विषयं सर्वयोगिनाम्।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसमप्रभम्।।
अप्राकृतगुणाधारम् अनन्तमहिमास्पदम्[1]।इति।

अस्यायमर्थः– विमर्शशक्तिविशिष्टं शिवाख्यं परं ब्रह्म विश्वसिसृक्षया घृतकाठिन्यन्यायेन, अर्थाद् द्रवीभूतस्याऽपरिमितस्य घृतस्यैकदेशे यथा घनीभावो जायते, तथा अपरिमितसुखस्वरूपः स स्वेच्छया सुखबाहुल्योच्छूनं किञ्चित् स्वरूपमङ्गीचकार। एतदेव परशिवस्य सगुणं स्वरूपम्। अयमेव सृष्टि-स्थिति–लय–तिरोधान–अनुग्रहात्मकं कृत्यपञ्चकं स्वेच्छामात्रेण निर्वहति।

ननु विश्वैचित्र्यव्यवस्थार्थं सृज्यमानप्राणिनामदृष्टस्यावश्यमङ्गीकर्तव्यत्वात्

---

व्यवस्था हेतु परशिव-ब्रह्म का सगुणरूप महेश्वर स्वीकृत हैं। इसकी विशद विवेचना शिवयोगिशिवाचार्य जी ने इस प्रकार की है—

शिवाभिधं परं ब्रह्म....अनन्तमहिमास्पदम्।।२½।।

उपर्युक्त श्लोकसन्दर्भ का अर्थ है— विमर्शशक्तिविशिष्ट परशिव = ब्रह्म, विश्वरचना का संकल्प लेकर आनन्दघन बन जाते हैं। घृतकाठिन्यन्याय से महेश्वर का घनीभाव होता है। द्रवीभूत प्रसृत घृत की एकदेश में स्थिति होने पर घृतकाठिन्य बनता है। घृतकाठिन्यन्याय से शिव की आनन्दघनता उपस्थित होती है। स्वेच्छा से शिव अपरिमित सुख प्रसृत हैं वह उच्छून = घनीभूत स्वरूप को धारण कर लेते हैं। यही परशिव का सगुण स्वरूप कहलाता है। यह सगुण शिव = महेश्वर स्वेच्छामात्र से कृत्यपञ्चक-सृष्टि, स्थिति, प्रलय, निग्रह एवम् अनुग्रह कृत्य का सम्पादन करते हैं।

यहाँ एक जिज्ञासा उदित होती है— विश्ववैचित्र्य की व्यवस्था हेतु सृज्यमान प्राणियों का अदृष्ट (धर्म एवम् अधर्म) आवश्यक रूप से स्वीकार्य है तो सृष्टि के प्रति अदृष्टमात्र की कारणता स्वीकार्य हो—ईश्वरेच्छा की हेतुतास्वीकृति व्यर्थ ही है। किन्तु ऐसा चिन्तन उपयुक्त नहीं है। कारण यह है

---

१. सि० शि० २।१८, ११, पृ० १३-१४.

तेनैव सृष्टिः संभवतु, किमनयाऽन्तर्गडुभूतयेश्वरेच्छयेति चेन्न, प्राणिनां कर्माणि तु जडानि, न च तानि स्वतः फलप्रदाने समर्थानि। अतस्तन्नियन्त्रणार्थं तदनुरूपफलप्रदानार्थं च तत्तत्कर्मणां साक्षित्वेन प्रेरकत्वेन चेश्वरोऽत्राङ्गीकृतः। तदुक्तं श्रीरेणुकभगवत्पादैः–

एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः।
एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे।।
देहिनां प्रेरकः शम्भुर्हितमार्गोपदेशकः।
पुनरावृत्तिरहितमोक्षमार्गोपदेशकः[१] ।।इति।

अद्वैतवेदान्तवद्वीरशैवदर्शनेऽपि "यथोर्णनाभिः सृजते गृह्णते च[१]" इति

---

कि प्राणियों के कर्म तो जड़ हैं अतः वह स्वयं के अस्तित्व को भी जानने अथवा सिद्ध करने में असमर्थ हैं तब भला फलप्रदान में समर्थ कैसे हो सकते हैं। अतः उनके नियंत्रण हेतु एवं तदनुरूप फलवितरण हेतु तत्तत् कर्मों के साक्षी एवं प्रेरक के रूप में इस दर्शन में ईश्वर का अङ्गीकार किया गया है। इसका प्रतिपादन भगवत्पाद श्री रेणुकाचार्य ने किया है। तद्यथा— एतेषां देहिनां साक्षी.....मोक्षमार्गोपदेशकः।।२।।

इसका अर्थ सुस्पष्ट है— इन समस्त प्राणियों के साक्षी एवं प्रेरक परमेश्वर हैं। भवाटवी में भ्रमण करने वाले संसारी प्राणियों के कर्मयन्त्र के नियन्त्रण में प्रेरणापरायण शम्भु, देहियों को हितमार्ग का उपदेश करते हैं तथा "न स पुनरावर्तते" श्रुतिवचन से प्रशंसित पुनरावृत्ति-वर्जित मोक्षमार्ग का उपदेश करते हैं।

अद्वैत वेदान्त की तरह वीरशैवदर्शन में भी "यथोर्णनाभिः सृजते गृह्णते च" इस श्रुतिप्रमाण से सृष्टि के प्रति मायाशक्तिविशिष्ट महेश्वर ही अभिन्न-निमित्तोपादान कारण स्वीकृत हैं। त्रिगुणात्मक जगत् का उपादानकारण, त्रिगुणात्मक माया को माना जाता है तथा संकल्प-ईक्षण सम्पन्न सर्वज्ञ महेश्वर को निमित्तकारण माना जाता है। इस दर्शन में "न शिवेन विना....शिवः।" इस वचन के अनुसार शिव और शक्ति की एकरूपता स्वीकार्य होने से अभिन्ननिमित्तोपादानकारणवाद का सिद्धान्त पूर्णरूप से युक्ति-संवलित है। यह सिद्धान्त निम्नाङ्कित वचन से समर्थित होता है। तद्यथा—

---

२. सि० शि० ५।५०-५१, पृ० ७१-७२.

श्रुतिप्रमाणेन सृष्टौ मायाशक्तिविशिष्टो महेश्वर एवाऽभिन्ननिमित्तोपादानकारणमिति स्वीक्रियते। मायायास्त्रिगुणात्मकत्वात् जगदुपादानकारणत्वम्, महेश्वरस्य च निमित्तकारणत्वम्। अत्र "न शिवेन विना शक्तिर्न शक्तिरहितः शिवः" इति वचनाऽनुसारेण शिवशक्त्योरेकरूपत्वाऽङ्गीकाराद् अभिन्ननिमित्तोपादानकारणवादः संगच्छते[२]। स च–

**शक्त्यण्डमृत्पिण्डमुपाददानो मायाण्डचक्रभ्रमणक्रमेण।**
**मूलाण्डदण्डेन मुहुर्विधते ब्रह्माण्डभाण्डं भगवान् कुलालः[३]।।**

इत्युक्त्या समर्थितो भवति। भगवान् भाष्यकारोऽपि—

**शिव एव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत्[४]।।**

---

शक्त्यण्ड.......कुलालः।।१।।

अर्थ सुस्पष्ट है— कुम्हार, घट को बनाने के लिए मृत्पिण्ड को चाक पर रखकर दण्ड से उसे चलाता है तद्वत् भगवान् महेश्वर अनन्तकोटि ब्रह्माण्ड को बनाने के लिए शक्त्यण्ड को मायाण्ड पर रखकर मूलाण्ड से उसे चलाते हैं।।

इस संदर्भ में भगवान् भाष्यकार ने श्रीकरभाष्य में कहा है—

शिव एव हि....प्रकाशयेत्।।१।।

इसका अर्थ है—देवाधिदेव शिव अपने आभ्यन्तर में अहम्-विमर्श से विमर्शनीय जगत् को बाह्य (इदम्) रूप से प्रकाशन-निर्माण करने हेतु इच्छाशक्तिमात्र का उपयोग करते हैं। वह अन्य किसी भी उपादान (सामग्री) की अपेक्षा नहीं करते। इस कार्य में दृष्टान्त के रूप में योगी का परिग्रह किया जाता है।

उपर्युक्त स्मृतिवचन को प्रमाणरूप से स्वीकार कर भाष्यकार ने प्रतिपादित किया है कि स्व से बहिर्भूत किसी भी सामग्री-वस्तु की अपेक्षा के बिना ही निर्माण

---

३. मुण्ड० १।१।७.

१. शक्तिरस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः।
शक्तिस्तु शक्तिमद्रूपाद् व्यतिरिक्ता हि न क्वचित्।।
(ब्र० सू० श्रीकर० १।४।१०)

२. श० वि० द०, पृ० ६६.

३. ब्र० सू० श्रीकर० २।१।२५.

इति स्मृतिं प्रमाणयन् स्वस्माद् बहिर्भूतं किञ्चिदपि वस्तुजातमनपेक्ष्य निर्माणसमर्थो योगिवत् शिवोऽप्यस्तीति प्रतिपाद्य तस्याऽभिन्ननिमित्तोपादानकारणत्वं समर्थयामास।

**सृष्टेर्लीलारूपत्वम्**

नन्वेतादृशसृष्टिनिर्माणेन महेश्वरस्य किं प्रयोजनम्? किञ्चित्प्रयोजनसत्त्वे तस्याऽनाप्तकामत्वापत्तिः, प्रयोजनाऽभावे च तस्योन्मत्तप्रवृत्तिप्रसङ्ग इति चेन्न, लीलार्थं प्रवृत्त्युपपत्तेः। अत्रेदं बोद्धव्यम्–वीरशैवदर्शने परशिवब्रह्मणो लीलावस्था कैवल्यावस्था चेत्यवस्थाद्वयमङ्गीक्रियते। तत्र सर्वव्यापारशून्या कैवल्यावस्था, सृष्टिस्थित्यादिपञ्चकृत्यकर्तृत्वं च लीलावस्था। लोके यथा निपुणो नटः स्वयमेवाऽनेकरूपधारणं कृत्वा नाट्यमभिनयति, तथा परशिवोऽपि स्वस्वातन्त्र्यशक्तिमहिम्ना कदाचित् सृष्ट्या, कदाचित् पालनेन, कदाचित् संहारेण, कदाचित् तिरोधानेन, कदाचिदनुग्रहाख्यव्यापारेण लीलयन् तिष्ठति।

---

समर्थ योगी की तरह शिव=महेश्वर भी जगत्-कर्ता हैं। इस प्रतिपादन से उन्होंने महेश्वर की अभिन्न निमित्तोपादनकारणता को समर्थन प्रदान किया है।

**सृष्टि की लीलारूपता**

यह आशङ्का उदित होती है कि एतादृश सृष्टि=विश्व के निर्माण से महेश्वर का कौन सा प्रयोजन है? यदि कोई भी प्रयोजन हो तो उनकी आप्तकामता व्याहत होगी। इससे बचने के लिए यदि प्रयोजनाभाव का स्वीकार करें तो उनकी उन्मत्त-प्रवृत्ति की अतिप्रसक्ति होगी। किन्तु, लीला की सिद्धि हेतु प्रवृत्ति मान लेने पर उक्त आशङ्का का निर्मूलन हो जाता है। यहाँ विशेष रूप से ध्यातव्य है कि वीरशैवदर्शन में परशिव = ब्रह्म की दो अवस्थायें स्वीकृत हैं— १. लीलावस्था एवं २. कैवल्यावस्था। इनमें कैवल्यावस्था वह है जो सर्वविध व्यापार से वर्जित हो। तथा लीलावस्था वह है जो पञ्चकृत्य (सुष्ट्यादि अनुग्रहान्त) से समन्वित हो। लोकव्यवहार में यद्वत् अभिनयनिपुण नट स्वयमेव अनेकरूप का धारण कर नाट्य का अभिनय करता है। तद्वत् परशिव= महेश्वर भी अपनी स्वातन्त्र्यमहिमा से कदाचित् सृष्टि, कदाचित् स्थिति, कदाचित् संहार कदाचित् तिरोधान एवं कदाचित् अनुग्रह-संज्ञक व्यापार से लीला करते हुए स्थित होते हैं।

द्वितीय दृष्टान्त है— यद्वत् सर्वविध ऐश्वर्य, धैर्य, वीर्य एवं पराक्रम-परायण, सप्तद्वीपपरिवृत सर्वमण्डलाधीश्वर, महाराज की (किसी भी प्रयोजन के

यथा वा लोके सर्वैश्वर्य-धैर्य-वीर्य-पराक्रमधुर्यस्य सप्तद्वीपपरिवृतसर्व-मण्डलाधीश्वरस्य महाराजस्य विशेषप्रयोजनं विनैव क्रीडाविहारादिषु प्रवृत्तिर्दृश्यते, तथैव परशिवस्य प्रयोजनाऽभावेऽपि लीलार्थं पञ्चकृत्येषु प्रवृत्त्युपपत्तेः[१]। तदुक्तं श्रीमरितोण्टदार्यैः–"स्वेच्छाशक्तिरूपापोहनटङ्कव-शाच्छिवादिधरण्यन्तषट्त्रिंशत्तत्त्वात्मना विचित्रीकृत्य सृष्टिस्थितिसंहारबन्ध-मोक्षलक्षणपञ्चकृत्यमहानाट्यरसिकः सन् क्रीडतीति राद्धान्तः"[२] इति।

वस्तुतस्त्वल्पायाससाध्या विधेयनिष्पत्तिमात्रफलिका कर्तुरुद्देश्यस्याऽ-साधिका हि क्रिया लीलापदार्थः। प्रकृते च पञ्चकृत्यानां परशिवस्येच्छामात्रेण संभवात् तेष्वल्पायाससाध्यत्वम्, तत्करणे च परशिवस्य किमपि प्रयोजनं न सिद्ध्यतीति तेषु विधेयनिष्पत्तिमात्रफलकत्वं कर्तुरुद्देश्यस्याऽसाधकत्वं च वर्तत इति तेषां लीलावाचकत्वं संभवत्येव। तत्रभवान् शिवयोगिशिवाचार्यः–

---

बिना ही) क्रीडा-विहार इत्यादि में प्रवृत्ति होती है। तद्वत् परशिव के प्रयोजन-विशेष नहीं होने पर भी लीलाहेतुक पञ्चविधकृत्यों में प्रवृत्ति, युक्तिविरुद्ध नहीं है। अतएव श्रीमरितोण्टदार्य ने सुस्पष्ट कहा है— "महेश्वरस्वेच्छाशक्तिरूप अपोहन द्वारा शिवप्रभृति पृथिवीपर्यन्त ३६ तत्त्वस्वरूपों के वैचित्र्य का अवभासन कर सृष्टि, स्थिति, संहार, बन्ध एवं मोक्ष स्वरूप पञ्चविध कृत्य से अभिन्न महानाट्य रस का आस्वादन करते हुए क्रीडा विधान (मङ्गलमय) करते हैं"— यह वीरशैवागम दर्शन का प्रशंसनीय सिद्धान्त है। वस्तुतः ऐसी क्रिया लीलापदार्थ है जो अल्प आयास (खेलखेल में) से साध्य हो, जिसका फल विधेय (कार्य) की निष्पत्तिमात्र हो तथा जो कर्ता के किसी उद्देश्यविशेष की साधिका न हो। लीला की इस परिभाषा का समन्वय, प्रकृत में इस प्रकार से किया जाता है— यतश्च परशिव की इच्छामात्र से पञ्चविध कृत्यों का सम्पादन होता है अतः इनकी अल्पायाससाध्यता है। पञ्चकृत्यविधान में परशिव का कोई भी प्रयोजन सिद्ध नहीं होता है अतः इनमें विधेयनिष्पत्तिमात्र-फलकता है। अथ च महेश्वर के उद्देश्यविशेष की साधकता भी इनमें नहीं है। एतावता पञ्चविध कृत्यों के लिए लीलाशब्द का व्यवहार (व्याहार) निर्बाध है। इस सन्दर्भ में पूज्यचरण शिवयोगि-शिवाचार्य का निम्नाङ्कित वचन प्राप्त होता है—

---

१. ब्र० सू० श्रीकर० २।१।३३.

२. वी० आ० च०, पृ० २८.

स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने।
स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे[१]।।

इत्यत्रेच्छामात्रेण जगत्कर्तृत्वं प्रतिपाद्य तस्याल्पायाससाध्यत्वम्, अत एव लीलारूपत्वं च सूचितवान्।

**वैषम्यनैर्घृण्यदोषपरिहारः**

ननु निर्लिप्तस्य परशिवस्य जगत्कारणत्वे देवतिर्यङ्मनुष्याद्युत्तमाधम-मध्यमसृष्ट्या शिवस्य बद्धजीववद् वैषम्यनैर्घृण्यदोषापत्तिः। तद्वारणाय सृज्यमानजीवकर्मसापेक्षत्वे तस्य सर्वशक्तत्वहानिरिति चेन्न, "वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति"[२] इति सूत्रेण भगवता बादरायणेन निराकृतत्वात्। अत्राऽयं भावः—"पुण्यः पुण्येन कर्मणा भवति पापः पापेन[३]" इति श्रुतौ प्राणिनां भोगवैषम्ये स्वस्वकर्मणां कारणत्वप्रतिपादनान्नेश्वरे स दोषः संभवति। अत एव श्रीरेणुकभगवत्पादाचार्या अपि—

---

स्वच्छाविग्रहयुक्ताय......शम्भवे।।१।।

इसका अर्थ उच्चारणमात्र से अवबुद्ध होता है। इस प्रमाणवचन से इच्छामात्र से महेश्वर द्वारा जगत् की सृष्टि का प्रतिपादन विदित होता है अतएव सृष्टि की अल्पायाससाध्यता सुविदित होती है। एतावता आचार्यवचन से ही सृष्टि-प्रभृति पञ्चविध कृत्यों की लीलारूपता सूचित होती है।

**वैषम्य एवं नैर्घृण्य दोषों का परिहार**

यहाँ जिज्ञासा उदित होती है कि निर्लिप्त पर शिव को जगत् के निर्माण में कारण मानने पर देव, तिर्यक् = पशु-पक्षी व मनुष्य प्रभृति उत्तम, अधम एवं मध्यम सृष्टि की विषमता के कारण बद्धजीववत् शिव में भी वैषम्य एवं निर्दयता-दूषणों का आपादान होगा। उसका वारण करने हेतु विषम सृष्टि के प्रति सृज्यमान प्राणी के कर्म की सापेक्षता का अङ्गीकार करने पर उनकी सर्वशक्तिमत्ता व्याहत होगी। किन्तु यह आशङ्का अथवा जिज्ञासा पूर्वाचार्यों द्वारा निराकृत की जा चुकी है। तथाहि "वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति" इस सूत्र का उल्लेख कर जीवकृतकर्म प्रयुक्त वैषम्य का प्रतिपादन कर भगवान् बादरायण (वेदव्यास) ने वैषम्य

---

१. सि० शि० ११६, पृ० ३।
२. ब्र० सू० २।१।३४.
३. बृ० उ० ४।४।५

अविद्यामोहिता जीवा ब्रह्मैक्यज्ञानवर्जिताः।
परिभ्रमन्ति संसारे निजकर्मानुसारतः।
देवतिर्यङ्मनुष्यादिनानायोनिविभेदतः ।।
चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरिणः।
जात्यायुर्भोगवैषम्यकारणं कर्म केवलम्[१]।।

इति प्राणिनां जात्यायुर्भोगवैषम्ये प्राणिनां कर्माण्येव कारणानीत्युक्त्वा,

एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः।
एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे[२]।।

इति परमेश्वरस्य तत्तत्कर्मनियन्तृत्वमात्रं प्रतिपादयामासुः। भगवान् भाष्यकारोऽपि–

---

एवं नैर्घृण्य का निराकरण कर दिया है। यहाँ सूत्र द्वारा किये गये समाधान का आशय यह है— "पुण्य कर्म से पुण्य-सृष्टि एवम् पापकर्म से पाप-सृष्टि होती है" इस श्रुति वचन के प्रामाण्य से प्राणियों के भोग-वैषम्य के प्रति उनके निजकर्मों में कारणता का प्रतिपादन किया गया है। अतएव वैषम्यदोष अथवा तत्प्रयुक्त नैर्घृण्यदोष का आपादन ईश्वर में नहीं किया जा सकता। अतएव भगवत्पाद आचार्य श्रीरेणुक ने निम्नाङ्कित श्लोकसन्दर्भ से प्राणियों के जन्म (जाति) आयुष्य तथा भोगकृत्य वैषम्य के प्रति प्राणिकृत कर्मों को ही कारण बताया है—

अविद्यामोहिता जीवा......कर्म....क़ेवलम्।।३।।

उपर्युक्त श्लोकसन्दर्भ का अर्थ सुस्पष्ट है। तदनन्तर निम्नाङ्कित वचन से उन्होंने परमेश्वर में क़र्मों के नियंत्रम दायित्वमात्र का प्रतिपादन किया है—

एताषां देहिनां....कर्मयन्त्रनियन्त्रणे।।१।।

उपर्युक्त श्लोक का अर्थ शब्दश्रवणमात्र से सुगम है।

भगवान् भाष्यकार ने भी उक्त सन्दर्भ में निम्नाङ्कित वेदव्यास-वचन को प्रमाणरूप में उपस्थापित किया है—

निमित्तमात्र मेवासौ......सृज्यशक्तयः।।१।।

श्लोकार्थ सुगम है। इस प्रमाण वचन के आधार पर उन्होंने क्रमशः तीन आशयों का प्रतिपादन किया है—

---

१. सि० सि० ५।४७–४९, पृ० ७०–७१.
२. सि० शि० ५।५०, पृ० ७१.

**निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि।**
**प्रधानकारणीभूता यतो वै सृज्यशक्तयः[१]।।**

इति व्यासोक्तिं प्रमाणयन् देवादिवैचित्र्यहेतुभूतसृज्यमानक्षेत्रज्ञप्राचीनकर्मरूपा शक्तिरेव कारणमित्यभिमत्य परमेश्वरस्य निमित्तकारणत्वं व्यवस्थाप्य वैषम्यनैर्घृण्यदोषं परिहारयामास।

नन्ववान्तरसृष्टौ सृज्यमानप्राणिकर्मसापेक्षत्वेऽपि प्रथमसृष्टौ तदभावात् सम्भवत्येव स दोष इति चेन्न, जीवानां तत्कृतकर्मणां चानादित्वात्, अन्यथा कृतनाशाऽकृताभ्यागमदोषप्रसङ्गः। अत एव "ज्ञाऽज्ञौ द्वावजावीशानीशौ"[४] इति

---

(१) देवादि वैचित्र्य के प्रति सृज्यमान प्राणियों के प्राचीन कर्मरूप शक्ति-विशेष की कारणता है— सिद्धान्त की स्थापना। तदनु

(२) "परमेश्वर की निमित्तकारणता मात्र है विचित्र प्राणिसृष्टि के प्रति।" इस व्यवस्था का निर्धारण। तदनु

(३) महेश्वर में आशङ्कित वैषम्य एवं नैर्घृण्य दूषणों का परिहार निरूपित होता है।

यहाँ दूसरे प्रकार की जिज्ञासा उदित होती है— अवान्तर सृष्टि के सन्दर्भ में सृज्यमान जीवकर्म-सापेक्षता का सिद्धान्त उपयुक्त प्रतीत होता है। प्रथम सृष्टि के समय प्राणिकर्म के अभाव होने से उक्त सिद्धान्त के आधार पर वैषम्यदोष का निराकरण सम्भव नहीं है अत: उक्तदूषण वज्र लेपायित है। यह जिज्ञासा भी निराधार है। उसका कारण यह है कि जीव भी अनादि हैं तथा जीवकृत कर्म भी अनादि ही हैं। अत: प्रथमसृष्टिकाल में जीवकृतकर्म के अभाव का कथन अविचारित रमणीय होने से उक्तदूषण का आपादन अनुपयुक्त है। इस सर्वमान्य सिद्धान्त का अपलाप करने पर अन्यदार्शनिकों के मत में भी कृतनाश एवम् अकृताभ्यागम दोष की अतिप्रसक्ति (दुरुद्धर) प्राप्त होगी।

जीव एवं तत्कृत कर्मों के अनादि विद्यमानता होने के कारण ही निम्नाङ्कित श्रुतिवचनप्रामाण्य से सृष्टि की प्रवाहसत्यता तथा क्षेत्रज्ञ=जीव एवम् जीवकृत कर्मों की अनादिता का प्रतिपादन पूर्ण यौक्तिक है— "ज्ञानमय ईश्वर तथा अज्ञानावेष्टित जीव ये दोनों ही अज=अनादि हैं।"

---

१. ब्र० सू० श्रीकर० २।१।३४.
२. श्वे० उ० १।९.

श्रुत्या प्रवाहरूपेण सृष्टेः सत्यत्वम्, क्षेत्रज्ञानां तत्कृतकर्मणां चानादित्वं प्रतिपादितम्।

न च प्राणिनां कर्मसापेक्षत्वे तस्य सर्वशक्तित्वहानिः, स्वकृतनियमस्य पाल्यमानत्वात्। लोके यथा नृपस्य स्वकृतस्यैव नियमस्य परिपालनेन सर्वशक्तित्वं न हीयते, तथेश्वरस्यापीति बोध्यम्। तस्माद् विद्युतो वीजनपेषणादियन्त्रगतायास्तत्तत्कर्मणि प्रेरकत्वेन सहायिकाया अपि वीजनादिकार्यवैचित्र्ये तत्तद्यन्त्राण्येवाऽसाधारणानि कारणानि भवन्ति, तथा सृष्ट्युत्पत्तावीश्वरस्य साधारणकारणत्वेऽपि सृष्टिवैचित्र्ये तत्तत्प्राणिनामदृष्टान्येवाऽसाधारणानि कारणानीति निष्कर्षः। एवं पञ्चकृत्यव्यवस्थावद् वेदागमादीनां व्यवस्थार्थमपीश्वर आवश्यकः। अत एव भगवान् भाष्यकारः "शास्त्रयोनित्वात्"[१] इत्यस्य सूत्रस्य भाष्ये–

---

विश्वनिर्माण कार्य में निमित्तकारण महेश्वर यदि प्राणिकर्मसापेक्ष होंगे तो उनकी सर्वशक्तिसम्पन्नता की हानि आपतित होगी—इस तरह की आशंका निर्मूल ही है। कारण यह है कि स्वकृत नियम का पालन करने से प्रभुता का व्याघात नहीं होता। "न लोकाद्भिद्यते शास्त्रम्"—इस न्याय का अनुसरण करें तो हम लोक में देखते हैं कि कोई नृप, स्वनिर्धारित नियम का परिपालन (दण्डपुरस्कारादि प्रदान स्वरूप) करने से सर्वशक्तिमत्ता (ऐश्वर्य=प्रभुता) से च्युत नहीं होता है। तद्वत् ईश्वर भी अपने माहैश्वर्य से परिच्युत नहीं होंगे। एक अन्य दृष्टान्त से भी इस सिद्धान्त का अवबोध अत्यन्त सुन्दर है। विद्युत्संचालित पंखों के द्वारा वीजन कार्य सम्पादित होता है, आटे की चक्की से गोधूमादि का पेषण होता है, बल्ब, सी.एफ.एल. इत्यादि द्वारा प्रकाशन होता है एवम् अन्यान्य मशीनों के कार्य भी स्वानुरूप भिन्न-भिन्न होते हैं। अतः विभिन्न कार्यों के प्रति विभिन्न मशीनों की असाधारण कारणता होती है तथापि उनके प्रति साधारण कारणता विद्युत्प्रवाह में होती है। तद्वत् सम्पूर्ण विश्व की रचना में महेश्वर साधारण कारण होते हैं तथा प्राणियों के कर्म, सृष्टिवैचित्र्य के प्रति असाधारण कारण होते हैं। समकालिक दृष्टान्त के द्वारा सिद्धान्त निष्कर्ष का परिज्ञान हमें सम्यक्तया प्राप्त होता है।

उपर्युक्त प्रकार से यद्वत् पञ्चकृत्यों की व्यवस्था उपपन्न होती है तद्वत् वेद-शास्त्रादि की व्यवस्था हेतु भी ईश्वर का अभिन्ननिमित्तोपादनकारण रूप में स्वीकार आवश्यक है। अतएव भगवान् भाष्यकार ने ब्रह्मसूत्र-"शास्त्रयोनित्वात्" के भाष्य में निम्नाङ्कित स्मृतिवचन का उल्लेख किया है—

---

१. ब्र० सू० १।१।३.

सद्योजातेन ऋग्वेदं वामदेवेन याजुषम्।
अघोरेण तथा साम पुरुषेण त्वथर्वणम्।।
ईशानेन मुखेनैव कामिकाद्यागमांस्तथा।
जनयामास विश्वेशः सर्वसिद्धिप्रदायकः।।

इति शिवस्य वेदागमानामुत्पादकत्वस्मृतिमुदाहरन् "शास्त्रस्य ऋग्वेदादेर्योनिः कारणम्" इति व्युत्पत्तिसिद्धशास्त्रयोनित्वं समर्थ्य तदुत्पन्नत्वेन निगमागमानां प्रामाण्यमिति समर्थयायास[1]।

तदेतावता पर्यालोचनेन ज्ञायते यद्वीरशैवदर्शने मायाशक्तिविशिष्टं परशिवब्रह्मचैतन्यमेव सगुणं सद् महेश्वर इत्यभिधानवान् भवति। अस्य च मायाशक्तिर्न चाऽद्वैतवेदान्तवद् मिथ्याभूता, किन्तु सत्या। अतो महेश्वरोऽपि सत्यः।

---

सद्योजातेन ऋग्वेदं....सर्वसिद्धिप्रदायकः॥२॥

इस वचन का अर्थ सुस्पष्ट (निगदव्याख्यात) है॥

उपर्युक्त स्मृतिवचनप्रामाण्य से उन्होंने "शास्त्रस्य=ऋग्वेदादेः योनिः= कारणम्" इस व्युत्पत्ति (षष्ठी तत्पुरुष समास) का आश्रयणग्रहण कर ऋग्वेदादि शास्त्र का कारण (रचयिता) महेश्वर हैं—इस सिद्धान्त का समर्थन किया है। अथच महेश्वर द्वारा विरचित (निर्मित) होने से निगमागमशास्त्रों के प्रामाण्य का समर्थन भी उन्होंने किया है।

उपर्युक्त यौक्तिक एवं प्रामाणिक विवेचना से अनुभवबलायात सिद्धान्त सुविदित होता है कि वीरशैवागमदर्शन में मायाशक्तिविशिष्ट परशिव (ब्रह्मचैतन्य) सगुणस्वरूप को आत्मसात् कर "महेश्वर" संज्ञा से विभूषित होते हैं। प्रभु महेश्वर की मायाशक्ति, अद्वैतवेदान्तसिद्धान्तस्वीकृत मिथ्यास्वरूप नहीं मानी जाती प्रत्युत सत्यस्वरूप जगत् के प्रति कारण होने से सत्यरूप में सम्मानित है। उक्त सत्यमायाशक्ति से विशिष्ट भगवान् महेश्वर भी सत्य एवम् आराध्य हैं।

***

---

१. ब्र० सू० श्रीकर० १।१।३.

श्रीमरुलाराध्याय नमः

# चतुर्थः परिच्छेदः

## जीवात्मस्वरूपविमर्शः

इह खलु सर्वेऽपि दार्शनिका बन्धमोक्षादिव्यवहारं जीवात्मन ए
प्रतिपादयन्ति। तदेयं जिज्ञासा जागर्ति यत् कोऽयं जीवो नाम, किं व
तत्स्वरूपम्, कथं वाऽस्योत्पत्तिरिति? जीवात्मस्वरूपविषये सर्वेषाम
दार्शनिकानां नैकमत्यं दरीदृश्यते। तस्मादत्र षड्दर्शनाभिमतजीवात्मस्वरूपं तथ
सिद्धान्तशिखामण्युक्तवीरशैवदर्शनाभिमतजीवात्मस्वरूपं पृथक् पृथग् विचार्य
समीक्ष्यते च।

### न्यायमतानुसारेणात्मस्वरूपम्

तत्र तावन्न्यायदर्शने महर्षिणा गौतमेन—"आत्मशरीरेन्द्रियार्थ-

---

।।श्रीमरुलाराध्यभगवत्पादको नमस्कार अर्पित हो।।

# चतुर्थ परिच्छेद

## जीवात्मा के स्वरूप का विमर्श

सबके सब दार्शनिक बन्ध-मोक्ष प्रभृति का निरूपण जीवात्मा को ही उद्देश्य
से करते हैं। तब यह स्वाभाविक रूप से जिज्ञासा उदित होती है कि यह जीव है
कौन? इसका स्वरूप क्या है? किस तरह से इसकी उत्पत्ति होती है? इन
जिज्ञासाओं के समाधान हेतु जब हम दार्शनिकों की ओर अग्रसर एवम् उन्मुख होते
हैं तो यह प्रतीत होता है कि जीवात्मा के स्वरूप के सन्दर्भ में सभी दार्शनिकों का
ऐकमत्य नहीं है। इसलिए इस परिच्छेद में जीवात्मा का षड्दर्शनाभिमत स्वरूप तथा
सिद्धान्तशिखामणिग्रन्थ में प्रतिपादित वीरशैवागमदर्शनाभिमत जीवात्मा का स्वरूप
पृथक्-पृथक् विचारणीय एवं समीक्षणीय है।

### न्यायमत सम्मत आत्मा का स्वरूप

न्यायदर्शन में महर्षि गौतम ने निम्नाङ्कित सूत्र का उल्लेख कर १२ प्रकार
के प्रमेय का प्रतिपादन किया है— "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोष-

बुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्"[1] इति सूत्रेण द्वादशविधं प्रमेयं प्रतिपादितम्। यद्यपि प्रमातुं योग्यं प्रमेयमिति व्युत्पत्त्या द्रव्यादीनि सर्वाण्यपि प्रमेयाण्येव, अथापि यद्विपरीतज्ञानेनात्मनो संसारबन्धः, यत्तत्त्वज्ञानेन चात्मनः संसारनिवृत्तिः, तान्येव प्रमेयाणीति महर्षेराशयः। तदुक्तं भाष्यकृता वात्स्यायनेन–"अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेणेति"[2] इति। वृत्तिकृता विश्वनाथेनापि–"प्रकृष्टं मेयं प्रमेयमिति योगार्थः। प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वम्, मोक्षहेतुधीविषयत्वं वा। रूढ्या च तावदन्यान्यत्वमर्थः"[3] इति प्रतिपादितत्वाद् अत्रात्मा देहेन्द्रिया-

---

प्रेत्यभाव-फलदुःखापवर्गास्तु प्रमेयम्।" अर्थ सुस्पष्ट है— प्रमेय १२ प्रकार के हैं— १. आत्मा २. शरीर ३. इन्द्रिय ४. अर्थ ५. बुद्धि ६. मनस् ७. प्रवृत्ति ८. दोष ९. प्रेत्यभाव १०. फल ११. दुःख एवम् १२. अपवर्ग। यद्यपि प्रमेय शब्द की व्युत्पत्ति है— "प्रमातुं योग्यम् = प्रमेयम्।" तदनुसार द्रव्य, गुण, कर्म प्रभृति सर्वविध पदार्थ प्रमेय ही हैं। अतएव प्रमेयत्व को केवलान्वयी धर्म माना जाता है। तथापि यहाँ प्रमेय शब्द पारिभाषिक है। तदनुसार महर्षि को प्रमेयशब्द से अभीप्सित है— यद्विषयक विपरीत ज्ञान से जीवात्मा को संसार -बन्ध प्राप्त होता है तथा यद्विषयक तत्त्वज्ञान से जीवात्मा की संसार-बन्धनिवृत्ति हो जाती है वह प्रमेय-पद का विवक्षित अर्थ है। इस आशय का प्रकाशन भाष्यकार वात्स्यायन ने किया है। तद्यथा— "इस प्रमेय (पारिभाषिक) के तत्त्वज्ञान से अपवर्ग की प्राप्ति होती है तथा मिथ्याज्ञान से संसार (बन्ध) होता है— इस कारण से यह उपदेश किया गया है "विशेषेण" इत्यादि। वृत्तिकार विश्वनाथ ने भी इसका समर्थन किया है। तद्यथा–"प्रकृष्टं मेयम् = प्रमेयम् — इस व्युत्पत्ति के आधार पर योगलभ्य अर्थ है— प्रकर्षयुक्त मेय प्रमेय कहलाता है। मेयगत प्रकर्ष का स्वरूप है—संसार-बन्ध के प्रति हेतुभूत मिथ्याज्ञान का विषय होना अथवा मोक्ष के प्रति हेतुभूत तत्त्वज्ञान का विषय होना। एवं प्रमेय शब्द का रूढिलभ्य अर्थ है तावदन्यान्यत्व= आत्मप्रभृति द्वादश से अन्य का भेद होना। उपर्युक्त प्रतिपादन से इस दर्शन में तत्त्वज्ञान से अपवर्गप्राप्ति का सिद्धान्त अभिमत है। आत्मा, देहेन्द्रिय-प्रभृति अनात्मपदार्थों से भिन्न है— यह तत्त्वज्ञान का आकार है। तथा आत्यन्तिक

---

१. न्या० सू० १।१।९.

२. न्या सू० भा० १।१।९.

३. न्या० सू० वृ० १।१।९.

द्यनात्मपदार्थाद् भिन्न इत्याकारकतत्त्वज्ञानेनैव आत्यन्तिकदुःखनिवृत्तिरूपोऽपवर्ग इत्यभ्युपगम्यते। अतस्तत्त्वज्ञानं नाम देहेन्द्रियाद्यनुयोगिकात्मप्रतियोगिकभेदज्ञानम्, अथवा आत्मानुयोगिकदेहेन्द्रियादिप्रतियोगिकभेदज्ञानम्। भेदज्ञानेऽनुयोगि-प्रतियोगिनोरुभयोरपि ज्ञानमावश्यकमिति न्यायदर्शने आत्मादीनि सर्वाणि प्रमेयाणि परीक्षितानि। तदनुसारेणात्र देहेन्द्रियादिभिन्नमात्मस्वरूपं प्रस्तूयते।

## आत्मनो लक्षणम्

न्यायदर्शने किंलक्षण आत्मेति जिज्ञासायामुक्तमन्नंभट्टेन- "ज्ञानाधिकरणमात्मा[1]" इति। अत्र "अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम्[2]" इति न्यायबोधिन्यनुसारेण ज्ञानं प्रति समवायसम्बन्धेन यद् द्रव्यमधिकरणं तद् द्रव्यमात्मेत्यर्थः। यद्वा "आत्मत्वाभिसम्बन्धवान् आत्मा[3]" इति केशवमिश्रोक्तमप्यात्मलक्षणम्। आत्मत्वजातिस्तु समवायसम्बन्धेन आत्मन्येव तिष्ठति, नान्येषु पृथिव्यादिद्रव्येषु। एवं लक्षणलक्षितो ह्यात्मा

---

दुःखनिवृत्ति अपवर्गपदार्थ है। एतावता तत्त्वज्ञान शब्द से देहेन्द्रियाद्यनुयोगिक आत्मप्रतियोगिक भेदज्ञान-अर्थ विवक्षित होता है। अथवा तद्विपरीत-आत्मानुयोगिक-देहेन्द्रियादि-प्रतियोगिक भेदज्ञान, तत्त्वज्ञान शब्द से अभिप्रेत है। यतश्च भेदज्ञान के प्रति अनुयोगी एवं प्रतियोगी—इन दोनों का ज्ञान आवश्यक होने से न्यायदर्शन में आत्मप्रभृति समस्त प्रमेयों की लक्षणादिपरीक्षा की गयी है। तदनुसार देह, इन्द्रिय आदि से भिन्न आत्मस्वरूप की उपस्थापना की जाती है—

## आत्मा का लक्षण

न्यायदर्शन में आत्मा का क्या स्वरूप है ऐसी जिज्ञासा उदित होने पर अन्नम्भट्ट ने कहा है— "ज्ञानाधिकरणमात्मा।" इसका सुस्पष्ट अर्थ है ज्ञान के अधिकरण को आत्मा कहा जाता है। अर्थ के विशदीकरण हेतु न्यायबोधिनी में बताया गया है— अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम्। तदनुसार सुविदित होता है कि ज्ञान के प्रति समवायसम्बन्ध से जो द्रव्य अधिकरण होता है वह द्रव्य आत्मा है— यह न्याबोधिनी की उक्त पङ्क्ति का अर्थ है। केशवमिश्र ने आत्मा का लक्षण प्रतिपादित किया है— आत्मत्वाभिसम्बन्धवान् आत्मा। आत्मत्व-जाति

---

१. त० सं०, पृ० १९.
२. न्या० बो०, पृ० २०.
३. त० भा०, पृ० १९०.

जीवात्मपरमात्मभदेन द्विविधः। अत्र "परमत्वं चोत्कृष्टत्वम्। तच्च प्रकृते सृष्टिस्थितिप्रलयकर्तृत्वम्"[१] इति सिद्धान्तचन्द्रोदयकार आत्मपदप्रतिपाद्ययो-र्जीवपरमात्मनोर्भेदं व्यवस्थापितवान्[२]।

ननु "आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति"[३] इति विश्वनाथेनोक्तत्वात् सुखदुःखादीनां समवायसम्बन्धेन जीवात्मन्येवोत्पद्यमानत्वात् "आत्मत्वसामान्यवानात्मा" इति लक्षणेन जीवात्मैव सिद्ध्यति, न त्वीश्वरात्मेति चेन्न, स्वरूपयोग्यतायास्तत्रापि विद्यमानत्वात्। न चैवं सतीश्वरेऽपि सुखादय उत्पद्यन्तामिति वाच्यम्, स्वरूपयोग्यत्वेऽपि

---

समवाय सम्बन्ध से आत्मा में ही रहती है, अन्य पृथिवी-प्रभृति द्रव्य में नहीं। अतः लक्षण का समन्वय होने तथा अतिव्याप्ति प्रभृति दूषणों से रहित होने के कारण उपर्युक्त दोनों आत्मलक्षण उपयुक्त हैं। इन लक्षणों से लक्षित आत्मा के दो प्रभेद हैं— जीवात्मा और परमात्मा। सामान्य आत्मा जीव की अपेक्षा परमत्व= उत्कर्ष से युक्त आत्मा परमात्मा कहलाते हैं। सिद्धान्तचन्द्रोदय ग्रन्थ में प्रतिपादित किया गया है कि प्रकृत में सृष्टिस्थितिप्रलयकर्तृत्व को परमत्व (उत्कर्ष) रूप में स्वीकार किया गया है। इस प्रकार जीव एवम् परमात्मा में आत्मपदबोध्यता होने पर भी जीव एवम् परमात्मा के पारस्परिक भेद की व्यवस्था की गयी है।

यहाँ पर आशङ्का उदित होती है कि आचार्य विश्वनाथ ने सुखदुःखादि की उत्पत्ति में समवायिकारणता के अवच्छेद रूप से आत्मत्वजाति की सिद्धि को प्रतिपादित किया है। इस सिद्धान्त में सुखदुःखादि की समवायेन उत्पत्ति जीवात्मा में ही स्वीकृत है। एतावता आत्मत्वजाति से युक्त द्रव्य को आत्मा का लक्षण बताने से यह लक्षण आत्मप्रभेद जीव में ही समन्वित होता है परमात्मा में नहीं। इस शङ्का का निर्मूलन शास्त्र में किया गया है। तद्यथा कारणता दो प्रकार की होती है— स्वरूपयोग्यता एवम् फलोत्पादकता। परमात्मा में उक्त (समवायि) कारणता का प्रथम प्रभेद— "स्वरूपयोग्यता" के विद्यमान होने से लक्षण की अव्याप्ति वारित होती ही है। अब प्रश्न उठता है कि सुखादि की उत्पत्ति की स्वरूपयोग्यतानामक कारणता के रहते परमात्मा में उसकी उत्पत्ति होती क्यों नहीं। इसका उत्तर यह है कि स्वरूपयोग्यता के रहने पर भी सुखादि की उत्पत्ति हेतु

---

१. सि० च०, पृ० २८.
२. न्या० प्र०, पृ० २११.
३. न्या० मु०, पृ० १५६-१५७.

सुखादीनामुत्पत्तौ यन्निमित्तकारणमदृष्टं भोगायतनं च शरीरम्, तयोरीश्वरेऽविद्यमानत्वान्न तेषामुत्पत्तिः। तदुक्तं विश्वनाथेन– "ईश्वरेऽपि सा जातिरस्त्येव। अदृष्टादिरूपकारणाभावान्न सुखदुःखाद्युत्पत्तिः, नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियम इत्यस्याप्रयोजकत्वात्"[1] इति।

नन्वीश्वरे कुतोऽदृष्टं नोत्पद्यत इति चेत्, आत्मन्यनात्मरूपमिथ्याज्ञानस्यैव प्रवृत्तिसम्पादकतयाऽदृष्टादेर्हेतुत्वात्, ईश्वरे मिथ्याज्ञानस्यैवाभावान्नाऽदृष्टोत्पत्तिः। अन्यथा विनष्टमिथ्याज्ञानस्य मुक्तस्यापि जीवात्मनः पुनरदृष्टादिना संसारप्राप्तिप्रसङ्गः। तस्मादीश्वरे मिथ्याज्ञानाभावात् प्रवृत्त्यभावः, प्रवृत्त्यभावाच्चादृष्टाभाव इति नहि तस्य सुखदुःखादिसम्भवः[2], "आत्मा वा अरे द्रष्टव्यः"[3] इत्याद्युपनिषन्मन्त्रेषु प्रयुक्तात्मपदस्य जीवेश्वरोभयसाधारण्येन प्रतिपादितत्वात् तादृशात्मपदशक्यतावच्छेदकरूपेणाप्यात्मत्वजातिः सिद्ध्यति।

---

अपेक्षित निमित्तकारण—अदृष्ट एवम् भोगायतन शरीर के परमेश्वर में अविद्यमान रहने से सामग्रीविरह होने से उत्पत्ति नहीं होना समुचित ही है। इस प्रश्नोत्तर को विश्वनाथ ने भलीभाँति सुलझाया है— "ईश्वर में भी आत्मत्व-जाति की विद्यमानता है तथापि अदृष्टप्रभृति (निमित्त) कारण के अभाव होने से सुखदुःखादि की उत्पत्ति नहीं होती है। नित्यवस्तु के स्वरूपयोग्य होने मात्र से फलावश्यम्भाव-नियम को प्रयोजक नहीं माना जा सकता।

अब प्रश्न उठता है कि ईश्वर के अदृष्ट की उत्पत्ति क्यों नहीं होती? इसका उत्तर सुस्पष्ट है— मिथ्याज्ञान को प्रवृत्ति के प्रति कारण माना जाता है। आत्मवस्तु में अनात्मरूप मिथ्याज्ञान ईश्वर को होता नहीं। मिथ्याज्ञान के अभाव में प्रवृत्ति नहीं होगी। प्रवृत्ति के बिना धर्म अथवा अधर्म रूप अदृष्ट ईश्वर में कैसे उत्पन्न हो सकते हैं। यतश्च मिथ्याज्ञान के अभाव में प्रवृत्ति नहीं हो सकती और तन्मूलक अदृष्ट की उत्पत्ति नहीं हो सकती अतएव जिनका मिथ्याज्ञान, तत्त्वज्ञान से विनष्ट हो चुका है ऐसे मुक्त जीव को भी अदृष्टवान् अथच संसारवान् होने की आपत्ति दुर्निवार होगी। अतः ईश्वर में मिथ्याज्ञान के अभाव होने से प्रवृत्ति का अभाव तथा प्रवृत्त्यभावमूलक अदृष्टाभाव होने से सुखदुःखादि की उत्पत्ति का आपादान नहीं किया जा सकता।

---

१. न्या० मु०, पृ० १५७.

२. न्या० प्र०, पृ० २१५.

३. बृ० उ० २।४।५.

तद्यथा–"जीवेश्वरनिष्ठा या आत्मपदशक्यता सा किञ्चिद्धर्मावच्छिन्ना, शक्यतात्वात्, घटनिष्ठघटपदशक्यतावत्"[१] इति।

अस्यायमर्थः–या या शक्यता सा साऽवश्यमेव किञ्चिद्धर्मावच्छिन्ना, निरवच्छिन्नायाः शक्यताया अभावात्। यथा घटपदस्य शक्यता घटत्वधर्मावच्छिन्ना, तथैव जीवपरमात्मनोर्विद्यमाना या आत्मपदशक्यता, सा शक्यतात्वात् किञ्चिद्धर्मावच्छिन्ना भवत्येव। किञ्चिद्धर्मः चात्मत्वमेव। तदेवमात्मत्वजातिसिद्धौ "आत्मत्वसामान्यवानात्मा" इत्युक्तलक्षणेन जीवात्मपरमात्मनोरुभयोरपि सिद्धिः।

नवीनैकदेशिनस्तु–ईश्वरे आत्मत्वजातिप्रतिपादकप्रमाणाभावान्नास्त्येवेश्वरे आत्मत्वमिति प्रतिपादयन्ति। न चैतावता तस्य दशमद्रव्यत्वापत्तिः,

---

प्रकारान्तर से भी आत्मत्व जाति की सिद्धि होती है। यथा— "आत्मा वा अरे द्रष्टव्यः" इस उपनिषद् मन-वचन में आत्मा को उद्देश्य कर दर्शन का विधान किया गया है। मन्त्रप्रयुक्त आत्मपद जीवेश्वर उभयसाधारण है। इस आत्मपद के शक्यतावच्छेदक रूप से भी आत्मत्व जाति की सिद्धि होती है। एतदर्थ अनुमानाकार निम्नाङ्कित है—

जीवेश्वरनिष्ठा आत्मपदशक्यता यत्किञ्चिद्-धर्मावच्छिन्ना, शक्यतात्वात् घटनिष्ठघटपदशक्यतावत्।। इसका अर्थ सुस्पष्ट है— प्रत्येक पद में विद्यमान शक्तता से निरूपित तदर्थनिष्ठ शक्यता अनिवार्यरूप से किञ्चिद्धर्मावच्छिन्ना होती है क्योंकि निरवच्छिन्न शक्यता होती नहीं। उदाहरणार्थ घटपद में रहने वाली शक्तता से निरूपित शक्यता घटत्वधर्म से अवच्छिन्न होती है तद्वत् जीव एवम् परमेश्वर में विद्यमान आत्मपदनिष्ठशक्ततानिरूपित शक्यता भी किञ्चिद्-धर्मावच्छिन्न होगी ही क्योंकि उसमें भी शक्यतात्वहेतु विद्यमान है। तादृश धर्म आत्मत्व ही सिद्ध होता है। जातिबाधक के नहीं होने से उक्त आत्मत्व जाति की सिद्धि हो जाने पर तादृश आत्मत्व-सामान्यवान् आत्मा–इस लक्षण से जीवात्मा एवं परमात्मा—इन दोनों की सिद्धि निर्बाध है।

नवीन नैयायिक के एकदेशी का यह मानना है कि ईश्वर में आत्मत्व-जाति का प्रतिपादक प्रमाण नहीं होने से ईश्वर में आत्मत्व अस्वीकार्य ही है। ऐसा मानने से ईश्वर को दशम द्रव्य के रूप में स्वीकार्यता की आपत्ति होगी—

१. न्या० प्र०, पृ० २१६.

द्रव्यविभाजनसमये ज्ञानवत्पदेन विभजनात्। तदुक्तम्–"परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात्। न च दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः"[१] इति।

## जीवात्मनो लक्षणम्

तदेवं सामान्यत आत्मलक्षणसिद्धौ जीवात्मनः किं तावदसाधारणं लक्षणमित्याकाङ्क्षायामुक्तमन्नंभट्टेन–"सुखाद्याश्रयत्वं जीवलक्षणम्"[२] इति। अस्यायमर्थः–सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां गुणानां यः समवायिकारणं स जीवात्मेति। अत एव भगवता सूत्रकारेण गौतमेनाप्युक्तम्–"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्"[३] इति। एतदतिरिक्तत्वेन "विभुत्वे सति ज्ञानासमवायिकारणसंयोगाश्रयो जीवात्मा", "जन्यज्ञानाधिकरणं

---

इस भय से आक्रान्त नहीं होना चाहिए। द्रव्यविभाजन में ज्ञानवत्पद से जीवात्मा एवं परमेश्वर दोनों का संग्रह हो जाता है। मुक्तावलीकार ने कहा है— पर=नव्यनैयायिक, प्रमाण नहीं होने से ईश्वर में आत्मत्वजाति नहीं मानते हैं। एतावता ईश्वर को दशमद्रव्य मानने की आपत्ति नही होगी। क्योंकि द्रव्य-प्रविभाग में ज्ञानवत्त्व को हेतु माना गया है जो जीवेश्वरसाधारण है।

## जीवात्मा का लक्षण

उपर्युक्त रूप से सामान्यतया आत्मलक्षण की सिद्धि हो जाने पर जीवात्मा का असाधारण लक्षण क्या है ऐसी आकाङ्क्षा होने पर आचार्य अन्नम्भट्ट ने कहा है— सुखादि का समवायेन आश्रय द्रव्य होना जीव का लक्षण है। इसका आशय यह है— सुख-दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म तथा संस्कार गुणों का समवायिकारण जीवात्मा कहलाता है। अतएव सूत्रकार भगवान् गौतम ने भी कहा है— इच्छा, द्वेष, प्रयत्न, सुख, दुःख तथा ज्ञान जीवात्मा के प्रति लिङ्ग है। जीवात्मा के अन्य लक्षण भी प्राप्त हैं। तद्यथा— "जो विभु हो तथा ज्ञान के असमवायिकारण संयोग का आश्रय हो उसे जीवात्मा कहते हैं। तथा जन्यज्ञान के अधिकरण को जीवात्मा कहते हैं। इस तरह के अन्य भी असाधारण कारण जीवात्मा के उपलब्ध होते हैं।

---

१. न्या० मु०, पृ० १५७–१५८.

२. त०सं०दी०, पृ० १६३

३. न्या० सू० १।१।१०.

जीवात्मा" इत्यादीन्यप्यात्मनोऽसाधारणलक्षणानि सम्भवन्ति[1]।

## जीवात्मनि प्रमाणम्

एवं जीवात्मलक्षणे सिद्धे प्रमाणं तावद्विचार्यते। अहं सुखी, अहं दुःखीत्याकारकस्य मानसप्रत्यक्षस्य सर्वानुभवसिद्धत्वात् तत्प्रत्यक्षं सुखाद्यधिकरणभूतमात्मानमेव विषयीकरोति, अतोऽहमाकारकमानसप्रत्यक्षमेव जीवात्मनि प्रमाणम्। उक्तं च केशवमिश्रेण–""स च मानसप्रत्यक्षः""[2] इति। अत्र हि 'स्थूलोऽहम्', 'काणोऽहम्' इत्याद्यहमाकारविषयत्वस्य शरीरेन्द्रियादावेव संभवात् तेषामेवात्मत्वं स्यादिति विप्रतिपतौ बुद्ध्यादिगुणैरात्माऽनुमीयते। तथाहि–"बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यव्यतिरिक्तद्रव्याश्रिताः, पृथिव्याद्यष्टद्रव्याना–श्रितत्वे सति गुणत्वात्, यस्तु पृथिव्याद्यष्टद्रव्यव्यतिरिक्तद्रव्याश्रितो न भवति नासौ पृथिव्याद्यष्टद्रव्यव्यतिरिक्तद्रव्यानाश्रितत्वे सति गुणोऽपि भवति, यथा

---

**जीवात्मा के प्रमाण–** जीवात्मा के लक्षण-निरूपण के पश्चात् उसमें प्रमाण होने का विचार सम्प्रति किया जाता है।" मैं सुखी हूँ "अथवा" मैं दुःखी हूँ" इस मानसप्रत्यक्ष का सर्वानुभव सिद्ध होने से अपलाप नहीं किया जा सकता। इस प्रत्यक्ष का विषय सुखाधिकरण जीवात्मा एवं दुःखाधिकरण जीवात्मा ही है। एतावता यह सिद्ध है कि यत्किञ्चिद् धर्म को पुरस्कृत कर अहमाकारक मानसप्रत्यक्ष ही जीवात्मा के अस्तित्व को सिद्ध करने से उसके प्रति प्रमाण माना जाता है। अत एव श्रीकेशवमिश्र ने सुस्पष्ट कहा है–"वह जीव मानसप्रत्यक्ष का विषय है। यद्यपि स्थूलोऽहम्, (मैं स्थूल हूँ) काणोऽहम् (मैं काण हूँ) इस प्रकार के अहमाकारक मानसप्रत्यक्ष का विषय शरीर अथवा इन्द्रिय होता है। एतावता शरीर अथवा इन्द्रिय की आत्मता की विप्रतिपत्ति होने पर बुद्ध्यादि गुणों से आत्मा की सिद्धि अनुमान प्रमाण से होती है। तद्‌यथा बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म एवम् अधर्म में पृथिवीप्रभृति अष्टविधद्रव्य से अतिरिक्त द्रव्य में आश्रितत्व है क्योंकि बुद्ध्यादि-गुण, पृथिव्यादि में अनाश्रित होते हुए गुणत्व से युक्त हैं। जो गुण पृथिवी-प्रभृति अष्टविध द्रव्य में आश्रित नहीं होता है वह पृथिवीप्रभृति अष्टविध द्रव्य से व्यतिरिक्त द्रव्य में अनाश्रित होकर गुणत्वयुक्त नहीं होता है यथा रूपरस इत्यादि गुण- यह व्यतिरेकिदृष्टान्त बनता है। उपर्युक्त केवल

---

१. न्या० प्र०, पृ० २११–२९३.

२. त० भा०, पृ० १४५.

रूपादिरिति केवलव्यतिरेकी[1]। अन्वयव्यतिरेकी वा–"बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यव्यतिरिक्तद्रव्याश्रिताः, पृथिव्याद्यष्ट–द्रव्यानाश्रितत्वे सति गुणत्वात्, यो यदनाश्रितो गुणः स तदतिरिक्ताश्रितो भवति, यथा पृथिव्याद्यनाश्रितः शब्दः पृथिव्याद्यतिरिक्ताकाशाश्रय इति"[2]।

न च स्वरूपासिद्धो हेतुः। तथाहि–बुद्ध्यादयो न भूतगुणाः, मानसप्रत्यक्षविषयत्वात्, यन्नैवं तन्नैवं यथा रूपादिः। रूपादयश्चाक्षुषादि-प्रत्यक्षविषयाः, बुद्ध्यादयस्तु मानसप्रत्यक्षमात्रविषयाः। अतो बुद्धिसुख-दुःखेच्छाद्वेषप्रयत्ना न पृथिव्यप्तेजोवाय्वाकाशानां गुणाः। न चैतावता दिक्कालमनसां गुणत्वम्, तेषां विशेषगुणत्वात्। "बुद्ध्यादयो न दिक्कालमनसां गुणाः, विशेषगुणत्वात् रूपवत्" इत्युक्तानुमानद्वयेन[3] बुद्ध्यादीनां पृथिव्याद्यष्ट-

---

व्यतिरेकी अनुमान की तरह अन्वयव्यतिरेकी अनुमान प्रमाण से भी जीवात्मा की सिद्धि होती है। तद्यथा-

बुद्ध्यादि गुणों में पृथिण्यादि अष्टद्रव्यव्यतिरिक्त द्रव्याश्रितत्व है पृथिव्यादि अष्ट द्रव्यों में अनाश्रित होने के साथ गुणत्व के आश्रय होने से। जो गुण यावद् द्रव्य में अनाश्रित रह कर है वह तदतिरिक्त द्रव्य में आश्रित होता है जैसे पृथिव्यादि में अनाश्रित शब्द, पृथिव्यादिव्यतिरिक्त आकाशद्रव्य में आश्रित रहता है।

उर्पयुक्त अनुमान में स्वरूपासिद्धिसंज्ञक हेत्वाभास का आपादन नहीं किया जा सकता। बुद्ध्यादि गुण यतश्च मानसप्रत्यक्ष के विषय हैं अतः पञ्चभूतों में आश्रित नहीं हैं। जो गुण मानसप्रत्यक्ष के अविषय हैं वह भूतगुण ही होते हैं। यथा रूपादि। रूपादि गुण चाक्षुषादि बाह्यप्रत्यक्ष के विषय हैं। बुद्ध्यादि गुण आन्तर (मानस) प्रत्यक्षमात्र के विषय होते हैं। अतः बुद्धि, सुख, दुःख, इच्छा, द्वेष एवम् प्रयत्न, भूत द्रव्यों के गुण नहीं हो सकते। यतश्च बुद्धिप्रभृति गुण, विशेष गुण हैं अतः ये दिशा, काल एवं मनस् के भी गुण नहीं हो सकते। द्वितीय अनुमान का आकार है- बुद्धि आदि गुण दिक्कालमनस् द्रव्यों के गुण नहीं हैं क्योंकि इनमें विशेषगुणत्व है यथा रूप विशेषगुण होने से दिगादि का गुण नहीं है। एतावता बुद्धिप्रभृति गुणों का पृथिव्यादि अष्टद्रव्यों में अनाश्रितत्व सिद्ध होता है। सिद्धान्तचन्द्रोदय ग्रन्थ में कहा गया है-"बुद्धिप्रभृति गुणों को भूतगुण नहीं कह सकते। ऐसा मानने पर उनके

---

१. त० भा०, पृ० १४८.

२. त० भा०, पृ० १४८–१४९.

३. न्या० प्र०, पृ० २१८–२१९ तथा त० भा०, पृ० १४७.

द्रव्यानाश्रितत्वं सिद्धम्। तदुक्तं सिद्धान्तचन्द्रोदये–"न च वक्तव्यं ते भूतानां गुणा भवन्त्विति, तथा सति तेषामाभ्यन्तरप्रत्यक्षाऽनुपपत्तेः, भूतगुणानां रूपादीनां बाह्यप्रत्यक्षस्यैवानुभवसिद्धत्वात्। अत एव भूतत्वं बहिरिन्द्रियग्राह्यविशेष-गुणवत्त्वमिति संगच्छते। विशेषगुणत्वादेव न दिक्कालमनसां गुणाः"[१] इति।

न च बुद्ध्यादीनां विशेषगुणत्वमेवासिद्धमिति वाच्यम्, तस्यापि प्रमाणसिद्धत्वात्। तथाहि–"बुद्ध्यादयो विशेषगुणाः, गुणत्वे सत्येकेन्द्रियग्राह्यत्वात्, रूपवत्"। यथा रूपस्य चक्षुरिन्द्रियमात्रग्राह्यत्वाद् विशेषगुणत्वम्, तथैव बुद्ध्यादीनां मानसैकेन्द्रियग्राह्यत्वाद् विशेषगुणत्वसिद्धिः। अत्र गुणत्वमात्रहेतुत्वे

---

आभ्यन्तर प्रत्यक्ष की अनुपपत्ति प्रसक्त होगी। रूपादि भूतगुणों की बाह्यप्रत्यक्षविषयता अनुभवसिद्ध है। अत एव भूतद्रव्यों का लक्षण-"बहिरिन्द्रियग्राह्यविशेषगुणवत्त्व" युक्त्युपेत माना जाता है। विशेषगुण होने से ही ये बुद्धयादि-दिक्' काल एवं मनस् द्रव्यों के गुण नहीं हो सकते।"

बुद्धिप्रभृति में विशेषगुणत्व असिद्ध है- ऐसा कथन असङ्गत है। क्योंकि यह प्रमाण सिद्ध है। तद्यथा- बुद्धिप्रभृति में विशेषगुणत्व है, क्योंकि ये एकेन्द्रिय-ग्राह्य होने से रूप विशेषगुण है तद्वत् एकमात्र मनस् इन्द्रिय से ग्राह्य होने के कारण बुद्धिप्रभृति गुणों का भी विशेषगुणत्व सिद्ध है। उपर्युक्त अनुमान में गुणत्वे सति एकेन्द्रियग्राह्यत्व को हेतु कहा गया है। यहाँ एकेन्द्रियग्राह्यत्व का अनुपादान करने से गुणत्वमात्र को हेतु बनाने से संख्याप्रभृति सामान्य गुणों में गुणत्व हेतु रह जाता है तथा विशेषगुणत्व साध्य नहीं रहता है एतावता व्यभिचारवारणार्थ एकेन्द्रियग्राह्य होने के साथ गुण हैं इसमें दृष्टान्त रूप-गुण है। यथा चक्षुरिन्द्रियमात्र ग्राह्य होने से रूप विशेष गुण है तद्वत् एकमात्र मनस् इन्द्रिय से ग्राह्य होने के कारण बुद्धिप्रभृति गुणों का भी विशेषगुणत्व सिद्ध है। उपर्युक्त अनुमान में गुणत्वे सति एकेन्द्रियग्राह्यत्व को हेतु कहा गया है। यहाँ एकेन्द्रिय ग्राह्यत्व का अनुपादान करने से गुणत्वमात्र को हेतु बनाने से संख्याप्रभृति सामान्य गुणों में गुणत्व हेतु रह जाता है तथा विशेषगुणत्व साध्य नहीं रहता है एतावता व्यभिचार-वारणार्थ एकेन्द्रियग्राह्यत्व को भी हेतुदल में उपादान किया जाता है। संख्यादि सामान्य गुण यतश्च चाक्षुष एवं स्पार्शनज्ञान विषय हैं अतः उनमें एकेन्द्रियग्राह्यत्व नहीं रहने से अतिव्याप्ति निरस्त हो जाती है। यदि हेतुदल में गुणत्व का उपादान (ग्रहण) नहीं किया जायेगा तो एकमात्र मनस् इन्द्रिय से ग्राह्य

---

१. सि० चं०, पृ० ३४.

संख्यादिसामान्यगुणेषु व्यभिचारः। अतस्तद्वारणायैकेन्द्रियग्राह्यत्वादित्युक्तम्, तेषां चाक्षुषस्पार्शनज्ञानविषयत्वात्। गुणत्वं विहाय एकेन्द्रियग्राह्यत्वमात्रोक्तौ आत्मनि, आत्मत्वजातौ, बुद्धित्वसुखत्वादौ च व्यभिचारः, तेषामपि मानसैकेन्द्रियग्राह्यत्वात्। अतो गुणत्वे सतीति प्रयोगः[1]।

बुद्ध्यादीनां गुणत्वप्रतिपादकानुमानं तु–"बुद्ध्यादयो गुणाः, अनित्यत्वे सत्येकेन्द्रियग्राह्यत्वात्, गन्धवत्" इति। एवं च बुद्ध्यादीनां गुणत्वात् तेषां पृथिव्याद्यनाश्रितत्वाच्चान्यथानुपपत्त्याऽऽत्माश्रितत्वेनात्मा सिद्ध्यति। एवमेव– "चक्षुरादीन्द्रियं सकर्तृकं करणत्वात् कुठारवत्" इत्याद्यनुमानेनाप्यात्मनः सिद्धिः[2]।

तदेवं न्यायदर्शने आत्मनो बुद्ध्यादिगुणानामाधारत्वादात्मा सगुण एव, न तु निर्गुणः। नन्वेवं सति "निर्गुणं निष्कलं शान्तम्" इत्यादिश्रुतिविरोधः? इति

---

होने के कारण आत्मा, आत्मत्वजाति, बुद्धित्व एवं सुखत्वादि में हेतु रह जाता तथा साध्य नहीं रहता- एतावता अतिव्याप्ति-दूषण आपतित हो जाता। अतः उसके निराकरण हेतु गुणत्व का उपादान किया जाता है। आत्मा आदि में गुणत्व के नहीं रहने से अतिव्याप्ति वारित हो जाती है।

बुद्धि प्रभृति में गुणत्व की सिद्धि निम्नाङ्कित अनुमान प्रमाण से होती है- बुद्धिप्रभृति में गुणत्व रहता है क्योंकि ये अनित्य होते हुए एकेन्द्रिय-ग्राह्य हैं यथा-ग्रन्ध। इस अनुमान से बुद्धिप्रभृति का गुण होना जब सिद्ध हो जाता है पृथिव्यादि में इनके अनाश्रित होने से तथा द्रव्य में आश्रित हुए बिना अस्तित्व में नहीं रह सकने के कारण इनका जिस द्रव्य में आश्रित होना सम्भव है वह द्रव्य आत्मा कहलाता है। इसी प्रकार निम्नाङ्कित अनुमान प्रमाण से भी आत्मा की सिद्धि होती है- चक्षुरादि इन्द्रियं, सकर्तृकं करणत्वात् कुठारवत्। अनुमान सुस्पष्ट एवं सुगम है।

इस प्रकार उपर्युक्त विवेचना से न्यायदर्शनाभिमत आत्मा सगुण है न कि निर्गुण ऐसा सिद्ध होता है। क्योंकि वह बुद्धिप्रभृति गुणों का आश्रय है।

मात्र सगुण आत्मा का अङ्गीकार करने पर "निर्गुणं निष्कलं शान्तम्" इत्यादि श्रुतिवचनों का विरोध होगा– यह आशङ्का उपयुक्त नहीं है। अदृष्टादि के

---

१. न्या० प्र०, पृ० २१९.

२. सि० चं०, पृ० ३४ एवं न्या० प्र०, पृ० २२१.

चेत्, मैवम्। निर्गता निष्पन्ना ज्ञानेच्छादयो गुणा ह्यदृष्टादिवशाद् यस्मिन् स निर्गुण इति व्याख्यानेन विरोधपरिहारस्य कर्तुं शक्यत्वात्।

**आत्मनः शरीरेन्द्रियमनोभिन्नत्वम्**

एवं च बुद्ध्यादिविशेषगुणानां पृथिव्यादिष्वभावेन तद्व्यतिरिक्ततया आत्मनः सिद्धत्वेऽपि स किं देहेन्द्रियसंघातभिन्नः, उत तत्स्वरूप एवेति शङ्कायां नैयायिका देहेन्द्रियाद्यतिरिक्तमेव तं साधयन्ति। तथाहि–शरीरम् आत्मा न भवति, तस्यानित्यत्वात्, कृतहानाकृताभ्यागमप्रसङ्गात्। अपि च, शरीरे मम शरीरमिति व्यवहारात् तत्र ज्ञानगुणोत्पत्त्यभावाच्च शरीर-भिन्न एव आत्मा कल्पनीयः।

---

वश से निर्गत=निष्पन्न हो गये हैं- ज्ञान इच्छा प्रभृति गुण जिसमें वह निर्गुण कहलाता है- इस व्युत्पत्ति आधारित व्याख्यान से विरोध परिहार हो जाता है।

**आत्मा की शरीर, इन्द्रिय एवं मनस् से भिन्नता**

उपर्युक्त विवेचना से यह सिद्ध होता है कि बुद्धिप्रभृति विशेषगुण पृथिवी-प्रभृति द्रव्यों में अनाश्रित हैं अत: तदाश्रयत्वेन सिद्ध द्रव्य आत्मा कहलाता है। अब प्रश्न यह उठता है कि बुद्धयादि का आश्रय द्रव्य आत्मा, देहेन्द्रियसंघात से भिन्न है अथवा तत्स्वरूप है? इसका उत्तर देते हुए नैयायिक कहते हैं कि आत्मा देहेन्द्रियादि से अतिरिक्त है। एतदर्थ अनुमान का आश्रय ग्रहण किया जाता है। तद्यथा- शरीरम्, आत्मा न भवति, तस्या-नित्यत्वात् कृतहानाकृताभ्यागम प्रसङ्गात्। शरीर, जन्म एवं मरण से युक्त होने के कारण अनित्य होता है। देवदत्त सुखी है और सुखी आत्मा यदि शरीर है तो वह जन्म से पूर्व में नहीं था तो किस कारण से उसमें सुख की स्थिति प्रतिपादित होगी- यह अकृत का आगमन = अकृताभ्यागम दोष कहलाता है। तद्वत् यज्ञदत्त यागकर्म का अनुष्ठान किया है देवदत्त ने नहीं किया है। यदि शरीर ही यज्ञदत्त की आत्मा है तो शरीर यहीं नष्ट हो जाता है तो उसके द्वारा कृत धर्म का हान अतिप्रसक्त होगा। यदि शरीरव्यतिरिक्त आत्मा है तो वह अजन्मा है। अत: वर्तमान शरीर की प्राप्ति से पूर्व उसके द्वारा किये गये धर्म के कारण वर्तमान शरीर से वह सुख भोग प्राप्त करता है अत: वह सुखी है। अत: देवदत्त को उपलब्ध सुख, अकृताभ्यागम नहीं है। शरीर को आत्मा मानने पर अकृताभ्यागम दोष अनिवारित होगा। तद्वत् शरीरातिरिक्त आत्मा के होने पर तत्कृतयागादि धर्म का उत्तर शरीर में फल प्राप्त होने से कृतहान दोष नहीं होता है। शरीर को ही आत्मा मानने से उक्तदोष

दर्शनस्पर्शनादिज्ञानानां चक्षुरादीन्द्रियैरेवोत्पद्यमानत्वात् तान्येवात्मस्वरूपाणि स्युरित्यपि न शङ्कनीयम्, "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्"[1] इति सूत्रेण महर्षिणा निराकृतत्वात्। सूत्रस्यायमर्थः—व्यवहारे लोकानुभवोऽयं यद् यमहमद्राक्षं तमहं स्पृशामि, यं चास्पृशं त्वचा तं चक्षुषा पश्यामीति। एकविषयौ हि प्रत्ययावेककर्तृकाविति प्रतिसन्धीयेते। नहीमौ प्रत्ययौ चक्षुराद्येकैकेन्द्रियकर्तृकौ भवितुमर्हतः तेषां प्रत्येकमेकैकविषय-ग्रहणसामर्थ्यान्न तेभ्य एकाधिकविषयग्रहणसम्भवः। तस्माच्चक्षुषा त्वगिन्द्रियेण च समाननिषयौ प्रत्ययौ यः प्रतिसन्दधाति, स एवात्मा।

---

अनिवारित होता है। इसके अतिरिक्त शरीर में अहम्प्रतीतिविषयता नहीं है। कोई भी व्यक्ति अहं शरीरम् ऐसा अनुभव नहीं करता है प्रत्युत मम शरीरम् यह प्रतीति मम गृहम् की भाँति होती है अतः शरीर को आत्मा मानना अनुपयुक्त है। अहं जानामि ऐसी प्रतीति के साक्षी आत्मा में ज्ञानगुण की उत्पत्ति अपेक्षित है किन्तु शरीर में ज्ञानगुण के उत्पन्न नहीं होने से शरीरभिन्न आत्मा का होना सिद्ध होता है। न कि शरीर का आत्मा होना।

यहाँ ऐसी आशङ्का=सम्भावना नहीं करनी चाहिये कि दर्शन, स्पर्शन प्रभृति ज्ञान चक्षुष् एवं त्वक् प्रभृति से उत्पन्न होता है अतः इन्द्रियों को ही आत्मा मान लिया जाय नकि इन्द्रियभिन्न को। क्योंकि महर्षि गौतम ने निम्नांकित सूत्र के बल पर इन्द्रिय की आत्मरूपता का निराकरण किया है। सूत्र का अर्थ यह है- व्यवहार में लोकसिद्ध यह अनुभव है- जिसे मैंने पहले देखा था, सम्प्रति मैं उसका स्पर्श करता हूँ तद्वत् जिसका मैंने पहले त्वचा से स्पर्श किया था उसे मैं सम्प्रति चक्षुष् से देखता हूँ। दो भिन्न प्रतीतियों को एककर्तृक तभी माना जाता है जब वे दोनों समानविषयक हों। उपर्युक्त दो प्रतीतियों को चक्षुरिन्द्रियकर्तृक अथवा त्वगिन्द्रियकर्तृक नहीं मान सकते। क्योंकि एकइन्द्रिय से एक ही विषय के ग्रहण की सामर्थ्य होती है– नकि एकाधिक विषयग्रहण की। अतः यह निष्कर्ष सुविदित होता है कि चक्षुष् एवं त्वक् इन्द्रियों से समान विषयक दो प्रतीतियों का अनुसंधान जिसे होता है वह इन्द्रियव्यतिरिक्त एक आत्मा (देवदत्त) है- यह सिद्ध होता है।

यह भी ध्यातव्य है। जिस द्रव्य में ज्ञान समवाय-सम्बन्ध से उत्पन्न हो वह आत्मा है- यह आत्मा का लक्षण है। यह लक्षण इन्द्रिय में अनुगत नहीं होता है।

---

१. न्या० सू० ३।१।१.

अपरं च, ज्ञानाधिकरणत्वं ह्यात्मनो लक्षणम्। तच्च नेन्द्रियेषु लक्ष्यते, यतो हि विनष्टचक्षुरादीन्द्रियः कश्चन पुरुषः पूर्वानुभूतमेवाऽहमद्राक्षमिति स्मरति। ग्रहणस्मरणौ ह्येककर्तृकावेव, अन्यथाऽन्येन दृष्टमन्यः स्मरतीत्यतिप्रसङ्गः स्यात्[1]। एवं च पदार्थनाशेऽपि न पूर्वोक्तस्मरणव्याकोप इति नेन्द्रियार्थयोरात्मत्वम्, ज्ञानाधिकरणत्वाभावात्। तदुक्तम्–"नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्[2]"इति।

एवमेव ज्ञानं मनोगुणो भवितुं नार्हतीति तस्याऽप्यात्मत्वनिरासो मन्तव्यः। यतो हि "युगपज्ज्ञेयानुपलब्धेश्च न मनसः"[3] इति सूत्रभाष्ये– "तत्र युगपज्ज्ञेयानुपलब्ध्या यदनुमीयतेऽन्तःकरणं न तस्य गुणो ज्ञानम्"[4] इति ज्ञानस्य मनोगुणत्वस्य निराकृतत्वात्।

---

कारण यह है कि किसी ने वृद्धावस्था में आँखों की रोशनी खो दिया हो और उसको पूर्वदृष्ट किसी पर्वत या वृक्ष या पुष्प का स्मरण होता है तो उसका यह स्मरणानुसन्धान होगा- यमहं पूर्वमद्राक्षम् तमहमिदानीं स्मरामि। ग्रहण=ज्ञान तथा स्मरण समानकर्तृक होते हैं- ऐसा नियम है। ऐसा नहीं मानने पर देखेगा देवदत्त और स्मरण होने लगेगा यज्ञदत्त को–इस अतिप्रसक्ति को वारित करने हेतु उक्त नियम का अङ्गीकार सभी विवेचकों को मान्य है। यथा चक्षुष् के नष्ट होने पर भी दृष्टविषयक स्मृति होती है तद्वत् दृष्ट वृक्ष के नष्ट होने पर तद्विषयक स्मृति होती है अतः इन्द्रिय अथवा विषय (वस्तु) को आत्मा नहीं माना जा सकता क्योंकि ये दोनों ही ज्ञान के अधिकरण नहीं है। इन दोनों से व्यतिरिक्त आत्मा है जिस एक के द्वारा विषय का चाक्षुषज्ञान एवं मानस स्मरण, कालान्तर में इन्द्रिय अथवा विषय के नष्ट होने और न होने की स्थिति में सम्पादित होते हैं। निष्कर्षतः गौतम ने कहा है- "नेन्द्रियार्थयोः तद्विनाशेऽपि ज्ञानावस्थानात्।" अर्थ सुस्पष्ट है– इन्द्रिय अथवा पदार्थ को आत्मा नहीं माना जा सकता क्योंकि उन दोनों के अथवा दो में किसी एक के नष्ट होने पर भी ज्ञान की अवस्थिति देखी जाती है।

इसी प्रकार ज्ञान को मनोद्रव्य का गुण भी नहीं माना जा सकता है। अतएव मनस् में आत्मता निराकृत की जाती है। गौतमसूत्र है–

"युगपज्ज्ञेयानुपलब्धेश्च न मनसः।" इससे सम्बद्ध भाष्यवचन है–

---

१. न्या० सू० भा० ३।१।१.
२. न्या० सू० ३।२।१८.
३. न्या० सू० ३।२।१९.
४. न्या० सू० भा० ३।२।१९.

अपि च, ज्ञानादीनां मनोगुणत्वे तस्याणुपरिमाणत्वादप्रत्यक्षत्वाच्च तद्गुणानां ज्ञानादीनां सुतरामप्रत्यक्षत्वापत्तिः। किञ्च, "मनसैवानुद्रष्टव्य"[१] इति श्रुतौ मनस आत्मदर्शनस्य करणत्वेन प्रतिपादितत्वान्न मनस आत्मत्वं न वा ज्ञानादीनां तद्गुणत्वसंभवः।

ननु "कामः सङ्कल्पो विचिकित्सा......इत्येतत्सर्वं मन एव"[२] इति श्रुतौ कामादीनां मनोगुणत्वप्रतिपादनान्मन एव आत्मा? इति चेन्न, उक्तश्रुत्या कामादीनां मनोजन्यत्वस्य प्रतिपादनात्। अत इच्छादीनामुत्पत्तौ मनो निमित्तकारणमेव। तेषां समवायिकारणं त्वात्मैवेति न मनस आत्मत्वसंभवः[३]।

---

"तत्र युगपज्ज्ञेयानुपलब्ध्या यदनुमीयतेऽन्तःकरणं न तस्य गुणो ज्ञानम्।"

इसका अर्थ सुस्पष्ट है- एक साथ दो या दो से अधिक का ज्ञान उत्पन्न नहीं होता- इस आधार पर अनुमानगम्य जो अन्तःकरण (मनस) है उसका गुण ज्ञान नहीं हो सकता। इस प्रकार ज्ञान के मनोद्रव्याश्रित गुण होने का सुस्पष्ट निराकरण किया गया है।

यह भी ध्यातव्य है- ज्ञान, सुख, दुःख को यदि मनोगुण माना जाय तो स्वयं मनस् अणुपरिमाण है अतएव अप्रत्यक्ष है तो उसके आश्रित गुण माने जाने पर ज्ञान सुखादि की तो सुतराम् अप्रत्यक्षता आपादित होगी। दूसरी बात यह है कि"मनसैवानुद्रष्टव्यः"- इस औपनिषद वचन में आत्मदर्शन के प्रति मनस् को करण बताया गया है अतः करण से अतिरिक्त कर्ता (आत्मा) सिद्ध होता है। इसलिये न मन आत्मा हो सकता और न ज्ञानादि मनोधर्म हो सकते।

यहाँ आशऽका उदित होती है कि "कामः" संकल्पो विचिकित्सा...... इत्येतत् सर्वं मन एव" इस मन्त्र वचन में यतः कामादि को मनोगुण बताया गया है अतः मनस् को ही आत्मा मान लेना चाहिये। किन्तु यह आशङ्का निर्मूल है। कारण यह है कि उपर्युक्त श्रुतिवचन से काम, संकल्पादि में मनोजन्यता प्रतिपादित की गई है। अतः बुद्धि, सुख, दुःख इच्छा प्रभृति की उत्पत्ति में मनस् निमित्त कारण है तथा इन गुणों का समवायिकारण आत्मा होता है। अतश्च मनोद्रव्य को आत्मरूप से कथमपि मान्य नहीं कहा जा सकता।

---

६. बृ० उ० ४।४।१९.

१. बृ० उ० १।५।३.

२. न्या० प्र०, पृ० २७२-२७३.

एवं देहेन्द्रियादिव्यतिरिक्तः स जीवो न्यायदर्शने किमेकविध उतानेकविधः? नित्यः किं वाऽनित्यः? विभुरुत अणुः? इति जिज्ञासायामुक्तं केशवमिश्रेण–"स च देहेन्द्रियादिव्यतिरिक्तः प्रतिशरीरं भिन्नो नित्यो विभुश्च"[३] इति।

## जीवनानात्वम्

नैयायिकाः "यथा दृश्यते तथा कल्प्यते" इति नियमानुसारेणेह खलु केचन सुखिनः, केचन च दुःखिनः, अपरे बद्धाः, अन्ये च मुक्ता दृश्यन्ते। एतादृशं वैलक्षण्यं जीवनानात्व एव सङ्गच्छते, अन्यथा जगद्वैचित्र्यभङ्गप्रसङ्ग इति कृत्वा तद्व्यवस्थार्थं नानात्मवाद एव वर इत्यामनन्ति। उक्तं च–

कश्चिद्रङ्कः कश्चिदाढ्यः कश्चिदन्यविधः पुनः।
अनयैवात्मनानात्वं सिद्ध्यत्यत्र व्यवस्थया[४]।।इति।

---

इसी प्रकार आत्मा के सन्दर्भ में अनेक जिज्ञासा उदित होती है-

१. देह, इन्द्रिय एवम् मनस् से व्यतिरिक्त जीवात्मा न्यायदर्शन में एकविध है अथवा अनेकविध?

२. जीव नित्य है अथवा अनित्य?

३. जीव विभु है अथवा अणु?

इनका समाधान करते हुए श्री केशवमिश्र ने कहा है- वह जीव देहेन्द्रियादि से अतिरिक्त है तथा प्रतिशरीर भिन्न-भिन्न है। वह जीव नित्य है तथा विभु है।

## जीवनानत्वम्

नैयायिकों का एक नियम है— जो वस्तु जैसी दिखती तदनुरूप ही उसकी कल्पना की जाती है। तदनुसार इस संसार में कुछ लोग सुखी देखे जाते हैं तदन्य कतिपय दुःखी देखे जाते हैं। कतिपय बद्ध तो कतिपय मुक्त देखे जाते हैं। इस तरह की विलक्षणता (विसदृशता) जीव के नानात्व से ही उपपन्न हो सकती है। अन्यथा उपलब्ध जगद्-वैचित्र्य का भङ्ग प्रसक्त होगा। अतः इस सिद्धान्त में व्यवस्था की उपपत्ति हेतु नानात्मवाद का स्वीकार ही उत्तम है—ऐसा माना जाता है।

तदनुरूप निम्नाङ्कित वचन कहा गया है—

कश्चिद्रङ्कः....व्यवस्थया।।१।।

---

३. त० भा०, पृ० १४५.

४. तत्त्वा०, आत्म० ९०.

ननु सुखदुःखादिवैचित्र्यव्यवस्थार्थं जीवानेकत्वाङ्गीकारो गौरवदोषग्रस्तः, अतो यथा एकस्यैव चैत्रस्य 'पादे मे वेदना, शिरसि मे सुखम्' इत्यादिशिरोपादाद्यवच्छेदेनानुभवोपपत्तिः, तद्वदेकस्यैवात्मनश्चैत्रादि-शरीरावच्छेदेन नानाविधानां सुखदुःखादीनामनुभवः स्यादिति चेन्न, शिरःपादाद्यवच्छेद्यसुखदुःखादिषु योऽहं शिरसि सुखमनुभवामि सोऽहमेव पादे दुःखमनुभवामीति प्रत्यभिज्ञोपपत्तिवद् योऽहं चैत्रशरीरेण सुखमनुभवामि सोऽहमेव मैत्रशरीरेण दुःखमनुभवामीत्यनुसन्धानाभावान्नैकात्मवादः शोभनः प्रतिभाति। अतः "गौरवं च फलमुखं न दोषाय"[१] इति वचनाद् व्यवस्थानुसारेण नानात्मस्वीकारे न गौरवं दूषणाय कल्पते।

---

इसका अर्थ सुस्पष्ट है—कोई निर्धन है कोई धनी है तथा कोई अन्य प्रकार का है। इस प्रकार की व्यवस्था की उपपत्ति हेतु आत्मनानात्व=जीवानैक्य सिद्ध होता है।।१।।

यहाँ एक कल्पना की जाती है—सुखी, दुःखी आदि एवम् सुख, दुःखादि के वैचित्र्य की व्यवस्था की उपपत्ति हेतु नानाजीवावाद के स्वीकार करने से गौरव दोष होता है। अतः यथा चैत्र-एक व्यक्ति में देहावयव के अवच्छेदक भेद से मेरे पैर में पीड़ा है तथा शिर में सुख है—एवं प्रकार से परस्पर विरुद्ध अनुभवों की उपपत्ति हो जाती है तद्वद् जीव को एकविध ही मान लिया जाय तथा चैत्रादि भिन्न पिण्डों को उसका शरीर मान लिया जाय। एतावता विभिन्न चैत्रादि शरीरावच्छेदेन नानाविध परस्पर-विरुद्ध सुख-दुःखादि का अनुभव उपपन्न हो जायेगा। अतः नानाजीववाद के सिद्धान्त का स्वीकार लाघवात् कर लिया जाय। किन्तु यह कल्पना समीचीन नहीं है। क्योंकि दृष्टान्त की समता प्रकृत में अनुपलब्ध है। तद्यथा— एक व्यक्ति के इस अनुभव में प्रत्यभिज्ञा की उपपत्ति परिदृष्ट है—जो मैं शिरोऽवच्छेदेन सुखानुभूति करता हूँ वही मैं पादावच्छेदेन दुःखानुभूति करता हूँ। परन्तु प्रकृत में किसी को भी यह प्रत्यभिज्ञा नहीं होती कि जो मैं चैत्र-शरीर से सुख का अनुभव करता हूँ वही मैं मैत्रशरीर से दुःख का भी अनुभव करता हूँ। अतः एकात्मवाद का सिद्धान्त शोभन (युक्तिसंगत) नहीं है। यतश्च फलमुख गौरव दोषावह नहीं होता अतः व्यवस्था के अनुरोध से नानाजीववाद का सिद्धान्त श्रेयस्कर है।

---

१. ा० ब्र० सि०, पृ० ११०.

नन्वनेकात्मवादिनोऽप्यस्मिन् शरीरे विद्यमान एव जीवोऽतीतदेहेष्वासीत्, यद्यमुक्तोऽग्रेऽपि भविष्यतीति स्वीकुर्युः, तर्हि तस्य जीवस्य योऽहं पूर्वजन्मनि सुखमन्वभवं सोऽहमेवास्मिन् जन्मनि दुःखमनुभवामीति प्रत्यभिज्ञानं कथं न भवति। यदि तत्र शरीरभेदो हेतुः तर्ह्येकात्मवादेऽपि शरीरभेदेनैव हेतुना शरीरान्तरानुभूतसुखादीनां प्रत्यभिज्ञानुपपत्तिरिति चेत्, मैवम्। जन्मान्तरसुखाद्यननु- सन्धाने न शरीरभेदो हेतुः, किन्तु जन्मान्तरानुभूतसुखादिसंस्काराभावः, उत्तरोत्तरजन्मप्राप्तौ पूर्वपूर्वशरीरानुभूतसुखादि-संस्काराणां विनश्यमानत्वात्। अतोऽयोगिपुरुषाणां जन्मान्तरसुखाद्यनुसन्धानाभावः। शरीरभेदमात्रस्य हेतुत्वे एकस्मिन्नेव जन्मन्यवयवोपचयापचयाभ्यां बाल्यादिशरीरभेदेन बाल्येऽनुभूतसुखा- देर्यौवनवार्धक्यादावस्मरणप्रसङ्गः। अतः सर्वशरीरेषु नैक आत्मा, अपि तु प्रतिशरीरं भिन्नः[१]।

---

जो आचार्य नानाजीववादी हैं वे स्वमत में भी वर्तमान शरीर में विद्यमान जीव ही अतीत देह में विद्यमान था। अथ च जबतक मुक्ति को प्राप्त नहीं कर लेगा तब तक आगामी शरीर में भी विद्यमान रहेगा— ऐसा स्वीकार करेंगे। ऐसी स्थिति में उस जीव को यह प्रत्यभिज्ञान क्यों नहीं होता—"जो मैं पूर्वजन्म में सुख का अनुभव किया था। वही मैं इस जन्म में दुःख का अनुभव करता हूँ। यदि समाधान के लिए यह कहा जा सकता है कि शरीरभेद होने से प्रत्यभिज्ञा नहीं होती है। तो तुल्यन्याय से एकात्मवाद में भी शरीर भेद होने के नाते ही शरीरान्तर से अनुभूतसुखादि की प्रत्यभिज्ञा उपपन्न नहीं होती यह समाधान दिया जा सकता है— ऐसा कथन समीचीन नहीं है। जन्मान्तरीय सुखादि के अनुसन्धान नहीं होने में शरीरभेद होना कारण नहीं है अपितु जन्मान्तर में अनुभव किये गये सुखादि के संस्कार का अभाव होने से उक्त स्मृति (अनुसन्धान) नहीं हो पाती है। क्योंकि उत्तरोत्तर जन्म की प्राप्ति होने पर पूर्वपूर्व शरीरानुभूत सुखादि-संस्कारों का विनाश हो जाता है। यही कारण है कि योगिजन से व्यतिरिक्त सामान्यजन को जन्मान्तरीय सुखादि की स्मृति नहीं होती है। यदि शरीरभेदमात्र को उक्त अनुस्मृति के अभाव के प्रति कारण मानें तो बाल्यावस्था में अनुभूत सुखादि का युवावस्था एवं वृद्धावस्था में भी स्मृत्यभाव होने लगेगा। क्योंकि एक ही जन्म के शरीर में उपचय एवम् अपचय होने से शैशवावस्था शरीर से वृद्धावस्था शरीर तक अनेकधा भेद की विद्यमानता अनुभव सिद्ध है। अतः समस्त प्राणि-शरीरों में एक ही जीवात्मा विद्यमान होता है— यह सिद्धान्त अमान्य है। तद्विपरीत प्रतिशरीर में भिन्न जीवात्मा है ऐसा नानात्मवाद सिद्धान्त ही समीचीन है।

---

१. न्या० प्र०, पृ० २३४-२३६.

ननु प्रतिशरीरं भिन्न इत्यस्य कोऽर्थः? यावन्ति शरीराणि तावन्त आत्मान इत्येव प्रतिशरीरं भिन्न इत्यस्यार्थः स्यात् तच्च न घटते, शरीरभेदस्यात्मभेदे प्रयोजकत्वाभावात्, जन्मभेदेनावस्थाभेदेन कायव्यूहस्थलेष्वनुपपत्तेः। तथाहि– "प्रत्याहाराभ्यासकृतात् स्तन्याभिलाषात्"[1] इत्यस्य सूत्रस्य भाष्ये–"स खल्वयमात्मा पूर्वशरीरात् प्रेत्य शरीरान्तरापन्नः क्षुत्पीडितपूर्वाभ्यस्त-माहारमनुस्मरन् स्तन्यमभिलषति। तस्मान्न देहभेदादात्मा भिद्यते[2]" इति वात्स्यायनेन जन्मान्तरीयानेकदेहेष्वेकस्यैवात्मनः स्थितिरिति व्यवस्थापितत्वात् तत्रापि देहभेदे नात्मभेदः। यद्येवमुच्येत न जन्मान्तरीयशरीरभेद आत्मभेदे प्रयोजकः, अपि त्वेकस्मिन्नेव जन्मनि विद्यमानः शरीरभेद इति, तदप्ययुक्तम्, एकस्मिन्नेव जन्मन्यवस्थाभेदेन संभवेऽपि शरीरभेदे स नात्मभेदप्रयोजकः। बाल्य–यौवन–वार्धक्यादिष्ववस्थासु तत्तच्चैत्रादि–शरीराणामवयवोपचयापचयाभ्यां भिन्नत्वेऽपि 'योऽहं बाल्ये पितरमन्वभवं सोऽहमिदानीं नप्तॄननुभवामि' इति

---

अब प्रतिशरीर आत्मा भिन्न है— इसका आशय क्या है? यह प्रश्न उपस्थित होता है। जितने शरीर हैं उतने जीव हैं— यह अर्थ "प्रतिशरीरं भिन्नः" इस वाक्य का अर्थ मानें तो यह अर्थ सुघटित नहीं हो सकता। क़्योंकि शरीरभेद को आत्मभेद का प्रयोजक नहीं माना जा सकता है। प्रारब्ध कर्मों का क्षय भोग से ही होता है यह मान्यसिद्धान्त है। योगिजन यथाशीघ्र भोग से प्रारब्धकर्मभोग करने हेतु योगबल से अनेक शरीर को उत्पन्न कर लेते हैं तथा उनसे एकसाथ भोग कर शीघ्र ही प्रारब्ध कर्म का क्षय सम्पादित करते हैं। यह कायव्यूह से कर्मफलभोग की प्रक्रिया कहलाती है। एतदर्थ अनेक शरीर के जन्म से एवम् झटिति यौवनादि अवस्थाभेद से उक्तस्थल में जीवभेद नहीं होने से शरीरभेद को आत्मभेद का प्रयोजक नहीं माना जा सकता। तथाहि गौतमसूत्र है— "प्रत्याहाराभ्यासकृतात् स्तन्याभिलाषात्।" इस सूत्र के भाष्य में आचार्य वात्स्यायन का निम्नाङ्कित वाक्य है— "स खल्वयमात्मा....। तस्मान्न देहभेदादात्मा भिद्यते।" इसका अर्थ है— वह एक ही आत्मा पूर्वशरीर में मृत्यु को प्राप्त कर शरीरान्तर को प्राप्त कर (जन्मान्तर में) क्षुधा एवं पिपासा से पीड़ित होकर पूर्वजन्माभ्यस्त आहार का स्मरण करता है और स्तन्यपान में प्रवृत्त होता है। यदि देहभेद से आत्मभेद होता तो नवजात शिशु की प्रवृत्ति स्तन्यपान में नहीं होती। इस वाक्य के द्वारा यह व्यवस्था दी गयी है कि जन्मभेद से प्राप्त अनेक देहों में एक ही आत्मा (जीव) की स्थिति रहती है। अतः वहाँ भी देहभेद से आत्मभेद का

---

१. न्या० सू० ३।१।२१.
२. न्याय० सू० भा० ३।१।२१.

प्रत्यभिज्ञानान्यथाऽनुपपत्त्या तासु सर्वास्ववस्थास्वनुभविता एक एव जीव इति सर्वानुभवसिद्धम्।

यद्येवमुच्येत, एककालिकशरीरभेद आत्मभेदे प्रयोजक इति, तदप्ययुक्तम्, कायव्यूहस्थले हि योगिनः स्वयोगशक्तिमहिम्ना एकस्मिन्नेव काले शतशः शरीराणि निर्माय तैः सर्वैः शरीरैरेककालावच्छेदेन स्वसञ्चितकर्मफलानि भुञ्जन्ते। सत्यपि तत्र समानकालिकशरीरभेदे नात्मभेदः स्वीक्रियते। तस्मात् 'प्रतिशरीरं भिन्नः' इति पदस्थशरीरभेदेन कथमात्मभेदः? इति शङ्कायामुक्तं मेरुशास्त्रिगोडबोलेमहोदयैः–"अत्र भोगवत्त्वे

---

सिद्धान्त मान्य नहीं है।

यदि यह व्याख्यान किया जाय कि जन्मान्तरीय शरीरभेद, आत्मभेद का प्रयोजक नहीं है। अपितु एक ही जन्म (जीवन) में विद्यमान शरीरभेद आत्मभेद का प्रयोजक है। यह व्याख्यान भी युक्तिसंगत नहीं है। एक ही जन्म में अवस्थाभेद से शरीरभेद होता है किन्तु आत्मभेद नहीं होता। चैत्र या अन्य किसी व्यक्ति के बाल्य, यौवन एवं वार्धक्य प्रभृति अवस्थाओं में उपचय एवम् अपचय के कारण शरीरभेद होने पर भी होने वाली प्रत्यभिज्ञा— "जो मैं बाल्यावस्था में अपने पिता का अनुभव करता था वह मैं सम्प्रति नाती का अनुभव करता हूँ।" यह प्रत्यभिज्ञा तभी उपपन्न हो सकती है। जब उन सभी बाल्यप्रभृति अवस्थाओं में एक ही अनुभविता जीव हो। उपर्युक्त प्रत्यभिज्ञा सर्वजनसिद्ध अनुभव है। यदि यह विवेचन किया जाय कि समानकाल में विद्यमान शरीरभेद, आत्मभेद का प्रयोजक होता है तो यह भी युक्ति-संगत नहीं है। क्योंकि काव्यव्यूहस्थल में योगिजन, योगशक्ति की महिमा से एक ही काल में अनेक शरीरों को निर्मित कर उन सकल शरीरों से समान काल में निज संचित कर्मफलों का भोग करते हैं। उक्त स्थल में समानकाल में शरीरभेद रहने पर भी आत्मभेद स्वीकार्य नहीं होता है। अत: "प्रतिशरीरं भिन्नः (आत्मा)" इस पदकदम्ब से प्रोक्त "शरीरभेद से आत्मभेद होता है।" सिद्धान्त की उपपत्ति कैसे होगी? यह जिज्ञासा बनी है। इसका समाधान मेरुशास्त्रिगोडबोले महोदय ने प्रस्तुत किया है— "अत्र भोगवत्त्वे सति..... सकलशरीराणां बोधः।" उपर्युक्त "प्रतिशरीरं भिन्नः" के भिन्न पद का अर्थ है— भोगवत्त्वे सति अनवच्छिन्न भोगवद्भिन्नः। "प्रतिशरीरम्" पद की द्वितीया विभक्ति का अर्थ है— अवच्छेद्यता। व्युत्पत्तिवैचित्र्य से इसका अन्वय भोग एवम् अनवच्छेद्यत्व में होता है। शरीरपद का अर्थ है— प्रयोज्यतासम्बन्ध से तत्तन्मनोविशिष्ट। एवञ्च एक जीव का जन्मभेद से, अवस्थाभेद से तथा कायव्यूह रचना से नाना शरीर की विद्यमानता में भी आत्मभेद अतिप्रसक्त नहीं होता। एक ही

सत्यनवच्छिन्नभोगवद्भिन्नो भिंन्नशब्दार्थः। द्वितीयार्थोऽवच्छेद्यत्वं व्युत्पत्तिवैचित्र्याद् भोगेऽनवच्छेद्यत्वे चान्वेति। शरीरपदं तु प्रयोज्यतासम्बन्धेन तत्तन्मनोविशिष्टपरम्। तेनैकात्मनो जन्मभेदेनावस्थाभेदेन कायव्यूहस्थले च नानाशरीरसत्त्वेऽपि न क्षतिः, एकस्यैव मनसः पूर्वपूर्वजन्मार्जितधर्मद्वारा सकलशरीरप्रयोजकत्वात्। तथा चैकैक आत्मा यत्किञ्चिन्मनोविशिष्टशरीरावच्छिन्नभोगवत्त्वे सति तादृशशरीरानवच्छिन्नभोगवद्भिन्न इति वाक्यार्थः। वीप्सावशात् तत्तन्मनोविशिष्टत्वेन सकलशरीराणां बोधः"[१] इति।

नीलकण्ठशास्त्रिणः 'प्रतिशरीरं भिन्नः' इत्यस्यार्थमेवं प्रतिपादयन्ति– "न चावयवोपचयापचयाभ्यां तत्तच्चैत्रादिशरीराणां भिन्नत्वेऽपि जीवभेदाभावादिदमसङ्गतम्, एवं कायव्यूहस्थलेऽपीति वाच्यम्, समानकालिकयोगजधर्माजन्यशरीरभेदेन जीवभेदस्यैव विवक्षिततयाऽदोषात्। एवं चैतच्छरीरावच्छिन्नभोगवान् समानकालिकयोगजधर्माजन्यतच्छरीरावच्छिन्न–भोगवद्भिन्न इति रीत्या प्रतिशरीरं जीवभेदः साध्यः"[२] इति।

---

मनस् में पूर्वपूर्वजन्मार्जित धर्म द्वारा सकलशरीर की प्रयोजकता रहती है। एवञ्च प्रत्येक जीव यत्किञ्चिन्मनोविशिष्ट शरीरावच्छेदेन भोगवान् रहकर तादृश शरीर से अनवच्छिन्नभोगवान् अन्य जीव से भिन्न होता है— यह उपर्युक्त वाक्य- 'प्रतिशरीरंभिन्नः।'' का अर्थ है। वीप्साबलात् तत्तन्मनोविशिष्ट सकलशरीर का बोध उदित होता है।

श्रीनीलकण्ठशास्त्री महानुभाव "प्रतिशरीरं भिन्नः'' इस वाक्य का अर्थ निम्नाङ्कित प्रतिपादित करते हैं— अवयव के उपचय एवम् अपचय से तत्तच्चैत्रादि-शरीरों की भिन्नता रहने पर भी जीवभेद नहीं होने से एवं काव्ययूहस्थल में भी तुल्ययुक्ति से "प्रतिशरीरं भिन्नः'' कथन असङ्गत है—ऐसा नहीं मानना चाहिए। समानकालिक योगजधर्माजन्य शरीरभेद से ही जीवभेद होता है— ऐसा वाक्यार्थ विवक्षित होने से उपर्युक्त दोष का निराकरण हो जाता है। एवं च निष्कर्षवचन के रूप में वाक्यार्थ निम्नाङ्कित है— एवच्छरीरावच्छिन्न भोगवान् जीव समानकालिक योगजधर्माजन्यतच्छरीरावच्छिन्नभोगवान् से भिन्न होता है। इस प्रकार शरीरभेद से जीवभेद की व्यवस्था उपपन्न होती है।

---

१. त० सं० वा० वृ० पृ० २०

२. त० सं० नी०, पृ० १९३-१९४

पूर्वं यदुक्तं जन्मभेदेनावस्थाभेदेन शरीरभेदेऽपि नात्मभेद इति, तद् व्यावृत्त्यर्थं समानकालिक इत्युक्तम्। समानकालिकेषु योगिनां कायव्यूहीय-शरीरेष्वनेकेषु सत्स्वपि नात्मभेद इति दोषपरिजिहीर्षया योगजधर्माजन्येत्युक्तम्। एवं सति न कोऽपि दोषः। अनुमानं च–एतच्छरीरावच्छिन्नो जीवः समानकालिकयोगाजन्यैतच्छरीरभिन्नशरीरावच्छिन्नजीवभिन्नः, समानकालिकयोगा-द्यजन्यैतच्छरीरभिन्नशरीरावच्छेद्यभोगानधिकरणत्वात्, घटवत्[1]।

एवं जीवनानात्वे न केवलं युक्त्यनुमानादिकमेव मानम्, किन्तु "यो यो ह्यस्येतः प्रैति"[2], "यो यो यां यां तनुं भक्तः"[3] इत्यादिश्रुतिस्मृतयोऽपि जीवनानात्वे प्रमाणम्। यत्र पुनः–"एको देवः सर्वभूतेषु गूढः"[4] इति श्रुत्या

---

पूर्व में जो आपत्ति दी गई है— जन्मभेद एवम् अवस्थाभेद होने से शरीरभेद होने पर भी आत्मभेद नहीं होता। इस आपत्ति के निवारण हेतु शरीर के विशेषण रूप से समानकालिक पद का उपादान किया गया है। दूसरी आपत्ति दी गई थी— योगियों के कायव्यूह से सम्बद्ध समानकालिक अनेक शरीर की विद्यमानता में जीवभेद नहीं होता। उक्त आपत्ति के निवारणार्थ शरीर के विशेषण रूप से "योगजधर्माजन्य" पद का उल्लेख किया गया है। इस प्रकार के परिष्कार से कोई दोष नहीं रह पाता है। यहाँ पर अनुमान का निम्नाङ्कित आकार पर्यवसन्न होता है—

एतच्छरीरावच्छिन्नोजीवः समानकालिक-योगाजन्य-एतच्छरीरभिन्नशरीरावछिन्न-जीवभिन्नः समानकालिक योगाद्यजन्य-एतच्छरीरभिन्नशरीरावच्छेद्यभोगानधिकरणत्वात् घटवत्।।

इस अनुमानवाक्य का अर्थ उपर्युक्त विश्लेषण से निरूपित किया जा चुका है।

जीवनानात्व के सन्दर्भ में केवल युक्ति या अनुमानादि ही प्रमाण है— ऐसी बात नहीं है। प्रत्युत "यो योह्यस्येतः प्रैति" इत्यादि श्रुतिवचन एवं "यो यो यांयां तनुं भक्तः" इत्यादिस्मृतिवचन भी जीवनानात्व में प्रमाण हैं। जहाँ उपनिषद् के मन्त्रवचन— "एको देवः सर्वभूतेषु गूढः।" इत्यादि में आत्मैकत्व

---

१. त० सं० दी०, नृसिं० व्या०, पृ० १९३.

२. छा० उ० ८।३।१.

३. भ० गी० ७।२१.

४. श्वे० उ० ६।११.

आत्मैकत्वं प्रतिपाद्यते, तदीश्वरविषयकमित्यवगन्तव्यम्। तदेवं न्यायदर्शने श्रुति-स्मृति-अनुमान-युक्तिभिर्जीवानामनेकत्वमङ्गीक्रियते[1]।

## जीवात्मनां विभुत्वम्

एवं सिद्धे आत्मनि स किमणुः, उत मध्यमपरिमाणः, यद्वा विभुरिति जिज्ञासायां नैयायिका आत्मनो विभुपरिमाणत्वमेव समर्थयन्ते। सर्वमूर्तद्रव्यसंयोगित्वं हि विभुत्वम्। सर्वमूर्तद्रव्यसंयोगित्वं च त्रिधा भवितुमर्हति। तद्यथा–१. कुत्रापि स्थिरीभूतेनात्मना साकं संयोगार्थं मूर्तद्रव्याण्येव तत्समीपे यद्यागच्छेयुः, २. अथवा आत्मैव स्वयं चलित्वा सर्वमूर्तद्रव्यसंयोगं सम्पादयेत्, ३. यद्वा आत्मनः परममहत्परिमाणत्वेन सर्वेषामपि मूर्तद्रव्याणां तदन्तर्गतत्वेनैव सहजतया सर्वदा संयोग इति। उक्तेषु त्रिषु पक्षेषु प्रथमस्तु न समीचीनः, अव्यावहारिकत्वात्,

---

का प्रतिपादन प्राप्त होता है, वह ईश्वरविषयक प्रतिपादन है—ऐसा समझना चाहिए। इस प्रकार न्यायदर्शन में श्रुति, स्मृति, अनुमान तथा युक्ति के बल से जीवनानात्व का अङ्गीकार किया जाता है।

## जीवों की विभुता

सम्प्रति प्रमाणसिद्ध जीव के परिमाण के सन्दर्भ में जिज्ञासा उदित होती है—जीवअणु-परिमाण है, मध्यमपरिमाण है या विभुपरिमाण है? इस सन्दर्भ में नैयायिक लोग जीव की विभुपरिमाणता का समर्थन करते हैं। विभुत्व का स्वरूप है—सर्वमूर्तद्रव्यसंयोगित्व। यह तीन प्रकार से सम्भूत अर्थात् उपपन्न होता है। तद्यथा

१. स्थिर आत्मा के साथ संयुक्त होने के लिए मूर्त द्रव्य उसके पास आवें।

२. आत्मा स्वयं चलकर सर्वमूर्तद्रव्य के साथ संयोग को प्राप्त करे।

३. आत्मा का परममहत्परिमाण होने से सभी मूर्तद्रव्यों का तदन्तर्गत होने से सहजरूप से सर्वदा संयोग रहता हो।

इन तीन पक्षों में प्रथमपक्ष समीचीन नहीं है। क्योंकि यह अव्यावहारिक है एवं ऐसा किसी का अनुभव नहीं है।

द्वितीय पक्ष भी असंगत है क्योंकि सर्वमूर्त-द्रव्य-संयोग के लिए इधर-उधर भटकने से समस्त व्यवहार का उच्छेद प्राप्त होगा।

---

१. न्या० प्र०, पृ० २३६.

अनुभवाभावाच्च। द्वितीयोऽप्यसंगत एव, सर्वमूर्तद्रव्यसंयोगार्थमाहिण्ड्यमानस्यात्मनः सर्वव्यवहारोच्छेदप्रसङ्गात्। अतस्तृतीयः पक्ष एव समीचीनः, तस्य विभुत्वादेवैकस्मिन् समये सर्वमूर्तद्रव्यसंयोगित्वोपपत्तेः[१]।

अत्रैवं शङ्का जागर्ति यत् किमर्थमात्मनो विभुत्वाङ्गीकारः? सर्वशरीरव्यापिसुखाद्युपलब्ध्यर्थमिति चेन्न, शरीरव्यापित्वमात्रेणापि तत्संभवात्। तस्य विभुत्वेन प्रपञ्चव्यापित्वाङ्गीकारे प्रयोजनाभाव एवेति चेत्, हेतुपुरःसरं हि तस्य विभुत्वं प्रतिपादितं केशवमिश्रैः–"स च सर्वत्र कार्योपलम्भाद् विभुः परममहत्परिमाणवानित्यर्थः"[२] इति।

अत्रेदं तात्पर्यमवधेयम्–सर्वत्र संसारे जीवात्मनः कार्याणामुपलभ्यमानत्वात् तस्य सर्वसंसारव्यापित्वमङ्गीकर्तव्यम्। जीवात्मनो हि कार्यं द्विविधम्–एकं प्रयत्नजन्यम्, अपरमदृष्टजन्यं च। प्रयत्नसम्पाद्येषु हि कार्येषु सशरीरस्यैवात्मन

---

अतः तृतीयपक्ष ही समीचीन (उपयुक्त) है। जीव के परममहत्परिमाण (विभु) होने से ही समानकाल में सर्वमूर्तद्रव्यसंयोग स्वरसतः प्राप्त हो जाता है।

इस सन्दर्भ में यह शङ्का उदित होती है कि किस प्रयोजन से आत्मा की विभुता को स्वीकारा जाता है? यदि विभुता का प्रयोजन है सम्पूर्ण शरीर में (शरीर के प्रत्येक अवयव में) स्थित सुखादि की उपलब्धि तो शरीरव्यापी आत्मा के अङ्गीकार मात्र से इस प्रयोजन की सिद्धि हो जायेगी।

यदि ऐसा कहें कि जीव विभु होने से स्वतः प्रपञ्चव्यापी है तो उसका कोई ऐसा उल्लेखयोग्य प्रयोजन नहीं माना जा सकता। ऐसी स्थिति में श्री केशव मिश्र जी ने हेतूपस्थापन के साथ जीव की विभुता का प्रतिपादन निम्नाङ्कित वाक्य में किया है—

"सच सर्वत्र कार्योपलम्भाद् विभुः परममहत्परिमाणवान्-इत्यर्थः।"

उक्त वाक्य का तात्पर्य है— सम्पूर्ण संसार में जीव के कार्यों की उपलभ्यमानता होने से जीव को सर्वसंसारव्यापी मानना चाहिए। जीव के कार्य दो प्रकार के होते हैं— (१) प्रयत्नजन्य एवम् (२) अदृष्टजन्य।

---

१. तर्कभाषायाः प्रमेयप्रकरणस्थात्मनिरूपणभागस्याचार्यबदरीनाथशुक्लकृता हिन्दीव्याख्या, पृ० १८७.

२. त० भा०, पृ० १४९.

आवश्यकता। यत्र पुनस्तददृष्टमात्रसम्पाद्यत्वम्, तत्र न सशरीरस्यात्मन उपस्थितिरावश्यकी, किन्त्वदृष्टाधारत्वेनात्ममात्रस्य। न्यायनयेऽयं नियमो यद् यस्य भोगार्थं यो हि विषय उत्पद्यते, तदुत्पादककारणसामग्र्या साकमुपभोक्तुर्जीवस्याप्यदृष्टं तत्कारणं भवतीति। यथा कस्यचिद् घटस्यनिर्माणे चक्र-चीवर-कुलाल-कपालादिनिमित्तोपादानकारणैः साकं घटोपभोक्तुरदृष्टमपि तन्निर्माणे कारणम्। यद्यदृष्टस्य सहकारिता न स्यात्, तर्ह्येकेनैव कुम्भकारेण निर्मितेष्वेकत्रैव कृताग्निसंस्कारेषु घटेष्वेकः पूर्णदग्धः, अपरोऽपूर्णदग्धश्च दरीदृश्यत इति तद्वैषम्ये किमपि कारणं वक्तव्यम्। तदेवात्रोपभोक्तुरदृष्टमित्युच्यते। एवमेव एकस्मिन्नेवोद्याने प्ररोहितानामेकजलेनैव सिञ्चितानां वृक्षाणां फलेषु तारतम्यं दृश्यते। तत्राप्युपभोक्तुरदृष्टतारतम्यमेव कारणमित्यन्यथाऽनुपपत्त्याङ्गी-कर्तव्यम्।

यत्र यत्र हि जीवात्मनो गमनं भवति, तत्र तत्र सर्वत्र सुखदुःख-साक्षात्कारस्य सम्पद्यमानत्वात् सर्वत्रात्मनो भोगसामग्रीणामस्तित्वमपरिहार्यमेव।

---

प्रयत्न द्वारा सम्पादनयोग्य कार्य में शरीरसहित आत्मा की आवश्यकता होती है। जो कार्य अदृष्टमात्र से सम्पादनीय होता है उसमें शरीर की उपस्थिति आवश्यक नहीं होती। किन्तु अदृष्ट आधारित आत्ममात्र की उपस्थिति ही एतदर्थ आवश्यक होती है। न्यायसिद्धान्त में मान्य नियम है— जिसके भोग के लिए जो विषय उत्पन्न होता है उस विषय की उत्पत्ति के प्रति कारणीभूत सामग्री के अन्तर्गत उपभोक्ता जीव का अदृष्ट भी परिगृहीत होता है। यथा किसी घट के निर्माण में चक्र, चीवर, कुलाल एवं कपाल प्रभृति निमित्त एवंम् उपादान कारणों के साथ घट के उपभोक्ता का अदृष्ट भी कारण होता है। यदि अदृष्ट सहकारी कारण नहीं हो तो एक ही कुम्भकार से निर्मित तथा एक ही आवे में अग्निसंस्कार प्राप्त घटों में एक पूर्ण परिपक्व तथा दूसरा अपूर्णपक्व घट देखा जाता है। इस विषमता का कोई कारण अवश्य होना चाहिए। वह कारण उपभोक्ता का अदृष्ट ही हो सकता है। इसी प्रकार एक ही उद्यान में बढ़े पले एक ही जल से सींचे गये वृक्षों के फलों में तारतम्य दिखाई देता है उस तारतम्य के प्रति उपभोक्ता के अदृष्ट का तारतम्य ही कारण होता है, अन्यथानुपपत्त्या ऐसा स्वीकार किया जाता है।

जहाँ कहीं जीवात्मा का जाना होता है वहाँ सर्वत्र सुख अथवा दुःख का साक्षात्कार उसे होता है। सर्वत्र भोग के लिए भोगसामग्री का अस्तित्व अपरिहार्य है। अतः स्थानविशेष में उपभोग्य विषय की उत्पत्ति में उपभोक्ता जीव के अदृष्ट

अतस्तत्तत्स्थानविशेषेषु तत्तदुपभोग्यविषयोत्पत्तावुपभोक्तुरदृष्टस्य सर्वत्र सम्बन्धो वक्तव्यः। अदृष्टस्य चात्मगुणत्वं साधितमेव। नहि गुणिनं विहाय गुणस्य सुदूरदेशगमनं संभवति, गुणगुणिनोः समवायसम्बन्धात्। अतः सर्वत्र विद्यमानस्यादृष्टस्याधिकरणत्वेनात्मनोऽपि सर्वत्र स्थितिरावश्यकी। आत्मनः सर्वत्रोपस्थितिश्च तस्य विभुत्वमन्तरानुपपन्ना। तस्मादात्मनो विभुत्वमङ्गीकर्तव्यमेव।

नन्वेवमप्यात्मनो विभुत्वं न शक्यमङ्गीकर्तुम्, सर्वेषामप्यात्मनां विभुत्वात्, तदधिष्ठितादृष्टानां च सर्वत्र समानरूपेण विद्यमानत्वात्। सर्वाणि च कार्याणि सर्वादृष्टजन्यानीति यद् वस्तु यस्यादृष्टजन्यं तद् तदुपभोग्यमित्यस्य नियमस्य भङ्गप्रसङ्ग इत्यपि न शङ्कनीयम्, यतो हि कस्यचित् कार्यस्योत्पत्तेः प्राक् तदुत्पत्तिस्थाने यस्य कस्यचित् तदव्यवहितपूर्वकालोपस्थितित्वमात्रेण न तद्धेतुत्वं संभवति, अपि तु तदुत्पादनोपयोगित्वेन, तदुत्पत्तावपेक्षितत्वमात्रेण

---

की कारणता मान्य होती है। अदृष्ट (धर्म एवम् अधर्म) आत्मगुण है यह अनुमान प्रमाण से पूर्व में सिद्ध किया जा चुका है। गुण, गुणिद्रव्य में समवाय-सम्बन्ध से विद्यमान रहता है अत: गुणिद्रव्य का परित्याग कर सुदूर देश में जा नहीं सकता। अत: सर्वत्र विद्यमान अदृष्ट का अधिकरण जीवात्मा की भी सर्वत्र उपस्थिति आवश्यक है। आत्मा की सर्वत्र उपस्थिति उसकी विभुता के बिना उपपन्न नहीं हो सकती। अत: जीव की विभुता का स्वीकार किया जाना अत्यावश्यक है।

अब यह आशङ्का होती है कि आत्मा के विभुत्व-स्वीकार से भी भोगवैचित्र्य की उपपत्ति नहीं हो सकती। कारण यह है कि सर्वत्र सभी जीवात्मा की उपस्थिति के साथ उन सबों के अदृष्ट भी समान रूप से ही विद्यमान रहते हैं। अतएव सभी कार्यवस्तु सबके अदृष्टसन्निधान में जन्म लेंगे एतावता जो वस्तु जिसके अदृष्ट से जन्य होगी उस जीव की उपभोग्य होगी—यह नियम भी अकिञ्चित्कर होगा यह आशङ्का करना समुचित नहीं है। क्योंकि किसी कार्य की उत्पत्ति से पूर्व उसकी उत्पत्ति के स्थान तथा अव्यवहित पूर्वकाल में उपस्थितिमात्र से जिस किसी वस्तु या व्यक्ति की हेतुता सम्भव नहीं होती अपितु उत्पादन में उपयोगी होने से अथवा कार्य की उत्पत्ति में नितराम् अपेक्षित होने से हेतुता होती है। जो ईदृश नहीं होते अन्यादृश होते हैं उनको अन्यथासिद्ध ही माना जाता है। जैसे कोई कुम्हार घटनिर्माण हेतु उद्योगपरायण होकर घट को निर्मित करता है उस समय उसके अन्य सम्बन्धी वहाँ उपस्थित होने मात्र से घट के कर्ता (कारण) नहीं माने जाते

वा। अन्यादृशानां त्वन्यथासिद्धत्वेनाप्युपपत्तेः। यथा कोऽपि कुम्भकारो घटनिर्माणे आसक्तः सन् घटं करोति, तदानीमन्येऽपि तत्सम्बन्धिनस्तत्रोपस्थिता भवेयुः, अथापि तद्घटनिर्माणे न ते कर्तारः, किन्त्वन्यथासिद्धाः। तथैव सर्वत्र सर्वेषामदृष्टानामुपस्थितत्वेऽपि नहि सर्वैरदृष्टैः सर्वाणि कार्याण्युत्पद्यन्ते, किन्तु तत्तददृष्टेन तत्तत्कार्याणि। अन्यादृष्टानि तु तत्कार्यं प्रत्यन्यथासिद्धानीति नास्ति दोषः।

आत्मनां विभुत्वे सर्वात्मनां सर्वत्र स्थितिरित्यतिप्रसक्तिः परिच्छिन्नान्यपि द्रव्याण्येकस्मिन् स्थाने स्थातुं न पारयन्ति, तर्हि विभुद्रव्याणां कथमेकत्रावस्थितिः? इत्येषापि शङ्का नैयायिकैरेवं प्रतिसमाधीयते यदनेकेषां मूर्तद्रव्याणामेकत्रावस्थित्यसंभवेऽप्यमूर्तद्रव्याणामेकत्रावस्थाने न विरोधः। यथैकत्र पुष्पफलादौ रूप-रस-गन्धादीनाममूर्तानां गुणानामस्तित्वे न परस्परविरोधः, तथाऽमूर्तानामाकाशकालदिगात्मनां द्रव्याणाम्, अनेकेषामात्मनां वा एकत्र स्थितौ न किञ्चित् काठिन्यमुत्पश्याम इति[१]।

---

अपितु अन्यथासिद्ध माने जाते हैं। तद्वत् विभु होने एवं कारण होने से सभी जीव एवं तदीय अदृष्ट की उपस्थिति रहने पर भी सर्वजीव के अदृष्टों की सर्वकार्य के प्रति कारणता नहीं होती किन्तु तत्तद् अदृष्ट से ही तत्तत् कार्य उत्पन्न होते हैं। अन्य शेष अदृष्ट तो उस कार्य के प्रति अन्यथा सिद्ध ही रहते हैं अतः उक्त दोष का निराकरण हो जाता है।

सभी जीव के विभु होने से उन सबों की सर्वत्र उपस्थिति मानने से अतिप्रसक्ति होगी। जब परिच्छिन्न द्रव्यों को भी एक स्थान में स्थित होना सम्भव नहीं है तो इतने सारे अनगिनत विभुद्रव्यों आकाश, काल, दिशा एवं जीवों के साथ परमेश्वर की एक स्थान में अवस्थिति कैसे हो सकती है? इस आशंका का समाधान नैयायिकों द्वारा यह दिया जाता है कि अनेकमूर्त द्रव्यों का एक स्थान में अवस्थिति तो सम्भव नहीं है किन्तु अमूर्त द्रव्यों के एकत्र अवस्थान में कोई विरोध नहीं होता है। यथा एक पुष्प अथवा फल में अमूर्त रूप, रस, गन्ध आदि अमूर्त गुणों की उपस्थिति एवम् अस्तिता में परस्पर-विरोध नहीं होता तद्वत् अमूर्त आकाश, काल, दिक् एवम् आत्म द्रव्यों (अनेक) की एकत्र स्थिति में किसी प्रकार का काठिन्य परिलक्षित नहीं होता।

---

१. तर्कभाषायाः प्रमेयप्रकरणस्थात्मनिरूपणभागस्याचार्यबदरीनाथशुक्लकृता हिन्दीव्याख्या, पृ० १८८-१९१.

अतोऽयं जीवात्मा मन इव नाऽणुपरिमाणः, घटादिरिव न मध्यमपरिणामः, अपि त्वीश्वरस्येवास्यापि विभुत्वमेव। यद्यात्मनोऽणुत्वं स्यात्, तदा तस्य शरीरैकदेशस्थित्या ग्रीष्मकालेऽम्बरमणेरत्युष्णतेजःसंस्पर्शेनापादमस्तकं दुःखस्य, तथा तदानीमेव शीतलतडागजलावगाहिनस्तस्यैव पुरुषस्य शिरसि मे दुःखं पादे मे सुखमिति परस्परभिन्नयोरुभयोः सुखदुःखयोरेककालावच्छेदेनानुभवप्रसङ्गः स्यात्। अत एवोक्तम्–"स च न परमाणुः। सर्वशरीरव्यापिसुखदुःखाद्यनुपलब्धिप्रसङ्गात्"[1] इति।

नन्वेकदेशस्थोऽपि प्रदीपः स्वप्रभया सर्वं प्रकोष्ठं यथा प्रकाशयति, तथैव शरीरैकदेशस्थोऽप्यात्मा शरीरान्तर्व्याप्तेन स्वज्ञानेन सर्वं जानातीति चेन्न, सति कायव्यूहस्थले एकस्मिन्नेव काले शतशः शरीराणि निर्माय तेभ्यः प्राक्तनकर्मफलमुपभोक्तुमिच्छतां योगिनां सुखादिसाक्षात्काराऽनुपपत्तेः, ज्ञानप्रभाया एकशरीरान्तर्व्याप्यत्वेऽपि शरीरान्तरेषु तदभावात्।

---

अतः जीवात्मा, मन की तरह अणुपरिमाण नहीं है। तद्वत् यह घटादि की तरह मध्यमपरिणाम भी नहीं है प्रत्युत ईश्वर की तरह यह विभु है। यदि जीव की अणुता होती तो उसकी स्थिति, शरीर के एकदेश में होती तो ग्रीष्मकाल में अम्बरमणि सूर्य के अत्यन्त उष्ण तेजःस्पर्श से आपादमस्तक तापदुःख की अनुभूति नहीं होती तद्वत् उक्त कालिक शीतलतडाग-जल में अवगाहन करने वाले उसी व्यक्ति को मेरे शिर में दुःख है तथा पैर में सुख इस प्रकार परस्पर भिन्न सुख एवं दुःख का एककालावच्छेदेन अनुभव का अनुदय प्रसक्त होगा। अतः यह स्पष्ट कहा गया है कि वह जीव परमाणु नहीं है क्योंकि ऐसा मानने से सर्वशरीरव्यापी सुखदुःख की अनुपलब्धि प्रसक्त होगी।

यदि यह कहें कि एक स्थान पर स्थित रहकर भी प्रदीप स्वप्रभा से समस्त प्रकोष्ठ को यद्वत् प्रकाशित करता है तद्वत् शरीर के एकदेश में स्थित रहकर भी अणु आत्मा सर्वशरीर में अन्तर्व्याप्त होकर स्वज्ञान से सर्वशरीरगत सुखादि की अनुभूति कर लेता है। तो यह कथन समीचीन नहीं होगा। क्योंकि कायव्यूह स्थल में एक ही काल में (एक ही समय में) शतशः शरीरों का निर्माण कर उनके माध्यम से प्राक्तन कर्मफल-भोग चाहने वाले योगियों को सुखादि का साक्षात्कार अनुपपन्न होगा। क्योंकि ज्ञानप्रभा एक शरीर में अन्तर्व्याप्त हो सकती

---

१. त० सं० दी०, पृ० १९६-१९७.

मध्यमपरिमाणत्वे चानित्यत्वेन कृतहानाकृताभ्यागमप्रसङ्गः। न चेष्टापत्तेरवकाशः, "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिकर्तृभोगप्रतिपादकस्मृतिवचनव्याकोपप्रसङ्गात्। कृतकर्मफलोपभोगार्थमप्यात्मनो नित्यत्वमावश्यकम्। नित्यत्वं चाणुपरममहत्परिमाणयोरेव संभवति। अणुत्वे कायव्यूहस्थले भोगाऽनुपपत्तेर्दर्शितत्वादन्यथाऽनुपपत्त्या विभुत्वमेव स्वीकर्तव्यम्। किञ्च, "आकाशवत् सर्वगतश्च नित्यः" इत्याद्युपनिषत्स्वात्मन आकाशदृष्टान्तेन विभुत्वं नित्यत्वं च प्रतिपादितम्। यत्र पुनः—"एषोऽणुरात्मा"[१] इत्यणुत्वप्रतिपादनम्, तत्तस्य दुर्विज्ञेयत्वप्रतिपादनार्थमित्यवगन्तव्यम्। "श्रवणायापि बहुभिर्यो न लभ्यः"[२] "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये"[३] इत्यादिश्रुतिस्मृतिषु तस्य दुर्विज्ञेयत्वं प्रतिपादितमेव। तदेवं न्यायनये आत्मा विभुपरिमाणः, विभुत्वादेव स नित्यः[४]।

---

है किन्तु अन्य शरीरों में उसका अभाव रह जायेगा।

यदि जीवात्मा को मध्यमपरिमाणवान् मान लेते हैं तो उसके देहवत् अनित्य होने से कृतहान एवम् अकृताभ्यागम की प्रसक्ति हो जायेगी। इस प्रसक्ति को इष्टापत्ति रूप में स्वीकार नहीं किया जा सकता। क्योंकि ऐसा मानने पर "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" ईदृश अनिवार्य कर्मफल-भोग-प्रतिपादक स्मृति वचन की कोपप्रसक्ति होगी। कृतकर्मफल के उपभोगार्थ भी आत्मा की नित्यता आवश्यक है। नित्यता, महत्परिमाण अथवा अणुपरिमाण में ही सम्भव है। अणुता-स्वीकार में कायव्यूहस्थल में भोग की अनुपपत्ति की प्रसक्ति बतायी जा चुकी है अतः अन्यथा अनुपपन्न होने से जीव की विभुता ही स्वीकरणीय है। "आकाशवत् सर्वगतश्च नित्यः" इत्यादि उपनिषद् वचन-प्रामाण्यसे आकाश दृष्टान्त से जीव की विभुता एवं नित्यता प्रमाणित होती है। जहाँ पर "एषोऽणुरात्मा" सदृश वचनों द्वारा अणुता का प्रतिपादन होता है वहाँ आत्मा की दुर्विज्ञेयता प्रतिपादन में अणुपद का तात्पर्य अवधारित होता है। "श्रवणायापि बहुभिर्यो न लभ्यः", इत्यादि श्रुति एवं "मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये" इत्यादि

---

१. मुण्ड० ३।९.
२. कठ० २।१।७.
३. भ० गी० ७।३.
४. न्या० प्र०, पृ० २३७–२३९.

महर्षिणा गौतमेन–"प्रत्याहाराभ्यासकृतात् स्तन्याभिलाषात्"[१] इति सूत्रे, तद्भाष्ये वात्स्यायनेन चात्मनो नित्यत्वं प्रतिष्ठापितम्। आत्मनोऽनित्यत्वे च कृतहानाकृताभ्यागमस्य पूर्वमुक्तत्वात्। "अविनाशी वारेऽयमात्मा"[२] इत्याद्युपनिषत्स्वप्यात्मनो नित्यत्वमेव प्रतिपादितम्[३]।

तदेवं न्यायदर्शनग्रन्थावलोकनेनेदमेव ज्ञायते यदस्मिन् दर्शने आत्मा द्रव्यरूपः। स स्वरूपतो जडः। यदा च मनसा सह तस्य संयोगो भवति, तदा ज्ञानं गुण उत्पद्यते। एवं ज्ञानसुखादिगुणविशिष्टत्वादेव स सगुण इत्युच्यते। लोके परिदृश्यमानस्य वैचित्र्यस्य व्यवस्थार्थं जीवात्मनामनेकत्वं नैयायिकैः स्वीकृतम्। ते चात्मानो विभुपरिमाणाः, अत एव नित्याश्च वर्तन्त इति।

---

स्मृति वचनों से आत्मा की दुर्विज्ञेयता शतशः प्रतिपादित की गई है। इस प्रकार निष्कर्ष यह है कि न्यायदर्शन में आत्मा का परिमाण विभु है तथा विभु होने से वह नित्य है।।

महर्षि गौतम ने— "प्रत्याहाराभ्यासकृतात् स्तन्याभिलाषात्" इस सूत्र में तथा वात्स्यायन मुनि ने इस सूत्र के भाष्य में आत्मा की नित्यता को प्रतिष्ठापित किया है। आत्मा को अनित्य नहीं माना जा सकता क्योंकि ऐसा मानने पर पूर्व में ही प्रतिपादित किया जा चुका है कि कृतहान एवम् अकृताभ्यागम की प्रसक्ति होगी। "अविनाशी वा अरे अयमात्मा" इत्यादि उपनिषद्-वचनों से सुस्पष्ट आत्मा की नित्यता निगदव्याख्यात है।

इस प्रकार न्याय-दर्शन ग्रन्थों के अवलोकन एवम् अनुशीलन से यह सुविदित होता है कि इस दर्शन में आत्मा को द्रव्यपदार्थ के अन्तर्गत स्वीकृत किया गया है। वह स्वरूपतः जड़ है किन्तु जब वह मनस्-द्रव्य से संयुक्त होता है तब उसमें ज्ञान-गुण की उत्पत्ति होती है। इस प्रकार ज्ञान-सुख-दुःखादि से युक्त (विशिष्ट) होने से ही आत्मा को यहाँ सगुण माना जाता है। लोक में दृष्टिगोचर होने वाले वैचित्र्य की व्यवस्था हेतु जीवनानात्व को नैयायिकों ने स्वीकृत किया है। ये सभी जीव विभुपरिमाण हैं तथा विभुपरिमाण होने से नित्य हैं।

---

१. न्या० सू० ३।१।२१.
२. बृ० उ० ४।५।१४.
३. न्या० प्र०, पृ० २३९-२४१.

# वैशेषिकमतानुसारेणात्मस्वरूपम्

## आत्मनो लक्षणम्

"लक्षणप्रमाणाभ्यां वस्तुसिद्धिः" इति हि दार्शनिकसिद्धान्तः। तदनुरुद्ध्य तत्र तावद्वैशेषिकाः—"आत्मत्वाभिसम्बन्धादात्मा"[१] इति वदन्त आत्मनो लक्षणं विदधति। आत्मत्वं नाम जातिविशेषः। तदुक्तम्—"आत्मत्वं नामामूर्तसमवेतद्रव्यत्वापरजातिः"[२] इति। इयं हि जातिर्द्रव्यान्तरेष्वविद्यमानाऽऽत्मनि च विद्यमाना सती द्रव्यान्तरेभ्य आत्मानं व्यावर्तयति। आत्मत्वस्यात्मनोऽसाधारणधर्मत्वात् "आत्मत्वाभिसम्बन्धादात्मा" इतीदमसाधारणमात्मनो लक्षणम्। असाधारणधर्मो हि लक्षणं भवति। धर्मेऽसाधारण्यं च लक्ष्यतावच्छेदकसमनियतत्वम्। समनियतत्वं च व्याप्यत्वे

---

# वैशेषिकमत के अनुसार आत्मा का स्वरूप

## आत्मा का लक्षण

"लक्षण एवं प्रमाणों द्वारा वस्तुसिद्धि होती है" यह दार्शनिकों द्वारा स्वीकृत सिद्धान्त है। इस अनुरोध से वैशेषिक दर्शन के आचार्यों ने "आत्मत्वाभिसम्बन्धादात्मा" इस सूत्रवाक्य का उल्लेख करने के साथ आत्मा के लक्षण को निर्मित किया है। आत्मत्व को जातिविशेष माना गया है। तद्यथा— "आत्मत्वं नाम अमूर्त-समवेतद्रव्यत्वापरजातिः।" द्रव्यत्व की अपेक्षा से अपरजाति ५ हैं— पृथिवीत्व, जलत्व, तेजस्त्व, वायुत्व एवम् आत्मत्व। इनमें अमूर्त में समवेत जाति केवल आत्मत्वजाति है। शेष मूर्त-समवेत जाति हैं। यह आत्मत्वजाति, आत्मव्यतिरिक्त द्रव्यान्तर पृथिवी-प्रभृति में अविद्यमान रहती है तथा आत्मा में विद्यमान रहती है। अतः अन्य द्रव्यों से आत्मा को व्यावृत्त करती है। यतश्च आत्मत्व, आत्ममात्र में वृत्ती असाधारण धर्म है "आत्मत्वाभिसम्बन्धादात्मा।" यह आत्मा का लक्षण है। किसी भी वस्तु के असाधारण धर्म को लक्षण कहा जाता है। धर्म दो प्रकार के होते हैं— साधारण एवम् असाधारण। पदार्थत्व, द्रव्यत्व, जातिमत्त्व, समवायिकारणत्व आदि आत्मा के साधारण धर्म हैं आत्मत्व आत्मा का असाधारण धर्म है। धर्म में असाधारणत्व (असाधारण्य) किंस्वरूप है इस जिज्ञासा में कहा गया है— धर्मे असाधारण्यं च

---

१. प्र० पा० भा०, पृ० १६७.
२. स० द० सं०, पृ० ४१५.

सति व्यापकत्वम्। यथा सास्नादिमत्त्वं गोर्लक्षणम्। तत्र लक्ष्या गौः, लक्ष्यतावच्छेदकं गोत्वम्, तत्समनियतत्वं सास्नायाम्, गोत्वव्याप्यत्वे सति गोत्वव्यापकत्वात्; अर्थाद् गोत्वाभावाधिकरणनिरूपितवृत्तित्वाभाववत्त्वे सति गोत्वाधिकरणवृत्त्यत्यन्ताभावीयप्रतियोगितावच्छेदकधर्मवत्त्वं गोर्लक्षणम्। एवमेवात्मत्वाभिसम्बन्धादात्मेति लक्षणस्यापि समन्वयो बोद्धव्यः।

## आत्मसत्त्वे प्रमाणानि

जीवात्मसद्भावे 'अहं सुखी, अहं दुःखी' इत्यादिमानसप्रत्यक्षमेव प्रमाणमिति नैयायिकाः प्रतिपादयन्ति। तथाहि–

---

लक्ष्यतावच्छेदकसमनियतत्वम्। अर्थात् लक्ष्यतावच्छेदकसमनियतत्व ही धर्मगत असाधारणत्व है। समनियत किसे कहते हैं इस जिज्ञासा में कहा गया है— धर्मे असाधारण्यंच लक्ष्यतावच्छेदकसमनियतत्वम्। अर्थात् लक्ष्यतावच्छेदकसमनियतत्व ही धर्मगत असाधारणत्व है। समनियत किसे कहते हैं इस जिज्ञासा में कहा गया है। समनियतत्वं च व्याप्यत्वे सति व्यापकत्वम्। यथा सास्नादिमत्त्व गो का लक्षण है। यहाँ लक्ष्य है— लक्ष्यतावच्छेदक धर्म है—गोत्व। गोत्व का समनियतत्व सास्ना में रहता है। यतश्च समनियत्व, व्याप्यत्वे सति व्यापकत्व-स्वरूप है। सास्ना में गोत्वव्याप्यत्व एवं गोत्वव्यापकत्व उभय धर्म है अतः सास्ना (सास्नादिमत्त्व) गो का लक्षण है। यत्र यत्र गोत्वं तत्र तत्र सास्ना- इस तरह से गोत्व का व्यापक सास्ना धर्म है तथा यत्र यत्र सास्ना तत्र तत्र गोत्वम् इस प्रकार गोत्वका व्याप्य धर्म सास्ना है। यतश्च स्वाभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिः यह व्याप्ति का लक्षण है अतः गोत्व-व्याप्यत्व सास्ना में है तो व्याप्यत्व (व्याप्ति) का लक्षण शरीर जोड़ने पर **गोत्वव्याप्यत्वे सति** का स्थानापन्न वाक्य है— गोत्वाभावाधिकरणनिरूपित-वृत्तित्वाभावत्वे सति। एवं व्यापकत्व का लक्षण शरीर है—स्वाधिकरणवृत्त्यत्यन्ताभाव-प्रतियोगितावच्छेदक-धर्मवत्त्वम्। अतः **गोत्वव्यापकत्वम्** का स्थापन्न वाक्य है— गोत्वाधिकरणवृत्त्यत्यन्ताभावीय-प्रतियोगितावच्छेदकधर्मवत्त्वम्। यतश्च असाधारण-धर्म लक्षण कहलाता है। धर्मगत असाधारणत्व है लक्ष्यतावच्छेदकसमनियतत्व। समनियतत्व का अर्थ है व्याप्यत्वे सति व्यापकत्व। अतः गो का असाधारण धर्म सास्नादिमत्त्व है। वह गो का लक्षण

---

१. मुण्ड० १।१।९.
२. सां० सू० ३।५७ प्र० भाष्यम्।
३. यो० सू० १।२३ अवतरणिकाभाष्यम्।

अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः।
विभुर्बुद्ध्यादिगुणवान् ................[1]।।इति।

"तत्रात्मा मनश्चाप्रत्यक्षे"[2] इति सूत्रेणात्मनः प्रत्यक्षाविषयत्वं प्रतिपादयता महर्षिणा कणादेन–"प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि"[3] इति सूत्रेण बहुभिर्हेतुभिरात्मनोऽनुमानगम्यत्वं प्रतिपादितम्। प्रशस्तपादाचार्येणापि–"तस्य सौक्ष्म्यादप्रत्यक्षत्वे

---

है। सास्नादिमत्त्व (सास्नादि) में गोत्वाभावाधिकरण-निरूपितवृत्तित्वाभावत्वे सति गोत्वाधिकरणवृत्त्यत्यन्ताभावीयप्रतियोगितावच्छेदक-धर्मवत्त्व रहने से गो का असाधारण धर्म सास्नादिमत्त्व उसका लक्षण है। यह गो को स्वेतर से भिन्न सिद्ध करने में हेतु बनता है। तद्वत् "आत्मत्वाभिसम्बन्धादात्मा" यह आत्मा का लक्षण है। यहाँ भी आत्मत्वजाति, आत्मा का असाधारण धर्म है अत: यह आत्मा का लक्षण है।

## आत्मा के अस्तित्व में प्रमाण

जीवात्मा के सद्भाव में "अहं सुखी", अहं दुःखी" इत्यादि मानस प्रत्यक्ष ही अनुभव प्रमाण है—ऐसा प्रतिपादन नैयायिक आचार्य करते हैं। यथा भाषा-परिच्छेद: . में कहा गया है—

अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचर:।
विभुर्बुद्धयादिगुणवान्..........।।१।।

महर्षिकणाद ने "तत्रात्मा मनश्चाप्रत्यक्षे" इस वैशेषिक सूत्र का उल्लेख कर आत्मा को मनस्-द्रव्य की तरह प्रत्यक्षप्रमाण का अविषय (अगोचर) कहा है। पुनश्च अन्यसूत्र— "प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकारा: सुख-दुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि" का उल्लेख कर उन्होंने अनेक हेतुओं द्वारा आत्मा की अनुमान प्रमाणविषयता प्रतिपादित की है। प्रशस्तपादाचार्य ने भी अपने भाष्य में कहा है— तस्य सौक्ष्म्याद् अप्रत्यक्षत्वे सति करणै: शब्दाद्युपलब्ध्यनुमितै: श्रोत्रादिभि: समधिगम: क्रियते। इसका अर्थ है—आत्मा की सूक्ष्मता होने से उसका प्रत्यक्ष नहीं होता है। करण=इन्द्रिय भी अतीन्द्रिय होते हैं किन्तु शब्दाद्युपलब्धि से

---

१. कारि० ५०-५१.
२. वै० सू० ८।१।२.
३. वै० सू० ३।२।४.

सति करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते"[१] इति प्रतिपादितत्वाद् वैशेषिकाणामात्मनि मानसप्रत्यक्षमनभीष्टमिति प्रतीयते।

अयमभिप्रायः–अहं सुखीत्यादिना प्रत्यक्षसिद्धेऽप्यात्मन्यनुमानोपन्यासो ज्ञानदार्ढ्यायेत्यवधार्यम्। तदुक्तं सूत्रकारेण–"दृष्टे आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः"[२] इति। आत्मन एवाहंप्रत्ययविषयत्वम्। स चात्मा अहं सुखीत्यादिना मानसप्रत्यक्ष एवेत्यपि निर्विवादम्। अथाप्यहं सुखीत्यादि-वदहं शुक्लः, अहं स्थूल इत्यादिरप्यस्ति प्रत्ययः। अत्र शौक्ल्यस्थौल्यादयस्तु शरीरगुणाः। तादृशस्थौल्यादिगुणैरहमर्थस्य सामानाधिकरण्यात् शरीरमेवात्मा, स एव च ज्ञानाद्याश्रय इति सामान्यतो लौकिका मन्यन्ते। तदुक्तम्–

अहं गौरः कृशः कृष्ण इत्यादिप्रत्ययान्तरैः।
तिरस्कृतः प्रत्ययोऽयं स्थेमानं नाधिगच्छति।।इति।

---

अनुमित (साधनतया गृहीत) श्रोत्रप्रभृति इन्द्रियों से उसका समधिगम होता है। इस प्रतिपादन से प्रतीत होता है कि वैशेषिक आचार्यों को आत्मविषयक मानसप्रत्यक्ष अभीष्ट नहीं है।

अभिप्राय यह है— अहंसुखी-इत्यादि अनुभवबल से आत्मा के प्रत्यक्षसिद्ध होने पर भी आत्मविषयक सिद्धि हेतु अनुमानप्रमाण का उपन्यास, ज्ञान की दृढ़ता= द्विर्बद्धता (सुबद्धता) के लिए किया जाता है। इसका संवादन सूत्रकार ने किया है— "दृष्टे आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः।" अहं सुखी इत्यादि अनुभव में अहम्प्रत्यय का गोचर (विषय) आत्मा ही है। वह आत्मा "अहं सुखी" इत्यादि अनुभव से मानसप्रत्यक्ष का विषय है— यह निर्विवाद है। तथापि अहं सुखी अहं दुःखी इत्यादि प्रत्यय (अनुभव) की तरह "अहंशुक्लः", अहं स्थूलः" इत्यादि प्रत्यय भी लोकप्रसिद्ध है। इन प्रत्ययों में शौक्ल्य, स्थौल्य एवम् सौक्ष्म्य प्रभृति धर्म, शरीर से सम्बन्ध रखते हैं। यतश्च अहं स्थूलः इत्यादि प्रत्ययों में स्थौल्यादि धर्मों का अहमर्थ के साथ सामानाधिकरण्येन व्यवहार होता है अतः सामान्यतया लौकिक जनों में यह धारणा कृतपद हो जाती है— शरीर ही आत्मा है और वही ज्ञानादि का स्थूलत्वादि की तरह आश्रय है। अतएव यह सुप्रथित अभिधान है—

अहं गौरः कृशः..............नाधिगच्छति।।१।।

अतः उन लौकिकों को यदि कहा जाय कि आत्मा का अस्तित्व प्रत्यक्ष- सिद्ध

---

१. प्र. पा. भा., पृ. १६७–१६८.
२. वै. सू. ३।२।११.

अगस्तान् प्रत्यात्मास्तित्वे प्रत्यक्षमेव प्रमाणमित्युक्तौ प्रत्यक्षसिद्धं पञ्चभूतात्मकं शरीरमेवात्मा स्यादिति किमर्थं देदाद्यतिरिक्तत्वेनात्मनो ग्रहणमिति सन्दिह्याक्षिपेयुरिति तत्सन्देहनिरसनार्थ प्रथमं हेतुभिर्देहाद्यतिरिक्तत्वेनात्मानं प्रसाध्याहमित्याकारकप्रत्यक्षप्रत्ययोऽपि लिङ्गसिद्धयथावस्थितात्मविषयक एवेति दृढीक्रियते[१]। अत एवोक्तम्–"प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः"[२] इति। अतः प्रत्यक्षसिद्धस्यानुमानेनापि साधने न सिद्धसाधनतेति विवेक्तव्यम्।

अपरं च, "आत्मा वा अरे द्रष्टव्यः"[३] इति श्रुतिरात्मदर्शनं विधाय आत्मदर्शनोपायाः के? इति जिज्ञासायां "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"[४] इति श्रवणमनननिदिध्यासनानि साधनानीति प्रतिपादितवती।

श्रुतिवाक्येभ्यः श्रुतस्य निदिध्यासनं मननमन्तरा नोपपद्यते। मननस्य

---

है तब वे प्रत्यक्षसिद्ध पञ्चभूतमय शरीर ही आत्मा सम्भव है, देहादि से अतिरिक्त आत्मा के ग्रहण का क्या प्रयोजन है इस तरह सन्देहपुरःसर आक्षेप करेंगे। अतः उनके सन्देह का निराकरण करने हेतु प्रथमतः हेतुओं का उपस्थापन कर देहादि से अतिरिक्त आत्मा की सिद्धि की गई। तदनन्तर अहमित्याकारक प्रत्यक्ष- प्रत्यय भी हेतु सिद्ध यथावस्थित आत्मविषयक ही है इस तरह की दृढ़ता सम्पादित की जाती है। अतएव उपस्कारकार ने कहा है— प्रत्यक्षप्रमाण से परिगृहीत अर्थ को भी तर्करसिक दार्शनिक, अनुमान प्रमाण से उसके सूक्ष्मबोध की अभीप्सा करते हैं। अतः प्रत्यक्षसिद्ध आत्मा अथवा अन्य किसी वस्तु की अनुमानप्रमाण से साध्यता की स्थिति में सिद्धसाधनसंज्ञक दूषण का उद्‌भावन नहीं किया जाना चाहिए—ऐसी विवेचना यहाँ अपेक्षित है।

अन्य ध्यातव्य भी यह है—"आत्मा वा अरे द्रष्टव्यः" यह श्रुति, आत्मदर्शन का विधान करती है। तदनन्तर आत्मदर्शन के कौन से उपाय हैं इस जिज्ञासा की शान्ति हेतु "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इस उक्ति द्वारा वह श्रवण, मनन एवं निधिध्यासन साधनों का प्रतिपादन की है

श्रुतिवाक्यों से श्रुत आत्मा का निदिध्यासन, मनन-विना उपपन्न नहीं होता। यह मनन अनुमान रूप उपासना है। निःश्रेयस के अभिलाषी जन को आत्मविषयक

---

१. वै. सू. ३।२।११, ८।१।१२; उपस्कारस्तथा रसायनव्याख्या च।
२. उप., पृ. २४२.
३. बृ. उ. २।४।५.
४. बृ उ. २।४।५.

चानुमानरूपत्वाद् निःश्रेयसेप्सुभिरवश्यमात्माऽनुमित्सितव्य इत्यनुमानस्यापेक्षेत्यात्मसाधकानामभिप्रायः, अन्यथाऽनिःश्रेयसापत्तिः स्यात्। तदुक्तम्- "श्रोतव्यो मन्तव्यः" इत्यादिविधिबोधितस्यात्ममननस्येष्टसाधनत्वावगतावनुमित्सयाऽवश्यमात्मानुमानप्रवृत्तिः, तद्व्यतिरेके निदिध्यासनासम्भवे साक्षात्काराभावेऽपवर्गासम्भवादिति भावः"[१] इति।

## आत्मसाधकानुमानपरीक्षा

प्रकृतोपयोगितया कणादमहर्ष्युक्तानामात्मसाधकहेतूनां क्रमेणानुशीलनं कुर्मः। तत्र प्रथमं प्राणापानलिङ्गेनात्मानुमानं यथा-"शरीरं प्रत्यत्नवदधिष्ठितम्, इच्छापूर्वकविकृतवाय्वाश्रयत्वात्, भस्त्रावत्"[२] इति। अत्रायं भावः- नैसर्गिकतिर्यग्गमनस्वभावो हि वायुः शरीराभ्यन्तरे प्राणापानभेदेनोर्ध्वाऽधः प्रसरन् विपरीतस्वभावो दरीदृश्यते। तस्येदं स्वभावपरिवर्तनं प्रयत्नं विनाऽनुपपद्यमानं सत् प्रयत्नमनुमापयति। यस्य च स प्रयत्नः स

---

मनन करना चाहिए। अन्यथा अनिःश्रेयसापत्ति होगी। उपस्कारकार ने सुस्पष्ट कहा है— श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इस विधिश्रुतिसे बोधित आत्ममनन की इष्टसाधनतावगति होने से अनुमित्सा द्वारा आत्मविषयक अनुमानप्रवृत्ति आवश्यक है। उसके बिना निदिध्यासन का सम्भव नहीं हो सकने से आत्मतत्त्व-साक्षात्कार के अभाव में अपवर्ग की सम्भावना निरस्त हो जाती है।"

## आत्मसाधक अनुमानप्रमाण की परीक्षा

प्रकरण-संगति से प्राप्तावसर कणादमहर्षि-प्रोक्त आत्मसाधक हेतुओं का प्रकृत में उपयोगी होने से क्रमशः अनुशीलन करेंगे। सर्वप्रथम प्राणापानहेतुक आत्मविषयक अनुमान परिशीलनीय है। तद्यथा— शरीरं प्रयत्नवदधिष्ठितम्, इच्छापूर्वक-विकृत-वाय्वाश्रयत्वात् भस्त्रावत्। यहाँ निगूढ आशय यह है — वायु निसर्गतः तिर्यग्गमन का स्वभाव धारण करता है। वह शरीर के अन्दर प्राण एवम् अपान के भेद से ऊर्ध्वप्रसर एवम् अधःप्रसर के विपरीत स्वभाव में विद्यमान रहता है। उसका यह स्वभावपरिवर्तन प्रयत्नविशेष के बिना अनुपपन्न होने से प्रयत्नविशेष का अनुप्रमाण से बोधन करता है। वह प्रयत्न जिस द्रव्य में आश्रित है एवं जिससे

---

१. वै. सू. उप. ३।२।११.

२. न्या. क., पृ. २०१.

एवात्मेत्यवधार्यते।

**जीवनयोनिप्रयत्नस्य सत्त्वम्**

अत्रैवं शङ्का जागर्ति यज्जाग्रत्स्वप्नयोश्चात्मप्रयत्नसाध्यत्वेऽपि सुषुप्तावस्थायां मनसः पुरीतति नाड्यां प्रविष्टत्वात् तद्बहिर्देशावच्छिन्नात्ममनः-संयोगाभावाद् ज्ञानेच्छादीनामात्मविशेषगुणानां नोत्पत्तिरिति तदानीं प्रयत्नाभावाच्च कथं प्राणापानयोरुर्ध्वाऽधोगमनमिति? अत्रैवं समाधातुं शक्यते–"ज्ञानजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः" इति तु सामान्यो नियमः। अत्र कृतिर्नाम प्रयत्नः। स चात्ममनःसंयोगजन्यज्ञानाधीन इति पूर्वोक्तसामान्यनियमेन ज्ञायते। अत एव प्रवृत्तिनिवृत्तिलक्षणौ उभावपि प्रयत्नौ क्रमेणेष्टसाधनताज्ञानेन द्विष्टसाधनताज्ञानेन च निमित्तकारणेनोत्पद्यमानौ परिदृश्येते। तदुक्तम्–

चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा।।

---

अनुष्ठेय (धारित) है वही धारक आत्मा है— ऐसा अवधारण होता है।

**जीवनयोनिप्रयत्न की सत्ता**

यहाँ एक आशङ्का उदित होती है कि जाग्रत् एवं स्वप्न इन दोनों में आत्मप्रयत्नसाध्यता समुचित है किन्तु सुषुप्तावस्था में मन का पुरीतत् नाडी में प्रवेश हो जाने से तद्बहिर्देश में आत्ममनःसंयोग के अभाव होने से ज्ञान, इच्छा प्रभृति आत्मा के विशेषगुणों की उत्पत्ति नहीं होती है। ऐसी स्थिति में सुषुप्तिकाल में प्रयत्न के अभाव होने से प्राण का ऊर्ध्वगमन तथा अपान का अधोगमन कैसे होता है? इसका समाधान इस प्रकार किया जा सकता है— "ज्ञान से जन्य इच्छा होती है तथा इच्छा से जन्य कृति होती है"— यह सामान्य नियम है। यहाँ कृति का अर्थ है— प्रयत्न। यह प्रयत्न आत्ममनःसंयोग से जन्य ज्ञान के अधीन होता है। ऐसा पूर्वोक्त सामान्य नियम से परिज्ञात होता है। अतश्च इष्टसाधनताज्ञान से प्रवृत्तिलक्षण प्रयत्न तथा द्विष्टसाधनता ज्ञान से निवृत्तिलक्षण प्रयत्न उत्पन्न होते हैं। द्विविध प्रयत्न के क्रमशः निमित्तकारण द्विविध उपर्युक्त साधनताज्ञान हैं। भाषापरिच्छेदः क़ार ने इस सिद्धान्त को कारिकाबद्ध किया है—

चिकीर्षा......द्विष्टसाधनता धियः।।१½।।

सुषप्तावस्था में तो उपर्युक्त दो प्रयत्नों से भिन्न प्रयत्न स्वीकार किया जाता है। यह जीवनयोनिसंज्ञक विलक्षण प्रयत्न प्राण एवम् अपान का नियमन करता

उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्।
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः[१]।।इति।

सुषुप्तावस्थायां त्वाभ्यामुभाभ्यां भिन्नो जीवनयोनिरूपो विलक्षणः प्रयत्नः प्राणापाननियामकः स्वीक्रियते। तदुक्तम्–

यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्।
शरीरे प्राणसंचारे कारणं परिकीर्तितः[२]।।इति।

अन्यत्रापि– "न च तदानीमिच्छाद्वेषौ प्रयत्नहेतू सम्भवतः। तस्माज्जीवनपूर्वक एव प्रयत्नः प्राणापानप्रेरको गम्यते"[३] इत्युक्तम्। स चाऽयं प्रयत्नः पूर्वोक्तविधिनाऽऽत्ममनःसंयोगजन्येन ज्ञानेच्छारूपनिमित्तकारणेनाऽनुत्पन्न इति न प्रत्यक्षयोग्यः। अत एव तस्यातीन्द्रियत्वम्। योग्यसामग्र्यभावेऽपि तादृशप्रयत्नोत्पत्तौ न काचित् क्षतिः।

चिकीर्षिते कर्मणि चक्रपाणौ नापेक्षते तत्र सहायसम्पत्।
पाञ्चालराजतनयापटसन्निधाने न तन्तवो नैव तुरी न वेमा।।

इत्यभियुक्तोक्त्यनुसारेण यथा कौरवसभायां मर्यादामुषा (शीलापहारिणा)

---

है। तद्यथा—

यत्नो जीवनयोनिस्तु.............................परिकीर्तितः।।१।।

न्यायकन्दली में कहा गया है— "उस समय (सुषुप्ति में) इच्छा एवं द्वेष को प्रयत्न के प्रति कारण नहीं माना जा सकता। अतश्च जीवनपूर्वक प्रयत्न को ही प्राण एवम् अपान का प्रेरक माना जाता है।

यह विलक्षण प्रयत्न पूर्वोक्त विधि से आत्ममनःसंयोगजन्य ज्ञान एवं इच्छा स्वरूप निमित्त कारण से उत्पन्न नहीं होने के कारण प्रत्यक्षयोग्य नहीं है। अतएव उसे अतीन्द्रिय माना गया है। योग्यसामग्री के अभाव होने पर भी तादृश प्रयत्न की उत्पत्ति होने से कोई हानि नहीं होती।

चिकीर्षिते कर्मणि........नैव तुरी न वेमा।।१।।

उपर्युक्त अभियुक्तोक्ति के अनुसार जैसे कौरवसभा में मर्यादाचौर

---

१. कारि० १५०–१५१

१. कारि. १५२.

२. न्या. क., पृ. ६३९.

दुःशासनेन निर्वस्त्रीक्रियमाणायाः पाञ्चालराजतनयाया लज्जासंरक्षणार्थं लज्जारक्षणदक्षेण जगद्रक्षकेण यः परिधानपटो विनिर्मितस्तत्र तुरीतन्तुवेमादियोग्यसहायकसामग्र्यादेरभावादन्यथाऽनुपपत्त्या केवलमीश्वरेच्छामात्रं कारणत्वेनानुमीयते, तथा प्रकृतेऽपि सुषुप्तौ प्राणक्रियां दृष्ट्वा क्रियायाश्च प्रयत्नजन्यत्वात् तादृशप्रयत्नोत्पत्तौ योग्यनिमित्तस्येष्टसाधनताज्ञानस्य तदानीमभावाद् जीवनकारणीभूतमदृष्टमेव तत्र निमित्तान्तरमित्यन्यथाऽनुपपत्त्याऽङ्गीकर्तव्यम्।

प्रमाणं तावत्—"सुषुप्तिकालीनः श्वासो भोक्तृप्रयत्नजन्यः, श्वासत्वात्, धावतः श्वासवत्"[१] इति। अत्रेदं तात्पर्यम्-पलायमानस्य पुरुषस्य प्रयत्नाधिक्येन श्वासाधिक्यं तावत् प्रत्यक्षसिद्धम्। तद्वत् स्वाभाविकप्राणसञ्चारेऽपि कश्चन प्रयत्न आवश्यकः। स च न प्रत्यक्ष इत्यतीन्द्रियो जीवनयोनिरूपः प्रयत्नः साध्यते। तदुक्तं शङ्करमिश्रेण—"योग्यप्रयत्नाभावेऽपि प्रयत्नान्तरस्य सद्भावात्। स एव जीवनयोनिः प्रयत्न इत्युच्यते"[४] इति।

---

(शीलहरणोद्यत) दुःशासन द्वारा निर्वस्त्र की जाने वाली पाञ्चाल राजपुत्री की लज्जा रक्षणहेतु रक्षणदक्ष जगद्रक्षक प्रभु ने परिधान वस्त्र का जो निर्माण किया था। तुरी, तन्तु, वेमा प्रभृति योग्य सहायक सामग्री के अभाव में भी अन्यथाऽनुपपत्ति के आधार पर वहाँ केवल ईश्वरेच्छा मात्र को कारणरूप से अनुमान्य किया जाता है।

तद्वत् प्रकृत में भी सुषुप्ति अवस्था में प्राणक्रिया को देखकर क्रिया की प्रयत्नजन्यता होने से तादृश प्रयत्न की उत्पत्ति में योग्यनिमित्त—इष्टसाधनताज्ञान का उस समय अभाव होने से जीवनकारणीभूत अदृष्टको ही वहाँ अन्यथा अनुपपत्ति होने से निमित्तान्तर रूप में अङ्गीकृत किया जाता है।

एतदर्थ अनुमान प्रमाण का आकार निम्नाङ्कित है—

सुषुप्तिकालीनः श्वासो भोक्तृप्रयत्नजन्यः श्वासत्वात् धावतः श्वासवत्। यहाँ तात्पर्य यह है कि दौड़ते हुए पुरुष के प्रयत्नाधिक्य से श्वासाधिक्य होना प्रत्यक्षसिद्ध है। तद्वत् स्वाभाविक प्राणसंचार में भी कोई प्रयत्न आवश्यक है। यतश्च वह प्रयत्न प्रत्यक्ष नहीं है अतः जीवनयोनि रूप अतीन्द्रिय प्रयत्न की सिद्धि की जाती है। अतएव उपस्कार में शङ्कर मिश्र ने कहा है— "योग्य- प्रयत्नाभावेऽपि......प्रयत्न इत्युच्यते।। अर्थ सुष्पष्ट है।

---

१. न्या. मु. प्र., पृ. ८३६.
२. वै. सू. उप. ३।२।४.

अनेन जीवनयोनिप्रयत्नेन न केवलं सुषुप्तिकालीनप्राणापानयोर्नियमनमेव भवति किन्तु प्रबोधकालेऽन्तःकरणस्येन्द्रियान्तरसंयोगोऽप्यनेनैव भवतीति विज्ञेयम्। उक्तं च- "तत्र जीवनपूर्वकः सुप्तस्य प्राणापानसन्तानप्रेरकः, प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः"[१] इति। एतादृशप्रयत्नाधिष्ठानत्वेन चात्मनः सिद्धिः।

नवीनास्त्वेतादृशप्रयत्नकल्पनमनुचितमित्यभिप्रयन्ति[२]। तेषामयमाशयः- "सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते"[३] इति वात्स्यायनभाष्यानुसारेण स्वकर्मोपार्जितशरीरावच्छिन्नात्ममनःसंयोगो जीवनमिति। तादृशजीवनप्रयोजनीभूतादृष्टस्यैव श्वासादेः कारणत्वे संभवति तज्जन्यप्रयत्नस्य कारणान्तरकल्पनं निष्प्रयोजनमिति। अपरं च, प्रवृत्तिरूपप्रयत्नस्येष्टसाधनता-

---

इस जीवनयोनि प्रयत्न से सुषुप्तिकालिक प्राण एवम् अपान का नियमन-मात्र नहीं किया जाता है प्रत्युत प्रबोधकाल में अन्तःकरण का इन्द्रियान्तर के साथ संयोग भी इसी प्रयत्न से उत्पादित होता है— यह भी ज्ञातव्य है। आचार्य प्रशस्तपाद ने सुस्पष्ट कहा है— "तत्र जीवनपूर्वकः सुप्तस्य प्राणापानसन्तानप्रेरकः, प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः।" अर्थ सुस्पष्ट है। एतादृश प्रयत्न के अधिष्ठानरूप से भी आत्मा की सिद्धि की जाती है।

नवीन नैयायिक लोग एतादृश प्रयत्न की कल्पना को अनुचित मानते हैं। उनका यह आशय है— आचार्य वात्स्यायन की भाष्यपङ्क्ति है—

"सदेहस्यात्मनो मनसा संयोगो विपच्यमान-कर्माशयसहितो जीवनमिष्यते।" तदनुसार स्वकर्मोपार्जित शरीरावच्छिन्न आत्ममनः-संयोग ही जीवन कहलाता है। तादृशजीवन का प्रयोजनीभूत अदृष्ट को ही श्वासादि के प्रति कारण मान लेने से उपपत्ति हो जाती है। ऐसी स्थिति में अदृष्टजन्य प्रयत्न में कारणान्तर की कल्पना निष्प्रयोजन है।

अन्य ज्ञातव्य भी यह है— प्रवृत्तिरूप प्रयत्न, इष्टसाधनता ज्ञान से जन्य होता है। तद्वद् अतीन्द्रिय जीवनयोनि प्रयत्न की उत्पत्ति में भी अतीन्द्रिय ज्ञान कारण होगा अतः सुषुप्ति में तादृश ज्ञान की भी कल्पना करनी पड़ेगी— यह

---

१. प्र० पा० भा०, पृ० ६३८.

२. कारि० १५२ श्लोकस्य दिनकरीव्याख्या तथा न्या० को०, पृ० २९९.

३. न्या० सू० भा० ३।२।२६.

ज्ञानजन्यत्ववदतीन्द्रियस्य जीवनयोनिप्रयत्नस्योत्पत्तौ कारणीभूतमतीन्द्रियं ज्ञानं सुषुप्तौ कल्पनीयमित्यनिष्टप्रसञ्जनमिति। तदेवं नवीनानां मतानुसारेण तु श्वासादेः कारणीभूतादृष्टाधिष्ठानत्वेनात्मनः सिद्धिरिति सर्वमवदातम्।

अत्रात्मसाधने द्वितीयो हेतुर्निमेषोन्मेष इति। अक्षिपक्ष्मणोः संयोगजनकं कर्म निमेषः, तयोरेव विभागजनकं कर्म उन्मेष इत्युच्यते। लोके हि संयोगविभागौ क्रमेण नोदनाभिघाताभ्यां दृष्टकारणाभ्यां भवतः। प्रकृते च दृष्टकारणमन्तरेण निरन्तरमुत्पद्यमानौ निमेषोन्मेषौ प्रयत्नं विनाऽनुत्पद्यमानौ प्रयत्नवदात्माधिष्ठितं शरीरमिति साधयतः। तदनुमानस्वरूपं तावत्- "'शरीरं प्रयत्नवदधिष्ठितम्, इच्छाधीननिमेषोन्मेषवदवयवयोगित्वात्, दारुयन्त्रवत्"[४] इति। यथा कस्यचित् प्रयत्नेनैव दारुपुत्रकनर्तनम्, तथाऽक्षिपक्ष्मनर्तनमपि कस्यचित् प्रयत्नेनैवेति प्रयत्नवदात्मसिद्धिः।

---

अनिष्ट प्रसञ्जन (गौरवमूलक) प्राप्त होता है।

इस प्रकार नवीन नैयायिकों के मतानुसार श्वासादि के प्रति कारणतया स्वीकृत अदृष्ट के अधिष्ठान रूप से आत्मा की सिद्धि होती है। अतः सब कुछ निरापद है।

आत्मसाधन हेत सूत्रोक्त द्वितीय हेतु है— "निमेषोन्मेष"। आँख की पलकों के संयोग की उत्पत्ति में कर्म को कारण माना जाता है। इस कर्म की संज्ञा है—निमेष। तद्वत् आँख की पलकों के विभाग का जनक कर्म उन्मेष कहलाता है। लोक में संयोग एवं विभाग के प्रति क्रमशः (दृष्टकारण) नोदन एवम् अभिघात को कारण माना जाता है। प्रकृत में दृष्टकारण के बिना निरन्तर उत्पन्न होते हुए निमेष एवम् उन्मेष, प्रयत्न-बिना उपपत्तियुक्त नहीं है। अतः ये निमेष एवम् उन्मेष—प्रयत्नाश्रय आत्मा से अधिष्ठित शरीर है—इसकी सिद्धि में हेतुभाव को प्राप्त होते हैं। एतत्साधक अनुमान स्वरूप यह है— "शरीरं प्रयत्नवदधिष्ठितम्, इच्छाधीननिमेषोन्मेषवदवयवयोगित्वात् दारुयन्त्रवत्।"

जैसे किसी व्यक्ति के प्रयत्न से काष्ठनिर्मित पुत्रक का नर्तन होता है तद्वत् अक्षिपक्ष्मनर्तन भी किसी चेतन के प्रयत्न से ही जन्य होगा- इस प्रकार तादृशप्रयत्नवान् आत्मा की सिद्धि होती है।

आत्मसिद्धि के लिये तृतीय हेतु है-"जीवन"। जीवन की परिभाषा है-

---

४. न्या० क०, पृ० २०१.

तृतीयो हेतुर्जीवनमिति। जीवनं नाम स्वकर्मोपार्जितशरीरावच्छिन्नात्ममनःसंयोग इति। तदुक्तम्–"सदेहस्यात्मनो विपच्यमानकर्माशयसहितस्य मनसा सह संयोगः सम्बन्धो जीवनम्"[१] इति। प्रकृते तु जीवनपदेन जीवनकार्यं वृद्धिक्षतभग्नसंरोहणादि लक्ष्यते। भग्नं भग्नं पुनः पुनश्च परिष्क्रियमाणं भवनं परिष्कर्तारं स्वस्वामिनं यथाऽनुमापयति, तथैव जीवद्देहस्यान्नादिना वर्धनम्, भग्नस्य वा भेषजाद्युपचारेण पुनः संरोहणादिकमपि स्वाधिष्ठातारं बहिर्मुखैरिन्द्रियैरसन्निकृष्टमपि प्रत्यगात्मानं स्पष्टमनुमापयति। तथा हि प्रमाणम्– "शरीरस्य वृद्धिक्षतसंरोहणं प्रयत्नवता कृतम्, वृद्धिक्षतभग्नसंरोहणत्वात्, गृहवृद्धिक्षतभग्नसंरोहणवत्"[२] इति।

---

"स्वकर्मोपार्जित शरीरावच्छिन्नात्ममनःसंयोगो जीवनम्।" न्यायकन्दलीकार ने इस अर्थ को सुविशद किया है। तद्यथा–"सदेहस्यात्मनो विपच्यमानकर्माशयसहितस्य मनसा सह संयोगः सम्बन्धो जीवनम्। इसका अर्थ है– कर्म एवम् आशय के विपाक से युक्त देहवान् आत्मा का मनस् द्रव्य के साथ जो संयोग सम्बन्ध है, वह जीवन कहलाता है। प्रकृत में आत्मा की सिद्धि के लिये हेतुरूप में गृहीत जीवनशब्द से विवक्षित है– जीवनकार्य। जीवन कार्य से वृद्धि, क्षत, भग्न-संरोहण आदि का ग्रहण किया जाता है। जैसे कोई भवन है। उसमें कहीं पर भग्न हुआ तथा परिष्कृत हुआ। ऐसी स्थिति में वह भवन ही प्रमाण होता है— परिष्कारक भवनस्वामी के अस्तित्व में। तद्वत् जीवित देह का अन्नपानादि द्वारा संवर्धन होना अथवा भग्नता की स्थिति में भेषज आदि का प्रयोग करने से पुनः संरोहण होना प्रमाण होता है अपने अधिष्ठाता के अस्तित्व में। वह अधिष्ठाता बहिर्मुख इन्द्रियों से असन्निकृष्ट रहता है तथा प्रत्यक् चैतन्य स्वरूप है जिसका अनुमान प्रमाण द्वारा अस्तित्व प्रमाणित होता है। उक्त प्रमाण का स्वरूप है–

"शरीरस्य वृद्धिक्षतसंरोहणं प्रयत्नवता कृतम्, वृद्धिक्षतभग्नसंरोहणत्वात्, गृहवृद्धिक्षतभग्नसंरोहणवत्।" अर्थ सुस्पष्ट है। गृहकी वृद्धि अथवा क्षतभग्न का संरोहण, जिस प्रकार प्रयत्नवान् गृहस्वामी द्वारा सम्पादित होता है, तद्वत् शरीर की वृद्धि अथवा उसका क्षतभग्न संरोहण, प्रयत्नवान् चेतन द्वारा ही सम्पादनीय है। वह प्रयत्नवान् चेतन जीवात्मा है।

---

१. न्या० क०, पृ० ६३८.

२. न्या. क., पृ. २०१.

मनोगतिरिति चतुर्थोऽपि हेतुरात्मसाधक एव। तथा हि–मनोगतिर्नाम मनसोऽभिमतविषयग्रहणानुकूला क्रिया। गृहैकदेशे लाक्षागोलकस्येतस्ततः प्रेरणं प्रेक्षता प्रेक्षावता तथा गृहकोणे तिरोहितमपि दारकमनुमीयते, तथैव शरीरान्तर्गतस्याणोरमूर्तस्य च मनसश्चक्षुरादीन्द्रियैर्योगो विप्रयोगश्च नियतो गम्यमानो योगविप्रयोगजनकं शरीरान्तस्तिरोहितमात्मानमनुमापयति। तद्यथा–"प्रयत्नवता प्रेर्यं मनः, अभिमतविषयसम्बन्धनिमित्तक्रियाश्रयत्वात्, दारकहस्तगतपेलकवत्"[1] इति।

इन्द्रियान्तरविकार इति पञ्चमो हेतुः। आमलकफलं पश्यतः पुरुषस्य रसनेन्द्रियविकारो दन्तोदकसंप्लवरूपः सञ्जायते। स च पूर्वानुभूताम्लरस-संस्कारजन्यः, चक्षुरादीन्द्रियाणां रूपादिनियतविषयत्वात्। नहि चक्षुरिन्द्रियेणैव रसस्यापि ग्रहणं भवितुमर्हतीत्यनेकेन्द्रियैर्व्याप्तिमानिन्द्रियसामान्याधिष्ठाता

---

चतुर्थ आत्मसाधक हेतु मनोगति है। तथाहि मनोगति, मनस् इन्द्रिय की वह क्रिया है जो अभिमत विषय के ग्रहण की अनुकूल = जनक (कारण) बनती है। गृह के अन्दर किसी भाग में लाह-गुल्ली इधर से उधर जाती हुई किसी बुद्धिमान् व्यक्ति द्वारा देखी जा रही हो तथा जिसके प्रयत्न से लाहगुल्ली प्रेरित होकर इधर उधर जा रही हो वह बालक प्रत्यक्ष दिखायी नहीं दे रहा हो फिर भी अनुमान प्रमाण द्वारा उस बालक का ज्ञान बुद्धिमान् व्यक्ति को होता है। तद्वत् शरीर के अन्तर्गत विद्यमान "मनस्" अणु एवम् अमूर्त है। उसका संयोग एवम् वियोग बाह्य इन्द्रिय चक्षु आदि के साथ नियत रूप से गम्यमान होता है। वह हेतु बनता है। उस हेतु से योग एवं वियोग के जनक, शरीर के अन्दर अप्रत्यक्ष रूप से स्थित, सूक्ष्म आत्मा का अनुमान होता है। इस आशय को कन्दलीकार ने तार्किक शब्दावली में प्रतिपादित किया है-"प्रयत्नवता प्रेर्यं मनः, अभिमत-विषय-सम्बन्ध-निमित्तक्रियाश्रयत्वात्, दारकहस्तगतपेलकवत्।"

इस कन्दलीवाक्य का आशय पूर्व में विवेचित किया जा चुका है।

आत्मसाधक पञ्चम हेतु है– इन्द्रियान्त-विकार। कोई व्यक्ति आमलकफल को देखता है उसे अभी चखता नहीं है फिर भी उसकी रसनेन्द्रिय में विकार उपस्थित होता है। दन्तोदक का संप्लव होता है। यह उदकसंप्लव पूर्वानुभूत अम्लरस-संस्कार से जनित होता है। चक्षुरादि बाह्य इन्द्रियों में नियत रूपरसादि

---

१. न्या. क., पृ. २०३.

प्रत्यगात्माऽनेकगवाक्षेषु पर्यायेण प्रेक्षमाणो गृहस्वामीवानुमीयते। तदुक्तम्– "रसनविक्रियादर्शनादनेकगवाक्षान्तर्गतप्रेक्षकवदुभयदर्शी कश्चिदेको विज्ञायते"[१] इति।

एवमेव अहं सुखी, अहं दुःखीत्यादिप्रत्ययेषु प्रतीयमानसुखदुःखादिभिर्गुणैर्गुण्यनुमीयते। लोके यथा धनवान् सुखीत्यादौ सुखं धनसमानाधिकरणमेवावगाहते, तथैव अहं सुखीत्यादौ सुखादिकमहन्त्वसमानाधिकरणमेवावगाहते। न चाहंबुद्धिविषयत्वं शरीरादावस्तीति वाच्यम्, मम शरीरमित्यनेन बाधदर्शनात्। ममात्मेत्यात्मनि षष्ठीसम्बन्धस्तु 'राहोः शिरः' इतिवदुपपद्यते। तदुक्तम्–"मम शरीरमिति ममकारसामान्येनाहङ्कारस्य भानान्ममात्मेत्यत्रापि तथेति चेन्न, तत्र ममकारस्यौपचारिकत्वात्, राहोः शिर इतिवदभेदेऽपि षष्ठ्युपपत्तेः"[२] इति।

अपरं च, 'अहं देवदत्तः' इत्यादिधीसम्भवेऽपि 'अहं देहः, अहं नयनम्' इत्यादिधियो न कदाप्युदयः सम्भवति। तस्माद् देहाद्यतिरिक्तः कश्चिदहमिति

---

विषय की ही बोधोत्पत्ति-करणता है। अतएव चक्षु से रूप, जिह्वा से रस, घ्राण से गन्ध, त्वक् से स्पर्श तथा श्रोत्र से शब्द का प्रत्यक्ष होता है। ऐसी स्थिति में चक्षु से रूपग्रहण की तरह रसग्रहण तो हो नहीं सकता। अतः अनेक इन्द्रियों का एक अधिष्ठाता है जिससे पूर्व में रसनेन्द्रिय से रसग्रहण किया था। उक्त ज्ञान का संस्कार उसमें विद्यमान था। उसी ने चक्षु से जब आमलक को देखा तब उसका पूर्व रसानुभूति जनित संस्कार उद्बुद्ध होकर दन्तोदकसंप्लव में हेतु बनता है। एतावता यह इन्द्रियान्तरविकार, सभी इन्द्रियों के एक अधिष्ठाता आत्मा के आनुमानिक ज्ञान में हेतु बनता है। जैसे कोई व्यक्ति गृह के अनेक गवाक्षों से बारी-बारी से विषयों से जुड़ने वाला एक आत्मा (सकलेन्द्रियाधिष्ठाता) आनुमानिक रूप से निर्भ्रान्ततया सिद्ध होता है। आचार्य प्रशस्तपाद ने इस आशय का परिशीलन, तार्किक भाषा में किया है— "रसनविक्रियादर्शनादनेकगवाक्षान्तर्गत प्रेक्षकवदुभयदर्शी कश्चिदेको विज्ञायते।"

इसी प्रकार "अहं सुखी" अहं दुःखी इत्यादि प्रत्ययों में प्रतीयमान सुख-दुःखप्रभृति गुणों से गुणवान् आत्मा का अनुमान (अनुमिति) किया जाता है।

---

१.-प्र. पा. भा., पृ. २०२.
२. वै. सू. उप. ३।२।४.

विषयो बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्रयः परिग्राह्यः। स एवात्मा। तदुक्तम्– "सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते"[१] इति।

ननु सुखदुःखादयो नात्मगुणा भवन्ति, किन्तु शरीरगुणा एव, नो चेत् पादे मे वेदना, शिरसि मे सुखमित्येवं प्रादेशिकत्वेन तेषामुपलम्भो बाध्येत। न च बाध्यते। अतो यद्धर्मतयाऽबाध्यत्वेन प्रतीयमाना ये पदार्थाः, ते तन्निष्ठा एवेत्यवसीयते। तथा चैते सुखदुःखादयः शरीरे उपलभ्यमानास्तन्निष्ठा एवेति निश्चप्रचम्– इति चेन्न, पार्थिवविशेषगुणानां व्याप्यवृत्तित्वनियमात्, सुखदुःखादीनामव्याप्यवृत्तित्वेनाबाधितोपलम्भान्न तेषां शरीरधर्मत्वप्रत्याशापि। तथा चोक्तम्–"सुखादयः शरीरेन्द्रियविशेषगुणा न भवन्ति, अव्याप्यवृत्तित्वात्। ये तु शरीरेन्द्रियविशेषगुणास्ते व्याप्यवृत्तयो दृष्टाः, यथा रूपादयः, न च तथा सुखादयो व्याप्यवृत्तयः, तस्मान्न देहेन्द्रियगुणा इति व्यतिरेकी"[२] इति।

---

लोकव्यवहार में यद्वत् "धनवान् सुखी" इत्यादि स्थल में सुख को धन-समानाधिकरण रूप में गृहीत किया जाता है तद्वत् 'अहं सुखी" इत्यादिस्थल में भी सुख को अहन्त्वसमानाधिकरण के रूप में ही गृहीत किया जाना चाहिए। अहं स्थूलः एवमेव अहं गौरः, इत्यादि स्थल में यद्यपि शरीरादि में अहंबुद्धि-विषयता गृहीत होती है "मम शरीरम्" इत्यादि प्रतीतिसिद्ध शरीरवैयधिकरण्य से उसका बाध (निराकरण) हो जाता है। "ममात्मा" इस प्रतीति में वैयधिकरण्य षष्ठीविभक्तिगम्य है तथा अभेद में भेदोपचार से "राहोः शिरः" इत्यादि प्रयोग की तरह "ममात्मा" प्रयोग भी उन्नेय है। उपस्कारकार ने इस आशय को प्राञ्जलभाषा में व्यक्त किया है। तद्यथा— "मम शरीरमिति ममकार-सामान्येनाहंकारस्य भानान्ममात्मेत्यत्रापि तथेतिचेन्न तत्र ममकारस्यौपचारिकत्वात्, राहोः शिर इतिवदभेदेऽपि षष्ठ्युपपत्तेः।" इसका अर्थ ऊपर बताया जा चुका है।

इस प्रसङ्ग में यह ध्यान देने की बात है। "अहं देवदत्तः" इत्येवमादिबुद्धि की तरह अहं देहः, अहं नयनम्, इस प्रकार की बुद्धि (प्रतीति) कदापि उदित नहीं होती। अतः देहादिव्यतिरिक्त किसी आश्रय को अहम् प्रतीति का विषय माना जाना चाहिए जो बुद्धि सुख दुःख इच्छा द्वेष एवं प्रयत्न का आश्रय हो। तादृश आश्रय आत्मा है। इसका प्रतिपादन भाष्य में प्राप्त है— "सुखदुःखेच्छाद्वेषप्रयत्नैश्च

---

२. प्र. पा. भा.,पृ. २०२.

३. न्या. क., पृ. २०५.

"बाह्येन्द्रियाप्रत्यक्षत्वाच्च, तथाऽहंशब्देनापि पृथिव्यादिशब्दव्यतिरेकादिति"[1] इति प्रशस्तपादोक्त्या च सुखादयो न शरीरेन्द्रियगुणा भवन्ति। यतो हि शरीरेन्द्रियगुणेषु गुरुत्वादयोऽप्रत्यक्षाः, रूपादयस्तु बाह्येन्द्रियप्रत्यक्षाः। सुखादयः प्रत्यक्षयोग्या अपि न बाह्येन्द्रियप्रत्यक्षविषया इति न शरीरगुणाः। अपरं च, अहं सुखीत्यत्रोक्ताहंशब्दस्याहं पृथिव्यहमुदकमित्येवमादिरूपेण पृथिव्यादिभिः साकं सामानाधिकरण्याभावादेते सुखादिगुणाः पृथिव्यादीनामपि न

---

गुणैर्गुण्यनुमीयते।" अर्थ बताया जा चुका है। अब आशंका उदित होती है कि सुख और दुःख तो आत्मा में प्रतीत नहीं होते किन्तु शरीरधर्मतया प्रतीत होते हैं। यदि ऐसा नहीं होता तो मेरे पैर में वेदना है तथा शिर में सुख है इस तरह प्रादेशिक रूप से सुखादि का जो उपलम्भ होता है वह बाधित हो जाता। यतश्च बाधित नहीं होता है यतः "यदीयधर्मरूप से जो पदार्थ अबाधितत्वेन प्रतीत होते हैं वे पदार्थ उसी में स्थित होते हैं" ऐसा नियम है। तदनुसार सुख एवं दुःख शरीरधर्मतया अबाध्यतया प्रतीयमान हैं अतः शरीरनिष्ठ ही हैं। ऐसा सर्वसम्मति से मान लेना चाहिए।

किन्तु यह आशङ्का निर्मूल है (अनुपपन्न है)। कैसे अनुपपन्न है? इसका उत्तर बताया जा रहा है पृथिवी के विशेषगुण नियमतः व्याप्यवृत्ति होते हैं। तदनुसार सुखदुःखादिका अव्याप्यवृत्ति तथा अबाधित उपलम्भ होता है। अतः उनका शरीर धर्म होना अप्रत्याशित है। इस आशय का प्रतिपादन कन्दलीकार ने सुगमशब्दावली में किया है। "अव्याप्यवृत्ति होने से सुखादि को शरीर अथवा इन्द्रिय का विशेष गुण नहीं माना जा सकता। जो शरीर या इन्द्रिय के विशेष गुण है वे व्याप्यवृत्ति होते हैं यथा रूपादि। सुखदुःखादि तो व्याप्यवृत्ति नहीं हैं इसलिए वे देह अथवा इन्द्रिय के गुण नहीं हो सकते। यह व्यतिरेकी अनुमान-प्रयोग है।

तद्वत् भाष्यकार की उक्ति भी है— सुखादि का बाह्येन्द्रिय-जन्य प्रत्यक्ष नहीं होता। अथ च अहं पृथिवी, अहं जलम् इस तरह से प्रतीति नहीं होती यद्वत् अहं सुखी इत्यादि प्रतीति होती है। अतः सुखादि को शरीर अथवा इन्द्रिय का गुण नहीं माना जा सकता।

यतश्च शरीर एवम् इन्द्रिय के गुण जो गुरुत्वादि अप्रत्यक्ष होते हैं किन्तु रूपरसादि बाह्येन्द्रियों द्वारा प्रत्यक्ष होते हैं। सुखदुःखादि, प्रत्यक्षयोग्य हैं तथापि बाह्येन्द्रियों द्वारा प्रत्यक्ष नहीं होते अतएव ये शरीर के गुण नहीं माने जा सकते।

---

१. प्र. पा. भा., पृ. २०५.

सम्भवन्ति। अहंशब्दस्य शरीरे प्रतीयमानं सामानाधिकरण्यं त्वात्मोपकारकत्वाद् भृत्येहमेवायमितिवल्लक्षणया व्यपदेश इति विज्ञेयम्। तस्मादेतैः सुखादिगुणैर्गुण्यात्माऽनुमीयते।

### आत्मनः स्वरूपं गुणाश्च

तदेवं लक्षणप्रमाणाभ्यां सिद्धोऽयं जीवात्मा कर्मणां कर्ता, कृततत्तत्कर्मफलानां भोक्ता, विभुश्च वर्तत इति वैशेषिका मन्यन्ते। वैशेषिकनये आत्मनो द्रव्यत्वात् तस्य च गुणक्रियाश्रयत्वमावश्यकमिति तस्मिन् चतुर्दशगुणाः स्वीक्रियन्ते। तदुक्तं भाष्यकारेण प्रशस्तपादाचार्येण–"तस्य गुणा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः"[१] इति। विश्वनाथन्यायपञ्चाननेनापि–

---

इतना ही नहीं अहं सुखी इस प्रतीति के समान "अहं पृथिवी" "अहम् जलम्" प्रतीति नहीं देखी जाती। सुख के साथ अहम् का सामानाधिकरण्य प्रतीतिबल से प्राप्त नहीं होता। अत: ये सुखादि गुण पृथिवी-जलादि के नहीं माने जाते। "अहं स्थूल:" इत्यादि प्रतीति में शरीर के साथ अहम्-शब्द का सामानाधिकरण्य लक्षणा के आधार पर किया जाता है। आत्मोपकारक होने से ही भृत्य में "अहमेवायम्" यह प्रतीति लाक्षणिक है तद्वत् आत्मोपकारक होने से ही शरीर में अहम् की सामानाधिकरण्येन "अहं स्थूल:" इत्येवमादि प्रतीति लाक्षणिक ही है। अत: सुख एवं दुःख को पृथिवी-प्रभृति द्रव्यों में आश्रित गुण माना नहीं जा सकता। एवञ्च पृथिव्यादि आठ क्लृप्त द्रव्यों में आश्रित गुणों से अतिरिक्त सुखादि के समवायिकारण (आश्रयद्रव्य) के रूप में आत्मा की सिद्धि अनुमान-प्रमाण से होती है।

### आत्मनः स्वरूपं गुणाश्च

इस प्रकार लक्षण एवं प्रमाण से जीवात्मा की सिद्धि होती है। यह जीवात्मा विविध कर्मों का कर्ता है, किये गये अपने विविध कर्मफलों का भोक्ता है तथा विभु है— ऐसी वैशेषिक आचार्यों की मान्यता है। वैशेषिक सिद्धान्त में आत्मा द्रव्य है वह गुण एवं क्रिया (कर्म) का आश्रय है। २४ गुणों में १४ गुण जीवात्मा में आश्रित रहते हैं। भाष्यकार प्रशस्तपादाचार्य जी ने जीवात्मा में आश्रित १४ गुणों को गिनाया है। तद्यथा— "तस्य गुणा बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-संस्कार-संख्या-परिमाण-पृथत्त्व-संयोग-विभागाः। इति। अर्थ सुस्पष्ट है।

---

१. प्र० पा० भा०, पृ० २०८.

**बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा।**
**धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश[1]।। इत्युक्तम्।**

तदेवं वैशेषिकनये आत्मा सगुण एव न निर्गुणः। नन्वात्मनः सगुणत्वे "निर्गुणं निष्क्रियं सूक्ष्मं निर्विकल्पं निरञ्जनम्"[2] इत्यात्मनो निर्गुणत्वप्रतिपादकश्रुतिविरोध इति चेन्न, निर्गता निष्पन्ना ज्ञानेच्छादयो गुणा ह्यदृष्टादिवशाद् यस्मिन् स निर्गुण इति व्याख्यानेन विरोधपरिहारोपपत्तेरिति वैशेषिकाणामाशयः[3]।

महर्षिणा कणादेन-"प्राणापान.....सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि"[4] इति सूत्रेण बुद्ध्यादिप्रयत्नान्ता गुणा आत्मन्युपस्थापिताः। "आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात्"[5] इति सूत्रेण चात्मनि धर्माधर्मौ

---

विश्वनाथ न्यायपञ्चानन ने भी जीवात्मा के १४ गुणों की कारिकाबद्ध किया है। तद्यथा-बुद्ध्यादिषट्कं संख्यादि पञ्चकं भावना तथा।
धर्माधर्मौ गुणा एते त्यात्मनः स्युश्चतुर्दश।।१।।

| | |
|---|---|
| १. बुद्धिप्रभृति छह गुण हैं— बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न | ६ |
| २. संख्यादि पाँच गुण हैं—संख्या, परिमाण, पृथकत्व, संयोग, विभाग | ५ |
| ३. भावना — भावना (संस्कार का प्रभेद) | १ |
| ४. धर्म तथा अधर्म | २ |
| | १४ |

उपर्युक्त विवेचना से सुस्पष्ट है कि वैशेषिक दर्शन में आत्मा को सगुण ही माना जाता है, निर्गुण नहीं।

अब आशङ्का होती है कि आत्मा को सगुण ही माना जाय तो "निर्गुणं....निष्क्रियं.... इत्यादि श्रुतियाँ जो आत्मा के निर्गुणत्व की प्रतिपादक हैं उन श्रुतियों का विरोध उपस्थित होगा। इसका समाधान यह है— निर्गुण का अर्थ गुणरहित नहीं होता अपितु 'निर्गता निष्पन्ना ज्ञानेच्छादयः गुणाः अदृष्टादिवशाद्

---

१. कारि० ३२-३३ श्लो०।
२. अध्यात्मो० ६२.
३. अ० ब्र० सि०, पृ० १०८ टिप्पणी.
४. वै० सू० ३।२।४.
६. वै० सू० ६।१।५.

व्यवस्थापितौ। अस्य सूत्रस्यायमर्थः—आत्मान्तरसमवेतानां यागहिंसादिजन्यानां पुण्यपापानामन्यत्रापि यौ सुखदुःखात्मकौ गुणौ दृश्येते, तयोः कारणत्वं न भवति, किन्तु तत्तदात्मनिष्ठाभ्यामेव धर्माधर्माभ्यां तत्तत्सुखदुःखे, न व्यधिकरणाभ्याम्, अन्यथा कृतहानाकृताभ्यागमप्रसङ्गः। अत एव "शास्त्रदेशितं फलमनुष्ठातरि" इति जैमिनीया अप्यामनन्ति।

**कृतहानाकृताभ्यागमनिरासः**

अत्रैवं शङ्का जागर्ति यत् "वैश्वानरं द्वादशकपालं निर्वपेत्"[1] इत्यादिना पितृकृतपुत्रेष्टिना पुत्रे तेजस्वित्वादिः सम्पद्यते, पुत्रकृतश्राद्धादिना च

---

यस्मिन् तत् निर्गुणम्।" इस व्युत्पत्ति के आधार पर ज्ञान-इच्छा-प्रभृति गुण जिनमें निष्पन्न हैं वह ईश्वर तत्त्व है। ऐसा व्याख्यान करने से विरोध-परिहार हो जाता है। ऐसा वैशेषिक आचार्यों का आशय है।

महर्षि कणाद ने "प्राणापान.....प्रयत्नाश्चात्मनो लिङ्गानि" इस कणाद सूत्र से बुद्धि, सुख, दुःख, इच्छा, द्वेष एवम् प्रयत्न इन आठ गुणों को आत्मवृत्ति प्रतिपादित किया है। अन्य सूत्र है— "आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात्"। इससे आत्मा में धर्म एवम् अधर्म इन दो गुणों की स्थिति प्रतिपादित की गई है। इस सूत्र का अर्थ है— अन्य जीवात्मा यज्ञदत्त के याग से उत्पन्न पुण्य अथवा हिंसा से उत्पन्न पाप अन्यत्र देवदत्त के सुख अथवा दुःख के प्रति कारण नहीं होते। किन्तु स्वनिष्ठ धर्म एवम् अधर्म ही स्वसुख एवं स्वदुःख के प्रति कारण माने जाते हैं। कारण जिस जीवात्मा में है उसी जीवात्मा में उसके कार्य भी होंगे, अन्य में नहीं। यदि इस नियम का पालन नहीं किया जायगा तो कृतहान एवम् अकृत-अभ्यागम ये दो प्रकार के दोष उपस्थित होंगे। इन दो दूषणों से बचने के लिए ही जैमिनीय (मीमांसकगण) "शास्त्रदेशितं फलमनुष्ठातरि" सूत्राधारित निम्नाङ्कित सिद्धान्त मानते हैं— कर्म के अनुष्ठान करने वाले को शास्त्रोक्त फल प्राप्त होता है अन्य को नहीं।

**कृतहान एवम् अकृताभ्यागम का निराकरण**

"वैश्वानरं द्वादशकपालं निर्वपेत्।" इत्यादि श्रुतिवाक्य से बोधित होता है कि पिता जब पुत्रेष्टि करता है तो पुत्र में तेजस्वित्व, मेधावित्व-प्रभृति गुणों का

---

१. तै० सं० २।२।५।३.

पितुस्तृप्तिरिति श्रवणात् पूर्णोक्तस्य "शास्त्रदेशितं फलमनुष्ठातरि" इत्यस्य व्यभिचार इति।

अत्र समाधानत्रयं सम्भवति। तथा हि–अन्यसमवेतादृष्टादन्यत्र फलोत्पत्त्यभावात् फलभोक्तर्येवाऽपूर्वोत्पत्तिः स्वीकर्तव्या। अस्ति यद्यपि कृतपूर्वयोः सामानाधिकरण्यनियमः, अथापि "यागादौ ऋत्विगादीनां कर्तृत्वेऽपि स्वामिन्येवापूर्वोत्पत्तिः, तद्वदेवोपपत्तेः"[२] इति श्रीवीरराघवाचार्या अभिप्रयन्ति।

शङ्करमिश्रास्तु–"शास्त्रदेशितं फलमनुष्ठातरि" इति न नियमः, अपि तु बलवता बाधकेनापोद्यमानत्वादुत्सर्ग एव। प्रकृते पुत्रेष्टिपितृश्राद्धादौ

---

आधान होता है तद्वत् पुत्रकृत श्राद्ध आदि कृत्यों के अनुष्ठान से पिता (पितरों) प्रभृति की तृप्ति होती है। ऐसी स्थिति में शास्त्रदेशित इत्यादि सूत्रबोधित नियम का व्यभिचार (अतिप्रसक्ति) प्राप्त होता है। उपर्युक्त आशङ्का स्वाभाविक रूप से उदित होती है।

इसका निराकरण करने हेतु तीन प्रकार से समाधान विद्यमान हैं।

**१. श्रीवीरराघवाचार्यकृत समाधान–**

देवदत्त में समवाय सम्बन्ध से विद्यमान धर्म एवम् अधर्म (अदृष्ट) यज्ञदत्त के सुख अथवा दुःख की उत्पत्ति में कारण नहीं बनते। अतः फल के भोक्ता में अपूर्वोत्पत्ति का होना स्वीकार्य है। यद्यपि कारण एवं कार्य का एक (समान) अधिकरण में होने का नियम है। तथापि याग के अनुष्ठान में ऋत्विक् प्रभृति अनुष्ठान के कर्ता होते हैं किन्तु जिसके उद्देश्य से याग किया जाता है उस यजमान स्वामी के ही अपूर्व की उत्पत्ति होती है— यह सिद्धान्त स्वीकार्य है तद्वत् पितृकृत पुत्रेष्टि का फल पुत्रको प्राप्त होना सुघटित होगा एवम् पुत्रकृतश्राद्धकर्म से पितृसन्तुष्टि का भी सुघटित होना निर्बाध होगा।

**२. शङ्करमिश्रकृत समाधान–**

शास्त्रदेशित फल अनुष्ठानकर्ता को प्राप्त होता है यह नियम नहीं हो सकता प्रत्युत अपवाद वचन के द्वारा बाधित होने वाला यह उत्सर्ग शास्त्र है। पितृकृत पुत्रेष्टि का पुत्रगत तेजस्वित्व के प्रति कारण होना तद्वत् पुत्रकृत पितृश्राद्ध

---

१. वै० सू० ६।१।५ रसायनव्याख्या।

पुत्रतेजस्वित्वादि पितुस्तृप्त्यादिफलानां पुत्रपितृगतत्वेन श्रवणस्यैव बाधकत्वात्। न चैवं सत्यतिप्रसङ्ग इति वाच्यम्, बाधकश्रुतेरेवातिप्रसङ्गनिवारकत्वादिति प्रतिपादयन्ति[१]।

वृत्तिकारास्तु–"शास्त्रदेशितम्" इत्यादिर्नियम एव। पित्रादीनां तु यत्फलं तच्छ्राद्धादौ ब्राह्मणानामाशीर्मन्त्रानुभावात्, "कृतार्थस्ते पितरो भूयासुः" इति पितृयज्ञे। पुत्रेष्टौ तु सन्तुष्टानामृत्विजामाशीर्दानात्–"तेजस्वी वर्चस्व्यन्नादस्ते पुत्रो भूयात्" इत्यादयः, जाङ्गलिकमन्त्रपाठादिव सर्पदष्टस्य विषापहरणमित्याहुः"[२]।

---

का पितृगत सन्तुष्टि के प्रति कारण होना— तत्प्रतिपादक श्रुतिवचन ही उपर्युक्त उत्सर्ग-वचन का बाधक होता है। एतावता सामान्यविधि का अतिप्रसक्त दोष सम्भावित नहीं है क्योंकि बाधक श्रुति ही अतिप्रसक्ति की निवारक होगी।

### ३. वृत्तिकारकृत समाधान–

इस मत में "शास्त्रदेशितं फलमनुष्ठातरि" को उत्सर्ग नहीं प्रत्युत नियम ही माना जाता है। पुत्रकृत पितृश्राद्ध के प्रकरण में पितरों की तृप्ति फलरूपसे उपनत होती है उसमें श्राद्धकर्म में ब्राह्मणों के आशीर्वाद-मन्त्रों की हेतुता है। तद्‌यथा— "कृतार्थास्ते पितरो भूयासुः।" इसका अर्थ है— पितृश्राद्ध के अनुष्ठाता पुत्र को ब्राह्मणों का आशीर्वाद प्राप्त होता है— तुम्हारे पितृगण कृतकृत्य हों। दृष्टान्त के रूप में जङ्गलनिवासी के लौकिकमन्त्रपाठ से सर्पदष्ट अन्य व्यक्ति के विषापहरण को प्रतिपादित किया गया है।

वृत्तिकार के परवर्ती आचार्य शङ्करमिश्र ने वृत्तिकारास्तु-इत्याहुः कहा है। इस वचन के "आहुः" पद का उल्लेख कर उन्होंने वृत्तिकार के अभिप्राय को अस्वीकृत कर दिया है। ऐसा सुस्पष्ट विदित होता है। वस्तुस्थिति यह है— "शास्त्रदेशितं फलमनुष्ठातरि" को नियमविधि मानने पर भी कोई दूषण नहीं है। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्।" यह मीमांसा सूत्र है। तदनुसार "मन्त्र- ब्राह्मणयोर्वेदनामधेयम्" सिद्धान्तानुरूप समस्त वेदवाक्यों को क्रियार्थक होने की प्रतिज्ञा की गयी है। ऐसी स्थिति में क्रियामात्रार्थक होने पर द्रव्यादिबोधक वेदवाक्यों की आनर्थक्यापत्ति नहीं हो— यह अत्यन्त ध्यातव्य है। कारण यह है कि वेद का एक भी अक्षर अनर्थक नहीं है यह सिद्धान्त में ध्रुवसत्य रूप

---

१. वै० सू० उप० ६।१।५.

२. वै० सू० उप० ६।१।५.

अत्र 'आहुः' इति प्रतिपादयतः शङ्करमिश्रस्य वृत्तिकाराभिप्रायोऽनभिप्रेत इति प्रतिभाति। वस्तुतस्तु नियमविधित्वेऽपि न क्षतिः। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते"[१] इति मीमांसासूत्रानुसारेण सर्वेषां वेदवाक्यानां मन्त्रब्राह्मणात्मकानां क्रियार्थत्वे प्रतिज्ञातानां तन्मात्रार्थकत्वे द्रव्यादिबोधकानां तेषामानर्थक्यापत्तिर्मा भूत्, यतो ह्येकस्याप्यक्षरस्या-नर्थक्याऽसम्भवस्य ध्रौव्यादेवानर्थक्यमतदर्थानामित्यापत्तिवचनं प्रवृत्तम्। इत्थं च द्रव्याद्यर्थकानामानर्थक्यापत्ताविष्टापतेः कर्तुमशक्यत्वात् कथमुक्तप्रतिज्ञा समुपपद्येतेति विचारे वर्तते कश्चन निश्चयप्रकारः। तथाहि-

क्रियार्थत्वादित्यनेन क्रियार्थमपि यदुपदिश्यते, तदपि क्रियोपदेशान्तर्गतमेव। तेन तद्बोधकस्य क्रियार्थत्वमव्याहतमेव। अत एव-"भूतं हि भव्यायोपदिश्यते"[२] इति मीमांसान्यायोक्तिरपि सामञ्जस्यं भजते। भूतस्य सिद्धस्य आज्यादिरूपस्य

से स्वीकार्य है। ऐसी स्थिति होने पर भी "आनर्थक्यमतदर्थानाम्" ऐसा आपत्तिवचन सम्प्रवृत्त हुआ है। ऐसी स्थिति में द्रव्यादि अर्थ के प्रतिपादक वचनों के अनर्थक होने की आपत्ति को कथमपि इष्टापत्ति रूप में स्वीकार नहीं किया जा सकता। एवञ्च "आम्नायस्य क्रियार्थत्वादित्यादि प्रतिज्ञा की उपपत्ति कैसे सम्भव है यह विचार आवश्यक है। इसमें अन्वेषणीय मार्ग निम्नाङ्कित है— क्रियार्थत्वात्- इस सूत्रस्थ पद से बोधित होता है कि क्रियाहेतु भी जिसका उपदेश किया जाता है वह भी क्रियोपदेश के अन्तर्गत ही है। एतावता क्रियाबोधक की क्रियार्थता अव्याहत है। अतएव "भूतं हि भव्यायोपदिश्यते।" मीमांसान्याय इस उक्ति का सामञ्जस्य उपपन्न होता है। तथाहि भूत=सिद्धवस्तु आज्य (घृतप्रभृति) द्रव्य का उपदेश भव्य=साध्य क्रिया के उद्देश्य से किया जाता है। यह उक्त न्याय का आशय है।

तद्वत् उत्तरमीमांसा=वेदान्त में भी यह विचार किया गया है। तद्यथा— उपनिषद्वाक्य है-"ऋतं पिबन्तौ सुकृतस्य लोके"-इत्यादि। उक्त वाक्य का विवरण प्रसङ्ग उपस्थित होता है। यहाँ प्रश्न उठता है-कर्मफल अवश्यम्भावी है अतएव इसे ऋत (सत्यसदृश) कहा जाता है। सुकृत कर्म के फलरस का पान जीव करता है तथा स्वयं परमेश्वर फलरस का पान नहीं करता अपितु जीव के प्रति वह प्रेरणा-दायक होता है। एवञ्च फलरस-पान के प्रयोजक कर्ता परमेश्वर में रसपान-

१. जै० सू० १।२।१.
२. मी० प्र० प्रभा०, पृ० ४८.

द्रव्यस्य भव्याय साध्याय क्रियायै उपदेश इति हि तदर्थः। इत्थमेव-"ऋतं पिबन्तौ सुकृतस्य लोके"[१] इत्युपनिषद्वाक्यविवरणावसरे उत्तरमीमांसायां पानप्रयोजककर्तरि परमेश्वरे पानकर्तृत्वबाधात् 'पिबन्तौ' इत्युक्तिः कथं सङ्गच्छेतेत्यापत्तौ-"ऋतं सत्यमवश्यंभावित्वात् कर्मफलं पिबन्तौ। एकस्तत्र कर्मफलं पिबति भुङ्क्ते नेतरस्तथाऽपि पातृसम्बधात् पिबन्तावित्युच्यते, छत्रिन्यायेन"[२] इति भगवता भाष्यकारेण शङ्कराचार्येण पाययन्नपि पिबन्नित्युपचर्यत इति व्यवस्थापितम्। तथा च तन्न्यायेन प्रकृतेऽपि विमर्शे कृते सति-"शास्त्रदेशितं फलमनुष्ठातरि" इति वचनेन यदुद्देशेन अनुष्ठाता कर्म कुरुते, तस्याप्यनुष्ठातृगतत्वेन तत्रापि पर्यवसितं फलं न नियमविधिमतिक्रामति, असम्बन्धस्य फलाऽसम्बन्धादतिप्रसङ्गाभावात्। अत एव यजमानगतफलार्थं क्रियमाणानामनुष्ठानानामनुष्ठातृगतफलाऽप्रयोजकत्वेऽपि न नियमविधिभङ्गप्रसङ्गः, तत्र साक्षादनुष्ठातृणामेतन्नियमसम्बद्धत्वेन तद्द्वारा यजमानस्याप्यनुष्ठातृत्वेन

---

कर्तृता बाधित होती है। जीव एवम् परमेश्वर दोनों के लिए "पिबन्तौ" ऐसा कथन कैसे युक्तिसंगत होगा?

इस प्रश्न का समाधान भाष्यकार भगवान् शङ्कराचार्य ने छत्रिन्यास से किया है। यद्यपि जीव कर्मफलरस का पान=भोग करता है ईश्वर नहीं तथापि पान का साक्षात् एवं प्रेरणाद्वारक सम्बन्ध होने से इन दोनों के साथ छत्रिन्याय से "पिबन्तौ" की उक्ति असंगत नहीं है। रसपान कराने वाले ईश्वर को जीव की तरह रसपानकर्ता के रूप में "पिबन्तौ" शब्द से प्रतिपादित करना उक्त छत्रिन्यास से संगत है। तद्वत् प्रकृत में भी उक्तन्याय का अवलम्ब लिया जा सकता है। तथाहि-"शास्त्रदेशितं फलमनुष्ठातरि।" इस वचन से जिस उद्देश्य से अनुष्ठाता कर्म का अनुष्ठान करता है वह उद्देश्य भी अनुष्ठाता में विद्यमान रहता है—अत: उद्देश्य यजमान को एवं पुत्रकृत श्राद्ध में पितरों को प्राप्त होने वाला स्वर्गादि एवम् तृप्त्यादि फल नियमविधि का अतिक्रमण नहीं है प्रत्युत प्रतिपालन ही है। यहाँ भी उद्देश्य से भिन्न जो असम्बद्ध द्वेष्यादि है उसका फल के साथ सम्बन्ध नहीं है। अत: किसी तरह का अतिप्रसङ्ग नहीं है।

एवञ्च यजमान को उद्देश्य कर उसके स्वर्गादिप्राप्ति की कामना से किये जाने वाले अनुष्ठान का कर्मानुष्ठाता ऋत्विक्प्रभृति में फलोत्पादन नहीं होने पर भी

---

१. कठ० १।३।१.

२. कठ० शा० भा० १।३।१

फलानामनुष्ठातृगतत्वोपपत्तेः। इत्थमेव तत्र सङ्गतिः कर्तुं शक्यते। अत एव च "स्वरितञितः कर्त्रभिप्राये क्रियाफले"[१] इति पाणिनिसूत्रमपि मानतामावहति। अन्यथा "शास्त्रदेशितं फलमनुष्ठातरि" इति नियमानुसारेणानुष्ठातर्येव फलसम्पत्तौ फलस्य यजमानगतत्वेन परस्मैपदविधानमसम्भवग्रस्तं स्यात्, तत्र फलस्यानुष्ठातृगतत्वाभावेन सूत्राऽप्रवृत्तेः। यदा च परम्परयाऽप्यनुष्ठातृत्वं स्वीक्रियते, तदानीं यजमानोऽप्यनुष्ठाता एव। तत्र–"शास्त्रदेशितं फलमनुष्ठातरि" इत्यत्र साक्षात् परम्परासाधारणस्यानुष्ठातृत्वस्य ग्रहणेन सर्वसामञ्जस्योपपत्तिः।

---

नियमविधि के भङ्ग की प्रसक्त नहीं मानी जाती है। ऐसे स्थल में यद्यपि साक्षात् अनुष्ठाता की ही इस नियम से सम्बद्धता है किन्तु तद्द्वारा यजमान की भी सम्बद्धता होने से यजमान भी अनुष्ठाता है तथा उसे प्राप्त होने वाला स्वर्ग (सुखविशेष) भी अनुष्ठाता से बाह्य को प्राप्त नहीं है।

अतएव यजमान को याग का फल प्राप्त हो–एतदर्थ किये गये अनुष्ठानों के अनुष्ठाता ऋत्विक् आदि को यजमानोद्देश्यक याग-के अपूर्व से युक्त नहीं कहा जा सकता तदनुसार उसके फलरूप सुख से भी उसे जोड़ा नहीं जा सकता। ऐसा होने पर भी "शास्त्रदेशितं फलमनुष्ठातरि" का नियमविधिभङ्ग नहीं होता। कारण यह है कि यजमानोद्देश्यक याग में ऋत्विक् की नियम के साथ साक्षात् सम्बद्धता है और तद्द्वारा यजमान की सम्बद्धता है अत: यजमान के भी अनुष्ठाता होने से संकल्पानुसार यजमान को फलप्राप्ति होने से यह नियमविधि के अनुरूप ही है। इस उपर्युक्त प्रकार से ही सङ्गति की जाती है। यह आधार उपयुक्त है। इसी आधार पर "स्वरितञित: कर्त्रभिप्राये क्रियाफले" यह पाणिनिकृत अष्टाध्यायी-सूत्र भी (प्रमाणवचन) युक्तिसंगत होता है। यदि इस आधार को नहीं माना जाय तो "शास्त्रदेशितफलमनुष्ठातरि।" इस नियम के अनुसार कर्म के अनुष्ठाता में ही फलप्राप्ति होती। ऐसी स्थिति में फलप्राप्ति यजमान को होने पर परस्मैपद का विधान असम्भवग्रस्त होगा। क्योंकि यजमानोद्देश्यक ऋत्विक् से अनुष्ठित यागफल की प्राप्ति यजमान में नहीं होने से "स्वरितञित:...." सूत्र की प्रवृत्ति नहीं हो सकती। जब परम्परया भी अनुष्ठानकर्तृत्व का स्वीकार कर लिया जाता है तो यजमान भी अनुष्ठाता ही है तद्बहिर्भूत नहीं। एवञ्च "शास्त्रदेशितं फलमनुष्ठातरि" इस सूत्र में साक्षात् एवम् परम्परया दोनों ही स्थितियों में अनुष्ठातृता का ग्रहण करने से सर्वसामञ्जस्य की उपपत्ति हो जाती है।

---

१. पा० सू० १।३।७२.

इत्थं च सूक्ष्मेक्षिकया सर्वेषां वचनानां समालोडने कृते सति वृत्तिकारनिरूपितं नियमविधित्वं प्रामाणिकमेवेति नोत्सर्गः समाश्रयणीय इति वक्तुं शक्यत एव। तथा च न कथमपि–"शास्त्रदेशितं फलमनुष्ठातरि" इत्यत्रोत्सर्गत्वम्। नियमत्वे चारुचिं न पश्यामः। तस्मात्–"शास्त्रदेशितं फलमनुष्ठातरि" इत्यस्य मीमांसावचनस्य क्वचित् साक्षादनुष्ठातृत्वेन फलसम्बन्धित्वस्य, क्वचित् परम्परया चेति व्यवस्थापयितुं शक्यत्वात्, तस्याश्च लोकशास्त्रसिद्धत्वान्न कृतहानाकृताभ्यागमप्रसङ्ग इति।

एवं धर्माधर्मवत् "आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः"[1] इति सूत्रेण स्मृतिहेतुर्भावनाख्यः संस्कारोऽप्यात्मन्यङ्गीक्रियते वैशेषिकैः। संस्कारं विना स्मृत्युत्पत्त्यभावात् सर्वे आत्मानो यत्किञ्चित् स्मृतिवन्त एव भवन्तीत्यात्मनि भावनाख्यः संस्कारः सिद्ध्यति।

---

इस प्रकार सूक्ष्म दृष्टि से सभी के वचनों का आलोडन करने पर प्रतीत होता है कि वृत्तिकार द्वारा प्रतिपादित नियमविधि प्रामाणिक ही है अतः उत्सर्ग का आश्रयण नहीं करना चाहिए—यह कहना अनुचित नहीं होगा। एवंच निष्कर्ष यह है कि "शास्त्रदेशितं फलमनुष्ठातरि" इस सूत्र में उत्सर्ग का स्वीकार कथमपि अभीष्ट नहीं है। इसके विपरीत नियमविधि की स्वीकार्यता में किसी प्रकार की अरुचि (अस्वारस्य) नहीं है। अतः शास्त्रदेशित इत्यादि सूत्र (मीमांसावचन) में साक्षात्परम्परासाधारण अनुष्ठाता में फलसम्बन्ध की व्यवस्था करनी चाहिए। यह व्यवस्था लोकसिद्ध एवं शास्त्रसिद्ध है इसमें कृतहान एवम् अकृताभ्यागम की प्रसक्ति भी नहीं होती है।

जैसे धर्म एवम् अधर्म आत्मा में आश्रित हैं तद्वत् भावनासंज्ञक संस्कार को भी वैशेषिकों ने आत्माश्रित कहा है। "आत्ममनसोः संयोग-विशेषात् संस्काराच्च स्मृतिः" इस सूत्र से स्मृति के प्रति भावनाख्य संस्कार को हेतु बताया गया है। संस्कार के बिना स्मृति की उत्पत्ति नहीं होती यतः सभी आत्मा में कोई न कोई स्मृति उत्पन्न होती है अतः स्मृति के कारणीभूत भावनासंस्कार की आत्मधर्मता सिद्ध होती है।

"व्यवस्थातो नाना" इस सूत्र से अनेक जीवात्मा की व्यवस्था प्रतिपादित

---

१. वै० सू० ९।२।६.

"व्यवस्थातो नाना"[1] इति सूत्रेणानेकात्मव्यवस्थापनद्वारा महर्षिणा कणादेनात्मनि संख्यापि व्यवस्थापिता। तद्यथा–नानाभेदभाविनां ज्ञानसुखदुःखादीनां प्रतिसन्धानमत्र व्यवस्थेत्युच्यते। यदा कश्चन सुखी तदानीमेवान्यो दुःखी, यदा च कश्चिदभिज्ञस्तदानीमेवान्यो जड इतीयं व्यवस्थाऽऽत्मभेदमन्तरेणाऽनुपपद्यमाना साधयत्यात्मनां भेदम्। तदुक्तम्–

> कश्चिद् रङ्कः कश्चिदाढ्यः कश्चिदन्यविधः पुनः।
> अनयैवात्मनानात्वं सिद्ध्यत्यत्र व्यवस्थया[2]।।इति।

इयं हि व्यवस्था न केवलं यौक्तिकी, अपि तु शास्त्रसम्मतेति प्रतिपादयन् प्राह महर्षिः–"शास्त्रसामर्थ्याच्च"[3] इति। शास्तीति शास्त्रमिति व्युत्पत्तिसिद्धं हि शास्त्रं तदानीमेव शास्त्रं स्याद् यद्येकः शास्ता अपरश्च शासनीय इति द्वावात्मानौ स्याताम्। नह्येक एवात्मा शास्ता शासनीयश्च भवति।

---

कर महर्षि कणाद ने आत्मधर्मरूप से संख्या को प्रतिपादित किया है। व्यवस्था का अर्थ है— नानाभेद युक्त जीवात्माओं में ज्ञान, सुख,दुःखादि का प्रतिसन्धान। जब एक व्यक्ति सुखी रहता है उसी समय दूसरा व्यक्ति दुःखी रहता है। जब कोई ज्ञानवान् रहता है उसी समय दूसरा व्यक्ति जड (मूर्ख) होता है। ऐसी व्यवस्था आत्मभेद के बिना उपपन्न नहीं हो सकती अतः आत्मभेद सिद्ध होता है। तदनुरूप यह प्रसिद्धि है—

> कश्चिद् रङ्कः कश्चिदाढ्यः......व्यवस्थया ।।१।।

कोई अत्यन्त निर्धन है तथा दूसरा व्यक्ति धनी-मानी है तीसरा व्यक्ति इन दोनों से भी विलक्षण है। इस तरह की स्थिति (व्यवस्था) से आत्मनानात्व की सिद्धि होती है।।१।।

इस तरह की व्यवस्था केवल युक्तिसिद्ध है ऐसी बात नहीं प्रत्युत शास्त्र-सम्मत भी है ऐसा प्रतिपादन करते हुए महर्षि कणाद ने सूत्र लिखा है— "शास्त्रसामर्थ्याच्च।"। शास्त्र-शब्द की निष्पत्ति— "शास्तीति शास्त्रम्–की व्युत्पत्ति पर आधारित है। शासनात्मकता तभी सम्भव है जब एक शासक हो दूसरा शासित हो इस प्रकार दो आत्मव्यक्ति हों। यह कभी भी सम्भव नहीं है कि एक ही

---

१. वै० सू० ३।२।२०.
२. तत्त्वा०, पृ० १५३.
३. वै० सू० ३।२।२१.

अत एव श्रूयते–

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्यन्नन्यो अभिचाकशीति[१]।।इति।**

नन्वेवमद्वैतप्रतिपादकानां 'तत्त्वमसि' इत्यादिमहावाक्यानां का गतिरिति चेत्, "निरञ्जनः परमं साम्यमुपैति"[२] इति श्रुतिबलेन तत्सदृशस्त्वमसीति प्रत्यभिज्ञामुखेन मोक्षावस्थायां ब्रह्मसाम्यपराणि तानीत्यवधेयम्। तस्माद्द्वैतश्रुतयः क्वचित् कैवल्यपराः, क्वचिद् ब्रह्मसाम्यपराः, क्वचिच्च सर्वप्रपञ्चनियन्तृपरमात्मैक्यपरा इति मन्तुमुचितम्। तदुक्तं श्रीधरभट्टेन– "अभेदश्रुतयस्तु गौणार्था इति दिक्"[३] इति।

---

आत्मा शासक भी हो और शासित भी हो। इसलिए श्रुति में यह भी प्रतिपादित किया गया है—

"द्वा सुपर्णा.......अभिचाकशीति।।१।।

जिज्ञासा उदित होती है कि आत्मनात्व-सिद्धान्त में अद्वैतप्रतिपादकश्रुति के 'तत् त्वमसि" इत्यादि महावाक्यों की चरितार्थता कैसे होगी? इसका समाधान "निरञ्जनः परमं साम्यमुपैति" श्रुतिसिद्ध ब्रह्मसाम्य को उत्कृष्ट योगी प्राप्त करता है इस प्रतिपादन से" तत् = तत्सदृशः त्वम् असि" यह अर्थ श्रुत्यन्तरलभ्य है। प्रत्यभिज्ञाद्वारा साधकजीव में मोक्षावस्था में ब्रह्मसाम्यप्राप्ति का प्रतिपादन, तत्त्वमसि-इत्यादि महावाक्यों द्वारा किया जाता है। एवंच अद्वैतश्रुतियों का तात्पर्य स्थलविशेष में कैवल्यबोधन में, अन्यत्र ब्रह्मसाम्यबोधन में तथा स्थलविशेष में सर्वप्रपञ्च के नियन्ता एक परमेश्वर में मानना समुचित है। अतएव श्रीधरभट्ट ने सुस्पष्ट कहा है— "अभेदश्रुतियाँ गौण अर्थ के प्रतिपादन में प्रवृत्त हैं न कि प्रधान अर्थ में।"

उपर्युक्त प्रकार से आत्मा में बहुत्वसंख्या की सिद्धि होने पर संख्या पर आधारित उन आत्माओं में परस्पर पृथक्त्व की सिद्धि भी होती है। वैशेषिक आचार्यों ने आत्मा के विभुपरिमाण को स्वीकारा है। महर्षि कणाद ने "विभवान्महानाकाशस्तथा चात्मा।" इस सूत्र के बल पर आकाश के दृष्टान्त का उल्लेख कर आत्मा के विभुत्व को प्रतिपादित किया है। यतश्च अनेक प्रदेशों में एक साथ शब्दोत्पत्ति दृष्ट होती है

---

१. मुण्ड० ३।१।१.
२. मुण्ड० ३।१।३.
३. न्या० क०, पृ० २१३.

एवमात्मनि बहुत्वसंख्यासिद्धौ संख्यानुविधायि पृथक्त्वमपि तत्र सिद्धम्। वैशेषिका आत्मनो विभुपरिमाणत्वमङ्गीकुर्वन्ति। महर्षिणा कणादेन– "विभवान्महानाकाशस्तथा चात्मा"[४] इति सूत्रेणाकाशवदिति सदृष्टान्तमात्मनो विभुत्वमुक्तम्। अनेकेषु प्रदेशेषु युगपत् शब्दोत्पत्तेर्दृश्यमानत्वात् शब्दस्य चाकाशगुणत्वात् शब्दोत्पत्तौ समवायिकारणस्याकाशस्य विभुत्वमङ्गीकर्तव्यम्। विभुत्वाच्च परममहत् परिमाणमस्य। "तथा चात्मा" इति सूत्रोक्त्याऽऽत्मनोऽपि विभुत्वं परममहत्त्वं च सिद्धम्। इदमत्रावधेयं यद् यथाकाश एकः, नात्मा तथा, "व्यवस्थातो नाना"[५] इति पूर्वमेवात्मनो नानात्वस्य प्रतिपादितत्वात्।

श्रीशङ्करमिश्रेण–"यद्यात्मनः सकलमूर्तसंयोगित्वं न भवेत्, तदा तेषु तेषु मूर्तेष्वदृष्टवदात्मसंयोगात् क्रिया नोत्पद्येत, व्यधिकरणस्यादृष्टस्य प्रत्यासत्त्यपेक्षया क्रियाजनकत्वात्। सा च प्रत्यासत्तिरदृष्टवदात्मसंयोग एव। एवं सञ्चारिणि शरीरे तत्र तत्र ज्ञानसुखादीनामुत्पत्तिरात्मनो वैभवमन्तरेणानुपपन्नेत्यात्माऽपि व्यापकः"[६] इति सहेतुरात्मनो विभुत्वं प्रतिपादितम्।

---

एवम् शब्द, आकाश का गुण है अतः शब्द की उत्पत्ति में समवायिकारणीभूत आकाशद्रव्य का विभु मानना समुचित है। विभु होने से ही आकाश का परममहत्परिमाण है। "तथा चात्मा" इस सूत्रवचन से आकाशवत् आत्मा का भी विभुत्व एवं परममहत्परिमाण सिद्ध होता है। यह विशेष रूप से ध्यातव्य है कि यथा आकाश एक है तद्वद् आत्मा एक नहीं है। क्योंकि पूर्व में ही "व्यवस्थातो नाना" इस सूत्र से आत्मा के नानात्व का प्रतिपादन किया जा चुका है।

श्रीशङ्कर मिश्र ने हेतुपद का उल्लेख करते हुए आत्मा की विभुता को सयुक्ति प्रतिपादित किया है। तद्यथा यदि आत्मा का सर्वमूर्त के साथ संयोग न हो तो उन मूर्त द्रव्यों में अदृष्टवान् आत्मसंयोग से जनित क्रिया नहीं होगी। अदृष्ट तो व्यधिकरण है अतः वह प्रत्यासत्ति प्रभाव से ही क्रिया का जनक होगा। वह प्रत्यासत्ति किं स्वरूप है? इस जिज्ञासा का उत्तर होगा— अदृष्टवदात्मसंयोग से व्यतिरिक्त प्रत्यासत्ति नहीं है। एवंच यहाँ से वहाँ तक संचरणशील शरीर में जो ज्ञान-सुखादि की प्रतीति होती है वह आत्मा के विभु हुए बिना उपपन्न नहीं हो सकती अतः आत्मा भी आकाशवत् व्यापक है।

---

१. वै० सू० ७।१।२२.
२. वै० सू० ३।२।२०.
३. वै० सू० उप० ७।१।२२.

चन्द्रकान्ततर्कालङ्कारेणाप्ययमेवाशयः प्रकटीकृतः। तथाहि–

**विभुत्वात् महानात्मा तेनादृष्टवता समम्।**
**योगाद्धि तेषु मूर्तेषु युगपत् कर्मसंभवः[1]।।इति।**

श्रीधरभट्टेन–"विभुत्वं चात्मनो वह्नेरूर्ध्वज्वलनाद् वायोस्तिर्यग्गमनादवगतम्"[2] इत्यात्मनो विभुत्वे कारणमुक्त्वा प्रमाणं चात्रोपस्थापितम्– "ऊर्ध्वज्वलनतिर्यक्पवनान्यात्मविशेषगुणकृतानि, गुरुत्वादिकारणाभावे सति कर्मत्वात्, पुरुषप्रयत्नजपाणिकर्मवत्"[3] इति। अत्र विषये वैशेषिकाचार्याणामिदमैदम्पर्यम्– अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं च कर्मरूपम्। कर्म तावन्न्यायवैशेषिकदर्शने उत्क्षेपणादिना पञ्चप्रकारकम्। उत्पत्तिविनाशशीलत्वाच्च कर्मानित्यमित्युच्यते। अत एव पृथिव्यादिपञ्चमूर्तद्रव्येष्वेव तस्य स्थितिः, न त्वमूर्तेष्वाकाशकालदिगात्मसु। मूर्तद्रव्येषूत्पद्यमानं कार्यं

---

चन्द्रकान्त तर्कालङ्कार ने भी इस आशय को व्यक्त किया है। तद्यथा— विभुत्वात्तु महानात्मा....युगपत् कर्मसम्भवः।।१।।

श्रीधरभट्ट ने आत्मा के विभु होने में कारण बताया है— "विभुत्वं चात्मनो वह्नेरूर्ध्वज्वलनाद् वायोस्तिर्थग्गमनादवगतम्" तदनन्तर उन्होंने इस सन्दर्भ में प्रमाण भी उपस्थापित किया है— "ऊर्ध्वज्वलनतिर्यक्पवनानि आत्मविशेषगुणकृतानि, गुरुत्वादिकारणाभावे सति कर्मत्वात्, पुरुषप्रयत्नजपाणिकर्मवत्।"

उपर्युक्त विषय में वैशेषिक आचार्यों का तात्पर्य यह है— अग्नि का ऊर्ध्वज्वलन तथा वायु का तिर्यक् गमन वैशेषिकसम्मत कर्म पदार्थ है। न्यायवैशेषिक दर्शनों में कर्म के ५ प्रभेद होते हैं— उत्क्षेपण, अपक्षेपण, आकुञ्चन, प्रसारण एवं गमन। यतश्च कर्म उत्पत्तिशील एवं विनाशशील है अतः इसकी अनित्यता सुनिश्चित है। अनित्य होने के कारण कर्म, मूर्त द्रव्यों (पृथ्वी, जल, तेजस्, वायु तथा मनस्) में स्थित होते हैं। इनकी स्थिति अमूर्त द्रव्यों (आकाश, काल, दिशा, आत्मा) में नहीं हो सकती। मूर्त द्रव्यों में उत्पन्न होने वाला कार्य दो प्रकार का होता है— भावकार्य एवम् अभावकार्य। इनमें द्रव्य की उत्पत्ति, गुण की उत्पत्ति तथा कर्म की उत्पत्ति को भावकार्य की श्रेणी में रखा जाता है। प्रध्वंसस्वरूप अभाव की उत्पत्ति को अभावकार्य माना जाता है। भावकार्य के प्रति त्रिविध कारण की अपेक्षा होती है- समवायिकारण,

---

१. तत्त्वा० आ० ९३ श्लो०।

२. न्या० क०, पृ० २१३.

३. न्या० क०, पृ० २१५.

भावाऽभावभेदेन द्विविधम्। तत्र द्रव्योत्पत्ति-गुणोत्पत्ति-कर्मोत्पत्तिरूपं तु भावकार्यम्। प्रध्वंसाभावोत्पत्तिरूपं त्वभावकार्यम्। भावकार्यं समवाय्यसमवायिनिमित्तसापेक्षम्। अभावकार्यं तु केवलं निमित्तकारणमपेक्षते। अत्र-"गुरुत्व-द्रवत्व-वेग-प्रयत्न-धर्माधर्म-संयोगविशेषाः क्रियाहेतवः"[१] इति प्रशस्तपादोक्त्या पूर्वोक्तेषु त्रिषु भावकार्येषु कर्मरूपं यत् कार्यं तद् गुरुत्वादिभिरुत्पद्यत इति ज्ञायते। प्रकृते यदग्नेरूर्ध्वज्वलनं वायोश्च तिर्यक्पवनरूपं कर्म वर्तते, तत् प्रति न तावद् गुरुत्वं हेतुः, तस्याद्यपतनाऽ-समवायिकारणत्वात्। नापि द्रवत्वम्, तस्याद्यस्यन्दनाऽसमवायिकारणत्वात्। नापि वेगः, तस्य द्वितीयक्षणवृत्तिस्थाग्नेरूर्ध्वज्वलनादौ हेतुत्वेऽप्याद्यज्वलना-दावहेतुत्वात्। नापि प्रयत्नः, लोके प्रयत्नं विनैव दीपशिखाया ऊर्ध्वज्वलनस्य वायोश्च तिर्यक्पवनस्य सर्वानुभवसिद्धत्वात्। एवमेव संयोगविशेषौ नोदनाभिघाताख्यावपि हेतू न संभवतः, तयोर्विभागाविभागमात्रहेतुत्वात्। अत उक्तेषु क्रियाहेतुष्ववशिष्टौ धर्माधर्मावेव पारिशेष्यात् कारणौ भवतः। तदेवोक्तं महर्षिणा कणादेन-"अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम्"[२] इति। अस्यायमर्थः-अग्निगतमूर्ध्वदेशप्राप्त्यनुकूलज्वलनम्,

---

असमवायिकारण एवं निमित्तकारण। अभावात्मक कार्य को केवल निमित्तकारण की अपेक्षा होती है। इनमें भावकार्य के प्रति गुरुत्व, द्रवत्व, वेग, प्रयत्न, धर्म, अधर्म तथा संयोग- विशेष को कारण माना जाता है। एतदर्थ प्रशस्तपाद का निम्नाङ्कित वचन प्रमाण है— "गुरुत्व-द्रवत्व-वेग-प्रयत्न-धर्मा-धर्म-संयोगविशेषाः क्रियाहेतवः।" प्रकृत में अग्नि का ऊर्ध्वज्वलन तथा वायु का तिर्यक् गमन कर्म हैं। किन्तु उनके प्रति गुरुत्व हेतु नहीं है। गुरुत्व को केवल आद्यपतन के प्रति कारण माना जाता है। द्रवत्व को भी उपर्युक्त द्विविध कर्म के प्रति कारण नहीं माना जा सकता। क्योंकि द्रवत्व को आद्यस्यन्दन का ही असमवायिकारण माना जाता है। वेग भी इन कर्मों के प्रति कारण नहीं होता, क्योंकि द्वितीयक्षणवृत्ति अग्नि के ऊर्ध्वज्वलनादि कर्म में ही वेग की कारणता होती है आद्यज्वलनादि में नहीं। प्रयत्न को भी द्विविध उपर्युक्त कर्म के प्रति कारण नहीं माना जा सकता। क्योंकि लोक में प्रयत्न के बिना ही दीपशिखा के ऊर्ध्वज्वलन एवं वायु के तिर्यक् गमन होते हैं— यह सर्वलोक को अनुभवसिद्ध है। तद्वत् नोदन एवम् अभिघातस्वरूप संयोगविशेष

---

१. प्र० पा० भा०, पृ० २४४.

२. वै० सू० ५।२।१३.

एवमेव वायुगतं तिर्यक्पवनम्, तथाऽणूनां पार्थिवादिपरमाणूनां मनसश्च यदाद्यं सर्गाद्यकालीनं कर्म–इतीमानि कर्माण्यदृष्टकारितानीत्यर्थः। न दृष्टमदृष्टं पुण्यपापरूपमिति यावत्। सर्गाद्यकालीनमग्न्यादेरूर्ध्वज्वलनादिकमदृष्टवदात्मसंयोगासमवायिकारणकमित्यर्थः। "इतरेषां ज्वलनपवनकर्मणां वेगासमवायिकारणकत्वमेव मन्तुमुचितम्, दृष्टे कारणे सत्यदृष्टकल्पनानवकाशात्"[1] इति शङ्करमिश्रैरुक्तत्वात्।

अत्राद्यमित्यनेन सर्गाद्यकालीनमिति ग्रहणं सुस्पष्टप्रतीत्यर्थम्। यथा सर्वदा स्वप्रकाशस्याप्यात्मनः "अत्राऽयं पुरुषः स्वयंज्योतिः"[2] इति भगवती

---

को भी उपर्युक्त द्विविध कर्म के प्रति कारण नहीं माना जा सकता। उपर्युक्त द्विविध संयोग को विभागजविभाग मात्र के प्रति कारण माना जाता है। उपर्युक्त क्रियाहेतुओं के अवशिष्ट धर्म एवम् अधर्म को ही उपर्युक्त द्विविध कार्य के प्रति कारण माना जाता है। इसे सुस्पष्ट रूप से महर्षि कणाद ने कहा है— "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम्।"

इसका अर्थ यह है— अग्नि के ऊर्ध्वदेशप्राप्ति के अनुकूल ऊर्ध्वज्वलन के प्रति, वायु के तिर्यक् गमन के प्रति, पार्थिवादिचतुर्विध परमाणुओं एवं मन के सर्गाद्यकालिक कर्म के प्रति अदृष्ट की कारणता होती है। न दृष्टम्=अदृष्टम् - इस व्युत्पत्ति के आधार पर धर्म एवम् अधर्म को अदृष्ट शब्द से कहा जाता है। एवञ्च फलितार्थ कथन प्राप्त होता है— सर्ग के आदिकाल (प्रथमक्षण) में अग्नि के ऊर्ध्वज्वलन एवम् वायु के तिर्यक्गमन के प्रति अदृष्टवदात्मसंयोग की असमवायिकारणता होती है। "तद्भिन्नके ऊर्ध्वज्वलन एवम् तिर्यक् गमन के प्रति वेग की ही असमवायिकारणता होती है। — ऐसा मानना समुचित है। दृष्टकारण के रहते अदृष्ट को कारण रूप से कल्पना करना अनुचित होता है" ऐसा शंकरमिश्र का विवेचन आदरणीय है।

"अग्नेरूर्ध्वज्वलनम्........" इस कणादसूत्र में आद्यपद से आद्यकर्म से सर्गाद्यकालिक कर्म को गृहीत करना सुस्पष्ट प्रतीति के उद्देश्य से समुचित है। यथा—आत्मा के सर्वदा स्वप्रकाश का सिद्धान्त मानने वाले श्रुति के वाक्य— "अत्रायं पुरुषः स्वयंज्योतिः" में अत्र पद का उल्लेख किया गया है। इसका प्रकरणानुसार अर्थ है। स्वप्न (अवस्थाविशेष) में पुरुष स्वयंज्योति है। यह कथन

---

१. वै० सू० उप० ५।२।१३.
२. बृ० उ० ४।३।९.

श्रुतिरत्रेत्यवस्थाविशेषे स्वप्ने आत्मनः स्वप्रकाशत्वं यत् प्रतिपादितवती तदात्मप्रकाशस्य सुस्पष्टप्रतीत्यर्थम्। तद्यथा–जाग्रदवस्थायां सूर्यप्रकाशेन व्यवहारः प्रवर्तते। अस्तं गते च सूर्ये रात्रौ चन्द्रमसा, प्रदीपेन, अग्निना वा लोका व्यवहरन्ति। उपरतेषु प्रदीपाऽग्निचन्द्रेष्वन्धकारे वाग्ज्योतिषा व्यवहारः प्रचलति। यदा सुप्तः पुरुषः स्वप्नं पश्यति तदा तदानीन्तनानां स्वाप्निकपदार्थानां प्रकाशने न सूर्यो न चन्द्रमा न चाग्निर्नापि वाग्ज्योतिः प्रभवति, तेषां सर्वेषां तत्रोपरतत्वात्। उक्तं च शङ्करभगवत्पादाचार्यैः– "वैलक्षण्यात् स्वप्नदर्शनस्य जागरिते हीन्द्रियबुद्धिमनआलोकादि–व्यापार–संकीर्णमात्मज्योतिः। इह स्वप्ने इन्द्रियाभावात् तदनुग्राहकादित्याद्यालोकाभावाच्च विविक्तं केवलं भवति"[१] इति। तस्मात् सर्वेषु प्रदेशेष्वग्नेरूर्ध्वज्वलने वायोस्तिर्यक्पवने चादृष्टवदात्मसंयोग एवासमवायिकारणमिति सिद्धम्। अतः सर्वदेशेष्वात्मनोऽवस्थानमपरिहार्यम्।

ननु भवत्वग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं चादृष्टकारितम्। न

---

आत्मप्रकाश की सुस्पष्ट प्रतिपत्त्यर्थ है। तद्यथा— जाग्रद् अवस्था में सूर्यप्रकाश से व्यवहार होता है। सूर्यास्त होने पर रात्रि में चन्द्रमा से प्रदीप से अथवा अग्निप्रकाश से लोकव्यवहार चलता है। प्रदीप, अग्नि एवं चन्द्रप्रकाश के उपरत होने पर शब्दप्रकाश (वाग्ज्योति) से व्यवहार चलता है। जब सुप्त पुरुष स्वप्न देखता है तब उस समय के स्वाप्निक पदार्थों के प्रकाशन में न सूर्य, न चन्द्र, न अग्नि और न वाग्ज्योति (शब्दप्रकाश) समर्थ है, क्योंकि वह सभी प्रकाश वहाँ उपरत हो चुके हैं। इसकी विशद व्याख्या आचार्यशंकर भगवत्पाद ने की है— "स्वप्नदर्शन में वैलक्षण्य पाया जाता है। जागरित अवस्था में इन्द्रिय, बुद्धि, मनस्, लोक, आलोक आदि के व्यापार से संकीर्ण (आप्लुत) आत्मज्योति रहती है। स्वप्नावस्था में इन्द्रिय के अभाव में उसके अनुग्राहक आदित्यप्रभृति आलोक के अभाव में विविक्त आत्म ज्योति स्वयं (केवल) विराजमान रहती है। अतः सभी प्रदेशों में अग्नि के ऊर्ध्वज्वलन में तथा वायु के तिर्यक् गमन में अदृष्टवदात्मसंयोग ही असमवायिकारण है यह प्रमाणित होता है। अतः सर्वदेश में आत्मा की विद्यमानता अपरिहार्य है।

यह जिज्ञासा उदित होती है कि अग्नि के ऊर्ध्वज्वलन में तथा वायु के तिर्यक् गमन में अदृष्ट की कारणता मान्य है। किन्तु इतने मात्र से आत्मा की विभुता सिद्ध नहीं होती। जहां तक अदृष्ट के आश्रय द्रव्य का विचार है तो

---

१. बृ० उ० शा० भा० ४।३।९.

चैतावताऽऽत्मनो विभुत्वं सिद्ध्यति, अग्निवाय्वोरेवादृष्टाधिकरणत्वादिति चेन्न, अदृष्टं तावदात्मन एव गुणः, नान्येषाम्। तदुक्तम्–

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः[१]।।इति।

तस्माद्यत्र यत्रादृष्टनिमित्तेन कार्याणि भवन्ति, तत्र सर्वत्रादृष्टाधिकरणस्यात्मन उपस्थितिरपेक्षत इति सर्वमूर्तद्रव्यसंयोगित्वरूपं व्यापकत्वम्, अत एव तस्य परममहत्परिमाणत्वं सिद्धम्।

एवमेवात्ममनःसंयोगरूपाऽसमवायिकारणेन सुखादीनामुत्पत्तिरिति संयोगोऽप्यात्मनिष्ठो गुणः। संयोगस्य नश्वरत्वाद् विभागोप्यात्मगुण एव। तदुक्तं प्रशस्तपादाचार्येण–"सन्निकर्षजत्वात् सुखादीनां संयोगः। तद्विनाशकत्वाद्विभागः"[२] इति।

तदेवं वैशेषिकनये बुद्धि–सुख–दुःखेच्छा–द्वेष–प्रयत्न–धर्माधर्म–संस्काराणां विशेषगुणत्वेन स्वीकारात्, गुणानां च द्रव्याश्रयत्वनियमात्, उक्तानां च गुणानां

---

आश्रयरूप से अग्नि एवं वायु को ही अदृष्ट का अधिकरण माना जा सकता है। किन्तु यह कथन सर्वथा असमीचीन है। अदृष्ट (धर्म एवम् अधर्म) तो आत्मा का ही गुण है, अन्य का नहीं। उदयनाचार्य जी ने सुस्पष्ट कहा है—

संस्कारः पुंस एवेष्टः............विशेषाः पाकजादयः॥१॥

अतः जहाँ जहाँ अदृष्टनिमित्तक कार्य होते हैं वहाँ सर्वत्र अदृष्ट के अधिकरण आत्मा की उपस्थिति अपेक्षित होती है। अतः सर्वमूर्तद्रव्य-संयोगित्व-लक्षण व्यापकत्व आत्मा में सिद्ध होता है। तद्वत् आत्मा का परममहत्परिमाण होना भी सिद्ध होता है।

उक्त रीति से आत्ममनःसंयोग को सुख-दुख की उत्पत्ति के प्रति असमवायिकारण माना जाता है। यह संयोग भी आत्मा में रहने वाला गुण है। यतश्च संयोग नश्वर (विनाशी) है अतः विभाग (संयोगनाशक गुण) भी आत्मा का ही गुण है। आचार्य प्रशस्तपाद ने विलक्षण रीति से इस स्थिति को प्रतिपादित किया है— "सन्निकर्ष से उत्पन्न होने के कारण सुखादि का संयोग होता है एवं तद्विनाशक होने

---

१. न्या० कु० १।११.
२. प्र० पा० भा०, पृ० २१५.

पृथिव्याद्यष्टद्रव्येषु शरीरेन्द्रियादिषु चोपलभ्यमानत्वेनाऽनुभवाभावात् तेभ्यो भिन्नं नवमं द्रव्यमस्तीति प्रतिपाद्य तदेवात्मेति व्यवस्थापितम्। अस्मिन्नात्मनि विशेषगुणातिरिक्तत्वेन संख्या-परिमाण-पृथक्त्व-संयोग-विभागरूपाः सामान्यगुणाश्च वर्तन्त इति प्रतिपादितत्वादयमात्मा चतुर्दशगुणाधारभूत इत्यवगम्यते। वैशेषिका लोकव्यवस्थानुसारेण शास्त्रप्रामाण्याच्चात्मनानात्वं स्वीकृतवन्तः। एते चात्मानः स्वभावतो जडरूपाः। यदा तु पुरीतन्नाडिबहिर्देशावच्छिन्नेन मनसा सह संयोगो भवति, तदा ज्ञानं गुण उत्पद्यत इति स्वीकाराज्ज्ञानं नात्मनः स्वरूपं न वा स्वाभाविको गुणः, किन्त्वागमापायी धर्मः। अत्र हि प्रयत्नस्य धर्माधर्माणां चात्मैवाश्रय इति स्वीकारादयमेव कर्ता भोक्ता चेत्यवगम्यत इति।

---

से विभाग होता है। ये संयोग एवं विभाग आत्मनिष्ठ धर्म है।

वैशेषिक सिद्धान्त में अष्टद्रव्यातिरिक्त नवम द्रव्य की सिद्धि की गई है। यह नवम द्रव्य आत्मा है। उपर्युक्त विवेचनाओं से कतिपय आधारभूत तथ्यों की जानकारी प्राप्त होती है। तद्यथा— बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म एवं संस्कार, विशेषगुण के रूप में स्वीकार्य हैं। गुणमात्र, द्रव्य में आश्रित होते हैं। बुद्धिप्रभृति संस्कारान्त गुणों के पृथिवी-प्रभृति आठ द्रव्यों में, शरीर अथवा इन्द्रिय में उपलब्धता की अनुभूति नहीं होती है। अतः इन गुणों के आश्रय (अधिकरण) द्रव्य (अतिरिक्त) की सिद्धि होती है।

इस आत्मा (द्रव्य) में उपर्युक्त बुद्धि-प्रभृति गुण रहते हैं। तदतिरिक्त सामान्य गुण-संख्या, परिमाण, पृथत्त्व, संयोग एवं विभाग भी रहते हैं। यह सयुक्ति प्रतिपादित (वैशेषिक दर्शन में) किया गया है। इस प्रकार नवम द्रव्य रूप से सिद्ध आत्मा १४ गुणों का आश्रय है— यह सुस्पष्ट होता है। वैशेषिक आचार्यों ने लोकव्यवस्था के अनुरोध एवं शास्त्रप्रमाण्य के आधार पर आत्मनानात्व का अङ्गीकार किया है। नाना जीव स्वभावतः जड होते हैं। जब पुरीतत् नाडी के बहिर्देश में उपस्थित मनस् के साथ आत्मा का संयोग होता है, तब आत्मा में ज्ञान-गुण उत्पन्न होता है ऐसा वैशेषिकों को स्वीकार्य है। अतः ज्ञान, न तो आत्मा का स्वरूप है और न ही स्वाभाविक गुण है किन्तु आगमापायी (उत्पत्ति-विनाशशील) धर्म है। इस सिद्धान्त में प्रयत्न, धर्म एवम् अधर्म का आश्रय आत्मा ही है—ऐसा स्वीकार्य होने से आत्मा ही कर्ता एवं भोक्ता है-यह मान्य है।

## सांख्ययोगदर्शनयोः पुरुषस्वरूपम्

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्।।
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति[१]।।

इत्यादिभगवदुक्त्यनुसारेण सांख्ययोगदर्शनयोः परस्परं पूरकत्वान्नोभे अत्यन्तं भिन्ने दर्शने। अत एव पञ्चविंशतितत्त्वविषये नास्ति वैमत्यमुभयोः[२]। योगदर्शने पुरुषविशेष ईश्वर इति स्वीकारात् तत्र वैमत्येऽपि सामान्यपुरुषस्तु सांख्याभिमत एव योगस्याप्यभिमत इति तत्स्वरूपं तावद्विचार्यते।

तत्र तावदीश्वरकृष्णेन–"न प्रकृतिर्न विकृतिः पुरुषः"[३] इत्यस्यां कारिकायां पुरुषो न कस्माच्चिदुत्पद्यते नापि पुरुषात् किञ्चिदुत्पद्यत इति तस्य कार्यकारणोभयभावशून्यत्वं प्रतिपाद्य,

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्[४]।।

---

## सांख्ययोग-दर्शनों में पुरुष का स्वरूप

सांख्ययोगौ पृथग्बालाः.........यः पश्यति स पश्यति।।२।।

उपर्युक्त (श्रीभगवान् की) उक्ति के अनुसार सांख्य एवं योगदर्शन एक दूसरे के पूरक होने से ये दोनों दर्शन अत्यन्त भिन्न नहीं हैं। अतएव २५ तत्त्वों के विषय में इनकी विमति नहीं है। योगदर्शन में पुरुषविशेष ईश्वर है ऐसा स्वीकार किया गया है अतः ईश्वर के सन्दर्भ में विमति होने पर भी सामान्य पुरुष तो जो सांख्यों को अभिमत है वही योग को भी अभिमत है। अतः पुरुषस्वरूप के सन्दर्भ में सम्प्रति विचार किया जा रहा है।

आचार्य ईश्वरकृष्ण ने "न प्रकृतिर्न विकृतिः पुरुषः" इस कारिकांश से पुरुष किसी से उत्पन्न नहीं होता तथा पुरुष से भी कोई उत्पन्न नहीं होता। अतः वह कार्यता एवं कारणता उभयवर्जित है। ऐसा प्रतिपादित किया है। तदनन्तर उन्होंने त्रिगुणमविवेकि

---

२. भ० गी० ५।४–५.

१. सांख्या निरीश्वराः केचित् केचिदीश्वरदेवताः।
सर्वेषामपि तेषां स्यात् तत्त्वानां पञ्चविंशतिः।। (षड्० सं०, ३३ श्लो०)

२. सां० का० ३. ३. सां० का ११.

इत्यनया कारिकया त्रिगुणत्वादिधर्मैर्व्यक्तप्रधानयोः साधर्म्यं प्रतिपाद्य "तद्विपरीतः पुमान्" इति ताभ्यामस्य वैधर्म्यं प्रतिपादितम्। तद्यथा–त्रयो गुणा यत्र तत् त्रिगुणम्, त्रिगुणाधारमित्यर्थः। यद्यपि सांख्यदर्शने त्रिगुणशब्देन सत्त्वादीनामेव बोधः, अथाप्यत्र तद्धर्मभूतानां सुखदुःखमोहानां ग्रहणमिति वाचस्पतिमिश्रा अभिप्रयन्ति[१]। यतो हि सत्त्वादिगुणत्रयाधारत्वस्य व्यक्ते सम्भवेऽपि प्रधाने तदसम्भवात्, तस्य सत्त्वादिसाम्यावस्थारूपत्वात्[२], अतोऽत्राव्याप्तिर्मा भूदिति मिश्राणामाशयः। सुखदुःखमोहानामाधारत्वं तु व्यक्तप्रधानयोरुभयोरपि सम्भवतीति तयोस्त्रिगुणत्वं साधर्म्यम्। पुरुषस्य च तद्विपरीतत्वात् तस्यात्रिगुणत्वम्, अर्थात् सांख्याभिमतः पुरुषोऽत्रिगुणः, निर्गुण इत्यर्थः। तस्य निर्गुणत्वे "साक्षी चेता केवलो निर्गुणश्च"[३], "असङ्गो ह्ययं पुरुषः"[४] इत्यादिश्रुतयोऽपि प्रमाणम्।

---

विषयः.....तथा च पुमान्।।१।। इस कारिका द्वारा व्यक्त (महदादि) तथा प्रधान इन दोनों के साधर्म्य (त्रिगुणत्व, अविवेकित्व, विषयत्व, सामान्यत्व, अचेतनत्व, प्रसवधर्मित्व का प्रतिपादन कर "तद्विपरीतः पुमान्" इस कथन से पुरुष में व्यक्त एवम् प्रधान के वैधर्म्य का प्रतिपादन किया है। तद्यथा— त्रिगुणम् की व्युत्पत्ति है— त्रयः गुणा यत्र तत् त्रिगुणम्। बहुव्रीहिसमास होने से त्रिगुण का अर्थ होता है— तीन गुणों का आश्रय अथवा आधार। यद्यपि सांख्य दर्शन में त्रिगुणशब्द से सत्त्व, रजस् एवम् तमस् का ही बोध होता है तथापि इस कारिका में उन गुणों के धर्म-सुख, दुःख, एवं मोह का ग्रहण होता है–ऐसा आचार्य वाचस्पति मिश्र ने अभिप्राय व्यक्त किया है। इसका हेतु यह है— सत्त्व प्रभृति तीन गुणों की आधारता व्यक्त में तो सम्भव है किन्तु प्रधान में नहीं क्योंकि प्रधान तो तीन गुणों की साम्यावस्था है, आधार नहीं। अतः प्रसिद्ध अर्थ लेने से प्रधान में अव्याप्ति न हो—यह आचार्य मिश्र का आशय है। सुखादि अर्थ का स्वीकार करने से उनका आश्रय व्यक्त एवं प्रधान दोनों होते हैं अतः इन दोनों का साधर्म्य त्रिगुणत्व सुघटित होता है। पुरुष उन दोनों से विपरीत होने के कारण अत्रिगुण है। एतावता सांख्य-सम्मत पुरुष अत्रिगुण अर्थात् निर्गुण है। इसके निर्गुण होने में निम्नाङ्कित श्रुति वचन प्रमाण हैं—

---

१. सां० त० कौ०, पृ० ११७

२. एतेषां या समावस्था सा प्रकृतिः किलोच्यते।
प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका।। (षड्० सं०, ३४ श्लो०)

३. श्वे० उ० ६।११.

४. बृ० उ० ४।३।१५-१६.

विवेको न विद्यते यस्य तदविवेकि। अत्राविवेकित्वं नाम भिन्नत्वम्। नहि प्रधानं स्वस्माद् भिद्यते, स्वस्मात् स्वस्य भेदाऽभावात्। न व्यक्तमपि प्रधानाद् भिद्यते, व्यक्तस्य प्रधानकार्यत्वात्। कार्यकारणयोरत्यन्तभेदाऽसम्भवः। अत उभावप्यविवेकिनावुच्येते। पुरुषस्तु ताभ्यां भिन्न इति स विवेकी[१]।

विसिनोति विषयिणमनुबध्नातीति विषयः, ज्ञानग्राह्य इत्यर्थः, व्यक्तप्रधानयोर्ज्ञानभिन्नत्वात्। अत एव तौ ज्ञानग्राह्याविति तयोर्विषयत्वम्। पुरुषस्तु "चिन्मात्रं सर्वगं नित्यम्"[२], "चिन्मात्रमेव चिन्मात्रम्"[३] इत्याद्युपनिषन्मन्त्राधारेण ज्ञानस्वरूप इति न स ज्ञानविषयः। अत एव पुरुषस्याविषयत्वम्।

---

साक्षी चेता केवलो निर्गुणश्च । एवम् -
असङ्गो ह्ययं पुरुषः । इत्यादि

प्रधान एवं व्यक्त का दूसरा साधर्म्य है—अविवेकित्व। कारिकास्थ अविवेकि-शब्द की व्युत्पत्ति है— विवेको न विद्यते यस्य तद् अविवेकि। इस त्रिपदबहुव्रीहि के आधार पर विवेकित्व का अर्थ है भिन्नत्व। प्रधान स्व से भिन्न नहीं है क्योंकि स्व का स्वयं से भेद नहीं होता। व्यक्त भी प्रधान से भिन्न नहीं है क्योंकि व्यक्त, प्रधान का कार्य है। कार्य एवं कारण में अत्यन्त भेद सम्भव नहीं है। अतः प्रधान एवम् व्यक्त–ये दोनों अविवेकी हैं। पुरुष इन दोनों से भिन्न विवेकी है। कारिकास्थ तृतीयपद है - विषयः। विसिनोति विषयिणमनुबध्नाति–इस व्युत्पत्ति से लभ्य विषयशब्दार्थ है–ज्ञानग्राह्य। व्यक्त एवं प्रधान ये दोनों ज्ञान से भिन्न हैं अतः ज्ञान से ग्राह्य होने से ये विषय कहलाते हैं। पुरुष तो निम्नाङ्कित उपनिषद्-मन्त्र-प्रामाण्य से ज्ञानस्वरूप है न कि ज्ञानविषय–"चिन्मात्रं सर्वगं नित्यम्" तथा चिन्मात्रमेव चिन्मात्रम्" इत्यादि। अतः पुरुष अविषय है।

चौथापद है सामान्यम्। अनेकपुरुषों से गृह्यमाण होना सामान्य कहलाता है। यद्वत् घट, अनेक पुरुष के ज्ञान का विषय होता है तद्वत् व्यक्त एवं प्रधान भी अनेक पुरुष के ज्ञान का विषय होते हैं अतः ये सामान्य कहलाते हैं। यतश्च पुरुष ज्ञानस्वरूप है अतः वह असामान्य है।

---

१. "न प्रकृतिर्न विकृतिः पुरुषः" (सां० का० ३)

२. व० उ० २।२१.

३. ते० बि० उ० २।२४.

सामान्यत्वं नामानेकैः पुरुषैर्गृह्यमाणत्वम्। यथैकस्यैव घटस्यानेक-पुरुषीयज्ञानविषयत्वम्, तथा व्यक्तप्रधानयोरप्यनेकपुरुषीयज्ञानविषयत्वात् तयोः सामान्यत्वम्। पुरुषस्य च ज्ञानरूपत्वात् तस्यासामान्यत्वम्।

अचेतनं नाम जडस्वरूपम्। सांख्यसिद्धान्ते व्यक्तप्रधानयोर्जडत्वात् तयोरचेतनत्वम्। पुरुषस्य चिद्रूपत्वात् तस्य चेतनत्वम्।

प्रसवधर्मि–प्रसवो नामाऽन्याविर्भावहेतुत्वरूपः परिणामः, स चासौ धर्मश्चेति प्रसवधर्मः, सः अस्यास्तीति प्रसवधर्मि, सर्वदा परिणामशालि इत्यर्थः। व्यक्तप्रधाने न कदापि सरूपविरूपपरिणामाभ्यां विरमेते इति तयोः प्रसवधर्मित्वम्। पुरुषस्य चाविकारित्वात् तस्याप्रसवधर्मित्वम्[१], पुरुषः सरूपविरूपपरिणामरहित इति यावत्। एवं व्यक्तप्रधानयोर्भिन्नधर्मवत्त्वं पुरुषस्येति सिद्धम्।

नन्वहेतुमत्त्वादीनां प्रधानधर्माणाम्, अनेकत्वस्य च व्यक्तधर्मस्य पुरुषे विद्यमानत्वात् कथं व्यक्तप्रधानाभ्यां विपरीतः पुरुष इत्युच्यत इति चेत्, सत्यम्,

---

पाँचवाँ पद है–अचेतनम्। इसका अर्थ है जडस्वरूप। सांख्यसिद्धान्त में व्यक्त एवं प्रधान जड होने से अचेतन कहलाते हैं। इसके विपरीत पुरुष चिद्रूप है अत: वह चेतऩ है।

छठा पद है— प्रसवधर्मि। प्रसव का अर्थ है परिणाम। अर्थात् अन्य रूप में अविर्भाव का होना। ''प्रसवश्चासौ धर्मश्च'' यह कर्मधारय समास है। तत्पश्चात् मत्वर्थीय प्रत्यय होता है–प्रसवधर्मः अस्ति अस्य= इति प्रसवधर्मि। इसका अर्थ होता है–सदा परिणामशाली। व्यक्त एवम् प्रधान कभी भी सरूप एवं विरूप परिणाम से विराम नहीं लेते। अत: इन दोनों का साधर्म्य है प्रसवधर्मित्व। यतश्च पुरुष अविकारी है अत: वह अप्रसवधर्मी है। अर्थात् पुरुष का न तो सरूपपरिणाम होता है और न विरूपपरिणाम। इस प्रकार व्यक्त एवं प्रधान से भिन्न धर्मवाला पुरुष है।

अब प्रश्न उदित होता है— पुरुष में प्रधान के अहेतुमत्त्व आदि धर्म एवं व्यक्त का अनेकत्व धर्म विद्यमान रहते हैं—ऐसी परिस्थिति में पुरुष को सर्वथा व्यक्त एवं प्रधान से विपरीत कहना संगत नहीं है। इसको अर्द्धस्वीकार करने हेतु ''सत्यम् कहा गया है। धर्म की विद्यमानता के कारण ही कारिका में ''तथा च'' पदों का उल्लेख

---

१. सां० त० कौ०, पृ० ११९-१२१.

अत एव 'तथा च' इत्यत्रोक्तम्। चकारोऽत्राप्यर्थकः। अतोऽहेतुमत्त्वादिप्रधानधर्मस्य, अनेकत्वस्य च व्यक्तधर्मस्य पुरुषे विद्यमानत्वं संगच्छते। तस्मात् त्रिगुणत्वादिधर्मैर्व्यक्तप्रधानयोः पुरुषस्य वैधर्म्येऽप्यहेतु-मत्त्व-नित्यत्व-व्यापकत्व-निष्क्रियत्वानाश्रितत्वालिङ्गित्व-निरवयवत्व-स्वतन्त्रत्वरूपा ये व्यक्तस्य विपरीतधर्माः प्रधानस्योक्तास्ते पुरुषस्यापि सम्भवन्तीति तैः पुरुषप्रधानयोः साधर्म्यम्। यथा व्यक्तपदार्था अनेके, तथा पुरुषाणामप्यनेकत्वात् पुरुषव्यक्तयोरनेकत्वं साधर्म्यम्। एवं पुरुषे त्रिगुणादिविपर्यासादेव तस्य साक्षित्वादिकमपि सिद्ध्यति। तदुक्तमीश्वरकृष्णेन–

तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च[1]।।इति।

अस्यायमर्थः– पुरुषस्याचेतनविपर्यासात्, अर्थात् तस्य चेतनत्वात् साक्षित्वम्, लोकेऽपि चेतनानामेव साक्षित्वदर्शनात्। यथाऽर्थिप्रत्यर्थिनौ स्वविवादविषयं साक्षिणे दर्शयतः, तथा प्रकृतिरपि स्वरचितविषयं पुरुषाय प्रदर्शयतीति पुरुषः साक्षीत्युच्यते। "साक्षी चेता केवलो निर्गुणश्च"[2] इति श्रुतिरपि

---

किया गया है।"च" का अर्थ है—अपि (भी)। एवंच प्रधान का अहेतुमत्त्व प्रभृति धर्म एवं व्यक्त का अनेकत्व धर्म भी पुरुष में रहते हैं— यह असंगत नहीं है। अतः त्रिगुणत्व-प्रभृति पूर्वोक्त धर्मों को लेकर व्यक्त एवं प्रधान का वैधर्म्य पुरुष में रहता है। अहेतुमत्त्व, नित्यत्व, व्यापकत्व, निष्क्रियत्व, अनाश्रितत्व, अलिङ्गित्व, निरवयवत्व एवम् स्वतन्त्रत्व–व्यक्त के विपरीत धर्म, प्रधान के बताये गये हैं। ये सभी धर्म पुरुष के भी समान हैं–अतः इनको लेकर पुरुष एवम् प्रधान में साधर्म्य है। व्यक्त के समान पुरुष भी अनेक होते हैं अतः पुरुष एवं व्यक्त—इन दोनों का अनेकत्व समान धर्म है। तद्वत् पुरुष में त्रिगुणादि के विपर्यास से ही उसका साक्षित्वप्रभृति वैशिष्ट्य सिद्ध होता है। आर्या के माध्यम से आचार्य ईश्वरकृष्ण ने इसे प्रतिपादित किया है–

तस्माच्च विपर्यासात् .......... द्रष्टृत्वमकर्तृभावश्च।।१।।

इसका अर्थ है— पुरुष में अचेतन का विपर्यास है। अर्थात् पुरुष में चेतनता होने से साक्षित्व है। लोक में भी चेतनों का ही साक्षित्व देखा जाता है। जैसे अर्थी एवं प्रत्यर्थी (वादी एवं प्रतिवादी) अपने विवादित विषय को साक्षि-समक्ष उपस्थापित

---

१. सां० का० १९.
२. श्वे० उ० ६।११.

चेतनस्यैव साक्षित्वं प्रतिपादयति। एवमेवाविषयत्वात्तस्य द्रष्टृत्वमपि। "साक्षाद् द्रष्टरि संज्ञायाम्"[१] इति सूत्रेण भगवान् पाणिनिः साक्षिण एव द्रष्टृत्वमपि व्यवस्थापितवान्। योगदर्शनेऽपि–"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः"[२] "द्रष्टृदृश्ययोः संयोगो हेयहेतुः"[३] इत्यादिसूत्रभाष्ये व्यासेन पुरुषस्य बुद्ध्यादिविलक्षणत्वं तस्य द्रष्टृत्वं च व्यवस्थापितम्। पुरुषस्य साक्षित्वे द्रष्टृत्वे च "पुरुषः साक्षी, चेतनत्वात्", "पुरुषो द्रष्टा, अविषयत्वात्" इत्याद्यनुमानमप्यूह्यम्। सांख्यदर्शने आत्यन्तिको दुःखत्रयाभावः कैवल्यमिति स्वीकारात्, पुरुषस्य च स्वभावतोऽत्रिगुणत्वात्तस्य कैवल्यम्। पुरुषः कैवल्ययोगी, अत्रिगुणत्वादित्यनुमानमपि। एवमत्रैगुण्याच्च तस्य माध्यस्थ्यम्। सुखदुःखेषु यो रागद्वेषवान्न भवति स मध्यस्थ[४] इत्युच्यते। पुरुषस्य

करते हैं तद्वत् प्रकृति भी स्वरचित विषय को पुरुष के समक्ष उपस्थापित करती है अतः पुरुष साक्षी कहलाता है। "साक्षी चेता केवलो निर्गुणश्च" यह श्रुतिवाक्य भी चेतन को साक्षी प्रतिपादित करता है। तद्वत् अविषय होने से पुरुष में द्रष्टृत्व भी प्रतिपादित किया जाता है। भगवान् पाणिनि ने "साक्षाद् द्रष्टरि संज्ञायाम्" सूत्र के माध्यम से साक्षी को द्रष्टा प्रतिपादित किया है। योगदर्शन में भी "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" एवम् "द्रष्टृदृश्ययोः संयोगो हेयहेतुः" इत्यादि योगसूत्रों के भाष्य में भगवान् व्यास ने पुरुष को बुद्धिप्रभृति से विलक्षण बताते हुए उसे द्रष्टा भी प्रतिपादित किया है। पुरुष के साक्षी तथा द्रष्टा होने में निम्नाङ्कित अनुमान प्रमाण भी है—"पुरुषः साक्षी चेतनत्वात्, पुरुषो द्रष्टा अविषयत्वात् इत्यादि। सांख्यदर्शन में त्रिविध दुःख के आत्यन्तिक अभाव को कैवल्य प्रतिपादित किया गया है। स्वभावतः पुरुष अत्रिगुण है अतः उसका कैवल्य समुचित है। अनुमान-प्रमाण, भी पुरुष के कैवल्य में निम्नाङ्कित है—

पुरुषः कैवल्ययोगी अत्रिगुणत्वात्। यतश्च पुरुष अत्रिगुण है अतः उसमें मध्यस्थता है। जो सुख-दुःखों की स्थिति में राग अथवा द्वेष के अधीन नहीं होता उसे मध्यस्थ कहा जाता है। पुरुष में सुखदुःख आदि की स्वाभाविक स्थिति नहीं है अतः उसकी मध्यस्थता युक्तिसंगत है। आचार्य वाचस्पतिमिश्र ने पुरुष के औदासीन्य

१. पा० सू० ५।२।९१.

२. यो० सू० २।२०.

३. यो० सू० २।१७.

४. सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते।। (भ० गी० ६।९)

सुखादिराहित्यात् स रागद्वेषरहित इतिं तस्य माध्यस्थ्यम्। "तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति चाख्यायते"[१] इति वाचस्पतिमिश्रेण पुरुषस्यौदासीन्यमपि प्रतिपादितम्। "वादिप्रतिवादिनोः समो मध्यस्थः, सर्वत्रोपेक्षावानुदासीनः"[२] इत्युदासीनमध्यस्थयोर्भेदेऽप्यत्र रागद्वेषराहित्यांशमात्रादुभयोरभेद उक्तो मिश्रैः। एवमेव पुरुषस्य विवेकित्वादप्रसवधर्मित्वाच्च तस्याकर्तृत्वमपि।

नन्वेवं चेतनस्याकर्तृत्वेऽचेतनस्य सुतरां कर्तृत्वाभाव इति 'चेतनोऽहं चिकीर्षन् करोमि' इत्यादिना चेतनत्वकर्तृत्वयोः सामानाधिकरण्यस्य लोकेऽनुभूयमानस्य का गतिरिति चेन्न, अचेतनं हि बुद्ध्यादिकं चेतनसन्निधानमात्रेण चेतनवदिव भूत्वा करोतीति बुद्ध्यादेरेव कर्तृत्वम्। पुरुषे प्रतीयमानं कर्तृत्वं त्वौपाधिकमित्यवगन्तव्यम्। अतो वस्तुतः पुरुषस्त्वकर्तैव। तदुक्तमीश्वरकृष्णेन–

---

को भी प्रतिपादित किया है। तद्यथा— 'तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति चाख्यायते।'' सुख एवं दुःख उभयवर्जित पुरुष को मध्यस्थ होने के साथ उदासीन भी प्रतिपादित किया गया है। "वादी एवं प्रतिवादी इन दोनों के प्रति जो सम हो वह मध्यस्थ कहलाता है एवम् सर्वत्र उपेक्षाबुद्धि रखने वाला उदासीन कहलाता है।" इस प्रकार यद्यपि उदासीन एवम् मध्यस्थ में भेद सुस्पष्ट है तथापि रागद्वेष का अभाव होना दोनों में समान है। रागद्वेषराहित्य को लेकर ही श्रीमिश्र मे इन दोनों में अभेद प्रतिपादित किया है। तद्वत् पुरुष यतः विवेकी होने के साथ अप्रसवधर्मी भी है अतः उसका अकर्तृत्व भी युक्तिसंगत है।

इस प्रसङ्ग में एक जिज्ञासा उदित होती है कि चेतन को अकर्ता मानने से तथा अचेतन में स्वाभाविक कर्तृत्वाभाव होने से लोक में चेतनत्व एवं कर्तृत्व के सामानाधिकरण्य की निम्नाङ्कित प्रतीति की उपपत्ति कैसे होगी? "चेतनोहं चिकीर्षन् करोमि।''

यह जिज्ञासा सांख्यसिद्धान्त को अनुपपन्न नहीं कर सकती। क्योंकि इसका समाधान है— अचेतन बुद्ध्यादि, चेतन-सान्निध्यमात्र से चेतनवत् भावित होकर व्यवहार करता है अतः बुद्ध्यादि की कर्तृता है। उपर्युक्त प्रतीति के आधार पर पुरुष में प्रतीयमान कर्तृत्व तो औपाधिक है, स्वाभाविक नहीं। अतः वास्तविक

---

१. सां० त० कौ०, पृ० १६९.

१. भ० गी० शं० व्या० ६।९.

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः[१]।।इति।

महर्षिणा कपिलेनापि–"उपरागात् कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात्[२] इति सूत्रेणायमेवाशयः प्रकटीकृतः।

तदेवं सांख्यपुरुषोऽत्रिगुणत्वविवेकित्वाविषयत्वासामान्यत्व-चेतनत्वाप्रसवधर्मित्वाहेतुमत्त्व-नित्यत्व-व्यापकत्व-साक्षित्व-केवलत्व-माध्यस्थत्वोदासीनत्व-द्रष्टृत्वाकर्तृत्वादिधर्मवानित्यवगम्यते। एतत् सांख्याचार्याभिमतमेव पुरुषस्वरूपम्

अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः।
अकर्ता निर्गुणः सूक्ष्म आत्मा कापिलदर्शने[३]।।

इति मणिभद्रसूरिणाऽप्यनूदितम्। सांख्यदर्शने व्यक्तप्रधानाभ्यां भिन्नः

---

रूप से पुरुष तो अकर्ता ही है। इस सिद्धान्त को ईश्वरकृष्ण ने अपनी आर्या से सुव्यक्त किया है—

"तस्मात् तत्संयोगादचेतनं.......भवत्युदासीनः।।१।।

महर्षि कपिल ने भी निम्नाङ्कित सूत्र से इस आशय को प्रगट किया है— "उपरागात् कर्तृत्वं चित्सान्निध्यात् चित्सान्निध्यात्।"

उपर्युक्त पुरुषस्वरूप विवेचन से यह विदित होता है कि सांख्यसम्मत पुरुष में निम्नाङ्कित धर्म को स्वीकृत किया जाता है— अत्रिगुणत्व, विवेकित्व, अविषयत्व, असामान्यत्व, चेतनत्व, अप्रसवधर्मित्व, अहेतुमत्त्व, नित्यत्व, व्यापकत्व, साक्षित्व, केवलत्व, मध्यस्थत्व, उदासीनत्व, द्रष्टृत्व एवम् अकर्तृत्व प्रभृति। सांख्याचार्यों द्वारा स्वीकृत पुरुष स्वरूप को अनुवाद के साथ संकलन श्रीमणिभद्रसूरि ने निम्नाङ्कित कारिका में किया है—

"अमूर्तश्चेतनो भोगी.................कापिलदर्शने।।"

सांख्यदर्शन में पुरुष को व्यक्त एवम् प्रधान से भिन्न कहा गया है। इस कथन से ही पुरुष का शरीर, इन्द्रिय, मनस् एवं बुद्धि से भी भिन्न होना प्रमाणित होता है

---

१. सां० का० २०.
२. सां० सू० १।१।६४.
३. षड्० सं०, पृ० ३५.

पुरुष इति कथनादेव तस्य शरीरेन्द्रियमनोबुद्धिभ्योऽपि व्यतिरिक्तत्वमवगन्तव्यम्, तेषां प्रकृतिकार्यत्वात्।

## पुरुषस्य स्वप्रकाशत्वम्

तदेवं सांख्ययोगदर्शने पुरुषः साक्षी द्रष्टा चेतनश्चेति स्वीकारात् तस्य चिद्रूपत्वम्। नैयायिक-वैशेषिक-प्राभाकरास्त्वात्मानं नित्यं विभुं प्रतिशरीरं भिन्नमिति स्वीकुर्वन्तोऽपि तस्य चिद्रूपत्वं नाङ्गीकुर्वन्ति, किन्तु तद्दर्शने आत्मा जडद्रव्यम्। मनसा संयोगे तत्र ज्ञानाख्यो गुण उत्पद्यत इति ज्ञानात्मनोर्गुणगुणिभावमङ्गीकुर्वन्ति ते। सांख्ययोगदर्शनयोः पुरुषस्य निर्गुणत्वस्वीकारान्नहि ज्ञानं पुरुषस्य गुणः, किन्तु ज्ञानरूप एवेति स्वीक्रियते। पुरुषस्य चिद्रूपत्वे "चिन्मात्रं सर्वगं नित्यम्"[१], "चिन्मात्रमेव चिन्मात्रमखण्डैकरसं परम्"[२] इत्याद्युपनिषन्मन्त्रौ एव प्रमाणभूतौ। "निर्गुणत्वान्न चिद्धर्मा"[३] इति महर्षिणा कपिलेनापि ज्ञानपुरुषयोर्गुणगुणिभावो निराकृतः।

---

क्योंकि शरीरादि को प्रकृति का कार्य माना जाता है एवं कार्य और कारण में तात्त्विक भेद नहीं माना जाता।

## पुरुष की स्वप्रकाशता

उपर्युक्त विवेचना से सुविदित होता है कि सांख्य एवं योग दर्शनों में पुरुष को साक्षी द्रष्टा एवं चेतन रूप से स्वीकार किया गया है अतः पुरुष चिद्रूप है। किन्तु नैयायिक, वैशेषिक एवम् प्रभाकर के अनुयायी मीमांसकगण, आत्मा को नित्य, विभु एवम् प्रतिशरीर में भिन्न मानते हुए भी उसकी चिद्रूपता को नहीं स्वीकारते हैं। प्रत्युत इनके दर्शनों में आत्मा को जडद्रव्य माना जाता है। मनस् इन्द्रिय के साथ संयोग होने पर ही वहाँ ज्ञानसंज्ञक गुण उत्पन्न होता है एतावता इन आचार्यों ने ज्ञान एवम् आत्मा में गुण-गुणिभाव का अङ्गीकार किया है। सांख्य एवं योग दर्शनों में पुरुष को निर्गुण रूप से स्वीकार किया गया है अतः ज्ञान, पुरुष का गुण नहीं है किन्तु पुरुष ज्ञानरूप ही है ऐसा स्वीकार्य है। पुरुष के चित्स्वरूप होने में निम्नाङ्कित उपनिषद्-वाक्यों की प्रमाणरूपता व्यवस्थित है—

"चिन्मात्रं सर्वगं नित्यम्।" तथा "चिन्मात्रमेव चिन्मात्रमखण्डैकरसं परम्।" इत्यादि।

---

१. व० उ० २।२१.
२. ते० बि० उ० २।२४.
३. सां० सू० १।१४६.

**पुरुषस्यानन्दरूपत्वनिरासः**

एवं सांख्ययोगदर्शनाचार्याः पुरुषं चिद्रूपं स्वीकुर्वन्तोऽपि तस्याऽऽनन्दरूपत्वं नाङ्गीकुर्वन्ति। अत्राऽयमाशयः–सांख्ययोगसिद्धान्ते आनन्दं (सुखं) प्रकृतेः सत्त्वगुणस्य परिणाम इति स्वीकारात् पुरुषस्य चात्रिगुणत्वेन प्रकृतेर्विलक्षणत्वात् तस्यानन्दरूपत्वं नैव संभवति। तदुक्तं वाचस्पतिमिश्रेण– "तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपास्तम्"[१] इति।

अपि च–"नानन्दं न निरानन्दम्"[२] इति श्रुत्या पुरुषस्यानन्दाभावस्य प्रतिपादितत्वान्नात्मन आनन्दरूपत्वम्। यत्र पुनः–"आनन्द आत्मा"[३] "आनन्दघनमव्ययम्"[४] इत्याद्युपनिषन्मन्त्रेष्वात्मनो यदानन्दरूपत्वं प्रतिपाद्यते,

---

महर्षि कपिल ने भी ज्ञान एवं पुरुष में गुणगुणिभाव का सुस्पष्ट निराकरण किया है— "निर्गुणत्वान्न चिद्धर्मा।"

**पुरुष की आनन्दरूपता का निराकरण**

सांख्य एवं योगदर्शन के आचार्य, **पुरुष** को चित्स्वरूप में स्वीकार करते हुए भी उसकी आनन्दरूपता को स्वीकार नहीं करते। इस सन्दर्भ में उनका आशय यह है— सांख्य एवं योगसिद्धान्त में आनन्द (सुख) को प्रकृति के सत्त्वगुण का परिणाम माना जाता है तथा पुरुष अत्रिगुण है एवं प्रकृति से विलक्षण है अतः उसकी आनन्दरूपता सम्भव नहीं है। इस सिद्धान्त को सुस्पष्टता के साथ आचार्य वाचस्पति मिश्र ने कहा है— "तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपास्तम्।" इसका अर्थ है— प्रकरणोचित प्रतिपादन से अन्यदर्शनाभिमत सुखादि का आत्मगुणत्व निराकृत हो जाता है।

इस सन्दर्भ में सांख्यदर्शन के इस अभिप्राय को भी समझना चाहिए–निम्नाङ्कित श्रुति के द्वारा पुरुष का आनन्दाभाव प्रतिपादित किये जाने से आत्मा की आनन्दरूपता प्रतिषिद्ध होती है— "नानन्दं न निरानन्दम्।" अर्थ है— आत्मा की न तो आनन्दरूपता है और न ही निरानन्दरूपता।

इसके विपरीत निम्नाङ्कित उपनिषद् मन्त्रों में जो आत्मा की आनन्दरूपता प्रतिपादित की गई है वह दुःखाभाव अर्थ को द्योतित करने से गौणार्थक है यह सांख्य

---

१. सां० त० कौ०, पृ० ११७.
२. म० उ० ५।९८.
३. तै० उ० २।५.
४. अध्या० उ० ६१.

तद् दुःखाभावेन गौणार्थमित्यवधेयमिति सांख्याभिप्रायः। तस्मात् पुरुषश्चिद्रूप एव, न त्वानन्दरूपः। एवं पुरुषस्य चिद्रूपत्वप्रतिपादनात् पुरुषोऽयं न्याय-वैशेषिक-प्राभाकराभिमतात्मापेक्षया श्रेष्ठः, तस्यानन्दरूपत्वानङ्गीकाराद् वेदान्ताभिमतात्मापेक्षया कनिष्ठ इति च प्रतिभाति।

## पुरुषास्तित्वे प्रमाणम्

नन्वेतादृशनिर्विकारचेतनपुरुषसद्भावे किं मानमिति चेदुच्यते–'चेतनोऽहं करोमि' इति प्रतीत्या जडायां बुद्धौ चेतनताधर्मः प्रतीयते, स च स्वरूपतस्तत्र नास्तीत्यारोपितो मन्तव्यः। आरोपश्च कस्मिंश्चित् पदार्थे प्रसिद्धधर्मस्यैवान्यत्र भवति, सर्वथाऽप्रसिद्धधर्मस्यारोपासम्भवात्। अतः प्रधानादीनां सर्वेषां जडत्वेन पारिशेष्यात् कर्तृत्वधर्मशालिन्यां जडायां बुद्धौ प्रतीयमानश्चेतनताधर्म एवान्यथानुपपत्त्या पुरुषमनुमापयति, अर्थाद् बुद्धिगतचैतन्याभिमानस्य पुरुषं विनानुपपत्त्या चिद्रूपः पुरुषः कल्प्यते। अपि च, नहि लोकेऽहमस्मि न वेति

---

दर्शन का अभिप्राय है। "आनन्द आत्मा।" "आनन्दघनमव्ययम्।" इनका अर्थ सुस्पष्ट है।

एवञ्च पुरुष चित्स्वरूप है, आनन्दरूप नहीं। निष्कर्ष यह है— सांख्यदर्शन में पुरुष की चित्स्वरूपता प्रतिपादित है अतः न्याय, वैशेषिक एवं प्रभाकर के अभिमत आत्मा की अपेक्षा उत्कृष्ट है। तद्वत् पुरुष की आनन्दरूपता का प्रतिषेध करने से वेदान्ती को अभिमत आत्मा से अपकृष्ट है— ऐसा विदित होता है।

## पुरुष के अस्तित्व में प्रमाण

सांख्यसम्मत निर्विकारचेतन पुरुष के सद्भाव में क्या प्रमाण है? इस प्रश्न का उत्तर सांख्यदर्शन में प्राप्त होता है— "चेतनोऽहं करोमि।" इस प्रतीति के बल पर जड बुद्धि में चेतनता धर्म की प्रतीति होती है। वह धर्म बुद्धि में स्वरूपतः स्थित नहीं हो सकता। अतः उसे बुद्धि का आरोपित धर्म ही माना जाता है। जो धर्म किसी पदार्थ में स्वरूपतः स्थित रहता है उसी का अन्य पदार्थ में आरोप होता है। सर्वथा अप्रसिद्ध धर्म का आरोप नहीं मान्य है। यतश्च प्रधानप्रभृति समस्त तत्त्व जड हैं अतः चेतनता (धर्म) स्वरूपतः उनमें रहने वाला धर्म नहीं है। कर्तृत्वधर्म से युक्त बुद्धि (जड) में प्रतीयमान (आरोपित) धर्म चेतनता को पारिशेष्यात् जिस तत्त्व का प्रसिद्ध धर्म माना जायगा वह तत्त्व पुरुष (अनुमेय) है। निष्कर्षकथन प्राप्त होता है— बुद्धिगत चैतन्य का अभिमान पुरुष के बिना अनुपपन्न है अतः चैतन्य धर्म के आश्रय

स्वविषये कस्यापि संशयः, न वा नाहमस्मीति विपर्ययो भवति, येन पुरुषास्तित्वं प्रतिषिध्येत। अत एवोक्तं महर्षिणा कपिलेन–"अस्त्यात्मा नास्तित्वसाधनाऽभावात्"[1] इति। सांख्याः सामान्यतः पञ्चभिर्हेतुभिः प्रकृत्यादिजडवर्गभिन्नं पुरुषं साधयन्ति। तदुक्तमीश्वरकृष्णेन–

**संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च[2]।।इति।**

**अस्यायमर्थः– १. संघातपरार्थत्वात्–** संहन्यन्ते मिश्रीभवन्त्यनेके सुखदुःखमोहादयो यत्र, असौ संघातः, प्रधानादिजडवर्ग इत्यर्थः। यथा लोके शय्यासनादीनां जडानां भोग्यपदार्थानां तद्भिन्नैरेव चेतनपुरुषैर्भोक्तृत्वं दृश्यते, तथैव संहतानां प्रकृतितत्कार्याणां पारार्थ्यमित्येव पर्यवस्यति। अतो यस्यार्थमिदं सर्वं सः पुरुष इत्यर्थः। अनुमानं च– विवादास्पदं प्रकृतिमहदादिकं परार्थं

---

रूप में पुरुष तत्त्व की कल्पना अन्यथानुपपत्ति प्रमाण से की जाती है। इस अर्थापत्ति प्रमाण को अनुमान-प्रमाण में अन्तर्भाव किया जाता है।

पुरुष के अस्तित्व में दूसरी युक्ति है—किसी व्यक्ति को यह संशय नहीं होता कि "अहमस्मि न वा" (मैं हूँ या नहीं?)। यह विपर्यय (उल्टा ज्ञान) भी नहीं होता— "अहं नास्मि" (मैं नहीं हूँ)। एतावता यह निष्कर्ष प्राप्त होता है—पुरुष के अस्तित्व को प्रतिषिद्ध नहीं किया जा सकता। अतएव महर्षि कपिल ने कहा है— "अस्त्यात्मा नास्तित्वसाधनाभावात्।"

सांख्य दार्शनिक सामान्यतः पाँच हेतुओं से प्रधान (प्रकृति) प्रभृति जडवर्ग से भिन्न पुरुष-तत्त्व की सिद्धि को प्रतिपादित करते हैं। अतएव ईश्वरकृष्ण ने कहा है—

संघातपरार्थत्वात्.......कैवल्यार्थं प्रवृत्तेश्च।।१।।

इस कारिका का सुस्पष्ट (परिस्फुट) अर्थ यह है—

१. संघातपरार्थत्वात्— संहनन का अर्थ मिश्रीभवन है। जिसमें अनेक गुण-सत्त्व, रजस् एवम् तमस् का मिश्रीभवन हो वह संघात कहलाता है। प्रधान-प्रभृति पृथ्वीपर्यन्त तत्त्वसमूह को संघात शब्द से जाना जाता है। प्रधानादि जडरूप समस्त तत्त्व, प्रकृति एवम् उसके कार्य हैं। यथा लोक में शय्या, आसन, दर्पण, गृह, वस्त्र एवम् अन्य जडवस्तु किसी चेतनपुरुष के भोग्य होते हैं तद्वत् प्रधान एवं उसके कार्य जड होने से किसी चेतन के भोग्य ही होंगे। एतावता प्रकृति एवम् उसके कार्य

---

१. सां० सू० ६।१.
२. सां० का० १७.

स्वेतरस्य भोगापवर्गफलकम्, संहतत्वात्, शय्यासनादिवदिति। पुरुषस्यापि संहतत्वेऽनवस्थापत्तिः। संघातानां परार्थत्वं च–"न वा अरे! सर्वस्य कामाय सर्व प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति"[३] इति श्रुत्याप्यनुमोदितम्[४]। तस्माद् यथा लोके शय्यासनादिभ्यो भोग्यपदार्थेभ्यो भिन्न एव चैतन्ये देवदत्तादौ भोक्तृत्वं दृश्यते, शय्यासनादीनां तु पारार्थ्यमेव; तथैव प्रकृतितत्कार्याणां पारार्थ्यमित्येव पर्यवस्यति।

**२. त्रिगुणादिविपर्ययात्**–पूर्वं यदुक्तं शय्यासनादिसंघातानां परार्थत्वात् संघातभिन्नः पुरुष इति, तदयुक्तम्; यतो ह्युक्तानां शय्यासनादीनां शरीरार्थकत्वस्य लोकेऽनुभूयमानत्वात्, पुरुषोऽपि संघातान्तर एव स्याद् इति

---

संघात कहलाते हैं वह शय्यासनादि की तरह चेतन के भोग्य हैं अतः परार्थ हैं। जिस चेतन के लिए प्रधानादि परार्थ हैं वह चेतन **पुरुष** सिद्ध होता है। एतदर्थ निम्नाङ्कित अनुमान प्रमाण उपस्थित होता है—

"विवादास्पदं प्रकृतिमहदादिकं, परार्थम्= स्वेतरस्य भोगापवर्गफलकम् संहतत्वात्, शय्यासनादिवत्।

संघात का अर्थ प्रकृति एवम् उसके कार्य महदादि-पृथिव्यन्त तत्त्व हैं। पुरुष को संघात के अन्तर्गत स्वीकार नहीं किया जा सकता। क्योंकि पुरुष पर है और उसके लिए संघात की उपभोग्यता है। यदि वह भी उपभोग्य होगा तो अनवस्था-दोष उपस्थित होगा।

अनुमानसिद्ध संघात की परार्थता श्रुति से भी अनुमोदित है। वह यथा— "नवा अरे! सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति।"

एतावता यह निष्कर्ष प्राप्त होता है— यथा लोक में शय्या, आसन, दर्पण प्रभृति भोग्य पदार्थों से भिन्न चेतन-देवदत्त, यज्ञदत्त प्रभृति में भोक्तृता देखी जाती है। शय्या, आसनादि जडवस्तुओं में परार्थता देखी जाती है तद्वत् प्रकृति एवम् उनके कार्य जडवर्ग में परार्थता ही है वह पर **भोक्ता** पुरुष चेतन तत्त्व है।

**२. त्रिगुणादिविपर्ययात्**–पूर्वोक्त प्रथम हेतु संघातपारार्थ्य है। इस सद्धेतु के बल पर अनुमान प्रमाण से परार्थ शय्यासनादि संघात की तरह प्रधानादि-संघात से संघातभिन्न पुरुष की सिद्धि का प्रतिपादन किया जाना समुचित नहीं है। क्योंकि शय्यासनादि में शरीर- सुख-साधनता लोक में अनुभूत होती है इसमें हेतु है उनका

---

३. बृ० उ० ४।५।६.

४. सां० त० कौ, पृ० १५६; यो० सू० ४।२४; सां० सू० १।६६ प्रवचनभाष्यम्।

चेन्न, त्रिगुणादिविपर्ययाच्च पुरुषसिद्धिः। अत्रेदमवधेयं यद् व्यक्ताऽव्यक्तानां त्रिगुणत्वम्, अविवेकित्वम्, सामान्यत्वम् अचेतनत्वम्, प्रसवधर्मित्वं चेतीमे समानधर्मा आख्यायन्ते। व्यक्ताऽव्यक्तयोः समानधर्माणामेतेषां कस्यापि विधर्मत्वमपि स्यात्। अतस्त्रिगुणत्वादीनामचेतनधर्मत्वात् कोऽपि चेतनः पुरुषः संघातभिन्नः स्वीकर्तव्यः, येन एते तस्य विधर्माणो भवेयुः। अतस्त्रिगुणत्वादिविपर्ययादित्यनेन द्वितीयेन हेतुनापि संघातभिन्नोऽत्रिगुणत्वाविषयत्वासामान्यत्वचेतनत्वाप्रसवधर्मित्वादिधर्मवान् पुरुषःसिद्ध्यति। संघातभिन्नपुरुषस्याऽकल्पने संघातानां परार्थत्वनियमादेकसंघातार्थं द्वितीयसंघातः, तदर्थं तृतीय इत्यनवस्थापत्तिः[१]।

**३. अधिष्ठानात्**– अचेतनानां हि रथादीनां चलनं दृष्ट्वा यथा तेषां चालकचेतनपुरुषाधिष्ठितत्वमनुमीयते, तथैवाचेतननानां बुद्ध्यादीनां स्वयं

---

(शय्यासनदर्पण आदि का) संघात होना। तद्वत् प्रधान एवम् उनके कार्यों का संघात होना भी पर उपभोक्ता को सिद्ध करता है। तद्वदेव पुरुष को भी अन्यविध संघात मानकर उससे भिन्न किसी तत्त्वान्तर को उपभोक्ता मानना चाहिए। इस अतिप्रसक्ति को नष्ट करने हेतु द्वितीय हेतु (त्रिगुणादिविपर्यय) का उपस्थापन किया गया है। इस द्वितीय हेतु से भी पुरुष की सिद्धि होती है। तद्यथा— व्यक्त महदादि एवम् अव्यक्त प्रधान के साधर्म्य (समानधर्म) हैं— त्रिगुणत्व, अविवेकित्व, सामान्यत्व, अचेतनत्व, एवम् प्रसवधर्मित्व। उपर्युक्त त्रिगुणत्व प्रभृति गुण व्यक्त एवम् अव्यक्त के समान धर्म हैं। ये गुण व्यक्त एवम् अव्यक्त से भिन्न किसी के विधर्म (विरुद्ध धर्म) हो सकते हैं। यतश्च त्रिगुणत्व प्रभृति गुण अचेतन के धर्म हैं अत: संघात से भिन्न कोई चेतन पुरुष स्वीकार्य है जिसके त्रिगुणत्वादि धर्म, विरुद्ध धर्म (विधर्म) हों। एवञ्च **त्रिगुणादिविपर्यय** स्वरूप द्वितीय हेतु से भी संघातभिन्न पुरुष (चेतन) की सिद्धि होती है। इस चेतन के धर्म हैं— अत्रिगुणत्व, अविषयत्व, असामान्यत्व, चेतनत्व एवम् अप्रसवधर्मित्व आदि। यदि हम संघात से भिन्न पुरुष की कल्पना नहीं करते हैं तो संघात की परार्थता के नियम पर एक संघात के लिए द्वितीय संघात की तथा द्वितीय संघात के लिए तृतीय संघात की—इस तरह से अनवस्था दूषण की आपत्ति अनिराकृत होगी।

**३. अधिष्ठानात्**– अचेतनस्वरूप रथ, शकट, कार, मोटर प्रभृति के चलने एवं दौड़ने को देखकर यद्वत् उनका चालक चेतन पुरुष के द्वारा अधिष्ठित होना

---

१. सां त० कौ०, पृ० १५६-१५७.

परिणामशक्तेरभावात् चेतनस्य सन्निधिरपेक्ष्यते। चेतनाधिष्ठितानामेव बुद्ध्यादीनां परिणामसम्भव इत्यधिष्ठातृत्वेन हि चेतनपुरुषसिद्धिः। न्यायदर्शनेऽपि "प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः"[१] इत्यधिष्ठातृरूपेणैवात्मा साध्यते।

ननु सांख्याभिमतस्य पुरुषस्य निर्गुणत्वाद् निष्क्रियत्वाच्च तस्य सङ्कल्पादेरभावात् कथमधिष्ठातृत्वमिति चेदुक्तं महर्षिणा कपिलेन– "तत्सन्निधानादधिष्ठातृत्वं मणिवत्"[२] इति। अस्यायमर्थः–यथाऽयस्कान्तमणेः सान्निध्येन लोहे चलनादिकं दृश्यते, तथैव पुरुषस्य सन्निधिमात्रेण प्रकृतेर्महत्तत्त्वादिरूपेण परिणमनम्, न तु पुरुषसङ्कल्पेन। तदुक्तम्–

**निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते।**
**सत्तामात्रेण देवेन तथा चायं जगज्जनः[३]।।इति।**

---

अनुमानप्रमाण से विदित होता है तद्वत् अचेतन-बुद्धिप्रभृति अन्तःकरणों में स्वयं की परिणामशक्ति का अभाव होने से चेतन का सान्निध्य अपेक्षित है। यतश्च चेतनाधिष्ठित होने से ही बुद्धयादि में परिणाम की सम्भावना है अतः तदधिष्ठातृता के आधार पर चेतन **पुरुष** की सिद्धि होती है। न्यायदर्शन में भी अधिष्ठातृरूप से ही आत्मा की सिद्धि की जाती है— "प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः।"

इस प्रसङ्ग में जिज्ञासा उदित होती है कि सांख्यसम्मत पुरुष निर्गुण एवं निष्क्रिय होने के कारण संकल्पादिशून्य होता है ऐसी स्थिति में पुरुष की अधिष्ठातृता कैसे हो सकती है? इसका समाधान करने हेतु महर्षि कपिल ने सूत्रवाक्य का उपस्थापन किया है—"तत्सन्निधानादधिष्ठातृत्वं मणिवत्।" इस सूत्र का अभिप्रेतार्थ सुस्पष्ट है— यद्वत् अयस्कान्तमणि के सन्निध्य से लोहद्रव्य में चलन एवं खिंचाव आदि क्रिया देखी जाती है तद्वत् पुरुष के सन्निधि मात्र से प्रकृति का महदादिरूप में परिणाम होता है न कि पुरुष के संकल्प से। अतएव निम्नाङ्कित श्लोक वाक्य में सुस्पष्ट कहा गया है—

निरिच्छे संस्थिते......जगज्जनः।।१।।"

जहाँ "तदैक्षत बहुस्यां प्रजायेय" प्रभृति वाक्यों में ईक्षण (संकल्प) पूर्वक स्रष्टृत्व (सृष्टि) का कथन प्राप्त होता है वहाँ भी "कूलं पिपतिषति" (नदी का तट नदीप्रवाह में गिरना चाहता है) इस वाक्य में यद्वत् अचेतन में इच्छा, ईक्षण प्रभृति

---

१. कारि० ५०.
२. सां० सू० १।९६.
३. सां० सू० १।९६ प्रवचनभाष्यम्।

यत्र पुनः—"तदैक्षत बहु स्यां प्रजायेय"[१] इतीक्षणपूर्वकं स्त्रष्टुत्वमुच्यते, तत्र कूलं पिपतिषतीतिवद् गौणार्थत्वमवगन्तव्यमिति विज्ञानभिक्षुणा प्रतिपादितम्[२]।

यद्वा एतादृशानां वचनानां बुद्धिपूर्वकोत्पन्नसृष्टिपरत्वम्, न त्वनादि-सृष्टिपरत्वम्, आदिसृष्टेर्बुद्धिपूर्वकत्वादिति विज्ञानभिक्षुणा कूर्मपुराणवचनोपन्यासपूर्वकं सृष्टिद्वैविध्यं प्रतिपादितम्। तथाहि—

**इत्येष प्राकृतः सर्गः संक्षेपात् कथितो मया।**
**अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधत[३]।।इति।**

अतो निर्गुणत्वेऽपि पुरुषस्य सान्निध्यमात्रेण कर्तृत्वसंभवादधिष्ठानादित्यनेन तृतीयेन हेतुनापि पुरुषास्तित्वसिद्धिः।

**४. भोक्तृभावात्**—इह दर्शनसमाजे सुखदुःखान्यतरसाक्षात्कारो हि भोग इत्युच्यते। तत्र—"अनुकूलवेदनीयं सुखम्, प्रतिकूलवेदनीयं दुःखम्" इति हि

---

धर्म का अभाव होने से गौणार्थता स्वीकार्य होती है तद्वत् तदैक्षत.....इत्यादि श्रुति-वाक्यों में भी गौणार्थता ही अङ्गीकार्य है— ऐसा आचार्य विज्ञानभिक्षु ने कहा है।

दूसरा समाधान है— तदैक्षत.....इत्यादिवाक्य, बुद्धिपूर्वक उत्पन्न घटादि की सृष्टि को ही विषय बनाते हैं न कि अनादि पृथिव्यादिकी सृष्टि को। क्योंकि सादि घटादि की सृष्टि का बुद्धिपूर्वकत्व लोकसिद्ध है। अतएव विज्ञानभिक्षु ने कूर्मपुराण के वचन का उपन्यास कर द्विविध सृष्टि का प्रतिपादन किया है। तद्यथा—

इत्येष प्राकृतः सर्गः.....सृष्टिं निबोधत।।१।।"

एतावता यह निर्दुष्ट सिद्धान्त नमस्य है— पुरुष यद्यपि निर्गुण है तथापि उसके सान्निध्यमात्र से कर्तृता की उपपत्ति सम्भव है। एवञ्च तृतीय हेतु–अधिष्ठानात्– से भी पुरुष के अस्तित्व की सिद्धि निर्बाध है।

**४. भोक्तृभावात्**– दर्शन समाज में सुख अथवा दुःख के साक्षात्कार को भोग कहा जाता है। सुख की परिभाषा है— अनुकूलवेदनीयं सुखम्। तद्वत् दुःख की परिभाषा है— प्रतिकूलवेदनीयं दुखम्। अनुकूलवेदनीय सुख एवम् प्रतिकूलवेदनीय दुःख को भोग्य कहा जाता है। सुख-दुःखादि की भोग्यता, भोक्तृता

---

१. छा० उ० ६।२।३.
२. सां० सू० १।९६ प्रवचनभाष्यम्।
३. सां० सू० १।९६ प्रवचनभाष्यम्।

सुखदुःखयोः परिभाषा। एवमनुकूलप्रतिकूलवेदनयोर्विषयत्वात् सुखदुःखानि भोग्यानीत्युच्यन्ते। भोग्यशब्दस्य सापेक्षत्वात् 'भोक्ता' अवश्यं कल्पनीय एव। अतः सुखदुःखानि यो ह्यनुकूलप्रतिकूलतया जानाति, स एव भोक्तेत्युच्यते। अत्र बुद्धेरेव सुखाद्याकारतया परिणामात्, तस्याश्च स्वस्य स्वविषयत्वाभावात् तदतिरिक्तः पुरुष एव भोक्ता भवति।

ननु "असङ्गो ह्ययं पुरुषः"[1] इति श्रुत्या पुरुषस्यासङ्गित्वप्रतिपादनात् कथं तस्य भोक्तृत्वमिति चेत्, सत्यम्। श्रूयतामत्र रहस्यम्–सांख्यदर्शने वस्तुतोऽसङ्गस्य पुरुषस्य स्वतो भोक्तृत्वं नास्त्येव, किन्तु बुद्ध्युपाधिनैव तस्य भोक्तृत्वमिति न कोऽपि दोषः।

**५. कैवल्यार्थं प्रवृत्तेश्च**–इह हि दर्शनशास्त्राषां दिव्यचक्षुषां महर्षीणां च कैवल्यार्थं प्रवृत्तिर्दरीदृश्यते। सांख्यदर्शने दुःखत्रयस्यात्यन्तिकी निवृत्तिरेव कैवल्यमित्युच्यते। तादृशं हि कैवल्यं नहि बुद्ध्यादीनां संभवति, तेषां

---

से सापेक्ष होती है। एवंच सुखादि की भोग्यता से भोक्तृता की अवश्यसापेक्षता होने के कारण भोक्ता पुरुष (चेतन) अवश्य कल्पनीय सिद्ध होता है। एतावता यह सुविदित होता है कि जो सुख को अनुकूलतया जानता है एवम् दुःख को प्रतिकूलतया जानता है वह उनका भोक्ता है। सांख्यसिद्धान्त में बुद्धि का ही सुखाकार दुःखाकार में परिणाम होना स्वीकृत है अतः स्वयं को विषय एवं विषयी होना विरुद्ध है, अतः सुखादि विषयों का भोक्ता विषयी, बुद्धि से भिन्न चेतन पुरुष की सिद्धि निर्बाध है।

यहाँ यह जिज्ञासा उदित होता है "असङ्गो ह्ययं पुरुषः" इस श्रुतिवाक्य के द्वारा पुरुष का असङ्गित्व प्रतिपादित होने के कारण पुरुष की भोक्तृता उपपन्न कैसे हो सकती है? यह जिज्ञासा सचमुच असमाधेय है। यहाँ रहस्यरूप से यह ज्ञातव्य है कि सांख्यदर्शन में पुरुष को वस्तुतः असङ्ग माना गया है अतः स्वतः वास्तविक भोक्तृता पुरुष का प्रतिषिद्ध है। केवल बुद्धि कृतऔपाधिक भोक्तृत्व ही पुरुष में स्वीकार्य होने से कोई भी दोष नहीं है।

**५. कैवल्यार्थं प्रवृत्तेश्च**– भारत के दर्शनशास्त्रों में दिव्यदृष्टि से सम्पन्न महर्षियों की कैवल्यनिमित्तक प्रवृत्ति परिलक्षित होती है। सांख्यदर्शन में त्रिविध दुःख की आत्यन्तिक एवम् ऐकान्तिक निवृत्ति को ही मोक्ष माना गया है। एतादृश

---

१. बृ० उ० ४।३।१५-१६.

दुःखात्मकत्वात्। पुरुषस्य च सुखदुःखादेरौपाधिकत्वादुपाधिनिवृत्तिद्वारा पुरुषस्य निर्दुःखित्वं संभवतीति तादृशौपाधिकदुःखनिवृत्त्यर्थं यः प्रवर्तते स एव पुरुष इति बुद्ध्यादिव्यतिरिक्तत्वेन पुरुषसिद्धिः। अन्यथा मोक्षाभिलाष-स्योच्छेदप्रसङ्गः।

**पुरुषस्य बहुत्वम्**

तदेवं प्रमाणसिद्धोऽयं पुरुष एक उतानेकः? इति जिज्ञासायां सांख्याः पुरुषबहुत्वमेव प्रतिपादयन्ति। तदुक्तं महर्षिणा कपिलेन–"जन्मादिव्यवस्थातः पुरुषबहुत्वम्"[१] इति। श्रीमदीश्वरकृष्णेनापि–

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव[२]।।

इत्युक्तम्। अस्यायमर्थः–सांख्या जननमरणकरणानां प्रतिनियमात्, अयुगपत्प्रवृत्तेः, त्रैगुण्यविपर्ययाच्चेति त्रिभिर्हेतुभिः पुरुषबहुत्वं प्रतिपादयन्ति।

---

कैवल्य, बुद्ध्यादि में सम्भव नहीं है क्योंकि उनकी दुःखरूपता, अवियोज्य धर्म है। पुरुष का सुख अथवा दुःख स्वाभाविक नहीं है प्रत्युत औपाधिक है। अतः उपाधिनिवृत्ति से पुरुष का दुःखराहित्य सम्भव है। इस औपाधिक दुःखनिवृत्ति हेतु जो प्रवृत्त होता है वह पुरुष है—इस प्रकार बुद्ध्यादि से व्यतिरिक्त पुरुष की सिद्धि होती है। बुद्ध्यादि से व्यतिरिक्त पुरुष की सिद्धि के अभाव में मोक्षाभिलाषिता की उपपत्ति सम्भव नहीं है।

**पुरुष का बहुत्व**

उपर्युक्त प्रतिपादन के आधार पर सांख्यसम्मत पुरुष का प्रमाण सिद्ध होना प्रतीत होता है। अब जिज्ञासा होती है–वह पुरुष एक है या अनेक? इसके समाधान में सांख्यदार्शनिक पुरुषबहुत्वका प्रतिपादन करते हैं। महर्षि कपिल का प्रासङ्गिक वचन है– "जन्मादिव्यवस्थातः पुरुषबहुत्वम्।" आचार्य ईश्वरकृष्ण ने भी कहा है—

जननमरणकरणानां.....त्रैगुण्यविपर्ययाच्चैव॥१॥

इसका अर्थ है— सांख्य दार्शनिक (१) जनन, मरण एवम् इन्द्रियों के प्रतिनियम (व्यवस्थान) (२) अयुगपत् प्रवृत्ति तथा (३) त्रैगुण्यविपर्यय इन तीन

---

१. सां० सू० १।१४९.
२. सां० का० १८.

**१. जननमरणकरणानां प्रतिनियमात्**–अयं पुरुषबहुत्वे प्रथमो हेतुः। अस्यायमभिप्रायः–इह खल्वेकस्मिन् जायमाने म्रियमाणे वा नहि सर्वे जायन्ते म्रियन्ते वा, एकस्यान्धत्वे बधिरत्वे वा नहि सर्वेऽन्धा बधिरा वा भवन्ति। इयं हि जननमरणादिव्यवस्था प्रतिशरीरं पुरुषस्य भिन्नत्व एव संभवतीति सांख्याचार्याः प्रतिक्षेत्रं पुरुषभिन्नत्वं प्रसाध्य तस्य बहुत्वमङ्गीकुर्वन्ति। अत्र जननमरणशब्देन पुरुषस्य शरीरेन्द्रियमनोबुद्ध्यादिभिः सम्बन्धवियोगौ गृह्येते, न च घटोत्पत्तिविनाशवत् पुरुषोत्पत्तिविनाशौ, तस्यापरिणामित्वात्, कूटस्थनित्यत्वाच्च। तदुक्तं वाचस्पतिमिश्रैः–"निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म, न तु तस्य परिणामः, तस्यापरिणामित्वात्। तेषामेव च देहादीनामुपात्तानां परित्यागो मरणम्; न त्वात्मनो विनाशः, तस्य कूटस्थनित्यत्वात्"[१] इति। तस्मात् 'देवदत्तो जातः' इत्यत्र घटादेरिव न पुरुषस्य मुख्यं जन्म, किन्तु शरीरादिसम्बन्धेन भाक्तमित्यर्थः। अतः–

---

हेतुओं से पुरुषबहुत्व का प्रतिपादन करते हैं।

**१. जननमरणकरणानां प्रतिनियमात्**— पुरुषबहुत्व की सिद्धि में यह प्रथम हेतु है। इसका अभिप्रेतार्थ है— इस संसार में स्पष्ट रूप से परिलक्षित होता है कि एक व्यक्ति के जन्म लेने अथवा मृत्युभाव को प्राप्त करने से सबके सब प्राणी न तो जन्म लेते हैं और न ही मरते हैं। तद्वत् एक व्यक्ति के अन्धे अथवा बहरे होने पर सबके सब प्राणी अन्धे अथवा बहरे नहीं हो जाते। यह जननमरणादि व्यवस्था प्रतिशरीर पुरुष के भिन्न होने पर ही सम्भव है अतः सांख्य दार्शनिक प्रतिशरीर में पुरुषभेद को सिद्ध करते हैं तथा तन्मूलक पुरुष-बहुत्व का अङ्गीकार करते हैं। यहाँ पुरुष का शरीर, इन्द्रिय, मनस् एवं बुद्ध्यादि के साथ संयोग को जन्म कहा जाता है तथा उनके साथ वियोग को मरण कहा जाता है। पुरुष की उत्पत्ति एवं विनाश को घट की उत्पत्ति एवं विनाश के साथ तुलनीय नहीं माना जाता है। कारण यह है कि पुरुष घट की तरह परिणामी नहीं है वह तो कूटस्थ नित्य है। अतएव श्रीवाचस्पति मिश्र ने कहा है—

"निकायविशिष्टाभिः.........तस्य कूटस्थनित्यत्वात्।।

अतः "देवदत्त उत्पन्न हुआ"— इस कथन में घट अथवा पट के जन्म की तरह पुरुष का जन्म होना मुख्य नहीं है किन्तु शरीरादि के साथ पुरुष का

---

१. सां० त० कौ०, पृ० १६३.

**न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे[१]।।**

इत्यादिश्रुतिस्मृय आत्मनो जन्मादिपरिणामशून्यत्वेन कूटस्थनित्यत्वमामनन्तीति नैव तस्य मुख्ये जन्मनिधने संभवतः।

ननु 'देवदत्तो जातः', 'देवदत्तो मृतः' इति व्यवहारान्यथाऽनुपपत्त्या पुरुषस्य जननमरणावस्थे अभ्युपेये इति चेन्मैवम्, शरीरादिना संयुज्यमानत्वेन पुरुषस्य जायमानत्वम्, तद्वियोगेन च म्रियमाणत्वमित्यभ्युपगममात्रेणैव तद्व्यवहारोपपत्तेः। तथाहि श्रूयते–"स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः, स उत्क्रामन् म्रियमाणः"[२] इति। तस्मात् 'देवदत्तो जातः' इत्यादिव्यवहारो भाक्त एव, न जातुचिन्मुख्यः।

ननु पुरुषस्य परमार्थतो जन्माभावे–

---

सम्बन्ध होना–यह गौण अर्थ ही विवक्षित है। अतएव "न जायते......हन्यमाने शरीरे॥"१॥

इत्यादि श्रुतिवाक्य, आत्मा (पुरुष) की जन्मादिपरिणामशून्य कूटस्थ नित्यता को प्रतिपादित करते हैं। निष्कर्ष यह है पुरुष का जन्म अथवा मृत्यु प्रसिद्ध अर्थ में सम्भव नहीं है।

जिज्ञासा उदित होती है कि "देवदत्त उत्पन्न हुआ।" एवम् "देवदत्त मर गया" इस प्रकार के व्यवहार की अन्यथा उपपत्ति नहीं होने के कारण पुरुष की जन्मावस्था एवं मरणावस्था को स्वीकार करना चाहिए। इसका समाधान है— पुरुष का प्रसिद्ध जन्म अथवा मृत्यु से कोई सम्बन्ध नहीं है प्रत्युत शरीरादि के साथ सम्बन्ध होना पुरुष का गौण जन्म है तथा वियुक्त होना गौण मृत्यु है— इतने मात्र की स्वीकृति से ही उपर्युक्त व्यवहार की उपपत्ति हो जाती है। अतएव श्रुतिवाक्य में विवरण प्राप्त होता है– "सवा.....म्रियमाणः।" अतः देवदत्त उत्पन्न हुआ–इत्यादि व्यवहार गौण अर्थ को लेकर प्रयुक्त होता है, मुख्य अर्थ को लेकर नहीं।

पुनः जिज्ञासा उदित होती है— (१) पुरुष (आत्मा) का पारमार्थिक रूप

---

१. कठ० १।२।१८.
२. बृ० उ० ४।३।८.

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते।
मन्त्रवत् प्राशनं चास्य हिरण्यमधुसर्पिषाम्[१]।।

इति स्मृतौ जन्मनिमित्तानां जातकर्मादिसंस्काराणां विधानं न स्यात्। किञ्चात्र स्मृतौ 'पुंसः' इति कथनाद् जीवात्मैव गृह्यते, न शरीरमिति सुस्पष्टमेव ज्ञायते। अपि च, लोकसिद्धे खल्वेते जन्ममरणे "स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः, स उत्क्रामन् म्रियमाणः"[२] इति श्रुत्यापि संवाद्येते। तस्मात्र पुरुषस्य जन्ममरणे भाक्ते, किन्तु मुख्ये इति चेन्मैवम्, यथा 'गङ्गायां घोषः' इत्यत्र भगीरथरथखातावच्छिन्नजलप्रवाहे गङ्गाव्यपदेशो मुख्यस्तत्तीरे च भाक्तः, तथा जननमरणव्यपदेशोऽपि शरीरे मुख्यः प्रवर्तते, तत्सम्बन्धिनि जीवात्मनि च गौण इति निश्चेतव्यम्। नहि शरीरसम्बन्धादन्यत्र पुरुषो जातो मृतो वेत्यादिरूपेण क्वचित् केनचित् व्यपदिश्यते। तस्माज्जन्ममरणादिव्यपदेशः शरीरे मुख्यः, पुरुषे च भाक्तः।

---

से जन्म नहीं मान्य हो तो "प्राङ्नाभिवर्धनात्........सर्पिषाम्।।"१।। इस स्मृति में जन्मनिमित्तक जातकर्मप्रभृति संस्कारों का विधान उपपन्न नहीं होगा।

(२) उपर्युक्त स्मृतिवाक्य में "पुंस:" का अर्थ "जीवात्मा का" परिग्राह्य है, शरीर का नहीं।

(३) "सवा अयं पुरुष:......उत्क्रामन् म्रियमाण:।" इस श्रुतियवाक्य द्वारा पुरुष के लोकसिद्ध जन्म एवं मरण की पुष्टि संवादित होती है।

अत: पुरुष के जन्म एवं मरण गौण हैं ऐसा नहीं प्रत्युत मुख्य अर्थ में हैं। इसका समाधान है— यद्वत् "गङ्गायां घोष"" इस वाक्य में गङ्गा शब्द का भगीरथ-रथ-खाता में प्रवाहित जलराशि अर्थ मुख्य है तथा नदी-तीर अर्थ गौण है। तद्वत् जनन-मरण शब्दों का मुख्य अर्थ में प्रयोग शरीर के लिए होता है तथा शरीर सम्बद्ध आत्मा के लिए गौण अर्थ में प्रयोग होता है। ऐसा विविक्त निर्धारण कर लेने से उपर्युक्त समस्याओं का समाधान हो जाता है। कोई भी व्यक्ति किसी भी स्थल में शरीर-सम्बन्ध के बिना पुरुष के लिए जन्म होने अथवा मृत्यु होने का कथन नहीं करता। अत: यह सुविदित होता है कि शरीर अर्थ में जन्म-मरणादि शब्द का मुख्य प्रयोग होता है तथा पुरुष अर्थ में गौण।

---

१. म० स्मृ० २।२९.
२. बृ० उ० ४।३।८.

किञ्च, यदुक्तं पुरुषस्य पारमार्थिकजन्माभावे तज्जन्मनिमित्तकजात-कर्मादिसंस्काराणां विधानाभावप्रसङ्ग इति, तदयुक्तम्, जातकर्मादीनां गर्भबीजसमुद्भवजीवपापक्षयार्थत्वेनोपपत्तेः। तदुक्तं वाचस्पतिमिश्रैः– "जातकर्मादि च गर्भबीजसमुद्भवजीवपापप्रक्षयार्थम्, न तु जीवजन्मजपापक्षयार्थम्। अत एव स्मरन्ति–"एवमेनः शमं याति बीजगर्भसमुद्भवम्" इति।

तस्मान्न शरीरोत्पत्तिविनाशाभ्यां जीवजन्मविनाशाविति सिद्धम्"[1] इति।

तथा च स्मर्यते–

गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते[2]।।इति।

"स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः, स उत्क्रामन् म्रियमाणः"[3] इति श्रुतौ तु शरीरसम्बन्धाऽसम्बन्धनिमित्ते जन्ममरणे पुरुषस्य दर्शिते, न तु वास्तविके। अपि च–"जीवापेतं वाव किलेदं म्रियते न जीवो

---

पूर्व में जो आपत्ति उठायी गयी थी—पुरुष का पारमार्थिक जन्म नहीं माना जाय तो तन्जन्मनिमित्तक जातकर्मादि संस्कारों के विधान का अनौचित्य आपादित होगा। यह आपत्ति असमाधेय नहीं है। क्योंकि गर्भ एवं बीज के संसर्ग से उद्भूत पापों के प्रक्षालनार्थ जातकर्मादि संस्कारों का विधान व्यर्थ नहीं है। अतएव श्रीमिश्र ने कहा है— "जातकर्मादि च.......जन्मजपापक्षयार्थम्।" शंकर भगवत्पाद महाशय ने भी कहा है— "एवमेनः......समुद्भवम्।" अतः मुख्य अर्थ में शरीर के लिए ही जन्म एवं मृत्यु शब्दों का प्रयोग होता है। जीव (पुरुष) का स्वाभाविक सम्बन्ध जन्म एवं मृत्यु के साथ नहीं है। मनुस्मृति में भी विविक्त कथन प्राप्त होता है—

"गार्भैर्होमैः.........अपमृज्यते।।१।।

बृहदारण्यकोपनिषद् में 'सवा अयं पुरुषः.........म्रियमाणः" वाक्य से प्रोक्त जन्म एवं मृत्यु का पुरुष में वास्तविक रूप से सम्बन्ध नहीं है प्रत्युत शरीर संयोग-वियोगों पर आधारित है। किंच निम्नाङ्कित प्रमाणवचनों "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते।" एवम् "अजः शरीरग्रहणात् स जात इति कीर्त्यते।" शरीर अर्थ में मुख्य रूप से तथा पुरुष अर्थ में गौण रूप से जन्म एवं मरण शब्दों का प्रयोग प्राप्त होता है। अतः निष्कर्ष यह प्राप्त है कि स्थूल देहादि का सम्बन्ध होने से जन्म तथा

---

१. ब्र० सू० भा० २।३।१६, पृ० ५२५.

२. म० स्म- २।२७.

३. बृ० उ० ४।३।८.

म्रियते"[१] "अजः शरीरग्रहणात् स जात इति कीर्त्यते"[२] इत्यादिश्रुति-स्मृत्योर्जन्ममरणव्यपदेशः शरीरे मुख्यत्वेन, पुरुषे च गौणत्वेनोपदिष्ट इति स्थूलदेहादिसम्बन्ध एव पुरुषस्य जन्म, तत्सम्बन्धपरित्यागश्च तस्य मरणमिति निष्कृष्टोऽर्थः[३]।

ननु जननमरणानां देहधर्मत्वात्, अन्धत्वबधिरत्वादीनां चेन्द्रियधर्मत्वान्नहि जननमरणकरणानां प्रतिनियमादित्यनेन हेतुना प्रतिक्षेत्रं पुरुषभेदो व्यवस्थापयितुं शक्यते, किन्तु यथैकस्यैवाकाशस्य घटाद्युपाधिभेदेन भेदव्यवहारस्तथैकस्यैव पुरुषस्य देहाद्युपाधिभेदेनैव भवेज्जन्मादिव्यवस्थेति किं पुरुषभेदकल्पनेन गौरवदोषग्रस्तेनेति चेन्मैवम्; देहवत् तदवयवानां हस्तादीनामुपाधित्वात्, देहस्यैवोपाधित्वं नावयवानामित्यत्र विनिगमनाविरहादुपाधिभूतावयव-भेदेनाप्यात्मभेदप्रसङ्गात्। तथा चावयवोत्पत्तिविनाशेन पुरुषोत्पत्तिविनाशप्रसङ्गः। न चेष्टापत्तिः, तादृशव्यवहारादर्शनात्। तदुक्तं वाचस्पतिमिश्रैः–"न चैकस्यापि पुरुषस्य देहोपादानभेदाद् व्यवस्थेति युक्तम्, पाणिस्तनाद्युपाधिभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात्। नहि पाणौ वृक्णे, जाते वा स्तनादौ महत्यवयवे युवतिर्मृता जाता वा भवतीति"[४] इति। अत्राऽयं भावः–कस्याश्चिद् बालाया हस्ते

---

वियोग होने से मरण-शब्दों का प्रयोग पुरुष के साथ उपचरित होता है।

अब एक विलक्षण जिज्ञासा उदित होती है— जनन-मरण देहधर्म हैं, अन्धत्व-बधिरत्व इन्द्रिय-धर्म हैं अतः भिन्न धर्म जनन-मरणकरणों के प्रतिनियम हेतु द्वारा प्रतिशरीर पुरुषभेद की व्यवस्थां को साध्य नहीं बनाया जा सकता। किन्तु वेदान्तिसम्मत एक ही पुरुष की देहादि उपाधि प्रयुक्त जननादिव्यवस्था, एक आकाश का घटाकाशादि भेदव्यवहार की तरह उपपन्न हो जायेगी अतः पुरुष-भेद की कल्पना गौरव-दोषग्रस्त होने से त्याज्य है। इसका समाधान है— यदि देह को उपाधि मानें तो देहावयव हस्त-चरणादि को भी उपाधिरूप से स्वीकार करने में बाधक युक्ति (विनिगमना) के अभाव होने से देहावयवों के भेद से भी पुरुष के भेद का प्रसङ्ग आपादित होगा। एवञ्च अवयव के उत्पत्ति-विनाश क्रियाओं पर आधारित पुरुष के उत्पत्ति-विनाशों की अतिप्रसक्ति प्राप्त होगी। इसे इष्टापत्ति नहीं कह सकते क्योंकि

१. छा० उ० ६।११।३.
२. या० स्मृ० ३।६९.
३. सां० त० कौ० सारबोधिनीव्याख्यायाष्टिप्पणी, पृ० ३१५-३१७.
४. सां० त० कौ०, पृ० १६३.

छिन्ने सति सा मृतेति, स्तनादौ जाते सा जातेति न केनापि व्यवह्रियते, नापि ज्ञायत इति नोपाधिभूतावयवभेदेन जननमरणव्यवस्थेति।

नन्वेवं जन्ममरणादिव्यवस्थार्थं पुरुषनानात्वे "एको देवः सर्वभूतेषु गूढः"[1] इत्याद्यात्मैकत्वप्रतिपादकश्रुतिविरोधः, इति चेन्मैवम्, तेषां चित्सामान्यमादायाद्वैतप्रतिपादनपरत्वोपपत्तेः। तदुक्तं महर्षिणा कपिलेन–"नाद्वैतश्रुतिविरोधो जातिपरत्वात्"[2] इति। तदेवं जननमरणकरणानां प्रतिनियमादित्यनेन हेतुना प्रतिक्षेत्रं पुरुषभेदः संभवत्येव[3]।

**२. अयुगपत्प्रवृत्तेः**–अयं द्वितीयो हेतुः। अयमस्यार्थः–प्रवृत्तिर्नाम प्रयत्नः। यद्यपि प्रयत्नो बुद्धेर्धर्मः, अथापि यथा योद्धृषु वर्तमानो विजयः

---

एतादृश व्यवहार अनुभवसिद्ध नहीं है। अतएव श्री वाचस्पति मिश्र ने कहा है– "न चैकस्यापि पुरुषस्य युवतिर्मृता जाता वा भवतीति।"

मिश्रोक्ति का भावार्थ है— किसी बाला के दैवदुर्विपाक से हाथ कट जाय तो वह मर गयी ऐसा व्यवहार सामान्यजन द्वारा भी नहीं किया जाता है। तद्वत् स्तनादि के उभर जाने से किशोरी उत्पन्न हो गई ऐसा व्यवहार भी नहीं किया जाता है। व्यवहार तो दूर ऐसा समझा भी नहीं जाता है। अतः उपाधिभूत अवयवभेद पर आधारित पुरुष की जनन-मरण-व्यवस्था नहीं हो सकती।

पुनरपि अन्यविध जिज्ञासा उदित होती है— "जन्ममरणादि-व्यवस्था की उपपत्ति हेतु पुरुषनानात्व मान लेने से आत्मैकत्व के प्रतिपादक–"एको देवः सर्वभूतेषु गूढ़ः" इत्यादि श्रुतिवाक्यों का विरोध आपतित होगा। इसका समाधान है— उपर्युक्त श्रुति वाक्यों का चित्सामान्य पर आधारित अद्वैत प्रतिपादन में तात्पर्य है अतएव महर्षि कपिल ने कहा है— "नाद्वैतश्रुतिविरोधो जातिपरत्वात्।"

अतः निष्कर्ष कथन प्राप्त होता है— "जननमरणकरणानां प्रतिनियमात्" इस हेतु से प्रतिशरीर, पुरुष-भेद की सिद्धि निर्बाध है।

**२. अयुगपत्प्रवृत्तेः**– पुरुष-बहुत्व का साधक यह दूसरा हेतु है। इसका अर्थ है— प्रयत्न का नाम है प्रवृत्ति। यद्यपि प्रयत्न, बुद्धि का धर्म है तथापि योद्धा द्वारा अर्जित जय अथवा पराजय का औपचारिक व्यपदेश उनके स्वामी राजा

---

१. श्वे० उ० ६।११.

२. सां० सू० १।१५४.

३. सां० त० कौ० सारबोधिनीव्याख्या, पृ० ३१८–३१९.

पराजयो वा स्वामिनि राज्ञि व्यपदिश्यते, तथा बुद्धौ वर्तमानापि प्रवृत्तिः पुरुष उपचर्यते। प्रकृते उपचारनिमित्तं च स्वस्वामिभावसम्बन्ध एव ज्ञातव्यः। यदि सर्वशरीरेष्वेक एव पुरुषः स्यात्, तर्हि सर्वाण्यपि शरीराणि युगपदेककार्यार्थमेव प्रवृत्तानि भवेयुः। न चैवं दृश्यते। अतः प्रवृत्तिभेदेनापि पुरुषभेदः सिद्ध्यति। अनुमानं च–''शरीराणि, प्रतिशरीरं विभिन्नपुरुषाधिष्ठेयानि, अयुगपत्प्रवृत्तिमत्त्वात्, रथादिवत्''[१] इति। अयुगपत्प्रवृत्तित्वमस्तु पुरुषबहुत्वं च माऽस्त्विति विपक्षे युगपत्प्रवृत्तित्वस्य बाधकतर्कस्य प्रदर्शितत्वात्। तदुक्तं वाचस्पतिमिश्रैः–''तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत, ततश्च सर्वाण्येव शरीराणि युगपच्चालयेत्, नानात्वे तु नायं दोषः''[२] इति।

३. त्रैगुण्यविपर्ययात्–त्रयो गुणा एव त्रैगुण्यम्। त्रैगुण्यस्य विपर्ययो वैचित्र्यं वैलक्षण्यं वा त्रैगुण्यविपर्ययः, तस्मात् त्रैगुण्यविपर्ययात्। अर्थाल्लोके हि सत्त्वगुणप्रधाना देवाः, रजोगुणप्रधाना मनुष्याः, तमोगुणप्रधानाश्च तिर्यग्योनय

---

के लिए किया जाता है। तद्वत् बुद्धि-धर्म का औपचारिक व्यपदेश से पुरुष की प्रवृत्ति (प्रयत्न), यह व्यवहार उपपन्न होता है। प्रकृत में औपचारिक व्यपदेश के प्रति निमित्त है— स्वस्वामिभाव सम्बन्ध। यदि सभी शरीरों में एक ही पुरुष विद्यमान होता तो सभी शरीर एक साथ एक ही कार्य करने हेतु प्रवृत्त होते। किन्तु ऐसा देखा नहीं जाता है। अतः प्रवृत्तिभेद-हेतुक पुरुषभेद की सिद्धि निर्बाध है। यहाँ अनुमान का आकार है—शरीराणि, प्रतिशरीरं विभिन्न-पुरुषाधिष्ठेयानि, अयुगपत्प्रवृत्तिमत्त्वात् रथादिवत्।

यहाँ अयुगपत्-प्रवृत्तित्वमस्तु पुरुषबहुत्वं माऽस्तु यह आशङ्का उचित नहीं है क्योंकि विपक्ष में बाधकतर्क युगपत्-प्रवृत्तित्व की निर्बाधता है। इस बात को स्वयं वाचस्पति मिश्र जी ने प्रतिपादित किया है— ''तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने..........नानात्वे तु नायं दोषः।''

**३. त्रैगुण्यविपर्ययात्–** त्रयो गुणा एव त्रैगुण्यम्— इस व्युत्पत्ति के आधार पर स्वार्थिक ष्यञ् (तद्धित प्रत्यय) से निष्पन्न त्रैगुण्य का अर्थ है– सत्त्व, रजस् एवं तमस्–ये तीन गुण। इन तीनों गुणों का वैचित्र्य=वैलक्षण्य, विपर्यय कहलाता है। त्रैगुण्य-विपर्यय हेतु द्वारा पुरुष-बहुत्व की सिद्धि होती है। लोक में भेदपूर्ण व्यवहार

---

१. सां० त० कौ०, सा० बो०, पृ० ३१९.
२. सां० त० कौ०, पृ० १६४.

इति त्रिगुणानां वैचित्र्येण देवतिर्यङ्मनुष्यादिभेदव्यवहारो भवति। सर्वशरीरेषु यद्येक एव पुरुषः स्यात्, तदाऽयं भेदो नोपपद्येत। अतस्त्रैगुण्यविपर्ययाच्च पुरुषबहुत्वसिद्धिः[१]।

योगदर्शनेऽपि महर्षिणा पतञ्जलिना–"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारण्यात्"[२] इति सूत्रेण पुरुषबहुत्वं व्यवस्थापितम्। अस्यायमर्थः– प्रकृतिः पुरुषापवर्गार्थं सृष्टेर्विकासं कृत्वा पुरुषस्य तदीयं शुद्धबुद्धस्वरूपज्ञानमुत्पाद्य एकस्मै मुक्तिं प्रदायापि पुनरन्यपुरुषकैवल्यार्थं प्रवर्तते, अतो मुक्तं प्रति नष्टापि सा तदन्यकृतेऽनष्टैव, तस्याः सर्वसाधारणत्वात्। यद्येक एव पुरुषः स्यात्, तदा तस्य मुक्तौ प्रकृतेर्व्यवहारोच्छेदप्रसङ्गः। अतो योगदर्शनेऽपि पुरुषबहुत्वमभीष्टमित्यवगन्तव्यम्।

किञ्च, "भेदव्यपदेशाच्चान्यः"[३] "अधिकं तु भेदनिर्देशात्"[४],

---

प्रसिद्ध है— देवगण–सत्त्वगुण-प्रधान होते हैं, मानव-रजोगुणप्रधान होते हैं तथा तिर्यग्योनि के पशुगण एवं पक्षिगण-तमोगुणप्रधान होते हैं। देवादि में तीन गुणों के वैचित्र्यमूलक भेदव्यवहार सुप्रथित हैं। सभी शरीरों में यदि एक ही पुरुष विद्यमान होता तो यह भेदव्यवहार उपपन्न नहीं होता। अतः त्रैगुण्यविपर्ययमूलक पुरुष-बहुत्व की सिद्धि निर्बाध है।

योगदर्शन में भी महर्षि पतञ्जलि ने निम्नाङ्कित सूत्र द्वारा पुरुष-बहुत्व की व्यवस्था प्रतिपादित की है— "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारण्यात्।" इसका अभिप्रेतार्थ है— प्रकृति, पुरुष को अपवर्ग प्राप्त कराने हेतु सृष्टि का विकास कर पुरुष को तदीय शुद्धबुद्धस्वरूप का ज्ञान उत्पादित करती है। इस प्रकार एक पुरुष को मुक्ति प्रदान करने के बाद भी पुनः अन्य पुरुष के कैवल्य हेतु वह प्रकृति, प्रवृत्त होती है। अतः मुक्तपुरुष के प्रति नष्ट होकर भी वह अन्यपुरुष के प्रति अनष्ट ही रहती है। क्योंकि वह सर्वपुरुषसाधारण होती है। यदि एक ही पुरुष होता तब उस एक पुरुष की मुक्ति हो जाने के अनन्तर प्रकृति के व्यवहार का उच्छेद अतिप्रसक्त होता। अतएव योगदर्शन में भी पुरुष-बहुत्व अभीष्ट है–ऐसा समझना चाहिए।

अपि च विज्ञानभिक्षु ने अपना अभिप्राय आविष्कृत करते हुए विलक्षण युक्ति को

---

१. सां० त० कौ०, पृ० १६५.

२. यो० सू० २।२२.

३. ब्र० सू० १।१।२१.

४. ब्र० सू० २।१।२२.

इत्यादिसूत्रेषु बादरायणेन भेदस्यैव प्रतिपादितत्वादवच्छेदप्रतिबिम्ब-वादाभ्यामेकस्यैवात्मनोऽनेकत्वमौपाधिकमित्याधुनिकवेदान्तिनां प्रतिपादनमपसिद्धान्त इति विज्ञानभिक्षुरभिप्रैति[१]।

नन्वेवं सति- "एक एव हि भूतात्मा भूते भूते व्यवस्थितः"[२] इत्याद्यद्वैतश्रुतिविरोध इति चेन्न, "नाद्वैतश्रुतिविरोधो जातिपरत्वात्"[३] इति सूत्रेण कपिलमहर्षिणाऽद्वैतश्रुतीनां विजातीयद्वैतनिषेधपरत्वेन व्यवस्थापितत्वात्। अतोऽद्वैतवाक्यानि "निरञ्जनः परमं साम्यपुपैति"[४] इत्यादिश्रुतिबलेन चिदेकरूपत्वाद् वैधर्म्यलक्षणाभेदपराण्येव, न त्वखण्डार्थपराणीति विज्ञानभिक्षुः प्रतिपादयति[५]।

तदेवं सांख्ययोगदर्शनयोः पुरुषश्चिद्रूपः, नित्यः, विभुः, प्रतिशरीरं भिन्नश्च। चिद्रूपोऽप्ययं नानन्दस्वरूप इति नैयायिक-वैशेषिक-प्राभाकाराभिमतात्माऽपेक्षया

---

उपस्थापित किया है। तद्‌यथा बादरायण ने "भेदव्यपदेशाच्चान्यः" एवम् "अधिकन्तु भेदनिर्देशात्।" इत्यादि सूत्रों में भेद का ही प्रतिपादन किया है। अतः अवच्छेदवाद अथवा प्रतिबिम्बवाद पर आधारित एकात्मवाद वस्तुतः अपसिद्धान्त ही है।

अब जिज्ञासा उदित होती है कि "एक एव हि भूतात्मा भूते भूते व्यवस्थितः" इत्यादि अनेक श्रुतिवाक्यों का विरोध सांख्यमत में आपतित है जो दुरुद्धर है। इसका समाधान यह है— कपिल महर्षि ने अपने सांख्यसूत्र—"नाद्वैतश्रुतिविरोधो जातिपरत्वात्" द्वारा अद्वैतवादिनी श्रुतियों के विजातीय द्वैतनिषेध में तात्पर्य प्रतिपादित किया है। अतएव श्रीविज्ञानभिक्षु ने सुस्पष्ट प्रतिपादित किया है कि समस्त अद्वैतश्रुतियों का चिदेकरूपतामूलक वैधर्म्यलक्षण अभेद में तात्पर्य है तदर्थ अनुग्राहक श्रुतिवाक्य " निरञ्जनः परमं साम्यमुपैति।" को उन्होंने उदाहृत किया है। एतावता अद्वैतश्रुतियों का अखण्डार्थबोध में तात्पर्य का अभिधान अयौक्तिक है।

इस प्रकार सांख्य तथा योग-दर्शनों में पुरुष चिद्रूप है, नित्य है, विभु है तथा प्रतिशरीर भिन्न है-यह मान्य सिद्धान्त है। चिद्रूप होने पर भी पुरुष आनन्द-स्वरूप नहीं है-एतावता नैयायिक, वैशेषिक एवम् प्राभाकर को अभीष्ट (आत्मा)

---

१. सां० सू० १।१५३ प्र० भा०।
२. ब्र० वि० उ० १२.
३. सां० सू० १।१५४.
४. मुण्ड० ३।१।३.
५. सां० सू० १।१५४ प्र० भा०।

श्रेष्ठोऽप्यद्वैतवेदान्ताभिमतात्मापेक्षया कनिष्ठ इति प्रतिभाति। अत एव भगवत्पादैः शङ्कराचार्यैः प्रधानमल्लनिबर्हणन्यायेन सांख्यनिरास एव महान् यत्नो विहितः।

## मीमांसामतेनात्मस्वरूपम्

तत्र तावन्मीमांसकाः—"स्वर्गकामो यजेत" इत्यादिविधिवाक्यानुरोधेन देहेन्द्रियाद्यतिरिक्तमात्मानं कल्पयन्ति। यतो हीदानीं कृतानां यागादिविहितकर्मणां फलस्य स्वर्गस्यामुष्मिकत्वात्, यः कर्ता स एव भोक्तेति नियमेन सर्वत्र कर्तृभोक्तृशब्दयोः सामानाधिकरण्याच्च बौद्धाभिमतस्य क्षणिकविज्ञानरूपस्य बुद्धेः कर्तृत्वभोक्तृत्वयोरनुपपन्नत्वात्, शरीरेन्द्रियाणां च विनश्यमानत्वेनानित्यत्वान्नहि तेषां लोकान्तरप्राप्तिः संभवतीति शरीरेन्द्रियबुद्धिभ्यो भिन्नः कश्चन नित्य आत्मा स्वीकर्तव्य इति मीमांसकाभिप्रायः, अन्यथा स्वर्गाद्यामुष्मिकफल-प्रतिपादकवेदवाक्यानामप्रामाण्यापत्तेः। तदुक्तं कुमाररिलभट्टेन—

---

आत्मस्वरूप की अपेक्षा यद्यपि सांख्याभिमत आत्मा की श्रेष्ठता सुस्पष्ट है। तथापि अद्वैताभिमत आत्मा की अपेक्षा इसकी कनिष्ठता सुविदित होती है। अतएव भगवत्पाद शङ्कराचार्य ने प्रधानमल्लनिबर्हणन्याय से सांख्यमतनिरास हेतु सुमहान् प्रयत्न किया है।

## मीमांसाभिमत आत्मस्वरूप-विवेचन

दार्शनिकों के मध्य विराजमान मीमांसकों ने **स्वर्गकामो यजेत** इत्यादि विधिवाक्यों के अनुरोध से देहेन्द्रियादिव्यतिरिक्त आत्मा की कल्पना की है। कारण सुस्पष्ट है–इस समय अनुष्ठित यागादि विहित कर्मों का फल-स्वर्ग इहलोक में नहीं प्रत्युत आमुष्मिक (परलोक) में सुप्राप है। जो कर्ता है वह भोक्ता है ऐसा नियम होने से सर्वत्र कर्तृशब्द एवं भोक्तृशब्द के सामानाधिकरण्य होने से, बौद्धाभिमत क्षणिकविज्ञान रूप बुद्धि की कर्तृता एवं भोक्तृता के अनुपपन्न होने से तथा विनाशी शरीर एवम् इन्द्रियों के अनित्य होने से शरीरादि को लोकान्तर की प्राप्ति सम्भव नहीं है। अतः शरीर, इन्द्रिय एवं बुद्धि से व्यतिरिक्त कोई नित्य आत्मा स्वीकार्य है–यह मीमांसकों का सुस्पष्ट अभिप्राय है। शरीरादिव्यतिरिक्त नित्य आत्मा का अस्वीकार होने से स्वर्गादि आमुष्मिक फल के प्रतिपादक वेदवाक्यों का अप्रामाण्य आपादित होगा। इस अभिप्राय का आविष्करण आचार्य कुमारिलक्षट्ट् ने निम्नाङ्कित प्रकार से किया है—

तस्माद् वेदप्रमाणार्थमात्मात्र प्रतिपाद्यते।

....................................

शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तत्वमात्मनः।
नित्यत्वं चेष्यते शेषं शरीरादि विनश्यति[१]।।इति।

उक्तं च पार्थसारथिमिश्रेणापि—"स्वर्गकामादिश्रुतयो हि शरीरातिरिक्तं परलोकफलोपभोगयोग्यं कर्तारमन्तरेणानुपपद्यमानास्तमाक्षिपन्ति, ताभिश्चाक्षिप्तं साक्षादेवोपनिषदः समर्थयन्ति "अविनाशी वा अरेऽयमात्मा" इत्येवमादय इति सिद्धः शरीरातिरिक्तो मानसप्रत्यक्षरूपोऽहंप्रत्ययगम्यो ज्ञाता"[२] इति।

अत्र हि मीमांसादर्शने प्राभाकरसम्प्रदायो भाट्टसम्प्रदायश्चेति द्वौ सम्प्रदायौ वर्तेते। तत्र प्राभाकरा जीवात्मनः स्वरूपं पूर्वोक्तन्यायमतानुरूपमेव प्रतिपादयन्ति। अस्मिन् मतेऽप्यात्मा देहेन्द्रियादिभ्यो भिन्नो नित्यो विभुश्च। अयं चात्मा स्वरूपतो जडः, मनःसंयोगे सति तत्र ज्ञानं गुण उत्पद्यते।

---

तस्माद् वेदप्रमाणार्थम्......।।

शरीरेन्द्रिय......शरीरादि विनश्यति।।२।।

आचार्य पार्थसारथि मिश्र ने भी प्रतिपादित किया है— स्वर्गकामो यतेत इत्यादि श्रुतियाँ परलोकफलोपभोगयोग्य शरीरातिरिक्त कर्ता की स्वीकृति के बिना अनुपपन्न हैं अत: वह कर्ता (नित्यआत्मा) की आक्षेपलभ्यता का उपकल्पन करती हैं। विधिश्रुतियों से आक्षिप्त आत्मा का समर्थन साक्षाद् उपनिषदों द्वारा किया गया है। तद्यथा—"अविनाशी वा अरेऽयमात्मा।" इत्यादि। एतावता शरीरातिरिक्त नित्य आत्मा की सिद्धि अप्रत्यूह है। वह मानसप्रत्यक्षरूप है, अहम्प्रत्ययगम्य है तथा ज्ञाता है।

इस मीमांसा दर्शन में प्राभाकरसम्प्रदाय तथा भाट्टसम्प्रदाय प्रधान हैं। इनमें प्राभाकर दार्शनिक जीवात्म-स्वरूप के सन्दर्भ में न्यामत का अनुवर्तन करते हैं। इस मत में आत्मा-देह, इन्द्रियादि से भिन्न होने के साथ नित्य एवं विभु है। यह आत्मा स्वरूपत: जड है किन्तु मनःसंयोग होने के अनन्तर उसमें ज्ञान-गुण की उत्पत्ति होती है। इससे विशिष्ट आत्मा चेतन कहलाता है। सुषुप्ति अवस्था में मनस् पूरीतत् नाडी में प्रविष्ट हो जाता है अत: उस समय मनस् के साथ संयोग के अभाव होने से आत्मा

---

१. श्लो० वा० ६-७, पृ० ४८१.
२. शा० दो० १।१।५, पृ० १२२.

तज्ज्ञानगुणविशिष्टः सन् चेतन इत्युच्यते। सुषुप्तौ मनसः पुरीतति नाड्यां प्रविष्टत्वात् तदानीं मनसा सह संयोगाभावाच्चात्मा सर्वज्ञानशून्यः सन् जड इवावतिष्ठते। अत एव सुप्तोत्थितः पुरुषः 'न किञ्चिदवेदिषम्' इति वदति। एतेन सर्वलोकानुभवेन सुषुप्तावात्मनः सर्वज्ञानशून्यत्वं सुतरां सिद्ध्यति। जाग्रदवस्थायां तु मनःसंयोगसंभवाद् ज्ञानगुणोत्पत्तिः, तथा आत्मनश्चेतनरूपेण व्यवहारः। एवमेवात्ममनःसंयोगेनैव सुखदुःखेच्छाद्वेष-धर्माधर्मसंस्काराणामात्म-विशेषगुणानामुत्पत्तिमङ्गीकुर्वतां प्राभाकराणामात्मस्वरूपविषयको विचारो न न्यायमतविलक्षणः[१]। अस्ति च वैलक्षण्यं तदात्मज्ञानविषयके विचारे। नैयायिका आत्मनो मानसप्रत्यक्षविषयत्वमङ्गीकुर्वन्ति, प्राभाकरास्तु पदार्थज्ञानाश्रयत्वेनात्मनो ज्ञानं प्रतिपादयन्ति। तदुक्तं शालिकनाथमिश्रेण–

बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते[२]।। इति।

---

सर्वज्ञानशून्य एवं जडरूप से स्थित रहता है। अतएव सोकर जगा हुआ व्यक्ति "न किञ्चिदवेदिषम्" (मैंने सुषुप्तिकाल में कुछ भी नहीं समझा।) ऐसा बोलता है। यह अनुभव सर्वलोकसिद्ध है। इस अनुभूति के आधार पर सुषुपित अवस्था में आत्मा की सर्वज्ञानशून्यता सुतरां प्रमाणित होती है। इसके विपरीत जाग्रद्-अवस्था में मनःसंयोग होने से आत्मा में ज्ञानगुण की उत्पत्ति होती है तथा आत्मा का व्यवहार चेतनरूप से होता है। इसी प्रकार आत्मा और मनस् का संयोग होने से ही सुख, दुःख, इच्छा, द्वेष, धर्म, अधर्म एवं संस्कार इन विशेष गुणों की उत्पत्ति मानने वाले प्रभाकर मतानुयायियों का आत्मस्वरूप- विषयक विचार न्यायमत से विलक्षण नहीं माना जा सकता है। आत्मज्ञान-विषयक विचार में नैयायिक एवम् प्रभाकर दार्शनिकों का वैलक्षण्य, दृष्टिगोचर होता है। नैयायिक आचार्यगण, आत्मविषयक मानस प्रत्यक्ष का अङ्गीकार करते हैं। इसके विपरीत प्रभाकरानुयायी मीमांसक आचार्यगण, विभिन्न पदार्थों के ज्ञान का आश्रय होने से आत्मविषयक ज्ञान की उत्पत्ति का प्रतिपादन करते हैं। अतएव आचार्य शालिकनाथ मिश्र ने सुस्पष्ट कहा है—

बुद्धीन्द्रियशरीरेभ्यो .................भासते।।१।।

प्रभाकर मत में केवल आत्मविषयक ज्ञान का अङ्गीकार नहीं किया जाता प्रत्युत पदार्थज्ञान के आश्रय होने से आत्मविषयक ज्ञान की उपपत्ति की जाती है। तद्यथा— घटादि पदार्थों के ज्ञान की उत्पत्ति के अवसर पर ही ज्ञान-प्रकाश से ज्ञाता

---

१. न्या० प्र०, पृ० २७९.
२. प्र० पं०, पृ० १४१.

प्रभाकरमते नहि केवलस्यात्मनो ज्ञानं भवति, किन्तु पदार्थज्ञानाश्रयत्वेन। तथाहि–घटादिपदार्थज्ञानावसर एव ज्ञानप्रकाशेन ज्ञाता ज्ञेयं च प्रकाशेते। अत्र हि ज्ञानस्य आत्माश्रितगुणत्वात् स्वप्रकाशत्वाच्च तज्ज्ञानं स्वयं प्रकाशमानं सत् स्वाश्रयमात्मानं स्वविषयं घटं च प्रकाशयति। अत एव घटमहं जानामीति प्रयोगः। अयमेव 'त्रिपुटिप्रत्यक्षसिद्धान्तः' इत्युच्यते। प्रभाकरमते नैयायिकादेरिव आत्मा जडद्रव्यम्, अथापि स ज्ञानाश्रयः, अत एव घटपटादि-सर्वपदार्थज्ञानसमयेऽहमित्यात्मा तदाश्रयत्वेन प्रतीयत एव। पदार्थमन्तरा केवलस्यात्मनो ज्ञानं कदापि न भवति, ज्ञेयाभावे ज्ञातुरप्यभावात्। अन्यथा सुषुप्त्यवस्थायामप्यात्मनो ज्ञानं स्यात्, तत्रात्मनो विद्यमानत्वेऽपि पदार्थानामभावात्। तत्रात्मज्ञानव्यतिरेके पदार्थव्यतिरेक एव कारणमिति प्राभाकरास्त्रिपुटिप्रत्यक्षसिद्धान्तमङ्गीकुर्वन्ति[1]। उक्तं च शालिकनाथेन–"एवं च

---

एवं ज्ञेय प्रकाशित होते हैं। इस मत में यतश्च ज्ञान को आत्मा का आश्रित गुण माना जाता है तथा ज्ञान को स्वप्रकाश माना जाता है अतः वह ज्ञान स्वयं प्रकाशमान होता हुआ स्वाश्रय आत्मा एवं स्वविषय घट को भी प्रकाशित करता है। यतश्च ज्ञान, आत्मा एवं घट तीनों प्रकाशित होते हैं अतः यह प्रतीति (प्रयोग) सर्वजनसिद्ध है— "घटमहं जानामि।" दर्शन जगत् में यह "त्रिपुटिप्रत्ययसिद्धान्त" शब्द से जाना जाता है। प्रभाकर मत में नैयायिकादि की तरह आत्मा जडद्रव्य है तथापि वह ज्ञान का आश्रय है। अतएव घट, पट इत्यादि समस्त पदार्थों के ज्ञान के समय ज्ञान के आश्रयरूप से "अहम्" रूप से उल्लिख्यमान आत्मा प्रतीत होती है। पदार्थ (घट, पट आदि विषय) के बिना केवल आत्मा का ज्ञान कदापि नहीं होता है। कारण सुस्पष्ट है— ज्ञेय के अभाव में ज्ञाता का भी अभाव होता है। यदि ज्ञेय के अभाव में भी आत्मा को ज्ञाता माना जाय अथवा ज्ञाता न मानने पर भी आत्मा का प्रत्यक्षज्ञान माना जय तो सुषुप्ति अवस्था में भी आत्मविषयक ज्ञान की आपत्ति होने लगेगी। सुषुप्ति अवस्था में आत्मा की विद्यमानता रहने पर भी ज्ञेय पदार्थों का ज्ञान नहीं होने से आत्मा का ज्ञान नहीं होता है— यह सभी दार्शनिकों का मान्य सिद्धान्त है। एवं च यह निष्कर्ष प्राप्त होता है कि आत्मज्ञान के अभाव के प्रति पदार्थव्यतिरेक ही कारण होता है। अतएव प्रभाकर के अनुयायी मीमांसक आचार्य, त्रिपुटीप्रत्यक्ष के सिद्धान्त को स्वीकारते हैं। इस सन्दर्भ में आचार्य शालिकनाथ ने स्पष्टता से कहा है— "एवं च विषयवित्तिगोचरत्वादात्मनो विषयवेदनोपायोपरमे स्वापादिष्वप्रकाशो युक्त एवं पुरुषस्य।" इति।

---

१. दासगुप्तकृत भारतीय दर्शन का इतिहास, भाग १, पृ० ४०६-४०७.

विषयवित्तिगोचरत्वादात्मनो विषयवेदनोपायोपरमे स्वापादिष्वप्रकाशो युक्त एव पुरुषस्य"[1] इति। भाट्टसम्प्रदायेऽप्यात्मा शरीरेन्द्रियमनोबुद्धिभ्यो व्यतिरिक्तो नित्यो विभुः प्रतिशरीरं भिन्न इति स्वीक्रियते। आत्मनो नित्यत्वप्रतिपादनार्थमेव तस्य विभुत्वं स्वीक्रियते भाट्टैः।

## आत्मनो विभुत्वम्

नन्वणोरपि नित्यत्वसम्भवात्, "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा"[2] इत्याद्युपनिषत्सु आत्मनोऽणुत्वस्य प्रतिपादितत्वाच्च अणुरेव स्यादात्मा, किमर्थं तस्य विभुत्वमुच्यते? इति चेन्न, आत्मनोऽणुत्वे शिरसि मे वेदना, पादे मे सुख-मित्यादिरूपेण पादशिरआद्यवच्छेदेन देवदत्तस्य युगपत् सुखदुःखाद्यननुभवापत्तिः। मध्यमपरिमाणत्वे च सावयवत्वादनित्यत्वापत्तिः। अपरं च–"अनन्तमपारम्"[3],

---

भाट्टसम्प्रदाय में भी स्पष्ट रूप से यह स्वीकार किया जाता है— आत्मा, इन सबों (शरीर, इन्द्रिय, मनस् एवं बुद्धि) से व्यतिरिक्त है, नित्य है, विभु है एवं प्रतिशरीर भिन्न-भिन्न है। आत्मा की नित्यता के प्रतिपादन हेतु खासकर भाट्ट सम्प्रदाय में आत्मा की विभुता को स्वीकार किया जाता है।

## आत्मा की विभुता

जिज्ञासा उदित होती है कि नित्य होने के लिए विभु होना आवश्यक नहीं होता। अणु होने से भी पार्थिवादि परमाणुओं की नित्यता सुप्रसिद्ध है। "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा।" इत्यादि उपनिषद्-वाक्यों में आत्मा की अणुता के प्रतिपादित होने से आत्मा की अणुता का सिद्धान्त ही समुचित प्रतीत होता है। ऐसी स्थिति में आत्मा की विभुता का प्रतिपादन समीचीन नहीं है।

इसका समाधान है— आत्मा को अणु मानने से "मेरे सिर में वेदना है किन्तु पैर में सुख है।" इस तरह की प्रतीति पर आधारित देवदत्त को एक-कालावच्छेदेन पाद एवं सिर के अवयवों में सुख एवं दुःख की अनुभूति उपपन्न नहीं हो सकेगी। यदि इस प्रतीति-सिद्ध अनुभूति की उपपत्ति हेतु आत्मा के मध्यम-परिमाण को स्वीकारा जाय तो नई आपत्ति खड़ी होगी। मध्यमपरिमाण होने से आत्मा के सावयव होने से उसकी अनित्यता अनिराकृत होगी।

---

१. प्र० पं०, पृ० १५३.

२. कठ० ६।१७.

३. बृ० उ० २।४।१२.

"नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः"[१] इत्यादिश्रुतिस्मृत्यादिभिरप्यात्मनो विभुत्वं नित्यत्वं च प्रतिपादितम्। उपनिषत्स्वात्मनो यदणुत्वप्रतिपादनम्, तत्तस्य सूक्ष्मताप्रतिपादनार्थमित्यवधेयम्। अत आत्मा विभुरेव[२]।

## आत्मनो नानात्वम्

ननु विभुत्वादेक एवात्मा भवतु, किमर्थं प्रतिशरीरं भिन्नत्वेन नानात्वाङ्गीकार इति चेन्न, यद्यात्मन एकत्वं स्यात्तदा यथा करचरणाद्यवयव-भेदेऽपि देवदत्तश्चक्षुषा दृष्टमर्थं मनसा स्मरति त्वचा च प्रत्यभिजानाति, तथा शरीरभेदेऽप्यात्मन एकत्वाद् देवदत्तशरीरेण दृष्टस्यार्थस्य यज्ञदत्तशरीरेण स्मरणापत्तिः। कर्तुरेकत्वेऽपि मनोभेदात् तद्व्यवस्थेत्यपि वक्तुं न शक्यते,

---

अन्य कारणों से भी आत्मा की विभुता एवं नित्यता का सिद्धान्त मीमांसा-दर्शन में प्रतिपादित किया गया है। "अनन्तमपारम्" "नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।" इत्यादि श्रुतिवाक्य एवम् स्मृतिवाक्य, आत्मा की अबाधित व्यापकता एवम् नित्यता को स्पष्ट रूप से प्रतिपादित करते हैं। कतिपय उपनिषद् वाक्यों में आत्मा की अणुता का प्रतिपादन उसकी सूक्ष्मता के तात्पर्य से ही किया गया है। अतः आत्मा की विभुता का सिद्धान्त सर्वथा निरापद है।

## आत्मा की अनेकता

जिज्ञासा उदित होती है कि आत्मा जब विभु है तब उसका एकत्व सिद्धान्त समुचित प्रतीत होता है। ऐसी स्थिति में आत्मा का प्रतिशरीर भिन्न होने पर आधारित आत्मा-नानात्व सिद्धान्त समीचीन नहीं है।

इसका समाधान है— यदि आत्मैक्य-सिद्धान्त का अङ्गीकार करेंगे तो जिस प्रकार हाथ-पैर आदि अवयव-भेद होने पर भी देवदत्त आँखों से दृष्ट वस्तु को मन से स्मरण करता है एवं त्वचा से प्रत्यभिज्ञान करता है तद्वत् शरीर-भेद होने पर भी आत्मा के ऐक्य होने से देवदत्त-शरीर से दृष्ट अर्थ (वस्तु) का यज्ञदत्त-शरीर से स्मरण होने की आपत्ति अनिराकृत होगी। कर्ता के एक होने पर भी मनस् के भिन्न होने से उक्त आपत्ति निराकृत होगी एवम् व्यवस्था निर्दुष्ट होगी—यह समाधान नहीं दिया जा सकता। कारण यह है कि स्मरण के प्रति मनस् करण होता है। यदि करणभेद से व्यवस्था की उपपत्ति मान्य हो तो चक्षुष् आदि द्वारा भी व्यवस्था की उपपत्ति हो सकेगी। चक्षुष् आदि में सामर्थ्य नहीं होने से मनस्-करण ही व्यवस्था

---

१. भ० गी० २।२४.

२. शास्त्रदीपिका १।१।५, पृ० १२४.

मनसोऽपि करणत्वात्, अन्यथा चक्षुरादिभिरपि तद्व्यवस्था स्यात्। ननु चक्षुरादीनां सामर्थ्याभावान्मनःकरणमेव तत्र समर्थमित्यपि वक्तुं न शक्यते, करणत्वाविशेषात्। अपि च, एकात्मवादस्तदा स्वीकारार्हो भवेत्, यदि नानात्मवादे प्रबलं प्रमाणं नोपलभ्येत। प्रकृते तु–'निरञ्जनः परमं साम्यमुपैति"[१], "मम साधर्म्यमागताः"[२] इत्यादिश्रुतिस्मृतिषु भेदस्य प्रतिपादितत्वात्।

किञ्च, यत्र पुनः श्रुतिवचनानां परस्परविरोधः संभवति, तत्र प्रमाणान्तरेण तन्निश्चयः कर्तव्यः। अतः प्रकृते प्रत्यक्षेव प्रमाणं भेदप्रतिपादकं विद्यते। तथा भेदे सत्येव प्रपञ्चवैलक्षण्यं बन्धमोक्षव्यवस्था च सम्भवतीति युक्त्याऽऽत्मनानात्ववादस्वीकार एव श्रेयान्। यत्र त्वात्मन एकवचनप्रयोगा दृश्यन्ते, ते जात्येकवचनाभिप्राया इति मन्तव्यमिति भाट्टाभिप्रायः। अत

---

का उपपादक है–यह कथन भी युक्ति संगत नहीं है क्योंकि कारणत्व चक्षुष् आदि में भी मनस् की तरह अविशेषरूप से विद्यमान रहता है।

यह भी विशेषरूप से ध्यातव्य है— एकात्मवाद का स्वीकार तभी किया जा सकता है जब नानात्मवाद-पक्ष में विनिगमनास्वरूप प्रबल प्रमाण उपलब्ध नहीं होता। नानात्मवाद के पोषक जीवेशभेद एवम् परस्परजीवभेद के प्रतिपादक सुस्पष्ट अनेक श्रुतिवाक्य एवं स्मृतिवाक्य प्राप्त होते हैं। तद्यथा— "निरञ्जनः परमं साम्यगुपैति।" एवम् "मम साधर्म्यमागताः।" इत्यादि।

अन्यदपि ध्यातव्य है कि जिस सन्दर्भ में श्रुतिवचनों का परस्परविरोध उपस्थित होता है वहाँ प्रमाणान्तर (अन्य प्रमाण) से निर्णय ग्राह्य होता है। प्रकृत में प्रत्यक्ष प्रमाण द्वारा भेद का प्रतिपादन होने से संशय ही उदित नहीं होता। युक्ति भी आत्मभेद का ही समर्थन करती है। आत्मभेद होने पर ही प्रपञ्च-वैलक्षण्य एवं बन्ध-मोक्ष की व्यवस्थिता स्वरसतः युक्ति संगत होती है। अतः आत्मनानात्व का सिद्धान्त प्रशस्त है। शास्त्रों में जहाँ आत्मा के सन्दर्भ में एक वचन के प्रयोग प्राप्त हैं वे जाति के एकवचन अर्थ पर आधारित हैं अतः व्यक्तिभेद का बाध नहीं होता। कुमारिलभट्टके अनुयायी दृढ़ता से आत्मनानात्व का सर्वथा समर्थन उपर्युक्त प्रकार से करते हैं। अतएव उनका यह कथन प्रवृत्त होता है— "तस्य इस पद में आत्मा के लिए प्रयुक्त एकवचन सामान्य (जाति) के अभिप्राय से सम्बद्ध है। अतः प्रति शरीर में भिन्न-भिन्न आत्मा सर्वगत (विभु) तथा नित्य हैं।

---

१. मुण्ड० ३।१।३.
२. भ० गी० १४।२.

एवोक्तम्–"तस्येति चैकवचनं सामान्याभिप्रायम्। तस्मात् प्रतिशरीरं भिन्ना एवात्मानः सर्वगता नित्याः। एवं च बद्धमुक्तादिव्यवस्थापि युक्ततरा भवति"[१] इति। एतावदुक्तमिदमात्मस्वरूपं नैयायिकाभिमतप्राभाकराभिमतात्मस्वरूपेण तुल्यमेव।

भाट्टास्त्वितोऽपि किञ्चिद्वैलक्षण्येनात्मस्वरूपं निदर्शयन्त आत्मनि कर्मणोऽप्यस्तित्वं प्रतिपादयन्ति। एतन्मतानुसारेण कर्म तावद् द्विविधम्– स्पन्दात्मकं परिणामात्मकं चेति। तत्र स्थानपरिवर्तनरूपं स्पन्दाख्यं कर्म, स्वरूपपरिवर्तनरूपं तु परिणामात्मकं कर्म। अत्रात्मनो विभुत्वात् तस्मिन् स्पन्दाख्यस्य कर्मणोऽभावेऽपि परिणामात्मकं तु संभवत्येवेति भाट्टानामाशयः। उक्तं च कुमारिलभट्टेन–

**यजमानत्वमप्यात्मा सक्रियत्वात् प्रपद्यते।**
**न परिस्पन्द एवैकः क्रिया नः कणभोजिवत्[२]।।इति।**

---

आत्मनानात्व-सिद्धान्त में बद्ध एवं मुक्त की व्यवस्था भी युक्ति से उपोद्बलित होती है।" उपर्युक्त आत्मस्वरूप नैयायिक एवं प्रभाकर उभयसम्मत है।

श्रीकुमारिलभट्ट के अनुयायी तो उक्त प्रकार से कुछ विलक्षण आत्मस्वरूप का निदर्शन करते हुए आत्माधिकरणक कर्म के अस्तित्व का प्रतिपादन भी करते हैं। इस मत में कर्म के दो प्रभेद मान्य हैं—स्पन्दात्मक एवम् परिणामात्मक। स्पन्दसंज्ञक कर्म में स्थान का परिवर्तन अनुमान्य है तथा परिणामसंज्ञक कर्म में स्वरूप का परिवर्तन अनुमान्य है। आत्मा यतः विभु है अतः उसमें स्पन्दसंज्ञक कर्म की सम्भावना नहीं है किन्तु उसमें स्वरूप-परिवर्तन रूप परिणामसंज्ञक कर्म एष्टव्य है— यह भट्टानुयायियों का आशय है। अतएव श्री कुमारिल भट्ट ने सुस्पष्ट कहा है—

यजमानत्वमप्यात्मा..................कणभोजिवत्।।१।।

इसका अर्थ है— वैशेषिक दार्शनिक, कर्म पदार्थ के पाँच प्रभेद (उत्क्षेपण, अपक्षेपण, आकुञ्चन, प्रसारण एवं गमन) को स्पन्दात्मक मानते हैं। यह परिगणन न्यूनतादोष से ग्रस्त है क्योंकि आत्मा में उत्पन्न होने वाला कर्म स्पन्दात्मक नहीं प्रत्युत परिणामात्मक है जिसका कर्म-प्रभेद में अन्तर्भाव नहीं किया जा सकता। यहाँ जिज्ञासा उदित होती है कि आत्मा में परिणामात्मक कर्म का स्वीकार किये जाने पर आत्मा परिणामी होगा परिणामस्वरूप आत्मा की अनित्यता का आपादन होगा।

---

१. शा० दी० १।१।५, पृ० १२५.
२. श्लो० वा० ७४, पृ० ५०१.

अस्यायमर्थः—यथा काणादा उत्क्षेपणादिरूपेण पञ्चविधं स्पन्दात्मकं कर्माङ्गीकुर्वन्ति, किन्तु आत्मन्युत्पद्यमानं कर्म न तादृग्रूपम्, न परिणामात्मकमित्यर्थः। आत्मनः परिणामित्वेऽनित्यत्वापत्तिरिति च न शङ्कनीयम्, भाट्टमते परिणामित्वेऽपि नित्यत्वाङ्गीकारात्। एतन्मतानुसारेणात्मा खद्योतवत् चिदचिदंशात्मकः। अत्र चिदंशेनात्मा जानाति, अचिदंशेन च परिणमते। अतो न्यायमतोक्ता ये सुखदुःखादय आत्मनो विशेषगुणत्वेन स्वीकृताः, त एव भाट्टमते आत्मनोऽचिदंशस्य परिणामाः स्वीक्रियन्ते। तदुक्तं भाट्टमतमुद्दिश्य काश्मीरकश्रीसदानन्दयतिना—"चिदंशेन द्रष्टृत्वं सोऽहमिति प्रत्यभिज्ञाविषयत्वं च, अचिदंशेन च ज्ञानसुखादिरूपेण परिणामित्वमिति विशेषः"[1] इति।

नन्वत्र शङ्का जागर्ति यदेवं विभुरूपस्यात्मनः सुखादिरूपेण परिणामित्वस्वीकारेऽनित्यत्वापत्त्या कृतहानाकृताभ्यागमदोषः स्यादिति चेन्न, अवस्थापरिणामे यथा बालयुवाद्यवस्थासु प्राप्तासु सतीषु योऽहं सोऽहमित्यादिना प्रत्यभिज्ञानान्यथाऽनुपपत्त्यैकपुरुषत्वमङ्गीक्रियते, यथा वा कुण्डलाद्याकारेण परिणतस्य सुवर्णस्य नहि सुवर्णत्वं विनश्यति, एवमेव सुखाद्यवस्थासु

---

इसका समाधान है— भाट्टमत में परिणामिता को नित्यता का विरोधी नहीं माना जाता। तद्यथा—भाट्ट मत में आत्मा को खद्योत की तरह चिदचिदंशात्मक माना जाता है। आत्मा अपने चिदंश से वस्तुविषयक ज्ञानवान् होता है तथा अचिदंश से परिणामयुक्त होता है। न्यायसिद्धान्त में सुखदुखादि को आत्मा का विशेषगुण बताया गया है जबकि भाट्टमत में इन्हें आत्मा के अचिदंश का परिणाम माना गया है। अतएव काश्मीरनिवासी श्री सदानन्द यतिवर ने भाट्टमत सिद्ध आत्मा की चिदचिद्रूपता का विश्लेषण निम्नाङ्कित रूप से किया है— "चिदंश से आत्मा में द्रष्टृता तथा सोऽहं-प्रतीतिमूलक प्रत्यभिज्ञाविषयता रहती है तथा अचिदंश से उसमें ज्ञानसुखादिरूप से परिणामिता रहती है— यह विवेक्तव्य है।"

इस सन्दर्भ में स्वरसतः यह शङ्का उदित होती है— विभुरूप आत्मा की सुखादिरूप से परिणामिता का स्वीकार करने से आत्मा की अनित्यता आपादित होगी। एवञ्च परलोक में भोक्तव्य स्वर्गादिफल के साधन ज्योतिष्टामादि याग के अनुष्ठानकर्ता द्वारा इहलोक में किये गये अनुष्ठान का हान एवम् अननुष्ठापक को स्वर्गफलप्राप्ति – दूषण उपस्थित होंगे।

---

१. अ० ब्र० सि०, पृ० १७१.

तद्रूपेणात्मनः परिणामित्वेऽपि प्रत्यभिज्ञानसंभवान्नात्मनोऽत्यन्तविनाश इति न कृतहानाकृताभ्यागमौ दोषौ। उक्तं कुमारिलभट्टेन–

स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ।
न त्ववस्थान्तरप्राप्तौ लोके बालयुवादिवत्।।
अवस्थान्तरभाव्येतत् फलं मम शुभाशुभम्।
इति ज्ञात्वानुतिष्ठंश्च विजहच्चेष्टते जनः।।
अनवस्थान्तरप्राप्तिर्दृश्यते न च कस्यचित्।
अनुच्छेदात् तु नान्यत्वं भोक्तुर्लोकोऽवगच्छति।।
सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम।
चैतन्यद्रव्यसत्तादिरूपं नैव विमुञ्चति।।
दुःखिनः सुख्यवस्थायां नश्येयुः सर्व एव ते।
दुःखित्वं चानुवर्तेत विनाशे विक्रियात्मके।।

---

इसका समाधान है–यथा अवस्थापरिणाम होने पर भी बाल्यावस्था से युवावस्था की प्राप्ति होने पर योऽहं तथा सोऽहं की प्रत्यभिज्ञा की अन्यथा अनुपपत्ति पर आधारित पुरुषैकत्व का अङ्गीकार किया जाता है। तथा कुण्डलादि-रूपों में परिणत होने पर भी सुवर्णरूपता विनष्ट नहीं होती है। तद्वत् सुखदुःखादि रूपों में आत्मा की परिणामिता होने पर भी प्रत्यभिज्ञा की अनुपपन्नता नहीं होगी तथा आत्मविनाश भी प्राप्त नहीं होगा। एतावता उपर्युक्त दूषणों का आपादन स्वतः निरस्त हो जायेगा। इसकी विशद विवेचना कुमारिलभट्ट महोदय ने की है–

स्यातामत्यन्तनाशेऽस्य....................बालयुवादिवत्।।१।।
अवस्थान्तरभाव्येतत् ....................विजहच्चेष्टते जनः।।२।।
अनवस्थान्तरप्राप्तिर्दृश्यते ....................भोक्तुर्लोकोऽवगच्छति।।३।।
सुखदुःखाद्यवस्थाश्च ..........................विमुञ्चति।।४।।
दुःखिनः ....................विक्रियात्मके।।५।।
तस्मादुभय-हानेन ........................स्वर्णवत्।।६।।

यहाँ जिज्ञासा उदित होती है कि आत्मा में परिणामात्मक कर्म की विद्यमानता हो किन्तु विभु होने से उसमें स्पन्दात्मक कर्म की सम्भावना निरस्त होने से "स्वर्गकामो यजेत" विधिस्थल में यागकर्म में स्पन्दरहित आत्मा की कर्तृता सुघटित नहीं होगी। एतावता प्रत्यक्षसिद्ध शरीर की ही कर्तृता अनुमान्य होगी।

तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः।
पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु स्वर्णवत्[1]।।इति।

नन्वेवं परिणामात्मकस्य कर्मण आत्मनि विद्यमानत्वेऽपि तस्य विभुत्वात् स्पन्दाख्यं हि कर्म आत्मनि नोत्पद्यत इत्युक्तत्वाच्च–"स्वर्गकामो यजेत" इत्यत्र यजनकर्मणि कथमात्मनः कर्तृत्वम्। प्रत्यक्षसिद्धत्वात् शरीरस्यैव कर्तृत्वमुच्यतामिति चेन्न, यद्यपि प्रत्यक्षतः शरीरेणैव यागस्य सम्पाद्यमानत्वात् शरीरमेव कर्तेति प्रतीयते, अथापि शरीरस्याचेतनत्वात् स्वतस्तत्र स्पन्दाभावादात्माधिष्ठितस्यैव तस्य स्पन्दः, अन्यथा मृतशरीरेणाऽपि स्पन्दापत्तेः। तदुक्तं कुमारिलभट्टेन–

सत्ताज्ञानादिरूपाणां कर्ता तावत् स्वयं पुमान्।
योऽपि भूतपरिस्पन्दस्तत्राधिष्ठानतो भवेत्[2]।।इति।

अत्र "यागादीनामादिशब्देन ग्रहणम्" इति पार्थसारथिमिश्रेण न्यायरत्नाकराख्यव्याख्यायां प्रतिपादितत्वात् सत्ताज्ञानादीत्यत्रादिशब्देन यागादीनां ग्रहणमिति यागस्यापि कर्ता आत्मैव।

यद्यपि "यस्य व्यापारं धातुराह स कर्ता" इति स्मरणाद् धातूक्तक्रिया–

---

इसका समाधान है— यद्यपि शरीर द्वारा ही याग की सम्पाद्यता प्रत्यक्षसिद्ध है तदनुसार शरीर में कर्तृता प्रतीत होती है किन्तु अचेतन शरीर में स्वातन्त्र्य के अभाव होने से उसमें स्वतः स्पन्द सम्भव नहीं है। प्रत्युत आत्मा से अधिष्ठित शरीर में ही स्पन्दन की उपपत्ति सम्भव है। अन्यथा मृत शरीर भी स्पन्दान्वित होता। इसकी विशिष्ट उपपत्ति द्वारा आत्मा की कर्तृता कुमारिलभट्ट द्वारा निर्धारित की गई है—

सत्ताज्ञानादिरूपाणां .....................भवेत्।।१।।

यहाँ यागादि का आदि शब्द द्वारा गृहीत होना पार्थसारथिमिश्र ने अपनी न्यायरत्नाकर पुस्तक में प्रतिपादित किया है अतः याग का कर्ता भी आत्मा ही है।

यद्यपि यह नियम शास्त्र में प्रतिपादित है— "जिसके व्यापार को धातु प्रतिपादित करे वह कर्ता होता है।" तदनुसार धातु से प्रोक्त क्रिया जिस चेतन

---

१. श्लो० वा० २३-२८, पृ० ४९२.
२. श्लो० वा० ७६, पृ० ५०१.

समवायित्वमेव कर्तृत्वम्",[१] अथापि तत् क्वचित् साक्षात् क्वचिच्च परम्परयापि संभवति, यथा 'काष्ठं छिनत्ति देवदत्तः' इत्यत्र छेदनक्रियायाः परशौ समवेतत्वेऽपि तद्द्वारा देवदत्त एव कर्ता इत्युच्यते, तद्वत् प्रकृतेऽपि साक्षादात्मनो यागकर्तृत्वाऽसम्भवेऽपि शरीरद्वारा क्रियमाणस्य तस्य 'इदं मदिष्टसाधनम्' इत्याकारकसंकल्पसत्त्वादेवात्मनः कर्तृत्वं सिद्ध्यति। उक्तं च श्रीकुमारिलभट्टेन–

**क्रिया यथात्मनो नास्ति गमनादि तथैव हि।**
**विधीयते च तेनात्र परद्वाराऽस्य कर्तृता।।**
**यथा वा देवदत्तस्य च्छेदने काष्ठसंश्रिते।**
**कर्तृत्वमेवं पुंसः स्याच्छरीरगमनादिषु।।**
**व्यापारान्तरतस्तत्र कर्तृत्वं चेदिहापि नः।**
**संकल्पसत्त्वासत्त्वाभ्यां पुमानिष्टः प्रयोजकः[२]।।इति।**

---

में समवाय सम्बन्धेन विद्यमान रहता है वह कर्ता कहलाता है। तथापि इस सामान्य नियम में दो प्रकार की स्थितियाँ देखी जाती हैं। धात्वर्य क्रिया किसी स्थलविशेष में साक्षात् कर्तृनिष्ठ होती है तो अन्य स्थलविशेष में परम्परया। यथा "काष्ठं छिनत्ति देवदत्तः।" इस स्थल में छेदन क्रिया, परशु (करण) में समवाय सम्बन्ध से विद्यमान रहती है अतः परम्परया देवदत्त में छेदन क्रिया की समवायेन विद्यमानता रहने से ही देवदत्त कर्ता कहलाता है। तद्वत् **देवतत्तो यजते**–इस स्थल में भी यागकर्तृता आत्मा में साक्षात् विद्यमान नहीं रहती अपितु शरीर द्वारा सम्पादित की जाने वाली यागक्रिया "यह याग मेरे अभीष्ट स्वर्ग (सुखविशेष) का साधन है।" इस प्रकार का संकल्प आत्मनिष्ठ है अतः आत्मा की कर्तृता उपपन्न होती है। श्री कुमारिल भट्ट ने सुस्पष्ट कहा है—

क्रिया यथात्मनो नास्ति..........पुमानिष्टः प्रयोजकः।।३।। इति

उपर्युक्त प्रकार से यह सुविदित होता है कि कुमारिलभट्ट के प्रस्थान में स्पन्द क्रिया के प्रति आत्मा की प्रयोजक कर्तृता नहीं प्रत्युत तद्विलक्षण **साक्षात् कर्तृता** उपपन्न होती है अतः **देवदत्तः स्पन्दते**–प्रयोग में देवदत्त कर्ता कहलाता है। इसकी उपपत्ति पार्थसारथिमिश्र ने निम्नाङ्कित प्रकार से की है— "स्पन्द क्रिया जो शरीर में सुघटित होती है उस क्रिया में भी प्रेरणा के माध्यम से आत्मा की ही कर्तृता मानी

---

१. श्लो० वा० न्या०, पृ० ५०२.
२. श्लो० वा० न्या० ८१-८३, पृ० ५०२.

एवं भाट्टमते सर्वगस्याप्यात्मनः स्पन्दाख्ये कर्मणि प्रयोजकविलक्षणकर्तृत्वं संभवतीति भवत्येव स कर्ता। उक्तं च पार्थसारथिमिश्रेण—"स्पन्देष्वपि प्रयोजकत्वेनास्यैव कर्तृत्वं संभवति, प्रयत्नेन ह्यसौ शरीरं स्पन्दे प्रयोजयति। साक्षात्तु न संभवति, सर्वगते स्पन्दस्यासंभवादित्यनेनाभिप्रायेण पुराणेषूपनिषत्सु चाकर्तृत्ववादाः"[१] इति। तदेवं भाट्टाभिमतस्य खद्योतवच्चिज्जडात्मकस्यात्मनः परिणामित्वेऽपि नित्यत्वं विभुत्वेऽपि कर्तृत्वं च सिद्धम्।

प्राभाकरास्तु भाट्टवदात्मनश्चिदंशभागित्वं नाङ्गीकुर्वन्ति। अतः प्राभाकरमते ज्ञानसुखादयो नात्मनः परिणामाः, किन्त्वात्मना सह मनसः संयोगे सत्यात्मन्युत्पद्यमाना गुणाः।

## आत्मनो मानसप्रत्यक्षविषयत्वम्

भाट्टा अहमित्याकारकमानसप्रत्यक्षविषयत्वमात्मनः प्रतिपादयन्ति। तदुक्तं पार्थसारथिमिश्रेण—"मानसप्रत्यक्षरूपोऽहंप्रत्ययगम्यो ज्ञाता"[२] इति। यथा

---

जाती है जिसे असम्भव नहीं कहा जा सकता। क्योंकि स्वनिष्ठ प्रयत्न से जीवात्मा स्पन्द क्रिया में शरीर को प्रेरित करता है। यह स्पन्द क्रिया जीवात्मा में साक्षात् मान्य नहीं हो सकती। कारण यह है कि जो अपरिच्छिन्न है व्यापक होने से सर्वत्र विद्यमान है उसमें स्पन्द (हिलने डुलने की गुंजाइश) की सम्भावना नहीं हो सकती। इसी अभिप्राय से पुराणकारों ने तथा उपनिषदों ने आत्मा की अकर्तृता प्रतिपादित की है।"

इस प्रकार यह निष्कर्ष प्राप्त होता है— भाट्ट-मीमांसक-मत-सिद्ध आत्मा खद्योतसदृश चित् एवं जड-उभयात्मा है, अतः वह परिणामी होने पर भी नित्य है एवं विभु होने पर भी कर्ता है।

प्रभाकर के अनुयायी भाट्ट-सिद्धान्तसिद्ध-आत्मा की चिदंशता को नहीं स्वीकारते। अतः प्राभाकर मत में ज्ञान, सुख, दुःख आदि को आत्मा का परिणाम नहीं माना जाता किन्तु आत्मा के साथ मनस् का संयोग होने पर आत्मा में ज्ञानादि गुणों की उत्पत्ति मानी जाती है।

## आत्मा की मानस प्रत्यक्षविषयता

भाट्टमीमांसक, आत्मा की "अहम्" इत्याकारक मानस प्रत्यक्षविषयता को स्वीकारते हैं। पार्थसारथिमिश्र ने सुस्पष्ट कहा है— "आत्मा 'अहम् प्रत्यय' का विषय

---

१. शा० दी० १।१।५, पृ० ११९.

२. शा० दी०, पृ० १२२.

सुखादयो मानसप्रत्यक्षविषयाः, तथैव आत्माऽप्यहमित्याकारक-मनसैव प्रत्यक्षीक्रियते।

## आत्मनोऽस्वप्रकाशत्वम्

एवं मानसप्रत्यक्षविषयत्वादेव तस्य ज्ञानकर्मत्वादस्वप्रकाशत्वसिद्धिः। यद्यात्मा स्वप्रकाशः स्यात् तर्हि सुषुप्तावपि प्रकाशेत। ननु प्रबुद्धः पुरुषः 'सुखमहमस्वाप्सम्' इति स्मरति। स्मरणस्य च नियमेनानुभवापेक्षित्वात् सुषुप्तस्य सुखानुभवोऽङ्गीकर्तव्य एव इति चेत्? मैवम्, नहि तत्र कस्यापि सुखानुभवः, किन्तु तदानीं दुःखस्याभावाद् गुणवृत्त्या दुःखाभावे सुखव्यवहारः। तदुक्तं पार्थसारथिमिश्रेण–"प्रबुद्धा हि सुषुप्ताववगतं किञ्चिदपि दुःखमस्मरन्तः स्मरणानुपपत्त्यैव सुषुप्त्यवस्थायां मे न किञ्चिदपि दुःखमासीदित्यवगम्य तत्रैव सुखव्यवहारं गुणवृत्त्या कुर्वन्ति, तथा च व्यवहरन्ति–एतावन्तं कालमहमात्मानमप्यबुद्ध्वा शयितोऽस्मीति। तस्मात् सुषुप्तावप्रकाशान्नात्मनः

---

है, ज्ञाता है तथा मानसप्रत्यक्षविषय है।" जिस प्रकार सुख, दुःखादि गुणों का मानसप्रत्यक्ष होता है उसी प्रकार आत्मा का भी मानसप्रत्यक्ष होता है। "अहं सुखी" "अहं दुःखी" इत्यादि प्रकार से प्रतीति की आकलना होती है।

## आत्मा की अस्वप्रकाशता

यतश्च उपर्युक्त प्रकार से आत्मा में सुखादि की तरह मानस प्रत्यक्ष की विषयता है अतः ज्ञान का कर्म होने से आत्मा की अस्वप्रकाशता है। यदि आत्मा स्वप्रकाश होता तो वह सुषुप्ति में भी प्रकाशित होता। यहाँ जिज्ञासा उदित होती है— सोकर जगा हुआ पुरुष स्मरण करता है— "मैं सुखपूर्वक सोया था।" यतश्च यह नियम है कि अनुभव बिना स्मरण हो नहीं सकता अतः सुषुप्ति अवस्था में भी आत्मा की सुखानुभूति अवश्यमेव स्वीकार्य है।

इसका समाधान है— किसी भी व्यक्ति को सुषुप्ति में सुख की अनुभूति नहीं होती किन्तु उस अवस्था में दुःख के अभाव होने से दुःख के अभाव में सुख का व्यवहार मात्र होता है। अतएव पार्थसारथि मिश्र ने सुस्पष्ट कहा है— "प्रबुद्ध होने पर लोग सुषुप्तप्रतीत किसी भी दुःख का स्मरण नहीं करते यह स्मरणानुपपत्ति ही इस बात में प्रमाण है सुषुप्ति-अवस्था में आत्मा को किसी प्रकार का दुःख नहीं होता। इसे जानकर लाक्षणिक उपचार से दुःखाभाव में सुख व्यवहार करते हुए लोग ऐसा व्यवहार करते हैं— इतने काल तक मैं स्वयं को जाने बिना सोया रहा। अतः

स्वप्रकाशत्वम्, अतो मानसप्रत्यक्षगम्य एवायमिति स्थितम्''[१] इति। अत आत्मनो न केवलं ज्ञानकर्तृत्वमेव, अपि तु ज्ञानकर्मत्वमपि संभवतीति भाट्टानामभिप्रायः[३]।

प्राभाकरास्तु–आत्मज्ञानविषये भाट्टोक्तं मतमनङ्गीकुर्वन्त उक्तपक्षे कर्मकर्तृभावदोषमुद्भावयन्ति। उक्तं च शालिकनाथेन–''तत्र केचिदाहुर्मानसं प्रत्यक्षं सुखादिष्विवात्मनि प्रमाणमिति। तदयुक्तमिति प्राभाकरवराः। नह्येकस्य कर्तृत्वं कर्मत्वं च स्वापेक्षमुपपद्यते, स्वात्मनि क्रियावृत्तिविरोधात्''[४] इति।

भाट्टा उक्तदोषमेवं परिहरन्ति यन्नहि कर्मकर्तृभावः सर्वत्र दोषावहः। स्वकर्तृकायामेव क्रियायां कर्मव्यवहारः संभवत्येव लोके वेदे च। तथाहि– यथा लोके 'अहमात्मानं जानामि' इति प्रयोगो भवति, वेदेऽपि–''आत्मानं सततं

---

सुषुप्ति में अप्रकाशित होने से आत्मा की स्वप्रकाशता नहीं है अतः यह आत्मा स्वप्रकाश नहीं अपितु मानसप्रत्यक्षविषय है यह मान्य सिद्धान्त है।''

अतः आत्मा में केवल ज्ञानकर्तृता है ऐसा नहीं अपितु ज्ञानकर्मता भी उसमें है-यह भाट्ट मीमांसकों का अभिप्राय है।

प्राभाकर मीमांसक–आत्मविषयक ज्ञान के विषय में भाट्ट-प्रतिपादित मत का स्वीकार नहीं करते किन्तु उनके विरुद्ध कर्मकर्तृभाव दोष का उद्भावन करते हैं। अतएव शालिकनाथ ने कहा है— ''जो दार्शनिक (भाट्मीमांसक) मानसप्रत्यक्ष को सुखादि गुणों के समान आत्मा (द्रव्य) के प्रति प्रमाण मानते हैं। उसे प्रभाकरानुयायी अयौक्तिक मानते हैं। स्वसापेक्ष एक की कर्तृता अथवा कर्मता यौक्तिक नहीं हो सकती। स्व में कर्तृता तथा कर्मता-इन विरुद्ध क्रियाओं का समावेश अनुपपन्न होता है।''

भाट्टमीमांसक उपर्युक्त दोष का परिहार करते हुए यह कहते हैं—सर्वत्र कर्मकर्तृभाव दोषावह नहीं होता। लोक तथा वेद में एक ही क्रिया में स्वयं की कर्तृता तथा कर्मता का व्यवहार प्राप्त है। लोक में यह व्यवहार होता है— अहमात्मानं जानामि। वेद में भी एक ही आत्मा में कर्मकर्तृभाव प्रतिपादक 'आत्मानं सततं ज्ञात्वा' इत्यादि अनेक वाक्य प्राप्त होते हैं। गच्छति-क्रिया तथा जानाति-क्रिया में असमानता

---

२. शा० दी० १।१।५, पृ० १२४.

३. शा० दी०, पृ० १२३.

४. प्र० पं०, पृ० १५१.

ज्ञात्वा"[१] इत्याद्यनेकान्येकस्मिन्नेव कर्मकर्तृभावप्रतिपादकानि वाक्यानि मिलन्ति। तस्मादहमात्मानं गच्छामीत्यत्र स्वं प्रति स्वस्य गमनासम्भवेन तत्र कर्मकर्तृभावविरोधसंभवेऽपि 'आत्मानं जानामि' इत्यादौ स्वेन स्वस्य ज्ञातृत्वस्य संभवान्न कर्मकर्तृविरोधः। उक्तं च पार्थसारथिमिश्रेण–"अस्ति चात्मनः स्वकर्तृकायामेव क्रियायां कर्मव्यवहारो लोके वेदे च। यथा तावद् भाष्य एव स्वसंवेद्यः संभवतीति कर्मवाची कृत्यप्रत्ययप्रयोगः, वेदेऽपि "आत्मानमुपासीत","आत्मानं वेद", "आत्मा-ज्ञातव्यः" इत्याद्यनेकशः प्रयोगः। न च गन्तुर्गमने कर्मत्वम्, प्रयोगाभावात्। शब्दसाधुत्वे हि प्रयोगपरवशा वयं न स्वयमीशमहे। यथाहि चलनार्थत्वे समाने गच्छतिः सकर्मकः, चलतिश्चाकर्मकः, प्रयोगस्य तथा दर्शनात्; एवं ज्ञातुः कर्मत्वं गन्तुश्चाकर्मत्वं भविष्यति। तस्मान्मानसाहंप्रत्ययगम्य आत्मा"[२] इति।

अपरं च त्रिपुटीप्रत्यक्षसिद्धान्तवादिभिः प्राभाकरैर्यदुच्यते आत्मा अर्थवित्तिष्वेव भासत इति, तदपि न समीचीनम्, त्रिपुटिप्रत्यक्षवादिनो हि

---

पायी जाती है। अहमात्मानंगच्छामि-इसप्रकार स्व के प्रति स्वकर्तृक गमन सम्भव नहीं होता है जबकि अहमात्मानं जानामि इस प्रकार स्वकर्तृक स्वयं की ज्ञातृता असम्भव नहीं होता अतः कर्मकर्तृविरोध नहीं है। अतएव पार्थसारथिमिश्र ने सुस्पष्ट कहा है– "स्वकर्तृक क्रिया में आत्मा की कर्मता का व्यवहार लोक तथा वेद में प्राप्त होता है। उदाहरणार्थ भाष्य में ही "स्वसंवेद्यः सम्भवति।" ऐसा कर्मवाची कृत्यप्रत्यय का प्रयोग प्राप्त है। वेद में भी "आत्मानमुपासीत", "आत्मानं वेद", "आत्मा ज्ञातव्यः" इत्यादि अनेक प्रयोग प्राप्त हैं। गति क्रिया का कर्ता गमन किया में कर्म नहीं बन सकता क्योकि ऐसा प्रयोग नहीं होता है। शब्दसाधुता के विषय में हम प्रयोगपरवश हैं वहाँ हमारी स्वाधीनता नहीं होती। उदाहरणार्थ–चलनार्थक होने पर भी गम् धातु सकर्मक है किन्तु चल् धातु अकर्मक है क्योंकि प्रयोग में वैलक्षण्य दृष्टिगोचर होता है। तदनुसार स्वयं में भी ज्ञाता की कर्मता उपपन्न होती है किन्तु गन्ता की कर्मता उपपन्न नहीं होती। अतः यह उचित है–मानस अहम्प्रत्यय का वेद्य है—आत्मा।"

प्राभाकरमत में त्रिपुटी-प्रत्यक्ष-सिद्धान्त पर आधारित कथन है— अर्थविषयक ज्ञान में ही आत्मा प्रतिभासित होता है। यह कथन भी समीचीन नहीं है। त्रिपुटी-प्रत्यक्षवादी (प्राभाकर) प्रतिपादन करते हैं—"घटमहं जानामि" इस प्रयोग में ज्ञान

---

१. ना० बि० उ० २१.
२. शा० दी० १।१।५, पृ० १२२-१२३.

'घटमहं जानामि' इति प्रयोगे ज्ञानविषयत्वेन घटस्य, ज्ञानाश्रयत्वेन आत्मनः, स्वयंप्रकाशत्वेन च ज्ञानस्य ज्ञानमित्येकस्मिन् ज्ञाने ज्ञेयम्, ज्ञाता, ज्ञानं च प्रकाशत इति प्रतिपादयन्ति। तथा सति घटमहं जानामीत्यादिरूपेण सर्वदा अहंविशिष्टपदार्थज्ञानोदयप्रसङ्गः। न च सर्वदा तादृशानामेव ज्ञानानामुत्पत्तिः सम्भवति, 'अयं घटः' इत्यादिरूपेण केवलस्य विषयस्यापि ज्ञानसंभवात्। एतेन ज्ञायते यन्नात्मज्ञानं विषयज्ञानसहचारीति[1]।

वस्तुतस्तूभयपक्षनिष्पक्षतया विचार्यमाणे सर्वलोकानुभवानुसारेण केवलस्यात्मनः, केवलस्य विषयस्य, तथा आत्मविषयविशिष्टस्यापि ज्ञानस्योत्पत्तिः सम्भवत्येव। अतोऽहमित्याकारकमानसप्रत्यक्षविषयत्वेन केवलस्यात्मनो ज्ञानम्, 'अयं घटः' इत्यत्र केवलस्य विषयवित्तेरुत्पत्तिः, 'घटज्ञानवानहम्' इत्यत्र विषयवित्तिविशिष्टस्यात्मनो ज्ञानमिति त्रिधापि

---

के विषयरूप से घट का बोध होता है, ज्ञान का आश्रय होने से आत्मा का बोध होता है तथा स्वयंप्रकाश होने से ज्ञान का बोध होता है। इस प्रकार एक ज्ञान में ज्ञेय, ज्ञाता तथा स्वयम् ज्ञान-इन तीनों का बोध होता है।

इस प्रकार त्रिपुटि-प्रत्यक्ष का सिद्धान्त मानने पर घटमहं जानामि–इस रूप से अहंविशिष्टपदार्थज्ञान का सर्वदा भान आपादित होगा। सर्वदा त्रिपुटि-प्रत्यक्षात्मक ज्ञान नियमेन नहीं होता है। अयं घटः इत्येवमादि रूप से केवल विषय का भी ज्ञान होता है। एतावता यह सुविदित होता है– विषयज्ञानसहचारी आत्मज्ञान नहीं होता।

वास्तविक रूप से उभयपक्षों में तटस्थता से विचार किये जाने पर सर्वलोकानुभव को आधार मानने पर विदित होता है— केवल आत्मा, केवल विषय तथा आत्मा एवं विषय से विशिष्ट ज्ञान की भी उत्पत्ति सम्भव होती है। अतः अहम् – इत्याकारक मानसप्रत्यक्ष का विषय केवल आत्मा है। यह ज्ञान केवल आत्मविषयक कहलाता है। अयंघटः'' इस ज्ञान का विषय केवल घट है। यह ज्ञान केवल घटविषयक है। घटज्ञानवानहम् इस ज्ञान का विषय घट (विषय) ज्ञान तथा आत्मा हैं। यह ज्ञान त्रिपुटी को विषय बनाता है। अतः तीन प्रकार से ज्ञान की उत्पत्ति मानी जाती है। एतावता ''अहम्'' इत्याकारक मानसप्रत्यक्ष के विषयरूप से आत्मा भासित होता है तथा कदाचित् वह ''घटमहं जानामि'' ज्ञान के विषयरूप से विषय (घट) एवं ज्ञान के साथ सहचरित होकर ज्ञात होता है। अन्यथा अव्याप्ति की आपत्ति होगी।

---

१. दत्त एवं चटर्जी कृत भारतीय दर्शन, पृ० २११.

मन्तुमुचितम्। अत आत्मा कदाचिदहमित्याकारेण मानसप्रत्यक्षेण, कदाचिच्च घटमहं जानामीति विषयवित्तिसाहचर्येण च भासत इत्यनुभवानुसारेण स्वीकर्तव्यमेव, अन्यथाऽव्याप्त्यापत्तेः।

एवं विचार्यमाणे सति मीमांसादर्शनेऽप्यात्मा देहेन्द्रियमनोबुद्धिभ्यो व्यक्तिरिक्तो नित्यो विभुः, तथा प्रतिशरीरं भिन्नश्च वर्तते। मीमांसकानामियानंशस्तु न्यायवैशेषिकमतसमान एव। किन्त्वात्मनः स्वरूपविषये प्रभाकरपक्षः सर्वथा न्यायदर्शनतुल्यः। आत्मनो ज्ञानविषये प्राभाकरा विषयज्ञानाश्रयत्वेनात्मनो ज्ञानमिति, नैयायिकाश्चाहमित्याकारकमानसप्रत्यक्षविषयत्वं तस्याङ्गीकुर्वन्तीत्यत्र प्राभाकरनैयायिकयोर्वैमत्यम्।

भाट्टास्तु न्यायमतवैलक्षण्येनात्मनः स्वरूपं चिज्जडात्मकं प्रतिपादयन्त आत्मनोऽहमित्याकारकमानसप्रत्यक्षविषयत्वं स्वीकुर्वन्ति। एवं चात्मनः स्वरूपविषये वैमत्यम्, मानसप्रत्यक्षविषयत्वे चैकमत्यं भाट्टनैयायिकयोरित्यवगन्तव्यम्।

---

इस प्रकार विचार करने पर विदित होता है कि मीमांसादर्शन में भी आत्मा की देह, इन्द्रिय, मनस् तथा बुद्धि से व्यतिरिक्तता है, नित्यता एवं विभुता है तथा प्रत्येक शरीर में भिन्न-भिन्न रूपता है। मीमांसकों का इतने अंश में न्याय एवं वैशेषिक के साथ मतैक्य है। आत्मा के स्वरूप को लेकर प्रभाकर मीमांसक, न्यायदर्शन के साथ सर्वथा एक मत हैं। आत्मविषयक ज्ञान के सन्दर्भ में प्रभाकरानुयायी मीमांसकों का मानना है कि विषयज्ञान के आश्रय होने से आत्मविषयक ज्ञान होता है। जबकि नैयायिकों का मानना है कि आत्मा में अहम् इत्याकारक मानसप्रत्यक्ष की विषयता रहती है। इस प्रकार इस अंश में प्रभाकरानुयायी मीमांसक एवं नैयायिक के मध्य विमति सुस्पष्ट है।

भट्ट मीमांसक, न्यायमत से विलक्षणतया आत्मा का चिज्जडात्मक स्वरूप प्रतिपादित करते हैं किन्तु आत्मा में अहम्-इत्याकारक मानस प्रत्यक्ष की विषयता को स्वीकारते हैं। इस प्रकार भाट्टमीमांसक का नैयायिकों के साथ आत्मस्वरूप के सन्दर्भ में वैमत्य है किन्तु उसके मानसप्रत्यक्ष के विषय में ऐकमत्य है ऐसी विवेचना ध्यातव्य है।

जिज्ञासा उदित होती है कि प्रभाकर मीमांसक-मत में आत्मा को ज्ञानाश्रय माना जाता है ज्ञान का कर्म (विषय) नहीं। इस सन्दर्भ में उचित यह प्रतीत होता है कि सभी दार्शनिकों को लोकसिद्ध व्यवहार का अनुवर्तन करना चाहिए। आचार्य कुमारिल भट्ट ने सुस्पष्टता से इस बात को प्रतिपादित किया है—

ननु प्रभाकरमते आत्मनो ज्ञानाश्रयत्वमेव, न तु ज्ञानकर्मत्वमित्यङ्गीक्रियते, लोकानुवर्तनं च सर्वैरेव दार्शनिकैरङ्गीकरणीयमेव। तथा चोक्तं कुमारिलभट्टैः—

सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्[1]।।इति।

तथा च 'अहमात्मानं जानामि', 'अहमात्मानं न जानामि' इति विधिनिषेधव्यवहारौ कथं नाम सङ्गच्छेताम्? इति चेन्न, विमर्शे सति दोषाभावात्। तथाहि—घटमहं जानामीति प्रत्ययो घटादौ विषयासम्बन्धेन ज्ञानवैशिष्ट्यावगाही सन्नपि न जातुचिद् घटादिषु ज्ञानाधारतां कल्पयितुं समर्थः, स्वभावस्याशक्यनिराकरणत्वात्। अत एव घटो ज्ञानवानिति न व्यवहारः। 'अहं ज्ञानवान्' इति प्रत्ययस्तु सर्वलोकानुभवसाक्षिकः प्रमात्मक एव, तेनात्मनो ज्ञानाश्रयताऽर्थादेव सिद्ध्यति। अत्रेदमवश्यं वेदितव्यं यद् यथा घटादिनिष्ठा

---

सिद्धानुगमनात्रंहि...........लक्षणेन निवर्तनम्।।१।।

तदनुरूप विधिव्यवहार भी देखा जाता है— 'अहमात्मानं जानामि।'' तद्वत् निषेधव्यवहार भी देखा जाता है—''अहमात्मानं न जानामि।'' एतावता जिज्ञासु की दृष्टि में आत्मा की ज्ञानकर्मता का सिद्धान्त समुचित है।

इसका समाधान है—विचार-विमर्श करने से प्रभाकर मत में आपाततः प्रतीत होने वाला उपर्युक्त दोष निवारित हो जाता है। तद्यथा— ''घटमहं जानामि।''—यह प्रतीति घटादि में विषयता सम्बन्ध से ज्ञानवैशिष्ट्य का अवगाहन भले ही करती है इतने मात्र से घटादि में ज्ञान की आश्रयता कल्पनीय नहीं हो सकती। कारण के अन्वेषण से यह विदित होता है कि किसी वस्तु के स्वभाव का निराकरण नहीं किया जा सकता। अतएव ''घटोज्ञानवान्'' यह व्यवहार नहीं देखा जाता है जबकि ''अहं ज्ञानवान्'' यह व्यवहार (प्रत्यय) लोकानुभवसाक्षिक एवं प्रमात्मक है। अतः आत्मा की ज्ञानश्रयता अर्थतः सिद्ध होती है। यहाँ इस बात को सम्यक्तया समझ लेना चाहिए कि घटादि विषय में विद्यमान ज्ञान निरूपित विषयता के साथ ज्ञान की स्थिति नहीं होती है। अर्थात् ज्ञान से निरूपित होने वाली विषयता, अपने आश्रय घटादि में ज्ञानाधिकरणता का प्रतिबन्धक होती है। तद्वत् घटं जानामि-प्रतीति सिद्ध आत्मनिष्ठ ज्ञानश्रयता, अपने आश्रय आत्मा

---

१. श्लो० वा० १३३, पृ० १२६.

ज्ञानीयविषयता ज्ञानासमानाधिकरणा, अर्थाद्, विषयतासम्बन्धो ज्ञाननिरूपितोऽपि स्वाश्रये ज्ञानाश्रयतायाः प्रतिबन्धकः, तथैव ज्ञानाश्रयतापि ज्ञानकर्मताया विरोधिनी तदसामानाधिकरण्यप्रयोजिका च। अत आत्मा प्रभाकरमते न ज्ञानकर्म, किन्तु ज्ञानाश्रय एव। न चैवमप्यहमात्मानं जानामीत्यस्य प्रत्ययस्य कथमुपपत्तिरिति वाच्यम्, अहं ज्ञानाश्रय इति वक्तव्ये 'अहं घटं जानामि' इत्यनादिसंस्कारवशाद् ज्ञानभिन्नघटादौ ज्ञानकर्मतावद् ज्ञानभिन्ने आत्मनि ज्ञानकर्मतां विभाव्य व्यवहरति लोकः। दृष्टं च वस्तुस्थितेरन्यथात्वेऽपि व्यवहारस्यान्यादृशत्वम्। यथा न्यायमतेऽवयविनामवयवाश्रितत्वेऽप्यवयविष्ववयवाश्रयत्वव्यवहारः, वृक्षे शाखा इति। वस्तुतस्तु शाखासु वृक्षः, न तु वृक्षे शाखा। किन्तु भवत्येतादृशो व्यवहारः। तन्न्यायेन प्रकृतेऽपि परिदर्शितां पद्धतिं परिभावयन्तु परिशुद्धधियः।

---

में ज्ञानकर्मता की प्रतिबन्धक होती है अतः वह ज्ञानाश्रयता, ज्ञानकर्मता के असामानाधिकरण्य का प्रयोजक होती है। अतः आत्मा प्रभाकर मत में ज्ञान का कर्म नहीं अपितु ज्ञान का आश्रय माना जाता है। अब प्रश्न होता है कि ''अहमात्मानं जानामि'' इस प्रतीति की उपपत्ति प्रभाकर मत में कैसे होगी? इसका उत्तर यह है–समुचित तो यही है कि ''अहं ज्ञानाश्रयः।'' ऐसा ही कहा जाय किन्तु अनादि संसार के वशीभूत होकर ज्ञानभिन्न घटादि विषय में ज्ञानकर्मता की प्रतीति ''घटं जानामि'' की तरह ज्ञानभिन्न आत्मा में ज्ञानकर्मता का विभावन कर लोकव्यवहार चला आ रहा है– ''आत्मानं जानामि।'' ऐसा अन्यत्र भी देखा जाता है—वस्तुस्थिति अन्य रहती है तथापि व्यवहार अन्यादृश होता है। यथा न्यायमत में अवयवी को अवयवों में आश्रित माना जाता है तदनुसार वस्तुस्थिति है— ''शाखासु वृक्षः।'' किन्तु तद्विपरीत व्यहार चला आ रहा है– ''वृक्षे शाखाः।'' इस प्रकार के व्यवहार को दृष्टान्त मानकर प्रकृत में ''अहमात्मानं जानामि।'' यह व्यवहार वस्तुस्थिति के विरुद्ध चला आ रहा है— ''वृक्षे शाखाः।'' इस प्रकार के व्यवहार को दृष्टान्त मानकर प्रकृत में 'अहमात्मानं जानामि।'' यह व्यवहार वस्तुस्थिति के विरुद्ध चला आ रहा है। विशुद्धबुद्धिवाले विज्ञजन, दृष्टान्त के माध्यम से ''प्रभाकरमत सिद्ध सिद्धान्त के विरुद्ध व्यवहार का उपपादन करें'' यह समुचित है।

## अद्वैतवेदान्तानुसारं जीवात्मस्वरूपम्

एतावत्पर्यन्तमुक्तेषु न्यायवैशेषिकादिदर्शनेष्वनेकात्मवादः स्वीकृत इति ज्ञातम्। प्रकृते त्वद्वैतदर्शने नामानुरूपमेकमेव सच्चिदानन्दस्वरूपमात्मान-मङ्गीकृत्योपाधिभेदेनैव जगद्वैचित्र्यं व्यवस्थाप्यते। भगवत्पादशङ्कराचार्यैः- "जीवो ब्रह्मैव नापरः"[१] इत्यत्रोपाधिशून्यस्यात्मनो ब्रह्मरूपत्वं प्रतिपादितम्। अनन्तराचार्येषु जीवेश्वरनिरूपणावसरे विवरणानुसारिभिर्बिम्ब-प्रतिबिम्बवादः, सुरेश्वराचार्यैर्विद्यारण्यस्वामिभिश्चाभासवादः, वाचस्पतिमिश्रैश्चावच्छेदवादोऽङ्गीकृतः। एषु त्रिषु प्रस्थानेषु विषयविवेचनावसरे विरोधाभासे सत्यपि तात्पर्ये तावदैकमत्यमस्तीत्यहो वैचित्र्यमद्वैतस्य। उक्तवादानां तात्पर्यनिर्णयात् प्राक् तत्तदनुसारेण जीवस्वरूपं तावद्विचार्यते।

**आभासवादः**

"स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति वाद आभासवादः"[२] इति

---

### अद्वैतवेदान्त के अनुसार जीवात्मा का स्वरूप

इसके पूर्व तक जिन न्याय-वैशेषिक आदि दर्शनों की चर्चा की गई है। उनमें अनेकात्मवाद का सिद्धान्त स्वीकृत है—यह सुविदित है। सम्प्रति अद्वैत दर्शन में जैसा नाम वैसा अर्थ-इस आधार पर सच्चिदानन्दस्वरूप आत्मा को स्वीकार कर उपाधिभेद से जगद्-वैचित्र्य की व्यवस्था की गई है। भगवत्पाद शङ्कराचार्यजी ने भी "जीवो ब्रह्मैव नापरः" इस प्रसङ्ग में उपाधि शून्य आत्मा की ब्रह्मरूपता को प्रतिपादित किया है। जीवेश्वर-निरूपण के प्रसङ्ग में परवर्ती आचार्यों में विवरणानुसारियों ने बिम्ब-प्रतिबिम्बवाद सुरेश्वराचार्यजी तथा विद्यारण्य स्वामीजी ने आभासवाद तथा आचार्य वाचस्पति मिश्रजी ने अवच्छेदवाद को स्वीकार किया है। इन तीन प्रस्थानों में विषयविवेचन के अवसर पर विरोधाभास होने पर भी परमतात्पर्य में ऐकमत्य है—यह अद्वैत का अद्भुत वैचित्र्य है। प्रोक्त तीन वादों के तात्पर्य निर्णय से पूर्व प्रत्येक वाद में स्वीकृत जीवस्वरूप का प्राथम्येन विचार किया जाता है।

**आभासवाद**

स्वरूपतः प्रतिबिम्ब मिथ्या है— ऐसे वाद को आभासवाद कहते है—

---

१. ब्र० ज्ञा० मा० २०.

२. न्या० र०, पृ० ८९.

गौडब्रह्मानन्दसरस्वतीभिराभासवादस्य लक्षणं प्रतिपादितम्। आभासवादे परमात्मन आभास एव जीव इति प्रतिपाद्यते। तदुक्तं भाष्यकृद्भिः शङ्कराचार्यैः– "आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः"[१] इति। श्रीविद्यारण्यस्वामिनः–"जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति"[२] इति श्रुत्यनुसारेण शुद्धचैतन्यमाश्रिताऽनिर्वचनीया मूलप्रकृतिरेव शुद्धसत्त्वगुणप्रधानतया मायेति, मलिनसत्त्वगुणप्रधानतया चाविद्येति प्रतिपाद्य, तत्र मायायां प्रतिफलितश्चिदाभासो मायां स्वाधीनीकृत्य स्थित ईश्वर इति, अविद्यायां प्रतिफलितोऽविद्यावशीभूतश्च चिदाभासो जीव इति प्रतिपादितवन्तः। तथाहि–

सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते।
मायाबिम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः।।
अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा[३] ।।इति।

---

ऐसा आभासवाद का लक्षण आचार्य गौड ब्रह्मानन्द सरस्वती जी ने प्रतिपादित किया है। इस आभासवाद सिद्धान्त में परमात्मा का आभास ही जीव है–ऐसा प्रतिपादन प्राप्त होता है। इसका निरूपण भाष्यकार आचार्यशङ्कर भगवत्पाद ने निम्नाङ्कित शब्दावली में किया है– "जैसे जल में प्रतिबिम्बित सूर्य की स्थिति रहती है वैसे ही परमात्मा का आभास ही जीव कहलाता है।"

श्रीविद्यारण्यस्वामीजी ने कहा है— "जीवेशावाभासेन..........स्वयमेव भवति" इस श्रुति के अनुसार शुद्ध चैतन्य में आश्रित अनिर्वचनीय मूल प्रकृति ही शुद्ध सत्त्वगुण की प्रधानता रहने पर माया कहलाती है तथा मलिन सत्त्वगुण की प्रधानता रहने पर अविद्या कहलाती है ऐसा प्रतिपादन करने के अनन्तर यह सुस्पष्ट किया है— माया में प्रतिफलित चिदाभास माया को स्वाधीन बनाकर ईश्वररूप में स्थित रहता है तथा अविद्या में प्रतिफलित चिदाभास अविद्या के वशीभूत होकर जीव कहलाता है।" तद्यथा— "सत्त्वशुद्ध्यविशुद्धिभ्यां............ तद्वैचित्र्यादनेकधा।।१½।।

---

१. ब्र० सू० शा० भा० २।३।५०.
२. नृसिंहो० ९ खण्डे।
१. पञ्च० १।१६–१७.

श्रीविद्यारण्यस्वामिभिर्यथैक एवाकाशो महाकाशः, घटाकाशः, मेघाकाशः, जलाकाश इति भेदेन चतुर्धा भवति, तथैकमपि ब्रह्मचैतन्यम्, कूटस्थचैतन्यम्, ईश्वरचैतन्यम्, जीवचैतन्यं चेति चतुर्धा भवतीति स्वीक्रियते। तदुक्तम्–

कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा।
घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा[२]।।इति।

अत्र स्थूल-सूक्ष्मशरीरयोरधिष्ठानभूतं चैतन्यं कूटस्थम्[३], निरवच्छिन्नचैतन्यं ब्रह्म, मेघस्थजलकणेष्विव बुद्धिवासनाविशिष्टमायायां प्रतिबिम्ब ईश्वरः,[४] शरीररूपघटे बुद्धिरूपजले यश्चेतनस्य प्रतिबिम्बः स जीव[५] इति ज्ञातव्यम्। प्रतिशरीरं बुद्धीनां भिन्नत्वात् तद्गतचिदाभासानामपि भेद इति जीवानामनेकत्वसिद्धिः। एवं जीवभेदेनैव प्रतिजीवं सुखदुःखयोर्व्यवस्थोपपत्तिः।

---

श्रीविधारण्यस्वामी ने आकाश-प्रभेद (औपाधिक) के दृष्टान्त से चतुर्विध (औपाधिक) चैतन्यप्रभेद का निरूपण किया है— जैसे आकाश स्वरूपतः एक है तथापि वह उपाधिभेद से चतुर्विध होता है— महाकाश, घटाकाश, मेघाकाश तथा जलाकाश। तद्वत् चैतन्य स्वरूपतः एक है तथापि वह उपाधिभेद से चतुर्विध होता है— ब्रह्मचैतन्य, कूटस्थचैतन्य, ईश्वरचैतन्य एवम् जीवचैतन्य। तद्यथाकूटस्थो ब्रह्म....... जलाकाशाभ्रखे यथा।।१।।

इनमें स्थूल एवं सूक्ष्म शरीर के अधिष्ठानभूत चैतन्य को कूटस्थ कहा जाता है। तद्वत् निरवच्छिन्न चैतन्य को ब्रह्म, मेघस्थजलकणस्थानीय बुद्धिवासनाविशिष्ट माया में प्रतिबिम्बस्वरूप चैतन्य को ईश्वर, शरीररूप घटाधार में स्थित बुद्धिरूप जल में जो चेतन का प्रतिबिम्ब होता है वह जीवपदवाच्य होता है–ऐसा विविक्त ज्ञान अवश्यवेदनीय है। यतश्च प्रतिशरीर बुद्धि-भेद विद्यमान होता है अतः तद्गत चिदाभासों का भी भेद होने से जीवनानात्व उपपन्न होता है। तदनुसार जीवभेद से प्रतिजीव सुख एवं दुःख की लोकशास्त्र-सिद्ध व्यवस्था उपपन्न होती है।

---

१. पञ्च० ६।१८.

२. पञ्च० ६।२२.

३. पञ्च० ६।१५६-१५८.

४. पञ्च० ६।२३.

ननु बुद्धिप्रतिफलितस्य चिदाभासस्य जीवत्वे बुद्धेश्चाहङ्काररूपत्वात् सुषुप्तावहङ्काराभाव इति जीवाभावप्रसङ्ग इति चेन्मैवम्, सुषुप्तावप्यहङ्कारस्य संस्काररूपेण सद्भावात्। तदुक्तं गौडब्रह्मानन्दसरस्वतीभिः—"सुषुप्तावपि संस्काररूपेणाहङ्कारसत्त्वाज्जीवसत्त्वम्"[१] इति। अस्मिन् मतेऽहङ्कारे चिदात्मनो यः प्रतिबिम्बो न तस्य सत्यत्वम्, किन्त्वनिर्वचनीयत्वम्। अत एव मिथ्यात्वमपि। तदुक्तं मधुसूदनसरस्वतीभिः—"आभासस्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वम्"[२] इति। "न चायं क्रियाकारकफलात्मक आभास ईषदपि परमार्थवस्तु स्पृशति, तस्य मोहमात्रोपादानत्वात्"[३] इति सुरेश्वराचार्यैरप्याभासस्यापारमार्थिकत्वं प्रतिपादितम्। श्रीविद्यारण्यस्वामिभिरपि- "आभासत्वस्य मिथ्यात्वात्"[४], "मायिकोऽयं चिदाभासः"[५],

---

यहाँ जिज्ञासा उदित होती है— बुद्धि में प्रतिफलित चिदाभास को जीव मानने से बुद्धि के अहङ्कारस्वरूप होने से यतश्च सुषुप्ति में अहंकार का अभाव होता है अतः उक्त अवस्था में जीवाभाव की अतिप्रसक्ति होगी। इसका समाधान है–सुषुप्ति अवस्था में भी संस्काररूप से अहंकार का सद्भाव होने से उक्त अतिप्रसक्ति वारित होती है। अतएव आचार्य गौडब्रह्मानन्द सरस्वती ने कहा है— "सुषुप्ति में भी संस्कार रूप से अहंकार के विद्यमान होने से जीवसत्त्व निर्बाध है।" इस मत में अहंकार में चिदात्मा का जो प्रतिबिम्ब होता है वह सत्य नहीं होता किन्तु अनिर्वचनीय होता है। अतएव वह मिथ्या भी होता है। मधुसूदन सरस्वती जी ने स्पष्ट कहा है— "**आभास,** यतः जड एवम् अजड से विलक्षण है अतएव अनिर्वचनीय है।" सुरेश्वराचार्य जी ने भी आभास की अपारमार्थिकता प्रतिपादित की है— "क्रियाकारक–फ़लात्मक आभास, किञ्चिचिन्मात्र भी परमार्थवस्तु का स्पर्श नहीं करता क्योंकि वह मोहमात्र से जनित है।"

श्रीविद्यारण्यस्वामी जी ने भी अनेक स्थलों में आभास का मिथ्यात्व, मायिकत्व एवम् भ्रमरूपत्व प्रतिपादित किया है। तद्यथा— "आभास मिथ्या होता है।" यह चिदाभास मायिक है।" "**आभास** यतः बुद्धिधर्म कर्तृत्वादि को तथा स्फूर्ति (आत्मधर्म) को पुरस्कृत कर प्रतिभासित होता है अतः वह भ्रम कहलाता है।।"१।।

---

१. न्या० र०, पृ० ८८.

२. सि० बि०, पृ० ८८.

३. नै० सि०, पृ० ११५.

४. पञ्च० ७।१५.

५. पञ्च० ७।२१७.

कर्तृत्वादीन् बुद्धिधर्मान् स्फूर्त्याख्यां चात्मरूपताम्।
दधद्विभाति पुरत आभासोऽतो भ्रमो भवेत्[१]।।

इत्याद्यनेकेषु स्थलेष्वाभासस्य मिथ्यात्वम्, मायिकत्वम्, भ्रमरूपत्वं च प्रतिपादितम्।

नन्वाभासवादे आभासस्यैव बद्धत्वात् केवलचैतन्यस्य च मुक्तत्वाद् बन्धमोक्षयोर्वैयधिकरण्यम्, एवमेव चिदाभासस्य स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति चेन्मैवम्, केवलचैतन्यस्यैवाभासद्वारा बद्धत्वाभ्युपगमात्। तदुक्तं सुरेश्वराचार्यैः– "अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम्" इति। तेन शुद्धचैतन्यस्याभास एव बन्धः, तन्निवृत्तिश्च मोक्ष इति स्वीयवास्तवरूपताप्राप्तये बद्धस्वरूपनाशार्थं प्रवृत्तेश्चौचित्यमेवेति न स्वनाशार्थं प्रवृत्त्यभावाशङ्कापि। तदाहुर्विद्यारण्यस्वामिनः–

देवत्वकामा ह्यग्न्यादौ प्रविशन्ति यथा तथा।
साक्षित्वेनाविनाशाय स्वविनाशं स वाञ्छति[२]।।इति।

---

आभासवाद में आभास ही बद्ध होता है, केवल चैतन्य तो मुक्त ही रहता है— ऐसी स्थिति में बन्ध एवम् मोक्ष के वैयधिकरण्य की आपत्ति होगी। साथ ही चिदाभास स्वनाश के लिए ही प्रवृत्त होगा— यह दूसरी आपत्ति भी आभासवाद में प्रसक्त होगी।

इसका समाधान है— आभास द्वारा केवलचैतन्य को ही बद्धत्व की प्रतीति होती है तथा मोक्ष भी उसी का होता है अतः बन्ध एवम् मोक्ष के वैयधिकरण्य का निराकरण हो जाता है। सुरेश्वराचार्य जी ने सुस्पष्ट कहा है— "यह अनर्थ है कि हम स्वयं को संसारी समझ बैठे हैं।" इस प्रकार यह सुस्पष्ट है— शुद्ध चैतन्य का आभास ही बन्ध है तथा उसकी निवृत्ति ही मोक्ष है। एवञ्च अपने वास्तव रूप की प्राप्ति हेतु तथा बद्ध स्वरूप के विनाश हेतु प्रवृत्ति की औचिती अनिवारित है। एतावता स्वनाश हेतु प्रवृत्ति के अभाव की आशङ्का दूरापास्त है। विद्यारण्य स्वामीजी ने अच्छी उपपत्ति प्रतिपादित की है—

"जैसे कोई साधक देवत्व की कामना से पञ्चाग्नि तप में प्रवृत्त होता है तद्वत् स्व साक्षित्व के उज्जीवन हेतु साधक द्वारा आभासबद्धता का विनाश अभीप्सित होता है।।१।।

---

१. पञ्च० ८।५२.
२. पञ्च० ७।२४२.

ननु शुद्धचित एवाभासात्मकबन्धस्वीकारे शुद्धचित एव जीवत्वमप्यङ्गीकार्यमिति चेत्, इष्टापत्तिः। तदुक्तं मधुसूदनसरस्वतीभिः– "आभासाविविक्तचैतन्यमपि तत्त्वमसिपदवाच्यम्"[१]। विद्यारण्यस्वामिभिरपि कूटस्थचैतन्यम्, तत्र कल्पिता बुद्धिः, तद्बुद्धिस्थश्चिदाभासश्चेति त्रितयमपि जीवपदेनोक्तम्। तथाहि–

चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः।
चिच्छाया लिङ्गदेहस्था तत्सङ्घो जीव उच्यते[२]।।इति।

अयं च त्वंपदवाच्यः। अत्र "तत्त्वमसि" इति महावाक्येनैक्यबोधे वाच्यैकदेशस्य साभासोपाधेः परित्यागात् शुद्धचितोऽपरित्यागाच्च जहदजहल्लक्षणैवेति वेदान्तसिद्धान्तप्रवादोऽप्यनुकूल एव[३]। तस्मादाभासवादे जीवस्य ब्रह्मणा सहाभेदे बाधायां सामानाधिकरण्यम्, कूटस्थस्य ब्रह्माभिन्नत्वप्रतिपादने च मुख्यसामानाधिकरण्यमित्यवगन्तव्यम्[४]।

---

यदि शुद्धचित् को ही आभासरूप बन्ध होता है ऐसा स्वीकार करे तो शुद्ध चित् में ही जीवत्व को भी स्वीकार करना पड़ेगा–इस आपत्ति को इष्टापत्ति रूप में अद्वैत वेदान्त ने अभ्युपगम कर लिया है। अतएव मधुसूदन सरस्वती जी ने कहा है—"आभास से अविविक्त चैतन्य भी "तत्त्वमसि" के त्वम् पद का वाच्य है।" विद्यारण्यस्वामी जी ने भी कूटस्थ चैतन्य, उसमें कल्पित बुद्‌धि तथा तद्‌बुद्धिस्थ चिदाभास–इन तीनों को जीवपदबोध्य बताया है। तद्‌यथा—चैतन्यं यदधिष्ठानं....... तत्सङ्घो जीव उच्यते।।१।। इसका अर्थ है— अधिष्ठान चैतन्य, उसमें अधिष्ठित लिङ्गदेह तथा लिङ्गदेहाश्रित चिच्छाया–इन तीनों का समुदाय जीव कहलाता है। यह समुदाय तत्त्वमसि के त्वम् पद का वाच्यार्थ है। जब तत्त्वमसि-महावाक्य द्वारा ऐक्यबोध उदित होता है तब वाच्यैकदेश साभास उपाधि का परित्याग एवम् शुद्धचित् का अपरित्याग होने से जहदजहत्‌लक्षणा स्वीकार्य (संघटित) होती है। एतावता वेदान्तसिद्धान्तप्रवाद भी सर्वथा अनुकूल ही है। अतः आभासवाद में जीव का ब्रह्म के साथ अभेद प्रयोग में बाधार्थक सामानाधिकरण्य होता है तथा कूटस्थ का ब्रह्म के साथ अभेदप्रतिपादन में मुख्य समानाधिकरण्य होता है— ऐसा विवेक्तव्य है।

---

१. सि० बि०, पृ० ८९.
२. पञ्च० ४।११.
३. सि० बि०, पृ० ८९.
४. वृ० प्र०, पृ० ४८८.

ईषद्भासनमाभासः प्रतिबिम्बस्तथाविधः।
बिम्बलक्षणहीनः सन् बिम्बवद् भासते स हि[१]।।

इत्यत्र श्रीविद्यारण्यस्वामिभिः प्रतिबिम्बमेवाभास इति प्रतिपादितम्, अथापि प्रतिबिम्बाभासवादयोरिदं वैलक्षण्यं यदाभासवादे उपाधौ चैतन्यवदवभासमानस्य प्रतिबिम्बभूतस्य चिदाभासस्यानिर्वचनीयत्वात् तस्य मिथ्यात्वं प्रतिपाद्यते। प्रतिबिम्बवादे प्रतिबिम्बो न मिथ्या, किन्तु प्रतिबिम्बत्वादिधर्माणामेव मिथ्यात्वमिति। तस्मात् प्रतिबिम्बस्य स्वरूपतो मिथ्यात्वमिति प्रतिपादनपरोऽयं पक्ष आभासवाद इति गीयते सम्प्रदायविद्भिः।

**प्रतिबिम्बवादः**

"स्वरूपतः सत्यं प्रतिबिम्बत्वरूपेण मिथ्याभूतं बिम्बमेव प्रतिबिम्बमिति वादस्य प्रतिबिम्बवादत्वम्"[२] इति प्रतिबिम्बवादस्य लक्षणं गौडब्रह्मानन्दसरस्वतीभिः प्रतिपादितम्। बिम्बस्यैव प्रतिबिम्बव्यवहारात् क्लृप्तकार्यसम्भवान्नातिरिक्ताभासकल्पनं युक्तम्, गौरवादिति प्रतिबिम्बवादो युक्त इति प्रतिबिम्बवादिनामाशयः।

---

"ईषद्भासनमाभासः.....बिम्बवद् भासते स हि।।१।। इस वचन द्वारा यद्यपि श्रीविद्यारण्यस्वामीजी ने प्रतिबिम्ब को ही आभास प्रतिपादित किया है तथापि प्रतिबिम्बवाद एवम् आभासवाद में यह वैलक्षण्य है— आभासवादसिद्धान्त में उपाधिस्थ चैतन्यवद् अवभासमान प्रतिबिम्बरूप चिदाभास, अनिर्वचनीय होने से मिथ्या माना जाता है। प्रतिबिम्बवाद सिद्धान्त में प्रतिबिम्ब को मिथ्या नहीं माना जाता है किन्तु प्रतिबिम्बत्वादि धर्मों को ही मिथ्या माना जाता है। एवञ्च प्रतिबिम्ब का स्वरूपतः मिथ्यात्व होता है–ऐसा प्रतिपादक पक्ष आभासवाद कहलाता है—यह सम्प्रदायवित्सम्मत है।

**प्रतिबिम्बवाद–**

गौडब्रह्मानन्द सरस्वतीजी ने प्रतिबिम्बवाद की व्याख्या करते हुए कहा है– 'स्वरूतः सत्य तथा प्रतिबिम्ब रूप से मिथ्याभूत बिम्ब ही प्रतिबिम्ब कहलाता है— इस वाद का नाम प्रतिबिम्बवाद है। इस सिद्धान्त में बिम्ब के लिए ही प्रतिबिम्बतया व्यवहार होने तथा एतावन्मात्र से क्लृप्तकार्य (बन्धमोक्षव्यवस्था) की उपपत्ति सम्भव होने से प्रतिबिम्बवाद का सिद्धान्त युक्तिसंगत है तथा अतिरिक्त आभास की कल्पना गौरवग्रस्त है—ऐसा प्रतिबिम्बवादी का आशय है।

---

४. पञ्च० ८।३२.
५. न्या० र०, पृ० ८९.

अत्र प्रतिबिम्बवादे द्वौ पक्षौ स्तः। एको विवरणकारस्य, अपरः संक्षेपशारीरककारस्य। विवरणकृतस्तु–

विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति[१]।।

इति श्रुतिबलाद् जीवेश्वरयोरुपाधिभूतमज्ञानमेकमेवेत्यङ्गीकृत्य तदज्ञानोपहितं बिम्बचैतन्यमीश्वर इति, अन्तःकरणतत्संकारविशिष्टाज्ञानप्रतिबिम्बितं चैतन्यं जीव इति च प्रतिपादयन्ति। अत एव–"उपाध्यन्तर्गतत्वप्रतीयमानत्वे सत्यौपाधिकच्छेदशून्यत्वे च सति बहिःस्थितस्वरूपत्वं प्रतिबिम्बत्वम्। उपाध्यनन्तर्गतत्वे सत्युपाध्यन्तर्गतस्वरूपाभिन्नत्वं बिम्बत्वम्"[२] इति हि काश्मीरकसदानन्दयतिना बिम्बप्रतिबिम्बयोर्लक्षणे व्यवस्थापिते। अत्रान्तःकरणनानात्वाज्जीवनानात्वम्। यथा तार्किकमते श्रोत्रैक्येऽपि तत्तत्कर्णशष्कुल्युपाधिभेदेन शब्दग्रहभेदव्यवस्था, एवमात्मैक्येऽप्यन्तःकरणोपाधिभेदादेव बन्धमोक्षादिव्यवस्थोपपत्तिः[३]।

---

वेदान्तसम्मत प्रतिबिम्बवाद में दो पक्ष हैं— १. विवरणकार पक्ष तथा २. संक्षेपशारीरकपक्ष।

विवरणकार "विभेदजनकेऽज्ञाने........असन्तं कः करिष्यति।।१।।" इस श्रुति-प्रमाण के आधार पर जीव एवम् ईश्वर के उपाधिभूत अज्ञान के एक (समान) होने से उस अज्ञान से उपहित चैतन्य ईश्वर है तथा अन्तःकरण एवंतदीय संस्कार से विशिष्ट अज्ञान में प्रतिबिम्बित चैतन्य जीव है— "ऐसा प्रतिपादन करते हैं। इसी को आधार मानकर काश्मीराभिजन सदानन्दयति ने बिम्ब एवं प्रतिबिम्ब के निम्नाङ्कित लक्षणों का प्रतिपादन किया है— (१) उपाधि के अन्तर्गततया प्रतीयमान हो, औपाधिक परिच्छेदः -शून्य हो एवं बहिः स्थित स्वरूप हो उसे प्रतिबिम्ब कहते हैं। (२) उपाधि के अन्तर्गत हो तथा उपाध्यन्तर्गत स्वरूप से अभिन्न हो उसे बिम्ब कहते हैं।

इस प्रतिबिम्बवाद (विवरणसम्मत) में अन्तःकरण के नाना (बहुत्व) होने से जीवनानात्व की उपपत्ति होती है। यथा तार्किकमत में श्रोत्रेन्द्रिय के एक होने पर भी प्रति शरीर भिन्न–"कर्णशष्कुली उपाधि के भेद से शब्दग्रहभेद-व्यवस्था उपपन्न होती है तद्वत् वेदान्तमत में आत्मा के एक होने पर भी अन्तःकरण (प्रतिशरीरभिन्न)

---

१. जा० द० ४।६३.
२. अ० ब्र० सि०, पृ० २०२.
३. अ० ब्र० सि०, पृ० २०२.

ननु जीवेश्वरयोरेकमेवाज्ञानमुपाधिरिति स्वीकारे उभावप्यज्ञौ स्याताम्, इति चेन्न, उपाधेः प्रतिबिम्बपक्षपातित्वात्। यथा दर्पणगतमालिन्यादयो दर्पणस्थप्रतिबिम्ब एव सम्भवन्ति, तथा पूर्णानन्दो नास्ति, न भातीति व्यवहाररूपकार्यमविद्या प्रतिबिम्ब एव जनयति, न तु बिम्बे। अतोऽत्र जीवस्यैव प्रतिबिम्बत्वं नेश्वरस्येत्यवगन्तव्यम्[1]। अत्र पक्षे वस्तुतो बिम्बप्रतिबिम्बयोर्न भेदः। मदीयमिदं मुखमित्यैक्यप्रत्यभिज्ञया लोकेऽनुभूयमानस्य भेदाऽनुभवस्य बाध्यमानत्ववत् प्रकृतेऽपि "तत्त्वमसि" इति महावाक्येन जीवेश्वरयोर्भेदस्य बाध्यमानत्वात्।

ननु मिथ्यारजतेऽपि मदीयमिदं रजतमिति प्रतीयमानरजतप्रत्यभिज्ञान-वन्मदीयमिदं मुखमिति प्रत्यभिज्ञानमपि मिथ्यैवेति चेन्न, नेदं रजतमिति तत्र रजतस्वरूपस्यैव बाधात् तत्प्रत्यभिज्ञाया भ्रमत्वेऽपि प्रकृते नेदं मुखमिति न

---

उपाधिभेद से बन्ध-मोक्षादि व्यवस्था की उपपत्ति होती है।

प्रश्न उठता है— जीव एवम् ईश्वर दोनों की एक ही उपाधि— "अज्ञान" है— ऐसा स्वीकार करने पर दोनों की अज्ञता की आपत्ति होगी। इसका समाधान है- उपाधि का स्वभाव है कि वह प्रतिबिम्ब का पक्षपाती होता है। यथा- दर्पणगतमालिन्यादि दोष का कुप्रभाव दर्पण में स्थित प्रतिबिम्ब में दिखाई देता है तद्वत् पूर्णानन्द नहीं है अथवा प्रकाशमान नहीं होता है—इस तरह के व्यवहारात्मक कार्य को अविद्या, (अज्ञान) प्रतिबिम्ब में उत्पन्न करती है न कि विम्ब में। अतः इस सिद्धान्त में जीव को ही प्रतिबिम्ब माना जाता है न कि ईश्वर को। इस सिद्धान्त में बिम्ब एवं प्रतिबिम्ब में वास्तविक भेद स्वीकार्य नहीं है।यथा लोक में अनुभूत होने वाले बिम्ब एवं प्रतिबिम्ब के भेद का बाध ऐक्यप्रत्यभिज्ञा द्वारा होता है— दर्पण में दृश्यमान प्रतिबिम्ब-यह मेरा ही है। तद्वत् प्रकृत में भी "तत्त्वमसि" इस महावाक्य से भी जीव और ईश्वर के भेद का बाध होता है।

प्रश्न उठता है—मिथ्यारजतस्थल में मदीयमिदं रजतम् ऐसा रजतप्रत्यभिज्ञान होता है। तद्वत् मदीयमिदं मुखम् इस प्रत्यभिज्ञान को भी मिथ्या ही माना जाना चाहिए।

इसका समाधान है-दृष्टान्त विषम है। नेदं रजतम्-इस उत्तर प्रतीति के बल

---

१. न्या० र०, पृ० ९०.

स्वरूपबाधः, किन्तु नात्र मुखमिति देशसम्बन्धमात्रबाध इति न मदीयमिदं मुखमित्यैक्यप्रत्यभिज्ञाया भ्रमत्वम्।

ननु मुखावयवानामचाक्षुषत्वात् कथं प्रत्यक्षप्रत्यभिज्ञानमिति चेन्न, यथा घटादीनां सर्वावयवानामप्रत्यक्षत्वेऽपि कतिपयावयवप्रत्यक्षत्वेनैव प्रत्यभिज्ञोपपत्तिः, तथैव नासादिकतिपयावयवानां प्रत्यक्षत्वेनैव प्रत्यभिज्ञानसम्भवः। तस्मात् प्रतिबिम्बो नाम न मुखलाञ्छितमुद्रा, मुखदर्पणयोः संयोगं विनैव प्रतीयमानत्वात्। नापि बिम्बसन्निधानेन दर्पणावयवा मुखाकारेण परिणमन्ते, बिम्बापायेऽपि प्रतिबिम्बस्य प्रतीयमानत्वापत्तेः, दर्पणावयवानां कारुकर्मव्यतिरेकेणाऽकिञ्चित्करत्वाच्च। अन्यथा दर्पणद्रव्ये प्रतिमामुखे कर्तव्ये सति जना बिम्बमेव सन्निधापयेयुर्न तु कारुमपेक्षेरन्। अतो बिम्बातिरिक्तत्वेन न प्रतिबिम्बस्य स्थितिरिति विवरणमते प्रतिबिम्बस्य बिम्बरूपत्वान्न मिथ्यात्वम्, किन्तु प्रतिबिम्बत्व-दर्पणस्थितत्व-पराङ्मुखत्वादिधर्मा एव मिथ्याभूताः[1]।

---

पर रजतस्वरूप का बाध होने से तद्विषयक प्रत्यभिज्ञा भ्रम कहलाती है। प्रकृत में नेदं मुखम्–ऐसा मुखस्वरूप का बाध नहीं होता किन्तु देशसम्बन्धमात्र का बाध होता है— नात्रमुखम्। अतः "मदीयमिदं मुखम्" इस ऐक्य प्रत्यभिज्ञा को भ्रम नहीं कहा जा सकता है।

प्रश्न उठता है—मुख के अवयवों का चाक्षुष प्रत्यक्ष नहीं होने से मदीयमिदं मुखम्– यह प्रत्यक्षप्रत्यभिज्ञान नहीं कहला सकता।

इसका समाधान है—जैसे घटादि वस्तु के समस्त अवयवों के प्रत्यक्ष नहीं होने पर भी कतिपय अवयवों के प्रत्यक्षमात्र से प्रत्यभिज्ञा की उपपत्ति होती है तद्वत् नासिका प्रभृति कतिपय अवयवों के प्रत्यक्ष होने मात्र से मदीयमिदं मुखम् यह प्रत्यक्षप्रत्यभिज्ञा उपपन्न होगी। अतः प्रतिबिम्ब का अर्थ मुख से लाञ्छित नहीं हो सकता क्योंकि मुख और दर्पण के संयोग विना ही मुख की प्रतीति होती है। यह भी नहीं मान्य हो सकता–बिम्ब के सन्निधान से दर्पण के अवयव मुखाकार में परिणत हो जाते हैं क्योंकि ऐसा मानने पर विम्बविनाश के पश्चात् भी प्रतिबिम्ब की प्रतीयमानता बनी रहने की आपत्ति होगी। इतना ही नहीं दर्पण के अवयवों में कारुकर्म से अतिरिक्त कार्य के प्रति कारणता नहीं हो सकती। अन्यथा दर्पणद्रव्य में प्रतिमामुख बनाने हेतु लोग बिम्ब को ही सन्निहित करते न कि कारु=शिल्पी की अपेक्षा करते। एवञ्च बिम्बव्यतिरेकेण प्रतिबिम्ब की स्थिति नहीं हो सकती–इस विवरणमत में

---

१. वि० प्र० सं०, पृ० २२०–२२४.

तदत्रानुमानमपि–"विमत आदर्शो मुखव्यक्त्यन्तररहितः, तज्जन्मकारणशून्यत्वात्, यथा विषाणजन्मकारणशून्यं विषाणरहितं शशमस्तकम्"[१] इति।

यद्येवमुच्येत–लोके बिम्बभूतस्यैव देवदत्तस्य भ्रमनिवर्तकज्ञानाश्रयत्वं दृष्टम्, प्रकृते जीवश्च प्रतिबिम्ब इति कथं तस्य भ्रमाश्रयत्वं तन्निवर्तकज्ञानाश्रयत्वं चेति। तदयुक्तम्, नहि तत्र बिम्बत्वं प्रयोजकम्, किन्तु भ्रमाश्रय इति न कोऽपि दोषः। तदुक्तम्–"अविद्यायाश्चिन्मात्राश्रयत्वेऽपि जीवपक्षपातित्वेन भ्रमोत्पादनात्"[२] इति। तस्मात् प्रतिबिम्बे बिम्बाद् भेदमात्रस्यैवाऽध्यस्तत्वेन स्वरूपेण प्रतिबिम्बस्यापि सत्यत्वाद् बन्धमोक्षयोः सामानाधिकरण्यमपि स्वरसत एवोपपद्यत इति विवरणानुसारिणामभिप्रायः।

अस्मिन् बिम्बप्रतिबिम्बवादे 'यः स्थाणुरसौ पुरुषः' इतिवत् "तत्त्वमसि" इति महावाक्येन न बाधसामानाधिकरण्यम्, कृत्स्नस्य जीवस्य बाधे मोक्षस्यापुरुषार्थत्वात्, 'सोऽयं देवदत्तः" इतिवद् विरुद्धांशमात्रबाधेनैक्यपरत्वेनापि सामानाधिकरण्योपपत्तिः[३]।

---

प्रतिबिम्ब के विम्ब रूप होने से उसका मिथ्यात्व नहीं है। मिथ्यात्व तो प्रतिबिम्बस्थित निम्नाङ्कित कर्मों में है— प्रतिबिम्बत्व, दर्पण स्थितत्व एवं पराङ्मुखत्व आदि। इस सन्दर्भ में अनुमान प्रमाण भी है। तद्यथा विगत आदर्शो मुखव्यक्त्यन्तररहितः, तज्जन्मकारणशून्यत्वाद्, यथा विषाणजन्मकारणशून्यं विषाणरहितं शशमस्तकम् - इति।

प्रश्न उठता है–लोक में विम्बभूत देवदत्त में ही भ्रमनिवर्तकज्ञान का आश्रय होना देखा जाता है तदनुसार प्रकृत में जीव को प्रतिबिम्बस्वरूप मानने से वह न तो भ्रमज्ञान का आश्रय होगा और न भ्रमनिवर्तक ज्ञान का आश्रय होगा।

इसका समाधान है— भ्रम का आश्रय जो होता है वही भ्रमज्ञान के निवर्तक ज्ञान का आश्रय होता है यह दृष्टान्त में प्राप्त होता है। प्रकृत में जीव ही भ्रमाश्रय है अतः भ्रमनिवर्तक ज्ञान का आश्रय वह हो सकता है। अतः उक्त दोष का निराकरण हो जाता है। अतएव आचार्यकृथन प्राप्त होता है— अविद्या यद्यपि चिन्मात्र में आश्रित है तथापि अविद्या के जीवपक्षपाती होने से जीव में भ्रम की उत्पत्ति होती है। एवञ्च प्रतिबिम्ब में बिम्ब से भेद होना मात्र अध्यस्त है क्योंकि प्रतिबिम्ब भी

---

२. वि० प्र० सं०, पृ० २२४.

३. वि० प्र० सं०, पृ० २३०.

४. वि० प्र० सं०, पृ० २२५-२२६.

संक्षेपशारीरककारास्तु–"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"[५] इति श्रुतिविरोधान्नेयं कल्पना युक्ता, किन्तु कारणोपाध्याख्यायां मायायां प्रतिबिम्व ईश्वर इति, कार्योपाधावन्तःकरणे प्रतिबिम्बो जीव इति प्रतिपादयन्ति। तथाहि– "मायोपाधेरद्वयस्येश्वरत्वं कार्योपाधेर्जीवता च प्रतीचः"[२] इति। प्रतिबिम्बभूतयोर्जीवेश्वरयोरनुस्यूतमज्ञानोपहितं बिम्बचैतन्यं शुद्धम्। अत्र पक्षे शुद्धचैतन्यम्, ईश्वरचैतन्यम्, जीवचैतन्यं चेति चित्त्रैविध्यं भवति। अत एव–

**जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।**
**अविद्या तच्चितोर्योगः षडस्माकमनादयः।।**

इत्यनादिषट्पदार्थेषु चित्त्रैविध्यमुदाहृतम्।

नन्वेवं जीवेश्वरयोरुपाध्योर्भिन्नत्वस्वीकारे–

**विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने।**
**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति।।**

---

स्वरूप से सत्य ही होता है। एवञ्च बन्ध एवं मोक्ष का समान आश्रय में विद्यमान होना भी स्वारसिक रूप से उपपन्न होता है। यह विवरणमतानुयायी का अभिप्राय है।

सम्प्रति संक्षेपशारीरककार का अभिप्राय उपस्थापित किया जा रहा है– "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।" इस श्रुतिवाक्य का विरोध होने से उपर्युक्त प्रतिबिम्बवाद की कल्पना उपयुक्त नहीं है किन्तु कारणोपाधि माया में प्रतिबिम्ब ईश्वर है तथा कार्योपाधि अन्तःकरण में प्रतिबिम्ब जीव है। यह इनका मत है। तद्यथा– "मायोपाधि अद्वयचैतन्य ईश्वर है तथा कार्योपाधि प्रत्यक्चैतन्य जीव। जीव एवम् ईश्वर इन दोनों प्रतिबिम्बों में अनुस्यूत रहने वाला शुद्ध चैतन्य बिम्बस्थानीय है जो अज्ञान से उपहित है। इस प्रकार इनके मत में त्रिविध चैतन्य मान्य होता है– (२) शुद्ध चैतन्य (२) ईश्वर चैतन्य तथा (३) जीव चैतन्य। अतएव अनादि षड्विध पदार्थों के अन्तर्गत त्रिविध चैतन्य को गिना जाता है–

जीव ईशो विशुद्धाचित्.......असन्तं कः करिष्यति।।१।।

अब प्रश्न उठता है–जीव एवम् ईश्वर की भिन्न-भिन्न उपाधि को स्वीकारने पर एकोपाधि के प्रतिपादक निम्नाङ्कित श्रुति का विरोध होगा–

विभेदजनकेऽज्ञाने........असन्तं कः करिष्यति।।१।।

---

१. त्रि० म० ना० ४।८.
२. सं० शा० ३।१४८

इत्युभयोरेकोपाधित्वप्रतिपादकश्रुतिविरोधः? इति चेन्मैवम्, अन्तःकरणस्याप्यज्ञानपरिणामेनाज्ञानाविशेषात्। अत्र केवलप्रतिबिम्बे न जीवेश्वरव्यवहारः, किन्तु प्रतिबिम्बत्वविशिष्टचैतन्ये, अन्यथा भागत्यागलक्षणाऽसम्भवः। किञ्चात्र प्रतिबिम्बवादे मुक्तजीवानां प्राप्यं शुद्धं ब्रह्मचैतन्यमेव, न त्वीश्वरः, तस्यापि प्रतिबिम्बरूपत्वादिति श्रीनिश्चलदासाः[१] स्वाभिप्रायं प्रकटयन्ति।

**आभासप्रतिबिम्बवादयोर्भेदः**

श्रीविद्यारण्यस्वामिनोऽन्तःकरणोपाधावनिर्वचनीयस्य प्रतिबिम्बस्योत्पत्तिमङ्गीकुर्वन्ति। तन्मतानुसारेण दर्पणं प्रतिबिम्बस्याधिष्ठानोपादानम्, बिम्बसन्निधिश्च निमित्तकारणम्। यद्यपि निमित्तापाये न कार्यापायस्तथापि निमित्तकारणं तावद् द्विविधम्—कार्यपूर्ववर्तिनिमित्तकारणम्, कार्यकालवर्तिनिमित्तकारणं चेति। दण्डादिकं घटं प्रति कार्यपूर्ववर्तिनिमित्तकारणम्। घटादिप्रत्यक्षज्ञानोत्पत्तौ घटादिकं कार्यकालवर्ति निमित्तकारणम्। एवमेव दूरस्थनानावृक्षेषु यदेकत्वभ्रमो भवति,

---

इसका समाधान है— द्वितीय उपाधि अन्तःकरण है वह यतः अज्ञान का ही परिणाम है अतः वह अज्ञानात्मक है एवं च एकोपाधिकता जीवेश्वरों की निर्बाध है। इस मत में केवल प्रतिबिम्ब में जीवव्यवहार अथवा ईश्वरव्यव्यवहार अभीष्ट नहीं है प्रत्युत प्रतिबिम्बत्वविशिष्ट चैतन्य में उभयविध व्यवहार अभीष्ट है। अन्यथा भागत्यागलक्षणा सम्भव नहीं होगी।

इस प्रतिबिम्बवाद में मुक्त जीवों के प्राप्य शुद्धब्रह्म चैतन्य हैं, ईश्वर नहीं। क्योंकि ईश्वर भी जीववत् प्रतिबिम्बस्वरूप ही है—यह श्रीनिश्चलदास का निजअभिप्राय है।

**आभासप्रतिबिम्बवादयोर्भेदः**

श्रीविद्यारण्यस्वामी अन्तःकरण उपाधि में अनिर्वचनीय प्रतिबिम्ब की उत्पत्ति मानते हैं। उनके मत में दर्पण को प्रतिबिम्ब का अधिष्ठान तथा उपादानकारण माना जाता है तथा बिम्बसन्निधि को निमित्तकारण। यद्यपि सामान्य नियम है–निमित्त के नाश से कार्य का नाश नहीं होता तथापि निमित्तकारण दो प्रकार का होता है— कार्यपूर्ववर्ति निमित्त कारण एवम् कार्यकालवर्ति निमित्तकारणा घट के प्रति दण्डादि, कार्यपूर्ववर्ति निमित्तकारण है तथा घटादि के प्रत्यक्ष ज्ञान की उत्पत्ति में घटादि,

---

१. वृ० प्र०, पृ० ४८४-४८५.

मन्दान्धकारे च रज्जौ सर्पत्वभ्रमो भवति, तत्र दूरत्वं मन्दान्धकारत्वं च कार्यकालवर्तिनिमित्तकारणे भवतः।

यथा दूरत्वमन्दान्धकारत्वयोर्निमित्तकारणयोर्निवृत्तावेकत्वादिभ्रमस्य निवृत्तिर्भवति, तथा बिम्बस्य सन्निधानं प्रतिबिम्बोत्पत्तौ कार्यकालवर्ति निमित्त-कारणमिति तन्निवृत्तौ प्रतिबिम्बस्यापि निवृत्तिरिति प्रतिबिम्बस्य मिथ्यात्वादाभासवादः।

विवरणमते तु प्रतिबिम्बस्य बिम्बाऽभिन्नत्वात् तत्र दर्पणस्थितत्व-विपरीतदेशमुखत्व – बिम्बभिन्नत्वरूपाणामेवानिर्वचनीयधर्माणामुत्पत्तिरिति तेषां धर्माणामेव मिथ्यात्वं प्रतिबिम्बस्य च सत्यत्वमिति प्रतिबिम्बवाद इति स्पष्टमेवास्त्यनयोर्भेदः[१]।

यद्यप्याभासवादे प्रतिबिम्बवादे वा नैव विदुषामाग्रहः, किन्तु शुद्धचैतन्ये सांसारिकधर्माणां सम्बन्धाभावस्य, जीवेश्वरयोश्च पारमार्थिकभेदाऽभावस्य प्रतिपादनार्थं प्रक्रियाभेदो व्यवस्थापित इति यस्य यया प्रक्रियया तत्त्वबोधो भवति सैव तस्याभिमतेत्यवगन्तव्यम्[२]। जीवत्वेश्वरत्वधर्मयोः कल्पितत्वेऽपि

---

कार्यकालवर्ति निमित्तकारण है। तद्वत् दूरस्थ अनेक वृक्षों में जो एकत्वभ्रम होता है तथा मन्द अन्धकार में रज्जु (रस्सी) में सर्पत्वभ्रम होता है वहाँ दूरत्व एवम् मन्दान्धकारत्व कार्यकालवर्ति निमित्तकारण होते हैं। यथा दूरत्व (निमित्तकारण) की निवृत्ति होने पर एकत्व-भ्रम की एवम् मन्दान्धकारत्व दोष की निवृत्ति होने पर सर्पत्वभ्रम की निवृत्ति होती है। तद्वत् बिम्ब का सन्निधान, प्रतिबिम्ब की उत्पत्ति के प्रति कार्यकालवर्ति निमित्तकारण है अतः उसकी निवृत्ति होने पर प्रतिबिम्ब की भी निवृत्ति हो जाती है। अतः प्रतिबिम्ब के मिथ्या होने से आभासवाद मान्य सिद्धान्त है।

किन्तु विवरणमत में प्रतिबिम्ब को बिम्ब से अभिन्न माना जाता है तथा उसमें अनिर्वचनीय धर्मों (दर्पणस्थितत्व, विपरीतदेशमुखत्व, बिम्बभिन्नत्व) की उत्पत्ति होती है। अतः उन कर्मों का ही मिथ्यात्व होता है, प्रतिबिम्ब तो सत्य है अतः प्रतिबिम्बवाद मान्य सिद्धान्त है। एतावता आभासवाद एवम् प्रतिबिम्बवाद का भेद सुस्पष्ट प्रतीत होता है।

यद्यपि विद्वज्जन का आग्रह आभासवाद अथवा प्रबिम्बवाद में नहीं है प्रत्युत शुद्धचैतन्य में सांसारिक धर्मों के सम्बन्ध का अभाव तथा जीव एवम् ईश्वर के

---

१. वृ० प्र०, पृ० ५१०–५१२.

२. वृ० प्र०, पृ० ५१२–५१३.

धर्मिणोरकल्पितत्वाद् वस्तुतस्तयोरेकत्वाच्च बिम्बिप्रतिबिम्बवादे जीवब्रह्मणोरभेद-बोधोऽनायासेन भवतीति प्रतिबिम्बवादपक्षपातिनां श्रीनिश्चलदासानामाशयः[१]।

**अवच्छेदवादः**

वाचस्पतिमिश्रैस्तु "नाविद्या ब्रह्माश्रया, किन्तु जीवे सा त्वनिर्वचनीया"[२], "विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः"[३] इत्यादिस्थलेष्वज्ञानस्य जीवाश्रयत्वं ब्रह्मविषयत्वं च प्रतिपादितं वर्तते। अतस्तन्मतानुसारेणाज्ञानविषयीकृतं चैतन्यमीश्वरः, अज्ञानाश्रयीभूतं च जीव इति प्रतिपादितं भवति।

ननु सर्वव्यापकस्य सर्वाधिष्ठानस्य ब्रह्मणः कथं नाज्ञानाश्रयत्वम्? कथं चोक्तं मिश्रैर्नाज्ञानाश्रयं ब्रह्मेति जिज्ञासायां गुरुचरणैः श्रीदेवस्वरूपमिश्रै-

---

मध्य पारमार्थिक भेद के अभाव को प्रतिपादित करने हेतु प्रक्रियाभेद की व्यवस्था की गई है अतः जिसको जिस प्रक्रिया से तत्त्वबोध होता है वही प्रक्रिया उस आचार्य को अभिमत है–ऐसा समझना चाहिए। जीवत्व एवम् ईश्वरत्व धर्म यद्यपि कल्पित हैं तथापि दोनों धर्मियों के अकल्पित होने एवं वस्तुस्थित्या उन दोनों के एक होने से बिम्ब प्रतिबिम्बवाद में जीव एवम् ब्रह्म का अभेदबोध अनायास ही होता है—यह आशय प्रतिबिम्बवाद के पक्षपाती श्रीनिश्चलदासमहाशय का है।

**अवच्छेदवाद–**

आचार्यवाचस्पतिमिश्र जी अज्ञान को जीवाश्रित एवम् ब्रह्मविषयक प्रतिपादित करते है। यह प्रतिपादन अनेक भाष्यपङ्क्तियों एवं ब्रह्मसूत्रों की व्याख्या को अवलम्ब बनाया है। तद्यथा— "नाविद्या ब्रह्माश्रया किन्तु जीवे, सा त्वनिर्वचनीया।" एवम् "विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः।" इत्यादि। एतावता श्रीमिश्र के मत में अज्ञान के द्वारा विषयीकृत चैतन्य को ईश्वर तथा अज्ञान के आश्रय को जीव प्रतिपादित किया जाता है।

अब प्रश्न उठता है— सर्वत्र व्यापक एवम् सर्वाधिष्ठान ब्रह्म को अज्ञान का आश्रय क्यों नहीं माना जाय? ऐसी स्थिति में श्री वाचस्पति मिश्रजी ने यह कैसे कहा— अज्ञान के आश्रय ब्रह्म नहीं हो सकते।

---

१. वृ० प्र०, पृ० ५१३.
२. ब्र० सू० भा० १।१।४
३. ब्र० सू० भा० १।४।३

र्वाचस्पतिमिश्राणामाशय एवं प्रदर्शितः—"अविद्याया आश्रयो द्विविधो भवति—एकोऽध्यासेन, अपरश्चाच्छाद्यत्वेन। आध्यासिकसम्बन्धेनाविद्याया आश्रयो ब्रह्म भवत्येव, अन्यस्याभावात्। किन्त्वाच्छाद्यतासम्बन्धेन ब्रह्मणि नाविद्या तिष्ठति। अत एव मिश्रैः—"विद्यास्वभावे ब्रह्मणि" इत्युक्तम्। जीवे तु साऽऽच्छाद्यतासम्बन्धेन वर्तते। अत एवाविद्याया अभानापादकत्वमसत्त्वापादकत्वं च वेदान्तशास्त्रे प्रतिपादितमुपपद्यते। नास्ति ब्रह्म न भाति ब्रह्मेत्याकारकयोर्द्वयोर्जीव एव सम्भवादसम्भवाच्च ब्रह्मणि नाच्छादिका सेति ब्रह्मानाश्रयेति च श्रीवाचस्पतिमिश्रैः सुष्ठु प्रतिपादितम्"[१] इति।

तदेवं नीरूपस्य चैतन्यस्य प्रतिबिम्बाऽसम्भवादन्तःकरणावच्छिन्न एव जीवः, अनवच्छिन्न ईश्वर इत्यवच्छेदवादिनामाशयः। ननु नीरूपस्याप्याकाशस्य यथा जले प्रतिबिम्बस्तथाऽऽत्मनोऽपि स्यादिति चेन्न, आकाशे भ्रमसिद्धस्यापि

---

इसका समाधान समीक्षाकार श्रीस्वामीजी ने श्रीदेवस्वरूपमिश्रजी गुरुदेव द्वारा अवच्छेदवाद के आचार्य श्रीमिश्र के आशयप्रकाशन से किया है। तद्यथा अविद्या का द्विविध आश्रय होता है— १. अध्यासमूलक २. आच्छाद्यता-संसर्गमूलक। आध्यासिकसम्बन्ध से अविद्या का आश्रय ब्रह्म ही होता है, अन्य नहीं। आच्छाद्यतासम्बन्ध से ब्रह्म में अविद्या आश्रित नहीं हो सकती। इसीलिए आचार्य श्रीमिश्र ने "ब्रह्म को विद्यास्वभाव" कहकर उनकी अविद्याद्वारक आच्छाद्यता को प्रतिषिद्ध किया है। वह अविद्या आच्छाद्यतासम्बन्ध से जीव में आश्रित रहती है। इसी सिद्धान्त का पोषक निम्नाङ्कित सिद्धान्त वेदान्तशास्त्र में सोपपत्तिक वर्णित है— अभानापादकत्वसिद्धान्त एवम् असत्त्वापादकत्वसिद्धान्त। नास्ति ब्रह्म एवम् न भाति ब्रह्म—यह द्विविध अविद्याकार्य, जीव में सम्भव है तथा ब्रह्म में असम्भव है। अतएव सुविचारितरमणीय श्रीमिश्रसिद्धान्त है— **अविद्या ब्रह्मानाश्रया है।**

आचार्य श्रीमिश्र के वचन सोपपत्तिक है— यह सुनिश्चित होने के अनन्तर अवच्छेदवाद की औचिती बतायी जा रही है— यतश्च चैतन्य नीरूप है अतः उसका प्रतिबिम्ब नहीं हो सकता। अतः अन्तःकरणावच्छिन्न चैतन्य जीव है एवम् उससे अनवच्छिन्न चैतन्य ईश्वर है। यह अवच्छेदवादी का सुस्पष्ट आशय है।

जिज्ञासा होती है—रूपवर्जित आकाश का भी यथा जल में प्रतिबिम्ब सुघटित होता है तद्वत् आत्मा का भी प्रतिबिम्ब क्यों नहीं सम्भव है। इसका समाधान है— आकाश में भ्रमविषय नीलरूप के रहने से उसका प्रतिबिम्ब होना समुचित है जबकि

---

१. सा० सु०, व० २७, अ० ४, पृ० ३०४.

नीलरूपस्य सत्त्वेन तत्सम्भवेऽपि चैतन्ये आरोपितरूपस्याप्यभावान्न तस्य प्रतिबिम्बः। ननु रूपरहितस्यापि शब्दस्य यद्वत्प्रतिध्वनिरूपेण प्रतिबिम्बः, तद्वदात्मनोऽपि स्यादिति चेन्न, नहि प्रतिध्वनिः शब्दस्य प्रतिबिम्बः, तस्याकाशगुणत्वात्। अत एव विद्यारण्यस्वामिभिः–

प्रतिध्वनिर्वियच्छब्दो वायौ बीसीतिशब्दनम्।
..............................वह्नौ भुगुभुगुध्वनिः।।
..............................जले बुलुबुलुध्वनिः।
भूमौ कडकडाशब्दः..........................[२]।।

इति पञ्चीकरणप्रक्रियया पञ्चभूतेषु भिन्नभिन्नशब्दं प्रतिपाद्य प्रतिध्वनेर्वियच्छब्दत्वं प्रतिपादितम्। प्रतिध्वनेः शब्दस्य प्रतिबिम्बत्वे आकाशगुणोच्छेदप्रसङ्गः[३]। तस्माज्जीवो नाम नाभासो नापि प्रतिबिम्बः, किन्तु यथा महाकाश एव घटोपाधिना घटाकाशः कथ्यते, तथा ब्रह्माप्यविद्यावच्छेदेन जीव इति व्यवहृतं

---

चैतन्य में आरोपित रूप का भी अस्तित्व नहीं है अतः उसका कथमपि प्रतिबिम्ब सम्भव नहीं है। द्वितीय जिज्ञासा उदित होती है— शब्द में रूप नहीं रहता किन्तु नीरूप शब्द का भी प्रतिध्वनिस्वरूप प्रतिबिम्ब लोकविदित है। तद्वत् आत्मा का भी (नीरूप होने पर भी) प्रतिबिम्ब होना समुचित है।

इसका समाधान है— प्रतिध्वनि को शब्द का प्रतिबिम्ब मानना अनुचित है। प्रतिध्वनि तो आकाश का गुण है। अतएव श्रीविद्यारण्यस्वामीजी ने कहा है—

प्रतिध्वनिर्वियच्छब्दो वायौ बीसीति शब्दनम्।
......ब्रह्मौ भुगुभुगुध्वनिः।।१।।
.....जले बुलुबुलुध्वनिः।
भूमौकडकडाशब्दः........।।२।।

उपर्युक्त कथन से पञ्चीकरण प्रक्रिया द्वारा पञ्चभूत में भिन्न भिन्न शब्द को आकारित कर प्रतिध्वनि को वियत् (आकाश) का शब्द (धर्म) माना है। यदि प्रतिध्वनि को शब्द का प्रतिबिम्ब स्वीकार करें तो आकाशगुण का उच्छेद अति-प्रसक्त होगा। अतः जीव न तो आभास है और न प्रतिबिम्ब। प्रत्युत यथा महाकाश घट-उपाधि से युक्त होकर घटाकाश कहलाता है तद्वत् ब्रह्म भी अविद्यावच्छेद से

---

१. पञ्च० २।३-५.
२. वृ० प्र०, पृ० ५००-५०२, सि० ले० सं०, पृ० १०८-१११.

भवति। तदुक्तम्–"न जीव आत्मनोऽन्यः, नापि तद्विकारः, किन्त्वात्मैवाविद्योपादानकल्पितावच्छेदः। आकाश इव घटमणिकादिकल्पितावच्छेदो घटाकाशो मणिकाकाशः, न तु परमाकाशादन्यस्तद्विकारो वा"[१] इति। उक्तं चान्यत्र–"अन्तःकरणावच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारोऽहङ्कारास्पदं संसारी सर्वानर्थसम्भारभाजनं जीवात्मा"[२] इति।

पूज्यपादैः शङ्कराचार्यैरपि–"सत्यमेवैतत्, पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते। यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते तद्वत्"[३] इत्यवच्छेदवादः समर्थितः।

नन्वत्र शरीरेन्द्रियाद्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यत

---

युक्त होकर जीव इस शब्द से व्यवहृत होता है। तद्यथा– 'जीव आत्मा से भिन्न नहीं है। यह आत्मा का विकार भी नहीं है किन्तु अविद्या के उपादान से कल्पित अवच्छेद से युक्त आत्मा ही जीव है। यथा आकाश के साथ घट, मणिक प्रभृति से कल्पित अवच्छेद का संयोग होने से वह घटाकाश, मणिकाकाश कहलाता हुआ भी परमाकाश से भिन्न नहीं है उसका विकार भी नहीं है।"

अन्य स्थल में भी श्रीमिश्र ने कहा है— "अन्तःकरणावच्छिन्न प्रत्यक्चैतन्य जीव है। वह इदम् रूप से तथा अनिदम् रूप (अहम्) से चेतनतया प्रतीयमान होता है। यह कर्ता और भोक्ता बना है। यह जीव ही कार्य-अविद्या तथा कारण-अविद्या से संयुक्त होकर अहंकार का आस्पद (आलम्बन) है। यह बन्धन से आबद्ध होकर संसारी बना है। यह समस्त अनर्थों को भुगतने वाला पात्र बनकर जीवात्मा शब्द से विदित होता है।"

पूज्यचरण स्वामी शङ्कराचार्यभगवान् ने भी अपने स्पष्ट कथन से अवच्छेदवाद को समर्थन देकर उसका सम्पोषण किया है। तद्यथा—"सत्यमेवैतत्,.....अवभासते तद्वत्।" इसका अर्थ है यह सत्य ही है। जो परम आत्मा है वह देह, इन्द्रिय, मनस्, उपाधियों से परिच्छिन्न होकर अज्ञानी जनों द्वारा शारीर कहलाता है। यथा घट, करक आदि उपाधिवशात् अपरिच्छिन्न होता हुआ भी आकाश, परिच्छिन्न की भाँति प्रतिभासित होता है तद्वत् परमात्मा ही जीवात्मा की तरह भासित होता है।"

४. ब्र० सू० भा० १।४।२२.
१. अध्यासभामती।
२. ब्र० सू० भा० १।२।६.

इति भगवता भाष्यकारेण शङ्कराचार्येणोक्तम्। अत्राऽयमाक्षेपः संजायते यदात्मानं शारीर इति ये कथयन्ति ते बाला अज्ञानिन इति भाष्यकाराभिमतं चेत् शारीरकसूत्राणीति ब्रह्मसूत्राणां तद्भाष्यस्य च शारीरकभाष्यमित्यपि प्रसिद्धत्वात् भाष्योक्तबालशब्दे सूत्रभाष्यकाराणामप्यन्तर्भावात् कथं तद्वचनप्रामाण्यग्रहः स्यात्? इति चेन्मैवम्, अत्राऽयं महान् भेदः। तथाहि–शरीरे भवः शारीर इति व्युत्पत्तिसिद्धोऽयं शब्दः। अत्र 'भू सत्तायाम्' इति धातोर्निष्पन्नस्य 'भवति' इति रूपस्यार्थद्वयं विद्यते–अस्ति, उत्पद्यते चेति। ये तु शरीरावच्छेदेन आत्मन उत्पत्तिमङ्गीकृत्य शारीर इति कथयन्ति, त एव भाष्यकारेण बालशब्देन व्यवहृताः। भाष्यकाराभिप्रायस्तु–यथा व्यापकरूपोऽप्याकाशो घटाद्युपाधौ नोत्पद्यते, किन्तु महाकाश एव घटाद्याकारेणाभिव्यज्यते, तथैवात्मापि शरीरे नोत्पद्यते, किन्तु सर्वत्र व्याप्तोऽपि शरीरोपाधौ शरीराकारेणाभिव्यज्यत इति शारीर इति। अतः शारीरकसूत्रभाष्ये शरीरावच्छेदेनोपलभ्यमानस्यात्मनो न तावन्मात्रं स्वरूपम्, किन्तु घटाकाशस्थमहाकाशस्वरूपवत् तस्याप्यात्मनो व्यापकब्रह्मस्वरूपं तदैक्यं च प्रतिपादितमित्यस्ति महान् भेदो ज्ञान्यज्ञानिनोः।

---

यहाँ एक जिज्ञासा उदित होती है— उपर्युक्त स्थल में भाष्यकार भगवान् शङ्कराचार्य जी ने कहा है— देहेन्द्रियमनोबुद्ध्युपाधिभिः........अवभासते तद्वत्।।"

यहाँ यह आक्षेप जागृत होता है— जो लोग आत्मा को शारीर (जीवात्मा) कहते हैं वे बाल (अज्ञानी) हैं–यह भाष्यकार का अभिप्रेत है। ब्रह्मसूत्रों की **शारीरकसूत्रसंज्ञा,** उसके भाष्य की शारीरकभाष्यसंज्ञा के रूप में प्रसिद्धि है भाष्यप्रोक्त बालशब्द के अन्तर्गत सूत्रकार तथा भाष्यकार के भी अन्तर्गत होने से कैसे उनके वचन में प्रामाण्यग्रत हो सकेगा?

इस आक्षेप का निराकरण इस प्रकार किया जाता है— यहाँ यह महान् अन्तर है। तद्यथा— शारीर शब्द की व्युत्पत्ति है— शरीरे भवः शारीरः। यहाँ भूधातु से निष्पन्न "भवति" प्रयोग के दो प्रसिद्ध अर्थ हैं— अस्तित्व एवं उत्पत्ति। जो लोग शरीरावच्छेदेन आत्मा की उत्पत्ति मानकर "शारीर" का प्रयोग करते हैं— वे ही भाष्यकार द्वारा बालशब्द से व्यवहृत होते हैं। भगवान् भाष्यकार का अभिप्राय तो यह है—यथा व्यापक आकाश, घट-प्रभृति उपाधि में उत्पन्न नहीं होता किन्तु महाकाश स्वयमेव घटादि के आकार से अभिव्यक्त होता है तद्वत् आत्मा भी शरीर में उत्पन्न नहीं होता किन्तु सर्वत्र व्याप्त वह शरीर-उपाधि में शरीराकार से अभिव्यक्त होता है। अतः शारीरकसूत्रभाष्य में शरीरावच्छेदेन उपलभ्यमान आत्मा का तावन्मात्र स्वरूप

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाकाशं तथा जीवो नभोपमः[1]।।

इत्युपनिषद्वचनानुसारेण सर्वगतस्य चैतन्यस्याऽन्तःकरणेनाऽवच्छेदोऽवश्यं भवतीत्यन्तःकरणावच्छिन्नोऽविद्यावच्छिन्नो वा जीव इति श्रीवाचस्पति-मिश्रेभ्योऽवच्छेदपक्ष एव रोचते। अस्मिन् पक्षेऽज्ञाननानात्वाद् जीवनानात्वम्। स्वाज्ञानोपहिततया जगदुपादानत्वादेकस्य तत्त्वज्ञाने नापरस्य प्रपञ्चानुच्छेद इति प्रतिजीवं प्रपञ्चभेदोऽत्र प्रस्तूयते। अस्मिन्नवच्छेदवादे स्वावारकाज्ञानवशाज्जीव एव तत्तज्जगदुपादानं निमित्तं कर्ता च। ईश्वरे च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचार इत्यङ्गीक्रियते[2]।

एवमन्तःकरणाऽवच्छिन्नस्य जीवत्वे कर्तृभोक्तृसमययोस्तत्र तत्रान्तः-करणावच्छेद्यचैतन्यप्रदेशस्य भिन्नत्वात् कृतहानाकृताभ्यागमप्रसङ्ग इति,

---

नहीं है किन्तु घटाकाशस्थ महाकाशस्वरूपवत् उस शरीरावच्छिन्न आत्मा का व्यापक ब्रह्मस्वरूप एवम् उसके साथ अभेद (ऐक्य) भी प्रतिपादित किया गया है अतः ज्ञानी एवम् अज्ञानी के मध्य बहुत बड़ा अन्तर (भेद) है।

उपनिषद् का वचन प्राप्त होता है—घटसंवृत........नभोपमः।।१।।

इसका अर्थ है— घटसम्मित आकाश है जब घट को एक स्थान से दूसरे स्थान तक ले जाते हैं तो केवल घट ही स्थानान्तरित होता है, आकाश नहीं। तद्वत् जीवात्मा भी आकाशोपम है। एतदनुसार सर्वगत चैतन्य का अन्तःकरण से अवच्छेदन अवश्य होता है अतः अन्तःकरणावच्छिन्न किं वा अविद्यावच्छिन्न चेतन जीव कहलाता है। इस प्रकार श्रीवाचस्पतिमिश्रजी को अवच्छेद-पक्ष, युक्ति संवलित प्रतीत होता है। इस पक्ष में अज्ञान व्यक्ति के नाना होने से जीवनानात्व की उपपत्ति सहजता से होती है। स्वकीय अज्ञान से उपहित में जगदुपादानकारणता के अभ्युपगम होने से एक के तत्त्वज्ञान से अन्य जीव का प्रपञ्च नष्ट नहीं होता अतः प्रत्येक जीव का अपना पृथक् संसार इस सिद्धान्त में प्रतिपादित किया जाता है। इस अवच्छेदवाद में स्वस्वरूप को आवृत करने वाले अज्ञान के वंशवद जीव को ही प्रतिव्यक्ति भिन्न जगत् के प्रति उपादानकारण निमित्तकारण एवं कर्ता माना जाता है। ईश्वर में केवल कारणता का उपचार मात्र किया जाता है क्योंकि वह सप्रपञ्च जीवाविद्या का अधिष्ठान माना जाता है।

---

१. त्रि० ता० १३.
२. सि० बि०, पृ० ९०-९२.

अवच्छेदमात्राज्जीवत्वस्वीकारे घटावच्छिन्नस्यापि जीवत्वं प्रसज्येत, अन्तःकरणस्य स्वच्छत्वात् तदवच्छिन्नस्यैव जीवत्वमिति चेत्, परिच्छेदे स्वच्छत्वास्वच्छत्वकृतविशेषाऽनुपपत्तेः, प्रतिबिम्बंग्राहित्वमात्रविशेषोपलब्धिस्वीकारे हठात् प्रतिबिम्बवादस्वीकारापत्तिश्चेत्यालोचका अस्मिन्नप्यवच्छेदवादेऽरुचिं प्रदर्शयन्ति[१]।

वस्तुतस्तु प्रतिबिम्बवादे, अवच्छेदवादे आभासवादे वा नाद्वैतिनामत्यन्तमाग्रहः, तेषां बालबोधनार्थत्वात्। किन्तु यथा किञ्चिद्विकारमन्तरेण कुन्तीपुत्रेऽज्ञानवशाद् राधापुत्रत्वभ्रमः, तथा ब्रह्मैव किञ्चिद्विकारं विनाऽनाद्यविद्यावशाज्जीवभावमापन्नं सद् विवेकेन मुच्यत इत्येव परमार्थः। तदुक्तं बृहदारण्यकभाष्ये पूज्यपादैः शङ्कराचार्यैः–"ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यते च" इति। वार्त्तिककारेणाप्युक्तम्–

---

उपर्युक्त प्रकार से अन्तःकरणावच्छिन्न चैतन्य को जीव मानने के पक्ष में कर्मकर्ता एवं फलभोक्ता की शास्त्रव्यवस्था लोक-लोकान्तर में अन्तःकरणावच्छिन्न चैतन्य प्रदेश के भिन्न होने से कृतहान एवम् अकृताभ्यागम की प्रसक्ति होती है। तद्वत् अवच्छेदमात्र को जीवत्व के प्रति प्रयोजक मानने से घटावच्छिन्न चैतन्य में भी जीवत्व की अतिप्रसक्ति प्राप्त होगी। यदि यह कहा जाय कि अन्तःकरण के स्वच्छ होने से तदवच्छिन्न चैतन्य को ही जीव कहा जायगा तो यह समीचीन नहीं है। क्योंकि परिच्छेदः . के प्रति स्वच्छता एवम् अस्वच्छता से किसी अन्तर की उपपत्ति नहीं की जा सकती। स्वच्छता को प्रतिबिम्बग्राहित्वरूप विशेष की उपलब्धि के प्रति प्रयोजक मानने पर प्रतिबिम्बवाद के स्वीकार की आपत्ति भी होती है अतः समालोचक जन अवच्छेदवाद में अरुचि प्रदर्शित करते हैं। वस्तुतः प्रतिबिम्बवाद, अवच्छेदवाद अथवा आभासवाद में अद्वैतदार्शनिकों का कोई आग्रह नहीं है। क्योंकि ये सहयोगी सिद्धान्त बालबुद्धिजनों के उद्देश्य से कल्पित हैं। यथा विकारविशेष के बिना ही कुन्तीपुत्र में अज्ञानवशात् राधापुत्रत्व का भ्रम होता है। तद्वत् ब्रह्म ही विकारविशेष के बिना अनादि अविद्यावशात् जीवभाव को प्राप्त कर पुनश्च विवेक द्वारा मुक्त होता है–यही परमार्थ है। अतएव बृहदारण्यक भाष्य में पूज्यचरण शंकराचार्य ने कहा है— ब्रह्म ही स्वकीय अविद्या से संसारी बनता है तथा स्वकीय विद्या से ही मुक्त होता है। वार्तिककार ने भी कहा है—

---

१. सा० सु०, व० ११, अ० ३-४, पृ० २४०.

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः[१]।।इति।

अयमेव एकजीववादाख्यो मुख्यो वेदान्तपक्षः। अत्राप्येकजीववादे एकेन जीवेनैकमेव शरीरं सजीवम्, अन्यानि तु स्वप्नशरीराणीव निर्जीवानि। अत्र पक्षे जीवाज्ञानकल्पितमेव जगदिति तस्य प्रातिभासिकमेव सत्त्वम्, न व्यावहारिकम्। अत्र जीवस्यैकत्वात् तस्यैव च स्वकल्पितगुरुशास्त्राद्युप-बृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः। शुकवामदेवादीनां मोक्षश्रवणं त्वर्थवादः। अत्र च सम्भावितसकलशङ्कापङ्कप्रक्षालनं स्वप्नदृष्टान्तसलिलधारयैव कर्तव्यमिति प्रतिपादयन्ति[२]।

अन्ये तु "अधिकं तु भेदनिर्देशात्"[३], "लोकवत्तु लीलाकैवल्यम्"[४] इत्यादिसूत्रेषु जीवभेदस्य, ईश्वरस्यैव जगत्कर्तृत्वस्य च प्रतिपादितत्वादेकेन

---

"राजसूनोः स्मृतिप्राप्तौ.......तत्त्वमस्यादिवाक्यतः।।१।।

यही एकजीववाद नामक मुख्य वेदान्त पक्ष है। इस एक जीववाद में भी एक जीव से एक ही शरीर सजीव होता है अन्य शरीर स्वप्नशरीर की तरह निर्जीव ही होते हैं। इस पक्ष में जीव के अज्ञान से कल्पित ही जगत् है अतः जगत् की प्रातिभासिक सत्ता मानी जाती है, व्यावहारिक नहीं। इस मत में जीवैक्य सिद्धान्त होने से उसी का स्वकल्पित गुरु, शास्त्र से उपबृंहित श्रवण, मनन तथा निदिध्यासन की दृढ़ता के साथ आत्मसाक्षात्कार होने से मोक्ष होता है। शुक एवं वामदेव प्रभृति के मोक्षश्रवण को अर्थवाद माना जाता है। इस मत में सम्भावित यच्च यावच्च सकल शङ्का-पङ्कों का प्रक्षालन स्वप्न-दृष्टान्त की सलिल-धारा से किया जाना चाहिए-ऐसा आचार्यों ने बताया है।

अन्य वेदान्तिगण "अधिकन्तु भेदनिर्देशात्", लोकवत्तु लीलाकैवल्यम्" इत्यादि सूत्रों में जीवभेद तथा ईश्वर की ही जगत्कर्तृता के प्रतिपादित होने से एक जीव से एक ही शरीर सजीव है तथा तदीय अज्ञान से कल्पित ही जगत् है— एतादृश पूर्वोक्त सिद्धान्तवचन में खोजकर भी विश्वास प्राप्त नहीं कर पाते हैं। अतः वह एक हिरण्यगर्भ ही ब्रह्मप्रतिबिम्बस्वरूप मुख्य जीव है, अन्य जीव

---

१. सि० ले० सं०, पृ० १२०.
२. सि० बि०, पृ० ९२-९३ तथा सि० ले० सं०, पृ० १२१.
३. ब्र० सू० २।१।२२.
४. ब्र० सू० २।१।३३.

जीवेनैकमेव शरीरं सजीवम्, तदज्ञानकल्पितमेव जगदिति पूर्वोक्तवचने मनःप्रत्ययमलभमाना हिरण्यगर्भ एको ब्रह्मप्रतिबिम्बो मुख्यो जीवः, अन्ये तु तत्प्रतिबिम्बभूताः संसारादिभाज इति सविशेषानेकशरीरैकजीववादमङ्गीकुर्वन्ति[१]।

अपरे तु प्रतिकल्पं हिरण्यगर्भस्य भेदात् कस्य हिरण्यगर्भस्य मुख्यं जीवत्वमित्यत्र नियामकाभावादेक एव जीवोऽविशेषेण सर्वशरीरमधितिष्ठतीति स्वीकुर्वन्ति। नन्वेकेनैव जीवेन कथं सर्वशरीरचेष्टासम्भव इति चेदुक्तं श्रीप्रकाशानन्देन–"एकेनाप्यनेकदेहचेष्टोपपत्तेः, नैयायिकानां कायव्यूहदशायां योगिदेहवत्"[२] इति। नन्वेवं सति चैत्रशरीरोत्पन्नस्य दुःखस्य मैत्रशरीरेणानुभवप्रसङ्गः? इति चेन्मैवम्, यथा शरीरभेदादेव न जन्मान्तरीयसुखाद्यनुसन्धानम्, तथा प्रकृतेऽपि शरीरभेदान्नानुसन्धानप्रसङ्गः. यद्वा एकस्मिन्नपि देहे पादावच्छिन्नः शिरोवच्छिन्नस्य दुःखं नानुसन्धत्ते, पादे मे सुखं शिरसि मे वेदनेत्यनुभवात्, तद्वदेवैकस्यापि जीवात्मनोऽनेकशरीरेषु सत्त्वेऽपि नानुसन्धानप्रसङ्गः[३]।

---

उनके प्रतिबिम्बस्वरूप संसारी हैं। इस प्रकार सविशेष अनेक शरीर में एकजीववाद के सिद्धान्त में इनका विश्वास है। अपर अद्वैती का कहना है— प्रत्येक कल्प में हिरण्यगर्भ भिन्न-भिन्न होते हैं। ऐसी स्थिति में किस हिरण्यगर्भ को मुख्यजीव माने— इसमें नियामक का अभाव होने से जीव के ऐक्य तथा अविशेषेण सर्वशरीर में उसकी स्थिति स्वीकार्य है।

जिज्ञासा उदित होती है— एक जीव के द्वारा सभी शरीरों में चेष्टा कैसे की जा सकती है? इसका समाधान श्रीप्रकाशानन्द स्वामी ने दिया है— "एकजीव द्वारा भी अनेक देहों में चेष्टा की उपपत्ति सम्भव है। यथा नैयायिक लोग काय-व्यूहदशा में एक योगी द्वारा नानादेह से भोगों को स्वीकार करते हैं।

अन्य जिज्ञासा उदित होती है—यदि एक जीव अनेक शरीरों के माध्यम से सुखादि का उपलम्भ करे तो चैत्रीय शरीर में उत्पन्न दुःख का अनुभव, मैत्रशरीर में होने की आपत्ति होगी। इसका समाधान है–यथा शरीरभेदमात्र से जन्मान्तरीय सुखादि के अनुसन्धानाभाव की आपत्ति नहीं दी जाती तद्वत् प्रकृत में भी शरीरभेद

---

१. सि० ले० सं०, पृ० १२२-१२३.

२. वे० सि० मु०, पृ० ४०-४१.

३. सि० ले० सं०, पृ० १२३-१२४ तथा वे० सि० मु०, पृ० ४०-४१.

एवमद्वैतवेदान्ते जीवस्वरूपनिरूपणार्थमाभासवादः, प्रतिबिम्बवादः, अवच्छेदवादः, एकजीववादश्चेति चत्वारो वादाः सन्ति। तत्र चतुर्ष्वपि वादेषु श्रुति-सूत्र-भाष्याणां प्रमाणसद्भावात् चतुर्णामप्युपादेयत्वेऽप्येकजीववाद उत्तमाधिारिणां कृते, प्रतिबिम्बावच्छेदवादौ मध्यमाधिकारिणां कृते, आभासवादश्च कनिष्ठाधिकारिणां कृत इति व्यवस्थापयितुं शक्यते। तदेवमद्वैतवेदान्ते आत्मभेद औपाधिकः, अभेदश्च पारमार्थिक इत्यङ्गीक्रियत इति ज्ञेयम्।

## सिद्धान्तशिखामण्यनुसारेण जीवस्वरूपम्

तत्र भेदाभेदयोः समन्वयात्मके वीरशैवसिद्धान्तप्रतिपादके 'सिद्धान्तशिखामणि'ग्रन्थेऽपि शरीरेन्द्रियमनोबुद्धिभ्यो व्यतिरिक्त एव जीवात्मेति स्वीक्रियते। तदुक्तं भगवत्पादै रेणुकाचार्यैः–

---

से अनुसन्धान की अतिप्रसक्ति नहीं होगी। यद् वा एक ही देह में पादावच्छिन्न जीव सिरोऽवच्छिन्न दुःख का अनुसन्धान नहीं करता है। तद्यथा–मेरे पाददेश में सुख का उपलम्भ होता है तथा शिरोदेश में वेदना का उपलम्भ होता है–ऐसी लोकसिद्ध अनुभूति होती है। तद्वत् एक ही जीव होता है–सिद्धान्त में अनेक शरीर के रहने पर भी अनुसन्धान की अतिप्रसक्ति निवारित होगी।

उपर्युक्त विवेचना से सुस्पष्ट होता है— अद्वैतवेदान्त में जीवस्वरूप के निरूपणार्थ चार बाद सम्मान्य हैं— आभासवाद, प्रतिबिम्बवाद, अवच्छेदवाद तथा एकजीववाद। चार प्रकार के वाद में श्रुतिप्रमाण, सूत्रप्रमाण तथा भाष्यप्रमाण प्राप्त होते हैं। अतः इन चारों की उपादेयता प्रमाणित है। इनकी व्यवस्था निम्नाङ्कित प्रकार से की जाती है— उत्तम अधिकारी के लिए एक जीववाद, मध्यम अधिकारी के लिए प्रतिबिम्बवाद एवम् अवच्छेदवाद तथा कनिष्ठ अधिकारी के लिए आभासवाद समधिक उपयोगी है। इस प्रकार अद्वैतवेदान्त में आत्मभेद औपाधिक है तथा अभेद पारमार्थिक है— ऐसा स्वीकार किया जाता है।

## सिद्धान्तशिखामणि के अनुसार जीव का स्वरूप

भेद एवम् अभेद के मध्य समन्वय के स्थापक एवं वीरशैवसिद्धान्त के प्रतिपादक सिद्धान्तशिखामणि-ग्रन्थ में भी शरीर, इन्द्रिय, मनस् एवं बुद्धि से व्यतिरिक्त ही जीवात्मा होता है–ऐसा स्वीकार किया जाता है। भगवत्पाद

नेन्द्रियाणां न देहस्य न बुद्धेरात्मता भवेत्।
अहंप्रत्ययवेद्यत्वादनुभूतस्मृतेरपि ।।
शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तः सनातनः[१]।इति।।

नन्वयं जीवः किंस्वरूप इति जिज्ञासायामुक्तम्–
एक एव शिवः साक्षाच्चिदानन्दमयो विभुः।
निर्विकल्पो निराकारो निर्गुणो निष्प्रपञ्चकः।
अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः[२]।।इति।

अस्यायमर्थः– अकुण्ठितेच्छाद्यनेककल्याणगुणगणपूर्णः परशिव एव स्वविमर्श-शक्त्यंशभूतानाद्यविद्यासम्बन्धात् 'जीवः' इत्यभिधानवान् भवति। तदेवमत्र दर्शने परशिवस्यांश एव जीव इति प्रतिपादितं भवति। अंशत्वं नाम अनाविष्कृताखिलशक्तिमत्त्वम्। अत एवायं जीवः सर्वकर्तृत्व-सर्वज्ञत्व-परिपूर्णत्व-नित्यत्व- व्यापकत्वरूपपरशिवशक्तिरूपसंकोचककला-विद्या-राग-काल-नियतिरूपपञ्चकञ्चुकैरावृतः किञ्चित्कर्तृत्वकिञ्चिज्ज्ञत्वापूर्णत्वानित्यत्वा-व्यापकत्वधर्मकः सन् स्वकर्मानुसारेण संसारे परिभ्रमति। तदुक्तम्–

---

रेणुकाचार्य ने सुस्पष्ट कहा है—

नेन्द्रियाणां न देहस्य........व्यतिरिक्तः सनातन।।१।।

इस जीव का स्वरूप कैसा है इस जिज्ञासा के समाधान हेतु कहा गया है— एक एव शिवः साक्षात्.............तदंशो जीवनामकः।।१½।।

इसका अर्थ है— परशिव में अकुण्ठित इच्छा प्रभृति अनेक कल्याण-गुणगण निवास करते हैं। वह परशिव ही स्वविमर्श शक्ति के अंशभूत अनादि अविद्या सम्बन्ध से **''जीव''** कहलाते हैं। इस प्रकार इस दर्शन में परशिव का अंश ही जीव है—ऐसा प्रतिपादित किया गया है। अंशत्व पारिभाषिक है—अखिल शक्ति का आविष्करण नहीं होना ही शक्त्यंश कहलाता है। अतएव यह जीव, सर्वकर्तृत्व, सर्वज्ञत्व, परिपूर्णत्व, नित्यत्व एवं व्यापकत्व इन पाँच शक्तियों (पर शिव के) के संकोचक पाँच कञ्चुकों (कला, विद्या, राग, काल एवं नियति) से आवृत होता है। परिणामस्वरूप यह जीव किञ्चित्कर्तृत्व, किञ्चिज्ज्ञत्व, अपूर्णत्व, अनित्यत्व एवम् अव्यापकत्व धर्म से संयुक्त होता है तथा स्वकर्मानुसार यह संसार

---

१. सि० शि० ५।३-४, पृ० ७३.
२. सि० शि० ५।३३-३४, पृ० ६३.

किञ्चित्कर्ता च किञ्चिज्ज्ञो बद्धोऽनादिशरीरवान्।।
अविद्यामोहिता जीवा ब्रह्मैक्यज्ञानवर्जिताः।
परिभ्रमन्ति संसारे निजकर्मानुसारतः।।
देवतिर्यङ्मनुष्यादिनानायोनिविभेदतः[1] ।इति।

अत एवात्र दर्शने जीवस्यांशत्वापादकेऽज्ञाने नञो न ज्ञानविरोधिभावरूपाज्ञानमित्यर्थः, किन्तु ईषद् ज्ञानमज्ञानम्, अर्थात् संकुचितज्ञानमित्यर्थः। अत एवात्र न प्रतिषेधार्थको नञ्, अपि तु पर्युदासार्थकः मुक्तौ तु ज्ञानादेः सङ्कोचकारणीभूतानामाणवादिमलत्रयाणां निवृत्तौ सत्यां तस्य ज्ञानादिशक्तीनां पुनर्विकासो भवति। तदुक्तम्—

जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।
निरस्यते गुरोर्बोधाद् ज्ञानशक्तिः प्रकाशते[2]।।इति।

वृत्तिकारैः शङ्करशास्त्रिमहाभागैरपि—"अस्मन्मते शिवजीवयोर्भेदस्य मिथ्याज्ञानकृतत्वाभावात् शिवशक्तिस्वातन्त्र्यपरिकल्पितसङ्कोचकृतत्वात् तयोरभेदस्य विकसितस्वशक्तिदशायामुपपन्नत्वात् कूर्माङ्गभङ्गि-अहिकुण्डलस्वर्णकुण्डल-

---

में भटकता रहता है। तद्यथा—

किञ्चित्कर्ता च किञ्चिज्ज्ञो..........नानायोनिविभेदतः।।२।।

अतएव इस दर्शन में जीव के अंशत्वापादक अज्ञान के नञ् का ज्ञानविरोधी भावरूप अज्ञान अर्थ नहीं है, किन्तु ईषद् ज्ञानम् अज्ञानम्—इस व्युत्पत्ति के आधार पर ज्ञान का अर्थ है— संकुचित ज्ञान। एवञ्च इस सिद्धान्त में अज्ञान शब्द का नञ्-पद प्रतिषेधार्थक नहीं है किन्तु पर्युदासार्थक है। मुक्ति अवस्था में ज्ञानादि के संकोचक आणव, मायीय एवं कार्ममल के निवृत्त होने से उसके ज्ञानादिशक्ति का पुनर्विकास होता है। तद्यथा—

जीवत्वं दुःखसर्वस्वं.......ज्ञानशक्तिः प्रकाशते।।१।।

वृत्तिकार श्रीशंकरशास्त्री महोदय ने भी कहा है— "वीरशैवागम मत में शिव एवं जीव के भेद को मिथ्याज्ञान-प्रयुक्त (जन्य) नहीं माना जाता है प्रत्युत शिव की शक्ति के स्वातन्त्र्य से परिकल्पित "शक्तिसंकोच" से जन्य माना जाता है। अतश्च शिव और शक्ति का अभेद विकसित शक्ति दशा में उपपन्न होता है। अतः

---

१. सि० शि० ५।४७-४८, पृ० ७०-७१.
२. सि० शि० १८।१७, पृ० १३३.

न्यायादिभिः स्वरूपस्यैव स्वेच्छया सङ्कोचः स्वरूपस्यैवाविर्भावः"[१] इत्युक्तम्, सङ्कुचितशक्तिकस्य शिवस्यैव जीवत्वमिति, पुनः शक्तिविकासे तस्यैव शिवत्वमिति च समर्थितम्।

**जीवात्मनोऽणुरूपत्वम्**

बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते[२]।।

इति श्रुत्यनुसारेण वीरशैवदर्शने जीवस्याणुपरिमाणत्वं स्वीक्रियते।

तदुक्तम्—

बालाग्रशतभागेन सदृशो हृदयस्थितः।
अश्नन् कर्मफलं सर्वमात्मा स्फुरति दीपवत्।।
आत्मापि सर्वभूतानामन्तःकरणमाश्रितः।
अणुभूतो मलासङ्गादादिकर्मनियन्त्रितः[३]।।इति।

---

कूर्माङ्गभङ्गिन्याय, अहिकुण्डलन्याय एवं स्वर्णकुण्डलन्याय से स्वरूप का स्वेच्छामूलक संकोच एवं स्वरूप का ही आविर्भाव होता है।" तदनुसार शक्ति-संकोच होने से शिव ही जीवभाव में उपस्थित होते हैं, पुनश्च शक्तिविकास होने से जीव शिवता में प्रतिष्ठित हो जाता है—ऐसा समर्थन उन्होंने किया है।

**जीवात्मा की अणुरूपता**

"बालाग्रशतभागस्य............स चानन्त्याय कल्प्यते।।१।।

इस श्रुतिप्रमाण के आधार पर वीरशैवदर्शन में जीव का अणुपरिमाण स्वीकार्य है। तद्यथा— बालाग्रशतभागेन.......आदिकर्मनियन्त्रितः।।२।। इति

आणवमल से आवृत होने के कारण जीव अपनी परिपूर्णता को विस्मृतकर अणुता को प्राप्त करता है।

जीव के मलावृत स्वरूप को नीलकण्ठ शिवाचार्य महोदय ने भी प्रतिपादित किया है— "जीवात्मा का लक्षण है— स्थूल चिदचिद्रूप-शक्ति-विशिष्टत्व। मलत्रय-विशिष्टत्व ही स्थूलत्व कहलाता है। स्थूल चिद्-अचिद् का वैशिष्ट्य जीवात्मा में

---

१. ब्र० सू० शा० वृ० १।३।१९.
२. श्वे० उ० ५।९.
३. सि० शि० १८।६-७, पृ० १२९.

आणवमलेनावृतत्वादेव जीवः स्वस्य परिपूर्णभावं विस्मृत्याणुतामापद्यते।

जीवस्य मलावृतस्वरूपत्वं नीलकण्ठशिवाचार्यैरप्युक्तम्–"तत्र स्थूलचिद-चिद्रूपशक्तिविशिष्टत्वं जीवात्मनो लक्षणम्। स्थूलत्वं च मलत्रयविशिष्टत्वम्। वैशिष्ट्यं चापृथग्भावसम्बन्धेन। एतन्मलत्रयरूपशक्तिविशिष्टो जीवः संसारीति निगद्यते"[1] इति।

**यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।**
**तथाक्षराद् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति[2]।।**

इति श्रुत्युक्त्यनुसारेण यथाऽग्निविस्फुलिङ्गयोरंशांशिभावः, तथा जीवपरमात्मनोरप्यंशांशिभावोऽङ्गीक्रियते। अत एवोक्तम्–

**निर्विकल्पो निराकारो निर्गुणो निष्प्रपञ्चकः।**
**अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः[3]।।**इति।

शिवगीतायामपि–

**सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः।**
**तस्यैवांशो जीवलोके हृदये प्राणिनां स्थितः।।**
**विस्फुलिङ्गा यथा वह्नौ जायन्ते काष्ठयोगतः।**
**अनादिकर्मसम्बद्धास्तद्वदंशा महेशितुः।।**

---

अपृथग्भावसम्बन्ध से रहता है। त्रिविधमल-स्वरूप शक्ति से विशिष्ट जीव को संसारी कहा जाता है।"

"यथा सुदीप्तात् .............तत्र चैवापि यन्ति।।१।।

इस श्रुतिवचन के आधार पर यथा अग्नि एवं विस्फुलिङ्ग के मध्य अंशांशिभाव सम्बन्ध होता है तद्वत् जीव एवं परमात्मा के मध्य भी अंशांशिभाव का अङ्गीकार किया जाता है। अतएव कहा गया है— निर्विकल्पो निराकारो— तदंशो जीवनामकः।।१।। इति।

शिवगीता में भी महर्षि अगस्त्य ने श्रीराम से कहा है—

सत्यज्ञानात्मकोऽनन्तो......इति ते स्मृताः।।२½।। इति।

---

१. शि० परि०, पृ० ६.

२. मुण्ड० २.१।१.

३. सि० शि० ५।३४, पृ० ६३.

अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः[१]।

इति महर्षिणागस्त्येन श्रीरामं प्रति जीवस्य परशिवांशत्वमेवोपदिष्टम्। मायिदेवेनापि–"आत्मायं केवलः शुद्धः शिवस्यांशः सदामलः"[२] इति जीवस्य शिवांशत्वं प्रतिपादितम्। तथा सत्येव साधारणासाधारणधर्माभ्यां तयोर्भेदाभेदौ प्रसिद्ध्यतः।

**जीवपरमात्मनोरङ्गाङ्गिभावः**

जीवपरमात्मनोरयमंशांशिभावो न ह्यौपाधिकः, किन्त्वङ्गाङ्गिरूपो वास्तविकः। अत एवात्र सिद्धान्ते जीवः 'अङ्गम्' इति कथ्यते। तदुक्तं मायिदेवेन–

अनाद्यन्तमजं लिङ्गं तत्परं परमं प्रति।
यद् गच्छति महाभक्त्या तदङ्गमिति निश्चितम्।।
अं भवेत् परमं ब्रह्म तद्गतं तत्परायणम्।
अङ्गस्थलमिति प्राहुरङ्गतत्त्वविशारदाः[३]।।इति।

श्रीनीलकण्ठशिवाचार्याः–"अङ्गपदस्य रूढिशक्त्या शरीरवाचित्वेऽपि यस्य चात्मा शरीरम्......यस्य चाव्यक्तं शरीरम्" इत्यन्तर्यामिब्राह्मणेन

---

तदनुसार जीव को शिव का अंश होना उपदिष्ट है। मायिदेव ने भी-"आत्मायं केवलः शुद्धः शिवस्यांशः सदामलः।" वचन द्वारा जीव की शिवांशता को प्रतिपादित किया है। अंशांशिभाव का अङ्गीकार करने से ही साधारण एवम् असाधारण धर्मों के आधार पर शिव एवं जीव में भेद तथा अभेद की प्रसिद्धि होती है।

**जीव एवम् परमात्मा में अङ्गाङ्गिभाव–**

वीरशैव मत में जीव एवम् परमात्मा के अंशांशिभाव को औपाधिक नहीं माना जाता किन्तु इसे अङ्गाङ्गीभाव रूप में वास्तव माना जाता है। अतएव इस सिद्धान्त में जीव को "अङ्ग" कहा जाता है। मायिदेव आचार्य ने कहा है—

अनाद्यन्तमजं लिङ्गं.......प्राहुरङ्गतत्त्वाविशारदाः।।इति।।२।।

श्रीनीलकण्ठ शिवाचार्य ने निम्नाङ्कित अन्तर्यामिब्राह्मण के आधार पर पृथिवी

---

१. शिवगी० २।२७-२९.
२. अनु० सू० ५।३.
३. अनु० सू० ४।२-३.

पृथिव्यादिजीवात्मपर्यन्तस्य सकलस्य वस्तुजातस्य परशिवशरीरत्वबोधनाद् जीवस्याप्यङ्गपदवाच्यत्वे न काप्यनुपपत्तिः"[१] इत्यङ्गपदस्य जीववाचकत्वं समर्थितवन्तः।

पत्रशाखादिरूपेण यथा तिष्ठति पादपः।
तथा भूम्यादिरूपेण शिव एको विराजते[२]।।

इति भगवत्पादै रेणुकाचार्यैः परशिव एव स्थावरजङ्गमरूपेणापि वर्तत इति प्रतिपादितम्। तत्र परशिवस्य धृतिशक्त्या धरणिः, करुणया जलम्, उज्ज्वलतया तेजः, परमानन्दस्पन्देन वायुः, चिद्व्याप्त्या व्योम, चितिसङ्कोचचित्तविशिष्टो जीव इति मरितोण्टदार्यैः शिवः स्वकीयभिन्नभिन्नशक्त्या भूम्यादिरूपेण परिणामं प्राप्य चितिसङ्कोचभूतचित्तविशिष्टत्वेन जीवोऽभूदिति प्रतिपादितम्[३]। तस्माद्यथा वृक्षशाखादिष्ववयवावयविभावस्तथा जगज्जीवपरमात्मनोरप्यवयवावयविभावः।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्[४]।।

---

से जीवपर्यन्त सकल वस्तु को परशिव के शरीर होने की बात प्रतिपादित की है अतः जीव के अङ्गपदवाच्य होने में किसी प्रकार की अनुपपत्ति का प्रतिषेध किया है— अङ्गपदस्य रूढिशक्त्या शरीरवाचित्वेऽपि यस्य चात्माशरीरम्........ यस्य चाव्यक्तं शरीरम्।" इति। तदनुसार आचार्य ने अङ्गपद की जीववाचकता का समर्थन किया है।

भगवत्पाद श्री रेणुकाचार्य ने निम्नाङ्कित वचन के आधार पर प्रतिपादित किया है— परशिव ही स्थावर एवं जङ्गमरूपों में भी वर्तमान होते हैं। मरितोण्डदार्य महाशय ने प्रतिपादित किया है— शिव ही अपनी विभिन्न शक्ति के बल पर भूमि जल प्रभृति रूपों में परिणत होकर चिति के संकुचित रूप चित्त से विशिष्ट होकर जीव स्वरूपों में उपस्थित होते हैं। तद्यथा— "परशिव की घृतिशक्ति से धरणि, करुणा से जल, औज्ज्वल्य से तेजस्, परमानन्दमय स्पन्द से वायु, चिद्व्याप्ति से व्योम एवं चितिसंकोच रूप चित्त से विशिष्ट होने से जीव की निर्मिति होती है। अतः यथा वृक्ष का शाखादि के साथ अवयवावयवीभाव सम्बन्ध है तद्वत् परमात्मा के

---

१. शि० परि०, पृ० ५९.
२. सि० शि० १०।९, पृ० १८९.
३. सि० शि० १०।९ तत्त्वप्रदीपिकाव्याख्या, पृ० १८९.
४. श्वे० उ० ४।१०.

इति श्रुतिं प्रमाणयद्भिर्भगवत्पादैः श्रीपतिपण्डिताराध्यैरपि—"तस्मान्मायिनः परमशिवावयवलेशः पुरुषो जीवः"[१] इति जीवस्य परशिवावयवत्वं प्रतिपादितम्। तस्माज्जीवपरमात्मनोरवयवावयविभावरूपोऽशांशिभावः।

ननु परशिवस्य निरवयवत्वात् कथं जीवपरमात्मनोरवयवावयवि-रूपोऽशांशिभाव इति चेन्न, तस्यास्मदादेरिव प्राकृतावयवाऽभावेऽपि—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य।।[२]

इत्यादिप्रमाणेन विलक्षणनित्याङ्गसद्भावेन दोषाभावात्। यथा न्यायमते 'पञ्चावयवं वाक्यं न्यायः' इति न्यायलक्षणस्य निरवयवे शब्दे गुणरूपे द्रव्यत्वव्याप्यस्यावयवत्वस्य द्रव्यत्वाभाववति शब्दे नितरामभावेन लक्षणस्यासंभवित्वापत्तौ अधीनत्वलक्षणमवयवत्वम् आरोपितं वा स्वीकृत्य

---

साथ जगत् एवं जीव का अवयवावयवीभाव सम्बन्ध है। "मायान्तु प्रकृतिं विद्याद्...... व्याप्तं सर्वमिदं जगत् ।।१।।"—इस श्रुतिवचन को प्रमाण मानते हुए भगवत्पाद श्रीपतिपण्डिताराध्य ने भी जीव को परशिव का अवयव बताया है— "मायाशक्तियुक्त परमशिव का अवयव स्वरूप होने से जीव ईश्वर का अंश है।"

अतः यह मान्य सिद्धान्त है— जीव एवम् परमात्मा के मध्य अवयवावयवीभाव रूप अंशांशिभाव सम्बन्ध है।

जिज्ञासा उदित होती है— परशिव निरवयव हैं—ऐसी स्थिति में जीव एवं परमात्मा के मध्य अवयवावयवीभावरूप अंशांशिभाव सम्बन्ध कैसे माना जा सकता है। इसका समाधान है— परशिव के प्राकृत अवयव, हम जीवों के तरह नहीं होते किन्तु निम्नाङ्कित पुराणवचन के प्रामाण्य से उनके विलक्षण नित्य अङ्ग के सद्भाव से आपत्ति का निराकरण हो जाता है। तद्यथा—

सर्वज्ञता तृप्तिरनादिबोधः........षडाहुरङ्गानि महेश्वरस्य।।१।।

यथा न्यायमत में न्याय का लक्षण बताया गया है— "पञ्चावयववाक्यं न्यायः।" वाक्यात्मक शब्द गुण है, द्रव्य नहीं। अवयव की सम्भावना द्रव्य में होती है, गुण में नहीं। ऐसी स्थिति में लक्षण के असम्भव दोष को वारित करने हेतु अधीन अर्थ में अवयव शब्द का तात्पर्य माना जाता है। अथवा आरोपित अवयवत्व से दोष

---

६. ब्र० सू० श्रीकर० २।३।४१.
१. वा० पु० १२।३१.

दोषनिरासः क्रियते, तथैव प्रकृतेऽपि परिदर्शितः निष्पक्षपातः पन्थाः परिद्रष्टव्यः। जीवस्य परशिवांशत्वे–"तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्"[२] "अंशो नानाव्यपदेशात्"[३], "ममैवांशो जीवलोके जीवभूतः सनातनः"[४] इत्यादिश्रुति-सूत्र-स्मृतिवचनानि प्रमाणान्यवगन्तव्यानि।

नन्वेवं जीवस्येश्वराङ्गत्वे स्वीकृते 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इत्याभाणकानुसारेण यथा हस्ताद्यवयवगतव्रणादिजन्यदुःखेन देवदत्तस्य दुःखित्वं दृश्यते, तथा परशिवांशस्याङ्गस्य वा जीवस्य सुखित्वे दुःखित्वे च तदंशिनः परशिवस्य सुखित्वदुःखित्वप्रसङ्गः? इति चेन्मैवम्, दुःखमोहादीनामाणवादिमलकार्यत्वात्। तदुक्तं रेणुकभगवत्पादैः–"जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्"[५] इति। अस्यायं भावः–

---

का निराकरण किया जाता है। तद्वत् प्रकृत में भी परमात्मा के सर्वज्ञता-प्रभृति छह अङ्ग माने जाते हैं। यह पक्षपातरहित मार्ग है।

जीव, परमेश्वर का अङ्ग है इस सिद्धान्त के प्रति अनेक श्रुतिवचन, सूत्रवचन एवम् स्मृतिवचन प्रमाण होते हैं—

१. "तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्।" इति

२. "अंशो नानाव्यपदेशात्।" इति, एवम्

३. "ममैवांशो जीवलोके जीवभूतः सनातनः।" इति च।

यह द्वितीय जिज्ञासा उदित होती है— जीव को ईश्वर का अङ्ग मान लेने से परशिव के अङ्ग-जीव में सुख अथवा दुःख होने से अंशी शिव में भी सुख एवम् दुःख की आपत्ति होगी। क्योंकि हस्तप्रभृति अवयवों में व्रणादिजन्य दुःख होने से देवदत्त में दुःखी का व्यवहार देखा जाता है। एतावता यहाँ "भक्षितेऽपि लशुने न शान्तो व्याधिः" यह लोकोक्ति चरितार्थ होने लगेगी।

इसका समाधान है— सिद्धान्त में दुःख, मोह, राग, द्वेष आदि को आणवादि मलों का कार्य माना जाता है। अतएव भगवत्पाद आचार्य रेणुक ने कहा है— "जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।" इस वचन का आशय यह है—

---

१. श्वे० उ० ४।१०.

२. ब्र० सू० २।३।१५.

३. भ० गी० १५।७.

४. सि० शि० १८।१७, पृ० १३३.

परशिवस्येच्छाशक्तिसंकोच आणवमलः, ज्ञानशक्तिसंकोचो मायीयमलः, क्रियाशक्तिसंकोचश्च कार्ममल इति व्यवह्रियते। तत्राणवमलो जीवेऽणुतामापाद्य परमात्मनोऽस्य भेदबुद्धिं कल्पयति। कार्ममलो जीवस्य पुण्यपापकर्मसम्पादने हेतुर्भवति। मायीयमलश्च पत्नीपुत्रादिषु ममतामभिजनयति। एतन्मलत्रयावृतः परमात्मचैतन्यैकदेश एव जीवः यथा हि शिवः सहजतयेच्छाज्ञानक्रियाशक्तिविशिष्टः, तथा जीवस्तत्संकोचभूतैराणव-मायीय-कार्ममलैः सहजतया आवृतो वर्तते।

तदेवं सुखदुःखादीनां मलकार्यत्वात् मलानां च जीवे विद्यमानत्वात्, परमात्मनि तदत्यन्ताभावाच्च जीवस्यैव सुखदुःखसाक्षात्कारः[१]। तदुक्तं श्रीपतिपण्डिताराध्यैः– "अनादिस्वाभाविकमायापाशबद्धघोरापारनिस्सारसंसार-व्यापारतापत्रयानलदन्दह्यमाननानाशरीरप्रवेशनिर्गमनवर्णाश्रमाभिमानविशिष्ट-कामक्रोधाद्यनुस्यूतसुखदुःखाद्याश्रयत्वं जीवत्वम्"[२] इति।

तस्मात् 'अयं सुखी', 'अयं दुःखी' इति व्यवहारदर्शनात् सुखदुःखादिमत्त्वं जीवात्मनस्तटस्थलक्षणं भवितुमर्हति, 'शाखाग्रे चन्द्रः'

---

परशिव की इच्छा का संकोच आणवमल है, ज्ञानशक्ति का संकोच मायीय मल है तथा क्रियाशक्ति का संकोच कार्ममल है। इनमें आणवमल, जीव में अणुता का आपादन कर जीव में परमात्मभेद-बुद्धि कल्पित करता है। कार्ममल, जीव के पुण्य-पाप कर्मों का सम्पादन कराता है तथा मायीय मल, पुत्र-कलत्रादि में ममता को उत्पन्न करता है। इन तीन मलों से आवृत परमात्मचैतन्य का एकदेश ही जीव कहलाता है। यथा शिव सहजरूप से इच्छा, ज्ञान एवं क्रियाशक्ति से विशिष्ट होते हैं तद्वत् जीव सहज रूप से इच्छादि के संकोचरूप आणव, मायीय एवं कार्ममलों से आवृत होता है। यतश्च सुख-दुःखादि मल के कार्य हैं तथा मल जीव में ही विद्यमान रहते हैं। परमात्मा में मल का अभाव रहता है अतः जीव को ही सुख की तरह दुःख का साक्षात्कार होता है। श्रीपतिपण्डिताराध्य ने सुस्पष्ट कहा है— "अनादिस्वाभाविक......सुखदुःखाद्याश्रयत्वं जीवत्वम्।" इति।

यतश्च यह सुखी है, यह दुःखी है— ऐसा व्यवहार देखा जाता है अतः जीव का तटस्थ लक्षण है— सुखादिमत्त्व। "शाखाग्रेचन्द्रः"—की भाँति सुखदुःखादि को जीव का तटस्थ लक्षण कहा जाता है। जीव के शरीरविशेषसम्बन्ध से सामग्रीविशेष के समवधान होने से सुखदुःखादि की अनुभूति

---

१. श० वि० द०, पृ० ९०-९१.

२. ब्र० सू० श्रीकर० १।१।१, पृ० ४.

इत्यादिवत् सुखदुःखादीनां ताटस्थ्येन जीवलक्षणत्वात्। सुखदुःखादयो हि जीवस्य तत्तत्सामग्रीसमवधानदशायां तत्तच्छरीरादिसम्बन्धेन पर्यवस्यन्ति, सुखदुःखादिनिष्ठोपभोग्यतानिरूपितोपभोक्तृत्वस्य तत्तत्सामग्रीसमवधानदशायां शरीरादिसम्बन्धेन जीव एव सत्त्वात्। अतः सुखदुःखादिविषयेषु भोज्यत्वम्, जीवस्य भोक्तृत्वं च सर्वजनीनम्[३]। "एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः"[४] इति रेणुकभगवत्पादैरपीश्वरस्य जीवानां प्रेरकत्वमुक्तम्, न तु तत्सुखदुःखभोक्तृत्वम्। ईश्वरस्याभोक्तृत्वं च—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति[५]।।

इति श्रुत्यापि प्रतिपादितम्। अस्य विस्तरः श्रीकरभाष्ये[६] द्रष्टव्यः।

श्रीविद्यारण्यस्वामिभिरपि—यथा पितृजन्या कन्या भर्तुर्भोग्या, न पितुरिति सदृष्टान्तमीश्वरस्य जगत्कर्तृत्वेऽपि न तस्य भोक्तृत्वम्, भोक्तृत्वं तु जीवस्यैवेति प्रतिपादितम्। तथाहि—

---

होती है। सुखदुःखादि में विद्यमान उपभोग्यता से सापेक्ष उपभोक्तृता, सामग्रीविशेष के समवधान से शरीरादि सम्बन्धदशा में जीव में ही विद्यमान होती है। अतः सुखदुःखादि विषयों में भोज्यता रहती है तथा जीव में भोक्तृता रहती है यह सर्वजन-सम्मत अनुभवगम्य विषय है। भगवत्पाद आचार्य रेणुक जी ने भी ईश्वर को जीव का प्रेरक मात्र प्रतिपादित किया है न कि उनकी सुखादिभोक्तृता। ईश्वर का अभोक्ता होना निम्नांङ्कित श्रुति द्वारा भी प्रतिपादित किया गया है— द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।१।। इस मन्त्र का विशद व्याख्यान ब्रह्मसूत्र श्रीकरभाष्य में किया गया है। जिज्ञासुजन को इसका अवलोकन करना चाहिए।

श्रीविद्यारण्यस्वामी ने भी दृष्टान्तोपस्थापन के साथ प्रतिपादित किया है कि पिता से उत्पन्न पुत्री स्वामी की भोग्या होती है पिता की नहीं तद्वत् ईश्वर से

---

३. शि० परि०, पृ० ७.

४. सि० शि० ५।५०, पृ० ७१.

५. श्वे० उ० ४।६.

६. ब्र० सू० श्रीकर० २।३।४४.

ईशकार्यं जीवभोग्यं जगद् द्वाभ्यां समन्वितम्।
पितृजन्या भर्तृभोग्या यथा योषित्तथेष्यताम्[1]।।इति।

अत एव–"सुख्यहं चेति भूयोऽपि जीव एवाभिमन्यते"[2] इत्येवं श्रीराममुपदिशता महर्षिणाऽगस्त्येन सुखदुःखभागित्वं जीवस्यैवेति समुद्घोषितम्।

### जीवात्मनो बहुत्वम्

जीवात्मनो विभुत्वे प्रतिशरीरं सर्वात्मस्थित्या भोगसांकर्यापत्तिरिति वीरशैवदर्शने जीवस्याणुत्वं स्वीकृतम्। अणुत्वादेव तस्य नित्यत्वमपि सिद्ध्यतीति कृतप्रणाशाकृताभ्यागमदोषशङ्कापि कर्तुं न शक्यते। अत्र जीवोपाधिभूताया अविद्याया अंशानामानन्त्याद् जीवानामप्यानन्त्यम्। तदुक्तं भगवत्पादै रेणुकाचार्यैः–"अविद्याशक्तिभेदेन जीवा बहुविधाः स्मृताः"[3] इति।

भगवत्पादैः श्रीपतिपण्डिताराध्यैरपि लोके प्रतीयमानस्य केषाञ्चिद्

---

उत्पादित जगत का भोक्ता जीव होता है ईश्वर नहीं। तद्यथा—

ईशकार्यं......तथेष्यताम्।।१।।

अतएव श्रीराम को उपदेश करते हुए महर्षि अगस्त्य ने जीव की सुखादि-भोक्तृता को प्रतिपादित किया है– "अहं सुखी च दुःखी च जीव एवाभिमन्यते।।१।।".

### जीवात्मा का नानात्व–

जीवात्मा को यदि विभु माना जाय तो प्रतिशरीर में सभी जीवात्मा की उपस्थिति होने से भोगसांकर्य की आपत्ति होगी अत: वीरशैवदर्शन में जीव का अणुत्व अभिमत है। अणुता होने से ही जीवों में नित्यता की सिद्धि होती है। अत: जन्मान्तर में भोग्य कर्मफलों को लेकर उपपत्ति हो जाने से कृतप्रणाश एवम् अकृताभ्यागम दोष की आपत्ति निराकृत हो जाती है। इस वीरशैव मत में जीवोपाधि माया (अविद्या) के अनन्त अंश होने से औपाधिक जीवों का भी आनन्त्य उपपन्न होता है। भगवत्पाद आचार्य रेणुक ने सुस्पष्ट कहा है— अविद्याशक्ति के अनन्त

---

१. पञ्च० ४।१८.

२. शि० गी० २।३५.

३. सि० शि० ५।४५, पृ० ७०.

दारिद्र्यस्य केषाञ्चिदैश्वर्यस्य च व्यवस्थार्थं जीवानामणुत्वं बहुत्वं चाङ्गीकर्तव्यमिति प्रतिपादितम्। तथाहि–"किञ्चाद्वैतमते जीवानां विभुत्वेन सर्वेषां प्रतिबिम्बभूतस्वशरीरेषु विद्यमानत्वाददृष्टानियमात्, अदृष्टानां पुण्यपापानामनियमाद् नियमाभावात् केषाञ्चिद् दारिद्र्यं केषाञ्चिदैश्वर्यमिति व्यवस्था न स्यात्। तस्माज्जीवानामणुत्वं बहुत्वं प्रतिशरीरं स्वाभाविकं भिन्नत्वं चाङ्गीकर्तव्यम्"[1] इति।

नन्वेवं परमात्मनो जीवभावापत्तिः किमर्थमिति चेत्, लीलार्थमित्यभ्युपगम्यते। तदुक्तं भगवत्पादै रेणुकाचार्यैः–

**अस्वतन्त्राश्च किञ्चिज्ज्ञाः किञ्चित्कर्तृत्वहेतवः।**
**लीलाभाजनतां प्राप्ताः शिवस्य परमात्मनः[2]।।इति।**

यथा लोके सर्वैश्वर्य–शौर्य–धैर्य–वीर्य–पराक्रमधुर्यस्य सप्तद्वीपपरिवृत-सर्वमण्डलाधीश्वरस्य महाराजस्य कदाचिद्विलासेन कार्यारम्भकत्वम्, कदाचित्तूष्णीभूतावस्थानत्वं दृश्यते, तथा परशिवस्यापि कदाचिल्लीलावस्था कदाचिच्च केवलावस्थेति निर्णीयते। "स वै नैव रेमे तस्मादेकाकी न रमते स

---

प्रभेद होने से जीवों का बुहविध होना उपपन्न है। इति।।½।।

भगवत्पाद श्रीपतिपण्डिताराध्य ने भी लोकदृष्ट कतिपयजन के दारिद्र्य एवं कतिपय के ऐश्वर्य की उपपत्ति हेतु जीवों की अणुता एवम् अनेकता को अवश्य-स्वीकार्य प्रतिपादित किया है। तद्यथा—किञ्चाद्वैतमते.....। तस्माज्जीवानामणुत्वं बहुत्वं प्रतिशरीरं स्वाभाविकं भिन्नत्वं चाङ्गीकर्तव्यम्। इति।

यहाँ जिज्ञासा होती है कि उपर्युक्त प्रकार से परमात्मा की जीवभावापत्ति किस प्रयोजन की सिद्धि हेतु होती है। इसका समाधान है–केवल लीला ही इसका एकमात्र उद्देश्य है अन्य कुछ भी नहीं। भगवत्पाद आचार्य रेणुक ने सुस्पष्ट कहा है— अस्वतन्त्राश्च किञ्चिज्ज्ञाः......शिवस्य परमात्मनः।।१।।

जैसे लोक में देखा जाता है— सर्वैश्वर्य, शौर्य, धैर्य, वीर्य एवम् पराक्रम में अग्रणी सप्तद्वीपपरिवृत सर्वमण्डलाधीश्वर किसी सम्राट की मौजमस्ती से कार्य-विशेष में कदाचित् प्रवृत्ति देखी जाती है तद्वत् कदाचित् मौन होकर उसकी

---

१. ब्र० सू० श्रीकर० २।३।४८.
२. सि० शि० १८।१४, पृ० १३२.

द्वितीयमैच्छत्"[१] इति श्रुत्यनुसारेण यदा हि स रन्तुमिच्छति तदाऽखण्ड-रसास्वादपरिबृंहितोऽपि पूज्यपूजकरूपेण क्रीडार्थं खण्डरसास्वादार्थं चाज्ञानकर्मयोगेन, अर्थात् स्वातन्त्र्यपरिकल्पिताणवादिमलसम्बन्धेन घृतकाठिन्यन्यायेनांशतः शरीरी भवति[२]। तदुक्तं रेणुकभगवत्पादैः–

न चास्ति देहसम्बन्धो निर्देहस्य स्वभावतः।
अज्ञानकर्मयोगेन देही भवति भुक्तये[३]।।इति।

ननु जीवस्याणुत्वे तस्य शरीरैकदेशस्थित्या पादे मे वेदना, शिरसि मे सुखमिति सर्वाङ्गीणचैतन्योपलब्धिः कथमिति चेन्न, प्रदीपादिवत् तदुपपत्तेः।

तदुक्तं रेणुकभगवत्पादाचार्यैः–

बालाग्रशतभागेन सदृशो हृदयस्थितः।
अश्नन् कर्मफलं सर्वमात्मा स्फुरति दीपवत्[४]।।इति।

---

क्रियाविरति। तद्वत् परशिव की भी कदाचित् लीलावस्था दृष्ट होती है तो कदाचित् केवलावस्था यह निर्णीत सिद्धान्त वीरशैव मत को पुष्ट करता है। "स वै नैव रेमे तस्मादेकाकी न रमते सद्वितीयमैच्छत्।" इस श्रुतिप्रामाण्य के आधार पर यह निष्कर्ष प्राप्त होता है—जब परमात्मा को रमण करने की इच्छा होती है तब वह अखण्डर-सास्वाद से परिबृंहित होने पर भी पूज्य एवं पूजक दो वर्गों में क्रीडा करने के उद्देश्य से खण्डरस का आस्वादन करने के लिए अज्ञान कर्मयोग (स्वातन्त्र्यपरिकल्पित आणवादिमल सम्बन्ध) से घृतकाठिन्य न्याय से अंशात्मक तथा नाना शरीरी (जीव) रूपों में उपस्थित होता है। भगवत्पाद आचार्य रेणुक ने कहा है—

न चास्ति देहसम्बन्धः.....देही भवति भुक्तये।।१।।

यहाँ जिज्ञासा उदित होती है कि जीव को अणुपरिमाण मानने पर वह शरीर के किसी एक भाग में ही उपस्थित रह सकता है। ऐसी स्थिति में पादे मे वेदना, शिरसि मे सुखम्—इस युगपत् प्रतीति पर आधारित सर्वाङ्गीण चैतन्योपलब्धि कैसे युक्तिसंगत होगी। इसका समाधान है— यद्वत् प्रदीप, गृह के एकदेश में स्थित रहकर अपनी प्रभा से सम्पूर्ण गृह को आलोकित करता है तद्वत् अणु होने से प्रदेश-विशेष में स्थित होने पर भी सम्पूर्ण शरीर में वह स्वगुण=ज्ञान-प्रभा से व्याप्त

---

१. बृ० उ० १।४।३.
२. ब्र० सू० श्रीकर० २।१।३३; सि० शि० १८।११ तत्त्वप्रदीपिकाव्याख्या।
३. सि० शि० १८।११, पृ० १३०.
४. सि० शि० १८।६, पृ० १२९.

भगवता बादरायणेनापि–"अविरोधश्चन्दनवत्"[१], "गुणाद्वाऽऽलोकवत्"[२] इति सूत्राभ्यां चन्दनालोकदृष्टान्ताभ्यामात्मनोऽणुत्वेऽपि स्वज्ञानप्रभया शरीरव्यापित्वं तस्य समर्थितम्।

अत्रायं भावः–यथा चन्दनस्यैकप्रदेशस्थितस्य सकलशरीरशैत्यजनकत्वम्, तथा क्षेत्रज्ञस्यैकस्मिन् प्रदेशे स्थितस्यापि सर्वाङ्गसुखदुःखभोक्तृत्वमुपपन्नम्। यथा वा लोके मणिप्रदीपप्रभृतीनामेकदेशवर्तिनामपि तत्प्रभायाः सर्वदेशवर्तित्वम्, तथाऽणुरप्यात्मा स्वज्ञानप्रभया शरीरं व्याप्य तिष्ठति। ननु कथं गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत, नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते? इति चेन्मैवम्, शुक्लादिगुणानां स्वद्रव्यव्यतिरेकेणानुपलभ्यमानत्वेऽपि गन्धप्रकाशयोस्तत्सम्भवात्। नहि रसो गुणो जिह्वयोपलभ्यत इति रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं

---

रहकर युगपत् प्रतीति का जनक होगा। भगवत्पाद आचार्य रेणुक ने सुस्पष्ट कहा है—

बालाग्रशतभागेन.....आत्मा स्फुरति दीपवत्॥१॥

भगवान् बादरायण ने भी निम्नाङ्कित सूत्रों के आधार पर चन्दन एवम् आलोक के दृष्टान्त से आत्मा के अणु होने पर भी अपनी ज्ञानप्रभा से उसकी शरीरव्यापिता का समर्थन किया है— "अविरोधश्चन्दनवत्, गुणाद् वाऽऽलोकवत्।"

आशय यह है— यथा चन्दन शरीर के एकदेश में स्थित होकर भी सकलशरीर में शैत्य की अनुभूति कराता है तद्वत् एक प्रदेश में स्थित रहकर भी क्षेत्रज्ञ=जीव सर्वाङ्गव्यापी सुख-दुःखों की अनुभूति में हेतु बनता है। दूसरा उदाहरण प्रदीपमणि प्रभृति का है। प्रदीपादि एक देश में स्थित रहकर भी अपनी प्रभा को गृह के सर्वप्रदेश में विस्तारित करता है तद्वत् अणु होकर भी आत्मा अपनी ज्ञानप्रभा से सर्वशरीर में व्याप्त रहकर अनुभूतिजनक होता है।

यहाँ जिज्ञासा उदित होती है— अपने आश्रयद्रव्य (गुणवान्) से व्यतिरिक्त अन्यत्र गुण की स्थिति नहीं होती है। पट का रूप (शुक्ल, पीत या अन्य) पट से भिन्न द्रव्य में आश्रित नहीं रह सकता।

---

१. ब्र० सू० २।३।२२.

२. ब्र० सू० २।३।२४.

शक्यते। फलबलकल्प्यः स्वभाव एव शरणमिति लोकानुभवेन प्रदीपप्रभावद् ज्ञानप्रभायाः शरीरव्याप्यत्वेन स्वीकारे न कोऽपि दोषः। यथा पृथिव्या गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः, तथा जानामीति ज्ञातृगुणत्वेन प्रतीयमानस्य ज्ञानस्याप्यात्मनो व्यतिरेकसिद्धिः। "आलोमभ्य आनखेभ्यः"[१], "प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति"[२] इत्यादिश्रुतयो जीवात्मनश्चैतन्यगुणेन समस्तशरीरव्यापित्वं दर्शयन्ति[३]।

**जीवपरमात्मनोर्भेदाभेदः**

तदेवं विचित्रशक्तियुक्तमायावशादणुत्वादिप्राप्त्या जीवस्याणुत्वं स्वाभाविकमेव, न त्वौपाधिकम्। यथा विस्फुलिङ्गानामणुत्वं स्वाभाविकम्, यथा वा सरितां सरित्त्वं समुद्रादन्यत्वं च स्वाभाविकम्, तथा जीवस्याणुत्वं परशिवादन्यत्वं च स्वाभाविकमेवेति संसारदशायां जीवपरमात्मनोर्वास्तविको भेदः।

---

इसका समाधान है— शुक्लादि गुण अपने आश्रय द्रव्य से व्यतिरिक्त तथा अनुपलभ्यमान हो यह तो सही है किन्तु गन्ध एवम् प्रभा (प्रकाश) के सन्दर्भ में यह नियम लागू नहीं होता। यदि रस (गुण) जिह्वा (रसना) से गृहीत (ज्ञात) होता है तो रूपादि गुणों का भी ज्ञान रसना इन्द्रिय से ही होगा ऐसा नहीं कहा जा सकता। अतः फल के बल पर वस्तु का स्वभाव ही सिद्धान्त का प्रयोजक होता है। लोक में ऐसा देखा जाता है कि प्रदीप-प्रभा की तरह ज्ञान-प्रभा भी जीवात्मा से बहिर्भूत सम्पूर्ण शरीर में अभिव्याप्त होती है। जैसे पृथिवी-गुण गन्ध, अपने आश्रय से भिन्न होता है तद्वत् जानामि—इस प्रतीतिसिद्ध आत्म-गुण ज्ञान भी अपने आश्रय आत्मा से भिन्न हो—यह समुचित है। निम्नाङ्कित श्रुतिवचन भी यह प्रतिपादित करते हैं कि जीव अपने चैतन्य-गुण से सम्पूर्ण शरीर में व्याप्त रहते हैं— "आलोमभ्य आनखेभ्यः, प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति।" इत्यादि।

**जीव एवम् परमात्मा में भेदाभेद**

उपर्युक्त निरूपण से सुस्पष्ट होता है कि विचित्रशक्तियुक्त माया के वशीभूत शिव ही अंशतः अणुत्व अवस्था में प्रविष्ट होते हैं अतः जीव की अणुता

---

१. छा० उ० ८।८।१.
२. कौषी० ३।६.
३. ब्र० सू० श्रीकर० २।३।२२-२५.

नन्वेवं मलावृतत्वेन जीवस्य परमात्मनः पारमार्थिकभेदसिद्धौ कथं तस्य शिवाऽभिन्नत्वमिति चेत्, यदा गुरुर्वेध-मन्त्र-क्रियारूपदीक्षात्रयेणाण-वादिमलत्रयाणां निवारणपूर्वकं शिवाद्वैतज्ञानमुपदिशति, तदाऽयं जीवःशुद्धो भूत्वा शिवस्वरूपो भवति। अत एव-

पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।
पूजाकर्माद्यसम्पत्तेर्लिङ्गनिष्ठाविरोधतः ।।
प्रेरकं शङ्करं बुद्ध्वा प्रेर्यमात्मानमेव च।
भेदात् तं पूजयेन्नित्यं न चाद्वैतपरो भवेत्।।
पतिः साक्षान्महादेवः पशुरेष तदाश्रयः।
अनयोः स्वामिभृत्यत्वमभेदे कथमिष्यते[1]।।

इत्यादिरूपेण बद्धावस्थायां (संसारावस्थायां) शिवजीवयोः पूज्यपूजकरूपेण, पतिपशुरूपेण च वास्तविकभेदाभावे लिङ्गनिष्ठाविरोधापत्तिरिति पतिरूपं परशिवं

---

स्वाभाविक है, औपाधिक नहीं। जैसे अग्नि के विस्फुलिंगों का अणुत्व स्वाभाविक है। तद्वत् नदियों का नदीत्व और उनका समुद्र से भिन्न होना स्वाभाविक है। उसी प्रकार जीव का अणु होना एवं परशिव से उनका भिन्न होना भी स्वाभाविक ही होता है। एवञ्च संसारदशा में जीव का परमेश्वर के साथ वास्तविक भेद है।

जिज्ञासा उदित होती है कि जीव तो मलों से आवृत्त होता है परमात्मा नहीं। एतावता परमात्मा से जीवों में पारमार्थिक भेद सिद्ध होता है। ऐसी स्थिति में जीव कभी भी शिवाभिन्न कैसे हो सकेगा।

इसका समाधान है— जब शिष्य को उसके गुरु, वेधदीक्षा, मन्त्रदीक्षा एवं क्रियादीक्षा द्वारा मलत्रयापनोदन-पुरःसर शिवाद्वैत ज्ञान का उपदेश करते हैं तब शिष्य शुद्ध (मलत्रयरहित) होकर निर्दोष शिवस्वरूप हो जाता है।

भगवत्पाद रेणुकाचार्य ने बद्धावस्था में शिव की पूज्यरूपता एवं जीव की पूजकरूपता तथा शिव की पतिरूपता एवं जीव की पशुरूपता सिद्धान्त-सम्मत बताया है। यदि शिव एवं जीव में वास्तविक भेद न माना जाय तो जीव की लिङ्गनिष्ठा उपपन्न नहीं होगी। अतः पतिरूप परशिव को प्रेरक मानकर तथा आत्मा को प्रेरणापात्र (प्रेर्य) मानकर पूज्य-पूजक की भेदभावना से जीव, शिव की अर्चना करे। इस बात की पुष्टि आचार्य ने निम्नाङ्कित वाक्यों से की है—

"पूज्यपूजकयोः............अभेदे कथमिष्यते।।३।।

---

१. सि० शि० १०।१,३-४; पृ० १७८-१७९.

प्रेरकं मत्वा, आत्मानं च प्रेर्यमिति ज्ञात्वा पूज्यपूजकभेदभावेन तं शिवमर्चयेदिति प्रतिपाद्य,

**साक्षात्कृतं परं तत्त्वं यदा भवति बोधतः।**
**तदाद्वैतसमापत्तिर्ज्ञानहीनस्य न क्वचित्[1]।।**

इति दिशा यदा च श्रुति-गुरु-स्वानुभवबोधतः परशिवब्रह्माख्यं महालिङ्ग-तत्त्वं साक्षात्कृतं भवति, तदाऽद्वैतसमापत्त्या प्राक्तनस्य वास्तविकभेदस्य निवृत्तिर्भवतीति भगवत्पादै रेणुकाचार्यैरगस्त्यं प्रति संसारावस्थायां जीवपरमात्मनोर्वास्तविकभेद इति, मुक्तावस्थायां च तयोरेव वास्तविकाभेद इति प्रतिपादितम्। उक्तं च पुनः–

**जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।**
**निरस्यते गुरोर्बोधाज्ज्ञानशक्तिः प्रकाशते[2]।।इति।**

तदेवमत्रावगन्तव्यम्–संसारदशायां परस्परविरुद्धस्वभावयोर्जीवशिवयोर्भेदः स्वाभाविकः, युक्त्यनुभवगोचरश्च। मुक्तिदशायां तयोरेव ऐक्यप्राप्त्याऽभेदः श्रुतिप्रमाणसिद्धः। तस्मादत्र दर्शने यथा शिवः सर्वज्ञः सर्वकर्ता सर्वशक्तिसमन्वित उपमातीतो जननमरणरहितो जगद्व्यापको नित्यश्च वर्तते, तथा तदंशो जीवोऽपि किञ्चिज्ज्ञो किञ्चित्कर्ता किञ्चिच्छक्तियुतोऽविद्यामोहितः

---

जब श्रुति एवं गुरु से अनुगृहीत शिष्य का स्वानुभवबोध उदित होता है तब परशिव ब्रह्म (महालिङ्गतत्त्व) का साक्षात्कार उसे होता है। परिणामस्वरूप अद्वैत समापत्ति होने से प्राक्तन (बद्धावस्था सम्बद्ध) वास्तविक भेद की निवृत्ति हो जाती है। अतएव भगवत्पाद रेणुकाचार्य ने अगस्त्य के प्रति संसारावस्था में जीव एवं परमात्मा के मध्य वास्तविक भेद तथा मुक्तावस्था में इन दोनों का वास्तविक अभेद प्रतिपादित किया है। तद्यथा—

साक्षात्कृतं परं तत्त्वं.........ज्ञानहीनस्य न क्वचित्।।१।।

पुनश्च निष्कर्षकथन के रूप में आचार्य का निम्नाङ्कित वचन प्रवृत्त होता है—

जीवत्वं दुःखसर्वस्वं...........ज्ञानशक्तिः प्रकाशते।।१।।

इस उपर्युक्त प्रकरण का आशय यह है— संसारदशा में परस्पर विरुद्ध-स्वभाव होने से जीव एवं शिव का भेद स्वाभाविक होता है। यह युक्तिसंगत होने

---

१. सि० शि० १०।५, पृ० १७९.
२. सि० शि० १८।१७, पृ० १३३.

शिवैक्यज्ञानवर्जितो बद्धश्च वर्तते। एवं चोक्तगुणवैधर्म्याद् भिन्नयोश्चित्त्वेन चाभिन्नयोरुपासनामहिम्ना मुक्तावस्थायामैक्यं संघटते। अतः संसारावस्थायां तयोर्न केवलं भेदः, नापि केवलोऽभेदश्च वक्तुं शक्यते। एवं चाभेदगर्भितो भेद एव वक्तव्यः। जीवस्य सर्वदा शिवाऽभिन्नत्वे तस्य सर्वज्ञत्वाद्यापत्तिः, सर्वदा च भिन्नत्वे घटादेरिव जडत्वापत्तिः। अतः संसारदशायामत्यन्तभेदः, मुक्तावस्थायां चात्यन्ताभेदः स्वीक्रियते। तेन च जीवस्य स्वभिन्नपरमात्मोपासनम्, तद्द्वारा क्रमशो भेदनिवृत्तिः, अन्ते परमात्मन्यैक्यरूपात्यन्ताभेदः सूपपाद इति।

भाष्यकृद्भिः श्रीपतिपण्डिताराध्यैरप्युक्तम्–"यथा नद्यः स्यन्दमानाः समुद्रे ह्यस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।।", "स यो ह वै तत्परमम्", "ब्रह्म वेद ब्रह्मैव भवति" इत्यादौ निष्कलपरमशिवोपासकानां भक्तानां लिङ्गशरीरभङ्गद्वारा परमशिवसायुज्यमुपदिश्यते। तस्माज्जीवपरमेश्वरयोः प्राप्यप्रापकत्वेन भेदाभेदो निर्णीयते। "परात्परं पुरुषमुपैति" इत्यनेन भ्रमरकीटवत् स्वाभाविकभेदसिद्धस्य जीवस्य परमशिवप्राप्त्युपदेशात् स्वकण्ठाभरणवन्नित्यब्रह्मात्मकत्वं निषिध्यते"[१] इति।

---

के साथ अनुभूतिगम्य भी होता है। मुक्तिदशा में इन दोनों में अभेद के उदित होने से ईशजीवाभेद के प्रति श्रुतिप्रमाण का भी अनुगम होता है। अतः वीरशैवदर्शन में यथा शिव, सर्वज्ञ है, सर्वकर्ता है, सर्वशक्तिसमन्वित है, उपमातीत है, जनन-मरण-वर्जित है, जगद्व्यापक है तथा नित्य भी है तद्वत् जीव भी अल्पज्ञ है, अल्पकर्ता है, अल्पशक्तियुक्त है, अविद्यामोहित है, शिवाभेद-ज्ञान से वर्जित है अतएव बद्ध है। इस प्रकार उपर्युक्त गुणवैधर्म्य से जीव एवम् ईश्वर में भेद की विद्यमानता है किन्तु चित्त्वेन इन दोनों में यतः अभेद है अतः उपासना के प्राबल्य से मुक्तावस्था में इनका ऐक्य (अभेद) सुघटित (प्रकाशित) होता है। एतावता संसारावस्था में इन दोनों का केवल भेद अथवा केवल अभेद मान्य नहीं हो सकता। अतः इसे अभेदगर्भित भेद कहा जाता है। यह समुचित भी है। जीव सर्वदा शिव से अभिन्न रहे तो जीव में सर्वज्ञता, सर्वकर्तृता आदि गुणों का प्रकाशन आपादित होगा तथा सर्वदा भिन्न रहे तो घटादि की तरह उसमें जडता का आपादन होगा। अतः संसारदशा में अत्यन्त भेद एवम् मुक्तावस्था में अत्यन्ताभेद मान्य सिद्धान्त है। एतावता जीव स्वभिन्न परमात्मा की उपासना करता है, जिससे क्रमशः भेद की निवृत्ति होती है तथा पर्यन्ततः परमात्मा के साथ ऐक्य (अभेद) सुघटित होता है।

भाष्यकार श्रीपतिपण्डिताराध्य ने भी कहा है—

---

१. ब्र० सू० श्रीकर० १।३।२.

अत एवानादिमलावृतत्वादयं जीवो बद्धः संसारी पशुरित्यादिशब्दैर्व्यवह्रियते, यदा च गुरुदीक्षया निवृत्तमलत्रयो रागादिविवर्जितो भूत्वा मुमुक्षुर्भवति, तदाऽयं शुद्धजीव इत्युच्यते। यदा पुनः शिवाभिन्नज्ञानसम्पन्नो भवति, तदा शिखिकर्पूरवत् शिवस्वरूपो भूत्वा मुक्तजीव इति कथ्यते। तदर्थमेव भाष्यकृद्भिः श्रीपतिपण्डिताराध्यभगवत्पादैः शिवागमवचनान्युदाहृतानि। तथाहि–

बद्धशुद्धविभेदेन जीवत्रयमिदं स्मृतम्।
गुरुदीक्षाविहीनश्च शिवभक्तिविवर्जितः।।
स्वकर्तृत्वाभिमानी तु बद्धः स पशुरुच्यते।
गुरुदीक्षां परां लब्ध्वा कैङ्कर्यत्रयसंयुतः।।
शान्त्यादिसद्गुणोपेतो मुमुक्षू रागवर्जित।
शिवाधीनः सुधी भक्तः शुद्धजीव इति स्मृतः।।
शिवयोगशिवज्ञानविभवानन्दसंयुतः ।
प्रचण्डातपमध्यस्थशुद्धकर्पूरदीपवत् ।।

---

"यथा नद्यः स्यन्दमानाः........पुरुषमुपैति दिव्यम्।।१।।

तदनुसार निष्कल परमशिव के उपासक भक्तों के लिङ्गशरीर—भङ्गपुरःसर परमशिव के साथ सायुज्य-प्राप्ति होती है। तद्यथा—

"स यो ह वै तत्परमम्। ब्रह्म वेद ब्रह्मैव भवति।"

यतश्च जीव के लिए परमेश्वर प्राप्य हैं अतः प्राप्यप्रापकभाव सम्बन्ध होने से इनके परस्पर भेदाभेदसम्बन्ध, स्वमत में मान्य सिद्धान्त है। "परात्परं पुरुषमुपैति।" इस श्रुति प्रमाण से भ्रमरकीटन्याय से स्वाभाविक रूप से भिन्न जीव को यतः अभेदोपदेश से परमशिव की प्राप्ति होने का उपदेश विदित होता है अतः विस्मृत स्वकण्ठाभरण की स्मृति से प्राप्तप्राप्ति-समर्थित जीव की नित्य ब्रह्मस्वरूपता का निषेध आचार्य द्वारा किया गया है।"

एवञ्च अनादिमलों से आवृत होने के कारण यह जीव बद्ध, संसारी एवं पशु इत्यादि शब्दों से सम्बोध्य होता है। पर, जब गुरुदीक्षा प्राप्त करने से इसके त्रिविध मल नष्ट हो जाते हैं तब यह रागादि दोषों से वर्जित होकर मुमुक्षु बनता है और शुद्ध जीव कहलाता है। जब शिवगुरुकृपा से शिवाभिन्न ज्ञान सम्पन्न होता है तब यह शिखिकर्पूरन्याय से शिवस्वरूप होकर मुक्तजीव कहलाता है। इस

शिवाकारे पराकाशे कोटिसूर्यप्रकाशके।
विलीनचित्तवृत्तिस्तु मुक्तजीव इति स्मृतः।।
स जीवन्मुक्त इत्युक्तो रागद्वेषविवर्जितः[1]।।इति।

तस्मादस्मिन् दर्शने जीवः परमात्मनः संकुचितशक्तिविशिष्टत्वात् तदंशरूपः, अत एवाणुपरिमाणः। अणुत्वादेव तस्य नित्यत्वं प्रतिशरीरं भिन्नत्वं च। अस्य शिवांशत्वादेव शिवजीवयोरङ्गाङ्गिभाव इति, प्रोक्तगुणभेदाभेदाच्च तयोर्भेदाभेदौ च संभवत इति सर्वं समञ्जसम्।

---

सिद्धान्त की पुष्टि हेतु भगवत्पाद श्रीपतिपण्डिताराध्यजी ने अपने भाष्य में अनेक आगमवचनों का प्रमाणरूप में उल्लेख किया है—

बद्धशुद्धविभेदेन......रागद्वेषविवर्जितः।।१-५।।

एवञ्च वीरशैवदर्शन में परमात्मा की संकुचितशक्ति से विशिष्ट होने के कारण जीव, परमात्मा का अंश है तथा वह अणुपरिमाण है। अणु होने से ही जीव प्रतिशरीर में भिन्नरूप में विद्यमान रहकर नित्य है। यतश्च जीव, शिव का अंश है अतः इन दोनों के मध्य अङ्गाङ्गिभाव सम्बन्ध समुचित है। सर्वज्ञत्व-अल्पज्ञत्वादि गुणों के भेदाभेद से इन दोनों के मध्य भेदाभेदसम्बन्ध भी उपपन्न होता है। इस प्रकार शास्त्र, युक्ति एवम् अनुभूति का परस्पर सामञ्जस्य होने से वीरशैवागम का सिद्धान्त परमोपादेय है।

***

---

१. ब्र० सू० श्रीकर० २।३।४६.

श्रीएकोरामाराध्याय नमः

# पञ्चमः परिच्छेदः

## सृष्टिमीमांसा

इह खलु दार्शनिकसमाजे सृष्टिस्वरूपव्यवस्थार्थं सत्कार्यवादोऽसत्कार्यवादश्चेति मुख्यतो द्वौ पन्थानौ विलसतः। तत्र सत्कार्यवादोऽपि परिणामवाद–विवर्तवादभेदेन द्विविधः। स्वाभिमतार्थकथनमत्र वादशब्दार्थः। तत्र सांख्यदर्शने, वीरशैवदर्शने च परिणामवादः स्वीक्रियते। सांख्यवीरशैवदर्शनयोः परिणामवादशब्दसाम्येऽपि सांख्याः प्रकृतिपरिणामवादिनः, वीरशैवास्तु शक्तिविशिष्टशिवपरिणामवादिन इत्ययं विशेषः। अद्वैतवेदान्तिनां विवर्तवाद इत्युच्यते। न्यायवैशेषिका असत्कार्यवादिनः। अयमसत्कार्यवाद आरम्भवाद–शब्देनापि व्यवह्रियते। प्रकृताध्याये न्याय–वैशेषिक–सांख्य–योग–पूर्वोत्तरमीमांसा–दर्शनानां, वीरशैवदर्शनस्य च सृष्टिस्वरूपविषयको विचारो विमृश्यते।

---

श्री एकोरामाराध्यजी को नमस्कारार्पण

# ।।पञ्चम परिच्छेद।।

## सृष्टिमीमांसा

दार्शनिक समाज में सृष्टिस्वरूप की व्यवस्था हेतु दो मार्ग प्रतिपादित हैं– सत्कार्यवाद एवम् असत्कार्यवाद । सत्कार्यवाद के दो प्रभेद हैं– परिणामवाद एवम् विवर्तवाद। वादशब्द का अर्थ होता है- स्वाभिमत अर्थकथन। परिणामवाद का स्वीकार, सांख्यदर्शन एवं वीरशैवदर्शन में किया जाता है। दोनों दर्शनों में मान्य परिणामवाद में शब्दतः साम्य होने पर भी अर्थतः वैषम्य है। सांख्यमत में जगत् को प्रकृति का परिणाम माना जाता है। परन्तु वीरशैवदर्शन में इसे शक्तिविशिष्ट शिव का परिणाम माना जाता है। दोनों में यही अन्तर है। अद्वैतवेदान्तमत में विवर्तवाद मान्य है। न्याय एवं वैशेषिक दर्शनों में असत्कार्यवाद सिद्धान्त-सम्मत है। यह असत्कार्यवाद आरम्भवादशब्द से भी जाना जाता है।

प्रकृत अध्याय में न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा एवम् उत्तरमीमांसा दर्शनों के साथ वीरशैवदर्शन को अभिप्रेत सृष्टिस्वरूपविषयक सिद्धान्त की विवेचना की जायेगी।

## न्यायवैशेषिकयोरारम्भवादः

तत्र समवायिकारणमसमवायिकारणं निमित्तकारणं चेति त्रिविधकारणसमुदायः स्वस्माद् भिन्नं कार्यमुत्पादयतीत्यङ्गीकुर्वन्तो नैयायिका वैशेषिकाश्चारम्भवादं स्वीकुर्वन्ति। असमवायिकारणान्निमित्तकारणाच्च कार्यं भिन्नमिति सर्वेषां मतम्। परं नैयायिका वैशेषिकाश्च समवायिकारणादपि कार्यं भिन्नमिति पक्षमाद्रियन्ते। तन्तुभिरारब्धः पटः स्वसमवायिकारणभूतात् तन्तुसमुदायादपि भिन्न एवेति तेषां मतिः। न्यायवैशेषिकदृष्ट्या कारणे कार्यस्य सत्ता उत्पत्तितः प्राग् न विद्यते। तत्कथनानुसारं पूर्वमसदेव तत्तद् घटादिकार्यं दण्ड–चक्र–चीवरादिसामग्रीसमवहिता-न्मृदादिकारणाद् भिन्नं सदुत्पद्यते। एवमुत्पत्तेः प्राक् कार्यस्यासत्त्वमभ्युपगच्छन्तो नैयायिका वैशेषिकाश्चासत्कार्यवादिन इत्याख्यायन्ते।

**कारणस्वरूपम्**

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।
कारणत्वं भवेत् तस्य त्रैविध्यं परिकीर्तितम्[1]।।

---

## न्याय एवं वैशेषिक दर्शनों में स्वीकृत आरम्भवाद

नैयायिक एवं वैशेषिक दार्शनिकों को आरम्भवाद अतिशयप्रिय है। इनका मानना है कि समवायिकारण, असमवायिकारण एवं निमित्तकारण समुदित होकर स्वभिन्न कार्य को उत्पन्न करते हैं। असमवायिकारण एवं निमित्तकारण इन दो कारणों से कार्य भिन्न होता है- यह सभी दार्शनिकों को मान्य है। परन्तु नैयायिक एवं वैशेषिक लोग समवायिकारण से भी कार्य को भिन्न प्रतिपादित करते हैं। तन्तुओं से निर्मित पट, अपने समवायिकारण=तन्तुसमुदाय से भी भिन्न ही है- यह इनका अभिमत है। न्यायवैशेषिक की दृष्टि से कारण में कार्य की सत्ता उत्पत्ति से पूर्व में नहीं मानी जाती। तन्मतानुसार घटादिकार्य अपनी उत्पत्ति से पूर्व कारणों/कारण में असत् रहकर दण्ड, चक्र चीवर प्रभृति अनेक कारणों से समवहित मृदादिकारण से भिन्न होते हुए उत्पन्न होते हैं। इस प्रकार उत्पत्ति से पूर्व कार्य की असत्ता का अभ्युपगम करने वाले नैयायिक एवम् वैशेषिक असत्कार्यवादी दार्शनिक कहलाते हैं।

**कारण का स्वरूप**

अन्यथासिद्धिशून्यस्य.........त्रैविध्यं परिकीर्तितम्।।१।।

इस कारिका में न्यायपञ्चानन श्रीविश्वनाथभट्टाचार्य ने कारण का लक्षण

---

१. कारि० १६ श्लोकः।

इति श्रीमता विश्वनाथपञ्चाननभट्टाचार्येण कारणलक्षणमुक्तम्। तत्कथनानुसारम्-"अन्यथासिद्धिशून्यत्वे सति नियतत्वे सति पूर्ववर्तित्वं कारणत्वम्" इति तत्स्वरूपम्। इदं च कारणं समवायि-असमवायि-निमित्तभेदेन त्रिविधमत्राङ्गीक्रियते। तत्र यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणम्। यथा पटं प्रति तन्तुः, घटं प्रति कपाल; यथा वा पटरूपादिकं प्रति पट इत्यादि। समवायिकारणे आसन्नम् = समवायसम्बन्धेन स्वसमवायि-समवेतत्वसम्बन्धेन वा वर्तमानं सद् यत् कारणं तदसमवायिकारणम्। तद्यथा-यत्र तन्तौ समवायेन पटो वर्तते तत्र तन्तौ समवायेन तन्तुसंयोगो वर्तते, अतः समवायेन तन्तुनिष्ठं पटं प्रति समवायेन तन्तुनिष्ठस्तन्तुसंयोगोऽसमवायिकारणम्। एवं यत्र पटे समवायेन पटरूपं वर्तते तत्र पटे स्वसमवायिसमवेतत्वसम्बन्धेन तन्तुरूपं वर्तते, अतः समवायेन पटनिष्ठं पटरूपं प्रति स्वसमवायिसमवेतत्व-सम्बन्धेन पटनिष्ठं तन्तुरूपमसमवायिकारणम्। एवमुक्ताभ्यां समवायिकारणा-समवायिकारणाभ्यां भिन्नं हि कारणं निमित्तकारणम्। तच्च पटं प्रति तुरीवेमादिकम्, घटं प्रति कुलालादिश्चेत्यवगन्तव्यम्। तदुक्तं श्रीमता विश्वनाथन्यायपञ्चाननेन-

---

(स्वरूप) प्रतिपादित किया है। तदनुसार कारण का लक्षण है- अन्यथासिद्धिशून्यत्वे सति नियतत्वे सति पूर्ववर्तित्वं कारणत्वम्। कारण के तीन भेद होते हैं-समवायिकारण, असमवायिकारण एवं निमित्तकारण। जिसमें अपनी उत्पत्ति के अनन्तर कार्य समवाय सम्बन्ध से विद्यमान रहता है वह समवायिकारण कहलाता है। यथा पट के प्रति तन्तु एवम् घट के प्रति कपाल समवायिकारण होता है तद्वत् पटरूप के प्रति पट समवायिकारण होता है।

समवायिकारण में समवाय अथवा स्वसमवायिसमवेतत्व सम्बन्ध से विद्यमान रहने वाला कारण असमवायिकारण कहलाता है। यथा तन्तु में पट समवायसम्बन्ध से रहता है तन्तुसंयोग भी रहता है। अतः समवायेन तन्तुनिष्ठ पट के प्रति समवायेन तन्तुनिष्ठ तन्तुसंयोग असमवायिकारण होता है। तद्वत् जिस पट में समवायेन पटरूप रहता है उसी पट में स्वसमवायिसमवेतत्व-सम्बन्ध से तन्तुरूप विद्यमान रहता है। अतः समवायेन पटनिष्ठ पटरूप के प्रति स्वसमवायिसमवेतत्व-सम्बन्ध से पटनिष्ठ तन्तुरूप असमवायिकारण होता है। उपर्युक्त दो कारणों- समवायिकारण एवम् असमवायिकारण से भिन्न कारण को निमित्तकारण कहा जाता है। यथा- पट के प्रति तुरीवेमादि तथा घट के प्रति कुलालादि निमित्त कारण होते हैं। श्रीमान् विश्वनाथन्यायपञ्चानन ने त्रिविधकारण स्वरूप को एक ही कारिका में प्रतिपादित

**यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत्।**
**तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्[1]।।इति।**

**जगदुत्पत्तिक्रमः**

तत्र नैयायिका वैशेषिकाश्च परमाणुभ्यो जगदुत्पतिं प्रतिपादयन्ति। अत्राभ्युपगतेषु[2] नवद्रव्येष्वाकाशकालदिगात्ममनसां पञ्चद्रव्याणां नित्यत्वान्न तेषामुत्पत्तिः, नापि विनाशः संभवति। अवशिष्टानां पृथिव्यप्तेजोवायूनां चतुर्णां द्रव्याणामनित्यत्वात् तेषामुत्पत्तिविनाशावभ्युपगम्येते। एषामपि परमाणवो नित्या एव। पृथिव्यप्तेजोवायूनां परमाणुभ्य एव कार्यद्रव्याणामुत्पत्तिरत्र प्रतिपाद्यते। अतः पृथिव्याादिचतुर्णां द्रव्याणां परमाणुरूपेण नित्यत्वं कार्यरूपेण चानित्यत्वमङ्गीक्रियते[3]। तत्र पार्थिवादिपरमाणूनां संयोगे कार्यद्रव्याणामुत्पत्तिः,

---

किया है।

यत्समवेतं कार्यं................परंतृतीयं स्यात्।।१।।

**जगत् की उत्पत्ति का क्रम-**

नैयायिक एवं वैशेषिक परमाणुओं से जगत् की उत्पत्ति को प्रतिपादित करते हैं। इन दर्शनों में नवविध द्रव्य माने जाते हैं जिनमे पाँच द्रव्य नित्य माने जाते हैं– आकाश, काल, दिशा, आत्मा एवम् मनस्। इनकी न तो उत्पत्ति होती है और न ही विनाश। अवशिष्ट चार द्रव्य- पृथ्वी, जल, तेजस् एवं वायु अनित्य हैं अतः उनकी उत्पत्ति तथा विकास होते हैं। इन चार द्रव्यों के भी परमाणु नित्य होते हैं। पृथिव्यादि के परमाणुओं से ही कार्य-द्रव्यों की उत्पत्ति इन दर्शनों में प्रतिपादित की गई है। अतः पृथिव्यादि चार द्रव्य, परमाणुरूप में नित्य हैं तथा कार्य रूप में अनित्य होते हैं। पार्थिवादि परमाणुओं के संयोग से कार्यद्रव्यों की उत्पत्ति होती है तथा संयोग के उच्छेद होने पर कार्य-द्रव्यों का विनाश होता

---

१. कारि० १८ श्लोकः।

२. क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः। द्रव्याणि (कारि० ३ श्लो०)

३. "तत्र गन्धवती पृथिवी। सा द्विविधा नित्याऽनित्या चेति। नित्या परमाणुरूपा। अनित्या कार्यरूपा।...... शीतस्पर्शवत्य आपः। ताश्च द्विविधाः। नित्या अनित्याश्चेति। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। उष्णस्पर्शवेत्तेजः। तद् द्विविधम्। नित्यमनित्यं चेति। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। रूपरहितः स्पर्शवान् वायुः। स द्विविधः। नित्योऽनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः।"

(त० सं०, पृ० ६-१७)।

तदुच्छेदे च कार्यद्रव्याणां विनाश इति परमाणूनां संयोगवियोगाभ्यामेवात्र सृष्टिप्रलयौ व्यवस्थाप्येते।

सृष्ट्युत्पत्तिसमये चतुर्विधानां भूतानां मूलकारणभूताः परमाणवःपरस्परं संयुज्यन्ते। तत्र यदा प्रथमतः परमाणुद्वयस्य संयोगो भवति तदा द्व्यणुकाख्यं कार्यमुत्पद्यते। त्रयाणां द्व्यणुकानां संयोगेन त्र्यणुकं जायते। कार्यद्रव्याणामपि द्व्यणुकानां महत्परिमाणाभावान्न तेषां चाक्षुषं प्रत्यक्षं सम्भवति। त्र्यणुकानां तु महत्परिमाणसद्भावात् तेषां जालसूर्य-मरीचिषु चाक्षुषत्वोपपत्तिः। तेषामेव षष्टितमो भागः परमाणुः। तथा चोक्तम्–

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः।
तस्य षष्टितमो भागः परमाणुः स उच्यते।।इति।

एवमेव चतुर्णां त्र्यणुकानां संयोगेन चतुरणुकानामुत्पत्तिर्जायते। एतेनैव क्रमेण पृथिव्यादीनां महाभूतानामुत्पत्तिः प्रतिपाद्यते।

ननु पृथक् पृथग् वर्तमानानां पार्थिवादिपरमाणूनां संयोगे किं कारणमिति जिज्ञासायां महर्षिणा कणादेन–"अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां

---

है। एवञ्च परमाणुओं के संयोग से सृष्टि तथा उनके वियोग से प्रलय की व्यवस्था इन दर्शनों में की जाती है।

जगत् की उत्पत्ति के समय चतुर्विध भूतों के मूलकारणभूत परमाणुओं का परस्पर संयोग होता है। जब प्रथमतया दो परमाणुओं का संयोग होता है तब द्व्यणुकसंज्ञक कार्य उत्पन्न होता है। तीन द्व्यणुक के संयोग से त्र्यणुक की उत्पत्ति होती है। कार्यद्रव्य होने के बावजूद अणुओं में महत्परिमाण के अभाव होने से इनका चाक्षुष प्रत्यक्ष सम्भव नहीं होता। कार्यद्रव्य त्र्यणुक में महत्परिमाण का सद्भाव होने से जालसूर्यकिरणों में उनका चाक्षुष प्रत्यक्ष होता है। इस प्रकार त्र्यणुक के षष्ठ भाग को परमाणु कहा जाता है। तद्यथा-

जालान्तरगते ............................उच्यते।।१।।

इसी प्रकार चार त्र्यणुकों के संयोग से चतुरणुकों की उत्पत्ति होती है। इस क्रम से पृथिवी-अन्त्यावयवी की उत्पत्ति होती है। तद्वत् जल, तेजस्, वायु की भी उत्पत्ति प्रतिपादित की गई है।

जिज्ञासा उदित होती है- पृथक् पृथक् वर्तमान पार्थिवादि परमाणुओं का संयोग किस कारण से होता है। इसका समाधान महर्षिकणाद ने किया है- अग्नि

मनसश्चाद्यं कर्मादृष्टकारितम्"[१] इत्युक्तम्। अस्यायमर्थः—अग्निगतमूर्ध्वदेश-प्राप्त्यनुकूलज्वलनम्, एवमेव वायुगतं तिर्यक्पवनम्, तथाणूनां पार्थिवादिपरमाणूनां मनसश्च यदाद्यं सर्गाद्यकालीनं कर्म, इतीमानि कर्माण्यदृष्टकारितानीति। तदेतेन सर्गाद्यकालीनपरमाणूनां संयोगे प्राणिनामदृष्टान्येव कारणानीति प्रतिपादितं भवति। भाष्यकारः प्रशस्तपादाचार्यस्तु न केवलं प्राणिनामदृष्टान्येव कारणानि, किन्तु प्राणिनामदृष्टसहकृता महेश्वरेच्छा हि परमाणुसंयोगे कारणमित्यभिप्रैति। तन्मतानुसारेण प्राणिनामदृष्टपरिपाकवशेन महेश्वरसिसृक्षा समुदेति। तत्सिसृक्षया प्रथमतः पवनपरमाणुषु कर्माण्युत्पद्यन्ते। तत्र परमाणवः समवायिकारणम्, लब्धवृत्त्यदृष्टवदात्मपरमाणुसंयोगोऽसमवायिकारणम्, अदृष्टं च निमित्तकारणम्। एतादृशसामग्रीसमवधानेनोत्पन्नकर्मणा पवनपरमाणूनां परस्परसंयोगा जायन्ते। तत्संयोगेभ्यश्च द्व्यणुकादिक्रमेण महान् वायुः समुत्पद्य क्वचिदप्रतिहतगतिराकाशे दोधूयमानस्तिष्ठति। अनन्तरं वायावाप्येभ्यः परमाणुभ्यस्तेनैव द्व्यणुकादिक्रमेण

---

का ऊर्ध्वज्वलन, वायु का तिर्यक्पवन, अणु एवम् मनस् का आद्य (प्रथम) कर्म अदृष्टकारणक होता है। तद्यथा-"अग्नेरूर्ध्वज्वलनं........कर्मादृष्टकारम्।" इस वचन का तात्पर्यार्थ है- अग्निगत ऊर्ध्वदेश प्राप्त्यनुकूल ज्वलन, वायुगत तिर्यक् पवन (गति), पार्थिवादि परमाणुओं का तथा मनस् का सर्गाद्यकालिक कर्म इन छह कर्मों के प्रति अदृष्ट (जीवादृष्ट) को कारण माना जाता है। इस प्रतिपादन से सर्गाद्यकालिक परमाणुओं के संयोग से प्राणियों के अदृष्ट को कारण माना जा सकता है। वैशेषिक दर्शन के भाष्यकार आचार्य प्रशस्तपाद प्राणियों के अदृष्ट-मात्र को कारण नहीं मानते प्रत्युत प्राणियों के अदृष्ट से सहकृत महेश्वर की इच्छा को वह परमाणुसंयोग के प्रति कारण प्रतिपादित करते है। तदनुसार प्राणियों के अदृष्ट का परिपाक होने से महेश्वर में सृष्टि की इच्छा उत्पन्न होती है। उस सिसृक्षा से सर्वप्रथम पवन-परमाणुओं में कर्म उत्पन्न होते हैं। इस कर्म की उत्पत्ति में परमाणुओं को समवायिकारण माना जाता है, लब्धवृत्ति अदृष्टवद्आत्मा एवं परमाणु के संयोग को असमवायिकारण तथा अदृष्ट को निमित्त कारण माना जाता है। एतादृश कारणसामग्री के सन्निधान से जनित कर्म द्वारा पवन-परमाणुओं के परस्पर संयोग उत्पन्न होते हैं। इन संयोगों से द्व्यणुकादि क्रम से महान् वायु उत्पन्न होता है। उत्पत्ति के अनन्तर यह वायु अप्रतिहत गति से आकाश में दोधूयमान रहता है। तदनन्तर वायु में जलीय परमाणुओं से उपर्युक्त प्रकार से

---

१. वै० सू० ५।२।१३.

महान् सलिलनिधिरुत्पन्नः सन् प्रतिरोधकाभावात् सर्वत्र पोप्लूयमानस्तिष्ठति। एवं जलनिधेरुत्पत्त्यनन्तरं तस्मिन्नेव जलधौ पार्थिवपरमाणुभ्यो महापृथिवी संहतावतिष्ठते। अनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिक्रमेण महांस्तेजोराशिरुत्पद्य देदीप्यमानस्तिष्ठति। यद्यपि पयःपावकयोः स्वाभाविको विरोधस्तथापि प्राणिनामदृष्टवशेनाधाराधेयभावोपपत्तिः।

एवं चतुर्णां महाभूतानामुत्पत्त्यनन्तरं महेश्वरस्य सङ्कल्पमात्रेण पार्थिवपरमाणुसहितेभ्यस्तैजसेभ्योऽणुभ्य एकं महत्पिण्डमुत्पद्यते। तस्मात् पिण्डाच्चतुर्मुखः सर्वलोकपितामहो ब्रह्मा उत्पद्यते। उत्पन्नमेनं ब्रह्माणं महेश्वरः प्रजासर्जने विनियुङ्क्ते। अतिशयज्ञानवैराग्यसम्पन्नो हि ब्रह्मा ज्ञानातिशयात् प्राणिनां धर्माधर्मौ यथावत् प्रत्येति, अतिशयवैराग्यान्न पक्षपातेन प्रवर्तते, अतिशयैश्वर्याच्च कर्मफलं भोजयति। अयं प्राणिनां कर्मविपाकं विदित्वा, अर्थाद् एतावदस्य कर्मफलं भविष्यतीति ज्ञात्वा तदनुरूपज्ञानभोगायुषः सुतान् दक्षादिप्रजापतीन् मानसान् मनुदेवर्षिपितृगणान्, मुखबाहूरुपादेभ्यो ब्राह्मण-

---

अणुकादिक्रम से महान् सलिलनिधि उत्पन्न होकर प्रतिरोधक के अभाव में सर्वत्र पोप्लूयमान होता रहता है। इस प्रकार जलनिधि की उत्पत्ति के अनन्तर उसमें पार्थिव परमाणुओं से क्रमेण म्हापृथिवी की उत्पत्ति होती है। तत्पश्चात् उस जलमहोदधि में तैजस परमाणुओं से अणुकादिक्रम से तेजोराशि की उत्पत्ति होती है। वह देदीप्यमान होकर स्थित रहता है। यद्यपि जल एवं पावक में स्वाभाविक विरोध होता है तथापि प्राणियों के अदृष्ट से वशीभूत सलिल एवम् अनल में आधाराधेयभाव सुघट होता है।

इस प्रकार चार महाभूतों की उत्पत्ति के अनन्तर महेश्वर के संकल्पमात्र से पार्थिवपरमाणु सहित तैजस परमाणुओं से एक महान् पिण्ड उत्पन्न होता है। उस पिण्ड से चारमुख वाले सर्वलोकपितामह ब्रह्म की उत्पत्ति होती है। तदनन्तर ब्रह्माजी को भगवान् महेश्वर प्रजा की सृष्टि में संयोजित करते हैं। अतिशय ज्ञान एवं वैराग्य से युक्त ब्रह्माजी ज्ञानातिशय से प्राणियों के धर्म एवम् अधर्म को विधिवत् ज्ञात कर लेते हैं। अतिशय वैराग्यप्रवण होने से वह पक्षपात में प्रवृत्त नहीं होते। यतश्च अतिशय ऐश्वर्यसम्पन्न होते हैं अतः वह कर्मफल का भोग प्रदान करते हैं। ये प्राणियों के कर्मविपाक को जानकर (इस जीव का एतावत् कर्मफल है यह जानकर) तदनुरूप ज्ञान, भोग, आयु से युक्त पुत्रों (दक्षप्रभृति मानसों) मनु, देवर्षि तथा पितृगण को उत्पन्न करते हैं। पुनश्च अपने मुख, बाहु, जङ्घा एवं पाद से ब्राह्मण, क्षत्रिय,

क्षत्रिय–वैश्य–शूद्रान्, तथान्यानि क्षुद्रक्षुद्रतराणि च भूतानि सृष्ट्वा आशयानुरूपैः = आशेते फलोपभोगकालं यावदात्मन्यवतिष्ठत इत्याशयः कर्म, तदनुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति। मात्रयाऽप्यन्यथा न करोति[1]। तदेवं जगदुत्पत्तौ पार्थिवादिपरमाणवः समवायिकारणम्, परमाणूनां संयोगोऽसमवायिकारणम्, अदृष्ट–ईश्वर–कालादिकं च निमित्तकारणमित्यवसेयम्।

**प्रलयक्रमः**

उत्पन्नस्य च विनाशोऽवश्यंभावी। तस्माद्यथोत्पन्नो हि मृण्मयो घटः कालान्तरेण विनश्यति, तथा मृत्संचयभूतानां पर्वतादीनामपि विनाशो भविष्यत्येव। यथा जलाशयाः कूपतडागादयो विशुष्यन्ति, तथा समुद्रोपि कदाचित् शुष्यत्येव। यथा प्रदीपस्य निर्वाणं भवति, तथा सूर्यप्रकाशस्यापि कदाचिन्निर्वाणं भविष्यत्येव। एवं पृथिव्यादिचतुर्विधभूतानां परमाण्वन्तो विनाश एव न्यायवैशेषिकदर्शने प्रलय इत्युच्यते। "चतुर्युगसहस्राणि ब्रह्मणो

---

वैश्य एवं शूद्रों को ये उत्पन्न करते हैं। तद्वत् क्षुद्र से क्षुद्रतर प्राणियों की सृष्टि ये करते हैं। प्राणियों की सृष्टि के अनन्तर उनके आशय (फलोपभोगकाल तक आत्मा में शयन (स्थिति) करने वाले कर्म) के अनुरूप धर्म, ज्ञान, वैराग्य एवम् ऐश्वर्य से प्राणियों को ब्रह्मा जी जोड़ते है। कर्मफल के अतिरिक्त रञ्चमात्र भी अन्यथा ये नहीं करते।

एतावता जगत् की उत्पत्ति में पार्थिवादि परमाणु, समवायिकारण हैं, परमाणुओं का संयोग, असमवायिकारण है, अदृष्ट, ईश्वर एवं कालादि निमित्त कारण हैं यह निष्कर्ष प्राप्त होता है।

**प्रलयक्रम-**

जिस वस्तु की उत्पत्ति होती है उसका विनाश अवश्यम्भावी है। अतः यथा उत्पन्न मृण्मय घट कालान्तर में विनष्ट होता है तद्वत् मृत्संचित पर्वतादि का भी विनाश अवश्यम्भावी है। यथा कूप, तडाग प्रभृति जलाशय सूख जाते हैं तद्वत् समूद्र भी कभी न कभी सूखेगा। यथा प्रदीप का निर्वाण होता है तद्वत् सूर्यप्रकाश का भी कदाचित् निर्वाण होगा ही। पृथिव्यादिचतुर्विध भूतों का परमाणवन्त विनाश ही न्यायवैशैषिक दर्शन में प्रलय कहलाता है। चतुर्युग

---

१. प्र० पा० भा०, पृ० १२७–१३१; न्या० क०, पृ० १२७–१३१.

दिनमुच्यते" इत्यनेन मानेन ब्रह्मणो वर्षशतस्यान्ते महेश्वरे सञ्जिहीर्षा भवति। अनया सञ्जिहीर्षया प्राणिनामदृष्टानां वृत्तिनिरोधो जायते, तथा तत्तत्प्राणिनां शरीरेन्द्रियाणि तत्कारणीभूतपरमाणूनां वियोगेन परमाण्वन्तं विनश्यन्ति। एवमेव पृथिव्यादिचतुर्विधमहाभूतानां परमाणुषु क्षोभोत्पत्त्या तेषामपि संयोगविनाशेन चतुर्णामपि महाभूतानां विलयो जायते। तदेवं संसारस्य सर्वाण्यपि शरीरेन्द्रियादिकार्यद्रव्याणि तिरोहितानि भवन्ति। प्रलयकाले केवलं पृथिव्यादिचतुर्विधमहाभूतानां परमाणवः, आकाश-काल-दिक्-आत्म-मनांसीति पञ्च नित्यद्रव्याणि, तथा प्राणिनां धर्माधर्मजन्यो भावनाख्यः संस्कारश्चेत्यवतिष्ठन्ते। पुनरेतैश्च आगामिनी सृष्टिर्भविष्यति। तदुक्तं प्रशस्तपादाचार्येण-"ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं शरीरेन्द्रियमहाभूतो-पनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छातः परमाणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामा-

---

सहस्रात्मक-काल-परिमित दिवस ब्रह्मा जी का होता है इस शास्त्रीय मान से परिमित ब्रह्मा जी की सौ वर्ष आयु व्यतीत होने पर महेश्वर में जगत्संहार की इच्छा उदित होती है। इस इच्छा से प्राणि-सम्बद्ध अदृष्टों का वृत्ति-निरोध हो जाने पर प्राणियों के शरीरेन्द्रियों के कारणीभूत परमाणुओं के वियुक्त हो जाने से परमाणुमात्रावशेष रह जाता है। एवमेव पृथिवी-प्रभृति चतुर्विध महाभूतों का परमाणुओं में क्षोभ की उत्पत्ति होने से उनका भी संयोग-विनाश होने से चारों महाभूतों का विलय हो जाता है। इस प्रकार संसार के सभी शरीर-इन्द्रिय-प्रभृति कार्यद्रव्य तिरोहित हो जाते हैं। प्रलयकाल में केवल पृथिव्यादि चतुर्विध महाभूतों के परमाणु, ५ नित्य द्रव्य-(आकाश, काल, दिक्, आत्मन् एवं मनस्) तथा प्राणियों का धर्माधर्मजनित भावनासंज्ञक संस्कार स्थित रहते हैं। इन्हीं सामग्री के बल पर भावी सृष्टि का उद्भव होता है। प्रशस्त पादाचार्य ने सुस्पष्ट कहा है— "ब्राह्ममान से वर्तमान ब्रह्मा का सौ वर्ष व्यतीत होने पर अपवर्ग काल में संसार से खिन्न सभी प्राणियों का रात्रिविश्राम हेतु सकल-भुवन-पति महेश्वर के संहार की इच्छा समकाल में शरीर, इन्द्रिय, महाभूतों के जनक, प्राणियों के अदृष्टों का वृत्तिनिरोध होने पर महेश्वर की इच्छा से परमाणु-संयोग से उत्पन्न कर्मों द्वारा शरीर, इन्द्रिय के कारण अणुओं के विभाग से अणु-संयोग की निवृत्ति होने पर उनका परमाणुपर्यन्त विनाश होता है। तद्वत् पृथिवी, जल, तेज एवम् पवन

परमाण्वन्तो विनाशः। तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः। ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्माधर्मसंस्कारानुविद्धा आत्मानस्तावन्तमेव कालम्"[१] इति।

तदेवं न्यायवैशेषिकदर्शनयोः परमाणुभ्यः सृष्टेरारम्भ इति पुनः प्रलयकाले प्राणिनां प्रारब्धकर्मपरिसमाप्तौ च चत्वारि भूतानि परमाणुरूपेणावतिष्ठन्ते। तदेतयोर्दर्शनानुसारेणासद्रूपः प्रपञ्चः कारणसामग्र्या सद्रूपतामाप्नोतीत्यारम्भवादेऽसत्कार्यवादः प्रसाध्यते।

## सांख्ययोगदर्शनयोः सत्कार्यवादः

न्यायवैशेशिकाभिमतासत्कार्यवादः सांख्ययोगाचार्यैर्नाङ्गीक्रियते। तेषामयमाशयः—असतः कार्यस्य सत्त्वं कारणव्यापारसहस्रैरपि न कर्तुं शक्यते। नह्यविद्यमानं शशशृङ्गं कदापि शशे शृङ्गरूपकार्यसत्तां भजते। नहि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं पार्यत इति। तस्मादेतन्मते कारणेऽनभिव्यक्तरूपेण

---

संज्ञक महाभूतों का इसी क्रम से उत्तरोत्तर की अवस्थिति रहते पूर्व पूर्व की अपीति (विनाश) होती है। तत्पश्चात् प्रविभक्त परमाणुगण स्थित रहते हैं। धर्माधर्म के संस्कार से युक्त जीवात्मा भी उतने ही काल तक स्थित रहते हैं।

इस प्रकार न्यायवैशेषिक दर्शनों में परमाणु से सृष्टि का आरम्भ मान्य है। तद्वत् पुनः प्रलयकाल में प्राणियों के प्रारब्ध कर्म की परिसमाप्ति होने पर चार भूत परमाणुरूपों में स्थित रहते हैं। एवञ्च इन दोनों दर्शनों में असद्रूप प्रपञ्च, कारणसामग्री के समवधान से सद्रूपता को प्राप्त करता है। आरम्भवाद में असत्कार्यवाद की सिद्धि की जाती है।

## सांख्ययोग-दर्शनों में सत्कार्यवाद

न्याय-वैशेषिकों का अभिमत असत्कार्यवाद सांख्य-योगाचार्यों द्वारा अङ्गीकृत नहीं हैं। उनका यह आशय है— असत् कार्य को हजारों कारणव्यापार से भी "सत्" नहीं बनाया जा सकता। शशशृङ्ग अविद्यमान है असत् है वह कभी भी शश में शृङ्ग-स्वरूप कार्यसत्ता को प्राप्त नहीं होता है। हजारों शिल्पी के प्रयत्न से भी नील को

---

१. प्र० पा० भा०, पृ० १२१-१२६.

विद्यमानमेव कार्यं कारणसामग्रीव्यापारेणाभिव्यज्यत इत्यङ्गीक्रियते। युक्तं चैतत्, पीडनेन तिलेष्वेव तैलस्य, अवघातेन धान्येष्वेव तण्डुलानाम्, दोहनेन सौरभेयीष्वेव पयसोऽभिव्यक्तेः परिदृश्यमानत्वात्। तथा चोक्तं सांख्यवृद्धैः–

सदेव कार्यमुत्पत्तेः पूर्वं कारकरूपकम्।
आविर्भावतिरोभावौ जन्मनाशावुदीरितौ।।इति।

तस्माद्यथा कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निःसरन्ति चाविर्भवन्ति; एवं कारणस्य तन्त्वादेः पटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते, निविशमानास्तिरोभवन्तो विनश्यन्तीत्युच्यन्ते। न पुनरसतामुत्पत्तिः, सतां वा विनाशः। उक्तं च भगवता श्रीकृष्णेन–"'नासतो विद्यते भावो नाभावो विद्यते सतः"[1] इति। श्रीमता ईश्वरकृष्णेनापि–

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च तत्कार्यम्[2]।।इति।

---

पीत नहीं बनाया जा सकता। अतः इस मत में कारण में अनभिव्यक्त रूप से विद्यमान (कारणरूप में) ही कार्य, कारण सामग्री व्यापार से अभिव्यक्त होता है—यह स्वीकार किया जाता है। यह सर्वथा उचित है—मशीन में पीडन से तिलों में ही तैल की अभिव्यक्ति देखी जाती है। तद्वत् अवघात से धानों में ही तण्डुल की तथा दोहन से गायों में ही पयस् की अभिव्यक्ति देखी जाती है। सांख्यवृद्धों ने सुस्पष्ट कहा है—

सदेव कार्यमुत्पत्तेः.......जन्मनाशावुदीरितौ।।१।।

अतः यथा कूर्म के अङ्ग, कूर्म-शरीर में निविष्ट होकर तिरोभूत हो जाते हैं तथा बहिर्निःसृत होकर आविर्भूत होते हैं तद्वत् तन्तु-प्रभृति कारण से पटादि विशेष निःसृत होकर आविर्भूत होते हैं जिसे उत्पत्ति कहा जाता है। तद्वत् अन्तर्निविष्ट होकर ये तिरोभूत होते हैं जिसे विनाश कहा जाता है। किन्तु असत् की उत्पत्ति अथवा सत् का विनाश नहीं होता। भगवान् श्रीकृष्ण ने कहा है– "नासतो......विद्यते सतः।" अर्थात् असत् की कभी भी सत्ता नहीं होती तथा सत् का कभी भी अभाव नहीं होता। आचार्य ईश्वरकृष्ण ने भी कहा है—

असदकरणाद्...... कारणभावाच्च सत्कार्यम्।।१।।

---

१. भ० गी० २।१६.

२. सा० का० ९.

अत्र १-असदकरणात्, २-उपादानग्रहणात्, ३-सर्वसम्भवाभावात्, ४-शक्तस्य शक्यकरणात्, ५-कारणभावाच्चेति पञ्चभिर्हेतुभिः सत्कार्यवादः प्रसाधितः। स एवात्र विचार्यते। तथाहि-

**१. असदकरणात्**-कारणव्यापारादूर्ध्वमिव प्रागपि सदेव कार्यम्, कुतः? असदकरणात्, असतः करणायोग्यत्वात् सत् कार्यमिति प्रथमो हेतुः। तथा च कार्यं सत्, करणात् = क्रियमाणत्वात्, यन्न सत् तन्न क्रियमाणम्, यथा नीले पीतं नरविषाणं वा – इत्यनुमानप्रयोगोऽत्र सम्भवति।

अत्रायं भावः-यथा सर्वथाऽविद्यमानानां नरविषाणादीनामुत्पादयितुमशक्यत्वात् तेषामसत्त्वं सिद्ध्यति, न तथा घटादीनाम्। मृदादिभ्यो घटादीनामुत्पत्तिसम्भवाद् घटादीनां मृदादिषु सत्त्वमङ्गीक्रियते सांख्यैः। नैयायिकाः कारणव्यापारादूर्ध्वं कार्यस्य सत्त्वमङ्गीकुर्वन्ति, सांख्यास्त्वसत उत्पादयितुमशक्यत्वात् कारणव्यापारात् प्रागपि कार्यं सदेवेत्यभ्युपगच्छन्ति।

---

इस कारिका में पाँच हेतुओं से सत्कार्यवाद की स्थापना प्रतिपादित की गई है। १. असदकरणात् २. उपादानग्रहणात् ३. सर्वसम्भवाभावात् ४. शक्तस्य शक्यकरणात् एवम् ५. कारणभावात्। क्रमशः इनकी विवेचना की जाती है।

**१. असदकरणात्**- कारणव्यापार से पश्चात् की तरह पूर्व में भी कार्य विद्यमान ही रहता है। इसमें क्या कारण हो सकता है? असदकरणात्। यतश्च असत को सत् बनाया नहीं जा सकता अतः कार्य, कारण व्यापार से पूर्व में भी सत् ही होता है यह प्रथम हेतु द्वारा सिद्ध किया जाता है। यहाँ अनुमान प्रयोग इस प्रकार से किया जाता है— कार्यं सत, करणात् = क्रियमाणत्वात्, यन्न सत् तन्न क्रियमाणम्, यथा नीले पीतं, नरविषाणं वा।

आशय यह है— यथा सर्वथा अविद्यमान नरविषाणादि को उत्पन्न नहीं किया जा सकता अतः उनका असत्त्व सिद्ध होता है। यह स्थिति घटादि की नहीं हो सकती। मृदादि से घटादि की उत्पत्ति सम्भव होने से घटादि की मृदादि में सत्ता सांख्यदार्शनिकों ने स्वीकार की है। तार्किकों ने कारण-व्यापार के अनन्तर कार्य की सत्ता (अस्तित्व) माना है परन्तु सांख्याचार्य असत् का उत्पादन सम्भव नहीं होने से कारणव्यापार से पहले भी कार्य सत् ही है— ऐसा स्वीकार करते हैं।

२. उपादानग्रहणात् – कार्यकारणसम्बन्धाच्च सत् कार्यमिति प्रदर्शनार्थम् 'उपादानग्रहणात्' इति द्वितीयो हेतुः उपादानानि = कारणानि, तेषां ग्रहणं = कार्येण सम्बन्धः, उपादानैः कार्यस्य सम्बन्धात् सत् कार्यम्। कार्येण सम्बद्धं हि कारणं कार्यस्य जनकं भवति नासम्बद्धम्। सम्बन्धश्च कार्यस्यासतो न सम्भवति। तस्मात् कार्यं सदिति तात्पर्यम्। अनुमानाकारं यथा–उत्पत्तेः प्राक् कार्यमुपादानसम्बद्धम्, तज्जन्यत्वात्, यच्च नोपादानसम्बद्धं न तत् तज्जन्यम्, यथा मृदः पटादिकमिति[1]।

३. सर्वसम्भवाभावात् – कार्यकारणयोर्नियतसम्बन्धाभावे सर्वकार्यकारणभावविप्लवापत्तिरिति 'सर्वसम्भवाभावात्' इति तृतीयो हेतुः। अत्रायं भावः–कस्यचिदुत्पत्तये किञ्चिदुपादीयते, न तु सर्वस्योत्पत्तये सर्वमुपादीयत इति कार्यकारणयोर्नियम उत्पत्तेः प्राक् कार्यस्यासत्त्वपक्षे नोपपद्यते। घटोत्पादनार्थं मृत्तिका गृह्यते, न तन्त्वादिकम्। यद्युत्पत्तेः प्रागसदेव

---

२. उपादानग्रहणात्– कार्य और कारण का परस्पर सम्बन्ध होने से कार्य को कारणव्यापार से पूर्व भी सत् होना सिद्ध होता है— इसे प्रदर्शित करने हेतु उपादानग्रहणात् इस द्वितीय हेतु का उपस्थापन किया गया है। उपादान का अर्थ है कारण। उनका ग्रहण अर्थात् कार्य के साथ सम्बन्ध। यतः उपादान के साथ कार्य का सम्बन्ध है अतः कार्य सत् है। कार्य से संबद्ध कारण ही कार्य का जनक होता है, असम्बद्ध होकर नहीं। कार्य के असत् होने पर उसका सम्बन्ध सम्भव नहीं हो सकता। अतः कार्य सत् है— यह तात्पर्य है। यहाँ अनुमान का स्वरूप है— उत्पत्ति से पूर्व कार्य अपने उपादान से सम्बद्ध रहता है क्योंकि वह उस कारण से जन्य होता है। जो उपादान से सम्बद्ध नहीं होता वह उससे जन्य नहीं हो पाता। यथा मृद् से पटादि।

३. सर्वसम्भवाभावात्– कार्य एवं कारण के मध्य नियत सम्बन्ध के अभाव रहने से सर्वकार्यकारणभाव का विप्लव हो जायेगा। अतः तृतीयहेतु "सर्व-सम्भवाभावात्" का उपस्थापन किया गया है। आशय यह है— किसी की उत्पत्ति हेतु किसी उपादान को विशेष रूप से गृहीत किया जाना है। सभी कार्य, सभी कारण के ग्रहण किये जाने से उत्पन्न नहीं हो पाते। कार्य एवम् कारण का यह नियम उनके पक्ष में सुघटित नहीं हो पाता जो यह मानते हैं कि उत्पत्ति से पहले कार्य का असत्त्व होता है। घट की उत्पत्ति हेतु मृत्तिका ही गृहीत होती है, तन्तु आदि नहीं। यदि उत्पत्ति के पूर्व भी कार्य असत् होता तब कार्यासत्त्व के सर्वत्र अविशेषेण होने से

---

१. सा० त० कौ०, सारबोधिनीव्याख्या च, पृ० २२७-२३८.

कार्यं स्यात्, तदा कार्यासत्त्वस्य सर्वत्राविशेषात् तन्त्वादिभ्योऽपि घट उत्पद्येत। नचोत्पद्यते, तस्मान्नासत्। सत्त्वपक्षे तु घटस्य मृत्तिकायां सत्त्वाद् मृत्तिकातो घटोत्पत्तिः सम्भवति। असम्बद्धस्य जन्यत्वे तु सर्वं कार्यजातं सर्वस्माद् भवेत्। न चैतदस्ति। तस्मात् सत् कार्यमिति। तथा चोक्तं सांख्यवृद्धैः–

**असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।**
**असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः।।इति।**

**४. शक्तस्य शक्यकरणात्**–कारणशक्तेः कार्यपरत्वाच्च सत् कार्यमिति चतुर्थो हेतुः शक्तस्य शक्यकरणादिति। अस्यायमर्थः–शक्तेन हि कार्यं क्रियते नाशक्तेन, यतः शक्तं कारणं शक्तिसम्बद्धमेव शक्यं करोति, नासम्बद्धमिति शक्तस्य शक्यकार्यकरणान्नासत उत्पाद इत्यर्थः। कारणे तदात्मना वर्तमाना कार्यस्याव्याकृतावस्थारूपाऽनागतावस्थैव कार्यनियामिका शक्तिः। तया सम्बद्धं कार्यं च शक्यमित्यनागतावस्थावत्त्वेन कारणे कार्यस्य सत्त्वान्न कार्यस्याऽसत्त्वमिति तत्त्वम्।

---

तन्तुप्रभृति से भी घट की उत्पत्ति हो जाती। यतश्च उत्पत्ति होती नहीं अतः कार्य को असत् नहीं माना जा सकता। जिनके मत में कार्य को सदा सत् माना जाता है। उनके मत में घट की मृत्तिका में सत्ता होने से मृत्तिका से घट की उत्पत्ति का सम्भव समीचीन होता है। कारण से असम्बद्ध को जन्य मानने से सभी कार्य के सभी कारण से उत्पन्न होने की आपत्ति होगी। पर ऐसा होता नहीं। अतः कार्य सत् है जैसा कि ज्ञान वृद्धों ने कहा है—

असत्त्वे नास्ति...... न व्यवस्थितिः।।१।।

**४. शक्तस्य शक्यकरणात्**– कारणगत शक्ति ही कार्य को उत्पन्न करती है अतः कार्य सत् है। एदर्थ चौथा हेतु— "शक्तस्य शक्यकरणात्।" उपस्थापित किया गया है। इसका आशय यह है— शक्तकारण से ही कार्य की उत्पत्ति देखी जाती है अशक्त से नहीं। यतश्च शक्तकारण शक्ति से सम्बद्ध शक्य को ही उत्पन्न करता है असम्बद्ध को नहीं। अतः शक्तकारण से शक्यकार्य की उत्पत्ति होने से असत् की उत्पत्ति नहीं मानी जा सकती। कारण में कारणरूप से विद्यमान कार्य की अव्याकृत अवस्था (अनागत अवस्था) ही कार्य की नियामिका शक्ति है। उस शक्ति से सम्बद्ध कार्य शक्य कहलाता है। एवंच अनागतावस्था रूप से कारण में कार्य की सत्ता होने से कार्य को कथमपि असत् नहीं माना जा सकता। यह तात्विक सिद्धान्त है।

**५. कारणभावात्**–कार्यस्य कारणात्मकत्वात् 'कारणभावात्' इति सत्कार्यवादे पञ्चमो हेतुः। अस्यायमर्थः–नहि कारणाद् भिन्नं कार्यम्, कारणं च सदित्यङ्गीकारात् तदभिन्नं कार्यं कथमसद् भवेत्? तस्मात् सत् कार्यमिति[१]। तदेवं नैयायिकानां बौद्धानां चासत्कार्यवादमसहमानैः सांख्याचार्यैः पञ्चभिर्हेतुभिः सत्कार्यवादो व्यवस्थापितः। एतन्मतानुसारेण सद्रूपा मूलप्रकृतिरेव महदादित्रयोविंशतितत्त्वात्मना परिणमते।

### सांख्यदर्शनस्य पञ्चविंशतितत्त्वानि

तत्र तावत् सांख्यनये–मूलप्रकृतिः, महत्तत्त्वम्, अहङ्कारः, पञ्चतन्मात्राणि (शब्दस्पर्शरूपसरसगन्धाः), पञ्चमहाभूतानि (पृथिव्यप्तेजोवाय्वाकाशाः), पञ्चज्ञानेन्द्रियाणि (चक्षुस्त्वग्–रसनघ्राणश्रोत्राणि), पञ्चकर्मेन्द्रियाणि (पायूपस्थपाणिपादवाचः), मन; पुरुषश्चेति पञ्चविंशतितत्त्वानि स्वीक्रियन्ते। अत्र तत्त्वशब्दः पदार्थवचनः। एतानि पञ्चविंशतितत्त्वानि १. केवलप्रकृतिः, २.

---

**५. कारणभावात्**– यतश्च कार्य कारणात्मक होता है अतः **कारणभावात्** इस पञ्चमहेतु से सत्कार्यवाद की सिद्धि होती है। इसका यह आशय है— कारण से भिन्नस्वभाव कार्य नहीं हो सकता। कारण सत् है ऐसा स्वीकृत है ऐसी स्थिति में उससे अभिन्न कार्य असत् कैसे हो सकता है। अतः कार्य सत् है। इस प्रकार नैयायिक एवं बौद्ध के असत्कार्यवाद के प्रति असहिष्णु सांख्याचार्यों ने पञ्चविध हेतु का उपस्थापन कर सत्कार्यवाद की प्रतिष्ठा की है। एतन्मतानुसार सद्रूपा मूलप्रकृति ही महदादि २३ तत्त्वों के रूप से परिणत होती है।

### सांख्यदर्शन के २५ तत्त्व–

सांख्यसिद्धान्त में १. मूल प्रकृति २. महत् तत्त्व ३. अहंकार ४-८. पञ्च तन्मात्र (शब्द, स्पर्श, रूप, रस एवं गन्ध) ९-१३. पञ्च महाभूत (पृथिवी, जल, तेजस्, वायु एवम् आकाश) १४-१८. पञ्च ज्ञानेन्द्रियाँ (चक्षुष्, त्वक्, रसन, घ्राण एवं श्रोत्र) १९-२३. पञ्च कर्मेन्द्रियाँ (पायु, उपस्थ, पाणि, पाद एवं वाक्) २४. मनस् तथा २५. पुरुष ये २५ तत्त्व स्वीकृत किये गये हैं। यहाँ तत्त्व शब्द पदार्थ का वाचक है— यह समक्षणीय है। इन २५ तत्त्वों को चार भागों में विभाजित

---

१. सा० त० कौ०, सारबोधिनीव्याख्या च, पृ० २३८-२५६.

केवलविकृतिः, ३. प्रकृतिविकृतिः, ४. अप्रकृत्यविकृतिरिति प्रधानतया चतुर्धा विभज्यन्ते।

**१. केवलप्रकृतिः**–तत्र मूलप्रकृतिरेव केवलप्रकृतिरित्युच्यते। यतो हि प्रकृतिर्न कस्माच्चिदुत्पद्यते। तत एव साक्षात् परम्परया वा सर्वमुत्पद्यत इति सा केवलप्रकृतिः। तस्यास्तु कारणान्तरं नाभ्युपगम्यते, अनवस्थापातात्। तदुक्तं महर्षिणा कपिलेन–"मूले मूलाभावादमूलं मूलम्"[२] इति। अस्यायमर्थः– त्रयोविंशतितत्त्वानां मूले = मूलकारणे प्रधाने, मूलाभावात् = अनवस्थापत्त्या कारणाभावात्, मूलम् = प्रधानम्, अमूलम् = मूलशून्यम्, अकारणमिति यावत्।

**२. केवलविकृतिः**–पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चमहाभूतानि, मनश्चेति षोडश पदार्थाः केवलविकृतय इत्युच्यन्ते। तत्र तत्त्वान्तरोपादेयत्वं केवलविकृतित्वम्। विकृतिशब्दः कार्यवाची। तथा च षोडशपदार्थाः कार्याण्येव, न कस्यचित्कारणानीति सिद्ध्यति। ननु षोडशविकारेष्वेकादशेन्द्रियाणां कञ्चन प्रति प्रकृतित्वाभावेऽपि षोडशान्तःपातिनां पञ्चस्थूलभूतानां गोघटवृक्षादीन् प्रति प्रकृतित्वम्, गोवृक्षादीनां च पयोबीजादीन् प्रति प्रकृतित्वम्, पुनः पयोबीजादीनां

---

किया गया है– १. केवल प्रकृति २. केवल विकृति ३. प्रकृति-विकृति ४. अप्रकृति+अविकृति।

**१. केवल प्रकृति–** मूल प्रकृति, केवल प्रकृति कहलाती है। यतश्च प्रकृति किसी से उत्पन्न नहीं होती। प्रकृति से ही अन्य सभी तत्त्वों की उत्पत्ति होती है। अतः इसे केवल प्रकृति कहा जाता है। प्रकृति का कोई भी अन्य कारण नहीं माना जाता। ऐसा करने से उसके भी कारणान्तर मानने से अनवस्था की आपत्ति होगी। महर्षि कपिल ने कहा है— "मूले मूलाभावादमूलं मूलम्।" इसका अर्थ है— २३ तत्त्वों के मूलकारण प्रधान में (अनवस्था की आपत्ति के भय से) किसी को कारण नहीं माने जाने से प्रधान (मूल) अमूल अर्थात् अकारणक है।

**२. केवल विकृति–** ५ ज्ञानेन्द्रियाँ, ५ कर्मेन्द्रियाँ, ५ महाभूत एवं मनस्— इन १६ तत्त्वों को केवलविकृति कहा जाता है। तत्त्वान्तर के कार्यों को केवलविकृति कहा जाता है। विकृति-शब्द कार्यवाची है। एवंच १६ तत्त्व कार्य ही हैं न कि किसी तत्त्व के कारण यह सिद्ध होता है।

च दध्यङ्कुरादीन् प्रति प्रकृतित्वसम्भवात् कथं पञ्चभूतानां केवलविकृतित्वमित्युच्यते, तेषामपि गोघटादीन् प्रति प्रकृतित्वस्योपपन्नत्वात्। तथा हि–स्थूलभूतानि पञ्चतन्मात्राणां विकृतयः प्रकृतयश्च गोवृक्षादेः, एवं गोवृक्षादयः स्थूलभूतानां विकृतयः प्रकृतयश्च पयोबीजादीनाम्, एवं पयोबीजादयो गोवृक्षादीनां विकृतयः प्रकृतयश्च दध्यङ्कुरादीनामिति। तदेवं षोडशविकारान्तःपातिनां पञ्चभूतानां प्रकृतित्वं विकृतित्वं च सम्भवतीति कथमुच्यते तेषां केवलविकृतित्वम्? इति चेन्न, अत्र कार्योपादानत्वं प्रकृतित्वमिति न प्रकृतेर्लक्षणमभिप्रेतम्, किन्तु तत्त्वान्तरोपादानत्वमिति। तदुक्तं श्रीमद्भिर्वाचस्पतिमिश्रैः–"तत्त्वान्तरोपादानत्वं च प्रकृतित्वमिहाभिप्रेतमिति न दोषः। सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम्"[1]

---

यहाँ जिज्ञासा उदित होती है— १६ विकृति संज्ञक तत्त्वों में ११ इन्द्रियाँ किसी की प्रकृति नहीं होती हैं। किन्तु ५ स्थूल भूत में गो, घट, वृक्षादि के प्रति कारण (प्रकृति) होना देखा जाता है। तद्वत् गो, पयस् की प्रकृति है एवं वृक्ष बीज की विकृति हैं। पुनश्च पयस्, दधि की प्रकृति है एवं बीज, अङ्कुर-वृक्षादि की प्रकृति है। ऐसी स्थिति में पञ्च भूतों को केवलविकृति कहना कैसे समीचीन है? क्योंकि उनकी गोघटादि के प्रति प्रकृतिरूपता उपपन्न है। तद्यथा— स्थूल भूत, पञ्च तन्मात्रों की विकृति होने के साथ गोवृक्षादि के प्रति प्रकृति हैं। तद्वत् गोवृक्षादि, स्थूलभूतों की विकृति हैं एवम् पयोबीजादि की प्रकृति हैं। पुनश्च पयोबीजादि, दधि अङ्कुरादि के प्रति प्रकृति हैं एवम् गोवृक्षादि की विकृति हैं। इस प्रकार १६ विकृति के अन्तर्गत ५ भूतों में प्रकृति-विकृति उभयरूपता होने से उनका केवल विकृतिरूप में कथन समीचीन कैसे है?

इसका समाधान है— यहाँ प्रकृति शब्द का अर्थ यह नहीं है— किसी भी कार्य का उपादान कारण होना। किन्तु तत्त्वान्तर का उपादान कारण होना प्रकृति शब्द से विवक्षित है। इसका विशदीकरण श्रीमान् वाचस्पतिमिश्र ने इस प्रकार किया है— "तत्त्वान्तर के प्रति उपादान होना यहाँ प्रकृतिपद से अभिप्रेत है अतः उपर्युक्त दोष सम्भव नहीं है। उपर्युक्त सबके सब गोघटादि की स्थूलता एवम् इन्द्रिय-ग्राह्यता महाभूतों के समान ही है अतः इन्हें हम तत्त्वान्तर नहीं मान सकते।"

---

१. सां० त० कौ०, पृ० ८९-९२.

इति। तदेवं पृथिव्यादेस्तत्त्वान्तर-परिणामवत्त्वान्न प्रकृतित्वम्, अपि तु विकृतित्वमेवेति निष्पन्नम्। उक्तं च योगभाष्ये व्यासदेवेनापि–"न विशेषेभ्यः परं तत्त्वान्तरमस्तीति विशेषाणां नास्ति तत्त्वान्तरपरिणामः, तेषां तु धर्मलक्षणावस्थापरिणामा व्याख्यायिष्यन्ते"[१] इति। अत्र विशेषपदेन भूतेन्द्रियाण्यभिप्रेतानि। ततश्चायं प्रयोगः–गोघटादयो न पृथिव्यादिभ्यस्तत्त्वान्तरम्, स्थूलत्वेन्द्रियग्राह्यत्वाभ्यां पृथिव्यादिसमत्वात्, यन्नैवं तन्नैवमिति। तस्मात् षोडशविकाराणां केवलविकृतित्वमिति सिद्धम्।

**३. प्रकृतिविकृतिः**–महत्तत्त्वाहङ्कारशब्दस्पर्शरूपरसगन्धतन्मात्रात्मकाः सप्त पदार्थाः प्रकृतिविकृतय इत्युच्यन्ते। तत्त्वान्तरोपादानत्वे सति तत्त्वान्तरोपादेयत्वं प्रकृतिविकृतित्वम्। तत्र महत्तत्त्वमहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः। अहङ्कारः पञ्चतन्मात्राणामेकादशेन्द्रियाणां च प्रकृतिः, विकृतिश्च महतः। पञ्चतन्मात्राणि पञ्चमहाभूतानां प्रकृतयः, विकृतयश्चाहङ्कारस्येति महदादिसप्तपदार्थानां प्रकृतिविकृतित्वम्।

---

इस प्रकार पृथिव्यादि ५ भूतों में तत्त्वान्तर परिणाम नहीं होने से इन्हें प्रकृति नहीं कहा जा सकता किन्तु केवलविकृति ही कहा जा सकता है। स्वयं योग-भाष्यकार आचार्य व्यास ने कहा है— "नविशेषेभ्यः......व्याख्यायिष्यन्ते।" इस वाक्य में विशेष पद से पञ्चभूत एवं इन्द्रियों की विवक्षा की गई है। यहाँ अनुमान का आकार निम्नाङ्कित है—

"गोघटादयः न पृथिव्यादिभ्यः तत्त्वान्तरम्, स्थूलत्वेन्द्रियग्राह्यत्वाभ्याम् पृथिव्यादिसमत्वात्, यन्नैवं तन्नैवमिति। एतावता उपर्युक्त १६ तत्त्वों में केवलविकृतिरूपता सिद्ध होती है।

**३. प्रकृतिविकृतिः**– महत्तत्त्व, अहंकार, शब्द, स्पर्श, रूप, रस, गन्ध (पञ्चतन्मात्र) कुल ७ तत्त्वों को प्रकृति-विकृति उभयरूप कहा जाता है। जो तत्त्वान्तरों का उपादान कारण हो एवं तत्त्वान्तर का कार्य हो उसे प्रकृति-विकृति कहा जाता है है। इनमें महत् तत्त्व, अहंकार की प्रकृति है तथा मूलप्रकृति की विकृति है। तद्वत् अहंकार, ५ तन्मात्रों एवं ११ इन्द्रियों की प्रकृति है तथा महत् की विकृति है। ५तन्मात्र, ५ महाभूतों की प्रकृति हैं तथा अहंकार की विकृति हैं। एतावता महदादि ७ तत्त्वों में प्रकृति-विकृति-रूपता सिद्ध होती है।

---

१. यो० सू० भा० २।१९.

**४. अप्रकृत्यविकृतिः–** पुरुषो ह्यप्रकृत्यविकृतिः। तत्र तत्त्वान्तरानुपादानत्वे सति तत्त्वान्तरानुपादेयत्वमप्रकृत्यविकृतित्वम्। नहि पुरुषः कस्माच्चिदुत्पद्यते, नापि पुरुषात् किञ्चिदुत्पद्यत इति स अप्रकृत्यविकृतिः। तस्य "असङ्गो ह्ययं पुरुषः"[१], "साक्षी चेता केवलो निर्गुणश्च"[२], "न जायते म्रियते वा कदाचित्"[३] इत्यादिश्रुतिस्मृतिभ्योऽसङ्गत्वं प्रतिपादितम्। तदुक्तमीश्वरकृष्णेनापि–

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः।।[४] इति।

### योगदर्शनस्य षड्विंशतितत्त्वानि

तत्र तावद् योगदर्शने उपर्युक्तपञ्चविंशतितत्त्वातिरिक्तं पुरुषविशेष ईश्वरोऽप्यङ्गीकृत इति तत्र षड्विंशतितत्त्वानि भवन्ति। सामान्यविशेषपुरुषातिरिक्तानां प्रधानादिपञ्चमहाभूतान्तानां चतुर्विंशतितत्त्वानां विशेष-अविशेष-लिङ्गमात्र-

---

**४. अप्रकृति+अविकृतिः–** पुरुष को अप्रकृत्य विकृति कहा जाता है। जो तत्त्वान्तर का उपादान नहीं हो एवं तत्त्वान्तर का उपादेय भी न हो उसे अप्रकृत्यविकृति कहा जाता है।

पुरुष की उत्पत्ति किसी तत्त्व से नहीं होती तद्वत् पुरुष से किसी तत्त्व की उत्पत्ति नहीं होती अतः यह अप्रकृत्यनिवकृति कहलाता है। निम्नाङ्कित श्रुतिवचन एवं स्मृतिवचन से पुरुष का असङ्गत्व प्रतिपादित किया गया है— "असङ्गोह्ययं पुरुषः, साक्षी चेता केवलो निर्गुणश्च, न जायते म्रियते वा कदाचित्।"

आचार्य ईश्वरकृष्ण ने भी कहा है—

मूलप्रकृति......न विकृतिः पुरुषः।१।।

**योग दर्शन के २६ तत्त्व–** योगदर्शन में उपर्युक्त २५ तत्त्वों के अतिरिक्त ईश्वर (पुरुषविशेष) भी अङ्गीकृत हैं अतः इस दर्शन में २६ तत्त्व माने जाते हैं। पुरुष सामान्य तथा पुरुषविशेष के अतिरिक्त प्रधान से लेकर महाभूत पर्यन्त २४ तत्त्वों कुल २६ तत्त्वों को चार भागों में विभाजित किया जाता है— विशेष,

---

१. बृ० उ० ४।३।१५.
२. श्वे० उ० ६।११.
३. भ० गी० २।२०.
४. सां० का० ३.

अलिङ्गानि चेति चतुर्धा विभागः कृतः। तदुक्तं महर्षिणा पतञ्जलिना— "विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि"[१] इति। अस्यायमर्थः—गुणानां सत्त्वरजस्तमसां दृश्यत्वेन वर्णितानां चत्वारि पर्वाणि = चतुर्विधाः परिणामा भवन्ति। वंशस्य पर्वाणीवैतानि पर्वाणि कथ्यन्ते। तानि च पर्वाणि—विशेषाः, अविशेषाः, लिङ्गमात्रम्, अलिङ्गं चेति सन्ति। तत्राकाशादिपञ्चस्थूलभूतानि, एकादशेन्द्रियाणि चेति षोडशविशेषाः = विशेषपरिणामाः सन्ति गुणानामित्येकं पर्व। पञ्चतन्मात्राणि, अस्मिता चेति षडविशेषाः = अविशेषपरिणामाः गुणानामिदं द्वितीयं पर्व। एते महतः षडविशेषपरिणामाः। सांख्ये त्वहङ्कार एव महतः परिणामः, तन्मात्राणि त्वहङ्कारस्यैव परिणामा इति भेदः। लिङ्गमात्रम् = महत्तत्त्वम्, इदं गुणानां तृतीयं पर्व लिङ्गमात्रपरिणामश्चेत्युच्यते। अलिङ्गम् = प्रधानमिति गुणानां चतुर्थं पर्व विद्यते। अयमेवालिङ्गपरिणामो गुणानां सदृशपरिणामः साम्यावस्था चोच्यते[२]।

---

अविशेष, लिङ्गमात्र एवम् अलिङ्ग। महर्षि पतञ्जलि का सुस्पष्ट वचन है— विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि। इसका अर्थ है— दृश्यरूप में वर्णित गुणों (सत्त्व, रजस् एवं तमस्) के चतुर्विध पर्व=परिणाम होते हैं। वंश (बाँस) के पर्व=गाँठ की तरह इन्हें पर्व कहा जाता है। ये पर्व हैं— विशेष, अविशेष, लिङ्गमात्र एवम् अलिङ्ग। इनमें आकाश प्रभृति ५ स्थूलभूत एवम् ११ इन्द्रियाँ कुल १६ विशेषपरिणामों को गुणों का प्रथम पर्व कहा गया है। ५ तन्मात्रायें तथा अहंकार ये छह अविशेषपरिणाम हैं, इन्हें गुणों का द्वितीय पर्व कहा जाता है। ये महत् के छह अविशेष परिणाम हैं। यहाँ यह विशेष रूप से विवेक्तव्य है— सांख्य में योगविरुद्ध सिद्धान्त है— अहङ्कार ही महत् का परिणाम है एवम् तन्मात्र अहंकार के ही परिणाम हैं यह ध्यातव्य है। लिङ्गमात्र महत् तत्त्व को कहा जाता है। यह गुणों का तृतीय पर्व है। इसी का दूसरा नाम लिङ्गमात्र-परिणाम है। अलिङ्ग प्रधान को कहा जाता है यह गुणों का चतुर्थ पर्व है। इसे अलिङ्गपरिणाम शब्द से सदृशपरिणाम शब्द से तथा साम्यावस्था शब्द से भी कहा जाता है।

---

१. यो० सू० २।१९.

२. यो० सू० भा० २।१९.

**सृष्टिक्रमः**

सांख्यदर्शने प्रकृतिस्तु जडा, पुरुषश्चासङ्ग इत्यङ्गीकारान्न केवलं प्रकृत्या न वा पुरुषेण सृष्टिः सम्भवतीत्यन्धपङ्गुन्यायेनोभाभ्यां संयुक्ताभ्यां सृष्टिः प्रतिपाद्यते। तदुक्तमीश्वरकृष्णेन–

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।।**[1] **इति।**

प्रकृतिपुरुषसंयोगस्य महदादीनां निमित्तत्वेऽप्युपादानमन्तरेण कार्योत्पत्तेरसम्भवात् पुरुषस्यापरिणामित्वात् तात्त्विकसङ्गरहितत्वाच्च न कार्योपादानत्वम्, अतोऽव्यक्तमेव महदादेरुपादानमिति मनसि निधाय पुनः प्राहेश्वरकृष्णः–

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।**
**तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि।।**[2] **इति।**

अस्यायमर्थः–प्रकृतेः = प्रधानात्, महान् = महत्तत्त्वम्, बुद्धितत्त्वमिति यावत्, जायत इत्यन्वयः। ततः = महत्तत्त्वात्, अहङ्कारः = 'अहम्'

---

**सृष्टिक्रम**–सांख्यदर्शन में प्रकृति को जड कहा गया है तथा पुरुष को असङ्ग कहा गया है। अतः केवल पुरुष अथवा केवल प्रकृति से सृष्टि सम्भव नहीं है। अतः अन्धपङ्गुन्याय से इन दोनों को संयुक्त रूप से सृष्टि के प्रति कारण माना जाता है। आचार्य ईश्वरकृष्ण ने सुस्पष्ट कहा है—

पुरुषस्य दर्शनार्थं.........संयोगस्तत्कृतः सर्गः।।१।।

प्रकृतिपुरुष के संयोग को महदादि के प्रति निमित्तकारण माना जा सकता है किन्तु उपादान के बिना कार्य की उत्पत्ति सम्भव नहीं होने से तद्वत् पुरुष के अपरिणामी एवम् असङ्ग होने से उसे महदादि का उपादान नहीं माना जा सकता। अतः पारिशेष्यात् अव्यक्त (प्रधान) को ही उपादान माना जा सकता है ऐसा मन में विचार कर आचार्य ईश्वरकृष्ण ने पुनः कहा है—

प्रकृतेर्महान्.........पञ्च भूतानि।।१।।

इसका अर्थ है— प्रकृति अर्थात् प्रधान से महत् तत्त्व उत्पन्न होता है।

---

१. सां० का० २१.
२. सां० का० २२.

इत्यभिमानव्यापारलक्षण उत्पद्यते। तस्मात् = अहङ्कारात्, षोडको गणः = एकादशेन्द्रियाणि पञ्चतन्मात्राणीति षोडशको गणो जायते। तस्मादपि षोडशकाद् गणान्निष्कृष्टेभ्यः = षोडशकमध्यात् पृथक्कृतेभ्य इति यावत्, पञ्चभ्यः = पञ्चतन्मात्रेभ्यः, पञ्चभूतानि = आकाशादिपञ्चमहाभूतानि जायन्त इति योजना। उपर्युक्तानां महत्तत्त्वादीनां स्वरूपं तावद्विचार्यते।

**महत्तत्त्वम् ( बुद्धिः )**–सृष्टिकाले पुरुषेणाधिष्ठिता प्रकृतिः सृज्यमानप्राणिनामदृष्टपरिपाकवशात् क्षुब्धा सती साम्यावस्थां परित्यज्य प्रथमतो महत्तत्त्वरूपेण परिणमते। इदमेव तत्त्वं बुद्धिरित्युच्यते। अध्यवसायोऽस्यासाधारणं लक्षणम्। अत्र सत्त्वगुणाधिक्येन धर्म-ज्ञान-वैराग्य-ऐश्वर्याण्युत्पद्यन्ते, तमोगुणाधिक्येन च तद्विपरीतानामधर्माज्ञानादीनामुदयो जायते। तदुक्तमीश्वरकृष्णेन–

**अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।**
**सात्त्विकमेतद् रूपं तामसमस्माद् विपर्यस्तम् ।।**[१] इति।

---

महत् तत्त्व से अहम्–इत्याकारक अभिमान-व्यापार स्वरूप अहङ्कार उत्पन्न होता है। उस अहंकार से १६ तत्त्वों का समूह (११ इन्द्रियों एवम् ५ तन्मात्र) उत्पन्न होता है। इन १६ तत्त्वों के ५ तन्मात्रों से ५ भूतों (आकाश, वायु, तेजस्, जल एवं पृथिवी) की उत्पत्ति होती है।

सम्प्रति महदादि-तत्त्वों की स्वरूपविवेचना की जाती है—

**महत्-तत्त्व (बुद्धि)** सृष्टि के आरम्भ में पुरुष से अधिष्ठित प्रकृति, सृज्यमान प्राणियों के अदृष्टपरिपाकवशात् क्षुब्ध होकर साम्यावस्था का परित्याग कर सर्वप्रथम महत् तत्त्व रूप से परिणत होती है। इसका दूसरा नाम बुद्धि है। अध्यवसाय इसका व्यापार है। वही इसका असाधारण लक्षण है। यतश्च बुद्धि में सत्त्वगुण का आधिक्य होता है अतः इसमें कर्म, ज्ञान, वैराग्य एवम् ऐश्वर्य उत्पन्न होते हैं। जब तमोगुण का आधिक्य होता है तब उनसे विपरीत अधर्म अज्ञानादि का उदय होता है। आचार्य ईश्वरकृष्ण ने स्पष्ट कहा है— अध्यवसायो बुद्धिः ...... अस्माद् विपर्यस्तम्।।१।।

यद्यपि प्रकृति से जन्य होने के कारण बुद्धि जडात्मा है तथापि वह पुरुषसान्निध्य से चेतनवत् प्रतिभासित होती है। सुखदुःखादि का अनुभव, प्राथम्येन

---

१. सां० का० २३.

बुद्धेः प्रकृतिकार्यत्वात् सा जडैव, अथापि पुरुषसान्निध्येन चेतनवदवभासते। सुखदुःखानामनुभवः प्रथमतो बुद्धावेव जायते। सन्निधानवशेन तद् गतसुखादीन् पुरुषः स्वात्मत्वेनाभिमन्यमानो बद्ध इत्युच्यते। पुनस्तयैव बुद्ध्या विवेकख्यात्युदये सति पुरुषः प्रकृतितः स्वात्मानं पृथक् स्वतन्त्रं च मत्वा मुक्तो भवति। एवमियं बुद्धिः पुरुषस्य भोगापवर्गार्था प्रवर्तते।

अहङ्कारः—उपर्युक्ताद् महत्तत्त्वात् (बुद्धेः) अहङ्कारस्योत्पत्तिर्जायते। 'अभिमानोऽहङ्कारः' इत्यस्यासाधारणं लक्षणम्। अनेनाहङ्कारेणैव पुरुषोऽहं कर्ता, अहं भोक्तेत्यभिमन्यते। अहङ्कारमुपजीव्यैव बुद्धिः 'कर्तव्यमेतन्मया' इत्यध्यवस्यति। अहङ्कारस्य गुणभेदेनैकादशेन्द्रियाणां पञ्चतन्मात्राणां चोत्पत्तिर्भवति। तत्र वैकृतादहङ्कारात् (सात्त्विकाहङ्कारात्) एकादशेन्द्रियाणि, तामसादहङ्कारात् पञ्चतन्मात्राणि चोत्पद्यन्ते। तदुक्तमीश्वरकृष्णेनैव—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्।।[1] इति।

ननु सत्त्वतमोभ्यामेव सर्वं कार्यं जन्यते चेत् कृतमकिञ्चित्करेण रजसेति

---

बुद्धि में ही उत्पन्न होता है किन्तु सन्निधानवशात् बुद्धिगत सुखादि को पुरुष स्वत्वेन स्वीकार करने के कारण स्वयं बद्ध हो जाता है। पुनश्च उसी बुद्धि से विवेकख्याति के उदित होने से पुरुष स्वयं को प्रकृति से पृथक् एवं स्वतन्त्र होने का निश्चय करने से मुक्त हो जाता है। इस प्रकार बुद्धि की प्रवृत्ति का उद्देश्य पुरुष का भोग अथवा अपवर्ग होता है।

**अहंकार**— उपर्युक्त बुद्धि से अहंकार की उत्पत्ति होती है। अभिमान-व्यापार को अहंकार का लक्षण बताया गया है। इस अहंकार के कारण पुरुष का अहंकार उदित होता है— अहंकर्ता, अहंभोक्ता। अहंकार के बल पर बुद्धि द्वारा निर्णय लिया जाता है— मुझे यह करना है। अहंकार के गुणभेद से ११ इन्द्रियों की उत्पत्ति होती है तथा तामस अहंकार से ५ तन्मात्रों की उत्पत्ति होती है। आचार्य ईश्वरकृष्ण ने ही कहा है—

"सात्त्विक एकादशकः...........तैजसादुभयम्।।१।।

जिज्ञासा उदित होती है कि यदि सत्त्वगुण एवं तमोगुण से ही सभी कार्य

---

१. सां० का० २५.

जिज्ञासायां श्रीवाचस्पतिमिश्राः–"यद्यपि रजसो न कार्यान्तरमस्ति, तथापि सत्त्वतमसी स्वयमक्रिये, समर्थे अपि न स्वस्वकार्यं कुरुतः। रजस्तु चलतया ते यदा चालयति तदा स्वस्वकार्यं कुरुत इति तदुभयस्मिन्नपि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रजः"[१] इति रजसः क्रियोत्पादनद्वारा सार्थक्यं प्रतिपादितवन्तः। अत्रेदमैदम्पर्यम्– अहङ्कारे सत्त्वं रजस्तम इति त्रयो गुणास्तिष्ठन्ति। तत्र यदा सत्त्वगुणेन रजस्तमसोरभिभवो जायते, तदा अहङ्कारस्य वैकृतसंज्ञा भवति। यदा च तमोगुणेन सत्त्वरजसोस्तिरस्कारो भवति, तदा अहङ्कारस्य तामससंज्ञा भवति। एवं यदा रजोगुणेन सत्त्वतमसोरभिभवो जायते, तदा अहङ्कारस्य तैजससंज्ञा भवति। यदा वैकृताहङ्कारो विकृतो भूत्वा एकादशेन्द्रियाण्युत्पादयितुं वाञ्छति, तदा स निष्क्रियत्वात् स्वकार्यं कर्तुं न प्रभवति, अतः सः क्रियास्वभावस्य तैजसाहङ्कारस्य साहाय्यं गृह्णाति। तामसाहङ्कारोऽपि निष्क्रियत्वात् तन्मात्ररूपं

---

उत्पन्न होते हैं तो अकिञ्चित्कर रजोगुण की आवश्यकता ही क्या है? इसका समाधान आचार्य वाचस्पति मिश्र ने निम्नाङ्कित रूप से किया है— "यद्यपि रजोगुण पृथक् किसी कार्य को उत्पन्न नहीं करता है। तथापि सत्त्वगुण एवं तमोगुण यतः अक्रिय है अतः समर्थ होने पर भी ये अपने-अपने कार्य को करने में असफल हैं। चलस्वभाव रजोगुण से संचालित होकर ये दोनों स्वस्वकार्य को निष्पादित करते हैं। एवञ्च उन दोनों के कार्य में सत्त्वएवम् तमस् में क्रिया के उत्पादन द्वारा रजस् की यतः कारणता है अतः उसका वैयर्थ्य नहीं है।" इस कथन से आचार्य मिश्र ने रजस् की क्रियोत्पादकता होने से उसका सार्थक्य प्रतिपादित किया है।

तात्पर्य यह है— अहंकार में तीन गुण रहते हैं— सत्त्व, रजस् एवं तमस्। जब सत्त्व गुण द्वारा रजोगुण एवं तमोगुण का अभिभव होता है तब अहंकार की वैकृत संज्ञा होती है। जब तमोगुण से सत्त्व एवं रजोगुण का अभिभव होता है तब अहंकार की तामस संज्ञा होती है। तद्वत् रजोगुण से सत्त्व एवं तमोगुण का अभिभव होने पर अहंकार की तैजस संज्ञा होती है। जब वैकृत अहंकार विकृत होकर ११ इन्द्रियों को उत्पन्न करना चाहता है तब वह निष्क्रिय होने से स्वकार्य सम्पादन में असमर्थ रहता है। अतएव वह क्रियाशील तैजस अहंकार का सहयोग लेताहै। तद्वत् तामस अहंकार भी निष्क्रिय होने से तन्मात्रस्वरूप सहयोग ग्रहण करता है। इस प्रकार

---

१. सां० त० कौ०, पृ० ३४८-३४९.

स्वकार्यं नोत्पादयितुं प्रभवतीति सोऽपि तैजसाहङ्कारस्य साहाय्यं गृह्णाति। इत्थं वैकृतभूतादीत्यहङ्कारद्वयेन सह तयोः कार्ये सहायकत्वात् तैजसोऽहङ्कारो द्विविधकार्यस्य कारणं भवतीति।

श्रीविज्ञानभिक्षुस्तु सात्त्विकाहङ्कारान्मनः, राजसाहङ्काराद्दशेन्द्रियाणि, तामसाहङ्काराच्च पञ्चतन्मात्राण्युत्पद्यन्त इति प्रतिपादयति[1]।

**दशेन्द्रियाणि**–उपर्युक्ताद् वैकृताहङ्काराद् दश बहिरिन्द्रियाण्येकमन्तरिन्द्रियं चोत्पन्नानीत्युक्तम्। तेषु दशबहिरिन्द्रियेषु पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि भवन्ति। तदुक्तमीश्वरकृष्णेन–

**बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि।**
**वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः।।**[2] इति।

अत्र ज्ञानसाधनानीन्द्रियाणि = ज्ञानेन्द्रियाणि, कर्मसाधनानीन्द्रियाणि = कर्मेन्द्रियाणीत्युभयत्र शाकपार्थिववन्मध्यमपदलोपी समासः। सात्त्विकाहङ्कारेऽप्युत्कृष्टसात्त्विकाहङ्कारान्मनो जायते, मध्यमसत्त्वप्रधानाच्च ज्ञानेन्द्रियाणि,

---

वैकृत तथा भूतादि द्विविध अहंकार के साथ उनके कार्य में सहायक होने से तैजस अहंकार भी द्विविध कार्य के प्रति कारण माना जाता है।

आचार्य श्री विज्ञानभिक्षु ने सात्त्विक अहंकार से मनस् राजस अहंकार से दश इन्द्रियों एवं तामस अहंकार से पञ्च तन्मात्रों की उत्पत्ति को प्रतिपादित किया है।

**दस इन्द्रियाँ**– उपर्युक्त वैकृत अहंकार से १० बाह्य इन्द्रियाँ एवम् १ अन्तरिन्द्रिय = कुल ११ इन्द्रियाँ उत्पन्न होती हैं यह पहले बताया जा चुका है। उन १० बहिरिन्द्रियों में ५ ज्ञानेन्द्रिय तथा ५ कर्मेन्द्रिय होते हैं। आचार्य ईश्वर- कृष्ण ने कहा है—

बुद्धीन्द्रियाणि.........कर्मेन्द्रियाण्याहुः।।१।।

यहाँ ज्ञानसाधनानि इन्द्रियाणि ज्ञानेन्द्रियाणि तथा कर्मसाधनानि इन्द्रियाणि कर्मेन्द्रियाणि यह व्युत्पत्ति मानी जाती हैं। इन दोनों पदों में शाकप्रियः पार्थिवः शाकपार्थिवः पद की तरह मध्यम पद लोपी समास होता है। सात्त्विक अहंकार के भी तीन भेद होते हैं— (१) उत्कृष्ट सात्त्विक अहंकार से मनस् उत्पन्न होता है (२) मध्यम सत्त्वप्रधान से ज्ञानेन्द्रियाँ उत्पन्न होती हैं तथा (३) निकृष्ट सत्त्व युक्त अहंकार

---

१. सां० सू० प्रवचनभाष्यम् २।१८.
२. सां० का० २६.

निकृष्टसत्त्वयुक्ताच्चाहङ्कारात् कर्मेन्द्रियाणि जायन्त इति बोध्यम्। तत्र चक्षुःश्रोत्रघ्राणरसनत्वगाख्यैः पञ्चज्ञानेन्द्रियैः क्रमशो रूप-शब्द-गन्ध-रस-स्पर्शानां पञ्च विषयाणां ज्ञानानि भवन्ति। एवमेव वाक्पाणिपादपायूपस्थाख्यैः पञ्च कर्मेन्द्रियैर्वचनादानगमनमलोत्सर्जन-प्रजोत्पादनानि कर्माणि सम्भवन्ति। एतानि दशेन्द्रियाणि न प्रत्यक्षाणि, किन्तु रूपग्रहणादिलिङ्गैरनुमेयान्येव।

**मनः**—तत्रैकादशमिन्द्रियं मनः। 'सङ्कल्पकं मनः' इति मनसोऽसाधारणं लक्षणम्। इदं चान्तरिन्द्रियमित्युच्यते। मनःसत्त्व एव ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च स्वस्वकार्यसमर्थानि भवन्तीतीदमिन्द्रियमुभयात्मकमित्युच्यते। तदुक्तं वाचस्पतिमिश्रमहाभागैः—"एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं बुद्धीन्द्रियं कर्मेन्द्रियं च, चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः"[१] इति।

**अन्तःकरणम्**—उपर्युक्तानां मनोबुद्ध्यहङ्काराणां त्रिविधकरणानामन्तः-करणमिति व्यवहारः, तेषां त्रयाणामपि शरीराभ्यन्तरवृत्तित्वात्। तत्र क्रियन्ते

---

से कर्मेन्द्रियाँ उत्पन्न होती हैं। इनमें चक्षु से रूप का श्रोत्र से शब्द का घ्राण से गन्ध का रसनेन्द्रिय से रस का तथा त्वगिन्द्रिय से स्पर्श का ज्ञान होता है। इसी प्रकार कर्मेन्द्रियों में वाक् से वचन, पाणि से आदान, पाद से गमन, पायु से मलविसर्जन तथा उपस्थ से प्रजोत्पादन कर्मों का सम्पादन होता है। दशविध इन्द्रिय प्रत्यक्ष नहीं प्रत्युत रूपग्रहणादि लिङ्गों से अनुमेय हैं।

**मनस्**– ११वीं इन्द्रिय मनस् है। संकल्पकं मनः— यह मनस् का असाधारण लक्षण है। यह अन्तरिन्द्रिय है। मनस् के सहयोग से ही ज्ञानेन्द्रिय एवं कर्मेन्द्रिय स्व-स्वकार्य के सम्पादन में समर्थ होते हैं अतः मनस् को उभयात्मक कहा जाता है। आचार्य मिश्र ने कहा है—

"११ इन्द्रियों के अन्तर्गत मनस् को उभयात्मक (ज्ञानेन्द्रिय एवं कर्मेन्द्रिय) कहा जाता है। क्योंकि चक्षुष् आदि ज्ञानेन्द्रियाँ एवं वाक्प्रभृति कर्मेन्द्रियाँ मनस् से अधिष्ठित होकर ही स्वस्वविषयों (कर्मों) में प्रवृत्त होते हैं।"

**अन्तःकरण**– उपर्युक्त मनस्, बुद्धि एवम् अहंकार इन तीन करणों को अन्तःकरण कहा जाता है। क्योंकि ये तीनों शरीर के अन्तर्गत रहते हैं। क्रियन्ते

---

३. सां० त० कौ०, पृ० ३५१-३५२.

कर्माण्यनेनेति करणम्। अन्तः = शरीरमध्यस्थम्, करणम् = इन्द्रियम् अन्तःकरणमिति कर्मधारयः। शरीरस्थपदार्थानां सुखादीनां करणम् = साधकतममिति षष्ठीतत्पुरुषो वा।

**त्रयोदशविधं करणम्**–महत्तत्त्वम् (बुद्धिः), अहङ्कारः, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, उभयात्मकं मनश्चेति त्रयोदशविधं करणं भवति। आहरण-धारण-प्रकाशकरणानि च तेषां व्यापाराः। तत्राहरणं वागादिकर्मेन्द्रियाणां कर्म। धारणं बुद्ध्यहङ्कारमनसां व्यापारः, स्ववृत्तिप्राणादिपञ्चकद्वारा देहधारणात्। प्रकाशो ज्ञानेन्द्रियाणां व्यापारः। त्रयोदशविधस्य करणस्य विषयभूतमाहार्यं धार्यं प्रकाश्यं च दिव्यादिव्यभेदेन प्रत्येकं दशविधं भवति। तदुक्तमीश्वरकृष्णेन–

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।**
**कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च।।**[1] **इति।**

एवं त्रयोदशविधकरणेष्विन्द्रियाणि विषयान् गृह्णन्ति, गृहीतेषु विषयेषु मनः सङ्कल्पयति, अहङ्कारस्तं ममत्वेनाभिमन्यते, बुद्धिश्च निश्चिनोति, निश्चितं च पुरुषाय समर्पयति, तदा पुरुषस्तस्य विषयस्य ज्ञानं सम्पादयति। एतेषु करणेषु

---

कर्माणि अनेन इस विग्रह में कृधातु से करण अर्थ में ल्युट् प्रत्यय करने पर करण शब्द की निष्पत्ति होती है। अन्तः = शरीरमध्यस्थम्, करणम् = इन्द्रियम् इति अन्तःकरणम् = कर्मधारय समास होता है। अथवा अन्तः = शरीरमध्यस्थानाम् सुखादीनाम् = करणम् = साधकतमम् – यह षष्ठी तत्पुरुष समास है।

**त्रयोदशविधं करणम्** — महत्तत्त्व, अहंकार, ५ ज्ञानेन्द्रियाँ, ५ कर्मेन्द्रियाँ तथा उभयात्मक मन ये १३ प्रकार के करण हैं। इन इन्द्रियों के व्यापार हैं— आहरण, धारण तथा प्रकाशन। कर्मेन्द्रियों का व्यापार है— आहरण। बुद्धि, अहंकार एवम् मनस् के व्यापार हैं— धारण। ये स्ववृत्ति प्राणादि-पञ्चक द्वारा देह-धारण करते हैं। ज्ञानेन्द्रियों का व्यापार है— प्रकाशन। १३ प्रकार के करण के विषय हैं— आहार्य, कार्य तथा प्रकाश्य। दिव्य एवम् अदिव्य के भेद से प्रत्येक के दस भेद होते हैं। आचार्य ईश्वरकृष्ण ने सुस्पष्ट कहा है— करणं त्रयोदशविधं........प्रकाश्यं च।।१।।

इस प्रकार १३ प्रकार के करणों में चक्षुरादि इन्द्रियाँ, विषयों का ग्रहण करती हैं, विषयों के गृहीत हो जाने पर मन संकल्प करता है, अहंकार— उस संकल्प

---

१. सां० का० ३२.

बहिरिन्द्रियाणां सम्बन्धो वर्तमानकालिकेष्वेव विषयेषु भवति। अन्तःकरणानां तु भूतभविष्यद्वर्तमानकालिकेष्वपि विषयेषु भवति। तदुक्तमीश्वरकृष्णेन–

**"साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्"**[1] इति।

**पञ्चतन्मात्राणि**–शब्द–स्पर्श–रूप–रस–गन्धाख्यानि सूक्ष्मभूतानि पञ्चतन्मात्राणीत्युच्यन्ते। तान्येव वेदान्तिभिरपञ्चीकृतभूतानि सूक्ष्मभूतानीति चाभिधीयन्ते, न्याय–वैशेषिकाभ्यां च परमाणुनाम्ना व्यवह्रियन्ते। तानि च पञ्चतन्मात्राणि शान्त–घोर–मूढरूपाणि न भवन्तीति योगदर्शने 'अविशेषाः' (अविशेषपरिणामाः) इत्युच्यन्ते। एतानि च शब्दतन्मात्रम्, स्पर्शतन्मात्रम्, रूपतन्मात्रम्, रसतन्मात्रम्, गन्धतन्मात्रं चेति व्यवह्रियन्ते।

**पच्चमहाभूतानि**–उपर्युक्तेभ्यः पञ्चतन्मात्रेभ्यः पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्चमहाभूतान्युत्पद्यन्ते। पृथिव्यादयो हि संघीभूय प्राणिनो जनयन्तीति तेषां भूतपदेन व्यवहारः, स्थूलत्वाच्च महाभूतत्वव्यपदेशः। इमानि

---

को ममता से अभिमान करता है, बुद्धि अध्यवसायात्मक निश्चय करती है तथा निश्चित वस्तु को पुरुष के लिए समर्पित करती है तब पुरुष को उस विषय का ज्ञान प्राप्त होता है। इन करणों में बाह्य इन्द्रियों का सम्बन्ध वर्तमान काल में विद्यमान विषयों के साथ ही होता है। किन्तु अन्तःकरणों का सम्बन्ध न केवल वर्तमान काल के प्रत्युत भूतकाल एवं भविष्यत्काल के विषयों के साथ भी होता है। इस बात का सुस्पष्ट आकलन ईश्वरकृष्ण सांख्याचार्य ने निम्नाङ्कित रूप में किया है—

साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ।।१।।

**पञ्चतन्मात्र**– सूक्ष्मभूतों (शब्दतन्मात्र, स्पर्शतन्मात्र, रूपतन्मात्र, रसतन्मात्र एवं गन्धतन्मात्र) को पञ्चतन्मात्र शब्द से जाना जाता है। इन पञ्चतन्मात्रों को ही वेदान्त-सिद्धान्त में अपञ्चीकृत-भूत तथा सूक्ष्मभूत-शब्द से कहा जाता है। न्यायवैशेषिक दर्शनों में इन्हें परमाणु शब्द से व्यवहृत किया जाता है। ये पञ्च तन्मात्र उपर्युक्त तीन भागों में विभाजित नहीं किये जा सकते हैं।अतएव योगदर्शन में इन्हें अविशेष परिणाम-शब्द से व्यवहृत किया जाता है। इन्हें पृथक् पृथक् अभिधान क्रम में शब्द-तन्मात्र, स्पर्शतन्मात्र, रूपतन्मात्र, रसतन्मात्र एवं गन्धतन्मात्र शब्द से कहा जाता है।

**पञ्चमहाभूत**– उपर्युक्त पञ्चतन्मात्र से पञ्चमहाभूतों (पृथिवी, जल, तेजस् वायु एवम् आकाश) की उत्पत्ति होती है। पृथिवी-प्रभृति ५ महाभूत संघीभूत होकर

---

१. सां० का० ३३.

स्थूलभूतानि। स्थूलशब्दात् तन्मात्राणां सूक्ष्मभूतत्वमवगम्यते। "पञ्चभ्यः पञ्चभूतानि"[1] इति कारिकायां पञ्चतन्मात्रेभ्यः पञ्चभूतानि जायन्त इति सामान्यत उक्तम्, तत्र कस्मात् तन्मात्रात् किंगुणकस्य कस्य भूतस्योत्पत्तिरिति विशेषजिज्ञासायामुक्तं श्रीमद्भिर्वाचस्पतिमिश्रैः–"तत्र शब्दतन्मात्रादाकाशं शब्दगुणम्, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् तेजः शब्द-स्पर्श-रूपगुणम्, शब्द-स्पर्श-रूपतन्मात्रसहिताद् रसतन्मात्रादापः शब्द-स्पर्श-रूप-रसगुणाः, शब्द-स्पर्श-रूप-रसतन्मात्रसहिताद् गन्धतन्मात्राच्छब्द-स्पर्श-रूप-रस-गन्धगुणा पृथिवी जायते"[2] इति। एतेभ्यः पञ्च महाभूतेभ्यो भौतिकपदार्थानां सृष्टिर्जायते।

**सृष्टेर्विभागः**

तत्र तावद् बुद्धितत्त्वाद् द्विविधा सृष्टिर्भवति–भावसृष्टिः, लिङ्गसृष्टिश्चेति।

---

प्राणियों को जन्म देते हैं अतः इन्हें भूत कहा जाता है। स्थूल होने से इन्हें महाभूत कहा जाता है। ये महाभूत ही स्थूलभूत कहलाते हैं। पृथिव्यादि भूतों के स्थूल विशेषण से तन्मात्रों का सूक्ष्मभूत होना अभिव्यक्त होता है। "पञ्चभ्यः पञ्चभूतानि" इस कारिकाभाग से सामान्यतया पञ्चतन्मात्रों से पञ्चभूतों की उत्पत्ति बतायी गयी है। यहाँ विशेष जिज्ञासा उदित होती है— किस तन्मात्र से किस गुणसम्पन्न किस भूत की उत्पत्ति होती है? ऐसी विशेष जिज्ञासा होने पर श्रीमान् वाचस्पतिमिश्रजी ने कहा है— "पञ्चतन्मात्रों के मध्य शब्दतन्मात्र से आकाश (स्थूलभूत) की उत्पत्ति होती है इस आकाश का गुण शब्द है। शब्दतन्मात्रसहित स्पर्शतन्मात्र से वायु की उत्पत्ति होती है। वायु में शब्द एवं स्पर्श दो गुण रहते हैं। शब्द एवं स्पर्श नामक तन्मात्रों से युक्त रूपतन्मात्र से तेजस् की उत्पत्ति होती है। तेजस् महाभूत में तीन गुण (शब्द, स्पर्श एवम् रूप) रहते हैं। तद्वत् शब्द, स्पर्श एवम् रूप-संज्ञक तन्मात्रों से युक्त रस-तन्मात्र से जल की उत्पत्ति होती है। जल में चार गुण (शब्द, स्पर्श, रूप एवं रस) विद्यमान रहते हैं। एवमेव शब्द, स्पर्श, रूप, रस संज्ञक तन्मात्रों से युक्त रस-तन्मात्र से जल की उत्पत्ति होती है। पृथिवी में ५ गुण (शब्द, स्पर्श, रूप, रस एवं गन्ध) विद्यमान रहते हैं।"

इन्हीं ५ महाभूतों से भौतिक पदार्थों की सृष्टि होती है।

**सृष्टि के भेदोपभेद**– बुद्धितत्त्व से दो प्रकार की सृष्टि होती है— भावसृष्टि

---

१. सां० का० २२.

२. सां० त० कौ०, पृ० ३३१-३३२.

तत्र भावसृष्टेर्विपर्ययाशक्तितुष्टिसिद्ध्याख्यश्चतुर्विधः संक्षिप्तः सर्गः। तत्र एव पुनः पञ्च विपर्ययाः, अष्टाविंशतिधा अशक्तयः, नवधा तुष्टयः, अष्टौ सिद्धय इति पञ्चाशद्धा विस्तृतः सर्गः। तदुक्तमीश्वरकृष्णेन–

एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।
गुणवैषम्यविमर्दात् तस्य च भेदास्तु पञ्चाशत्।।
पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः।।[1] इति।

द्वितीया लिङ्गसृष्टिश्चाहङ्कारद्वारैकादशेन्द्रियाणां पञ्चतन्मात्राणां च रूपेण परिस्फुरति, यस्या विस्तारः स्थूलदेहप्रभृतयः सर्व एव स्थावरजङ्गमाः सन्ति।

---

एवं लिङ्गसृष्टि। भावसृष्टि चतुर्विध (विपर्यय, अशक्ति, तुष्टि एवं सिद्धि नामक) है। यह संक्षिप्त सर्ग कहलाता है। इनमें विपर्यय के ५ प्रभेद होते हैं, अशक्ति के २८ प्रभेद होते हैं, तुष्टि के ९ प्रभेद होते हैं एवं सिद्धि के ५० प्रभेद होते हैं। आचार्य ईश्वरकृष्ण ने सृष्टिप्रविभाग को दो कारिकाओं में प्रतिपादित किया है—

एष प्रत्ययसर्गो..........नवधाऽष्टधासिद्धिः।।२।।

द्वितीय लिङ्गसृष्टि है। यह सृष्टि, अहंकार को द्वार बनाकर ११ इन्द्रियों एवम् ५ तन्मात्रों के रूप में प्रस्फुरित होती है। इस सृष्टि का विस्तार, स्थूलदेह से लेकर समस्त स्थावर एवं जङ्गम रूपों तक व्याप्त होता है।

यहाँ जिज्ञासा उदित होती है— बुद्धि से दो प्रकार की सृष्टि किस उद्देश्य (निमित्त) से प्रतिपादित की जाती है। एक ही सृष्टि से उपर्युक्त सृष्टि विस्तार का प्रतिपादन भी शक्यसम्भव है। इसका समाधान आचार्य ईश्वरकृष्ण ने निम्नाङ्कित कारिका में प्रदर्शित किया है—

न विना भावैर्लिङ्गं...........द्विविधः प्रवर्तते सर्गः।।१।।

इसका आशय है— भावसर्ग एवम् लिङ्गसर्ग परस्पर एक दूसरे से सापेक्ष होते हैं। प्रत्ययसर्ग के बिना तन्मात्रसर्ग नहीं होता। कारण यह है— उत्तरोत्तर देहलाभ, पूर्व-पूर्व संस्कारादृष्ट से प्रयोजित होता है। तद्वत् तन्मात्रसर्ग के बिना प्रत्ययसर्ग की निष्पत्ति नहीं होती क्योंकि स्थूल एवं सूक्ष्मदेह के साचिव्य रहे बिना धर्मादि की उत्पत्ति नहीं होती। अतः लिङ्गसृष्टि (तन्मात्र-सर्ग) तथा भावसृष्टि

---

१. सां० का० ४६–४७.

ननु बुद्ध्या सृष्टिद्वयं किमर्थमकारि, एकयैव सृष्ट्या तस्याश्चारितार्थ्य-सम्भवादिति जिज्ञासायामुक्तमीश्वरकृष्णेन–

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।**
**लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः।।**[1]इति।

अस्यायं भावः–भावसर्गलिङ्गसर्गयोरन्योन्यसापेक्षता वर्तते। तत्र प्रत्ययसर्गैर्विना तन्मात्रसर्गो न भवति, उत्तरोत्तरदेहलाभस्य पूर्वपूर्वसंस्कारा-दृष्टकारितत्वात्। एवमेव तन्मात्रसर्गं विना प्रत्ययसर्गनिष्पत्तिर्न भवति, धर्मादेः स्थूलसूक्ष्मदेहसाध्यत्वात्। तस्माल्लिङ्गाख्यस्तन्मात्रसर्गः, भावाख्यः प्रत्ययसर्ग-श्चेत्युभयविधः सर्गो बुद्धितत्त्वात् प्रवर्तत इति।

तदेवं सांख्यनये प्रकृतिपुरुषयोः संयोगेन विकासो निरूप्यते। अत्र प्रकृतिपुरुषयोः संयोगवियोगनियामकं तु सृज्यमानप्राणिनामदृष्टमेव। योगदर्शनेऽपि सांख्याभिमत एव सृष्टिक्रमोऽङ्गीकृतः। अथाप्ययं विशेषो यद् योगदर्शने जडस्य प्राणिनामदृष्टस्य प्रकृतिपुरुषयोः संयोगवियोगयोर्नियामकत्वाऽसम्भवात् तदर्थं पुरुषविशेष ईश्वरोऽङ्गीकृतः। स चेश्वरः स्वकीयप्रयोजनाभावेऽपि भूतानुग्रहाय सृष्टौ प्रवर्तत इति।

---

(प्रत्ययसर्ग) यह द्विविध सृष्टि बुद्धितत्त्व से प्रसृत होती है—यह प्रतिपादन सर्वथा समीचीन है।

इस प्रकार सांख्य-सिद्धान्त में प्रकृति एवं पुरुष का परस्पर संयोग ही सृष्टि के अनन्त विकास में हेतु है। सृष्टि के विकास में इनके संयोग की तरह सृष्टि के संकोच में इनके वियोग को कारण माना जाता है। उक्त संयोग एवं वियोग का नियामक प्राणियों के अदृष्ट को माना जाता है। योग दर्शन में सृष्टि के सन्दर्भ में सांख्यदर्शनोक्त सरणि ही आत्मसात् की गयी है। इन दोनों दर्शनों के मध्य एक अन्तर अत्यन्तसूक्ष्म है। योगदर्शन का ध्यान इस ओर गया है कि प्राणियों का अदृष्ट स्वयं जड है। जड किसी भी व्यवस्था का नियमन नहीं कर सकता। एतावता संयोग एवं वियोग (प्रकृति एवं पुरुष के पारस्परिक) के प्रति जड अदृष्ट (प्राणियों से सम्बद्ध) को नियामक मानना असंगत प्रतीत होता है। अतः योगदर्शन में पुरुषविशेष ईश्वर की अवधारणा की जाती है तथा ईश्वर का अपना कोई प्रयोजन नहीं होने पर भी प्राणियों के अनुग्रह हेतु उनकी सृष्ट्यर्य-प्रवृत्ति को सुघटित एवं सुसंगत रूप में प्रतिपादन किया जाता है।

---

१. सां० का० ५२.

## सृष्टेः प्रयोजनम्

तत्र तावत् सांख्य-योगदर्शनयोः पुरुषस्य भोगापवर्गयोः साधनार्थं सृष्टिर्निरूप्यते। तदुक्तमीश्वरकृष्णेन–

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।।[१] इति।

अस्यायं भावः–प्रकृतिर्हि भोग्यतया भोक्तारं पुरुषमपेक्षते। पुरुषोऽपि भेदाग्रहाद् बुद्धिच्छायापत्त्या तद्गतं दुःखत्रयं वारयमाणः कैवल्यमपेक्षते। कैवल्यं च प्रकृतिपुरुषयोर्विवेकनिबन्धनम्। तच्च प्रकृतेर्विना न सम्भवतीति पुरुषः कैवल्यार्थं प्रधानमपेक्षते। यथा खलु कौचित् पङ्ग्वन्धौ पथि सार्थेन गच्छन्तौ दैवकृतादुपप्लवात् परित्यक्तसार्थौ मन्दमन्दमितस्ततः परिभ्रमन्तौ भयाकुलौ दैववशात् संयोगमुपगच्छेताम्। तत्र चान्धेन पङ्गुः स्कन्धमारोपितः। ततः पङ्गुदर्शितेन मार्गेणान्धः स्कन्धाधिरूढश्च पङ्गुरुभावपि समीहितं स्थानं

---

## सृष्टि का प्रयोजन–

सांख्य एवं योगदर्शनों में पुरुष के भोग एवम् अपवर्ग हेतु सृष्टि की सार्थकता प्रतिपादित की गयी है। स्वयम् ईश्वरकृष्ण जी ने कहा है—

पुरुषस्य दर्शनार्थं...........तत्कृतः सर्गः।।१।।

इसका आशय है— प्रकृति स्वयं भोग्य है। भोग्यता सर्वथा भोक्तृता से सापेक्ष होती है। अतः भोग्या प्रकृति भोक्ता पुरुष की अपेक्षा करती है। पुरुष भी प्रकृति अथवा बुद्धि के साथ विद्यमान भेद के अग्रह से बुद्धि की छायापत्ति से तद्गत दुःखत्रय से पीडित होता है। यतश्च दुःख प्रतिकूलवेदनीय होता है अतः वह पुरुष दुःखों (त्रिविध) से छुटकारा पाने हेतु कैवल्य की अपेक्षा करता है। यह कैवल्य तब तक प्राप्त नहीं हो सकता जब तक प्रकृति एवं पुरुष का विवेक उत्पन्न होकर दृढ़ नहीं हो जाता। विवेक की दृढ़ता से प्रकृति, विवेकज्ञान से उल्लसित पुरुष से विरत होती है क्योंकि उस पुरुष के उद्देश्य की पूर्ति से वह स्वयं की चरितार्थता प्राप्त कर चुकी होती है। एतावता कैवल्य की सिद्धि हेतु पुरुष, प्रधान की अपेक्षा करता है। यथा मार्ग में कोई पङ्गु व्यक्ति किसी सहयोगी के आश्रित होकर यात्रा कर रहा हो और दैववशात् उसका साथी से वियोग हो जाय। तद्वत् अन्धा व्यक्ति भी मार्ग में सार्थ-वियुक्त होकर पृथक् पृथक् भटक रहे हों। दर्शक सहयोगी के बिना भीत-भीत उनकी स्थिति तमसावृत

---

१. सां० का० २१.

प्राप्नुतः, तथा परस्परापेक्षः प्रधानपुरुषनिबन्धनः सर्गः।

ननु पुरुषार्थनिबन्धना भवतु प्रकृतेः प्रवृत्तिः, निवृत्तिस्तु कथमुपपद्यत इति चेत्? उच्यते–यथा भर्त्रा दृष्टदोषा स्त्री भर्तारं पुनर्नोपैति, यथा वा कृतप्रयोजना नर्तकी निवर्तते, तथा प्रकृतिरपि तस्मात् पुरुषान्निवर्तते। तथा चोक्तम्–

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः।।[1] इति।

एवं प्रकृतिः पुरुषाय भोगं कैवल्यं च प्रदाय कृतप्रयोजना सती मुक्तपुरुषान्निवर्तते, अर्थात् तदर्थं पुनः सृष्टिं न करोति। अकृतार्थपुरुषं प्रति पुनः

---

रहती है। ऐसे में दैववशात् ये दोनों विपन्न, एक स्थान पर परस्पर एकदूसरे की कमी को समझें तथा अन्योन्यपूरक बन जायँ। ऐसी स्थिति में समाधान प्राप्त हो जाता है। पुष्टाङ्ग अन्ध व्यक्ति अपने कन्धे पर पङ्गु (चक्षुष्मान्) को चढ़ाकर समान गन्तव्य के लिए व्यापारित हो जाय तो पङ्गु के द्वारा दिखाये मार्ग से अन्ध (पादयुक्त) तथा चक्षुष्मान् पङ्गु दोनों यात्री अभिप्सित स्थान में पहुँच जाते हैं। तद्वत् परस्पर सापेक्ष एवम् अन्योन्यपूरक प्रकृति एवं पुरुष के संयोग से जगत्सृष्टि का प्रवर्तन सुघटित होता है।

अब जिज्ञासा उदित होती है कि पुरुषार्थ के उद्देश्य से प्रकृति की प्रवृत्ति होती है—यह बात तो समझ में आती है किन्तु सर्गप्रवृत्ति से प्राप्तापवर्ग पुरुष से प्रकृति की प्रवृत्ति-विरुद्ध निवृत्ति कैसे होती है?

इसका समाधान है—जैसे भार्या अपने पति से मिलने हेतु उनके समीप पहुँचती है किन्तु जिसके भर्त्सनायोग्य कोई अस्वीकार्य दोष सुविदित होता है तो वह स्त्री पुनः उस भर्ता का सङ्ग प्राप्त करने की हिम्मत नहीं जुटा पाती। परिणामस्वरूप वह उस पुरुष से निवृत्त हो जाती है। यद्वा रङ्गमञ्च पर कोई नर्तकी नाचने में प्रवृत्त होती है तथा दर्शकों को अनुरञ्जित कर अपनी वाहवाही बटोरकर पुनश्च रङ्गमञ्च से प्रतिनिवृत्त हो जाती है तद्वत् प्रकृति भी जिस पुरुष को अपवर्ग दिला देती है उसके प्रति कृतार्थ होकर उससे प्रतिनिवृत्त हो जाती है। तद्यथा—

रङ्गस्य दर्शयित्वा.......विनिवर्तते प्रकृतिः॥१॥

उपर्युक्त प्रकार से यह सुविदित होता है कि प्रकृति, पुरुष के लिए भोग एवं कैवल्य प्रदान कर कृतकृत्य हो जाती है तथा मुक्तपुरुष से प्रतिनिवृत्त हो

---

१. सां० का० ५९.

सृष्टिं विधास्यति, प्रकृतेरुभयसाधारणत्वात्। तदुक्तं महर्षिणा पतञ्जलिना–"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारण्यात्"[1] इति। तदेवं सांख्य–योगदर्शनयोः सृष्टेः प्रयोजनं पुरुषस्य भोगमोक्षावित्यलम्।

## मीमांसादर्शनस्य नित्यत्ववादः

न्याय–वैशेषिक–सांख्य–योगादिदर्शनवद् मीमांसादर्शने जगदुत्पत्तिस्त-दत्यन्तप्रलयश्च नाभ्युपगम्येते। तन्मतानुसारेण जगदिदं नित्यम्। तदुक्तम्–

**लोकस्यात्यन्तिको नाशो वैदिकानां न सम्मतः।**
**महतां वेदमार्गाणां स्त्रोतोभङ्गप्रसङ्गतः।।**[2] इति।

तस्मात् कालमनुरुध्य प्रवाहरूपेण पदार्था उत्पद्यन्ते च्यवन्ते च। तदुक्तं श्रीमद्भिः कुमारिलभट्टैरपि–

---

जाती है। एवञ्च मुक्तपुरुष के लिए वह पुनःसृष्टि से सदा के लिए विरत हो जाती है। किन्तु वही प्रकृति, अकृतार्थ पुरुष के प्रति पुनरपि सृष्टि हेतु प्रवृत्त होने में कटिबद्ध रहती है। बद्ध एवं मुक्त उभयविध पुरुष के विषय में यथायोग्य प्रवृत्ति-निवृत्ति-क्रम प्रकृति में प्रवर्तित रहता है। महर्षि पतञ्जलि ने इस सिद्धान्त को प्रकाशित करने हेतु सूत्र की रचना की है— "कृतार्थं प्रति नष्टमप्यन्यनष्टं तदन्यसाधारणत्वात्। अतः निष्कर्षवचन प्राप्त होता है— सांख्य एवं योग दर्शनों में सृष्टि के प्रयोजन हैं— पुरुष के भोग एवं अपवर्ग।

## मीमांसादर्शन का नित्यत्ववाद

न्याय, वैशेषिक, सांख्य, योग-प्रभृति दर्शनों में जगत् की सृष्टि एवं प्रलय स्वीकार्य हैं। मीमांसादर्शन में जगत् की उत्पत्ति तथा महाप्रलय का अभ्युपगम नहीं किया जाता है। इनके मत में यह जगत् नित्य है। मानमेयोदयकार इसका सहेतुक उल्लेख करते हैं—

लोकस्यात्यन्तिको नाशो.......स्त्रोतोभङ्गप्रसङ्गतः॥१॥

अतः कालानुरोध से प्रवाहरूप में पदार्थों की उत्पत्ति होती है और वह स्व आयुष्य से नष्ट भी हो जाते हैं। आचार्य कुमारिल भट्ट ने सुस्पष्ट कहा है–

---

१. यो० सू० २।२२.
२. मानमेयो०, पृ० १६४.

**तस्मादद्यवदेवात्र सर्गप्रलयकल्पना।**
**समस्तक्षयजन्मभ्यां न सिद्ध्यत्यप्रमाणिका।।**[१]इति।

मीमांसकानुसारेण जगदिदं भोगायतनम्, भोगसाधनानि, भोगविषयाश्चेति त्रिधा विभज्यते। तत्र भोगायतनं शरीरम्, यत्र निवसन्नात्मा सुखदुःखात्मकं भोगमनुभवति। भोगसाधनानीन्द्रियाणि, यैः साधनीभूतैरात्मना भोगा भुज्यन्ते। भोगविषयाश्च यावद्भोग्यपदार्थाः। तदेतत् त्रिविधतत्त्वसंवलितं जगदिदं नित्यमनन्तं च।

जगन्नित्यत्वविषये मीमांसकानां मिथो विवादाभावेऽपि पदार्थव्यवस्थायां प्रभाकर-कुमारिल-मुरारिमिश्रेषु न मतैक्यं दरीदृश्यते। तथाहि प्राभाकराः- द्रव्यम्, गुणः, कर्म, सामान्यम्, परतन्त्रता, शक्तिः, संख्या, सादृश्यं चेत्यष्टौ पदार्था इति स्वीकुर्वन्ति। तत्र द्रव्य-गुण-कर्मणां स्वरूपं न्याय-वैशेषिकयोः सदृशमेव। सामान्यस्यास्तित्वं व्यक्तितः पृथग् नाङ्गीक्रियते। व्यक्तिष्वेव

---

तस्मादद्यवदेवात्र............न सिद्धत्यप्रमाणिका।।१।।

मीमांसा दर्शन के आचार्यों ने जगत् को तीन भागों में विभाजित किया है- भोगायतन, भोगसाधन एवं भोगविषय। प्राणियों के शरीर को भोगायतन कहा जाता है। अपनी शरीर में निवास करता हुआ जीवात्मा सुख अथवा दुःख का अनुभव करता है। भोगसाधन इन्द्रियाँ हैं जिनके सहारे जीवात्मा विभिन्न भोगों का उपभोग करता है। जगत् का तृतीय प्रभेद भोग्यविषय है। शरीर तथा इन्द्रिय से व्यतिरिक्त समस्त जगत् भोग्य विषय है। एवञ्च तीन प्रभेदों में विभाजित यह सम्पूर्ण जगत् नित्य एवम् अनन्त है।

जगत् की नित्यता के विषय में मीमांसा के सभी आचार्य एकमत हैं। किन्तु पदार्थ-व्यवस्था में प्रभाकर, कुमारिल तथा मुरारिमिश्र- इन आचार्यों में मतैक्य नहीं है। तद्यथा- प्रभाकर के अनुयायी मीमांसक आठ पदार्थों को स्वीकार करते हैं- द्रव्य, गुण, कर्म, सामान्य, परतन्त्रता, शक्ति, संख्या एवम् सादृश्य। द्रव्य, गुण एवं कर्म इन तीन पदार्थों के विषय में इनका न्याय-वैशेषिकों के साथ पूर्ण-साम्य है। किन्तु सामान्य का व्यक्ति से पृथक् अस्तित्व ये नहीं मानते। वैशेषिकों के समवायसम्बन्ध को मीमांसकों ने परतन्त्रता शब्द से प्रतिपादित किया है। यह परतन्त्रता, जाति एवं व्यक्ति के मध्य विद्यमान रहने वाली सम्बन्धस्वरूपा है। वैशेषिकों ने जाति और व्यक्ति के मध्य विद्यमान सम्बन्ध को नित्य माना है किन्तु मीमांसक आचार्य इसकी नित्यता

---

४. श्लो० वा०, पृ० ४७७.

तदस्तित्वमिति ते मन्यन्ते। वैशेषिकाणां यो हि समवायः स एव मीमांसकानां परतन्त्रता। इयं च जातिव्यक्त्योर्विद्यमाना सम्बन्धरूपा। जातिव्यक्त्योः सम्बन्धो वैशेषिकैर्नित्य इत्युच्यते। मीमांसकास्तु तस्य नित्यत्वं नाङ्गीकुर्वन्ति। द्रव्य-गुण-कर्मसु शक्तिसमुत्पादे सत्येव तेषां कार्यजनकत्वं सम्भवतीति मीमांसकाः शक्त्याख्यं नूतनं पदार्थं स्वीकृतवन्तः। न्यायनये शक्तिः खलु प्रतिबन्धकाभावरूपा। सादृश्यसंख्ये तु नैयायिकाभिमतगुणेष्वन्तर्भूते, किन्तु प्राभाकरास्तयोर्द्वयोरतिरिक्तपदार्थत्वमङ्गीकुर्वन्ति[१]।

श्रीभाट्टमते-द्रव्यम्, जातिः, गुणाः, कर्म, अभावश्चेति पञ्च पदार्था अभ्युपगताः[२]। तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नैयायिकैर्नव अङ्गीकृतानि। परं भाट्टमते तमः, शब्दश्च द्वावधिकौ मतौ। तस्माद् भाट्टमते द्रव्याण्येकादशविधानि। तथा चोक्तम्-

पृथिवी सलिलं तेजः पवमानस्तमस्तथा।
व्योमकालदिगात्मानो मनः शब्द इति क्रमात्।।
एकादशविधं चैतत् कुमारिलमते मतम्।[३] इति।

---

को अङ्गीकार नहीं करते। द्रव्य, गुण एवं कर्म पदार्थों में शक्ति का समुत्पाद होने पर ही इनमें कार्य की जनकता सम्भव होती है अत: मीमांसकगण शक्ति-संज्ञक नूतन पदार्थ को स्वीकार करते हैं। न्यायसिद्धान्त में शक्ति को प्रतिबन्धकाभावरूप से स्वीकारा जाता है। सादृश्य एवं संख्या को नैयायिकों के गुणों में अन्तर्भाव किया जाता है। पर, प्राभाकर सिद्धान्त में इन दोनों की अतिरिक्तपदार्थता मान्य है।

श्रीभाट्टमत में पदार्थो की संख्या ७ है- द्रव्य, जाति, गुण, कर्म एवम् अभाव। इनमें जो द्रव्यपदार्थ है उनके नौ प्रभेद नैयायिकों द्वारा अभ्युपगत हैं। तदृयथा-पृथिवी, जल, तेजस्, वायु आकाश, काल, दिक् आत्मा एवम् मनस्। परन्तु भाट्ट मत में द्रव्य के उपर्युक्त नव प्रभेद के अतिरिक्त दो अन्य प्रभेद भी मान्य हैं- तमस् एवं शब्द। भाट्टमत-सिद्ध द्रव्य के एकादश प्रभेदों को मानमेयोदयकार ने अपनी कारिकाओ में व्यक्त किया है। तद्यथा—

"पृथिवी सलिलं तेजः..................कुमारिलमते मतम् ।।१½।।

---

१. प्रकरणपञ्चिकाया न्यायसिद्ध्याख्या व्याख्या, पृ० ७८-७२.
२. वयं तावत् प्रमेयं तु द्रव्यजातिगुणक्रियाः।
अभावश्चेति पञ्चैतान् पदार्थानाद्रियामहे।। (मानमेयो०, पृ० १४२)
३. मानमेयो०, पृ० १४४.

नैयायिका मनोद्रव्यस्याणुपरिमाणत्वमभ्युपगच्छन्ति, किन्तु भाट्टास्तस्य विभुत्वं साधयन्ति। तथाहि–"अणुपरिमाणं चञ्चलं च मन इति केचिदूचिरे, तदसङ्गतम्–मनो विभु, स्पर्शानर्हद्रव्यत्वात्, अनारभ्यारम्भकद्रव्यत्वाद्वा, ज्ञानासमवायिकारणसंयोगाधारत्वाद्वा, आत्मवद्–इत्यादिभिरनुमानैर्महत्त्वसिद्धेः"[1] इति। नैयायिकाः शब्दस्यानित्यत्वं स्वीकुर्वन्ति, किन्तु कौमारिलास्तस्य नित्यत्वं निरूपयन्ति। तद्यथा–

श्रोत्रमात्रेन्द्रियग्राह्यः शब्दः शब्दत्वजातिमान्।
द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः।।[2] इति।

तार्किकमते तमः प्रकाशाभावरूपः, भाट्टमते तु तत्र गुणक्रिययोर्विद्यमानत्वात् स भावरूपः। तदुक्तम्–

गुणकर्मादिसद्भावादस्तीति प्रतिभासतः।
प्रतियोग्यस्मृतेश्चैव भावरूपं ध्रुवं तमः।।[3] इति।

---

नैयायिक लोग द्रव्यप्रभेद मनस् का अणुपरिमाण मानते हैं किन्तु भट्टानुयायी मीमांसक मनस् की विभुता को स्वीकारते हैं। तद्‌यथा- कतिपय दार्शनिक मनस् को अणुपरिमाण एवम् चञ्चल प्रतिपादित करते हैं। यह अनुपपन्न है। अतः उनका सिद्धान्त असमीचीन है। क्योंकि त्रिविध हेतु द्वारा सदनुमान प्रमाण से मनस् की निष्प्रत्यूह विभुता सिद्ध होती है- मनो विभु स्पर्शानर्हद्रव्यत्वात्, अनारभ्यारम्भकद्रव्यत्वाद्वा ज्ञानासमवायिकारणसंयोगाधारत्वाद् वा आत्मवत्। नैयायिक लोग शब्द की अनित्यता को स्वीकारते हैं किन्तु कुमारिल भट्ट के अनुयायी उसकी नित्यता को प्रतिपादित करते हैं। तद्‌यथा-

श्रोत्रमात्रेन्द्रियग्राह्यः................कुमारिलमते मतः॥१॥

तार्किकमत में तमस् स्वतन्त्र द्रव्य नहीं माना जाता प्रत्युत उसे प्रकाशाभावरूप में प्रतिपादित किया जाता है। किन्तु भाट्टमत में गुणवत् एवं क्रियावत् होने से उसे भावरूप माना जाता है। मानमेयोदयकार ने तमस् की भावरूपता को दृढ़ता से प्रतिपादित किया है-

गुणकर्मादिसभावाद्.............भावरूपं ध्रुवं तमः॥१॥

---

१. मानमेयो०, पृ० २०३,
२. मानमेयो०, पृ० २०८.
३. मानमेयो०, पृ० १५२.

भाट्टमते मनोव्यतिरिक्तानि सर्वाण्यपि द्रव्याणि प्रत्यक्षाण्यङ्गीकृतानि। जाति–गुण–कर्म–अभावानां पदार्थानां स्वरूपं तु प्रायो नैयायिकवदेव भाट्टानामपीत्यवगन्तव्यम्।

श्रीमुरारिमिश्रस्य पुनः पदार्थकल्पना उभाभ्यामपि भिन्ना। तन्मते ब्रह्मैव केवलं परमार्थभूत एकः पदार्थः। लोकव्यवहारोत्पत्त्यर्थमन्यत्पदार्थचतुष्टयम्। ते च धर्मिविशेषः, धर्मविशेषः, आधारविशेषः, प्रदेशविशेषश्चेति। तदुक्तं न्यायमालायाम्–"ब्रह्मैकं व्यवहारे तु धर्मिधर्माधारप्रदेशविशेषाः पञ्च पदार्था इति वेदान्ता मुरारिमिश्राश्च" इति। अत्र घटादयो धर्मिविशेषाः, घटादिनिष्ठघटत्वादयो धर्मविशेषाः, इदानीं घटस्तदानीं घट इत्यादिरूपेण कालबोधका आधारविशेषाः, गृहे घटो भूतले घट इत्यादिरूपेण स्थानबोधकाः प्रदेशविशेषा इति बोध्यम्।

---

भाट्टमत में मनस् से व्यतिरिक्त समस्त द्रव्यों को प्रत्यक्ष माना गया है। जाति, गुण, कर्म तथा अभाव पदार्थों के स्वरूप प्रायेण नैयायिकों के समान ही भाट्टमत में भी स्वीकार्य हैं।

**मुरारेस्तृतीयः पन्थाः**- यह उक्ति दार्शनिक जगत् में सुप्रसिद्ध है। उनके द्वारा की गई पदार्थकल्पना भट्ट एवं प्रभाकर दोनों प्रस्थानों से व्यतिरिक्त है। मुरारिमत में परमार्थभूत एकमात्र पदार्थ है- ब्रह्म। तद्व्यतिरिक्त पदार्थचतुष्टय लोकव्यवहार की उपपत्ति हेतु स्वीकार्य है। ये हैं- धर्मिविशेष, धर्मविशेष, आधारविशेष तथा प्रदेशविशेष। अत एव न्यायमाला में निष्कर्ष कथन प्राप्त होता है-"एकमात्र ब्रह्म परमार्थ वस्तु है। व्यवहार में पदार्थचतुष्टय मान्य हैं- धर्मिविशेष, धर्मविशेष, आधारविशेष एवम् प्रदेशविशेष। द्विविध पदार्थों के योग से पदार्थों की संख्या, वेदान्त एवं मुरारिमिश्र के मतों में पाँच ही हैं।"

इनमें घट, पट प्रभृति धर्मिविशेष हैं, घटादि में विद्यमान घटत्वादि धर्मविशेष हैं। तद्वत् इदानीं घटः, तदानीं पटः प्रभृति धर्मिविशेष हैं, घटादि में विद्यमान घटत्वादि धर्मविशेष हैं। तद्वत् इदानीं घटः, तदानीं घटः इत्यादि कालबोधक शब्दों से प्रतीयमान अर्थ आधार विशेष हैं एवं गृहेघटः, भूतले घटः इत्यादि स्थान-बोधक शब्दों से प्रतीयमान अर्थ प्रदेशविशेष कहलाते हैं।

## मीमांसकानां परमाणुवादः

केचन मीमांसकाः (प्राभाकराः) नैयायिकवत् परमाणुभ्यः सृष्टिं प्रतिपादयन्ति, किन्तु नैयायिकाभिमतपरमाण्वपेक्षया मीमांसकाभिमतपरमाणु-स्वरूपे भेदो वर्तते। तत्र नैयायिकाः परमाणून् प्रत्यक्षागोचरान् मीमांसकाश्च प्रत्यक्षगोचरानभ्युपगच्छन्ति। तदेतेन नैयायिकानां ये त्रसरेणवस्त एव मीमांसकानां परमाणव इति ज्ञायते। तदुक्तम्–

> जालरन्ध्रविसरद्रवितेजोजालभासुरपदार्थविशेषान् ।
> अल्पकानिह पुनः परमाणून् कल्पयन्ति हि कुमारिलशिष्याः।।[१] इति।

नैयायिकाः परमाणुसंयोगे प्राणिनामदृष्टवशादीश्वरोत्पन्नेच्छायाः कारणत्वमभ्युपगच्छन्ति, किन्तु मीमांसादर्शने ईश्वरस्यानङ्गीकारात् प्राणिनामदृष्टवशादेव परमाणूनां संयोगः, ततश्च सृष्टिरिति प्रतिपाद्यते। वस्तुतः परमाणुद्वारा सृष्टिप्रतिपादनं न सर्वमीमांसकाभिमतम्। अत एवोक्तं श्रीकुमारिलभट्टैः–

---

## मीमांसकों का परमाणुवाद–

प्रभाकर के अनुयायी मीमांसक नैयायिकों की तरह परमाणुओं से सृष्टि का प्रतिपादन करते हैं किन्तु नैयायिकामिमत परमाणु की अपेक्षा मीमांसकाभिमत परमाणु का स्वरूप भिन्न है। नैयायिक लोग परमाणुओं को प्रत्यक्षाविषय मानते हैं जब कि मीमांसक गण उन्हें प्रत्यक्षविषय मानते हैं। त्रसरेणु को प्रत्यक्ष-विषय माना जाता है। इस न्यायसिद्धान्त के अनुसार परमाणु को प्रत्यक्षविषय मानने वाले भाट्टों की मतसमीक्षा से विदित होता है कि नैयायिकसम्मत त्रसरेणु को भाट्टमीमांसक परमाणुशब्द से अभिहित करते हैं अतएव मानमेयोदयकार ने कहा है—

> जालरन्ध्रविसरद् ................................कुमारिलशिष्याः।।१।।

नैयायिकलोग परमाणुसंयोग के प्रति प्राणियों के अदृष्टवशात् उत्पन्न ईश्वरेच्छा को कारण मानते हैं किन्तु मीमांसादर्शन में ईश्वर का अङ्गीकार नहीं किया जाता है अतः इनके मत में प्राणियों के अदृष्ट को ही कारण माना जाता है। परमाणुओं के संयोग से जगत् की सृष्टि होने का सिद्धान्त उभयसम्मत है। वस्तुतस्तु सभी मीमांसकों को परमाणुमूलक सृष्टि मान्य नहीं है। अतएव भट्ट महोदय ने कहा है—

---

१. मानमेयो०, पृ० १५७.

मीमांसकैश्च नावश्यमिष्यन्ते परमाणवः।
यद्बलेनोपलब्धस्य मिथ्यात्वं कल्पयेद् भवान्।।[१] इति।

परमाणुभ्यश्च सृष्टिरित्यङ्गीकारे प्रपञ्चस्यानित्यत्वप्राप्तिः, प्रपञ्चस्यानित्यत्वे तद्गतवेदानामनित्यत्वं स्यादिति मीमांसकाः प्रपञ्चस्यात्यन्तप्रलयं नाभ्युपगच्छन्ति। तन्मतानुसारेण खण्डप्रलयः खण्डसृष्टिश्च भवतः। तदेवमनादिप्रवाहरूपेण जगन्नित्यमेव।

## अद्वैतवेदान्तस्य विर्तवादः

अद्वैतवेदान्ते आरम्भवाद-परिणामवादयोर्निरसनद्वारा विवर्तवादः समाश्रीयते। विवर्तवादिनामयमाशयः-आरम्भवादे, परिणामवादे च कार्यकारणयोर्मध्ये भेदाभेदावङ्गीकृत्योभयोरपि सत्यत्वमुररीक्रियते। तन्नोचितम्। यतो हि कार्यस्य कारणाभिन्नत्वं यदि सत्यं स्यात्, पुनर्भेदस्यापि सत्यता कथं भवेत्। तस्मात् कारणमात्रस्य सत्यत्वं कार्यस्य च कल्पितत्वं स्वीकर्तव्यम्। एवं सत्यद्वैतस्य

---

मीमांसकैश्च..........मिथ्यात्वं कल्पयेद्भवान्।।१।।

परमाणुओं से सृष्टि होती है— इस सिद्धान्त को मानने पर प्रपञ्च (जगत्) की अनित्यता प्राप्त होगी। प्रपञ्च की अनित्यता होने पर तदन्तर्गत वेदों का भी अनित्यत्व प्राप्त होगा। अतः इस दोष के निरास हेतु परमाणुमूलक सृष्टि का सिद्धान्त अमान्य है। इस प्रकार अनादिप्रवाहरूप से जगत् नित्य है। एवञ्च इस मत में अनादिप्रवाहरूप से जगत् को नित्य माना जाता है।

## अद्वैतवेदान्त का विवर्तवाद

अद्वैतवेदान्त में आरम्भवाद एवं परिणामवाद का निराकरण कर विवर्तवाद का सिद्धान्त प्रतिष्ठापित किया जाता है। विवर्तवादियों का आशय है—

आरम्भवाद एवं परिणामवाद में कार्य एवं कारण के मध्य भेदाभेद को अङ्गीकार करके दोनों की सत्यता स्वीकार्य होती है। यह उचित नहीं है। क्योंकि कार्य का कारण से अभेद यदि सत्य होगा— ऐसी स्थिति में भेद की भी सत्यता कैसे हो सकती है। अतः कारणमात्र की सत्यता एवं कार्य की कल्पितरूपता समुचित प्रतीत होती है। एवंच अद्वैत की पारमार्थिकता एवं कार्यरूप द्वैत की मिथ्यारूपता समीचीन प्रतीत होती है। अतएव यथा रज्जु में सर्प की, शुक्ति में रजत की,

---

१. श्लो० वा०, पृ० २८६.

पारमार्थिकत्वं कार्यरूपस्य द्वैतस्य च मिथ्यात्वमित्यायाति। अत एव यथा रज्जौ सर्पस्य, शुक्तिकायां रजतस्य, मरुमरीचिकायां जलस्य, स्थाणौ चौरस्य च कल्पितत्वमङ्गीक्रियते; तथाऽखण्डे सच्चिदानन्दे ब्रह्मणि निखिलोऽयं प्रपञ्चः कल्पित इति प्रपञ्चो ब्रह्मणो विवर्तरूपः। तदुक्तं श्रीमताऽप्पय्यदीक्षितेन– "ब्रह्मणश्चोपादानत्वमद्वितीय–कूटस्थचैतन्यरूपस्य न परमाणूनामिवारम्भकत्व–रूपम्, न वा प्रकृतेरिव परिणामित्वरूपम्; किन्त्वविद्यया वियदादिप्रपञ्चरूपेण विवर्तमानत्वलक्षणम्"[1] इति।

ननु विवर्त–परिणामयोः किं लक्षणमिति जिज्ञासायामुक्तं तैरेव– "वस्तुनस्तत्समसत्ताकोऽन्यथाभावः परिणामः, तदसमसत्ताको विवर्त इति वा; कारणसलक्षणोऽन्यथाभावः परिणामः, तद्विलक्षणो विवर्त इति वा; कारणाभिन्नं कार्यं परिणामः, तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति वा विवर्तपरिणामयोर्विवेकः"[2] इति। तदेवमुपर्युक्तपरिणामविवर्तयोर्लक्षणैर्मृत्तिकाया घटरूपेण योऽन्यथाभावो वर्तते स परिणाम इत्युच्यते, अत्र घटमृत्तिकयोरुभयोरपि व्यावहारिकसत्तात्वात्। रज्जोर्योऽन्यथाभावः सर्परूपेण

---

मरुमरीचि में जल की तथा स्थाणु में चोर की कल्पितरूपता यद्वत् स्वीकार्य है तद्वत् अखण्ड-सच्चिदानन्द-ब्रह्म में यह सम्पूर्ण जगत् कल्पित है। एवंच जगत् (प्रपञ्च) ब्रह्म का विवर्तस्वरूप है। अतएव श्रीमान् अप्पयदीक्षित ने सुस्पष्ट कहा है— "ब्रह्म को जगत् का उपादान कारण मानने का यह आशय नहीं है— (१) कूटस्थ अद्वितीय चैतन्य न्यायवैशेषिकसम्मत परमाणुओं की तरह आरम्भक है। (२) यह चैतन्य सांख्य-योग सम्मत प्रकृतिवत् परिणामी है। प्रत्युत अद्वैत वेदान्ती का आशय यह है— अविद्या द्वारा उक्त चैतन्य वियदादिरूप से विवर्तस्वरूप में प्रपञ्च है।" विवर्त तथा परिणाम की परिभाषा क्या है— ऐसी जिज्ञासा होने पर वेदान्तियों ने प्रतिपादित किया है— (१) किसी वस्तु की अपनी समानसत्ता में अन्यरूप से प्रकाशित होना परिणाम कहलाता है तथा असमान सत्ता में अन्यरूप से प्रकाशित होना विवर्त कहलाता है। (२) कारणसलक्षण अन्यथाभाव परिणाम कहलाता है तथा कारणविलक्षण अन्यथाभाव विवर्त कहलाता है। (३) कारण से अभिन्न कार्य परिणाम कहलाता है तथा कारण के साथ अभेद हुए बिना ही कारणव्यतिरेक रूप में निर्वचन के अयोग्य कार्य को विवर्त कहा जाता है।"

---

१. सि० ले० सं०, पृ० ५७.

२. सि० ले० सं०, पृ० ५८–६०.

भवति स विवर्त इत्युच्यते, अत्र रज्जोर्व्यावहारिकत्वेन सर्पस्य प्रातिभासिकत्वेन चोभयोर्विषमसत्ताकत्वात्। प्रकृते च ब्रह्म तावत् पारमार्थिकम्, तत्र कल्पितः प्रपञ्चश्च व्यावहारिकः प्रातिभासिको वा वर्तत इति प्रपञ्चो ब्रह्मणो विवर्तः। किञ्च, यथा सर्पादिरूपेण विवर्तमानस्य रज्जोः स्वरूपे न कश्चिदपि विकारो जायते, तथा स्थूलसूक्ष्मरूपप्रपञ्चाकारेण विवर्तमानस्यापि ब्रह्मणः स्वरूपे न विकारः प्रादुर्भवति।

### प्रपञ्चस्य मायापरिणामत्वम्

ननु प्रपञ्चस्य जडत्वात् तत्कारणमपि जडमेव स्यात्, ब्रह्मणश्चेतनत्वात् कथं तज्जगतः कारणं भवेत्? इति जिज्ञासायामद्वैतवेदान्ते प्रपञ्चोपादानव्यवस्थार्थमनादिकल्पितमायाया अङ्गीकारः कृतः। इयं च सांख्याभिमतप्रकृतिवत् त्रिगुणात्मिका भवति। सांख्याभिमता प्रकृतिस्तु नित्या, वेदान्ताभिमता माया तु मिथ्येत्यनयोर्भेदः। अस्या मायाया अपि प्रपञ्चवद् व्यावहारिकत्वमद्वैतिभिः स्वीक्रियते। इयं माया तमोगुणप्रधाना प्रपञ्चाकारेण

---

उपर्युक्त परिणाम एवं विवर्त के लक्षणों के अनुसार मृत्तिका का घटरूप में अन्यथा भाव (प्रकाशन) होता है वह विवर्त कहलाता है। यहाँ रज्जु व्यावहारिक है तथा सर्प प्रातिभासिक है एतावता दोनों की विषमसत्ता है समान नहीं। तद्वत् प्रकृत में ब्रह्म पारमार्थिक सत् है तथा उसमें कल्पित प्रपञ्च व्यावहारिक अथवा प्रातिभासिक है पारमार्थिक नहीं। अतः प्रपञ्च, ब्रह्म का विवर्त कहलाता है। अपि च सर्परूप में विवर्त-प्रतिभान होने पर रज्जु के स्वरूप में किसी भी प्रकार का विकार नहीं होता है तद्वत् स्थूल एवं सूक्ष्मप्रपञ्चरूपों में विवर्तप्रतिभान होने पर भी ब्रह्म के स्वरूप में विकार की स्थिति नहीं आती।

### प्रपञ्च की माया-परिणामरूपता

जिज्ञासा उदित होती है कि प्रपञ्च जड है अतः उसका कारण भी जड ही होगा। ऐसी स्थिति में चेतन ब्रहम को जगत् का कारण कैसे माना जा सकता है? इसके समाधान हेतु अद्वैतवेदान्त-सिद्धान्त में प्रपञ्च के उपादान-व्यवस्था हेतु अनादि माया (अन्यथानुपपत्ति द्वारक) का अङ्गीकार किया जाता है। जिस प्रकार सांख्यदर्शन में प्रकृति त्रिगुणात्मिका मानी जाती है तद्वत् कल्पित माया भी त्रिगुणात्मिका है। सांख्याभिमत प्रकृति सत्य एवं नित्य है किन्तु वेदान्त की माया मिथ्या है— यह अन्तर है। अद्वैती लोग प्रपञ्च की तरह माया को भी व्यावहारिक मानते हैं।

परिणमते। तमःप्रधानमायायास्तत्कार्यस्य प्रपञ्चस्य च व्यावहारिकत्वात् प्रपञ्चस्तमोगुणप्रधानमायायाः परिणाम इत्युच्यते। तदेवमद्वैतवेदान्ते प्रपञ्चो मायायाः परिणाम इत्युक्तौ ब्रह्मणश्च विवर्त इत्यर्थादायाति। तदुक्तं श्रीमता सर्वज्ञात्ममुनिना–

**विवर्तवादस्य हि पूर्वभूमिः वेदान्तवादे परिणामवादः।**
**व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः।।**[1] इति।

**सृष्टिक्रमः**

उपर्युक्ता माया शुद्धसत्त्वगुणप्राधान्येनेश्वरस्योपाधिर्भूत्वा प्रपञ्चस्य निमित्तकारणमिति, सैव तमोगुणप्राधान्येनेश्वरोपाधिर्भूत्वा प्रपञ्चस्योपादानकारणमिति चाख्यायते। मलिनसत्त्वगुणप्रधानभूता च मायाऽविद्याख्यया नाना भूत्वा जीवोपाधिर्भवति। प्रलयावस्थायां जीवोपाधिभूताऽविद्या धर्माधर्मसंस्कारसहिता स्वकारणे मायायां लीना भवति। यदा च जीवानामदृष्टानि परिपक्वानि सन्ति फलोन्मुखानि भवन्ति, तदा मायोपहिते चैतन्ये ईश्वरे–"तदैक्षत बहु स्यां प्रजायेय"[2] इति संकल्पः प्रादुर्भवति। तदानीम्–"तस्माद्वा एतस्मादात्मन

---

तमोगुणप्रधाना माया प्रपञ्चरूप में परिणत होती है। तम:प्रधान माया तथा प्रपञ्च दोनों की व्यावहारिक सत्ता (समान) है अत: तमोगुणप्रधान माया का परिणाम यह प्रपञ्च है ऐसा सिद्धान्त है। एवञ्च अद्वैतवेदान्त-सिद्धान्त में 'प्रपञ्च, माया का परिणाम है"—यह उक्ति प्रपञ्च में ब्रह्म की विवर्तरूपता को अर्थतः प्रतिपादित करती है। अतएव श्रीमान् सर्वज्ञात्ममुनि ने सुस्पष्ट कहा है— विवर्तवादस्य हि पूर्वभूमिः...........स्वयं समायाति विवर्तवादः॥१॥

**सृष्टिक्रम–**

उपर्युक्त माया शुद्धसत्त्वगुणप्रधाना बनकर ईश्वर की उपाधि कहलाती है तथा प्रपञ्च के प्रति निमित्तकारण बनती है। वही माया जब तमोगुणप्रधाना होती है तब प्रपञ्च की उपादानकारण बनती है। पुनश्च मलिनसत्त्वगुणप्रधाना होने पर यही माया अविद्याशब्द से व्यपदिष्ट होती है तथा जीव की उपाधि कहलाती है। प्रलयावस्था में यह जीवोपाधि अविद्या, धर्म एवम् अधर्म के संस्कार से युक्त होकर स्वकारण माया में प्रलीन हो जाती है। पुनश्च जीवों के अदृष्ट जब परिपक्व होकर फलोन्मुख हो जाते

---

१. सं० शा० २।६।१.
२. छा० उ० ६।२।३.

आकाशः सम्भूतः"[१] इति श्रुत्यनुसारेण तमःप्रधानविक्षेपशक्तिमदज्ञानोपहित-चैतन्यादाकाशः, आकाशाद्वायुः, वायोरग्निः अग्नेरापः, अद्भ्यः पृथिवी चोत्पद्यते। एतानि सूक्ष्मभूतानि, पञ्चतन्मात्राणि, अपञ्चीकृतपञ्चभूतानीति चोच्यन्ते। एतेभ्य एव सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते।

## सूक्ष्मशरीरोत्पत्तिः (सूक्ष्मप्रपञ्चोत्पत्तिः)

अद्वैतवेदान्ते ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं वायुपञ्चकं बुद्धिमनसी चेति सप्तदशावयवात्मकं सूक्ष्मशरीरमभ्युपगम्यते। एतानि सप्तदशावयवान्युपर्युक्त-सूक्ष्मभूतानां सत्त्वादिगुणेभ्य उत्पद्यन्ते। तथाहि–आकाशस्य सात्त्विकांशाच्छ्रोत्रम्, रजोंऽशाद्वाक्; सात्त्विकांशाद्वायोस्त्वगिन्द्रियम्, रजोगुणांशात् पाणीन्द्रियम्; सात्त्विकांशात्तेजसश्चक्षुः, रजोगुणांशात् पादेन्द्रियम्; सात्त्विकांशाज्जलाज्जिह्वा, रजोगुणांशात् पाय्विन्द्रियम्; सात्त्विकांशायाः पृथिव्याः सकाशाद् घ्राणेन्द्रियम्, तस्या एव रजोगुणांशाद् गुदेन्द्रियमित्याकाशादिपञ्चभूतानां सत्त्वांशाच्छ्रोत्रादीनि

---

हैं तब मायोपहित चैतन्य (ईश्वर) में संकल्प उदित होता है— "तदैक्षत बहु स्यां प्रजायेय।" तदनन्तर "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इस श्रुति के अनुसार तमः-प्रधान-विक्षेप शक्तिमद् अज्ञान से उपहित चैतन्य से आकाश की उत्पत्ति होती है। तद्वत् तादृश आकाश से वायु, वायु से तेजस्, तेजस् से जल एवं जल से पृथिवी की उत्पत्ति होती है। उपर्युक्त आकाश से पृथिवीपर्यन्त तत्त्वों को सूक्ष्मभूत, पञ्चतन्मात्र एवम् अपञ्चीकृत पञ्चभूत कहा जाता है। इनसे सूक्ष्मशरीर एवं स्थूल भूतों की उत्पत्ति होती है।

## सूक्ष्मशरीर की उत्पत्ति

अद्वैतवाद में सूक्ष्मशरीर के १७ अवयव मान्य हैं— ५ ज्ञानेन्द्रियाँ, ५ कर्मेन्द्रियाँ, पञ्चवायु, बुद्धि एवम् मनस्। ये १७ अवयव, उपर्युक्त सूक्ष्मभूतों के सत्त्वादि गुणों से उत्पन्न होते हैं। तद्यथा— आकाश के सात्त्विक अंश से श्रोत्र एवं राजस अंश से वाक् की उत्पत्ति होती है। वायु के सात्त्विक अंश से त्वक् एवं राजस अंश से पाणि की उत्पत्ति होती है। तेजस् के सात्त्विक अंश से चक्षुष् एवं राजस अंश से पाद की उत्पत्ति होती है। जल के सात्त्विक अंश से जिह्वा (रसना) एवं राजस अंश से पायु की उत्पत्ति होती है। तद्वत् पृथिवी के सात्त्विक अंश से घ्राण एवं राजस अंश से उपस्थ की उत्पत्ति होती है। एवंच आकाशप्रभृति ५ भूतों के सत्त्व

---

१. तै० उ० २।१।१.

पञ्चज्ञानेन्द्रियाणि तथा तेषामेव रजोंऽशाद्वागादिपञ्चकर्मेन्द्रियाणि व्यस्तानि पृथक् पृथगुत्पद्यन्ते[१] ।

एतेषां पञ्चसूक्ष्मभूतानां समस्तेभ्यः सात्त्विकांशेभ्यो बुद्धिमनसी उत्पद्येते। तत्र बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः। मनो नाम सङ्कल्पविकल्पात्मिकान्तः-करणवृत्तिः[२]। अनयोरेव चित्ताहङ्कारयोरन्तर्भावः। तत्र बुद्धावहङ्कारस्य मनसि चित्तस्यान्तर्भाव इति यावत्। एवमेवाकाशादिसूक्ष्मभूतानां समस्तेभ्यः रजोंऽशेभ्यः प्राणापानोदानव्यानसमानाख्याः पञ्च प्राणाः समुद्भवन्ति[३]। तत्रोर्ध्वगमनशीलो नासाग्रस्थायी वायुः प्राणः, अधोगमनशीलः पाय्वादिस्थायी वायुरपानः, सर्वनाडीगमनशीलोऽखिलशरीरस्थायी वायुर्व्यानः, ऊर्ध्वमुत्क्रमणशीलः कण्ठस्थायी वायुरुदान; शरीरमध्यगतान्नरसादिनेता वायुः समान इत्युच्यते।

---

अंश से क्रमशः ५ ज्ञानेन्द्रियाँ तथा राजस अंश से क्रमशः ५ कर्मेन्द्रियाँ उत्पन्न होती हैं। ५ सूक्ष्मभूतों के समस्त सात्त्विक अंश से दो आभ्यन्तर करण बुद्धि एवम् मनस् की उत्पत्ति होती है। अन्तःकरण की निश्चयात्मा वृत्ति बुद्धि कहलाती है तथा संकल्पविकल्पात्मा वृत्ति मन कहलाती है। इन्हीं दोनों में वेदान्ती लोग चित्त-अहंकारों का भी अन्तर्भाव करते हैं। बुद्धि में अहंकार का तथा मनस् में चित्त का अन्तर्भाव होता है। आकाशादि सूक्ष्मभूतों के समस्त राजस अंश से ५ प्राणों (प्राण, अपान, उदान, समान एवं व्यान) की उत्पत्ति होती है। नासिका के अग्रभाग में स्थित रहने वाली ऊर्ध्वगमनशील वायु, प्राण कहलाती है। वायु आदि में स्थित रहने वाली ऊर्ध्वगमनशील वायु, व्यान कहलाती है। कण्ठ स्थित सर्वनाडीगमनशील वायु व्यान कहलाती है। कण्ठस्थित ऊर्ध्व उत्क्रमणशील वायु, उदान कहलाती है। तद्वत् शरीरमध्यगत अन्नरसादि की वाहक वायु समान कहलाती है। एवञ्च अपञ्चीकृत ५ महाभूतों से उत्पन्न १७ तत्त्वस्वरूप सूक्ष्मशरीर (लिङ्गशरीर) की उत्पत्ति होती है। भगवत्पाद शङ्कराचार्य ने भोगसाधन सूक्ष्मशरीर की उत्पत्ति को निम्नाङ्कित कारिका में

---

१. सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम्।
श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते।। (पञ्च० १।१९)
रजोंऽशैः पञ्चभिस्तेषां क्रमात् कर्मेन्द्रियाणि तु।
वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे।। (तत्रैव, १।२१)

२. तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद् द्विधा।
मनो विमर्शरूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका।। (तत्रैव, १।२०)

३. तैः सर्वैः सहितः प्राणो वृत्तिभेदात् स पञ्चधा।
प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः।। (तत्रैव, १।२२)

तदेवमपञ्चीकृतपञ्चमहाभूतानां सप्तदशतत्त्वैः सूक्ष्मशरीर(लिङ्गशरीर)स्योत्पत्तिर्भवति। तदुक्तं श्रीशङ्करभगवत्पादैः–

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्।।[1] इति।

एतेषु सप्तदशतत्त्वेषु पञ्चज्ञानेन्द्रियैः सहिता बुद्धिर्विज्ञानमयकोश इत्युच्यते। अयमेव कर्तृत्व-भोक्तृत्व-सुखित्व-दुःखित्वाद्यभिमानित्वेनेह-लोकपरलोकगामी व्यावहारिको जीव इत्युच्यते। एवं ज्ञानेन्द्रियैः सहितं मनो मनोमयकोश इत्याख्यायते। पञ्चकर्मेन्द्रियैः सहितं प्राणपञ्चकं प्राणमयकोश इत्यभिधीयते। एतेषु कोशत्रयेषु ज्ञानशक्तिमत्त्वाद्विज्ञानमयकोशः कर्तृरूपः, इच्छाशक्तिमत्त्वान्मनोमयकोशः करणरूपः, क्रियाशक्तिमत्त्वात् प्राणमयकोशः कार्यरूप इति बोध्यम्। एतत्कोशत्रयमिलितमिदं सूक्ष्मशरीरम्।

एतद्व्यष्टिसूक्ष्मशरीरोपहितं चैतन्यं 'तैजसो जीवः' इत्युच्यते। एतत्समष्ट्युपहितं चैतन्यं 'सूत्रात्मा', 'हिरण्यगर्भः' इति वोच्यते[2]।

---

प्रतिपादित किया है—

पञ्चप्राणमनोबुद्धि........... सूक्ष्माङ्गं भोगसाधनम्।।१।।

इन १७ तत्त्वों में ५ ज्ञानेन्द्रियों सहित बुद्धि को विज्ञानमय कोश कहा जाता है। यह विज्ञानमयकोश कर्तृता, भोक्तृता, सुखिता, दुःखिता आदि का अभिमानी होता है। यही इस लोक एवं परलोक में विचरण करता है। शास्त्रकारों ने इसे ही जीव कहा है।

१७ तत्त्वों में ५ ज्ञानेन्द्रियों सहित मनस् को मनोमय कोश कहा जाता है। ५ कर्मेन्द्रियों सहित ५ प्राणों को प्राणकोश कहा जाता है। उपर्युक्त त्रिविध कोश में ज्ञानशक्ति से युक्त होने के कारण विज्ञानमय कोश कर्तृस्वरूप है। इच्छाशक्तिमान् मनोमयकोश करणस्वरूप है। क्रिया-शक्तिमान् होने से प्राणमयकोश कार्यस्वरूप है यह विवेक्तव्य है। इन तीन कोशों का मिलित स्वरूप सूक्ष्मशरीर कहलाता है। व्यष्टिस्वरूप सूक्ष्मशरीर से उपहित चैतन्य ''तैजस जीव'' कहलाता है। तद्वत् समष्टिस्वरूप सूक्ष्मशरीर से उपहित चैतन्य सूत्रात्मा हिरण्यगर्भ कहलाता है।

---

१. आत्मबोधे, श्लो० १३.
२. वेदान्तसारे, पृ० १७-२१.

## स्थूलशरीरोत्पत्तिः (स्थूलप्रपञ्चोत्पत्तिः)

उपर्युक्तसूक्ष्मप्रपञ्चकारणभूतान्यपञ्चीकृतपञ्चसूक्ष्मभूतानि व्यवहारासमर्थानीति कृत्वा तदीयस्थौल्यापेक्षायां व्यवहर्तृप्राणिजातधर्माधर्मापेक्षयैव तानि सूक्ष्मभूतानि पञ्चीकृतानि भवन्ति। पञ्चीकरणप्रक्रिया तूक्ता श्रीमता विद्यारण्यस्वामिना–

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते।।[1] इति।

अस्यायमर्थः–पञ्चभूतानि प्रथमं प्रत्येकं द्वैविध्यमापद्यन्ते। तेष्वाकाशादिषु दशसु भागेषु प्राथमिकान् पञ्चभागान् प्रत्येकं चतुर्धा समं विभज्य स्वार्धपरित्यागेन चतुर्णां प्रत्येकं भागान्तरेषु सन्निवेशेन भूतानि पञ्चीकृतानि, अर्थात् स्थूलानि भवन्ति। एवं स्थूलत्वमापन्नानि भूतानि यदा स्वस्वकार्योत्पादनसमर्थानि भवन्ति, तदा आकाशे शब्दः, वायौ शब्दस्पर्शौ, अग्नौ शब्दस्पर्शरूपाणि, अप्सु शब्दस्पर्शरूपरसाः, पृथिव्यां शब्दस्पर्शरूप-रसगन्धाश्चाभिव्यज्यन्ते।

---

## स्थूलशरीर की उत्पत्ति एवं स्थूलप्रपञ्च की उत्पत्ति

पूर्व में प्रतिपादित सूक्ष्मप्रपञ्च के कारण अपञ्चीकृत ५ सूक्ष्मभूत हैं। इन सूक्ष्मभूतों द्वारा व्यवहार सम्भव नहीं होता। अतः व्यवहार की उपपत्ति हेतु इनकी स्थूलता की अपेक्षा होती है। जो प्राणिजगत् व्यवहर्ता है उनके धर्म एवम् अधर्म से प्रेरित सूक्ष्मभूत, पञ्चीकृत होते हैं। इस पञ्चीकरण प्रक्रिया का निरूपण, श्रीमान् विद्यारण्यस्वामी ने निम्नाङ्कित कारिका में किया है।

द्विधा विधाय......................पञ्च पञ्च ते।।१।।

इसका अर्थ है- ५ सूक्ष्मभूतों में प्रत्येक के दो भेद होते हैं। उनमें सब के द्वितीय भाग को अविभाज्य मानकर प्रथम भाग में प्रत्येक को चार भागों में समान रूप से विभाजित किया जाता है। इन चार भागों की स्वातिरिक्त भूतों के अर्धभाग (द्वितीय) में सन्निविष्ट किया जाता है। एतावता प्रत्येक सूक्ष्मभूत=आकाशादि, स्वयम् अर्द्धांश तथा शेष चार के अष्टमांश से युक्त होकर पञ्चीकृत होते हैं। ये स्थूल होने से स्थूलभूत कहलाते हैं। एवं च स्थूल बने हुए ये भूत अपने अपने कार्य के उत्पादन में सामर्थ्यवान् हो जाते हैं। एतावता आकाश में शब्द, वायु में शब्द एवं स्पर्श, अग्नि में शब्द, स्पर्श एवं रूप, जल में शब्द, स्पर्श, रूप एवं रस तथा पृथिवी में शब्द, स्पर्श, रूप, रस एवं गन्ध की अभिव्यक्ति होती है।

---

१. पञ्च० १।२७.

एतेभ्यः पञ्चीकृतेभ्यः स्थूलभूतेभ्यः भूर्भुवःस्वर्महर्जनस्तपः सत्यमित्येतन्नामकानामुपर्युपरि विद्यमानानां सप्तोर्ध्वलोकानाम्, अतलवितलसुतल रसातलतलातलमहातलपातालनामकानामधोऽधो विद्यमानानां सप्ताधोलोकानां तदन्तर्वर्तिजरायुजाण्डजोद्भिज्जस्वेदजाख्यानां चतुर्विधशरीराणां तदुचितानामन्नपानादीनां चोत्पत्तिर्भवति। तत्र जरायुभ्यो जातानि मनुष्यपश्वादीनि जरायुजानि, अण्डेभ्यो जातानि पक्षिपन्नगादीन्यण्डजानि, भूमिमुद्भिद्य जातानि कक्षवृक्षादीन्युद्भिज्जानि, स्वेदेभ्यो जातानि यूकामशकादीनि स्वेदजानीति बोद्धव्यम्।

एवं पञ्चीकृतपञ्चमहाभूतेभ्यः समुत्पन्नानि चतुर्विधशरीराणि भोगसाधनानीति भोगायतनशब्देन व्यवह्रियन्ते। तदुक्तं श्रीशङ्करभगवत्पादैः–

पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितम्।
शरीरं सुखदुःखानां भोगायतनमुच्यते।।[१] इति।

इमानि शरीराणि स्थूलभोगायतनत्वात् स्थूलशरीराणीति, अन्नविकारत्वा-

---

उपर्युक्त पञ्चीकृत स्थूल भूतों से उपर्युपरि विद्यमान ७ अर्ध्वलोकों की उत्पत्ति होती है। ये हैं- भूर्लोक, भुवर्लोक, महर्लोक, स्वर्लोक, जनलोक, तपोलोक एवम् सत्यलोक। तदवत् अधोऽधोविद्यमान सात लोकों की उत्पत्ति होती है। ये हैं– अतललोक, वितललोक, सुतललोक, रसातललोक, तलातललोक, महातललोक एवं पाताललोक।

तद्वत् उपर्युक्त १४ लोकों में विद्यमान जिन चतुर्विध शरीर की उत्पत्ति, स्थूलभूतों से होती है, ये हैं– जरायुज, अण्डज, उद्भिज्ज एवं स्वेदज। इन शरीरों के पोषक अन्नपानादि की उत्पत्ति भी स्थूलभूतों से ही होती है। यतश्च मनुष्य एवं पशु आदि की उत्पत्ति जरायु से होती है अत: ये जरायुज कहलाते हैं। तद्वत् पक्षिगण एवं पन्नगप्रभृति की उत्पत्ति अण्ड से होती है। अत: ये अण्डज कहलाते हैं। एवं भूमि का भेदन कर उत्पन्न होने वाले कक्षवृक्षादि उद्भिज्ज कहलाते हैं तथा स्वेद (पसीने) से उत्पन्न होने वाले यूकामशक प्रभृति,स्वेज कहलाते हैं।

उपर्युक्त प्रकार से भलीभाँति विदित होता है कि पञ्चीकृत स्थूलभूतों से चतुर्विध शरीर उत्पन्न होते हैं। यतश्च शरीर ही भोग के साधन हैं। अत: इन्हें भोगायतन कहा जाता है। अतएव भगवत्पाद शङ्कराचार्य जी ने कहा है—

पञ्चीकृतमहाभूत...........भोगायतनमुच्यते।।१।।

यतश्च महाभूतों से उत्पन्न ये शरीर, स्थूलभोगों के आयतन हैं अत: ये स्थूलशरीर

---

१. आत्मबोधे, श्लो० १२.

च्चान्नमयकोश इति चाख्यायन्ते। अत्र समष्टिस्थूलशरीराभिमानि चैतन्यं विराडिति, व्यष्टिस्थूलशरीराभिमानि चैतन्यं विश्व इत्यभिधीयते। एवं पञ्चीकृत-पञ्चमहाभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः[1]। तत्र स्थूलसूक्ष्मशरीरयोः कारणीभूताऽविद्या कारणशरीरमित्यभिधीयते। कारणशरीरापरपर्यायियमविद्याऽनादिरूपा, मलिनसत्त्वगुण-प्रधाना च भवति। एतन्मलिनसत्त्वं पुण्यकर्मफलानुभवकालेऽन्तर्मुखं सत् स्वरूपानन्दस्य प्रतिबिम्बभाग् भूत्वाऽऽनन्दमयकोश इत्याख्यायते। पुण्यकर्मफल-भोगोपरमे च तन्निद्रारूपेण विलीयते[2]। अस्य चेष्टदर्शन-लाभ-भोगेषु प्रिय-मोद-प्रमोदाख्या वृत्तयो भवन्ति[3]। एवं कारणशरीरे आनन्दमयाख्य एक एव कोशः। एतद्व्यष्टिकारणशरीरोपहितं चैतन्यं प्राज्ञजीव इति, समष्टिशरीरोपहितं चैतन्यमव्याकृत ईश्वर इति च कथ्यते। तदेषा प्रपञ्चोत्पत्तिरद्वैतसिद्धान्तेऽध्यारोप

---

कहलाते हैं। तद्वत् ये शरीर, अन्नविकार होने से अन्नमयकोश शब्द से व्यवहृत होते हैं। स्थूलशरीरों की समष्टि के अभिमानी चैतन्य को शास्त्रकारों ने विराट् शब्द से अभिहित किया है तथा इनकी व्यष्टि के अभिमानी चैतन्य को विश्वशब्द से अभिहित किया जाता है। इस प्रकार यह सुनिरूपित होता है— पञ्चीकृत पञ्च महाभूतों से स्थूल प्रपञ्च की उत्पत्ति होती है। इनमें स्थूलशरीर तथा सूक्ष्मशरीर के प्रति कारण है–अविद्या। इस अविद्या को कारणशरीरशब्द से व्यवहृत किया जाता है। कारणशरीर का पर्याय अविद्या है। यह अनादिस्वरूप है। शास्त्रकारों ने अविद्या में मलिनसत्त्वगुण की प्रधानता प्रतिपादित की है। यह मलिनसत्त्व पुण्यकर्म के फलोपभोगकाल में अन्तर्मुख हो जाता है तथा स्वस्वरूपानन्द का प्रतिबम्बन को प्राप्त करने से यह आनन्दमयकोश कहलाता है। पुण्यकर्मफल के भोग का उपरम होने के अनन्तर यह मलिनसत्त्व निद्रारूप में स्वयं को विलीन कर लेता है। कारणशरीर का सत्त्वगुण इष्टदर्शन से प्रियवृत्ति, इष्टलाभ से मोदवृत्ति तथा इष्टभोग से प्रमोदवृत्ति से युक्त होता है। एवञ्च कारणशरीर में आनन्दमय कोश (एकमात्र) की स्थिति होती है। इस कारणशरीर की व्यष्टि से उपहित चैतन्य प्राज्ञजीव कहलाता है। तद्वत् कारणशरीर की समष्टि से उपहित चैतन्य, अव्याकृत एवम् ईश्वर शब्दों से व्यपदेश्य होता है। इस प्रकार की प्रपञ्चोत्पत्ति को अद्वैतसिद्धान्त में अध्यारोप कहा जाता है।

---

१. वेदान्तसारे, पृ० २२-२४.

२. काचिदन्तर्मुखा वृत्तिरानन्दप्रतिबिम्बभाक् ।
पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते।।
कादाचित्कत्वतोऽनात्मा स्यादानन्दमयोऽप्ययम्। (पञ्च० ३।९-१०)

३. कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः। (पञ्च० १।३६)

इत्युच्यते। पुनः प्राणिनां परिपक्वकर्मपरिसमाप्तौ चेश्वरेच्छया समस्तस्थूलप्रपञ्चस्य विलयो भवति। अयं विलयोऽपवाद इत्याख्यायते।

### अध्यारोपापवादयोः प्रयोजनम्

वस्तुन्यवस्तुकल्पनमारोपः, कल्पितस्यावस्तुनो बाधोऽपवादः। अद्वैतवेदान्ते- "नेह नानास्ति किञ्च न"[१], "सर्वं खल्विदं ब्रह्म"[२] इत्यादिश्रुतिप्रमाणेन ब्रह्मणः सत्यत्वं तदतिरिक्तस्य सर्वस्यापि प्रपञ्चस्य मिथ्यात्वमङ्गीक्रियते। जिज्ञासूनां ब्रह्मबोधस्तत्र कल्पितस्य प्रपञ्चस्य वास्तविकस्वरूपबोधं विना भवितुं नार्हं इत्यध्यारोपापवादाभ्यां प्रपञ्चस्य मिथ्यात्वं निरूप्य ब्रह्मणः पारमार्थिकत्वप्रतिपादनमेव वेदान्तशास्त्रस्य प्रयोजनमित्यवगन्तव्यम्। तथा चोक्तम्–"अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते" इति। भगवत्पादशङ्कराचार्या अपि–"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इत्यमुमेवार्थं प्रतिपादयामासुः। तदेवमद्वैतवेदान्तनये प्रपञ्चो

---

पुनश्च प्राणियों के परिपक्व कर्म के भोग द्वारा परिसमाप्ति होने पर ईश्वर की इच्छा से समस्त स्थूल प्रपञ्च का विलय हो जाता है। इस विलय को अद्वैतसिद्धान्त में "अपवाद" शब्द से परिभाषित किया जाता है।

### अध्यारोप एवम् अपवाद के प्रयोजन

शास्त्रकारों ने वस्तु में अवस्तु की कल्पना को आरोप शब्द से तथा कल्पित अवस्तु के बाध को अपवादशब्द से परिभाषित किया है। अद्वैतवेदान्त में श्रुतिवाक्यों ("नेह नानास्ति किञ्चन" एवम् "सर्वं खल्विदं ब्रह्म" इत्यादि) को आधारभूत प्रमाण मानकर एकमात्र ब्रह्म की सत्यता स्वीकार्य है तथा तदतिरिक्त समस्त प्रपञ्च की मिथ्यारूपता मान्य है। यतश्च जिज्ञासुजन को तब तक ब्रह्मबोध उदित नहीं हो सकेगा जब तक ब्रह्म (वस्तु) में कल्पित सम्पूर्ण प्रपञ्च (अवस्तु) का स्वरूपबोध सम्यक्तया उदित न हो जाय। अतः अध्यारोप एवम् अपवाद द्वारा प्रपञ्च के मिथ्यात्व का निरूपण कर ब्रह्म की पारमार्थिकता का प्रतिपादन ही वेदान्तशास्त्र का प्रयोजन है यह नितरां ध्यातव्य है। तदनुरूप यह उक्ति प्रसिद्ध है— "अध्यारोपापवादाभ्यां निष्प्रपञ्चं निरूप्यते। भगवत्पाद शंकराचार्य जी ने भी निम्नाङ्कित वचन से इसी अर्थ (तात्पर्य) का प्रतिपादन किया है—

"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।"

---

१. बृ० उ० ४।४।१९.
२. छा० उ० ३।१४।१.

ब्रह्मणो विवर्त इति विवर्तवादोऽभ्युपगतः।

## सिद्धान्तशिखामण्युक्तोऽविकृतपरिणामवादः

तत्र तावद्वीरशैवसिद्धान्ते सृष्टिप्रक्रियायामविकृतपरिणामवादोऽङ्गीकृतः। स्वरूपे किञ्चिद्विकारं विनैवान्यथारूपेण परिणामोऽविकृतपरिणाम इत्युच्यते। अत्रेदं बोध्यम्—अस्मिन् सिद्धान्ते परशिवस्य शक्तेर्विकासेन सृष्टिरिति, तत्सङ्कोचेन च प्रलय इति शक्तिसंकोचविकासाभ्यां सृष्टिप्रलयौ व्यवस्थाप्येते। यथा कूर्मः कदाचित् स्वकरचरणाद्यवयवान् संकोच्य तूष्णींभावेन तिष्ठति, कदाचिच्च तेषां प्रसारणेन जले भूमौ वा विहरति; तथा परशिवोऽपि प्रलयकाले स्वशक्तिसंकोचेन प्रपञ्चं स्वस्मिन् विलापयति, सृष्टिकाले च स्वलीलार्थं स्वशक्तिविकासद्वारा जगदुत्पादयति। तस्माद्यथा स्वाङ्गसंकोचविकासाभ्यां कूर्मे

---

एवञ्च निष्कर्षकथन प्राप्त होता है— अद्वैतवेदान्तसिद्धान्त में विर्ववाद का अभ्युपगम हुआ है। तदनुसार प्रपञ्च को ब्रह्म का विवर्त माना जाता है।

## सिद्धान्तशिखामणिप्रोक्त अविकृतपरिणामवाद

वीरशैवदर्शन का सिद्धान्त है कि सृष्टिप्रक्रिया में अविकृत-परिणामवाद स्वीकृत है। स्वरूप में किञ्चिन्मात्र भी विकार हुए बिना अन्यथाप्रथनरूप परिणाम को अविकृत परिणाम कहा जाता है।

यहाँ निष्कर्षरूप में ज्ञातव्य है— परशिव की शक्ति के विकास से सृष्टि मानी जाती है तथा उसके संकोच से प्रलय माना जाता है। एवञ्च इस वीरशैवमत में सृष्टि एवं प्रलय की व्यवस्था शक्ति के संकोच एवं विकास पर आधारित मानी जाती है। यद्वत् कूर्म अपने हाथ पैर प्रभृति अवयवों का संकोचन कर तूष्णीम्भाव से स्थित होता है। पुनश्च कदाचित् वह अपने अवयवों के प्रसारण से जल में अथवा भूमि में विहार करता है तद्वत् परशिव, प्रलयकाल में स्वशक्तिसंकोच द्वारा सम्पूर्ण प्रपञ्च को स्वस्वरूप में विलीन कर लेते हैं तथा सृष्टिकाल में स्वलीलाविहार हेतु स्वशक्तिविकास द्वारा जगत् को उत्पन्न करते हैं। एवञ्च यद्वत् स्वाङ्ग के संकोच एवं विकास से कूर्म में कोई विकार आरोपित नहीं होता है तद्वत् स्वशक्ति के विकास एवं संकोच से भी परशिव में विकृति नहीं आती है— यह अविकृत परिणामवाद का स्वरूप है। इस अविकृत परिणामवाद को पटदृष्टान्त से अपनी सिद्धान्तशिखामणि में आचार्य रेणुकभगवत्पाद ने निम्नाङ्कित श्लोक द्वारा प्रसाधित किया है—

न कश्चिद्विकार आरोप्यते, तथा स्वशक्तिसंकोचविकासाभ्यां परशिवेऽपि विकृतिर्नायातीत्ययमविकृतपरिणामवाद इत्युच्यते। अयमेवाविकृतपरिणामवादः सिद्धान्तशिखामणौ रेणुकभगवत्पादैः–

आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात्।।[१]

इति पटदृष्टान्तेनाविकृतपरिणामवादः प्रसाधितः। अस्यायमर्थः–यथा पटो विलक्षणप्रसारणेन कुटीभावमापद्यते, तत्संकोचे च पटरूपेणावतिष्ठते। न चाभ्यां संकोचविकासाभ्यां पटस्य स्वरूपे विक्रिया जायते; तथा शिवोऽपि स्वात्मशक्तिविकासेन विश्वात्मना तिष्ठन् न विक्रियत इति। एतदतिरिक्तं श्रीरेणुकभगवत्पादाः–

पत्रशाखादिरूपेण यथा तिष्ठति पादपः।
तथा भूम्यादिरूपेण शिव एको विराजते।।[२]

इति वृक्षदृष्टान्तेनाप्यविकृतपरिमाणवादं साधितवन्तः। अस्यार्थः श्रीमरितोण्टदार्यैरेवमुक्तः–"वृक्षो यथा कालशक्त्या विकारराहित्येन स्वान्तर्लीन-

---

आत्मशक्तिविकासेन......पटः स्वस्य प्रसारणात्।।१।।

इस कारिका का अर्थ सुस्पष्ट है— यद्वत् विलक्षण रूप में प्रसारित किये जाने पर पट की कुटीरूपता प्रकाशित होती है एवं संकोच (समेटा हुआ) की अवस्था में वह पटरूप से स्थित रहता है। इसके बावजूद संकोच एवं विकास से पट के स्वरूप में किसी प्रकार की विकृति नहीं होती। तद्वत् शिव भी निजशक्तिविकास द्वारा विश्वरूप में स्थित रहकर विकृत नहीं होते।

इसके अतिरिक्त वृक्ष दृष्टान्त द्वारा भी रेणुकभगवत्पाद ने अविकृतपरिणामवाद को सिद्ध किया है—

पत्रशाखादिरूपेण.......शिव एको विराजते।।१।।

इस कारिका की व्याख्या भी मरितोण्टदाचार्य ने इस प्रकार से किया है— यद्वत् वृक्ष, कालशक्ति के सहयोग से विकृति के अनुभव बिना अपने आभ्यन्तर में विलीन स्वविजातीय पत्र-पुष्पप्रभृति नानाभेद से भिन्नरूपों में भासित होता है। तद्वत्

---

१. सि० शि० १०।५, पृ० १८८.
२. सि० शि० १०।९, पृ० १८९.

स्वाविजातीयपत्रपुष्पादिभेदविशिष्टत्वेन भाति, तथा शिव एव स्वसमवेतशक्तितादात्म्यक्रोडीकृतभूम्यादिरूपेण प्रतिस्फुरणगत्या भातीत्यर्थः। तत्र धृत्या धरणिः, करुणया जलम्, उज्ज्वलतया तेजः, परमानन्दस्पन्देन वायुः, चिद्व्याप्त्या व्योम, चितिसंकोचचित्तविशिष्टो जीव इति विवेकः"[1] इति।

ननु वृक्षस्य सावयवत्वात् तस्य पत्रशाखादिरूपेण परिणामसम्भवेऽपि परशिवस्य निरवयवत्वात् कथं तस्य विश्वात्मना परिणामः? इति चेन्मैवम्, वीरशैवसिद्धान्ते परशिवनिष्ठशक्तेरेव विश्वात्मना परिणामित्वस्वीकारान्न परशिवब्रह्मणः परिणामित्वम्। अतः शक्त्यादिपृथिवीपर्यन्तस्य सकलतत्त्व-समुदायस्य—"शक्तिरस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः" इत्यागमेन शक्तिरूपत्वं प्रतिपादितम्। किञ्च,

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्।।[2]

---

शिव ही अपने अन्दर विद्यमान शक्ति के तादात्म्य से स्वाङ्कगत भूमि-प्रभृति स्वरूपों में भी प्रविभासमान होते हैं। एतदर्थ तेन तेन रूपेण प्रस्फुरणमात्र से वह स्वयं को प्रगट कर लेते हैं। प्रभु की धृति से धरणि, करुणा से जल, औज्ज्वल्य से तेजस्, परमानन्दस्पन्द से वायु, चिद् (शक्तिविशेष) की व्याप्ति से व्योम तथा चितिशक्ति के संकोच से बने चित्त से विशिष्ट जीव का उल्लासन होता है— यह प्रविविक्तावस्था है।

जिज्ञासा होती है— वृक्ष तो सावयव होता है अतः उसका पत्रशाखादि-रूपों में उसका परिणाम सम्भव होने पर भी परशिव निरवयव है ऐसी स्थिति में उनका विश्वरूप में परिणाम कैसे सम्भव हो सकता है।

उपर्युक्त जिज्ञासा का समाधान है— वीरशैव सिद्धान्त में परशिव में आश्रित शक्ति की ही विश्वरूप में परिणामिता स्वीकार्य है अतः परशिव (ब्रह्म) की परिणामिता का आपादन नहीं किया जा सकता है। अतएव शक्ति से लेकर पृथिवीपर्यन्त समस्त-तत्त्व व्रात को आगम-शास्त्रकारों ने शक्तिरूपतया प्रतिपादित किया है। तद्यथा—

"शक्तिरस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः।।"½।।

वेदश्रुति ने भी सम्पूर्ण विश्व को शक्तिस्वरूप प्रतिपादित किया है। तद्यथा—

मायान्तु प्रकृतिं................................ जगत्।।१।।

---

१. सि० शि० १०।९ तत्त्वप्रदीपिकाव्याख्या, पृ० १८९.
२. श्वे० उ० ४।१०.

इति भगवती श्रुतिरपि विश्वस्य शक्तिरूपत्वमुक्तवती। इयं च शक्तिः

विमर्शाख्या परा शक्तिर्विश्ववैचित्र्यकारिणी।
यस्मिन् प्रतिष्ठितं ब्रह्म तदिदं विश्वभाजनम्।।
अन्तःकरणरूपेण जगदङ्कुररूपतः।
यस्मिन् विभाति चिच्छक्तिर्ब्रह्मभूतः स उच्यते।।
यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा।।[१]

इत्यादिश्रीरेणुकभगवत्पादोक्त्या परशिवापृथग्भूतेति तदपृथक्सिद्धायाः कार्यरूपाया अपि परशिवापृथक्सिद्धिसम्भवात् सम्भवत्येव परशिवस्य जगद्रूपेण परिणामः।

## शक्तिविशिष्टपरशिवस्य जगदुभयकारणत्वम्

उपर्युक्तप्रमाणैः शक्त्यविनाभावमापन्ने परशिवे जगतो निमित्तोपादानकारणत्वं समन्वितमित्यत्र न कोऽपि विवादः। ननु सर्वैरपि चिद्रूपस्येश्वरस्य निमित्तकारणत्वमेवाङ्गीक्रियते, नहि घटं निर्मिमाणः कुलालः स्वयमेव

---

यह शक्ति परशिव से अपृथग्भूता है। तदभिन्नाभिन्नन्याय से अपृथग्भूत विश्वप्रपञ्च भी परशिव से अपृथग्भूत विश्वप्रपञ्च भी परशिव से अपृथक्सिद्ध है। अतएव विश्वप्रपञ्च को शिव का परिणाम भी कहा जाना अनुपयुक्त नहीं है। आचार्यश्रीरेणुकभगवत्पाद ने सुस्पष्ट कहा है—

विमर्शाख्या .............................विश्वभाजनम्।।१।।
अन्तःकरणरूपेण ...........................उच्यते।।२।।
यथा चन्द्रे .......................................स्थिरा।।३।।

### शक्तिविशिष्टपरशिव ही जगत् के उपादान एवं निमित्तकारण हैं

उपर्युक्त आगम-प्रमाणों से शक्ति के अविनाभाव को प्राप्त परशिव में जगत् के प्रति अभिन्ननिमित्तोपादानकारणता होने में कुछ भी विवाद नहीं है। यह वीरशैवमत-सिद्ध-राद्धान्त है। जिज्ञासा उदित होती है कि नैयायिक प्रभृति दार्शनिकों ने चिद्रूप ईश्वर की निमित्तकारणता ही स्वीकार की है। लोक में भी देखा जाता है कि घट को

---

१. सि० शि० २०।२-४, पृ० २०१-२०२.

मृत्पिण्डीभूय घटं करोति, तस्मान्निमित्तभूतस्य परशिवस्य कथमुपादानत्वमपि संगच्छते? इति चेन्मैवम्, "विश्वाधिको रुद्रो महर्षिः" इत्यादिना यथा विश्वाधिकत्वेन परमात्मनो निमित्तत्वमवगम्यते, तथा "सर्वं खल्विदं ब्रह्म"[१], ""सर्वो वै रुद्रः"[२] इत्यादिना तत्र प्रकृतित्वविश्वरूपत्वस्यापि श्रवणात्। अत एव श्रीरेणुकभगवत्पादाचार्याः—

यस्मादेतत् समुत्पन्नं महादेवाच्चराचरम्।
तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः।।
यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः।
तथा शिवात् समुत्पन्नं शिव एव चराचरम्[३]।।

इति मृदस्तन्तूनां चोपमानेन परशिवस्य जगदुपादानत्वम्, तथा—

जगत् सिसृक्षुः प्रथमं ब्रह्माणं सर्वदेहिनाम्।
कर्तारं सर्वलोकानां विदधे विश्वनायकः[४]।।

---

बनाने वाला कुम्भकार स्वंय मृत्पिण्ड बनकर घट को नहीं निर्मित करता। अतः निमित्तभूत परशिव की निमित्तकारणता समुचित है न कि उनकी उपादानकारणता भी।

उपर्युक्त जिज्ञासा का समाधान है— श्रुति-प्रमाणों के आधार पर शिव में निमित्तकारणता के साथ उपादानकारणता की अविरोधेन सिद्धि होती है। तद्यथा— "विश्वाधिको रुद्रो महर्षिः" इत्यादि प्रमाणों द्वारा परमात्मा के विश्वाधिक होने से उनकी निमित्तकारणता विदित एवम् उपपन्न होती है। तद्वत् "सर्वं खल्विदं ब्रह्म", "सर्वो वै रुद्रः" इत्यादि श्रुतिप्रमाणों के बल पर शिव में जगत् के प्रति उपादानकारणता एवम् विश्वरूपता भी विदित होती है। अतएव श्रीरेणुकभगवत्पाद ने विशदता के साथ शिव की जगत् के प्रति उपादानकारणता एवम् निमित्तकारणता को प्रतिष्ठापित किया है। तद्यथा—

यस्मादेतत् समुत्पन्नं..........शिव एव चराचरम्।।२।।

उपर्युक्त श्लोकों में मृद् एवं तन्तु के दृष्टान्त से परशिव की उपादानकारणता प्रतिपादित की गई है—

जगत्सिसृक्षुः प्रथमं..........विदधे विश्वनायकः।।१।।

---

१. छा० उ० ३।१४।१.
२. महाना० १०।११.
३. सि० शि० १०।२, ४; पृ० १८७.
४. सि० शि० २।१४, पृ० १५.

इत्यत्र तस्यैव निमित्तकारणत्वं च प्रतिपादयामासुः। किञ्च, "यथोर्णनाभिः सृजते गृह्णते च"[१] इति श्रुतिरपि यथोर्णनाभिः स्वयं निमित्तोपादानत्वमापन्नः स्वशरीरात् तन्तुजालं सृजति गृह्णाति च, तथा परशिवोऽपि निमित्तोपादानतामापन्नः स्वस्मादविनाभूतया पराशक्त्या सर्वप्रपञ्चं सृजति संहरति चेत्यभिन्ननिमित्तोपादानत्वं समर्थयति।

अपरञ्च, छान्दोग्ये एकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञातम्। "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्"[२] इति तदुपपादकमृत्पिण्ड-दृष्टान्तानुरोधेन ब्रह्मणो निमित्तमात्रत्वे तद्विज्ञानेन सकलप्रपञ्चविज्ञानं न सम्भवति। कुलालज्ञानेन हि घटादिकार्यं न ज्ञायते, किन्तु तदुपादानमृत्पिण्डज्ञानेन। अतो निमित्तभूतस्य परशिवस्य स्वापृथक्सिद्धशक्तिपरिणामभूतसर्वप्रपञ्चोपादानत्वं निष्प्रत्यूहम्।

---

लोक में भी अभिन्ननिमत्तोपादानकारणता देखी जाती है। स्वयंश्रुति– "यथोर्णनाभि: सृजते गृह्णते च" प्रतिपादित करती है— यद्वत् मकड़ी निमित्तकारण के साथ उपादानकारण बनती है, स्वशरीर से तन्तुजाल को बहिर्निःसृत करती है तथा पुन: उसे निगल लेती है। तद्वत् परशिव भी निमित्त एवम् उपादानकारण स्वयं से अविनाभूत पराशक्ति द्वारा सर्वप्रपञ्च की सृष्टि तथा संहार करते हैं। एतावता उनकी अभिन्न निमित्तोपादानता समर्थित होती है।

अन्य भी युक्ति विवेचनीय है— छान्दोग्य में एकविज्ञान से सर्वविज्ञान की प्रतिज्ञा की गई है— "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्।" इस प्रकरण में मृत्पिण्ड दृष्टान्त के अनुरोध से सुविदित होता है कि घटादि कार्यों का ज्ञान उनके उपादान मृत्पिण्ड के ज्ञान से ही होता है न कि कुलाल के ज्ञान से। अत: ब्रह्म की निमित्तकारणता द्वारा सकलप्रपञ्च के विज्ञान की सम्भावना नहीं की जा सकती। अत: निमित्तकारणता के साथ परशिव की उपादानकारणता भी निर्विवादरूप से मान्य है। इसकी उपपत्ति है— समस्त प्रपञ्च, शक्ति का परिणाम है तथा शक्ति, शिव से अपृथक्-सिद्ध है। एतावता जगत् के प्रति शिव की उपादानकारणता में किसी प्रकार का विघ्न नहीं है।

---

१. मुण्ड० १।१।७.
२. छा० उ० ६।१।४.

**सृष्टेर्विकासः**

तदेवं सूक्ष्मचिदचिद्रूपशक्तिविशिष्टस्य परशिवस्य कारणत्वं स्थूलचिदचिद्रूपशक्तिविशिष्टस्य प्रपञ्चस्य च कार्यत्वमिति सामान्यतः कार्यकारणभावो निरूपितः। अतः परं विशेषतः षट्त्रिंशत्तत्त्वरूपाणां शिवादिभूम्यन्तानां तत्त्वानां विकासक्रमो निरूप्यते।

तत्र तावद्वीरशैवसिद्धान्ते–१. शिवः, २. शक्तिः, ३. सदाशिवः, ४. ईश्वरः, ५. शुद्धविद्या, ६. माया, ७. कला, ८. विद्या, ९. रागः, १०. कालः, ११. नियतिः, १२. पुरुषः, १३. प्रकृतिः, १४. महान्, १५. अहङ्कारः, १६. मनः, १७. श्रोत्रम्, १८. त्वक्, १९. चक्षुः, २०. जिह्वा, २१. घ्राणम्, २२. वाक्, २३. पाणिः, २४. पादः, २५. पायुः, २६. उपस्थः, २७. शब्दः, २८. स्पर्शः, २९. रूपम्, ३०. रसः, ३१. गन्धः, ३२. आकाशः, ३३. वायुः, ३४. अग्निः, ३५. जलम्, ३६. पृथिवी चेति षट्त्रिंशत्तत्त्वान्यङ्गीक्रियन्ते। एतेषां तत्त्वानां मूलकारणं तु सूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिव एव। अत एव सिद्धान्तशिखामणौ–

---

**सृष्टि का विकास**

उपर्युक्त विवेचना से सामान्य कार्यकारणभाव सुविदित होता है–सूक्ष्म-चिदचिद्रूप शक्तिविशिष्ट परशिव कारण हैं एवं स्थूल-चिदचिद्रूप शक्ति-विशिष्ट प्रपञ्च कार्य है। इसके अनन्तर शिव से पृथिवीपर्यन्त ३६ तत्त्वों के विकासक्रम की निरूपणा की जाती है। वीरशैवमत में निम्नाङ्कित ३६ तत्त्वों का अङ्गीकार किया जाता है— १. शिव २. शक्ति ३. सदाशिव ४. ईश्वर ५. शुद्धविद्या ६. माया ७. कला ८. विद्या ९. राग १०. काल ११. नियति १२ पुरुष १३. प्रकृति १४. महान् १५. अहंकार १६. मनस् १७. श्रोत्र १८. त्वक् १९. चक्षुष् २०. जिह्वा २१. घ्राण २२. वाक् २३. पाणि २४. पाद २५. पायु २६. उपस्थ २७. शब्द २८. स्पर्श २९. रूप ३० रस ३१. गन्ध ३२. आकाश ३३. वायु ३४. अग्नि ३५. जल एवम् ३६. पृथिवी।

उपर्युक्त ३६ तत्त्वों के मूलकारण सूक्ष्मचिद्चिद्रूप शक्ति-विशिष्ट परशिव ही हैं। अतएव शिवयोगी शिवाचार्य ने सिद्धान्तशिखामणि ग्रन्थ के आरम्भ में स्तुतिव्याज से परशिव एवम् उनमें स्थित शक्ति को ३६ तत्त्वों के प्रति मूलकारण प्रतिपादित किया है। तद्‌यथा—

त्रैलोक्यसम्पदालेख्यसमुल्लेखनभित्तये।
सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः।।
यस्योर्मिबुद्बुदाभासः षट्त्रिंशत्तत्त्वसंचयः।
निर्मलं शिवनामानं तं वन्दे चिन्महोदधिम्।।[१]
सदाशिवमुखाशेषतत्त्वमौक्तिकशुक्तिकाम्।
वन्दे माहेश्वरीं शक्तिं महामायादिरूपिणीम्।।[२]

इत्यादिरूपेण ग्रन्थकारः शिवयोगिशिवाचार्यो ग्रन्थारम्भे स्तुतिव्याजेन परशिवस्य तन्निष्ठमूलशक्तेश्च षट्त्रिंशत्तत्त्वानां मूलकारणत्वं निरूपयामास। अयं परशिवः प्रपञ्चातीत इति व्यावहारिकपदार्थेषु षट्त्रिंशत्तत्त्वेषु तस्य गणना न क्रियते। तस्मात् सिद्धान्तशिखामणौ–"अस्ति सच्चित्सुखाकारमलक्षणपदास्पदम्"[३] इत्यारभ्य "अद्वितीयमनिर्देश्यं परं ब्रह्म सनातनम्"[४] इत्यन्तं तस्य विश्वोत्तीर्णत्वं प्रतिपाद्य "तत्र लीनमभूत् पूर्वं चेतनाचेतनं जगत्"[५] इति प्रलयावस्थायां विश्वस्य परशिव एव विलीनत्वमुक्तम्। तस्माद्यत्र विलीनमासीदिदं विश्वं सृष्टिकाले तस्मादेव बहिरायातीति परशिवस्य षट्शिंत्तत्त्वविलक्षणत्वं युक्तमेव।

---

त्रैलोक्यसम्पदालेख्य........महामायादिरूपिणीम्।।३।।

यतश्च परशिव विश्वप्रपञ्च से उत्तीर्ण हैं अतः व्यवहार में उपलब्ध ३६ तत्त्वों में उनकी गणना नहीं की जाती है। अतएव सिद्धान्तशिखामणि ग्रन्थ में "अस्ति सच्चित्सुखाकारमलक्षणपदास्पदम्।" से लेकर "अद्वितीयमनिर्देश्यं परं ब्रह्म सनातनम्।" पर्यन्त श्लोक वाक्यों द्वारा यद्वत् विश्वोत्तीर्णता प्रतिपादित की गई है तद्वत् "तत्र लीनमभूत् पूर्वं चेतनाचेतनं जगत्।" श्लोकोक्ति से प्रलयावस्था में परशिव में विश्व का विलय प्रतिपादित किया गया है। एवंच जिस शिव में विलीनतया स्थित यह विश्व सृष्टिकाल में उनसे बहिर्निःसृत होता है— ऐसे शिव ३६ तत्त्वों से विलक्षण हैं— यह सर्वथा उपयुक्त है।

---

१. सि० शि० १।१, ३; पृ० २.
२. सि० शि० २।२, पृ० ११.
३. सि० शि० २।३, पृ० ११.
४. सि० शि० २।६, पृ० १२.
५. सि० शि० २।७, पृ० १२.

### षट्त्रिंशत्तत्त्वानां विकासक्रमः

एतादृशे परशिवे सर्वैश्वर्यसम्पन्नस्य महाराजस्येव केवलावस्थायामरतिर्जाता। तादृशारतेर्निवृत्त्यर्थं तस्य लीलायां स्वाभाविकतया प्रवृत्तिरुन्मिषति। तदा "स ईक्षाञ्चक्रे"[१] "तदैक्षत बहु स्यां प्रजायेय"[२] इत्यादिश्रुत्युक्त्यनुसारेण 'इदं जगत् सृजेयम्' इतीच्छोत्पन्ना। एतादृशेच्छावशान्निस्तरङ्गे समुद्रे वायुसम्पर्केण किञ्चिद्विचलनमिव परमात्मनि किञ्चिदिव विक्रिया भवति। ईषच्चलनरूपोऽयं प्राथमिकोऽभियोगो विमर्शशक्तिरित्युच्यते। परशिवस्येच्छारूपाया विमर्शशक्तेः पुनराकारद्वयं विकसति। तत्रैकोऽन्तरङ्गभूतो ज्ञानपदवाच्यः, द्वितीयश्च बाह्यः क्रियाशब्दवाच्यः। तदेवमाहत्य विमर्शशक्तिरिच्छा, ज्ञानम् क्रिया चेत्याकारत्रयं धारयति। तदुक्तं श्रीरेणुकभगवत्पादैः–

गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी।
तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा[३]।। इति।

---

### ३६ तत्त्वों का विकासक्रम

एतादृश परशिव में सर्वैश्वर्यसम्पन्न महाराज की तरह केवलावस्था (एकाकिता) में अरति उत्पन्न होती है। उस अरति की निवृत्ति हेतु लीला में उनकी स्वाभाविक प्रवृत्ति उन्मिषित होती है। एवंच उनकी इच्छा जागृत होती है— मैं इस जगत् की सृष्टि करूँ। तद्यथा— "स ईक्षाञ्चक्रे।" "तदैक्षत बहु स्यां प्रजायेय।" इत्यादि।

एतादृश इच्छा के वशीभूत परमात्मा में ईषत् स्पन्द उदित होता है यद्वत् निस्तरङ्ग समुद्र में वायुसम्पर्क से स्पन्दायमानता समुदित होती है। यह ईषच्चलन प्रथम प्रवृत्त क्रिया है जिसे शास्त्रकारों ने विमर्श शक्ति की संज्ञा से विभूषित किया है। परशिव की इच्छास्वरूपा विमर्श शक्ति से द्विविध आकार विकसित होता है। अन्तरङ्गभूत प्रथम आकार को ज्ञानशक्ति कहा जाता है तथा बहिरङ्गभूत द्वितीय आकार को क्रियाशक्ति। यदि हम इसे मिलित रूप में देखें तो यह पाते हैं कि विमर्शशक्ति निर्विभाग है तथा वह सविभाग बनकर त्रिविध आकार को ग्रहण करती है— इच्छा, ज्ञान एवं क्रिया।

श्रीरेणुक भगवत्पाद ने कहा है—

गुणत्रयात्मिका शक्तिः............तस्मिन् वस्तुत्रयाभिधा।।१।।

---

१. प्रश्नो० ६।३।
२. छा० उ० ६।२।३.
३. सि० शि० ५।३९, पृ० ६५.

अत्रेदमाकूतम्—विमर्शशक्तेरवस्थाद्वयं भवति। तत्रैका 'अविभागपरामर्शा', द्वितीया 'विभागपरामर्शा' इति। सृष्टेः प्रागियं विमर्शशक्तिः 'मयूराण्डरसन्यायेन', अर्थात् यथा मयूराण्डरसे भाविपक्षिशावकस्य पादपक्षवर्णवैचित्र्यादिर्विभागेन न दृश्यते, तथा सृष्टिकारणीभूतेच्छा–ज्ञान–क्रियाशक्तिविभागं विनैव तिष्ठति। इयमेवा-विभागपरामर्शदशेत्युच्यते। सृष्ट्युन्मुखावस्थायां चेयमेवेच्छाज्ञान-क्रियारूपेण परिणमत इति सेयमवस्था विभागपरामर्शदशेत्युच्यते[1]। सृष्ट्युन्मुखीभूतात् परशिवात् प्रथममिच्छादिशक्तित्रयस्योत्पत्तिरभवदित्यागमेऽप्युक्तम्। तथाहि—

**अनादिनिधनाच्छान्ताच्छिवात् परमकारणात्।**
**इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया।।**
**तयोत्पन्नानि भूतानि भुवनानि चतुर्दश[2]।** इति।

ननु तत्त्वगणनायां 'शिवः, सदाशिवः' इति गणनायाः पूर्वं ततः प्रथमोत्पन्नानामुपर्युक्तानां शक्तित्रयाणां गणना कथं न कृता? इति चेन्मैवम्, यथा सांख्यनये न कार्योपादानत्वं प्रकृतित्वम्, किन्तु तत्त्वान्तरोपादानत्वमित्यङ्गीक्रियते,

---

यहाँ निगूढ़ विषय यह है— विमर्शशक्ति की द्विविध अवस्था होती है— १. अविभागपरामर्शा एवम् २. विभागपरामर्शा। सृष्टि से पूर्व यह विमर्शशक्ति मयूराण्डरसवत् स्थित रहती है। अर्थात् मयूराण्डरस में भावी पक्षी के पैर, पंख विचित्र रूप इत्यादि विभाग दृष्ट नहीं होते हैं। तद्वत् विमर्श शक्ति, विभाग (इच्छा, ज्ञान, क्रिया) के विना ही परशिव में स्थित रहती है। इसे शास्त्रकारों ने अविभागपरामर्शदशा-शब्द से प्रतिपादित किया है। जब लीला-हेतुक सृष्टि की उन्मुखता उदित होती है तब यह विमर्शशक्ति इच्छा, ज्ञान एवं क्रिया रूप में परिणत होकर उपस्थित होती है। इसे शास्त्रकारों ने विभाग परामर्श दशा शब्द से अभिहित किया है। आगम-शास्त्र में स्पष्टतया प्रतिपादित है कि सृष्टि के लिए उन्मुख शिव से इच्छा ज्ञान एवं क्रियाशक्ति की उत्पत्ति होती है। तद्यथा— अनादि निधनाच्छान्तात्...........भुवनानि चतुर्दश।।१।।

यहाँ यह जिज्ञासा स्वरसतः उदित होती है— तत्त्वगणना के प्रसङ्ग में शिव, शक्ति, सदाशिव की गिनती के पूर्व त्रिविध शक्ति की गणना क्यों नहीं की जाती? इस जिज्ञासा का समाधान यह है—

यद्वत् सांख्यसिद्धान्त में तत्त्वान्तर के उपादान को प्रकृति शब्द से परिभाषित

---

१. प्र० पा० भा०, पृ० २४४.
२. वै० सू० ५।२।१३.

तथा वीरशैवदर्शनेऽपि परिणामसामान्यस्य न तत्त्वब्देन व्यवहारः, किन्तु स्वतन्त्रं वस्त्वन्तरोपादानभूतं द्रव्यमेव तत्त्वशब्देन व्यवह्रियते। तस्मादुपर्युक्तशक्तित्रयं न स्वतन्त्रं द्रव्यम्, किन्तु परशिवस्वरूपभूतमेव, परशिवस्य शक्तिविशिष्टत्वाङ्गीकारात्।

**शक्तीनां क्रमविचारः**

ननु जानाति, इच्छति, यतते, करोति इत्येव क्रमो युक्तः, विनैव ज्ञानमिच्छाया अनुदयात्। तस्मात् कथं प्रथमत इच्छाशक्तेरुदय इत्युक्तम्? इति चेन्मैवम्, यद्यपि स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वमिति

---

किया जाता है न कि कार्योपादान को, तद्वत् वीरशैवदर्शनसिद्धान्त में भी परिणामसामान्य को तत्त्वशब्द से व्यवहृत नहीं किया जाता प्रत्युत वस्त्वन्तर के उपादान द्रव्य (स्वतन्त्र) को तत्त्व शब्द से व्यवहृत किया जाता है। अत: त्रिविध शक्ति (इच्छा, ज्ञान एवं क्रिया) स्वतन्त्र द्रव्य नहीं है अपितु वह परशिव का स्वरूपभूत ही है। सिद्धान्त में परशिव को शक्तिविशिष्ट रूप में स्वीकृत किया गया है।

**शक्तियों के क्रम का विचार–**

लोकवत् कतिपय न्यायादिशास्त्र में शक्तियों का क्रम निम्नाङ्कित रूप में सुघटित होता है एवं तद्वत् प्रतिपादित भी है— जानाति, इच्छति, यतते एवं करोति। यह क्रम समीचीन भी प्रतीत होता है क्योंकि ज्ञान के बिना इच्छा का उदय नहीं होता।

एतावता यह जिज्ञासा स्वारसिक रूप से उदित होती है— आगमिकों ने इच्छति के अनन्तर जानाति को किस युक्ति के आधार पर क्रमान्वित करते हैं।

इस जिज्ञासा का समाधान यह है— नैयायिकों ने कर्तृत्व को परिभाषित करते हुए प्रतिपादित किया है— स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम्। अर्थात् घट के प्रति कर्ता रूप से कारण कुलाल होता है तथा वह घट के उपादान कारण कपाल के प्रत्यक्षज्ञान से सम्पन्न होने के कारण ही उसके द्वारा घट बनाने (उत्पन्न करने) की इच्छा उसमें उदित होती है। यह लोकव्यवहार के अनुरूप भी है। किन्तु यह नैयायिकों का क्रम, लोकक्रम से व्युत्पत्ति प्रदान कर श्रौतक्रम की ओर प्रवृत कराने हेतु प्रतिपादित हुआ है। हमें श्रौतक्रम का अन्वेषण करने पर इच्छा के अनन्तर ज्ञान की उपादेयता के क्रम का औचित्य सुविदित होता है। तद्यथा— "सोऽकामयत, बहुस्यां

---

१. सि० शि० ५।३९, तत्त्वप्रदीपिकाव्याख्या, पृ० ६५-६६.

२. शि० मञ्ज०, पृ० ३४.

नैयायिकाः प्रतिपादयन्ति, तथापि नैयायिकानामयं क्रमो न श्रौतः। श्रुतिस्तु– "सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत"[१] इति ब्रह्मणः सृष्टिक्रमे 'सोऽकामयत' इतीच्छाम्, ततः 'स तपोऽतप्यत' इति स्रष्टव्यवस्तुविषयकं परिशीलनरूपं ज्ञानम्, ततः पुनः 'इदं सर्वमसृजत' इति क्रियां च प्रतिपादितवती। तस्मात् 'इच्छा, ज्ञानम्, क्रिया' इत्येव श्रुतिसम्मतः क्रमः।

**१. शिवतत्त्वम्**–अधुना क्रमप्राप्तेषु षट्त्रिंशत्तत्त्वेषु शिवतत्त्वमाद्यम्। अतस्तत्स्वरूपं विचार्यते। उपर्युक्तेच्छाशक्त्यन्तरङ्गभूतं ज्ञानांशानुप्रविष्टं परशिवचैतन्यमेव शिवाभिधं तत्त्वं भवति। इदमेव सकलजगन्निमित्तकारणभूतम्। शिवतत्त्वमेव शिवः, नीलकण्ठः, चन्द्रशेखरः, त्रिलोचन इत्यादिनामभिर्व्यवह्रियते। सगुणरूपत्वादिदमेव मुमुक्षूपास्यं भवति। सिद्धान्तशिखामणावस्य स्वरूपमेवमुपवर्णितम्–

**शिवाभिधं परं ब्रह्म जगन्निर्मातुमिच्छया।**
**स्वरूपमादधे किञ्चित् सुखस्फूर्तिविजृम्भितम्।।**

---

प्रजायेयेति, सतपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत।" इस सृष्टिव्याख्यापरक श्रुति में सर्वप्रथम इच्छा का क्रम प्राप्त होता है— "सोऽकामयत।" तदनन्तर स्रष्टव्यवस्तु-विषयक परिशीलन रूप (ज्ञान) तपस् का क्रम प्राप्त होता है— "सतपोऽतप्यत।" तत्पश्चात् क्रियाशक्ति का क्रम प्रतिपादित है— "इदं सर्वमसृजत।" एतावता सुविदित होता है— श्रुतिसम्मत क्रम है— इच्छति, जानाति एवम् करोति।

**१. शिवतत्त्व–** ३६ तत्त्वों के क्रम में प्रथम है— शिवतत्त्व। अतः प्राथम्येन उनका स्वरूप विवेचनीय है। परशिव, परम अन्तरङ्ग इच्छाशक्ति के द्वार से ज्ञानशक्ति में प्रविष्ट होने मात्र से शिवसंज्ञक तत्त्वरूप में वेदनीय होते हैं। यह शिवतत्त्व ही सम्पूर्ण जगत् के स्रष्टा होने के कारण निमित्त कारण है। इसके अधिष्ठाता चैतन्य, अनेक (शिव, नीलकण्ठ, चन्द्रशेखर तथा त्रिलोचन) प्रभृति नामों से लोक एवं शास्त्र में प्रथित हैं। ये ही सगुण रूप होने से मोक्ष चाहने वालों के उपास्यरूप में प्रतिपादित हैं। इनका स्वरूप सिद्धान्तशिखामणि में विशदता के साथ वर्णित है। तद्यथा—

---

१. तै० उ० २।६.

निरस्तदोषसम्बन्धं निरुपाधिकमव्ययम्।
दिव्यमप्राकृतं नित्यं नीलकण्ठं त्रिलोचनम्।।
चन्द्रार्धशेखरं शुद्धं शुद्धस्फटिकसन्निभम्।
शुद्धमुक्ताफलाभासमुपास्यं गुणमूर्तिभिः।।[१]इति।

२. शक्तितत्त्वम्–उपर्युक्तेच्छाशक्तेर्बहिरङ्गभूतो यः क्रियांशः, तदनुप्रविष्टं परशिवचैतन्यमेव शक्तितत्त्वमित्युच्यते। इयमेव शक्तिः सदाशिवादिभूम्यन्तानां तत्त्वानामुपादानकारणमित्युच्यते। तदुक्तं सिद्धान्तशिखामणौ–

सदाशिवमुखाशेषतत्त्वमौक्तिकशुक्तिकाम् ।
वन्दे माहेश्वरीं शक्तिं महामायादिरूपिणीम्।।[२]इति।

३. सदाशिवतत्त्वम्–उपर्युक्तं शक्तितत्त्वमेव स्वेच्छाशक्त्यन्तरङ्गभूत-ज्ञानशक्त्युद्रेकावस्थां प्रविश्य जलाधिवासितचणकादिवत् पूर्वावस्थावैलक्षण्ये-नाङ्कुरायमाणेदन्ताप्रथनरूपं गर्भावरकवत् स्वाहन्तयाऽऽच्छाद्य वर्तमानविश्व-स्फुरणरूपं सदाशिवतत्त्वमित्युच्यते। अस्यैव सादाख्यं रुद्रतत्त्वमिति वा नाम्ना व्यवहारो दृश्यते।

---

शिवाभिधं परं ब्रह्म...........उपास्यं गुणमूर्तिभिः।।३।।

**२. शक्तितत्त्व–**

इच्छाशक्ति का बहिरङ्ग क्रियाशक्त्यंश है। तदनुप्रविष्ट परशिव, शक्तिसंज्ञक तत्त्वरूप में वेदनीय होते हैं। इस तत्त्व को सदाशिव से लेकर भूमिपर्यन्त २४ तत्त्वों का उपादानकारण माना जाता है। सिद्धान्तशिखामणि ग्रन्थ में सुस्पष्ट कहा गया है—

सदाशिवमुखाशेष........महामायादिरूपिणीम्।।१।।

**३. सदाशिवतत्त्व–**

स्वयं शक्तितत्त्व, स्वेच्छाशक्ति के अन्तरङ्ग ज्ञानशक्ति की उद्रेकावस्था में प्रविष्ट होकर जल में भिगोए गये चणक के पूर्वावस्था से विलक्षण अङ्कुरणस्वरूप इदन्ताप्रथन को (गर्भावरणवत्) अपनी अहन्ता से आच्छादित कर विश्वस्फुरणात्मा होकर ''सदाशिवतत्त्व'' की संज्ञा से विभूषित होता है। इसके पर्याय नाम प्रसिद्ध हैं— सादाख्य एवं रुद्रतत्त्व।

१. सि० शि० २।८-१०, पृ० १३.
२. सि० शि० २।२, पृ० ११.

**४. ईश्वरतत्त्वम्**–तच्छाक्तितत्त्वमेव स्वक्रियाशक्त्युद्रेकदशां प्रविष्टं सत् कृतवस्तुवदङ्कुरितमिदन्तारूपं स्वाहन्तयाऽऽच्छाद्य स्थितं विश्वस्फूर्तिमयमीश्वरतत्त्वं भवति। अत्रेदमवधेयम्–जगदुपादानभूता शक्तिर्वर्तमानविश्वस्फुरणरूपतया सदाशिवावस्थां भजते। जगदङ्कुरितावस्थायां सैव शक्तिः समुद्भूतविश्वस्फूर्तिरूपतयेश्वरावस्थां भजते। क्षेत्रे यदा बीजं निपतति तदानीं तत् प्रागङ्कुरायते, अनन्तरमङ्कुरितं भवति, क्रमेणाङ्कुरमुपलभ्यते, एवं शक्तिबीजेऽपि तादृशा विकाराः सम्भाव्यन्ते। सृष्टिक्रमालोचनावसरे ज्ञानप्राधान्येन या शक्तिः सदाशिवावस्थां भजते, सैव शक्तिर्विचिन्तितक्रमेण कार्यं साधयितुं क्रियाप्राधान्येनेश्वरावस्थां भजते। इदमीश्वरतत्त्वमेव नारायणः' इत्यप्युच्यते।

**५. शुद्धविद्यातत्त्वम्**–सदाशिवेश्वरावस्थानन्तरं शक्तितत्त्वं शुद्धविद्यातत्त्वरूपेण परिणमते। अस्यामवस्थायां 'अहमेवेदं जगत्' इति सागरतरङ्गन्यायेन क्रियाप्रधानेदन्ताया ज्ञानप्रधानाहन्तायाश्चैक्यप्रतिपत्तिः संजायते।

---

**४. ईश्वरतत्त्व–**

उपर्युक्त शक्तितत्त्व ही निजक्रियाशक्ति के उद्रेक की अवस्था को प्राप्त कर वस्तुरूप में अङ्कुरित इदन्ता को निज अहन्ता से आच्छादित कर स्थित विश्वस्फुरितमय होकर ईश्वरतत्त्व की संज्ञा से अभिहित होता है। यहाँ ध्यानपूर्वक सदाशिव एवम् ईश्वर के पारस्परिक स्वरूप की विवेचना अनिवार्य है। सम्पूर्ण जगत् का उपादानकारण शक्तितत्त्व विश्वस्फुरण के अङ्कुरण से युक्त होकर सदाशिव तत्त्व कहलाता है। तथा अङ्कुरित जगत्-स्वरूप में प्रविष्ट होने से वह शक्ति उद्भूत विश्वस्फूर्ति रूप में भासमान होकर ईश्वरतत्त्व कहलाता है। जब खेत में बीज बोया जाता है तब पहले वह अङ्कुर अवस्था में प्रविष्ट होता है फिर वह अङ्कुरित स्वरूप में प्रगट होता है। तदनन्तर वह अङ्कुरप्रधान रूप में प्रगट होता है। तद्वत् शक्तिबीज में भी तादृश क्रमिक रूप से ही जगत् स्फुरित होता है। सृष्टिक्रम में यह नितान्त आलोचनीय है कि एक ही शक्ति ज्ञान-प्राधान्य की स्थिति में सदाशिव रूप से अभिव्यक्त होती है तथा सुचिन्तित कार्य के सम्पादनार्थ क्रियाप्राधान्य की स्थिति में ईश्वर रूप से अभिव्यक्त होती है। इस ईश्वर तत्त्व को नारायण की संज्ञा से भी विभूषित किया जाता है।

**५. शुद्ध-विद्यातत्त्व–**

उपर्युक्त शक्तितत्त्व का प्राकट्य सदाशिव एवम् ईश्वर तत्त्व के अनन्तर शुद्धविद्यातत्त्व रूप में होता है। इस अवस्था में "अहमेवेदं जगत्" इस रूप में सागर-तरङ्ग न्याय से क्रिया-प्रधान इदन्ता एवम् ज्ञानप्रधान अहन्ता की ऐक्यप्रतिपत्ति

गुरूपदेशलब्धा शास्त्रज्ञानजन्या च निर्मला संवित् शुद्धविद्येत्युच्यते। अस्याः परिणामविशेष एव चतुर्मुखो ब्रह्मा। एवं च सागरस्य तरङ्गाणां जलमयत्वाद् यथाऽभेदस्तथा 'अहमिदं सर्वमिति' अहन्तायाः प्रपञ्चस्य च योऽभेदस्तज्ज्ञानं शुद्धविद्यया सम्पाद्यते। एतावत्पर्यन्तं प्रतिपादितानि शिवशक्ति-सदाशिवेश्वर-शुद्धविद्याख्यानि पञ्चतत्त्वानि शिवांशबाहुल्यात् शुद्धतत्त्वानीति कथ्यन्ते।

**६. मायातत्त्वम्**–उपर्युक्तशुद्धविद्यातत्त्वमेव मयूराण्डरसन्यायेन, अर्थात् मयूराण्डरसे यथा मायूरा भाविपादपक्षवर्णवैचित्र्यादयः सूक्ष्मरूपेण विद्यन्ते, तथा शुद्धविद्यायां भाविप्रपञ्चनिर्माणसामग्र्यः सूक्ष्मरूपेणावतिष्ठन्ते। सैव शुद्धविद्या परस्परं भेदबुद्धिप्राधान्येन मायेत्युच्यते। अतो माया नाम मयूराण्डरसवद् भाविप्रपञ्चसृष्ट्यनुगुणविचित्रानन्तशक्तिगर्भः शुद्धविद्यापरिणामः। इयमेव परमात्मनोंऽशे जीवे 'नाहमीश्वरः' इत्यादिभ्रमहेतुर्भवति। तस्मान्मायाशक्तिप्रभावेण शुद्धो जीवः संसारीत्युच्यते।

---

होती है। साधक को स्थूल से सूक्ष्म समावेश की यात्रा में गुरूपदेश एवं शास्त्रज्ञान से लम्भनीय निर्मल-संविद् शुद्धविद्या कहलाती है। इस शुद्धविद्या का परिणामविशेष ब्रह्मा (चतुर्मुख) हैं। एवंच सागर के तरङ्गों का जलमय होने से यद्वत् परस्पर अभेद होता है तद्वत् ''अहमिदं सर्वमिति'' इस अनुभूति में अहन्ता एवम् प्रपञ्च का पारस्परिक अभेद होता है। इसका ज्ञान शुद्धविद्या द्वारा सम्पादित होता है। शिव से लेकर शुद्ध विद्या तक जो ५ तत्त्व हैं उनमें शिवांश की बहुलता होती है अत: ये शुद्धतत्त्व कहलाते हैं।

**६. मायातत्त्व–**

मयूराण्डरसन्याय से शुद्धविद्या में भावी प्रपञ्च के निर्माण की सामग्री सूक्ष्मरूप से विद्यमान रहती है। यह शुद्धविद्या, परस्पर की भेदबुद्धि की प्रधानता होने पर माया कहलाती है। अत: शुद्धविद्या का परिणामविशेष माया कहलाता है। यह माया, पश्चाद्भावी प्रपञ्चसृष्टि के अनुगुण विचित्र अनन्तशक्तियों से आपूरित होती है। ये अनन्त शक्तियाँ माया में मयूराण्डरसवत् स्थित रहती हैं। यह माया ही परमात्मा के अंशभूत जीव में ''नाहमीश्वर:'' इत्येवमादि भ्रम के प्रति हेतु बनती है। एतावता यह सुविदित होता है कि मायाशक्ति के प्रभाव से शुद्ध (स्वभावत:) जीव भी संसारी बन जाता है।

**७-११. कलादिपञ्चतत्त्वानि**–परमात्मनोऽशस्य जीवस्य (पुरुषस्य) महेश्वराद्विभक्तत्वेन मायापहृतैश्वर्यवत्त्वात् तस्य सर्वकर्तृत्व-सर्वज्ञत्व-परिपूर्णत्व-नित्यत्व-व्यापकत्वाख्याः पञ्चशक्तयः संकोचं प्राप्य कला-विद्या-राग-काल-नियतिरूपेण व्यवह्रियन्ते।

१. तत्र सर्वकर्तृताशक्तिरेव किञ्चित्कर्तृतारूपमापद्य कलातत्त्वमित्युच्यते।

२. सर्वज्ञताशक्तिरेव किञ्चिज्ज्ञत्वमापद्य विद्यातत्त्वमित्यभिधीयते।

३. पूर्णताशक्तिरेवापूर्णतां प्राप्य स्रक्चन्दनवनितादिविषयासक्तिलक्षणं रागतत्त्वमित्युच्यते।

४. नित्यता ह्यनित्यतां प्राप्य भूतभविष्यद्वर्तमानरूपं कालतत्त्वं भवति।

५. व्यापकता ह्यव्यापकतां प्राप्य मयेदं कर्तव्यमिति नियमहेतुभूतनियतितत्त्वं भवति।

---

**७-११. कलादि तत्त्वपञ्चक–**

माया के प्रभाव से परमात्मा का अंश होने पर भी जीव, महेश्वर से स्वयं को विभक्त रूप से जानता है। ऐश्वर्य का माया द्वारा अपहृत होने से ५ शक्तियाँ (सर्वकर्तृत्व, सर्वज्ञत्व, परिपूर्णत्व, नित्यत्व एवं व्यापकत्व) संकुचित होकर जीव में विद्यमान रहती हैं। क्रमशः इनका अभिधान होता है— कला, विद्या, राग, काल एवं नियति।

१. प्रभु की सर्वकर्तृता शक्ति ही जीव में किञ्चत्कर्तृता रूप से स्थित होकर कलातत्त्व कहलाती है।

२. सर्वज्ञता शक्ति ही किञ्चिज्ज्ञता रूप से जीव में स्थित रहकर विद्यातत्त्व कहलाती है।

३. पूर्णता शक्ति ही अपूर्णता रूप से जीव में रहकर स्रक्, चन्दन, वनिता प्रभृति विषयों में आसक्ति को उत्पन्न करती है। यह राग तत्त्व कहलाती है।

४. प्रभुगत नित्यता जीव में माया-प्रभाव से अनित्यतारूप से विद्यमान रहती है। यह भूत, भविष्यद् एवं वर्तमान प्रभेदों में विभक्त होकर कालतत्त्व-संज्ञा से अभिहित होती है।

५. प्रभुगत व्यापकता जीव में अव्यापकता रूप से विद्यमान रहकर नियति तत्त्व कहलाती है। मुझे इस वस्तु की प्राप्ति हेतु यह करना आवश्यक है इस प्रकार के नियम में नियति हेतु होती है।

एतानि कलादिपञ्चतत्त्वानि जीवस्वरूपावरणहेतुत्वात् पञ्चकञ्चुकानीत्युच्यन्ते। अत एवैतानि पुरुषस्य बन्धकानि। एतैर्बद्धश्च जीवः (पुरुषः) संसरति।

१२. पुरुषतत्त्वम्–काष्ठयोगेन वह्नेर्विस्फुलिङ्गाविर्भाववत् परशिवस्येच्छाशक्तिवशाद् विभक्तः सन् मायाशक्तौ प्रविष्टो यः परशिवोंऽशः, स पुरुषतत्त्वमित्युच्यते। अतः संकुचितप्रकाशः पराधीनो न्यूनशक्तिकोऽयं पुरुषो महेश्वराद् विच्छिन्नत्वेन 'नाहमीश्वरः' इत्यात्मनि चिद्रूपेऽनात्मभावमारोपयति, तथैवानात्मनि देहे आत्मबुद्धिं परिभावयति। एतद् ह्याणवं मलम्। तत एव शुभाशुभवासनादूषितं कार्ममलं प्राप्नोति। तदानीमन्योन्याभावभेदलक्षणं मायिकं मलं च प्राप्तं भवति। एवंविधमलत्रयावृतत्वादयं पुरुषः संसारीत्यभिधीयते। एतानि मायादिपुरुषान्तानि सप्ततत्त्वानि शुद्धाशुद्धतत्त्वानीत्युच्यन्ते।

१३. प्रकृतितत्त्वम्–अधुनाऽशुद्धविश्वसृष्टिरुत्पद्यते। विश्वं सुखदुःखमोहात्मकमिति तदुपादानमपि तादृशमेव वक्तव्यम्। उपर्युक्तानि

---

उपर्युक्त कला प्रभृति ५ तत्त्व जीव के वास्तव स्वरूप का आवरण करते हैं अतः इन्हें कञ्चुक कहा जाता है। अतएव ये पुरुष के बन्धन-हेतु कहे जाते हैं। इन बन्धनों से बद्ध होकर जीव, संसार में भटकता रहता है।

**१२. पुरुष तत्त्व–** काष्ठ के साथ संयुक्त होने पर वह्नि से विस्फुलिङ्ग का आविर्भाव होता है। तद्वत् पर शिव की इच्छाशक्ति से प्रभु से विभक्त होकर मायाशक्ति में प्रविष्ट परशिव का अंश ही पुरुष तत्त्व कहलाता है। एवञ्च संकुचित प्रकाशस्वरूप तथा पराधीन होकर न्यूनशक्ति सम्पन्न पुरुष महेश्वर से विच्छिन्न होने के कारण "नाहमीश्वरः" इस प्रकार से चिद्रूप स्वात्मा में अनात्मभाव को आरोपित करता है। तद्वत् यह पुरुष अनात्मा (देहप्रभृति) में आत्मबुद्धि की भावना करता है यही आणवमल कहलाता है। आणवमलान्वित होने से ही पुरुष शुभाशुभ वासना से दूषित कार्ममल को प्राप्त करने हेतु विवश होता है। तदनन्तर अन्योन्यभाव (भेद) रूप मायिकमल से भी पुरुष में मालिन्य आता है। एवंविध त्रिविध मल से आवृत्त होकर यह पुरुष संसारी कहलाता है। मायातत्त्व से लेकर पुरुषतत्त्व पर्यन्त सात तत्त्वों को शुद्धाशुद्ध तत्त्व कहा जाता है।

**१३. प्रकृति तत्त्व–**

यहाँ से अशुद्ध सृष्टि (विश्व की) आरम्भ होती है। यतश्च विश्व, सुखदुःखमोहात्मक है। अतः उसका उपादान भी तादृश ही होना चाहिए। शिव से पुरुषपर्यन्त १२ तत्त्व

द्वादशतत्त्वानि त्रिगुणातीतानि, प्रपञ्चश्च त्रिगुणात्मकः। एवमुभयोः संघटकं द्रव्यमेव प्रकृतितत्त्वमित्युच्यते। कार्योन्मुखेच्छाशक्तिः प्रतिस्फुरणागत्या स्वगतज्ञानक्रियान्योन्याभावरूपायां मायाशक्तौ प्रविश्य सत्त्वरजस्तमोगुण-साम्यावस्थारूपिणी प्रकृतिर्भवति। जगद्रचनायां प्राधान्येनोपयुक्तत्वात् प्रकृतिः प्रधानमित्यप्युच्यते। इयं च प्रकृतिर्बुद्ध्यादिभूम्यन्तत्रयोविंशतितत्त्वानां मूलकारणं भवति।

**१४-३६. महदादित्रयोविंशतितत्त्वानि**–तत्राध्यवसायहेतुभूतं तत्त्वं महदित्युच्यते। अस्यैव बुद्धिरिति नामान्तरम्। अभिमानहेतुभूतं तत्त्वमहङ्कारः। संकल्पविकल्पहेतुभूतं तत्त्वं मनः। तदिदं बुद्ध्यहङ्कारमनस्त्रितयं सुखदुःखाद्यान्तरपदार्थावधारणकरणरूपत्वादन्तःकरणमित्युच्यते। एतत् त्रितयमिच्छाशक्तिप्रधानं भवति।

पूर्वोक्तं प्रकृतितत्त्वं ज्ञानशक्तिप्राधान्येन श्रोत्रत्वक्चक्षुःस्पर्शनघ्राणाख्य-पञ्चज्ञानेन्द्रियरूपेण परिणमते। एतानि चेन्द्रियाणि क्रमशः शब्दस्पर्श-

---

त्रिगुणातीत हैं तद्विपरीत प्रपञ्च त्रिगुणात्मक है। इन दोनों के मध्य संघटक द्रव्य ही प्रकृति तत्त्व कहलाता है। कार्य जगत् की सृष्टि हेतु उन्मुख इच्छा शक्ति प्रतिस्फुरण की गति से स्वगतज्ञान एवं क्रिया शक्ति के भेदावभासक मायाशक्ति में प्रविष्ट होकर सत्त्व, रजस् एवं तमस् = त्रिगुण की साम्यावस्था में परिणत होकर प्रकृति तत्त्व कहलाती है। जगत् की रचना में प्रधान रूप से उपयुक्त होने के कारण प्रकृति को प्रधानशब्द से भी कहा जाता है। यह प्रकृति २३ तत्त्वों (महत् से भूमि पर्यन्त) का मूलकारण है।

**१४-३६. महदादि २३ तत्त्वव्रात–**

अध्यवसाय (निश्चय) करने वाले तत्त्व को महत् कहा जाता है। इसका दूसरा नाम बुद्धि है। अभिमान (अहंकार) का हेतु अहङ्कारतत्त्व कहलाता है। संकल्प-विकल्प का हेतुभूत तत्त्व मनस् कहलाता है। ये तीन (महत्, अहंकार, मनस्) तत्त्व अन्तःकरण कहलाते हैं। क्योंकि सुख, दुःखादि आन्तर पदार्थों के निश्चय में ये करण की भूमिका का निर्वाह करते हैं। इन तीनों में इच्छाशक्ति की प्रधानता होती है। उपर्युक्त प्रकृतितत्त्व, ज्ञानशक्ति की प्रधानता से श्रोत्र, त्वक्, चक्षुष, रसन तथा घ्राण–५ ज्ञानेन्द्रिय रूप से परिणत होता है। ये ही इन्द्रियाँ बाह्य विषयों (शब्द, स्पर्श, रूप, रस तथा गन्ध) के ज्ञान में साधन होने से बाह्यकरण कहलाते हैं।

---

१. सां० त० कौ०, पृ० ११९-१२१.

रूपरसगन्धाख्यपञ्चबाह्यविषयाणां ज्ञानसाधनानि भवन्तीति बाह्यकरणानीत्युच्यते।

क्रियाशक्त्युद्रेकदशापन्नौन्मुख्यशक्तिविशिष्टचैतन्याद् रजोगुणप्रधानतया तदेव प्रकृतितत्त्वं वाक्पाणिपादपायूपस्थाख्यपञ्चकर्मेन्द्रियरूपेण परिणमते। एतानि पञ्च कर्मेन्द्रियाणि क्रमशो वचनादानगमनमलोत्सर्जनप्रजोत्पादाख्यपञ्चक्रियाणां साधनानि भवन्तीति कर्मेन्द्रियाणीत्युच्यन्ते। तदेवमेतत् करणत्रयोदशकं प्रकृतेरिच्छाज्ञानक्रियाशक्त्यात्मकमिति मन्तव्यम्।

अथ क्रियाशक्त्युद्रेकदशापन्नौन्मुख्यशक्तिविशिष्टचैतन्यादात्मनस्तमोगुण-प्रधानत्वेन शब्द-स्पर्श-रूप-रस-गन्धतन्मात्राण्युत्पद्यन्ते। सौक्ष्म्यातिशयादेतेषां नामानि तन्मात्राणीति यथाऽद्वैतवेदान्ते एतैः सूक्ष्मभूतैः सूक्ष्मशरीराणामुत्पत्तिः प्रतिपाद्यते, तथैवात्रापि प्रतिपाद्यत इति सात्र नोच्यते।

स्थूलभूतोत्पत्तिक्रमस्तु वेदान्त्याद्यपेक्षयात्र भिन्नरूपेण प्रतिपाद्यते। तथाहि तत्र तावत् श्रुतिः-"आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी"[१] इत्येवं क्रमश आकाशादीनामुत्पत्तिं प्रतिपादयति। तस्मात् तामसाहङ्कारात्

---

वह प्रकृति तत्त्व क्रियाशक्ति के उद्रेक से उन्मुखशक्ति से युक्त होकर ५ कर्मेन्द्रिय (वाक्, पाणि, पाद, पायु एवम् उपस्थ) रूपों में परिणत होता है। ५ क्रियाओं (वचन, आदान, गमन, मलोत्सर्ग तथा प्रजोत्पादन) के साधन होने से ये कर्मेन्द्रिय कहलाते हैं। एवञ्च कुल १३ करणों को प्रकृति की इच्छा, ज्ञान एवं क्रियाशक्ति स्वरूप माना जाता है।

क्रियाशक्ति की उद्रेक दशा में सृष्टि हेतु उन्मुख शक्ति से तमोगुण प्रधान (शब्द, स्पर्श, रूप, रस एवं गन्ध तन्मात्र ५ तन्मात्र उत्पन्न होते हैं। सूक्ष्मता के अतिशय होने से इन्हें तन्मात्र कहा जाता है। अद्वैतवेदान्त के समान सांख्यदर्शन में भी सूक्ष्मभूत (तन्मात्रों) से सूक्ष्मशरीरों की उत्पत्ति प्रतिपादित की गयी है। अतः इस प्रकरण में इसे दुहरायी नहीं गई है। स्थलभूतों की उत्पत्ति, वेदान्त प्रक्रिया से भिन्न है। यतश्च श्रुति "आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" के आधार पर आकाशादि की क्रमिक उत्पत्ति प्रतिपादित करती है। अतः यहाँ तामस अहंकार से शब्दतन्मात्र की एवं शब्दतन्मात्र से आकाश की सृष्टि मानी जाती है। तद्वत् आकाश से स्पर्शतन्मात्र की एवं स्पर्शतन्मात्र से वायु की

---

१. तै० उ० २।१।१.

शब्दतन्मात्रम्, तत आकाशः, आकाशात् स्पर्शतन्मात्रम्, ततो वायुः, वायो रूपतन्मात्रम्, ततस्तेजः, तेजसो रसतन्मात्रम्, ततो जलम्, जलाद् गन्धतन्मात्रम्, ततः पृथिवीति। एवं सत्येव पञ्चभूतेषु उत्तरोत्तरमेकैकगुणवृद्धिः सम्भवति। यद्यपि श्रुतौ तन्मात्राणि कण्ठतो नोक्तानि, तथाप्युत्तरत्रैकैक-गुणवृद्ध्यन्यथाऽनुपपत्त्या मध्ये मध्ये तन्मात्राणां शरीराणां तदुचितान्नपानादीनां चोत्पत्तिर्भवति।

तदेवं शक्तिविशिष्टः परशिवः शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वात्मना परिणामं प्राप्य लीलाविनोदमनुभवति। लीलाव्यापारान्ते च स्वशक्तिसंकोचेन समस्तं चराचरं विश्वं स्वात्मनि विलाप्य केवलावस्थामास्थाय तिष्ठति।

## प्रपञ्चस्य सत्यत्वम्

शिवशक्तिविलासरूपमिदं जगत् शिवशक्तिमयम्। अतः शिवशक्त्योरिव विश्वस्यापि सत्यत्वमेवाङ्गीक्रियते। अत एव श्रीरेणुकभगवत्पादाः—"शिवतत्त्वात्

---

सृष्टि होती है। वायु से तन्मात्र तथा तन्मात्र से तेजस् की एवं तेजस् से रस-तन्मात्र एवं रसतन्मात्र से जल की उत्पत्ति यद्वत् होती है तद्वत् जल से गन्धतन्मात्र एवं गन्ध तन्मात्र से पृथिवी की सृष्टि होती है। श्रुति एवं युक्ति के आधार पर ५ भूतों में उत्तरोत्तर एक-एक गुण की वृद्धि युक्तिसंगत होती है। यद्यपि श्रुतिवाक्य में तन्मात्रों का कथन शब्दतः प्राप्त नहीं है तथापि उत्तरोत्तर ५ भूतों में एक-एक गुण की वृद्धि, अन्यथा अनुपपन्न है अतः भूतोत्पत्ति के मध्य एक-एक तन्मात्र की सृष्टि का अभ्युपगम यौक्तिक है। उपर्युक्त ५ स्थूलभूतों से १४ लोक एवं तदन्तर्गत स्थूल शरीर एवं तदुचित अन्नपानादि की उत्पत्ति सिद्धान्तसम्मत है।

तदेवं निष्कर्षवचन प्राप्त होता है— शक्ति विशिष्ट पर शिव स्वयं ही ३६ तत्त्वों (शिव से लेकर पृथिवी पर्यन्त) के रूप में परिणत होकर लीलाविनोद करते हैं। लीलाव्यापार के उपसंहार हेतु ये ही, स्वशक्ति को संकोचित कर समस्त चराचर जगत् को स्वात्मा में विलीन कर केवलावस्था में सुप्रतिष्ठ होते हैं।

**प्रपञ्च की सत्यता—**

यह सम्पूर्ण जगत् शिव की शक्ति का विलास है अतः यह शिवशक्तिमय है। यथा शिव एवं तदाश्रित शक्ति सत्य हैं तद्वत् विश्वप्रपञ्च भी सत्य है। अतः श्रीरेणुकभगवत्पाद ने निम्नाङ्कित वचनों द्वारा शिव की जगन्मयता एवं जगत् की सत्यता

समुत्पन्नं जगदस्मान्न भिद्यते"[१], "तथा शिवात् समुत्पन्नं शिव एव चराचरम्"[२], "तस्माच्छिवमयं सर्वं जगदेतच्चराचरम्"[३],"निरस्तभेदसद्भावे शिवे विश्वं विराजते[४]" इति शिवस्य जगन्मयत्वं निरूप्य जगतः सत्यत्वमुद्घोषितवन्तः। शक्तिविशिष्टः शिवः स्वाविनाभूतशक्तेः सत्त्वादिगुणभेदेन भोक्ता, भोज्यम् प्रेरयिता चेति त्रिविधरूपेण परिणमते। तदुक्तं श्रीरेणुकाचार्यैः-

भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम्।
अखण्डे ब्रह्मचैतन्ये कल्पितं गुणभेदतः।।
अत्र प्रेरयिता शम्भुः शुद्धोपाधिर्महेश्वरः।
समिश्रोपाधयः सर्वे भोक्तारः पशवः स्मृताः।।
भोज्यमव्यक्तमित्युक्तं शुद्धतामसरूपकम्।[५] इति।

तदेवं शुद्धसत्त्वगुणप्राधान्येन शिवः प्रेरयितेति, मलिनसत्त्वगुणप्राधान्येन भोक्तेति, तमोगुणप्राधान्येन च भोज्यमिति कथ्यमानत्वादेकस्यैव

---

का उद्घोष किया है—

१. शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते।

२. तथा शिवात् समुत्पन्नं शिव एव चराचरम्।

३. तस्माच्छिवमयं सर्वं जगदेतच्चराचरम्।

४. निरस्तभेदसद्भावे शिवे विश्वं विराजते।

स्वयं शक्तिविशिष्ट शिव, निजशक्ति से सत्त्वादिगुणभेदकृत भोक्ता, भोज्य, प्रेरयिता–इन तीन भेदों में परिणत होते हैं। इनका स्वरूपप्रतिपादन श्रीरेणुकाचार्य ने निम्नाङ्कित रूप में किया है—

भोक्ता भोज्यं............शुद्धतामसरूपकम्।।२½।।

स्वयं शिव शुद्धसत्त्वगुण की प्रधानता से प्रेरयिता, मलिन सत्त्वगुण की प्रधानता से भोक्ता तथा तमोगुण की प्रधानता से भोज्य कहलाते हैं। एवञ्च एक ही शिव के

---

१. सि० शि० १०।३, पृ० १८७.
२. सि० शि० १०।४, पृ० १८७.
३. सि० शि० १०।६, पृ० १८८.
४. सि० शि० १०।८, पृ० १८९.
५. सि० शि० ५।४१-४३, पृ० ६८-६९.

त्रिविधरूपत्वाच्च वीरशैवदर्शने जीव-जगत्-शिवानां सत्यत्वमङ्गीक्रियते। भाष्यकाराः श्रीपतिपण्डिताराध्यभगवत्पादा अपि—

जीवः सत्यं जगत्सत्यं शिवः सत्यं स्वभावतः।
तयोरभेदः सत्यं वा क्रिमिभ्रमरयोरिव।।[1]

इत्यागमवचनोदाहरणेनापि शिव-जीव-जगतां सत्यत्वं व्यवस्थापितवन्तः। तस्माद् वीरशैवदर्शने "सर्वं खल्विदं ब्रह्म"[2], "सर्वो वै रुद्रः"[3] इत्यादिश्रुतिप्रामाण्येन मुख्यसमानाधिकरणसम्बन्धेनैव प्रपञ्चस्य शिवरूपत्वमङ्गीक्रियते।

तदेतावता सृष्टिविषयका वैदिकषड्दर्शनानां तथा सिद्धान्तशिखामण्युक्तवीरशैवदर्शनस्यचाभिमताश्च विचाराः पृथक् पृथग् विस्तरेण निरूपिताः।

एतेषां विचाराणां परस्परसाम्यवैषम्यरूपेणानुशीलनं समीक्षापरिच्छेदे विधास्यत इति शिवम्।

---

त्रिविध रूप होने से वीरशैवदर्शन में जीव, जगत् तथा शिव की सत्यता स्वीकृत है। भाष्यकार श्रीपतिपण्डिताराध्य भगवत्पाद ने निम्नाङ्कित आगमवचन के उदाहरण द्वारा शिव, जीव एवं जगत् की सत्यता को प्रतिष्ठापित किया है—

जीवः सत्यं.........क्रिमिभ्रमरयोरिव।।१।।

अभी तक सृष्टि के सन्दर्भ में छह वैदिक दर्शनों के साथ सिद्धान्त-शिखामणि में प्रतिपादित शैवदर्शन के सिद्धान्त पृथक्-पृथक् सविस्तार निरूपित किये गये हैं। आगामी समीक्षापरिच्छेद में इन सिद्धानों (विचारों) के साम्य एवं वैषम्य का अनुशीलन किया जायेगा।

।।इति शिवम्।।

***

---

१. ब्र० सू० श्रीकर० २।३।४०.
२. छा० उ० ३।१४।१.
३. महाना० १०।११.

नीलरूपस्य सत्त्वेन तत्सम्भवेऽपि चैतन्ये आरोपितरूपस्याप्यभावान्न तस्य प्रतिबिम्बः। ननु रूपरहितस्यापि शब्दस्य यद्वत्प्रतिध्वनिरूपेण प्रतिबिम्बः, तद्वदात्मनोऽपि स्यादिति चेन्न, नहि प्रतिध्वनिः शब्दस्य प्रतिबिम्बः, तस्याकाशगुणत्वात्। अत एव विद्यारण्यस्वामिभिः–

प्रतिध्वनिर्वियच्छब्दो वायौ बीसीतिशब्दनम्।
............................वह्नौ भुगुभुगुध्वनिः।।
............................जले बुलुबुलुध्वनिः।
भूमौ कडकडाशब्दः..........................[२]।।

इति पञ्चीकरणप्रक्रियया पञ्चभूतेषु भिन्नभिन्नशब्दं प्रतिपाद्य प्रतिध्वनेर्वियच्छब्दत्वं प्रतिपादितम्। प्रतिध्वनेः शब्दस्य प्रतिबिम्बत्वे आकाशगुणोच्छेदप्रसङ्गः[३]। तस्माज्जीवो नाम नाभासो नापि प्रतिबिम्बः, किन्तु यथा महाकाश एव घटोपाधिना घटाकाशः कथ्यते, तथा ब्रह्माप्यविद्यावच्छेदेन जीव इति व्यवहृतं

---

चैतन्य में आरोपित रूप का भी अस्तित्व नहीं है अतः उसका कथमपि प्रतिबिम्ब सम्भव नहीं है। द्वितीय जिज्ञासा उदित होती है— शब्द में रूप नहीं रहता किन्तु नीरूप शब्द का भी प्रतिध्वनिस्वरूप प्रतिबिम्ब लोकविदित है। तद्वत् आत्मा का भी (नीरूप होने पर भी) प्रतिबिम्ब होना समुचित है।

इसका समाधान है— प्रतिध्वनि को शब्द का प्रतिबिम्ब मानना अनुचित है। प्रतिध्वनि तो आकाश का गुण है। अतएव श्रीविद्यारण्यस्वामीजी ने कहा है—

प्रतिध्वनिर्वियच्छब्दो वायौ बीसीति शब्दनम्।
......ब्रह्मौ भुगुभुगुध्वनिः।।१।।
.....जले बुलुबुलुध्वनिः।
भूमौकडकडाशब्दः........।।२।।

उपर्युक्त कथन से पञ्चीकरण प्रक्रिया द्वारा पञ्चभूत में भिन्न भिन्न शब्द को आकारित कर प्रतिध्वनि को वियत् (आकाश) का शब्द (धर्म) माना है। यदि प्रतिध्वनि को शब्द का प्रतिबिम्ब स्वीकार करें तो आकाशगुण का उच्छेद अति-प्रसक्त होगा। अतः जीव न तो आभास है और न प्रतिबिम्ब। प्रत्युत यथा महाकाश घट-उपाधि से युक्त होकर घटाकाश कहलाता है तद्वत् ब्रह्म भी अविद्यावच्छेद से

---

१. पञ्च० २।३-५.
२. वृ० प्र०, पृ० ५००-५०२, सि० ले० सं०, पृ० १०८-१११.

अयं च अपवर्गः, निर्वाणम्, निःश्रेयसम्, मुक्तिः, कैवल्यमित्याद्यनेकनामभाग् भवति[१]। तत्र "अपकृष्टा वर्गा धर्मार्थकामा यस्मात् स अपवर्गः", "निर्गतो वाणस्तापो यस्मात् तन्निर्वाणम्", "नास्ति श्रेयो यस्मादधिकं तन्निःश्रेयसम्", यद्वा "निश्चितं श्रेयो निःश्रेयसम्", "मुच्यते सर्वैर्दुःखबन्धनैर्यत्र स मोक्षः", "केवलस्य भावः कैवल्यम्" इत्यादिपर्यायनामधेयानां व्युत्पत्त्या मोक्षस्य परमपुरुषार्थत्वं ध्वन्यते। अत एव भगवता कृष्णद्वैपायनेन—

इति संसारदुःखार्क-ताप-तापित-चेतसाम्।
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम्[२]।।

इति मोक्षस्योत्कृष्टता प्रदर्शिता। किञ्च—

अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम्।
सम्प्रमोदमलः कामो भूयः स्वगुणवर्जितः[३]।।

---

इस मोक्ष के अनेक पर्यायनाम हैं— अपवर्ग, निर्वाण, निःश्रेयस, मुक्ति, कैवल्य इत्यादि। इनमें अपवर्ग शब्द का व्युत्पत्तिलभ्य अर्थ है- जिसकी अपेक्षा धर्म अर्थ एवं काम (त्रिवर्ग) अपकृष्ट हैं वह (मोक्ष) अपवर्ग कहलाता है। निर्वाण हम उसे कहते हैं जिससे वाण अर्थात् ताप सदा-सदा के लिए निर्गत हो जाता है। जिससे बढ़कर (श्रेष्ठ) श्रेय नहीं सम्भव है उसे निःश्रेयस कहते हैं। अथवा निश्चित (विशुद्ध) श्रेय को निःश्रेयस कहा जाता है। जिसें सर्वविध दुःखबन्धनों से मुक्ति प्राप्त होती है वह मोक्ष कहलाता है। केवल (मुक्तपुरुष) के भाव को कैवल्य कहा जाता है। मोक्ष के पर्याय शब्दों की व्युत्पत्ति के आधार पर मोक्ष का परम पुरुषार्थ के रूप में स्वीकृत होना ध्वनित होता है। अतएव भगवान् कृष्णद्वैपायन ने अन्य पुरुषार्थ की अपेक्षा मोक्ष को उत्कृष्ट प्रतिपादित किया है—

इति संसार दुःखार्क.........कुत्र सुखं नृणाम्।।१।।

महाभारत के निम्नाङ्कित श्लोक से यह सुस्पष्ट विदित होता है—

सकामदोष से धर्म, निर्दान दोष से धन (अर्थ), सम्मोहन दोष से काम दूषित है अतः त्रिवर्ग का परमपुरुषार्थ होना बाधित है—

अपध्यानमलो धर्मो..................भूयः स्वगुणवर्जितः।।१।।

---

१. मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्।
मोक्षोऽपवर्गो...............................।। अ० को० १।५।६-७)

२. वि० पु० ६।५।५७.

३. म० भा० शा० १२३।१०.

इति महाभारतोक्त्या धर्मस्य सकामदोषेण, अर्थस्य निर्दानदोषेण, कामस्य सम्मोहनदोषेण च दूषितत्वात् त्रिवर्गस्य परमपुरुषार्थत्वं बाधितमेव।

तदेवं परमपुरुषार्थत्वेन सिद्धस्य मोक्षस्य स्वरूपं तत्प्राप्त्युपायं च दार्शनिकाः "रुचीनां वैचित्र्यात्" इति पुष्पदन्तोक्त्या परस्परवैलक्षण्येन प्रतिपादयन्ति। सर्वेष्वपि दर्शनेषु मुक्तस्य सर्वदुःखनिवृत्तेरङ्गीकारात् "मुच्यते सर्वैर्दुःखबन्धनैर्यत्र स मोक्षः" इति व्युत्पत्तिसिद्धो मोक्षशब्दः सर्वसाधारण एव।

एतादृशदुःखनिवृत्तेरेव परमपुरुषार्थत्वमभ्युपगच्छन्तो नैयायिक[१]-वैशेषिक[२-३] पूर्वमीमांसकाश्चरमपुरुषार्थं 'निःश्रेयसम्' इति, 'अपवर्गः' इति च कथयन्ति। सांख्य-[४-५] योगदर्शनयोर्दुःखनिवृत्तिरूपेयं स्थितिः पुरुषप्रकृत्योः केवलत्वावस्थेति ताभ्यां सेयमवस्था कैवल्यमित्युच्यते।

अद्वैतवेदान्ते[६] ऽविद्ययाऽऽवृतो जीवः स्वकीयं सच्चिदानन्दरूपं विस्मृत्य

---

इस प्रकार निष्कर्ष कथन यह प्राप्त होता है— मोक्ष का परम पुरुषार्थ होना निर्विवाद है। परन्तु मोक्ष के स्वरूप तथा उसकी प्राप्ति के उपाय के सन्दर्भ में दार्शनिकों में विमति उपलब्ध होती है। समस्त दर्शनों में मोक्षशब्द की व्युत्पत्ति (मुच्यते सर्वदुःखबन्धनैर्यत स मोक्षः) से लभ्य अर्थ-मुक्त पुरुष के सर्वदुःखों की निवृत्ति होती है— यह सर्वदर्शनमान्य सिद्धान्त है।

एतादृश दुःखनिवृत्ति को ही परमपुरुषार्थ मानने वाले नैयायिक, वैशेषिक एवं पूर्वमीमांसक आचार्यों ने परमपुरुषार्थ को निःश्रेयस तथा अपवर्ग शब्द से सम्बोधित किया है। सांख्य एवं योगदर्शनों में पुरुष तथा प्रकृति की केवलत्वावस्था को दुःखनिवृत्ति शब्द से अभिहित किया जाता है। अतः इन दोनों से सापेक्ष मोक्ष को कैवल्य-संज्ञा से विभूषित किया जाता है।

अद्वैतवेदान्त में यह स्वीकार्य है— अविद्या से आवृत जीव, निज

---

१. "तदत्यन्तविमोक्षोऽपवर्गः" (न्या० सू० १।१।२२)।
२. "धर्मविशेषप्रसूताद् द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" (वै० सू० १।१।४)।
३. "सोऽयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः" (मी० प्र०, पृ० २७७-२७८)
४. "ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति" (सां० का० ६८)।
५. "तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्" (यो० सू० २।२५)।
६. अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।। (वार्त्तिकम्)

संसारे भ्रमन् विद्यया स्वरूपावाप्तिं करोतीति रोगनिवृत्तिवदविद्यानिवृत्तेरेव प्रयोजनत्वादत्रापि चरमपुरुषार्थो मोक्ष इत्येव व्यवह्रियते।

वीरशैवदर्शने चरमपुरुषार्थबोधनाय मोक्षशब्दातिरिक्तं 'सायुज्यम्', 'सामरस्यम्' इत्यादिशब्दानामपि सिद्धान्तस्वारस्यार्थं प्रयोगा दृश्यन्ते।

अथातो न्याय–वैशेषिक–सांख्य–योग–पूर्वमीमांसा–अद्वैतवेदान्त–सिद्धान्त-शिखामण्युक्त–वीरशैवदर्शनाभिमतबन्ध–मोक्षयोः स्वरूपं तावत् क्रमेण यथाशास्त्रं विमृश्यते।

## न्यायदर्शनानुसारेण बन्धमोक्षयोः स्वरूपम्

इह खलु सर्वाण्यपि दर्शनानि चरमलक्ष्याय मोक्षाय प्रवर्तमानान्येव दरीदृश्यन्ते। तत्स्वरूपं तत्प्राप्त्युपायं च सर्वे दार्शनिकाः स्वस्वमत्यनुसारं विवेचयन्ति। तदेव क्रमेणात्र परिशील्यते।

तत्र महर्षिणा गौतमेन–"तदत्यन्तविमोक्षोऽपवर्गः"[1] इति सूत्रेण दुःखानां

---

सच्चिदानन्द स्वरूप की विस्मृति होने से संसारी बनकर भटकता है। विद्या द्वारा स्वस्वरूप को प्रकाशित कर वह रोगनिवृत्ति द्वारा आरोग्यप्राप्ति के समान अविद्यानिवृत्ति द्वारा स्वरूपप्राप्ति के प्रयोजन के साधक परमपुरुषार्थ को मोक्ष कहा जाता है। वीरशैवदर्शन में परमपुरुषार्थ के बोधन हेतु मोक्षशब्द की तरह साजुज्य एवम् सामरस्य प्रभृति शब्दों का भी सिद्धान्त-स्वारस्य को प्रकाशित करने हेतु उपयोग किया गया है।

अत: सम्प्रति न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा, अद्वैतवेदान्त, तथा सिद्धान्तशिखामणिसम्मत वीरशैव दर्शन में स्वीकृत बन्ध एवं मोक्ष के स्वरूप को क्रमश: शास्त्रसम्मत रीति से प्रकाशित किया जा रहा है।

## न्यायदर्शन के अनुसार बन्ध एवं मोक्ष का स्वरूप

सभी दर्शनों की प्रवृत्ति मोक्ष (चरम लक्ष्य) के उद्देश्य से दृष्टिगोचर होती है। मोक्ष के स्वरूप एवम् उसकी प्राप्ति के उपाय को सभी दार्शनिकों ने अपनी-अपनी मति के अनुसार विवेचना की है। क्रमश: उनका परिशीलन सम्प्रति कर्तव्य है।

महर्षि गौतम ने दुःखों एवम् उनके साधनों की आत्यन्तिक निवृत्ति को मोक्षस्वरूप

---

१. न्या० सू० १।१।२२.

दुःखसाधनानां चात्यन्तिकी निवृत्तिर्मोक्ष इति तत्स्वरूपम्, "प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः"[१], "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"[२] इति सूत्रद्वयेन षोडशविधपदार्थानां तत्त्वज्ञानेन क्रमशः सर्वेषां दुःखप्रवृत्त्यादीनामात्यन्तिकी निवृत्तिः, ततश्चापवर्ग इति तत्प्राप्त्युपायश्च प्रतिपादितः।

**बन्धस्वरूपम्**

अत्र मिथ्याज्ञान-दोष-प्रवृत्ति-जन्म-दुःखानां निवृत्तिरेवापवर्ग इति स्वीकारान्मिथ्याज्ञानमेव मुख्यो बन्ध इति वक्तुं शक्यते। मिथ्याज्ञानं नाम तत्त्वज्ञानविपरीतमतस्मिन् तद्बुद्धिरूपम्। तदुक्तं वार्तिककारेण—"अस्तित्वेनाधिगते नास्तीति विज्ञानं मिथ्याप्रत्ययः"[३] इति यथाऽऽत्माऽहङ्कारस्य विषयस्तथा शरीरेन्द्रियाण्यपि 'गौरोऽहम्', 'काणोऽहम्' इत्यादिरूपेणाहङ्कारविषयाणि

---

प्रतिपादित किया है। तद्यथा— तदत्यन्तविमोक्षोऽपवर्गः। तद्वत् १६ पदार्थों के तत्त्वज्ञान से दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञान-निवृत्ति द्वारा अपवर्ग की प्राप्ति को प्रतिपादित कर मोक्षप्राप्ति के उपाय को वर्णित किया है। तद्यथा—

"प्रमाण प्रमेय.......निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः।

दुःखजन्म..........तदनन्तरापायादपवर्गः।

**बन्धस्वरूप**

न्यायदर्शन में मिथ्याज्ञान, दोष, प्रवृत्ति, जन्म तथा दुःखों की निवृत्ति को अपवर्ग कहा गया है। अतः दुःखादि पञ्चविध प्रमेय को ही बन्ध कहा गया है। इनमें भी मुख्यबन्ध मिथ्याज्ञान है क्योंकि यही सर्वविध अनर्थों का हेतु है। मिथ्याज्ञान हम उसे कहते हैं जो तत्त्वज्ञान से विपरीत हो अर्थात् अतद् में तद्बुद्धि ही मिथ्याज्ञान है। अतएव वार्तिककार ने कहा है— अस्तित्वेन ज्ञात वस्तु में नास्ति-बुद्धि को मिथ्याप्रत्यय कहा गया है। यद्वत् आत्मा अहंकार का विषय है, तद्वत् शरीर एवम् इन्द्रियाँ भी अहंकार के विषय होते हैं। तद्यथा— गौरोऽहम्, काणोऽहम् - इत्यादि

---

१. न्या० सू० १।१।१.

२. न्या० सू० १।१।२.

३. न्या० सू० वा० १।१।२

भवन्ति। एवमात्मानात्मनोरहङ्कारविषयत्वस्य सारूप्यात् सम्भवत्येवानात्मन्यात्मेति विपर्ययः। भाष्यकृता वात्स्यायनेनापि तत्त्वज्ञानविपरीतस्य मिथ्याज्ञानस्यानेकविधत्वं प्रदर्शितम्। तथाहि–"आत्मनि तावन्नास्तीति, अनात्मन्यात्मेति, दुःखे सुखमिति, अनित्ये नित्यमिति, सभये निर्भयमिति, जुगुप्सितेऽभिमतमिति हातव्येऽप्रतिहातव्यमिति"[१] इति। उक्तेन मिथ्याज्ञानेन हि दोषाः सम्भवन्ति। दोषत्वं नाम "प्रवर्तनालक्षणा दोषाः"[२] इति सूत्रलक्षितप्रवृत्तिप्रयोजकरूपत्वम्। प्रवर्तना प्रवृत्तिः, सा लक्षणमेतेषामिति प्रवृत्तिलक्षणा दोषाः। दोषवतामेव पुंसां पुण्यपापादिषु प्रवृत्तिर्दृश्यते। तेषां दोषाणां त्रयो राशयो भवन्ति–रागो द्वेषो मोह इति। यद्यपि तृष्णाऽसूयाऽमर्षादयोऽनेके दोषाः सम्भवन्ति, अथापि ते सर्वे त्रिष्वेवान्तर्भवन्ति। तदुक्तं महर्षिणा गौतमेन–"त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्"[३] इति। दोषान्तराणां त्रैराश्यान्तर्भावः श्रीजयन्तभट्टेन एवं प्रदर्शितः–

"कामो मत्सरः स्पृहा तृष्णा लोभ इति पञ्चप्रकारो रागपक्षः।

---

प्रतीति शरीर एवम् इन्द्रिय को आलम्बन बनाती है। एवञ्च आत्मा तथा अनात्मा में समान रूप से अहङ्कार की विषयता होने से अनात्मा में आत्मबुद्धि (विपर्यय) का उदित होना असम्भव नहीं है। भाष्यकार वात्स्यायन ने भी तत्त्वज्ञानविपरीत मिथ्याज्ञान की अनेकविधता को प्रतिपादित किया है। तद्यथा— "आत्मनि तावन्नास्तीति, अनात्मनि आत्मेति, दुःखे सुखमिति, अनित्ये नित्यमिति, अत्राणे त्राणमिति, सभये निर्भयमिति जुगुप्सिते अभिमतमिति, हातव्येऽप्रतिहातव्यमिति। उपर्युक्त नानाविध मिथ्याज्ञान से दोषों की उत्पत्ति होती है। "प्रवर्तनालक्षणा दोषाः" इस सूत्र में प्रोक्त प्रवृत्तिप्रयोजक को दोष कहा जाता है। सूत्रार्थ है— प्रवर्तना का अर्थ है— प्रवृत्ति। यह प्रवृत्ति ही दोषों का लक्षण है। लोक में दोष से युक्त जनों की ही प्रवृत्ति पुण्य अथवा पाप में देखी जाती है। असंख्य दोषों को तीन भागों में विभाजित किया गया है— राग, द्वेष एवं मोह। यद्यपि दोष अनेक हैं— तृष्णा, अमर्ष इत्यादि तथापि इनका अन्तर्भाव इन तीन में ही हो जाता है। अतएव महर्षि गौतम ने सुस्पष्ट कहा है— "तत् त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्।" श्री जयन्तभट्ट ने अन्य दोषों का तीन विभाजनों में अन्तर्भाव सम्यक्तया प्रदर्शित किया है। तद्यथा—

"रागपक्ष पञ्चविध है—काम, मत्सर, स्पृहा, तृष्णा तथा लोभ। मैथुनसम्भोग की इच्छा काम कहलाती है। जो वस्तु अन्य व्यक्ति को दिये जाने से धन के समान

---

१. न्या० सू० भा० १।१।२.

२. न्या० सू० १।१।१८.

३. न्या० सू० ४।१।३.

स्त्रीसंभोगेच्छा कामः, यदन्यस्मै निवेद्यमानमपि वस्तु धनवन्न क्षीयते तदपरित्यागेच्छा मत्सरः, अनात्मीयवस्त्वादित्सा स्पृहा, पुनर्भवप्रतिसन्धानहेतुभूतेच्छा तृष्णा, निषिद्धद्रव्यग्रहणेच्छा लोभ इत्यभिलाषप्रकारभेदाद् रागपक्ष एवायम्।

द्वेषपक्षोऽपि पञ्चविधः—क्रोधेर्ष्यासूयाद्रोहोऽमर्ष इति। अक्षिभ्र्वादिविकारहेतुः प्रज्वलनात्मकः क्रोधः, साधारणेऽपि वस्तुनि परस्य दर्शनाद्यसहनमीर्ष्या, परगुणेष्वक्षमाऽसूया, परापकारो द्रोहः, अदर्शितमुखादिविकारः परं प्रति मन्युरमर्ष इत्यसहनप्रकारभेदादेव द्वेषपक्षः।

मोहपक्षस्तु चतुर्विधः—मिथ्याज्ञानम्, विचिकित्सा, मानः प्रमाद इति। अतस्मिंस्तदिति ज्ञानं मिथ्याज्ञानम्, किंस्विदिति विमर्शो विचिकित्सा, असद्-गुणाध्यारोपेण स्वोत्कर्षबुद्धिर्मानः, कियदेतदित्यवज्ञया कर्तव्याकरणं प्रमादः, स एव मद इत्याख्यायते। सोऽयं तत्त्वापरिज्ञानप्रकारभेदान्मोहपक्षः"[1] इति।

---

क्षीण नहीं होती उस वस्तु के अपरित्याग की इच्छा मत्सर कहलाती है। जो वस्तु आत्मीय नहीं है उसको ले लेने की इच्छा (आदित्सा) स्पृहा कहलाती है। पुनर्भव (पुनर्जन्म) के प्रतिसन्धान की हेतुभूत इच्छा को तृष्णा कहा गया है। तद्वत् निषिद्ध द्रव्य के ग्रहण की इच्छा को लोभ कहा जाता है। ये सभी अभिलाष के प्रकारभेद, रागपक्ष में अन्तर्हित होते हैं।

द्वेषपक्ष में भी ५ प्रकार हैं— क्रोध, ईष्या, असूया, द्रोह एवम् अमर्ष। आँखों तथा भौहों में विकार को जन्म देने वाले प्रज्वलन स्वरूप क्रोध होते हैं। साधारण वस्तु में भी परकर्तृक दर्शनादि का सहन न होना ईर्ष्या कहलाता है। दूसरों के गुणों का नहीं सह पाना असूया कहलाता है पर के अपकार को द्रोह कहा जाता है। जिसमें मुखादि विकार परिलक्षित न हो किन्तु अन्य के प्रति क्रोध हो वह अमर्ष कहलाता है। ये सभी असहन के प्रकारभेद द्वेषपक्ष में अन्तर्भूत होते हैं।

मोहपक्ष में चार प्रकार पाये जाते हैं— मिथ्याज्ञान, विचिकित्सा, मान तथा प्रमाद। अतद् में तद्ज्ञान का उदित होना मिथ्याज्ञान कहलाता है। किंस्वित्? (यह क्या है?) इस विमर्श को विचिकित्सा कहा जाता है। असद्गुण के अध्यारोपमात्र से स्वयं में उत्कर्षबुद्धि का उदय मान कहलाता है। यह है ही कितना? इस प्रकार अवज्ञा (अवहेलना) से कर्तव्य कर्म को संलग्नता से नहीं करना प्रमाद कहलाता है। प्रमाद के लिए दूसरा पर्यायशब्द मद है। एवञ्च तत्त्व के अपरिज्ञान के समस्त प्रकार मोहपक्ष में अन्तर्हित होते हैं।

---

१. न्या० म०, भा० २, पृ० ७०-७१.

उक्तेषु दोषत्रयेषु मोह एव पापतमः। अस्मादेव रागद्वेषयोरुत्पत्तिः, अर्थाद् मूढ एवानुकूलेषु रज्यते, प्रतिकूलेषु च द्वेष्टि। तदुक्तम्–"तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः"[१] इति। एत एव त्रयो दोषा दशविधानां मनोवाक्कायवचसां प्रवृत्तीनां हेतवो भवन्ति। तत्र "दोषैः प्रयुक्तः शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचाऽनृतपरुषसूचनाऽसम्बद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेत्यशुभकर्माण्याचरति। शुभवासनाप्रयुक्तः शरीरेण दानं परित्राणं परिचरणं च, वाचा सत्यं हितं प्रियं स्वाध्यायं चेति, मनसा दयामस्पृहां श्रद्धां चेति शुभकर्माण्याचरति। प्रवृत्तिसाधनत्वाद् धर्माधर्मौ प्रवृत्तिशब्देनोच्येते"[२]। एवं मिथ्याज्ञानेन रागादिदोषाः, दोषैश्च शुभाशुभकर्मणि प्रवृत्तिः, प्रवृत्त्या च धर्माधर्मौ, ताभ्यां भोगायतनं शरीरम्, तेन च दुःखमिति बन्धपरम्परा प्रवर्तते।

अत्र किं नाम दुःखमिति जिज्ञासायामुक्तं महर्षिणा गौतमेन– "बाधनालक्षणं दुःखम्"[३] इति। प्रतिकूलवेदनीयं पीडास्वरूपं हि दुःखमिति

---

उपर्युक्त त्रिविध दोष में पापतम मोह है। इस मोह से ही राग एवं द्वेष की उत्पत्ति होती है। आशय यह है कि मोहग्रस्त (मूढ़) व्यक्ति ही अनुकूल विषयों में राग करता है तथा प्रतिकूल विषयों में द्वेष करता है। अतएव मोह को पापीयान् कहा गया है क्योंकि मोह के बिना राग एवं द्वेष नहीं होते। तद्यथा— "तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः।"

उपर्युक्त त्रिविध दोष ही मन, वाणी तथा काम के दशविध प्रवृत्तियों के प्रति कारण होता है। दोष से प्रेरित होकर सामान्य जन शरीर से प्रवृत्ति की ओर उन्मुख होता है तथा हिंसा, स्तेय एवं प्रतिषिद्ध मैथुनों का आचरण करता है। तद्वत् वह वाणी से अनृत, परुष, चुगली एवम् असम्बद्ध का कथन करता है। अथच वह मन से परद्रोह, परद्रव्य की अभीप्सा एवम् नास्तिक्य-प्रभृति अशुभ कर्मों का आचरण करता है। शुभ (धर्म) वासना से प्रयुक्त सामान्यजन शरीर द्वारा दान, परित्राण एवं सेवा (परिचरण) करता है। वह वाणी द्वारा सत्य हित, प्रिय तथा स्वाध्याय का अनुष्ठान करता है। तद्वत् मन द्वारा वह दया, अस्पृहा एवं श्रद्धा—शुभकर्मों का आचरण करता है। प्रवृत्ति के प्रति साधन होने से धर्म तथा अधर्म को प्रवृत्ति-शब्द से अभिहित किया जाता है।"

तदेवं मिथ्याज्ञान से रागादिदोषों की उत्पत्ति होती है। दोषों से प्रेरित होने के

---

१. न्या० सू० ४।१।६.

२. न्या० सू० भा० १।१।२.

३. न्या० सू० १।१।२१.

सूत्रार्थः। तच्च नैय्यायिकैरेकविंशतिप्रकारमङ्गीक्रियते। तद्यथा–शरीरम्, श्रोत्र–त्वङ्–नेत्र–जिह्वा–घ्राण–मनांसीति षडिन्द्रियाणि, शब्द–स्पर्श–रूप–रस–गन्ध–सुखादिकाः षड्विषयाः, श्रोत्रेन्द्रियजन्यं शब्दविषयकं श्रावणज्ञानम्, त्वगिन्द्रियजन्यं स्पर्शविषयकं त्वाचज्ञानम्, चक्षुरिन्द्रियजन्यं रूपविषयकं चाक्षुषज्ञानम्, रसनेन्द्रियजन्यं रसविषयकं रासनज्ञानम्, घ्राणेन्द्रियजन्यं गन्धविषयकं घ्राणजज्ञानम्, मनोजन्यं सुखादिविषयकं मानसज्ञानमिति षड्ज्ञानानि, सुखम्, दुःखं चेत्याहत्य एकविंशतिदुःखानि। तदुक्तं केशवमिश्रेण–"एकविंशतिभेदास्तु शरीरम्, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखम्, दुःखं चेति गौणमुख्यभेदात्"[1] इति। अत्र दुःखं नाम पापकर्मजन्यम्, अहं दुःखीत्याकारकमानसप्रतीतेर्विषयो दुःखत्वजातिमान् आत्मनो विशेषगुणः। दुःखत्वजातिरहितान्यन्यानि विंशतिसंख्याकानि परम्परया दुःखसाधनानीति कृत्वा तान्यपि दुःखानीत्येव परिगण्यन्ते। तदुक्तं वार्त्तिककारेण–"एतदेव

---

कारण शुभ एवम् अशुभ कर्मों में प्रवृत्ति होती है। प्रवृत्तिमूलक ही धर्म एवम् अधर्म होते हैं। इन धर्माधर्मों से ही भोगायतन शरीर प्राप्त होता है तद्वत् शरीर द्वारक दुःख का बन्धन उपस्थित होता है एवम् बन्ध परम्परा, जन्मजन्मान्तर तक चलती रहती है।

दुःख की स्वरूपजिज्ञासा होने पर महर्षि गौतम ने कहा है— "बाधनालक्षणं दुःखम्।" इस सूत्र का अर्थ सुस्पष्ट है। बाधित करने वाला पीडास्वरूप प्रतिकूल वेदनीय दुःख कहलाता है। इस दुःख के २१ भेद नैयायिकसिद्धान्त में मान्य हैं। तद्यथा—१. शरीर २-७. छह इन्द्रिय वर्ग (श्रोत्र, त्वक्, चक्षुष्, रसना, घ्राण एवं मनस्) ८-१३. छह विषयवर्ग (शब्द, स्पर्श, रूप, रस, गन्ध एवं सुखादि आन्तर) १४-१९. षड्विध ज्ञान (श्रोजन्य शब्दविषयक श्रावण-ज्ञान,त्वाचज्ञान, चाक्षुषज्ञान, रासनज्ञान, घ्राणजज्ञान तथा मानसज्ञान) २०. सुख तथा २१. दुःख। इन सबके योग करने से २१ प्रकार के दुःख मान्य हैं। कैशवमिश्र ने तर्कभाषा में संक्षेपतया इसे प्रतिपादित किया है— "एकविंशतिभेदास्तु शरीरम्, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं दुःखं चेति गौण-मुख्यभेदात्।"

दुःख का जन्म पापकर्मों से होता है। अहं दुःखी इस मानस प्रतीति का विषय है दुःख। इसमें दुःखत्व जाति रहती है तथा दुःख को आत्मा का विशेषगुण माना जाता है। दुःख के अतिरिक्त २० दुःखों में परम्परया दुःख की साधनता होने

---

१. त० भा०, पृ० २३२.

शरीरादिबाधनानुषङ्गाद् दुःखमित्युच्यते। स्वभावतस्तु दुःखमेव दुःखम्। लक्षणशब्दोऽनुषङ्गार्थः, सर्वमिदं शरीरादि दुःखानुषक्तमिति। अत्र शरीरं दुःखस्य निमित्तम्, निमित्तार्थोऽनुषङ्गः। इन्द्रियाणि, विषयाः, बुद्धय इति साधनं साधनार्थोऽनुषङ्गः। सुखं दुःखाविनाभावि, अत्राप्यविनाभावोऽनुषङ्गः"[१] इति।

सुखदुःखयोरविनाभावस्तु यथा—नित्यसुखमनङ्गीकुर्वद्भिर्नैय्यायिकैर्जन्यमेव सुखमभ्युपगम्यते, तेषां मते सुखस्य आत्मविशेषगुणत्वात् तच्चात्ममनस्संयोगजन्यम्। तस्य अनुकूलवेदनीयत्वात् स्वानुकूलविषयप्राप्तौ तदुत्पद्यते। अनुकूलविषयप्राप्तिरपि शारीरेण बौद्धेन वा परिश्रमेण साध्या। परिश्रमो हि दुःखरूपः। यथा कश्चित् पुरुषः समस्तसुखसाधनं धनमिति निश्चित्य दैहिकेन बौद्धेन वा परिश्रमेण धनोपार्जनं करोति, उपार्जितस्य च धनस्य चौर्यादिना नाशो न स्यादित्यहर्निशं तद्रक्षति, अथाप्यनित्यानां तेषां सुनिश्चय एव वियोगः, वियोगे सति पुनर्दुःखमिति वैषयिकसुखं दुःखानुषक्तम्। अत एव केनचित् कविनोक्तम्—

---

से इन्हें दुःख शब्द से ही गिना जाता है। यतश्च ये स्वयं दुःख नहीं हैं अतः इनमें दुःखत्व जाति का अभ्युपगम नहीं किया जाता है। वार्तिककार ने इसकी विशद व्याख्या की है— "एतदेव शरीरादि........अत्राप्यविनाभावोऽनुषङ्गः।"

सुख तथा दुःख में अविनाभावसम्बन्ध माना जाता है। नैयायिकों ने नित्य सुख को नहीं माना है। ये जन्य सुख को ही मानते हैं। उनके मत में सुख को आत्मा का विशेषगुण माना जाता है। इसकी उत्पत्ति आत्म-मनःसंयोग से होती है। यतश्च सुख अनुकूल वेदनीय होता है अतः वह अनुकूलविषय की प्राप्ति होने पर ही उत्पन्न होता है अन्यथा नहीं। अनुकूल विषय की प्राप्ति भी शारीरिक अथवा बौद्धिक श्रम से साध्य होती है। परिश्रम को दुःखरूप माना जाता है— कष्टं कर्म। तद्यथा—

कोई व्यक्ति समस्त सुख का साधन धन है ऐसा निश्चयकर देह अथवा बुद्धि के श्रम से धन को अर्जित करता है, तद्वत् अर्जित धन को चोरी आदि से सुरक्षित करने हेतु सतत् प्रयत्नशील रहता है। इन सबके बावजूद अनित्य होने से धन का वियोग होना सुनिश्चित है। एवंच वियोग के (अवश्यम्भावी होने से) धन के वियोग से पुनः दुःख उपस्थित होता है। इस प्रकार वैषयिक सुख, दुःख से आवेष्टित है। अतएव किसी कवि की सूक्ति प्रथित है—

---

१. न्या० सू० वा० १।१।२१.

अर्थानामर्जने दुःखमर्जितानां च रक्षणे।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः।।इति।

सायणमाधवाभ्यामपि सुखस्य दुःखाविनाभूतत्वं प्रतिपादितम्। तद्यथा– "सुखस्य सातिशयतया सदृक्षतया बहुप्रत्यनीकाक्रान्ततया साधनप्रार्थनपरिक्लिष्टतया च दुःखाविनाभूतत्वेन विषानुषक्तमधुवद् दुःखपक्षनिक्षेपात्"[२] इति। तदेवं मिथ्याज्ञानादारभ्य दुःखपर्यन्तमेतत् सर्वं बन्धरूपम्, तद्युक्तश्चात्मा बद्ध इत्युच्यते। एतादृशबद्धजीवानां विमोक्षार्थमेव महर्षेर्गोतमस्य परिश्रमः परिदृश्यते। तदुक्तं गङ्गेशोपाध्यायेन–"अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय"[३] इति। अत्र बन्धरूपेषु दुःखादिषु पञ्चसु तत्त्वज्ञानेनोत्तरोत्तराणामभावे सति तदव्यवहितपूर्वपूर्वाणामभावस्ततश्चापवर्ग इति नैय्यायिकाः प्रतिपादयन्ति।

**तत्त्वज्ञानस्वरूपम्**

तत्त्वज्ञानान्निःश्रेयसाधिगम इति सूचितम्। किमिदं तत्त्वज्ञानं नामेत्याकाङ्क्षायामुक्तं भगवता वात्स्यायनेन–"तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण

---

अर्थानामर्जने दुःखम् .............धिगर्थाः कष्टसंश्रयाः।।१।।

सायण-माधव आचार्यों ने भी सुख को दुःखानुविद्ध प्रतिपादित किया है। तद्यथा— "सुखस्य सातिशयतया.......दुःखपक्षनिक्षेपात्।" एवञ्च मिथ्याज्ञान से लेकर दुःखपर्यन्त को बन्ध कहा जाता है तथा बन्ध से युक्त जीवात्मा को बद्ध कहा जाता है। एतादृश बद्ध जीवों के मोक्ष हेतु महर्षिगौतम का करुणाप्लुत श्रम प्रशंसनीय है। गङ्गोशोपाध्याय महाशय ने सुस्पष्ट कहा है— अथ जगदेव.....परमकारुणिको मुनिः प्रणिनाय।"

न्यायदर्शन में दुःखादि ५ बन्धों में उत्तरोत्तर का तत्त्व ज्ञान से अपाय होने से अव्यवहित पूर्व पूर्व का अपाय होने से सर्वविध बन्ध के अपाय (अभाव) से होने से अपवर्ग की प्राप्ति सुलभ होती है— यह निरूपण किया जाता है।

**तत्त्वज्ञान का स्वरूप**

तत्त्वज्ञान से निःश्रेयस की प्राप्ति होती है यह सूत्र द्वारा प्रतिबोधित होता है। इस तत्त्वज्ञान का क्या स्वरूप है ऐसी आशङ्का होने पर भगवान् वात्स्यायन

---

२. स० सं०, पृ० ४९९.

१. त० चि०, पृ० ११४.

व्याख्यातम्। आत्मनि तावदस्तीति, अनात्मन्यनात्मेति, एवं दुःखे, अनित्ये अत्राणे, सभये, जुगुप्सिते, हातव्ये च यथाविषयं वेदितव्यम्"[१] इति। किञ्च- "अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसारः"[२] इति प्रमेयसूत्रस्य भाष्ये वात्स्यायनेन सकलप्रमेयज्ञानस्यैव मुक्तिहेतुत्वं सूचितम्। वृत्तिकृता विश्वनाथेन च-"तत्र च प्रकृष्टं मेयं प्रमेयमिति योगार्थः, प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं मोक्षहेतुधीविषयत्वं वा, रूढ्या तावदन्यान्यत्वमर्थः"[३] इति प्रतिपादितत्वादात्मादीनि प्रमेयाण्येव तत्त्वानि, तेषां यथार्थज्ञानमेव तत्त्वज्ञानम्, अर्थात् शरीरादीनां सर्वेषामात्मेतरत्वेन, आत्मनश्च आत्मेतरभिन्नत्वेन आत्मविशेष्यकमात्मेतर-भेदप्रकारकं साक्षात्कारात्मकं ज्ञानमेव तत्त्वज्ञानम्, तदेव च मोक्षहेतुरिति।

अत्र-"आत्मानं चेद्विजानीयात्"[४] इति श्रुत्या जीवात्मनो ज्ञानं मोक्षकारणमिति प्रतिपादितम्। ""तमेव विदित्वाऽतिमृत्युमेति"[५] इति श्रुत्या च परमात्मज्ञानेन निःश्रेसाधिगम इति श्रूयते। अत एकतरग्रहणेऽन्यतरश्रुते-

---

ने कहा है— तत्त्वज्ञानन्तु................यथाविषयं वेदितव्यम्। प्रमेयसूत्रभाष्य में आचार्य वात्स्यायन ने सर्वविध प्रमेय के ज्ञान को मुक्ति का हेतु प्रतिपादित किया है। तद्यथा— "अस्य तु तत्त्वज्ञान..........संसारः।"

न्यायसूत्रवृत्ति के रचयिता विश्वनाथ ने भी इसे पुष्ट किया है। तद्यथा— "तत्र च प्रकृष्टं मेयं...........अन्यान्यत्वमर्थः।" आत्मप्रभृति १२ प्रमेयतत्त्व हैं इनका यथार्थज्ञान तत्त्वज्ञान पद से विवक्षित है। एवंच आत्मव्यतिरिक्त शरीरादि समस्त प्रमेय का आत्मेतरत्वेन तथा आत्मा का आत्मेतरभिन्नतया (आत्मविशेष्यक, आत्मेतरभेदप्रकारक साक्षात्कारात्मक ज्ञान को) तत्त्वज्ञान कहा जाता है। यह तत्त्वज्ञान ही मोक्षहेतु है।

यहाँ श्रीस्वामि-चिद्घनानन्दगिरि महोदय ने तत्त्वज्ञान की मोक्षहेतुता की विवेचना इस प्रकार से की है—'आत्मानं चेद् विजानीयात्" इस श्रुति से परमात्मज्ञान से निःश्रेयस की प्राप्ति बतायी गयी है। यतः किसी एक श्रुति का आदर करने पर दूसरे श्रुतिवाक्य का बाध आपतित होगा। अतः दोनों मन्त्रवाक्यों का सार्थक्य

---

१. न्या० सू० भा० १।१।२.
२. न्या० सू० भा० १।१।१.
३. न्या० सू० वृ० १।१।९.
४. बृ० उ० ४।४।१२.
५. श्वे० उ० ३।८.

र्बाधदर्शनादुभयोरपि मन्त्रयोः सार्थकत्वाच्च जीवात्मपरमात्मनोर्देहादीतरपदार्थैर्भिन्नत्वेन परिज्ञानमेव तत्त्वज्ञानम्, तदेव च मोक्षकारणमिति श्रीस्वामिचिद्घनानन्दगिरिमहोदयाः प्रतिपादयन्ति[1]।

श्रीहरिरामतर्कवागीशास्तु—यद्विषयकं मिथ्याज्ञानं संसारहेतुस्तद्विषयकं तत्त्वज्ञानमेव मोक्षहेतुः, बन्धमोक्षयोः सामानाधिकरण्यनियमात् अन्यथाऽन्यस्य ज्ञानेनान्यस्य मोक्ष इत्येवमतिप्रसङ्गः स्यात्। अतो गौरोऽहम्, श्यामोऽहमित्या-कारकमिथ्याज्ञानजन्यवासनाया नाश आत्मविषयशरीरादिभिन्नत्व—प्रकारकात्म-साक्षात्कारेणैव शक्यः, भिन्नविषयकत्वात्। नहीश्वरविषयक—साक्षात्कार आत्मविषयकमिथ्याज्ञानजन्यसंस्काररूपाणां वासनानां निवर्तको भवति। अत एव—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"[2] इत्यात्मसाक्षात्कारस्यैव मोक्षहेतुत्वं श्रूयते। यत्र च ईश्वरविषयकं ज्ञानं मोक्षहेतुरिति श्रूयते, तत्रेश्वराऽभिन्नत्वेन जीवात्मभावनायाः परम्परया

---

आवश्यक है। अतः जीवात्मा एवं परमात्मा का स्वेतर (देहादि)-भिन्नतया परिज्ञान तत्त्वज्ञान कहलाता है। यह मोक्ष की प्राप्ति में कारण होता है।

श्री हरिरामतर्कवागीश का मानना है कि यद्विषयक मिथ्याज्ञान संसार (बन्धन) के प्रति हेतु है तद्विषयक तत्त्वज्ञान को ही मोक्षहेतु मानना चाहिए। क्योंकि बन्ध एवं मोक्षा का एक अधिकरण में होना प्रतिनियत है। यदि ऐसा नहीं माने तो अन्यदीय ज्ञान से अन्यदीय मोक्ष की आपत्ति होगी। अतः मैं गौर हूँ, मैं श्याम हूँ—ईदृश मिथ्याज्ञानजन्य वासना का नाश, आत्मविषयक साक्षात्कार (शरीरादिभिन्नत्वप्रकारक) के बिना कथमपि सम्भव नहीं है। भिन्नविषयक साक्षात्कार (ईश्वरविषयक) से आत्मविषयक मिथ्याज्ञान संस्कार (वासना) की निवृत्ति नहीं हो सकती। यही कारण है कि "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" श्रुतिवाक्य द्वारा आत्मसाक्षात्कार को ही मोक्ष के प्रति कारण प्रतिपादित किया गया है। अतएव तर्कवागीश ने सुस्पष्ट रूप से निरूपित किया है। जिस श्रुतिवाक्य से ईश्वरविषयक ज्ञान को मोक्षहेतु बताया गया है वहाँ भी ईश्वराभेदेन जीवात्मभावना को मोक्षहेतु बताया गया है वहाँ भी ईश्वराभेदेन जीवात्मभावना के परम्परया मुक्तिप्रयोजकत्व में तात्पर्य निर्धारित होता है।

---

१. न्यायप्रकाशे, पृ० २७.

२. बृ० उ० २।४।५.

मुक्तिप्रयोजकत्वे तात्पर्यं तत्त्वमसीति वाक्यस्वरसादवसीयत इति निरूपयन्ति[1]।

तदेतत् सिद्धं यदात्मविशेष्यकमात्मेतरभेदप्रकारकं साक्षात्कारात्मकं ज्ञानमेव तत्त्वज्ञानम्, तदेव च मोक्षहेतुरिति।

### तत्त्वज्ञानसाधनानि

इदं हि तत्त्वज्ञानम्–"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्यनुसारेण श्रोत्रियब्रह्मनिष्ठगुरुमुखात्–"अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा"[2] "न जायते म्रियते वा विपश्चित्......अजो नित्यः शाश्वतोऽयं पुराणः"[3] इत्यादिश्रुतिवाक्यरूपम्,

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे।।
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।।[4]

---

तात्पर्यग्राहकरूप से तत्त्वमसि-महावाक्य का प्रामाण्य स्वीकृत होता है।

एतावता यह निष्कर्ष प्राप्त होता है कि आत्मविशेष्यक आत्मेतरभेदप्रकारक साक्षात्कार रूप तत्त्वज्ञान को मोक्षावाप्ति में कारण मानना श्रुतिप्रमाण से प्रमित होता है।

### तत्त्वज्ञान के साधन

यह तत्त्वज्ञान श्रुतिदर्शित साधनों (श्रवण, मनन, निदिध्यासन) से उत्पन्न होता है। "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इस श्रुति के अनुसार श्रोत्रिय, ब्रह्मनिष्ठ गुरुमुख से निम्नाङ्कित श्रुति एवं तदर्थश्रवण करना चाहिए— "अविनाशी वा अरेयमात्माऽनुच्छित्तिधर्मा।", "न जायते म्रियते वा विपश्चित्.......अजोनित्यः शाश्वतोऽयं पुराणः।" इत्यादि। श्रुति एवं तदनुगामिनी स्मृति-तदर्थ वाक्यश्रवण को आत्मसाक्षात्कार के प्रति कारण बताया गया है। तादृशस्मृतिवाक्य निम्नाङ्कित है—

न जायते म्रियते........हन्यमाने शरीरे।।१।। तथा

अच्छेद्योऽयम्........अचलोऽयं सनातनः।।१।। इत्यादि।

---

१. मुक्तिवादविचारे, पृ० ७३-८०.
२. बृ० उ० ३।४।१०
३. कठो० २।१।१८.
४. भ० गी० २।२०, २४.

इत्यादिस्मृतिवाक्यार्थविज्ञानरूपं च श्रवणं कृत्वा, साधकबाधकप्रमाणोपन्यासरूपयुक्तिभिरात्मानं शरीरेन्द्रिय-मनो-बुद्धिभ्यो व्यतिरिक्तमिति श्रुतार्थाऽनुचिन्तनरूपं मननं कृत्वा, श्रुतार्थस्य नैरन्तर्येण दीर्घकालानुसन्धानरूपं निदिध्यासनं च कृत्वा सम्पादनीनम्। अर्थात् साक्षात्कारात्मक-तत्त्वज्ञानोत्पत्तावात्मविषयकश्रवण-मनन-निदिध्यासनानि साधनानीत्यवगन्तव्यम्।

तदेवं पूर्वोक्तक्रमेण प्राप्ततत्त्वज्ञानस्य पुरुषस्य सर्वा वासना विलीयन्ते, वासनाभावे सांसारिकविषयेष्वनासक्तिरूपं वैराग्यमुत्पद्यते, तेन च प्रवृत्त्यभावः, ततश्च जन्मदुःखयोरभावादपुनर्भवरूपोऽपवर्गः प्राप्यत इति श्रवणादीनि तत्त्वज्ञानसाधनानि[1]।

सूत्रकारो भगवान् गोतमः—"समाधिविशेषाभ्यासात्"[2] "अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः"[3], "तदर्थं 'यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्म-विध्युपायैः"[4] इत्यादिसूत्रैः केवलं पुस्तकीयज्ञानं नापवर्गहेतुः किन्तु

---

उपर्युक्त प्रकार से श्रवण के अनन्तर साधक एवं बाधक प्रमाणों के उपन्यासपुरःसर शरीर, इन्द्रिय, मनस् एवं बुद्धि से व्यतिरिक्त रूप में श्रुतिश्रुत आत्मा का अनुरूप यौक्तिक चिन्तन (मनन) करना चाहिए। तदनन्तर श्रुतिश्रुत तादृश आत्मा का नैरन्तर्येण दीर्घकाल तक अनुसन्धानात्मा (निदिध्यासन) करने के अनन्तर आत्मविषयक तत्त्वज्ञान (साक्षात्कार) दृढ़ होता है।

एवञ्च श्रुतिप्रोक्त मार्ग से जिन्होंने तत्त्वज्ञान की प्राप्ति की है— ऐसे व्यक्ति की समस्त वासनायें विलीन हो जाती हैं। वासना के अभाव में सांसारिक विषयों में आसक्ति के अभाव होने से वैराग्य दृढ़ होता है। उसके परिणामस्वरूप प्रवृत्ति का अभाव होता है। तत्प्रयुक्त जन्म तथा दुःख का अभाव होता है। तत्पश्चाद् अपुनर्भवरूप अपवर्ग प्राप्त होता है। एवञ्च श्रवणादि, आत्मतत्त्वसाक्षात्कार के प्रति कारण हैं— यह सिद्धान्त श्रौत होने के साथ यौक्तिक भी है।

सूत्रकार भगवान् गौतम ने निम्नाङ्कित सूत्रों के द्वारा पुस्तकीय तत्त्वज्ञान में अपवर्ग-हेतुता का प्रतिषेध कर साक्षात्कार (सुदृढ़) में अपवर्ग-हेतुता की स्थापना की

---

१. न्यायप्रकाशे, पृ० २७-२८, न्यायपरिचये, पृ० १५.

२. न्या० सू० ४।२।३८.

३. न्या० सू०, ४।२।४२.

४. न्या० सू०, ४।२।४६.

साक्षात्कारात्मकम्। अत आपातत उत्पन्नज्ञानः पुरुषोऽरण्यपर्वत-गुहा-नदीपुलिनादिनिर्जनैकान्तप्रदेषेषूपविश्य यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिरूपैरष्टाङ्गैः पूर्वोत्पन्नमदृढं तत्त्वज्ञानं दृढीकर्तव्यमिति धिया मुक्तये तत्त्वज्ञानेन साकं तत्प्रवृद्धिकारकं योगाभ्यासमप्यवश्यं कुर्यादिति प्रतिपादितवान्।

महापाशुपतो भासर्वज्ञो मोक्षसाधननिरूपणावसरे–

**यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।**
**तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति।।**[१]

"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[२] इत्यादिश्रुतिवचनानि प्रमाणयन् उक्तानां यमादियोगाङ्गानां परमवैराग्योत्पादकत्वं प्रतिपाद्य ततश्च महेश्वरे परा भक्तिः, तद्भक्त्या च शिवसाक्षात्कारः, ततश्च मोक्ष इति शिवदर्शनस्य मोक्षहेतुत्वं मनुते। तथाहि–"एवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकारदुःखभावनयाऽनभिरतिसंज्ञितं परं वैराग्यं महेश्वरे

---

है। तद्यथा—

१. समाधिविशेषाभ्यासात्

२. अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः

३. तदर्थं यमनियमाभ्यमात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः। इत्यादि।

महर्षि का स्पष्ट संकेत है जिस व्यक्ति को आपाततः तत्त्वज्ञान उदित होता है वह पर्वत, नदीपुलिनादि निर्जन एकान्त प्रदेशों में आसनबन्ध द्वारा अष्टाङ्गयोग (यम, नियम, आसन, प्राणायाम, प्रत्याहार, धारणा, ध्यान एवं समाधि) साधनों से आपाततः उदित अदृढ तत्त्वज्ञान को दृढ़ करें। एतावता मुक्तिप्राप्ति हेतु तत्त्वज्ञान के साथ उसके पोषक योगाभ्यास का अवश्यानुष्ठान भी महर्षि द्वारा उपदिष्ट है।

महान् पाशुपत आचार्य भासर्वज्ञ ने मोक्षसाधन के निरूपण-क्रम में प्रमाणभूत श्रुतिवाक्यों का उल्लेख किया है। तद्यथा—

यदा चर्मवदाकाशं............दुःखस्यान्तो भविष्यति।।१।।

"तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।" तदनन्तर आचार्य ने योग के अष्टाङ्ग को परमवैराग्य का जनक प्रतिपादित किया है तदनन्तर महेश्वर

---

१. श्वे० उ० ६।२०.
२. श्वे० उ० ३।८.

च परां भक्तिमाश्रित्यात्यन्ताभियोगेन सेवितव्यानि। ततोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति। तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति[१]" इति।

किञ्च, "तत्कारित्वादहेतुः"[२] इति सूत्रे महर्षिणा गोतमेन, तद्भाष्ये वात्स्यायनेन च जीवानां कर्माणीश्वरानुग्रहं विना न फलप्रदानीति प्रतिपादितत्वान्मोक्षोऽपि तदनुग्रहं विना न प्राप्यत इति मुक्तये ईश्वरानुग्रहस्य हेतुत्वं सूत्र-भाष्यकारयोरप्यभिमतमिति निश्चेतुं शक्यते।

वस्तुतस्तु न्यायदर्शने तत्त्वज्ञानादेव मोक्षसिद्धिः, योगाङ्गानि परशिवभक्त्यादिकं च तत्त्वज्ञानोत्पत्तौ सहायकानीति पर्यवस्यति।

**मोक्षस्वरूपम्**

तत्त्वज्ञानप्राप्योऽयमपवर्गः किंस्वरूपः? कीदृशी च मुक्तस्य स्थितिः? इति जिज्ञासायामुक्तं महर्षिणा गोतमेन—"तदत्यन्तविमोक्षोऽपवर्गः"[३] इति।

---

की पराभक्ति का उदय होता है एवम् उस भक्ति से साधक को शिव का साक्षात्कार प्राप्त होता है तदनन्तर साधक को मोक्ष-प्राप्ति होती है। एतावता आचार्य ने शिवसाक्षात्कार को मोक्ष की हेतुता प्रतिपादित की है— यह सुविदित होता है। आचार्य की यह उक्ति, उनके अभिप्राय को सुव्यक्त करती है— एवमेतानि योगाङ्गानि.........। निरतिशयं श्रेयः प्राप्नोति।" स्वयं गौतम ने अपने सूत्र "तत्कारित्वादहेतुः" में एवम् वात्स्यायन ने इस सूत्र के भाष्य में ईश्वर के अनुग्रह बिना जीवकर्मों में फलप्रदान के असामर्थ्य को प्रतिपादित किया है। अतः मोक्षावाप्ति भी ईश्वरानुग्रह-बिना नहीं हो सकती— यह सूत्रकार एवं भाष्यकार को अभिमत है— ऐसा निश्चय किया जा सकता है।

वस्तुतः न्यायसिद्धान्त में मोक्षावाप्ति में तत्त्वज्ञान की कारणता स्वीकृत है। अष्टाङ्गयोग तथा शिवभक्ति तत्त्वज्ञान के उपकारक हैं मोक्ष के प्रति साक्षात्कारण नहीं।

**मोक्ष का स्वरूप**

तत्त्वज्ञान से प्राप्त होने वाले मोक्ष का क्या स्वरूप है? तथा मुक्त की स्थिति कीदृश (कैसी) होती है? इन जिज्ञासाओं के समाधान हेतु महर्षि गौतम

---

१. न्या० सा०, पृ० ३०.
२. न्या० सू० ४।१।२१.
३. न्या० सू० १।१।२२.

शरीरादिभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिर्मोक्ष इति सूत्रार्थः। अत्र क्रमशस्तत्त्वज्ञानेन मिथ्याज्ञानस्य नाशः, तेन रागादिदोषाणां नाशः, तेन प्रवृत्तेरनुत्पादः, तेन जन्मानुत्पादः, तेन च शरीराद्येकविंशतिदुःखानुत्पाद इति तदुक्तं सूत्रकारेण – "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"[१] इति।

ननु शरीराद्येकविंशतिदुःखेष्विन्द्रिययोः श्रोत्रमनसोर्न्यायदर्शने नित्यत्वस्वीकारात् तत्त्वज्ञानेन न तयोर्नाश इति कथं दुःखानामात्यन्तिकी निवृत्तिरिति चेन्न, विशेषणनाशे विशिष्टस्यापि नाश इति प्रकृते कर्णशष्कुलेर्नाशे तद्विशिष्टस्य श्रोत्रस्य नाशः, आत्मसंयोगरूपव्यापारनाशे च तद्विशिष्टस्य मनसोऽपि नाश इति स्वीकारेणोभयोर्नाशोपपत्तेः। तदुक्तं दिनकरभट्टेन– "यद्रूपविशिष्टस्य श्रवणस्य ज्ञानद्वारा दुःखहेतुतया दुःखत्वम्, तद्रूपस्य कर्णशष्कुल्या नाशे तद्विशिष्टश्रवणेन्द्रियरूपदुःखनाशात्। एवमात्मसंयोगरूप-

---

ने सूत्र का निर्माण किया है— "तदत्यन्तविमोक्षोऽपवर्गः।" इसका अर्थ सुस्पष्ट है— शरीरादिस्वरूप विभिन्न अनेक दुःखों की आत्यन्तिकनिवृत्ति मोक्ष कहलाती है। न्यायदर्शन में क्रमशः तत्त्वज्ञान से मिथ्याज्ञान का नाश, मिथ्याज्ञान के नाश से रागादिदोषों का नाश, दोषनाश से प्रवृत्ति का अनुत्पाद, उक्त अनुत्पाद से जन्म का अनुत्पाद तथा जन्म के अनुत्पाद से २१ दुःखों (शरीरादि) का अनुत्पाद होता है। स्वयं सूत्रकार ने इस आशय को प्रतिपादित किया है— "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः।"

इस अवसर में जिज्ञासा उदित होती है— २१ दुःखों के अन्तर्गत श्रोत्र एवम् मनस्— दो इन्द्रियाँ न्यायदर्शन में नित्य मानी गई हैं। ऐसी स्थिति में तत्त्वज्ञान से इनका नाश नहीं हो सकता फलतः दुःखों की आत्यन्तिक निवृत्ति सम्भव कैसे हो सकेगी? इस जिज्ञासा का उत्तर यह है— विशेषण के नाश से विशिष्ट का नाश मान्य होता है। प्रकृति में कर्णशष्कुलि के नाश से तद्विशिष्ट श्रोत्र का नाश तथा आत्मसंयोग (व्यापार) के नाश से तद्विशिष्ट मनस् का नाश स्वीकार्य है। अतः दोनों इन्द्रियों का भी नाश असम्भव नहीं है। इस आशय को दिनकरी टीका में सुस्पष्ट किया गया है— "यद्रूपविशिष्टस्य श्रवणस्य ज्ञानद्वारा..........। एवमात्मसंयोगरूप.......... तद्विशिष्ट मनोरूप-दुःखनाश-

---

१. न्या० सू० १।१।२.

व्यापारविशिष्टस्यैव मनसो ज्ञानद्वारा दुःखहेतुतया दुःखत्वम्, व्यापारनाशेन तद्विशिष्टमनोरूपदुःखनाशसम्भवादिति"[1] इति।

अत्राऽयं भावः–न्यायदर्शने "कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्" इति स्वीकाराद् देहनाशे उपाधिभूतस्य कर्णशष्कुलेरपि नाश इत्युपाध्यभावेन तदुपहितरूपस्याप्यभावः। एवं विदेहकैवल्ये न श्रोत्रेन्द्रियस्यास्तित्वसिद्धिः। एवमेव विदेहमुक्तौ विद्यमानोऽप्यात्ममनःसंयोगो ज्ञानोत्पत्तौ व्यापाररूपतां नैव भजते। यतो हि पुरीतति बहिर्देशावच्छिन्नात्ममनः–संयोग एव ज्ञानोत्पत्तौ व्यापारः। अत एव सुषुप्तौ मनसः पुरीतन्नाड्यां प्रविष्टत्वात् तत्रात्ममनःसंयोगे सत्यपि तद्बहिर्देशावच्छिन्नात्ममनःसंयोगरूपव्यापाराभावान्न किमपि ज्ञानमुत्पद्यते। एवं विदेहमुक्तौ शरीराभावात् तदवयभूतायाः पुरीततोऽभाव इति तद्बाह्यदेशावच्छिन्नात्ममनःसंयोगरूपव्यापारस्य सम्भवाभावाद् व्यापारवद–साधारणकारणरूपकरणस्याभाव इति न मनो ज्ञानादीनामुत्पत्तिद्वारा दुःखहेतुर्भवतीति सम्भवत्येवैकविंशतिदुःखानामात्यन्तिकी निवृत्तिः अत्र दुःखनिवृत्तौ आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्।

---

सम्भवादिति।

आशय यह है— न्यायदर्शन में कर्णशष्कुली से अवच्छिन्न नभस् (आकाश) को श्रोत्र बताया है। जब देह का नाश होता है तब आकाश की उपाधि कर्णशष्कुलि के नाश होने से उपाधि के अभाव से उपहित का अभाव स्वतः होता है। एवंच विदेहमुक्ति होने पर श्रोत्रेन्द्रिय का अस्तित्व नहीं रहता है। तद्वत् विदेह मुक्ति हो जाने पर आत्ममनः संयोग की विद्यमानता रहने पर भी वह ज्ञान की उत्पत्ति में व्यापार नहीं बनेगा। कारण यह है— पूरी तरह से बहिर्देश में आत्ममनःसंयोग होने पर ज्ञान की उत्पत्ति होती है। अतएव सुषुप्ति अवस्था में मन पुरीतत् नाडी में प्रविष्ट हो जाता है। वहाँ आत्ममनः- संयोग होने पर भी तद्बहिर्देश में आत्ममनः संयोग (व्यापार) की विद्यमानता नहीं रहने से कोई भी ज्ञान उत्पन्न नहीं होता। तद्वत् विदेहमुक्ति होने पर शरीर के अभाव होने से तदवयव-पुरीतत् का भी स्वतः अभाव होता है। अतः तदवधिक बाह्यदेश सम्भव नहीं होगा जिसमें आत्ममनःसंयोगरूप व्यापार की सम्भावना की जा सके। एतावता व्यापारवद्असाधारणकारण के अभाव में मनस्, ज्ञान की उत्पत्ति के माध्यम से दुःख का हेतु नहीं बन सकेगा। इस प्रकार २१ दुःखों की आत्यन्तिक निवृत्ति अनुपपन्न नहीं है। यहाँ दुःखनिवृत्ति में आत्यन्तिकत्व है—

---

१. दिन०, पृ० ५१.

तस्मात् स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसो मुक्तिरिति तल्लक्षणम्।

नवीनास्तु—"योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवर्तिगुणानां कारणत्वात् स्वोत्तरोत्पन्नगुणेनैव दुःखध्वंसरूपमुक्तिसम्भवेन न तत्र तत्त्वज्ञानापेक्षेति दुःखपदं दुःखसाधनदुरितपरतया व्याख्येयम्, दुरितस्य च योग्यगुणत्वाभावान्न स्वोत्तरवृत्तिगुणनाश्यतेति तन्नाशरूपमुक्तेस्तत्त्वज्ञानसाध्यत्वमेवेत्याहुः"[1] इति। अत्र "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"[2], "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"[3] इत्यादिश्रुतिस्मृत्योश्च प्रमाणसद्भावादात्यन्तिकदुरितध्वंस एव मोक्ष इति ते व्याचक्षुः। तदेवं नवीनानां मतानुसारेण— "स्वसमानाधिकरणदुरितप्रागभावासमानकालीनदुरितध्वंसो मोक्षः" इति मोक्षलक्षणम्।

धर्माधर्माविव संसारसद्मनः स्तम्तभभूतौ वर्तेते। तयोरभावे कारणाभावात्

---

स्वसमानाधिकरण-दुःखप्रागभावासमानकालीनत्व। एतावता मुक्ति का निर्दुष्ट लक्षण है— स्वसमानाधिकरण......दुःखध्वंसो मुक्तिः इति।

नवीन नैयायिकों ने विलक्षण सिद्धान्त को प्रतिपादित किया है— योग्य-विभुविशेषगुण के नाश में स्वोत्तरवर्तीगुण को कारण माना जाता है। अतः उत्तरक्षण में उत्पन्न गुण से दुःख का नाश सम्भव होगा। तदर्थ तत्त्वज्ञान की अपेक्षा आवश्यक नहीं है। अतएव अपवर्गसूत्रघटित दुःखपद से दुःखसाधनदुरित का ग्रहण करना चाहिए। यतश्च दुरित योग्यगुण नहीं है अतः वह स्वोत्तरवृत्तिगुण से नाश्य नहीं होगा। अतः तादृश दुरितनाश के प्रति तत्त्वज्ञान को कारण मानना युक्तिसंगत होगा।

इस नव्यमत में श्रुति एवं स्मृति प्रमाणों का अनुगम भी होता है। तद्यथा—

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।" तथा

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा।"

एवंच नव्यमतानुसार आत्यन्तिक, दुःखसाधन-दुरितध्वंस मोक्ष है तथा उसका कारण आत्मतत्त्वज्ञान है। मोक्षलक्षण निम्नाङ्कित है— स्वसमानाधिकरण-दुःखप्रागभावासमानकालीन-दुःखसाधनदुरितध्वसो मुक्तिः।

धर्म एवम् अधर्म—दो स्तम्भों पर विनिर्मित विशाल संसारभवन है। इन दोनों के अभाव होने से कारणाभावात् कार्याभावः न्याय से भोगायतन शरीर का भी अभाव

---

१. दिन०, पृ० ५२.

२. मुण्ड० २।२।८.

३. भ० गी० ४।३७.

कार्यभूतस्य भोगायतनस्य शरीरस्याप्यभावः, तदभावे च ज्ञानादिविशेषगुणैर्नात्मा सम्बध्यत इति मुक्तावस्थायां तेषां सर्वेषामप्यभावः। एवं तस्य शरीराद्यभावादेव स क्षुत्पिपासादिषडूर्मिरहितश्च भवति। तदुक्तं जयन्तभट्टेन–

यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः।
तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्प्यते।।
धर्माधर्मनिमित्तो हि सम्भवः सुखदुःखयोः।
मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः।।
तदुच्छेदे तु तत्कार्यशरीराद्यनुपप्लवात्।
नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते।।
इच्छाद्वेषप्रयत्नादि भोगायतनबन्धनम्।
उच्छिन्नभोगायतनो नात्मा तैरपि युज्यते।।
प्राणस्य क्षुत्पिपासे द्वे लोभमोहौ च चेतसः।
शीतातपौ शरीरस्य षडूर्मिरहितः शिवः।।[१] इति।

अतो नैय्यायिकाभिमतो मोक्षो नाम नात्मनः केनचित् संयोगः, अपि तु आकस्मिकैर्बुद्ध्यादिनवविशेषगुणैरात्मा विच्छिद्यत इत्येव।

### मुक्तात्मनो नित्यसुखस्य निरासः

तदेवं न्यायदर्शने मुक्तस्य ज्ञानानन्दयोरनुभवो न भवति, किन्तु तदुभयरहिता उदासीनावस्थैव चकास्ति। अतो यथा सुषुप्तावस्थायां प्रज्ञाशून्यः

---

होगा। शरीर के अभाव होने पर ज्ञानादि विशेषगुणों के साथ आत्मा का सम्बन्ध नहीं होगा। एवंच मुक्तावस्था में उन सबों का अभाव होगा। शरीरादि के अभाव से ही वह मुक्त आत्मा क्षुधा, पिपासा प्रभृति षड्विध ऊर्मिरहित होगा। जयन्तभट्ट ने इस आशय को सुस्पष्ट किया है—

यावदात्मगुणाः................षडूर्मिरहितः शिवः।।५।।

अतः नैयायिकसम्मत मोक्ष में आत्मा का किसी के साथ संयोग नहीं होता, प्रत्युत आकस्मिक बुद्धिप्रभृति नौ विशेषगुणों से आत्मा का विच्छेद होता है।

### मुक्तात्मा के नित्यसुख का निरास

उपर्युक्त विवेचन से यह विदित होता है कि न्यायदर्शन में मुक्त-पुरुष को ज्ञान एवम् आनन्द का अनुभव नहीं होता। किन्तु उक्त दोनों (ज्ञान एवं आनन्द)

---

१. न्या० म०, भा० २, पृ० ७७.

पाषाणवद् भवति जीवः, मुक्तावस्थायामपि ज्ञानादिशून्यत्वात् तथैव भवति। न्यायदर्शने सुखस्यात्मविशेषगुणान्तर्गतत्वात् सर्वविशेषगुणोच्छेदे सुखस्यापि निवृत्तिरिति मुक्तौ नानन्दानुभवः। वेदान्ताभिमतनित्यसुखप्राप्तौ प्रमाणाभावात् तन्नाङ्गीकर्तव्यमिति सूत्रभाष्यकाराः प्रतिपादयन्ति। तन्मतमेवात्र सारेण संगृह्यते।

मुक्तौ विद्यमानस्य नित्यसुखस्य संवेदनं नित्यम्, उत जन्यम्? संवेदनस्य नित्यत्वे बद्धस्यापि तत्संवेदनस्यावश्यकत्वाद् बद्धमुक्तयोर्विभागो न स्यात्। किञ्च, नित्यसुखसंवेदनस्य नित्यत्वे धर्माधर्मजन्यानित्यसुखदुःखयोरनुभवावसरे नित्यसुखस्याप्यनुभवप्रसङ्गः। यदि नित्यसुखस्य संवेदनमनित्यं तर्हि तदुत्पादकं कारणान्तरं वक्तव्यम्। योगसमाधिजो धर्मस्तत्कारणमिति चेत्, उत्पन्नस्य तद्धर्मस्य च नित्यत्वाऽसम्भवात् तद्धर्मनिवृत्तौ पुनर्नित्यसुखसंवेदनं न स्यादेव।

यद्येवमुच्येत–नित्यसुखस्य संवेदनमपि नित्यमेव, अथापि संसारदशायां

---

से रहित उदासीन अवस्था रहती है। अतः इस मत में यद्वत् जीव सुषुप्तावस्था में प्रज्ञाशून्य एवम् पाषाणवत् स्थित रहता है तद्वत् वह मुक्तावस्था में भी ज्ञानादिशून्य ही रहता है। न्यायदर्शन में सुख को आत्मा का विशेषगुण माना जाता है। यतश्च सर्वविशेषगुणों का उच्छेद मुक्ति में होता है अतः सुख की भी निवृत्ति हो जाने से मुक्ति में आनन्दानुभव निराकृत है। वेदान्तसिद्धान्त में प्रतिपादित मुक्त की नित्यसुख-प्राप्ति में प्रमाण नहीं होने से न्यायसूत्रकार एवं भाष्यकार ने उसका अङ्गीकार नहीं किया है। यहाँ संक्षेप में उनका मत संगृहीत किया जाता है।

मुक्ति में विद्यमान नित्यसुख का संवेदन नित्य है अथवा जन्य? यदि उसे नित्य मानें तो बद्ध पुरुष में भी उक्त संवेदन के विद्यमान होने से बद्ध एवं मुक्त का विभाग नहीं हो पायेगा। इतना ही नहीं, नित्यसुखसंवेदन यदि नित्य होगा तो धर्मजन्य अनित्यसुख एवम् अधर्मजन्य अनित्य दुःख के अनुभव के समय नित्यसुख का भी अनुभवप्रसङ्ग होगा। इस दोष से बचने हेतु नित्यसुखसंवेदन को अनित्य माना जाये तो उसके जनक (कारणान्तर) को बताना होगा। योगसमाधि से उत्पन्न धर्म को उसका कारण माने तो यह समीचीन नहीं होगा। उत्पन्न वस्तु एवम् उसके धर्म में नित्यत्व सम्भव कैसे हो सकता है। तद्धर्म की निवृत्ति होने पर पुनः नित्यसुख संवेदन नहीं हो सकता।

उपर्युक्त दोष से त्राण हेतु नित्यसुख के संवेदन को भी नित्य ही माना जाय।

विद्यमानानि शरीरादीनि तत्प्रतिबन्धकानि, मुक्तौ च तेषामभावान्नित्यसुखाभि-व्यक्तिर्भवतीति। तदप्ययुक्तम्, शरीरादीनां सुखाद्यनुभवसाधनत्वान्नहि तानि तत्प्रतिबन्धकानि भवितुमर्हन्ति। किञ्च, मुक्तौ भोगायतनाद्यभावे जीवात्मनः कथं नित्यसुखानुभवः? पुनस्तदर्थं नित्यशरीरादिकल्पनाप्रसङ्गः। ननु नित्यशरीरादिकल्पने प्रमाणाभावात् तन्न कल्प्येतेति चेत्, एवमेव नित्यसुखास्तित्वे प्रमाणाभावाच्च तत्कल्पनमपि नैव युज्यते।

ननु प्राणिमात्रस्येष्टप्राप्त्यर्थं प्रवृत्तेर्दृश्यमानत्वाद् मुक्त्यर्थमपि प्रवृत्तिं दृष्ट्वा तत्प्रवृत्त्यन्यथाऽनुपपत्त्या मुक्तौ नित्यसुखास्तित्वं कल्प्येतेति चेन्न, अनिष्टपरिहारार्थमपि प्रवृत्तेर्दृश्यमानत्वात् तदन्यथैवोपपत्तेः। ननु "विज्ञानमानन्दं ब्रह्म"[१] इति श्रुतिरेव नित्यसुखास्तित्वे प्रमाणमिति चेन्न, आत्यन्तिके दुःखाभावे सुखशब्दप्रयोगसम्भवात्। दुःखाभावे सुखशब्दः प्रयुज्यते हि लोके। यथा कश्चित् काष्ठहारकः स्वशिरसि सुमहत् काष्ठभारं निधाय गच्छन् मार्गेऽम्बरमध्य-गतस्याम्बरमणेरत्युष्णतेजःसंस्पर्शादतीव श्रान्तः क्लान्तश्च गृहमागत्य यदा

---

नित्य होने पर भी संसारदशा में शरीरादि प्रतिबन्धक के होने से वह अभिभूत रहता है। मुक्ति दशा में प्रतिबन्धक (शरीर) के अभाव से नित्यसुख की अभिव्यक्ति निर्बाध होती है। किन्तु उपर्युक्त कथन भी समीचीन नहीं है। शरीरादि की सुखादि के अनुभव की साधनता है तो उसे सुख का प्रतिबन्धक नहीं माना जा सकता। दूसरी बात यह है कि मुक्तिदशा में भोगायतन शरीर के अभाव रहने से जीवात्मा को नित्यसुखानुभूति कैसे हो सकेगी। मुक्ति में नित्यसुखानुभूति हेतु नित्य शरीर की कल्पना करनी होगी। यदि यह कहा जाय कि नित्य शरीरादि की कल्पना में प्रमाण नहीं होने से उसकी कल्पना का प्रसङ्ग नहीं आवेगा। तो तुल्ययुक्ति से नित्यसुख के अस्तित्व में प्रमाण नहीं होने से उसकी कल्पना भी युक्तिसंगत नहीं है।

जिज्ञासा होती है कि प्राणिमात्र में इष्टप्राप्ति हेतु प्रवृत्ति देखी जाती है। मुक्ति में प्रवृत्ति को देखकर उसकी अन्यथा अनुपपत्ति होने से मुक्ति में नित्यसुख का अस्तित्व कल्पनीय होगा। इसका समाधान है— इष्टप्रवृत्ति की तरह अनिष्टपरिहार हेतु भी प्रवृत्ति देखी जाती है। अतः अन्यथाऽनुपपत्ति नहीं कही जा सकती।

यदि "विज्ञानमानन्दं ब्रह्म" श्रुतिवाक्य को नित्यसुखास्तित्व में प्रमाण माना जाय तो इसका उत्तर यह है— आत्यन्तिक दुःखाभाव के लिए (अर्थ में) भी सुख शब्द का प्रयोग सम्भव है। लोक-व्यवहार में सुखशब्द का प्रयोग दुःखाभाव अर्थ में

१. बृ० उ० ३।९।२८.

शिरसि स्थितं काष्ठभारं भूमौ निक्षिपति, तदाऽतीवानन्दमनुभवति। तत्र शिरसि स्थितस्य काष्ठभारस्यैव दुःखहेतुभूतत्वात् तदपाये च दुःखहेतोरभावादिदानीमत्यन्तानन्द इति तस्यानुभवो दुःखनिवृत्तावेव पर्यवस्यति। तथैव दुःखहेतुभूतानां शरीरादीनामभावेन मुक्तावागमप्रतिपादितमानन्दस्वरूपं दुःखाभाव एव पर्यवस्यति।

अपि च, उक्तेनागमप्रमाणेन नित्यसुखावाप्तिर्मोक्ष इति स्वीकारे तत्सुखावाप्तेः प्राक् तत्प्राप्तीच्छारूपो राग आवश्यकः। रागस्य च बन्धनरूपत्वात् कथं तत्सत्त्वे मोक्षावकाशः? अतो नित्यसुखावधारणलालितेयं तृष्णापिशाची लब्धप्रसरा विषयसुखेष्वपि प्रत्यासन्नेषु पुरुषं प्रवर्तयन्ती मोक्षमस्य सुदूरं प्रतिक्षिपेदिति मनागपि प्रसरोऽस्या न दातव्यः। तस्मान्नित्यानन्दप्रतिपादिका श्रुतिरात्यन्तिके दुःखवियोगे भाक्तेति युक्तमिति भावः।

ननु रागवद् द्वेषस्यापि मुक्तेः प्रतिबन्धकत्वाद् दुःखं प्रति त्वयि द्वेषसद्भावाद् द्वेषस्य त्वया प्रसरो दत्त इति तुल्यो दोष इति चेन्मैवम्, नहि दुःखं प्रत्यस्माकं द्वेषः, किन्तु अलंप्रत्ययः। तदेव वैराग्यमित्युच्यते।

---

भी देखा जाता है। तद्यथा— कोई काष्ठ ढोने वाला अपने शिर पर भारी गट्ठर लेकर चलता है। मार्ग में उसे दोपहर के सूर्य की ऊष्मा से थकान और मालिन्य होता है। घर पहुँचकर वह गट्ठर उतारकर भूमि पर रख देता है तब वह मधुर आनन्द का अनुभव करता है। सिर पर रखे काष्ठभार की दुःखहेतुता है उसके अपाय होने से दुःख-हेतु के अभाव में जो अत्यन्त आनन्द होता है वह दुःखनिवृत्ति में ही पर्यवसित होता है। तद्वत् दुःखहेतु शरीरादि के अभाव से मुक्ति में आगमप्रोक्त आनन्द, दुःखाभाव में ही पर्यवसित होता है।

यह भी ध्यातव्य है— विज्ञानमानन्दं ब्रह्म-इत्यादि आगमप्रमाण से नित्यसुख की प्राप्ति को मोक्ष माने तो सुखप्राप्ति के पूर्व प्राप्तीच्छा (राग) आवश्यक होगा। यतश्च राग बन्धन रूप है ऐसी स्थिति में मोक्ष कैसे सावकाश होगा। अतः नित्यसुख की अवधारणा से लासित तृष्णा, प्रसक्त विषयसुखों में भी पुरुष को प्रवृत्त करा कर साधक के मोक्ष को दूर भगा देगी अतः किञ्चिन्मात्र भी तृष्णा का अवसर नहीं देना चाहिए। अतः नित्यानन्द की प्रतिपादक श्रुति आत्यन्तिक दुःखवियोग अर्थ में लाक्षणिक है ऐसा मानना ही युक्तिसंगत है।

रागवद् द्वेष भी मुक्ति का प्रतिबन्धक है ऐसी स्थिति में दुख के प्रति द्वेष के सद्भाव से न्यायमत में भी द्वेष का अवसर आने से तुल्यदोष है— यह आशंका

तस्मात् सुखावाप्त्यपेक्षया दुःखजिहासायां लाघवमिति नैय्यायिकानां निगूढाशयः[१]। श्रीवाचस्पतिमिश्राः–"एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्यां मुक्तस्य यदि नित्यं सुखं भवति, कामं भवतु मा वा भूत्, उभयोरपि पक्षयोर्वीतरागस्य प्रवृत्तौ न मोक्षाधिगमो विकल्प्यते, न सन्दिग्धो भवतीत्यर्थः"[२] इति मुक्तौ नित्यसुखावाप्त्यनवाप्त्योराग्रहं परित्यज्य वीतरागस्यावश्यं मोक्षावाप्तिरिति समालोचनं कृतवन्तः।

महापाशुपतो भासर्वज्ञस्तु सूत्र-भाष्यकृदभिप्रायेणासम्मतः सन्– "नित्यसंवेद्यमानेन सुखेन विशिष्टाऽऽत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः"[३] इति मुक्तौ नित्यसुखाभिव्यक्तिमप्यङ्गीकरोति। तस्यायमाशयः–"आनन्दं ब्रह्मणो विद्वान्न बिभेति"[४], "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते", "विज्ञानमानन्दं ब्रह्म"[५] "सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम्। तं वै मोक्षं

---

उदित होती है। इसका समाधान है न्यायाचार्यों को दुःख के प्रति द्वेष नहीं होता। अपितु अलंप्रत्यय (तृप्ति) अर्थात् सन्तुष्टि होती है। यह वैराग्य शब्दित है। अतः सुखावाप्ति की अपेक्षा दुःखजिहासा में लाघव है–यह नैयायिकों का निगूढ़ आशय है। अतएव श्रीवाचस्पति मिश्र ने कहा है–इस प्रकार वैराग्य से मोक्षावाप्ति हेतु प्रवृत्ति होने पर मुक्त को यदि नित्य सुख होता है। वह नित्यसुख प्रगट हो या न हो–दोनों ही पक्षों में वीतराग की प्रवृत्ति में मोक्षप्राप्ति के प्रति विकल्प (संदेह) उत्पन्न नहीं होता। ऐसी व्यवस्था से श्रीमिश्र ने नित्यसुख की प्राप्ति अथवा अप्राप्ति के आग्रह का त्याग कर वीतराग को मोक्षावाप्ति अवश्य होती है— इस निष्कर्ष का प्रतिपादन किया है।

महान् पाशुपत आचार्य भासर्वज्ञ, सूत्रकार एवं भाष्यकार के अभिप्राय से सहमत नहीं हैं। शास्त्रप्रमाण के आधार पर आपने नित्यसुख से विशिष्ट आत्यन्तिक दुःखनिवृत्ति को मोक्ष कहा है। इनका श्रुतिवाक्यों के यथाश्रुत अर्थ में श्रद्धातिशय है तथा मुख्यार्थ के बाध में कोई बलवत्तर प्रमाण नहीं है अतः लाक्षणिक अर्थ का स्वीकार समुचित नहीं है। तद्यथा—

"आनन्दं ब्रह्मणो विद्वान्.........सुखमात्यन्तिकम्.......अकृतात्मभिः। इत्यादि॥

इस प्रसङ्ग में यह भी ध्यातव्य है— नित्य सुख एवं संवेदन का पारस्परिक

---

१. न्या० सू० भा० १।१।२२.

२. न्या० वा० ता० १।१।२२.

३. न्या० सा०, पृ० ३२.

४. तै० उ० २।४.

५. बृ० उ० ३।९।२८.

विजानीयाद् दुष्प्रापमकृतात्मभिः।।" इत्यादिश्रुतीनां मुख्यार्थे बाधकाभावान्नोपचार-प्रकल्पना युक्तेति।

अपरं च, नित्यसुखसंवेदनयोः सम्बन्धस्य मुक्तावस्थायां जन्यत्वेन तत्कृतकत्वेऽपि प्रध्वंसाभाववत् तद्विनाशकारणाभावात् तन्नित्यत्वमेव। किञ्च, यदुक्तं नित्यसुखावाप्तीच्छाया रागस्य बन्धनरूपत्वान्नित्यसुखरागेण प्रवृत्तौ न मुच्येतेति, तदयुक्तम्, सुखसाधनेषु शब्दादिविषयेष्वभिसङ्गो हि रागः। स च विषयार्जनरक्षणादिप्रवृत्तिद्वारेण संसारहेतुः। नित्ये सुखे विद्यमानस्य रागस्य शब्दादिसर्वविषयार्जनादिनिवृत्तिरूपमोक्षोपायप्रवृत्तौ हेतुत्वात् स हि न बन्धनात्मकः। अन्यथाऽऽत्यन्तिकदुःखाभावरागेणापि प्रवृत्तस्य मोक्षो न स्यात्[1]।

मुक्तिस्वरूपनिरूपणावसरे सूत्र-भाष्यकारा दुःखानामत्यन्तोच्छेदमात्रं मोक्षं मन्यन्ते। नित्यसंवेद्यमानेन सुखेन विशिष्टाऽऽत्यन्तिकी दुःखनिवृत्तिरिति

---

सम्बन्ध मुक्तावस्था में उत्पन्न होता है। इस सिद्धान्त में जन्य होने से सम्बन्ध की अनित्यता सुस्पष्ट है। प्रध्वंससंज्ञक अभाव स्वयं मुसलप्रहारादि से जन्य होता है किन्तु वह अभाव नष्ट नहीं होता अत एव सादि होने पर भी उस अभाव को अनन्त कहा जाता है। तद्वत् उपर्युक्त सम्बन्ध के विनाशक नहीं होने से उसका अस्तित्व बना ही रहेगा।

किञ्च, पूर्वप्रदत्त दोष है— नित्यसुखप्राप्ति की इच्छा अर्थात् राग के बन्ध होने से नित्यसुख के राग से प्रवृत्ति होने पर साधक की मुक्ति नहीं उपपन्न होगी। यह उपयुक्त नहीं है। तद्यथा शब्द-स्पर्शप्रभृति विषय, सुख के साधन हैं उनमें जीव का अभिसङ्ग राग कहलाता है। वह राग ही विषय के अर्जन एवं रक्षणादि में प्रेरक होने से जीवात्मा की प्रवृत्ति में निमित्त बनकर उसे संसारी बनाता है। इसके विपरीत नित्यसुख के प्रति विद्यमान राग (अनुराग), साधक को शब्दस्पर्शादि के विषयों के अर्जनरक्षणादि से निवृत्ति प्रदान करता है। एवंच निवृत्तिस्वरूप मोक्ष के उपायों में प्रवर्तक होने से नित्यसुख विषयक राग, बन्धन का हेतु नहीं बनेगा। यदि यह नहीं माना जाय तो आत्यन्तिक दुःखाभाव के प्रति राग से प्रवृत्ति होने पर भी बन्ध ही होगा, मोक्ष नहीं।

मुक्तिस्वरूप का निरूपण करते हुए सूत्रकार एवं भाष्यकार ने दुःख के अत्यन्त उच्छेद को ही मोक्ष प्रतिपादित किया है। आचार्य भासर्वज्ञ का यह

---

१. न्यायभूषणे, पृ० ५९५-५९८.

कथनाद् भासर्वज्ञस्य विकासात्मकोऽयमभिप्रायो यद्यपि सुचारु प्रतिभाति, अथापि विचारोऽयं प्राक्तननैय्यायिकैर्न स्वीकारार्हो वर्तते। यतो हि न्यायनये ज्ञानमानन्दो वा आत्मन आकस्मिको गुणः। मुक्तौ सर्वविशेषगुणोच्छेदाज्ज्ञानानन्दयोरप्युच्छेद आवश्यक इति कथं नित्यसुखसंवेदनं स्यात्? अपि च, प्राक्तनेदानीन्तनयो-र्नैय्यायिकयोर्मध्ये मोक्षसाधनविषयेऽपि विचारवैलक्षण्यं वर्तते। प्राचीना ज्ञानमेव मोक्षे मुख्यं प्रयोजकमाहुः। महापाशुपतो भासर्वज्ञो ज्ञानेन साकं परशिवस्य भक्तिस्तथा तदपरोक्षज्ञानमप्यावश्यकमिति मनुते।

## जीवन्मुक्ति-विदेहमुक्तिविचारः

जीवन्मुक्ति-विदेहमुक्तिविषये विद्यते नैयायिकविदुषां परस्परं वैमत्यम्। तथाहि-"निःश्रेयसस्य परापरभेदाद् यत्तावदपरं निःश्रेयसं तत् तत्त्वज्ञानान्तरमेव "भवति। तथा चोक्तम्-"जीवन्नेव हि विद्वान् संघर्षायासाभ्यां विमुच्यत इत्ययं शास्त्रार्थः[1] इति। परं तु निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति"[2] इत्युद्योतकरेण

कथन— "नित्यसंवेद्यमान सुख से विशिष्ट आत्यन्तिक दुःखनिवृत्ति मोक्ष है— उनके विकासात्मक अभिप्राय का प्रकाशक है अतएव श्लाघ्य है तथापि यह विचार प्राक्तन नैयायिकों के स्वीकारयोग्य नहीं है।

यतश्च न्यायसिद्धान्त में ज्ञान एवम् आनन्द, आत्मा के आकस्मिक गुण हैं तथा मुक्ति में सर्वविशेषगुणों का उच्छेद हो जाता है अतः ज्ञान एवम् आनन्द के भी उच्छेद हो जाने से नित्यसुख का संवेदन कैसे हो सकता है।

मोक्षसाधन के विषय में भी प्राच्य एवं नव्य नैयायिकों के मतभेद हैं— प्राचीनों ने ज्ञान को ही मोक्ष के मुख्य प्रयोजक माना है। परञ्च महान् पाशुपत भासर्वज्ञ ने ज्ञान के साथ शिवभक्ति एवं शिवज्ञान को भी अत्यावश्यक माना है।

## जीवन्मुक्ति एवं विदेहमुक्ति का विचार

जीवन्मुक्ति एवं विदेहमुक्ति के विषय में न्यायाचार्यों के मतभेद दृष्टिगोचर होते हैं। तद्यथा— निःश्रेयस के दो प्रभेद हैं— परनिःश्रेयस एवं अपरनिःश्रेयस। अपरनिःश्रेयस, तत्त्वज्ञानमात्र से प्राप्त हो जाता है। इसे जीवन्मुक्ति भी कहा जाता है। परनिःश्रेयस, मनन एवं निदिध्यासन से सापेक्ष होता है। इसका दूसरा नाम विदेहमुक्ति

१. "अर्थशब्दो निमित्ते। अपरं निःश्रेयसं शास्त्रस्य निमित्तम्"। (न्या० वा० ता० १।१।२; पृ० १५६)

२. न्या० सू० वा० १।१।२; पृ० १५२

तत्त्वज्ञानप्राप्यं निःश्रेयसं परापरभेदेन द्विधा व्यवस्थापितम्। अत्रापरं निःश्रेयसं जीवन्मुक्तिरिति, परं च निःश्रेयसं विदेहमुक्तिरित्यर्थः।

अत्रायमाशयः—यद्यपरं निःश्रेयसं नाङ्गीक्रियेत,तर्हि शास्त्रसम्प्रदायो विच्छिद्येत। सम्प्रदायो नाम शिष्योपाध्यायसम्बन्धस्याविच्छेदेन शास्त्रप्राप्तिः। अन्यथा शास्त्राणि न तत्त्वदृक्पूर्वकाणीति धूर्तप्रणीतानि स्युः, अप्रमाणानि स्युरिति यावत्। अतो हेतोरेतदनर्थनिवृत्त्यर्थमेव भारद्वाजोद्योतकरो मोक्षद्वैविध्यं प्रतिपादितवान्। तदिदमपरं निःश्रेयसं पूर्वोक्तक्रमेण श्रवणादिना सम्पन्नतत्त्वज्ञानस्य विनष्टमिथ्याज्ञानस्यावशिष्टप्रारब्धकर्मणश्च पुरुषस्य सम्पद्यते। तदेव जीवन्मुक्तिरित्यप्युच्यते। तदुक्तं वृत्तिकृता विश्वनाथेन—"तत्राऽपरं जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव। तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्म उपभुञ्जानस्य"[१] इति।

---

है। आचार्य उद्योतकर ने सुस्पष्ट रूप से विवेचन किया है— तत्त्वज्ञानजन्य निःश्रेयस के दो भेद होते हैं— परनिःश्रेयस तथा अपरनिःश्रेयस। तद्यथा— "जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यत इत्ययं शास्त्रार्थ इति। परन्तु निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति।"

निगूढ आशय यह है— यदि अपर निःश्रेयस नहीं स्वीकारें तो शास्त्र-सम्प्रदाय विच्छिन्न होगा। क्योंकि सम्प्रदाय का अर्थ है— शिष्योपाध्यायसम्बन्ध के विच्छेद बिना शास्त्रप्राप्ति। यह शास्त्रसम्प्रदाय यतः अविच्छिन्न है अतः शास्त्रों का तत्त्वदृक्सम्बन्ध सुस्थिर है। अन्यथा धूर्तप्रणीत होने से शास्त्रों में अप्रामाण्य आपादित होगा। इस महान् अनर्थ की निवृत्ति हेतु उद्योतकर आचार्य भारद्वाज ने द्विविध मोक्ष का प्रतिपादन किया है। एवञ्च अपरनिःश्रेयस उसे प्राप्त होता है जिसने श्रवणादिक्रम से तत्त्वज्ञान का अर्जन किया है परिणामस्वरूप उसका मिथ्याज्ञान विनष्ट हो चुका है अथापि–जिसके प्रारब्ध कर्म के अवशिष्ट रहने से जीवनयात्रा चल रही है। इस अपरनिःश्रेयस का दूसरा नाम है— जीवन्मुक्ति। वृत्तिकार आचार्य विश्वनाथ ने इस आशय को सुविशद किया है। तद्यथा— "तत्रापरं जीवन्मुक्तिलक्षणं..........। तदप्यवधारितात्मत्त्वस्य......... उपभुञ्जानस्य।"

पर निःश्रेयस (अपवर्ग) अर्थात् विदेहमुक्ति तभी होती है जब तत्त्वज्ञान के उदित होने पर क्रमशः जन्म-दुःख प्रभृति का आत्यन्तिक विलय (अपाय) हो जाता है। तद्यथा— "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः।"

---

१. न्या० सू० वृ० १।१।१.

विदेहमुक्तीत्यपरपर्यायः परोऽपवर्गस्तत्त्वज्ञानानन्तरं क्रमेण जन्मदुःखादीनामात्यन्तिके विलये सति प्राप्यते। तदुक्तम्–"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"[१] इति। महर्षिगोतमो वात्स्यायनश्चापरं निःश्रेयसं न प्रतिपादितवन्तौ। मुक्तौ हि शरीरादीनां सर्वेषामनुभवानां चाभावोऽपेक्ष्यत इति शरीराद्यभावे कथं जीवन्मुक्तिरिति तयोराशयः स्यात्।

ननु तत्त्वज्ञस्य पुरुषस्य औत्तरकार्मिकजन्माभावेऽपि प्राक्तनसञ्चितकर्मभिः सम्भवत्येव जन्म। तथाहि स्मृतिः–"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति। तस्मान्न परोऽपवर्ग इति चेन्न, योगमहिम्ना सम्पादितेन कायव्यूहेन नानाविधानि शरीराणि धारयित्वा संचितकर्मभोगोपपत्तेः। तदुक्तं केशवमिश्रेण–"पूर्वोपात्तं च धर्माधर्मप्रचयं योगर्द्धिप्रभावाद्विदित्वा समाहृत्य भुञ्जानस्य पूर्वकर्मनिवृत्तो वर्तमानशरीरापगमेऽपूर्वशरीराभावाच्छरीराद्येकविंशतिदुःखसम्बन्धो न भवति, कारणाभावात्। सोऽयमेकविंशतिप्रभेदभिन्नदुःखहानिर्मोक्षः। सोऽपवर्ग इत्युच्यते।"[२] इति।

---

महर्षि गौतम एवं भाष्यकार वात्स्यायन ने अपरनिःश्रेयस का प्रतिपादन नहीं किया है। मुक्ति में शरीरादि का अभाव रहता है तथा सर्वविध अनुभवों का भी अभाव रहता है— ऐसी अवधारणा में शरीरादि के अभाव में जीवन्मुक्ति की अवधारणा कैसे व्याख्यायित होगी–यह दोनों आचार्यों का अभिप्राय अनुमेय है।

अब जिज्ञासा यह उदित होती है— जो तत्त्वज्ञानी पुरुष हैं उसके तत्त्वज्ञानोदय के उत्तरवर्ती कर्मों पर आधारित जन्म का अभाव तो समीचीन प्रतीत होता है। किन्तु प्राक्तन संचित कर्मों (प्रारब्धातिरिक्त) पर आधारित पुनर्जन्म का अनुत्पाद किस कारण पर आधारित होगा। तभी तो स्मृति में स्पष्ट उल्लेख प्राप्त है— "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।" एवंच विदेहमुक्ति का अपरपर्याय परनिःश्रेयस असम्भव है। इस जिज्ञासा का समाधान यह है — योगानुष्ठान के माहात्म्य से साधक-प्रकल्पित स्वकायव्यूह द्वारा नानाविध शरीर को धारण कर संचित कर्म के फलों का भोग अल्पकालावधि में सम्पादित कर विदेहमुक्ति का अनुभव कर सकता है। इसमें किसी प्रकार का प्रतिबन्ध दृष्टिगोचर नहीं है। केशवमिश्रजी ने इसे सुव्याख्यायित किया है—

"पूर्वोपात्तंच................नभवति, कारणाभावात्। सोयं..........मोक्षः। सोऽपवर्ग इत्युच्यते।"

---

१. न्या० सू० १।१।२.

२. त० भा०, पृ० २३३.

एवं न्यायदर्शने सञ्चितकर्मणो भोगेनैव क्षय इति स्वीकारात् तत्त्वज्ञानेन साकं योगसिद्धिरप्यावश्यकी। केचित्तु–"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"[१], "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"[२] इति श्रुति-स्मृतिप्रमाणेन संचितकर्मणः क्षयस्तत्त्वज्ञानेनैव सम्भवतीति प्रतिपादयन्ति। "नाभुक्तं क्षीयते कर्म" इत्यस्य त्वकृतप्रायश्चित्तस्यातत्त्वज्ञस्य च पुरुषस्य कर्मक्षयो भोगं विनैव न सम्भवतीति, यद्वा प्रारब्धकर्मणां क्षयो भोगमन्तराऽसम्भव इत्यर्थं व्यवस्थापयन्ति।

अत्र योगमहिम्ना कायव्यूहेन संचितस्य भोगेन क्षयप्रतिपादकपक्षापेक्षया तत्त्वज्ञानेन संचितकर्मक्षयप्रतिपादकपक्षः श्रुतिस्मृतिसम्मत इति श्रीस्वामिचिद्घनानन्दगिरिमहोदया निरूपितवन्तः[३]।

---

एवंच न्यायसिद्धान्त में यह स्वीकार है— संचित कर्म का क्षय भोग द्वारा ही सम्भव है। ऐसी स्थिति में तत्त्वज्ञान के साथ योगसिद्धि भी उपर्युक्त वर्णन से समान रूप से आवश्यक है।

कतिपय आचार्यों ने तत्त्वज्ञान से ही संचित कर्म के क्षय को स्वीकार किया है। एतदर्थ श्रुति एवं स्मृति प्रमाणों का उल्लेख किया जाता है। तद्यथा—

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।" तथा

"ज्ञानाग्निः सर्वकर्माणि भस्मसात कुरुते तथा।।"

आचार्यों के इस मत में "नाभुक्तं क्षीयते......" यह वचन कैसे समन्वित होगा।

इस प्रश्न का समाधान है— नाभुक्वंक्षीयते........वचन का आशय है—

(१) अतत्त्वज्ञ व्यक्ति तथा अप्रायश्चित्ती का कर्मक्षय, भोगविना कथमपि सम्भव नहीं है। अथवा–

(२) प्रारब्ध कर्मों का क्षय भोग-बिना कथमपि सम्भव नहीं है।

योग-माहात्म्य से कायव्यूह द्वारा भोग (अल्पकालवधि में) से संचित कर्मक्षय पक्ष श्लाघ्य है किन्तु श्लाघ्यतर पक्ष है— तत्त्वज्ञान द्वारा संचित कर्मों का क्षय होता है— यह श्रुति-स्मृति-वचनों के समन्वित तात्पर्य के अनुकूल है। ऐसा निरूपण श्रीस्वामिचिद्घनानन्द गिरि महोदय ने किया है।

---

१. मुण्ड० २।२।८.

२. भ० गी० ४।३७.

३. न्यायप्रकाशे, पृ० ३०-३१

तदेवं जीवात्मानो यदा सद्गुरूपदेशतः समस्तपदार्थतत्त्वज्ञानं प्राप्य निषिद्धकर्मवर्जं निष्कामभावेन शुभकर्मणामनुष्ठानं विदधते, तदा नवीनसुखदुःखबीजानुत्पत्तेः पूर्वसञ्चितपापपुण्ययोर्मञ्जूषायाश्च तत्त्वज्ञानेन भोगेन वा रिक्तत्वाद् जीवस्यादृष्टकारितं मनःसम्बन्धरूपं बन्धनं त्रुटयति, जीवश्च मुक्तो भवति। मनोऽपि तस्मिन् समये जडतां धारयति। न तस्मिन्नात्मना सह कार्यकरणे काचिच्छक्तिरवशिष्यते। एवमात्मनो मनसश्च पाषाणवज्जडरूपतापत्तिरेव मोक्ष इति नैय्यायिकानामैदम्पर्यम्।

## वैशेषिकदर्शने बन्धमोक्षयोः स्वरूपम्

तत्र वैशेषिकाचार्या मोक्षस्वरूपतत्साधनादिविषयेषु न्यायनयानुसारिणोऽपि किञ्चिद्वैशिष्ट्यं प्रतिपादयन्ति। "तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः"[1] इति सूत्रेण महर्षिः कणादस्तत्त्वज्ञानेन मिथ्याज्ञानदोषादीनां निवृत्तिस्ततश्चादृष्टाभावात् पुनः शरीरादीनां सम्बन्धाभावरूपोऽपवर्गः प्राप्यत इति प्रतिपादितवान्। तस्माद् मिथ्याज्ञानादिदुःखान्तानर्थपरम्परैव बन्धनमित्युच्यते।

---

एवञ्च निष्कर्षकथन प्राप्त होता है— जब साधक जीव, सद्गुरु के उपदेश से समस्त पदार्थों का तत्त्वज्ञान प्राप्त कर लेते हैं, निषिद्ध कर्मों का वर्जन करते हैं तथा निष्कामभाव से शुभकर्मों का अनुष्ठान करते हैं तब नवीन सुख-दुःखों के बीज की अनुत्पत्ति होने से, पूर्वसंचित पाप एवं पुण्य की मञ्जूषा का रिक्त हो (तत्त्वज्ञान अथवा भोग द्वारा) जाने पर जीव का बन्धन (अदृष्टकारित मनःसम्बन्ध) त्रुटित होता है तथा जीव मुक्त होता है। मुक्तावस्था में मनस् भी जडता को धारण करता है। मन के अन्दर आत्मा के साथ किसी कार्य के सम्पादन की कोई भी शक्ति अवशिष्ट नहीं रहती। एवञ्च नैयायिकों का सुदृढ़ तात्पर्य है— आत्मा एवं मनस् की पाषाणवत् जडतापत्ति होना ही मोक्ष है।

## वैशेषिक दर्शन में बन्ध एवं मोक्ष का स्वरूप

वैशेषिक दर्शन के आचार्य मोक्षस्वरूप एवम् उनके साधन आदि के सन्दर्भ में न्यायसिद्धान्त के अनुसरण करते हैं तथापि कुछ वैशिष्ट्य भी प्रतिपादित करते हैं। महर्षि कणाद ने निजसूत्र "तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः" प्रतिपादित किया है— तत्त्वज्ञान से मिथ्याज्ञान-दोषादि की निवृत्ति होती है तदनन्तर अदृष्ट के अभाव होने से पुनः शरीरादि के सम्बन्ध का अभाव होने से अपवर्ग की प्राप्ति होती है। एवञ्च यह निष्कर्ष प्राप्त होता है— मिथ्याज्ञान से दुःखपर्यन्त की अनर्थपरम्परा ही बन्ध है।

---

१. वै० सू० ५।२।१८.

## धर्मस्वरूपम्

वैशेषिकदर्शने–"धर्मविशेषप्रसूताद् द्रव्य–गुण–कर्म–सामान्य–विशेष–समवायानां पदार्थानां साधर्म्य–वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्"[१] इति महर्षिणा कणादेन, तथा "द्रव्य–गुण–कर्म–सामान्य–विशेष–समवायानां षण्णां पदार्थानां साधर्म्य–वैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः, तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव"[२] इति भगवता प्रशस्तपादेन च निःश्रेयसकारणीभूतस्य तत्त्वज्ञानस्योत्पत्तौ निवृत्ति-लक्षणो धर्मः कारणमिति निरूपितम्। किं तावद् धर्मस्वरूपमिति जिज्ञासाया-मुक्तं महर्षिणा कणादेन–"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"[३] इति।

श्रीशङ्करमिश्राः सूत्रस्यास्य व्याख्यानावसरे–"अभ्युदयस्तत्त्वज्ञानम्, निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः, तदुभयं यतः स धर्मः। अभ्युदयद्वारकं निःश्रेयसमिति मध्यमपदलोपी समासः, पञ्चमीतत्पुरुषो वा[४]। स च धर्मो निवृत्तिलक्षणो वक्ष्यते"[५] इत्याहुः। अत्राभ्युदयो नाम तत्त्वज्ञानमिति कथयतां

---

## धर्म का स्वरूप

वैशेषिक दर्शन में महर्षि कणाद एवम् आचार्य प्रशस्तपाद ने सुस्पष्ट कहा है— निःश्रेयस का कारण तत्त्वज्ञान है तथा तत्त्वज्ञान की उत्पत्ति में निवृत्ति-लक्षण धर्म कारण है। तद्यथा— "धर्मविशेषप्रसूताद् द्रव्यगुण.............तत्त्वज्ञानान्निःश्रेयसम्।" एवम् "द्रव्यगुण कर्म........निःश्रेयसहेतुः, तच्चेश्वर.....धर्मादेव।"

धर्म का क्या स्वरूप है— इस जिज्ञासा के समाधानार्थ महर्षिकणाद ने कहा है— "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।"

श्रीशङ्करमिश्र ने इस सूत्र के व्याख्यान के प्रसङ्ग में सुस्पष्ट कहा है— "अभ्युदय का अर्थ है तत्त्वज्ञान तथा निःश्रेयस का अर्थ है आत्यन्तिक दुःखनिवृत्ति। इन दोनों की प्राप्ति जिससे होती है वह धर्म कहलाता है। अभ्युदयद्वारकं निःश्रेयसम्—यह मध्यमपदलोपी समास है। अथवा अभ्युदयात् निःश्रेयसम्–यह पञ्चमीतत्पुरुषसमास है। वह धर्म, यागादि रूप नहीं है प्रत्युत निवृत्तिलक्षण है यह

---

१. वै० सू० १।१।४.
२. प्र० पा० भा०, पृ० १५–१८.
३. वै० सू० १।१।२.
४. कार्यसामान्यं प्रति कारणे काले धर्मलक्षणस्यातिव्याप्तिवारणाय समासद्वयस्य प्रतिपादनम्।
५. वै० सू० उप० १।१।२.

श्रीशङ्करमिश्राणामयमाशयः–अत्र धर्मशब्देन न सामान्यधर्मोऽभिप्रेतः, किन्तु निष्कामकर्मजन्यो विशेषरूपः। अत एव "स च धर्मो निवृत्तिलक्षणो वक्ष्यते" इति तैरेव प्रतिपादितम्। निवृत्तिलक्षणस्य धर्मस्य निष्कामकर्मानुष्ठानजन्यत्वात् तस्यैहिकामुष्मिकफलसाधनत्वं नैव सम्भवति, किन्तु ततस्तत्त्वज्ञानस्यैवोत्पत्तिः। अतोऽत्राभ्युदयशब्देन तत्त्वज्ञानमिति ज्ञातव्यम्।

उत्तमूरुश्रीवीरराघवाचार्याः–"अत्राभ्युदयस्तत्त्वज्ञानमिति व्याख्यानं न स्वरसम्। उक्तरीत्या सर्वधर्मलक्षणपरत्वे सम्भवति सूत्रस्य धर्मविशेषपरतया संकोचो न युक्तः" इति प्रतिपादयन्तः–"अभ्युदय ऐहिकामुष्मिकफलम्, निःश्रेयसमपवर्गः, तयोर्यतो निष्पत्तिः स धर्मः"[1] इत्यभीष्टसाधनत्वेन सकाम-निष्कामोभयसाधारणं धर्मस्वरूपमभिप्रयन्ति। तदाऽभ्युदयनिःश्रेयसान्यतरसाधनत्वं धर्मत्वमिति तद्व्यापकं लक्षणम्। तत्रैहिकामुष्मिकाभ्युदयसाधनं ज्योतिष्टोमादि, निःश्रेयससाधनमात्मध्यानम्। एवम्–"विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"[2] इति श्रुतिबलेन यदेवाभ्युदयसाधनं प्रयोगभेदेन तदेव निःश्रेयससाधनमपि

---

पश्चाद् ग्रन्थ में उपपादित किया जायगा।'' यहाँ "अभ्युदयो नाम तत्त्वज्ञानम्'' ऐसा कहने वाले श्रीशंकरमिश्र का आशय है— "धर्मशब्द से यहाँ सामान्य धर्म विवक्षित नहीं है किन्तु निष्कामकर्मजन्य विशेष-धर्म विवक्षित है। अत एव उन्होंने स्वयं ही कहा है–वह धर्म निवृत्तिलक्षण है उसे उपपादित (आगामी ग्रन्थ में) करेंगे। निवृत्तिलक्षण धर्म की उत्पत्ति निष्काम कर्म के अनुष्ठान से होती है। अतः वह धर्म, ऐहिक अथवा आमुष्मिक फल का साधन नहीं हो सकता। किन्तु उस धर्म से तत्त्वज्ञान की ही उत्पत्ति होती है। अतः यहाँ अभ्युदय शब्द से तत्त्वज्ञान (अर्थ) विवक्षित है।

उत्तमूरु श्रीवीरराघवाचार्य ने समीक्षा की है— यहाँ अभ्युदय का तत्त्वज्ञान अर्थ बताना समीचीन नहीं है। यथोक्तरीति से धर्म सामान्य अर्थ के सम्भव होते धर्मविशेष में (संकोच द्वारा) सीमित करना अयुक्त है ऐसी समीक्षा द्वारा अपना अभिप्राय बताया है— अभ्युदय का अर्थ – ऐहिक एवम् आमुष्मिक (स्वर्ग) फल तथा निःश्रेयस का अर्थ है–अपवर्ग। उन दोनों की निष्पत्ति जिससे होती है वह धर्म कहलाता है। एवंच अभीष्ट साधन होने से धर्मशब्द से सकाम एवं निष्काम उभय को विवक्षित माना जाय। एवंच धर्म का व्यापक लक्षण सम्पन्न होता है—

---

१. वै० सू० रसा० १।१।२.
२. बृ० उ० ४।४।२२.

भवतीत्यभ्युदयस्यानर्थरूपतया हेयत्वेऽपि तद्धेतवो धर्मा न हातुमर्हाः, निष्कामभावेन तेषामेव भूयोऽनुष्ठेयत्वात्। एवं विरक्तभावेनानुष्ठीयमान एव धर्मो निवृत्तिधर्म इत्युच्यते। एष एव धर्मस्तत्त्वज्ञानोत्पादनद्वारा मोक्षहेतुर्भवति।

किञ्च, निवृत्तिलक्षणस्य धर्मस्याचेतनत्वात् तस्य स्वयं नियतविषये प्रवृत्तिसामर्थ्यविरहेण कणादमते ईश्वरानुग्रहमन्तरेण तस्य मुक्तिफलोन्मुखत्वाऽसम्भवात् परमेश्वरानुग्रहोऽपेक्षितः। तदुक्तं प्रशस्तपादेन– "तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव"[१] इति। श्रीधरभट्टेन चोक्तम्–"धर्मोऽपि तावन्न निःश्रेयसं करोति यावदीश्वरेच्छया नानुगृह्यते"[२] इति। तस्मादीश्वरेच्छाविशेषेण कार्यारम्भाभिमुखीकृताद् धर्मात् तत्त्वज्ञानम्, ततश्च निःश्रेयसं भवतीति प्रशस्तपादाभिप्रायः। अत्र तच्चेति चकारो द्रव्यादिसाधर्म्यवैधर्म्यज्ञानेन सह धर्मस्य निःश्रेयसहेतुत्वं समुच्चिनोति।

---

अभ्युदय एवं निःश्रेयस किसी एक के प्रति जो साधन है उसे धर्म कहा जाता है। ऐहिक एवम् आमुष्मिक अभ्युदय का साधन है—ज्योष्टोमादि तथा निःश्रेयस का साधन है—आत्मज्ञान। "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतिबल से जो धर्म, अभ्युदय का साधन है वही निःश्रेयस का भी साधन है अतः अभ्युदय के अनर्थरूप होने से हेय होने पर भी अभ्युदय के कारणस्वरूप धर्म त्याज्य नहीं है, केवल निष्काम भाव से उनका भूयः अनुष्ठान अपेक्षित है। इस प्रकार विरक्तभाव से अनुष्ठान किये जाने पर वह निवृत्तिधर्म कहलाता है। यही धर्म, तत्त्वज्ञान की उत्पत्ति द्वारा मोक्ष के प्रति हेतु बनता है।

किञ्च, निवृत्तिलक्षण धर्म अचेतन है उसका नियत विषय में स्वयं प्रवृत्तिसामर्थ्य का विरह है अतः ईश्वरानुग्रह विना धर्म, मुक्तिफलोन्मुख नहीं हो सकता अतः परमेश्वरानुग्रह अपेक्षित होता है। इस आशय का प्रतिपादन, प्रशस्तपाद ने सुस्पष्टतया किया है— "तच्चेश्वरचोदनाभिव्यक्ताद् धर्मादेव।" श्रीधरभट्ट ने भी कहा है— "धर्मोऽपि तावन्न निःश्रेयसं करोति यावदीश्वरेच्छया नानुगृह्यते।" अतः ईश्वरेच्छाविशेष से कार्यारम्भहेतु अभिमुखीभावापन्न धर्म से तत्त्वज्ञान की उत्पत्ति होती है एवम् तत्त्वज्ञान से निःश्रेयस की उत्पत्ति होती है। यह प्रशस्तपाद का अभिप्राय है। तच्च-केचन शब्द से द्रव्यादि के साधर्म्य-वैधर्म्यज्ञान के साथ धर्म की निःश्रेयसहेतुता का समुच्चय विवक्षित है।

---

१. प्र० पा० भा०, पृ० १८.

२. न्या० क०, पृ० १९.

**तत्त्वज्ञानस्वरूपम्**

वैशेषिकदर्शने द्रव्यादिषट्पदार्था एव तत्त्वानि, तेषां साधर्म्य-वैधर्म्यात्मकं ज्ञानमेव तत्त्वज्ञानमित्युच्यते। यस्य वस्तुनो यो भावस्तत् तस्य तत्त्वम्। तत्त्वं नामानारोपितं रूपम्। तस्य साक्षात्कारात्मकोऽनुभवो ज्ञानम्। तदुक्तं शिवादित्येन—"एतेषां तत्त्वज्ञानं निःश्रेयसहेतुः। तत्त्वमनारोपितं रूपम्, तस्य ज्ञानमनुभवः"[१] इति। समानो धर्मो येषां ते सधर्माणः, तेषां भावः साधर्म्यम्। विरुद्धो धर्मो येषां ते विधर्माणः, तेषां भावो वैधर्म्यम्। साधर्म्यवैधर्म्ये एव तत्त्वं साधर्म्यवैधर्म्यतत्त्वम्, तस्य ज्ञानं निःश्रेयसहेतुरित्यर्थः।

निःश्रेयसं नाम नास्ति श्रेयो यस्मादधिकं तन्निःश्रेयसम्, परमपुरुषार्थ इत्यर्थः। तत्र धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्थाः। तेषु वेदविहित-कर्मानुष्ठानजन्यः स्वर्गादिफलहेतुर्धर्मः। धर्माविरुद्धौ हि अर्थकामौ। चतुर्थस्तु ईश्वरानुग्रहेण नवगुणोच्छेदलक्षणः। स एव श्रेयस्तमः, नित्यत्वात्। तदुक्तं चतुर्णामपि स्वरूपम्—"धर्मादयश्चत्वारः पुरुषार्थाः। अग्निहोत्रादिलक्षण

---

**तत्त्वज्ञान का स्वरूप**

वैशेषिकदर्शन में द्रव्यगुणप्रभृति छह पदार्थ ही तत्त्व माने जाते हैं। उनके साधर्म्य-वैधर्म्य-ज्ञान को तत्त्वज्ञान कहा जाता है। जिस वस्तु का जो भाव है वह उसका तत्त्व होता है। तत्त्व, अनारोपित स्वरूप का नाम है। उसका साक्षात्कार रूप अनुभव तत्त्वज्ञान निःश्रेयसप्राप्ति में हेतु है। अनारोपित रूप को तत्त्व कहते हैं। उसका ज्ञान=साक्षात्कारात्मक अनुभव विवक्षित है। जिन पदार्थों के समानधर्म हैं वे सधर्मा कहलाते हैं उनके भाव को साधर्म्य कहा जाता है। जिनके धर्म विरुद्ध हैं वे विधर्मा कहलाते हैं उनका भाव वैधर्म्य कहलाता है। साधर्म्य एवं वैधर्म्य ही तत्त्व हैं उनका ज्ञान निःश्रेयस के प्रति हेतु है।

निःश्रेयस की व्युत्पत्ति है नास्ति श्रेयो यस्मादधिकं तन्निःश्रेयसम्। व्युत्पत्तिलभ्य शब्दार्थ है— परमपुरुषार्थ-मोक्ष। पुरुषार्थ ४ हैं— धर्म, अर्थ, काम एवं मोक्ष। उनमें वेदविहित कर्मानुष्ठान से जन्य धर्म का फल है-स्वर्गादि। अर्थ एवं काम धर्माविरुद्ध होने से ही पुरुषार्थ है। चतुर्थ पुरुषार्थ है— ईश्वर के अनुग्रह से ९ आत्मविशेषगुणों का उच्छेद। यह मोक्ष ही श्रेयस्तम है क्योंकि यह नित्य है। चारों पुरुषार्थों का स्वरूप निम्नाङ्कित है— धर्मादि चार पुरुषार्थ हैं। धर्म द्विविध है— अग्निहोत्रादिस्वरूप एवम् ईश्वराराधनादिस्वरूप। धर्माविरुद्ध अर्थ एवं काम द्विविध पुरुषार्थ हैं। षट्पदार्थ तत्त्वज्ञ

१. स० प०, पृ० ४१.

ईश्वराराधनादिलक्षणश्च धर्मः। अर्थकामौ धर्माविरुद्धौ। षट्पदार्थतत्त्वज्ञस्य पुंसः परमेश्वरप्रसादान्नवगुणोच्छेदलक्षणो मोक्षः"[१] इति।

वैशेषिकग्रन्थेषु पदार्थानां साधर्म्य-वैधर्म्यज्ञानं सर्वत्र प्रतिपादितं वर्तते। तत्रापि प्रशस्तपादविरचिते पदार्थधर्मसंग्रहाख्ये भाष्ये, श्रीधरभट्टविरचितायां तट्टीकायां न्यायकन्दल्यां च विस्तरेण निरूपितं वर्तते। तदनुसारेणात्र दिग्दर्शनं क्रियते। विस्तरस्तु तत्रैव द्रष्टव्यः।

## पदार्थानां साधर्म्यम्

अत्र द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां षण्णां पदार्थानां भावत्वं साधर्म्यम्। अभावे भावत्वस्याविद्यमानत्वादिदमस्य वैधर्म्यम्। द्रव्यादिपञ्चानामनेकत्वविशिष्टभावत्वं[२] समवायित्वं[३] च साधर्म्यम्। ते एव समवायाभावयोर्वैधर्म्ये। द्रव्यादिकर्मान्तानां त्रयाणां सत्तावत्त्वं साधर्म्यम्, द्रव्यादिषु त्रिष्वेव सत्ताजातेः समवायसम्बन्धेन विद्यमानत्वात्। गुणादिसमवायान्तानां

---

व्यक्ति को परमेश्वरप्रसाद से नवगुणोच्छेदलक्षण मोक्ष प्राप्त है।"

वैशेषिक ग्रन्थों में पदार्थों का साधर्म्य-वैधर्म्यज्ञान सर्वत्र प्रतिपादित है। विशेष रूप से प्रशस्तपादरचित पदार्थधर्मसंग्रह नामक भाष्य तथा उसकी टीका न्यायकन्दली (श्रीधरभट्ट विरचित) में विस्तार के साथ निरूपित है। तदनुसार यहाँ दिग्दर्शनमात्र किया जाता है। विस्तारपूर्वक जिन्हें ज्ञान अपेक्षित है उन्हें आकरग्रन्थों का अवलोकन करना चाहिए।

## पदार्थों का साधर्म्य

द्रव्यादि छह पदार्थों का साधर्म्य है— भावत्व। यतश्च अभाव में भावत्व विद्यमान नहीं रहता अतः यह उसका वैधर्म्य है। द्रव्यादि ५ पदार्थों का साधर्म्य है— अनेकत्वविशिष्ट भावत्व एवं समवायित्व। ये ही दोनों वैधर्म्य हैं— समवाय एवम् अभाव के। द्रव्य, गुण एवं कर्म इन तीन पदार्थों का साधर्म्य है सत्तावत्त्व। क्योंकि द्रव्यादि तीन पदार्थों में ही सत्ता-जाति समवायेन विद्यमान रहती है। गुण, कर्म, सामान्य, विशेष एवं समवाय—इन ५ पदार्थों के साधर्म्य हैं— सत्तावत्त्व,

---

१. सर्व० सं०, पृ० २४.

२. अनेकभावपदार्थवृत्तिपदार्थविभाजकोपाधि(द्रव्यत्व-गुणत्व-कर्मत्व-सामान्यत्व विशेषत्व-समवायत्व) मत्त्वम्।

३. समवायसम्बन्धेन सम्बन्धित्वम्।

पञ्चानां निर्गुणत्व[1]-निष्क्रियत्वे[2] साधर्म्ये। द्रव्यादीनां त्रयाणां सत्तावत्त्वम्, सामान्यविशेषवत्त्वम्, धर्माधर्मजनकत्वं[3] च साधर्म्यम्। नित्यपदार्थातिरिक्तानां पदार्थानामाश्रितत्वं[4] साधर्म्यम्। गुणकर्मणोरसमवायिकारणत्वं[5] साधर्म्यम्। जन्यपदार्थानामनित्यत्वं कार्यत्वं च साधर्म्यम्। सामान्य-विशेष-समवायानां नित्यत्वम्, असामान्यवत्त्वम्, बुद्धिवेद्यत्वं च साधर्म्यम्।

## द्रव्याणां साधर्म्यम्

पृथिव्यादिनवद्रव्याणां समवायिकारणत्वं गुणवत्त्वं द्रव्यत्वजातिमत्त्वं च साधर्म्यम्। क्षिति-जल-ज्योतिर्-अनिल-मनसां मूर्तत्व-क्रियावत्त्व-वेगवत्त्व-परत्ववत्त्व-अपरत्ववत्त्वानि साधर्म्याणि। एतानि मूर्तत्वादीन्याकाश-काल-दिगात्मनां वैधर्म्याणि। आकाश-काल-दिगात्मनां विभुत्वं[6] परममहत्परि-

---

सामान्यविशेषवत्त्व, अर्थशब्दाभिधेयत्व एवं धर्माधर्मजनकत्व। नित्य पदार्थातिरिक्त पदार्थों का साधर्म्य है— आश्रितत्व। गुण एवं कर्म पदार्थों का साधर्म्य है- असमवायिकारणत्व। जन्यपदार्थों का साधर्म्य है— अनित्यत्व एवं कार्यत्व। सामान्य, विशेष एवं समवाय पदार्थों का साधर्म्य है— नित्यत्व, असामान्यवत्त्व एवं बुद्धिवेद्यत्व।

## द्रव्यों का साधर्म्य

पृथिवीप्रभृति द्रव्यों का साधर्म्य है— समवायिकारणत्व, गुणवत्त्व, द्रव्यत्व-जातिमत्त्व। पृथिवी, जल, तेज, वायु एवं मनस् का साधर्म्य है— मूर्तत्व, क्रियावत्त्व, वेगवत्त्व, परत्ववत्त्व, एवम् अपरत्ववत्त्व। ये सभी वैधर्म्य हैं आकाश, काल, दिशा एवम् आत्मा के। आकाश, काल, दिशा एवम् आत्मा के साधर्म्य

---

१. गुणवदवृत्तिधर्मवत्त्वम्।

२. कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।

३. वैशेषिकैः स्वयं व्यवहाराय यः सङ्केतः कृतोऽस्मिन् शास्त्रे-"अर्थशब्दाद् द्रव्यगुणकर्माणि प्रतिपत्तव्यानि" इति, तेन द्रव्यादीनि त्रीणि निरुपपदेनार्थशब्देनोच्यन्ते" (न्या० क० पृ० ४५)।

४. "यथाहि भूमिरेकैव दीयमानाऽपह्रियमाणा च धर्माधर्मयोः कारणम्, एकः संयोगो द्वयोः कारणम्, यथा कपिलास्पर्शो नरास्थिस्पर्शश्च; एवं कर्माप्युभयकारणम्, यथा तीर्थगमनं शौण्डिकगृहगमनं च। एवमन्यदप्यूह्यम्" (न्या० क०, पृ० ४५)।

५. आकाश-काल-दिगात्म-मनांसि विहायेत्यर्थः।

६. सर्वमूर्तद्रव्यसंयोगित्वम्।

माणवत्त्वं च साधर्म्यम्। पृथिव्यादीनां पञ्चानां भूतत्वं[१] साधर्म्यम्। पृथिव्यादीनां चतुर्णां द्रव्यारम्भकत्व-स्पर्शवत्त्वे साधर्म्ये। पवनं विहाय तेषामेव रूपवत्त्व-द्रवत्ववत्त्वे साधर्म्ये। पृथिवीतेजसोर्नैमित्तिकद्रवत्वं साधर्म्यम्। जल-भूम्योर्गुरुत्व-रसवत्त्वे साधर्म्ये। पृथिव्यप्तेजोवायुनभसामात्मनां च वैशेषिक[२]-गुणवत्त्वं साधर्म्यम्। क्षित्युदकात्मनां[३] चतुर्दशगुणवत्त्वं साधर्म्यम्। आकाशात्मनां[४] क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वं[५] साधर्म्यम्। दिक्कालयोः पञ्चगुणवत्त्वं[६] सर्वकार्यनिमित्तकारणत्वं च साधर्म्यम्।

## गुणानां साधर्म्यम्

रूपादिचतुर्विंशतिगुणानां गुणत्वसमवायित्वम्, द्रव्यसमवेतत्वम्, निर्गुणत्वम्, निष्क्रियत्वं च साधर्म्यम्। रूप-रस-गन्ध-स्पर्श-परत्वापरत्व-गुरुत्व-स्नेह-

---

हैं— चतुर्दशगुणवत्त्वा। आकाश एवम् आत्मा का साधर्म्य है— क्षणिक एकदेशवृत्ति विशेषगुणवत्त्व। दिशा एवं काल का साधर्म्य है— पञ्चगुणवत्त्व एवम् सर्वकार्य-निमित्तकारणत्व।

## गुणों का साधर्म्य-

रूपादि २४ गुणों का साधर्म्य है— गुणत्व-समवायित्व, द्रव्यसमवेत्व, निर्गुणत्व एवं निष्क्रियत्व। रूप, रस, गन्ध, स्पर्श, परत्व, अपरत्व, गुरुत्व, स्नेह

---

१. बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्।

२. "विशेषो व्यवच्छेदः, विशेषाय स्वाश्रयस्येतरेभ्यो व्यवच्छेदाय प्रभवन्तीति वैशेषिका रूपादयस्तद्योगो भूतात्मनाम्" (न्या० क०, पृ० ६४)।

३. स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्व-वेग-नैमित्तिकद्रवत्व-गुरुत्व-रूप-रस-गन्धाः पृथिव्या गुणाः। स्पर्शादयोऽष्टौ, वेगः, गुरुत्वम्, द्रवत्वम्, रूपम्, रसः, स्नेहश्चेति चतुर्दशगुणाः जलस्य। बुद्ध्यादिषट्कम्, संख्यादिपञ्चकम्, भावना, धर्माधर्मौ—एते चतुर्दशगुणा आत्मनः।

४. तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपस्य क्षणिकत्वस्य आकाशविशेषगुणे शब्देसम्भवेऽप्यात्मविशेषगुनां धर्माधर्मसंस्काराणां तदसम्भवः, किन्तु ज्ञानादिषु षट्सु सम्भवत्येव क्षणिकत्वम्।

५. आकाशविशेषगुणः शब्दो नहि सर्वत्रोत्पद्यते, किन्तु भेर्याद्युपहिताकाशे। एवमेवात्मनो बुद्ध्यादिविशेषगुणा यस्मिन् प्रदेशे मनसा साकमात्मनः संयोगस्तत्रैवेत्येतेषामेकदेशवृत्तित्वम्।

६. संख्या-परिमाण-पृथक्त्व-संयोग-विभागाः।

वेगानां[1] मूर्तद्रव्यसमवेतत्वं साधर्म्यम्। शब्द-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-धर्माधर्मसंस्काराणा[2]ममूर्तद्रव्यसमवेतत्वम्, निमित्तकारणत्वं च साधर्म्यम्। संख्या-परिमाण-पृथक्त्व-संयोग-विभागानां मूर्तामूर्त-द्रव्यसमवेतत्वं साधर्म्यम्। रूप-रस-गन्ध-स्पर्श-स्नेह-सांसिद्धिकद्रवत्व-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-धर्माधर्म-भावना-शब्दानां षोडशानां[3] विशेषगुणत्वं साधर्म्यम्। संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्व-गुरुत्व-नैमित्तिकद्रवत्व-वेगानां[4] सामान्यगुणत्वं साधर्म्यम्। शब्द-स्पर्श-रूप-रस-गन्धानां बाह्यैकैकेन्द्रियग्राह्यत्वं साधर्म्यम्। संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्व-द्रवत्व-स्नेह-वेगानां द्वीन्द्रियग्राह्यत्वं[5] साधर्म्यम्। बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्नानां मनोमात्रग्राह्यत्वं साधर्म्यम्। गुरुत्व-धर्माधर्मभावनानामतीन्द्रियत्वं साधर्म्यम्। गुरुत्वधर्माधर्मभावनानामतीन्द्रियत्वं

---

एवं वेग-गुणों का साधर्म्य है— मूर्तद्रव्य-समवेत्व। शब्द, बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म एवं संस्कार-इन गुणों का साधर्म्य है— अमूर्तद्व्यसमवेतत्व एवं निमित्तकारणत्व। संख्या परिमाण, पृथक्त्व, संयोग एवं विभाग—इन गुणों का साधर्म्य है-मूर्तामूर्तद्रव्यसमवेतत्व। रूप, रस,गन्ध, स्पर्श, स्नेह, सांसिद्धिक द्रवत्व, बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म, भावना एवं शब्द इन १६ गुणों का साधर्म्य है— विशेषगुणवत्त्व। संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, परत्व, अपरत्व, गुरुत्व नैमित्तिकद्रवत्व एवं वेग का साधर्म्य है— सामान्यगुणत्व। शब्द, स्पर्श, रूप, रस एवं गन्ध-गुणों का साधर्म्य- बाह्य एकैकेन्द्रियग्राह्यत्व। संख्या, परिमाण, पृथक्त्व, संयोग, विभाग,

---

१. पृथिव्यप्-तेजो-वायुमनांसि मूर्तद्रव्याः। तत्र-"रूप-स्पर्श-परत्वापरत्व-वेगाः पृथिव्यादिषु त्रिषु, वायौ रूपवर्जम्, रूपस्पर्शवर्जं मनसि, रस-गुरुत्वे पृथिव्युदकयोः, द्रवत्वं पृथिव्युदकतेजस्सु, स्नेहोऽम्भसि, गन्धः पृथिव्याम्" (न्या० क०, पृ० २२९)।

२. आकाश-काल-दिक्-आत्मानोऽमूर्तद्रव्याः। तत्र-"बुद्ध्यादयो भावनान्ता आत्मगुणाः। आकाशगुणः शब्दः।" (न्या० क०, पृ० २२९)।

३. वुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः।
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः।। (कारि० ९०- ९१)

४. नह्येतेषु स्वाश्रयाणामितरव्यावर्तकसामर्थ्यमस्ति। "सामान्याय स्वाश्रयसाधर्म्याय गुणाः, न स्वाश्रयविशेषायेत्यर्थः" (न्या० क०, पृ० २३१)।

५. "चक्षुस्पर्शनग्राह्याः। यथा चक्षुषा 'स्निग्धोऽहम्' इति प्रतीतिरेवं त्वगिन्द्रियेणापि भवति, संख्यादिवत् स्नेहोऽपि तदुभयग्राह्यः" (न्या० क०, पृ० २३२)।

साधर्म्यम्। अपाकजरूप–रस–गन्ध–स्पर्श–परिमाण–एकत्व–पृथक्त्व–गुरुत्व–द्रवत्व–स्नेह–वेगानां कारणगुणपूर्वकत्वं साधर्म्यम्। अपाकजत्वविशेषणं स्पर्शान्तानाम्। पाकस्तु परमाणावेव। द्व्यणुकादौ त्वपाकजाः। बुद्ध्यादीनां नवानां शब्दस्य चाकारणगुणपूर्वकत्वं साधर्म्यम्। बुद्धि–सुख–दुःख–इच्छा–द्वेष–प्रयत्न–धर्माधर्म–भावना–शब्द–तूल–परिमाण–उत्तरसंयोग–नैमित्तिकद्रवत्व–परत्व–अपरत्व–पाकजरूप–रस–स्पर्शानां संयोगजन्यत्वं साधर्म्यम्। तत्र बुद्ध्यादयो नव आत्ममनःसंयोगजाः। शब्दो भेरीदण्डसंयोगजः। तूलपरिमाणं प्रचयाख्यसंयोगजम्। उत्तरसंयोगः पूर्व–संयोगजन्यः। नैमित्तिकद्रवत्वं वह्निसंयोगजम्। परत्वापरत्वे दिक्कालपिण्डसंयोगजे। पाकजरूप–रस–स्पर्शा वह्निसंयोगजा इति विवेकः[१]। संयोग–विभाग–वेगानां कर्मजन्यत्वं साधर्म्यम्।

---

परत्व, अपरत्व, द्रवत्व, स्नेह, वेग–इन गुणों का साधर्म्य है— द्वीन्द्रियग्राह्यत्व। बुद्धि, सुख, दुःख, इच्छा, द्वेष एवम् प्रयत्न—इन गुणों का साधर्म्य है— मनोमात्रग्राह्यत्व। गुरुत्व, धर्म, अधर्म तथा भावना का साधर्म्य है -अतीन्द्रियत्व। अपाकज रूप, रस, गन्ध, स्पर्श, परिमाण, एकत्व, पृथक्त्व, गुरुत्व, द्रवत्व, स्नेह एवं वेग-गुणों का साधर्म्य है— कारणगुणपूर्वकत्व। रूप, रस, गन्ध एवं स्पर्श गुणों का साधर्म्य है- अपाकजत्वविशेषण। पाक परमाणु में ही होता है। द्व्यणुक आदि में अपाकज स्पर्शान्त गुण रहते हैं। बुद्धिप्रभृति नौ गुणों एवं शब्द का साधर्म्य है— अकारणगुणपूर्वकत्व। बुद्धि, सुख, दुःख, इच्छा, द्वेष प्रयत्न, धर्म, अधर्म, भावना, शब्द, तूलपरिमाण, उत्तरसंयोग, नैमित्तिकद्रवत्व, परत्व, अपरत्व, पाकज-रूप रस स्पर्श— इनका साधर्म्य है— संयोगजन्यत्व। बुद्धिप्रभृति नौ गुण, आत्ममनः- संयोग से जन्य होते हैं। शब्दगुण भेरीदण्डसंयोग से जन्य होता है। तूलपरिमाण गुण, प्रचयाख्यसंयोग से जन्य होता है। उत्तरसंयोगगुण पूर्वसंयोग से जन्य होता है। नैमित्तिक द्रवत्व, वह्निसंयोग से जन्य होता है। परत्व एवम् अपरत्व–गुणों की उत्पत्ति दिक्कालपिण्डसंयोग से होती है। पाकजरूप, रस एवं स्पर्श, वह्निसंयोग से उत्पन्न होते हैं यह विवेचन है।

संयोग, विभाग एवं वेग का साधर्म्य है—कर्मजन्यत्व। गुरुत्व, द्रवत्व, वेग, प्रयत्न, धर्म, अधर्म एवं संयोग–इन गुणों का साधर्म्य है–क्रियाहेतुत्व। इनमें गुरुत्व, आद्यपतनक्रिया के प्रति हेतु है, द्रवत्व, आद्यस्यन्दन-क्रिया का जनक है। बाण के उत्तरक्रिया का जनक वेग है। शरीरादि-क्रिया का जनक प्रयत्न है,

---

१. न्या० क०, पृ० २३८–२३९.

गुरुत्व-द्रवत्व-वेग-प्रयत्न-धर्माधर्मसंयोगानां क्रियाहेतुत्वं साधर्म्यम्। अत्र गुरुत्वादाद्यपतनम्, द्रवत्वादाद्यस्यन्दनम्, वेगादिषोरुत्तरकर्माणि, प्रयत्नाच्छरीरादिक्रिया, नोदनादविभागरूपं कर्म, अभिघाताद्विभागरूपं कर्म, धर्माधर्मयोरग्नेरूर्ध्वज्वलनादिरूपं कर्म इत्यवगन्तव्यम्। एवमेवान्येषामपि गुणानां साधर्म्यं परिशीलनीयम्।

**कर्मसाधर्म्यम्**

उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसमवायित्वम्, एकद्रव्यवत्त्वम्[1] क्षणिकत्वम्, गुरुत्वद्रवत्वसंयोगप्रयत्नजन्यत्वम्, मूर्तद्रव्यवृत्तित्वम्,[2] असमवायिकारणत्वम्,[3] स्वपराश्रयसमवेतकार्यारम्भकत्वम्, उत्क्षेपणत्वादि-प्रतिनियतजातिसमवायित्वम्, द्रव्यानारम्भकत्वं च साधर्म्यम्।

**सामान्यसाधर्म्यम्**–परापरयोर्द्वयोः सामान्ययोः[4] स्वविषयसर्वगतत्वम्,

---

अविभाग रूप कर्म का जनक नोदन है, विभाग-क्रिया का जनक अभिघात है तथा अग्नि के ऊर्ध्वज्वलनादि क्रिया के प्रति हेतु धर्म एवम् अधर्म है—यह प्रविवेक है। इसी प्रकार अन्य गुणों के साधर्म्य का अनुशीलन आकरग्रन्थ के सहयोग से करना चाहिए।

**कर्म का साधर्म्य–**

उत्क्षेपण, अपक्षेपण, आकुञ्चन, प्रसारण एवं गमन ये पञ्चविध कर्म हैं। इन सब कर्मों का साधर्म्य है–एकद्रव्यवत्त्व, क्षणिकत्व, गुरुत्व द्रवत्व संयोगप्रयत्न—जन्यत्व, मूर्तद्रव्यवृत्तित्व, असमवायिकारणत्व, स्वपराश्रय-समवेतकार्यारम्भकत्व, उत्क्षेपणत्वादि प्रतिनियतजातिसमवायित्व एवं द्रव्यानारम्भकत्व।

**सामान्य (जाति) का साधर्म्य** पर सामान्य तथा अपरसामान्य–इन दोनों का

---

१. "एकं कर्म एकत्रैव द्रव्ये वर्तत इत्येकद्रव्यवत्त्वम्" (तत्रैव, पृ० ६९७)।

२. "यथा गुणानां निमित्तकारणत्वमपि, नैवं कर्मणाम्, किन्त्वसमवायिकारणत्वमेवेत्यर्थः" (न्या० क० पृ० ६९८)।

३. "स्वाश्रये पराश्रये च व्यासज्य समवेतं यत्कार्यं संयोगविभागलक्षणं तदारम्भकत्वम्" (तत्रैव, पृ० ६९८-६९९)।

४. "यत् सामान्यं यत्र पिण्डे प्रतीयते स तस्य स्वो विषयः, तत्र सर्वस्मिन् गतं समवेतम्, सर्वत्र तत्प्रत्ययात्" (तत्रैव, पृ० ७४१-७४२)।

नित्यत्वम्,[१] अनेकसमवेतत्वम्, अकार्यत्वम्,[२] जातिशून्यत्वम्, गुणक्रियाशून्यत्वं च साधर्म्यम्।

**विशेषसाधर्म्यम्**–विशेषाणां स्वतोव्यावृत्तत्वम्,[३] नित्यद्रव्यसमवेतत्वम्, स्वाश्रयवेदकत्वम्, नित्यत्वम्, जाति-गुण-क्रियाशून्यत्वं च साधर्म्यम्।

**समवायसाधर्म्यम्**–समवायस्य एकत्वाद्[४] द्रव्यादेरिव स्वभेदगत-साधर्म्याभावः। पदार्थसाधर्म्यनिरूपणावसरेऽन्यपदार्थैः साकमस्य साधर्म्यं प्रदर्शितमेव।

तदेवं विस्तरभयाद् द्रव्यादीनां साधर्म्यस्य दिग्दर्शनमात्रं कृतम्। एतेषां वैधर्म्यं तु "पृथिवीत्वाभिसम्बन्धात् पृथिवी"[५] इत्यादिरूपेण तत्तदसाधारणस्वरूपमेव वैधर्म्यरूपं तत्तदसाधारणलक्षणमेवेतरव्यावर्तनद्वारा तत्तद्व्यवहारहेतुर्भवति। अत एवोक्तम्–"व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इति।

---

साधर्म्य है स्वविषयसर्वगतत्व, नित्यत्व, अनेकसमवेतत्व, अकार्यत्व, जातिशून्यत्व एवं गुणक्रियाशून्यत्व।

**विशेषसाधर्म्य**– नित्यद्रव्यों में विद्यमान रहने वाले व्यावर्तक विशेषों का साधर्म्य है— स्वतोव्यावृत्तत्व, नित्यद्रव्यसमवेतत्व, स्वाश्रयभेदकत्व, नित्यत्व तथा जातिगुणक्रियाशून्यत्व।

**समवायका साधर्म्य**

यतः समवाय एक ही है। अतः द्रव्यादि के समान स्वभेदगत साधर्म्य इनमें नहीं हो सकता। पदार्थों के साधर्म्य का निरूपण करते वक्त अन्य पदार्थों के साथ इसका साधर्म्य प्रदर्शित किया जा चुका है।

अधिक विस्तार में गये विना द्रव्यादि पदार्थों का दिग्दर्शन मात्र किया गया। द्रव्यादि के वैधर्म्य उनके अपने असाधारण धर्म हैं। यथा "पृथिवीत्वाभिसम्बन्धात् पृथिवी"—इत्यादि। किसी भी वस्तु का असाधारण लक्षण उसका अपना अन्य की अपेक्षा वैधर्म्य है। यह वैधर्म्य ही इतरव्यावृत्ति के द्वारा तत् तद् व्यवहार में हेतु

---

१. ध्वंसाप्रतियगित्वम्।

२. कार्यभिन्नत्वम्।

३. "नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनस्सु" (प्र० पा० भा०, पृ० ७६६)।

४. "समवायस्त्वेक एव" (त० सं०, प्रत्यक्ष०)।

५. प्र० पा० भा०; पृ० ७०.

आत्मानात्मविवेकस्यैव तत्त्वज्ञानत्वं दार्शनिकैर्निरूप्यते। प्रकृते च द्रव्यादिषट्पदार्थज्ञानमेव तद्भवति, षट्पदार्थेष्वात्मानात्मनोरुभयोरपि सत्त्वात्। तत्र षट्पदार्थावान्तरविभागरूपाणां पृथिव्यादीनां सर्वेषां मध्ये येषां यावन्तः समाना धर्मा भवन्ति, यावन्तश्च विरुद्धा विशेषरूपाः, तेषां तावद्विशिष्टत्वेन विवेचने आत्मनोऽप्यनात्मभूतपृथिव्यादिभिः कियदंशे साम्यम्? कियदंशे च वैषम्यम्? कथं च ऐक्यभ्रमरूपमिथ्याज्ञानम्? कियदंशज्ञानाच्च तन्निवृत्तिः? अन्तत आत्मासाधारणधर्माः के? तत्रानात्मसम्बन्धायत्ताः के? के च स्वाभाविकाः? कथं चौपाधिकांशनिवृत्तिः? इत्यादिकं सर्वं क्रमेण गुरुमुखात् श्रुत्वा यो जिज्ञासुर्मननं निदिध्यासनं च करोति स एव सर्वपदार्थव्यावृत्तं स्वात्मानं स्वाभाविकविभुत्वैकत्वनित्यत्वनिरवयवत्वादिविशिष्टं साक्षात्करोतीति वैशेषिकदर्शने पदार्थानां साधर्म्यवैधर्म्यरूपं तत्त्वज्ञानं निःश्रेयसहेतुरिति प्रतिपादितम्।

---

(नियामक) बनता है। इसी वैधर्म्य को लेकर यह उक्ति प्रसिद्ध है— लक्षण का प्रयोजन है— व्यावृत्ति अथवा व्यवहार।

दार्शनिक जन, आत्मा एवम् अनात्मा के विवेक को ही तत्त्वज्ञान के रूप में निरूपण करते हैं। प्रकृत में द्रव्यगुण प्रभृति छह पदार्थों का ज्ञान ही तत्त्वज्ञान है। क्योंकि छह पदार्थों के अन्तर्गत आत्मा एवम् आत्मभिन्न उभयविध पदार्थ विद्यमान हैं। इन छह पदार्थों के अवान्तर प्रभेद पृथिवीजलादि हैं। इन सबों में जिनके जो धर्म समान (साधर्म्य) हैं अथवा विशेष (वैधर्म्य) हैं उनके विशिष्ट स्वरूप की विवेचना करने से आत्मा का अनात्मपृथिवी-प्रभृति से कितने अंश में साम्य है? तथा कितने अंश में वैषम्य है? तद्वत् कैसे आत्मा एवम् अनात्मपदार्थों के मध्य ऐक्य (अभेद) का भ्रम (मिथ्याज्ञान) उत्पन्न होता है? तथा कितने अंश के ज्ञान होने से मिथ्याज्ञान की निवृत्ति होती है? अन्ततोगत्वा विवेचनीय यह है—आत्मा के असाधारणधर्म कौन हैं? उनमें अनात्मसम्बन्ध के अधीनस्थ धर्म कौन से हैं? तथा कौन से धर्म स्वाभाविक हैं? तथा कैसे औपाधिक अंश की निवृत्ति होगी? इत्येवमादि सर्वविध विवेचन क्रमशः गुरुमुख से सुनकर जो जिज्ञासु मनन एवं निदिध्यासन करता है वह साधक ही सर्वपदार्थव्यावृत्त स्वात्मा (स्वाभाविक विभुत्व, एकत्व, नित्यत्व, निरवयवत्व से विशिष्ट) का साक्षात्कारात्मक दर्शन प्राप्त करता है। अतः वैशेषिक दर्शन में पदार्थों के साधर्म्य-वैधर्म्यरूप तत्त्वज्ञान को निःश्रेयस (मोक्ष) का हेतु बताया गया है।

अत्र "धर्मविशेषप्रसूताद्.........तत्त्वज्ञानान्निःश्रेयसम्"[१] इति महर्षिणा कणादेनादिष्टत्वादात्मज्ञानस्य यथावन्निष्पत्तये सर्वाण्यपि विहितकर्माणि फलाभिसन्धिरहितानीश्वरार्पणबुद्ध्याऽनुष्ठेयानि। एवमाराधितश्च परमात्मा प्रसन्नः सन्ननुगृह्णाति। ईश्वरानुगृहीतादेव निवृत्तिलक्षणाद्धर्मात् तत्त्वज्ञानमुदेति। ततश्च निःश्रेयसावाप्तिरिति तत्त्वज्ञानोत्पादनद्वारा निःश्रेयसहेतुभूतो धर्मो निःश्रेयसार्थिना न त्याज्य इति वैशेषिकदर्शने धर्मस्याभ्युपगमः कृतः।

श्रीश्रीधरभट्टमहाभागाः—नित्यनैमित्तिकयोः कर्मणोर्यावज्जीवं कर्तव्यत्वाद् जिज्ञासुना ज्ञानिना वा तयोर्निवृत्तिर्न सम्भवा, अन्यथा प्रत्यवायोत्पत्तिरिति मुक्तये ज्ञानकर्मसमुच्चयवादमभ्युपगच्छन्ति। उक्तं च तैः—"किं ज्ञानमात्रान्मुक्तिः? उत ज्ञानकर्मसमुच्चयात्? ज्ञानकर्मसमुच्चयादिति वदामः। निवृत्तेतराभिलाषस्य काम्यकर्मभ्यो निवृत्तस्यापि नित्य–नैमित्तिकाधिकारो न निवर्तते, तानि ह्युपनीतं ब्राह्मणमात्रमधिकृत्य विहितानि। मुमुक्षुरपि ब्राह्मण एव, जातेरनुच्छेदात्"[२] इति।

इस सन्दर्भ में महर्षि कणाद ने "धर्मविशेषप्रसूताद्.........तत्त्वज्ञानान्निःश्रेयसम्" सूत्र द्वारा तत्त्वज्ञान को धर्मविशेषप्रसूत कहा है। अतः आत्मज्ञान की यथावन्निष्पत्ति हेतु साधक जिज्ञासुकों फलाभिसन्धि-के बिना ईश्वार्पणबुद्धि से विहित कर्मों का अनुष्ठान करना चाहिए। इस प्रकार आराधित परमेश्वर प्रसन्न होकर जिज्ञासु को अनुगृहीत करते हैं। एवञ्च ईश्वरानुग्रहपूत निवृत्तिलक्षण धर्म के अनुष्ठान से तत्त्वज्ञान का उदय (साधक जिज्ञासु की आत्मा में) होता है। तदनन्तर उसे निःश्रेयस की प्राप्ति होती है। अतः मोक्षार्थी, तत्त्वज्ञानोत्पादन द्वारा मोक्षप्राप्ति में हेतु-धर्म का परित्याग न करे। एवंच वैशेषिकदर्शन में मोक्ष को धर्महेतुक बताया गया है।

कन्दलीकार श्रीधरभट्ट ने मुक्तिप्राप्ति में ज्ञानकर्मसमुच्चय का अभ्युपगम किया है। तदनुसार नित्यकर्म एवं नैमित्तिक कर्म का अनुष्ठान, जिज्ञासु एवं ज्ञानी को भी जीवनपर्यन्त करना चाहिए। अन्यथा प्रत्यवाय होगा। तद्यथा— क्या ज्ञानमात्र से मुक्ति होती है? अथवा ज्ञानकर्मसमुच्चय से। इस प्रश्न के समाधान में ज्ञानकर्मसमुच्चय को ही मुक्तिहेतु प्रतिपादित किया गया है। जिस मुमुक्षु के अन्य अभिलाष नहीं है वह काम्यकर्मों से निवृत्त होकर भी नित्यनैमितिक कर्मों से निवृत्त नहीं हो सकता। ये कर्म उपनीत ब्राह्मणमात्र के लिए विहित हैं। मुमुक्षुदशा में भी जाति के अनुच्छेद होने से वह ब्राह्मण ही है तद्भिन्न नहीं।"

१. वै० सू० १।१।४.
१. न्या० क०, पृ० ६८३.

अत्राऽयमाशयः–यो हि विहतकर्माधिकारी सन्नपि विहितान्यतिक्रमते, तस्य प्रत्यहं प्रत्यवाय उपचीयते। तादृशप्रत्यवायोपचयेन च बद्धो न मोक्षमर्हति। ननु तत्त्वज्ञानेन रागादेः समुच्छेद इति कुतो नु बन्धसम्भव इति चेन्न, तत्त्वज्ञानेन संशयविपर्ययादेरुन्मूलने सत्यपि विहिताकरणजन्यप्रत्यवायप्रतिरोधे सामर्थ्यस्यादृष्टचरत्वात्। किञ्च, यद्यात्मज्ञानं कर्माणि निरुणद्धि, तदा प्रारब्धकर्मणोऽपि निरोधः स्यादिति शास्त्रसिद्धजीवन्मुक्तेरपलापप्रसङ्गः। तस्मादस्त्येव विहिताकरणे बन्धः। तदुक्तम्–

> यानि काम्यानि कर्माणि प्रतिषिद्धानि यान्यपि।
> तानि बध्नन्त्यकुर्वन्तं नित्यनैमित्तिकान्यपि।। [१]इति।

ननु विहिताकरणमभावरूपम्, नह्यभावस्य भावोत्पादनसामर्थ्यं दरीदृश्यते लोके? इति चेन्न, धृतशरीरो ह्यात्मा कायेन, वाचा, मनसा च सदा किञ्चिदिव कुर्वन्नेव तिष्ठति। सन्ध्यावन्दनवेलायां विहितमकृत्वा यदन्यत् कर्म करोति, तेनैव हि प्रत्यवायोत्पत्तिरिति नह्यभावेन भावोत्पत्तिप्रसङ्गः। तदुक्तम्–

---

आशय यह है– जो व्यक्ति विहित कर्मों का अधिकारी होकर भी विहित कर्मों का अतिक्रमण करता है उसका प्रतिदिन प्रत्यवाय उपचित होता है। उससे आबद्ध होता हुआ वह जिज्ञासु साधक, मोक्ष की अर्हता प्राप्त नहीं कर पाता। तत्त्वज्ञान से उसके रागादि के उन्मूलन होने से बन्धन नहीं होगा ऐसी आशंका नहीं करनी चाहिए। कारण सुस्पष्ट है— तत्त्वज्ञान से संशय, विपर्यय आदि का उच्छेद होने पर भी विहित कर्मानुष्ठान से उत्पन्न होने वाला प्रत्यवाय, तत्त्वज्ञान से प्रतिरुद्ध नहीं होता क्योंकि यह सामर्थ्य उसे प्राप्त नहीं है। यदि आत्मज्ञान, कर्मों का निरोध करता तो वह प्रारब्ध कर्म का भी निरोध करता। फिर तो शास्त्रसिद्ध जीवन्मुक्ति का अपलाप प्रसङ्ग आपतित होगा। अतः विहित कर्मानुष्ठान नहीं करने से बन्धसद्भाव अनिवार्य होगा। तद्यथा—

"यानि काम्यानि कर्माणि..........नित्यनैमित्तिकान्यपि।।१।।

जिज्ञासा उदित है विहित कर्म का अनुष्ठानाभाव **विहिताकरण** कहलाता है। कुत्रापि अभाव स्वातन्त्र्येण भावोत्पादनसमर्थ नहीं देखा गया है। ऐसी स्थिति में वह बन्ध का जन्म कैसे देगा?

---

१. न्या० कं०, पृ० ६८४.

**कर्मणां प्रागभावो यो विहिताकरणादिषु।**
**न चानर्थकरत्वेन वस्तुत्वान्नापनीयते।।**
**स्वकाले यदकुर्वंस्तत् करोत्यन्यदचेतनः।**
**प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते।।**[1]इति।

ननु सन्ध्यावेलायां निषिद्धाचरणं प्रत्यवायहेतुस्तर्हि कोऽपि तस्मिन् समये किमपि निषिद्धाचरणमकुर्वन् तूष्णींभावेन तिष्ठति, योगं वाभ्यस्यति, तदा तूष्णींभावस्य योगाभ्यासस्य निषिद्धाचरणाभावात् कथं तस्य प्रत्यवायोत्पत्तिरिति चेन्न, केवलशरीरधारिणा योगमभ्यस्यतापि वा पुरुषेणावश्यकर्तव्यताविधेरुल्लङ्घनाद् भवत्येव प्रत्यवायः। तस्माद् विहिताकरणेन प्रत्यवायसमुत्पत्तेस्तस्य च बन्धनकारणतयाऽन्यतो विरतिविरहेण प्रत्यवाय-निरोधार्थं मुक्तिमभिलषता पुरुषेण योगाभ्यासाप्रातिकूल्येन भिक्षाभोजनादिकमिव यथाकालं विहितकर्मजातमनुष्ठातव्यम्।

---

इसका समाधान है— शरीरधारी जीवात्मा अपनी शरीर, वाणी एवं मनस्-इन्द्रिय से सर्वदा किसी न किसी कर्म को करता हुआ ही स्थित रहता है। यदि वह सन्ध्यावन्दनवेला में विहित कर्म को न करे तो वह तद्भिन्न किसी कर्म को करेगा उसी से प्रत्यवाय की उत्पत्ति होगी। एवञ्च अभाव से भावोत्पत्ति का प्रसङ्ग निराकृत हो जाता है। तद्यथा—

कर्मणां प्रागभावो यो.............नाभावेन स जन्यते।।२।।

उपर्युक्त युक्ति के आधार पर यह निष्कर्ष प्राप्त होता है— सन्ध्यावेला में निषिद्ध कर्म का आचरण करना प्रत्यवाय-जनक है। एवंच कोई व्यक्ति उक्त वेला में निषिद्ध कर्म का आचरण किये बिना तूष्णीम् (मौन रहकर) भाव से स्थित रहता है अथवा योगाभ्यास करता है। उस समय (ऐसी स्थिति में) निषिद्ध कर्म का आचरण नहीं होने से कैसे उसको प्रत्यवाय की उत्पत्ति होगी?

इसका समाधान यह है— सन्ध्यावेला में शरीरधारी अधिकारी मौनभाव से स्थित रहे अथवा योगाभ्यास करता रहे उसके द्वारा नित्यकर्म का उल्लङ्घन होने से प्रत्यवाय होता ही है। अतः विहित कर्म (नित्य) के अनुष्ठान नहीं करने से प्रत्यवाय की उत्पत्ति होती है। वह प्रत्यवाय, बन्धन का कारण बनता है। एवञ्च अन्य वस्तु या व्यक्ति से वैराग्य-विरह होने से प्रत्यवाय-निरोध हेतु मुमुक्षुसाधक यद्वत्

---

१. न्या० क०, पृ० ६८४.

अत्र प्रकृष्टतत्त्वज्ञानस्यैव मोक्षहेतुत्वात् तत्प्रकर्षे च दुरितानां प्रतिबन्धकारितया नित्यनैमित्तिककर्मभिरवश्यं विनाशनीयानि दुरितानि। तदुक्तम्–

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत्।।
अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः।[१] इति।

तथा परैरप्ययं गृहीतो मार्गः–

कर्मणा सत्त्वसंशुद्धिर्ज्ञानेनात्मविनिश्चयः।
भवेद् विमुक्तिरभ्यासात् तयोरेव समुच्चयात्[२]।।इति।

एवं श्रीधरभट्टेन मुक्तये ज्ञानकर्मसमुच्चयवादोऽभ्युपगतः[३]।

उदयनाचार्यास्तु–सत्त्वशुद्धिद्वारा आरादुपकारकं कर्म, सन्निपत्योपकारकं च तत्त्वज्ञानमिति प्रतिपादयन्तो जिज्ञासुनाऽकृतानि नित्यनैमित्तिकानि

---

योगाभ्यास की प्रतिकूलता बिना भिक्षाभोजनादि का यथाकाल अनुष्ठान करता है तद्वत् वह विहित नित्य कर्मों का अनुष्ठान अवश्य करे।

यहाँ ध्यातव्य है कि प्रकृष्ट तत्त्वज्ञान ही मोक्ष का कारण है। यतश्च तत्त्वज्ञान के प्रकर्ष के प्रति दुरितों का प्रतिबन्धकत्व होता है। उन दुरितों (पापों) को नित्य एवं नैमित्तिक कर्मों के अनुष्ठान से विनष्ट करते हुए अपने मोक्षमार्ग को प्रशस्त करना चाहिए। कन्दलीकार ने सुस्पष्ट कहा है—

नित्यनैमित्तिकैरेव..........कैवल्यं लभते नरः॥१ १/२॥

अन्य दार्शनिकों ने भी ज्ञानकर्मसमुच्चयवाद को मुक्ति के सन्दर्भ में स्वीकार किया है। तद्यथा—

कर्मणा सत्त्वसंशुद्धि.......तयोरेव समुच्चयात्॥१॥

आचार्य श्रीधरभट्ट द्वारा उपर्युक्त कारिका से समर्थित सिद्धान्त को वैशेषिक-सिद्धान्तरूप में अभ्युपगम किया गया है।

श्रीमान् उदयनाचार्य की विवेचना अन्यादृश है वह सत्त्वशुद्धि द्वारा कर्म को आरादुपकारक एवं तत्त्वज्ञान को सन्निपत्योपकारक मानते हैं। जिज्ञासु द्वारा

---

१. न्या० क०, पृ० ६८९.
२. न्या० क०, पृ० ६८९.
३. न्या० क०, पृ० ६८३-६८९.

प्रत्यवायोत्पत्तिद्वारा तज्ज्ञानोत्पत्तौ प्रतिबन्धकान्यप्युत्पन्नज्ञानस्य न तदुत्पादकानि, यतो हि तत्त्वज्ञानेन मिथ्याज्ञानरूपदोषाभावात् तत्प्रयोज्यरागद्वेषयोरप्यभावात् प्रवृत्तेरभाव इति तत्त्वज्ञस्य न विहिताकरणजन्यः प्रत्यवायो न वा तत्प्रयुक्तो बन्धः। तत्त्वज्ञस्य नित्यकर्मादिविहितानुष्ठानं तु लोकसंग्रहार्थम्। यथा वृष्ट्यर्थं प्रारब्धस्य कारीरियागस्य परिसमाप्तेः प्राग् यदि मध्य एव वृष्टिर्भवति चेत्, अथापि सङ्कल्पितस्य यागस्य विधिवत् समाप्तिः क्रियते, तथा ज्ञानोत्पत्तौ दुरितप्रतिबन्धकतया प्रारब्धानि नित्यनैमित्तिकानि तत्त्वज्ञानोत्पत्त्यनन्तरमपि लोकसंग्रहार्थं कर्तव्यानीत्यभिप्रयन्ति। तदुक्तम्–"तत्त्वज्ञानमेव निःश्रेयसहेतुः, कर्माणि त्वनुत्पन्नज्ञानस्य ज्ञानार्थिनस्तत्प्रतिबन्धकाधर्मनिवारणद्वारेण प्रायश्चित्तवदुपयुज्यन्ते। उत्पन्नज्ञानस्य त्वन्तरालब्धवृष्टेः कारीरिपरिसमाप्तिवत् प्रारब्धाश्रमधर्मसमापनं लोकसंग्रहार्थमिति युक्तमुत्पश्यामः"[1] इति। तदेवमुदयना-

---

अनाचरित नित्य एवं नैमित्तिक कर्म प्रत्यवायजनक होते हैं अतएव तत्त्वज्ञान के प्रति प्रतिबन्धक होते हैं। जिनके तत्त्वज्ञान उत्पन्न हो चुके हैं उनके लिए अनाचरित नित्य-नैमित्तिक कर्म प्रत्यवायजनक नहीं होते। कारण यह है— तत्त्वज्ञानोदय होने से मिथ्याज्ञान का तथा मिथ्याज्ञान से रागद्वेष प्रभृति दोष का अपाय होने से प्रवृत्ति का भी अपाय स्वरसतः हो जाने से तत्त्वज्ञ साधक को न तो विहिताकरणप्रयुक्त प्रत्यवाय होता है न ही तत्प्रयुक्त बन्ध होता है। तत्त्वज्ञ साधक के द्वारा किया गया नित्यकर्मादिका अनुष्ठान लोकसंग्रहार्थ होता है। यद्वत् वृष्टि के उद्देश्य से आरम्भ क़िये गये कारीरियाग की समाप्ति के पूर्व (मध्य में ही) वृष्टि हो जाती है तथापि संकल्पित याग की विधिवत् समाप्ति इष्ट होती है। तद्वत् ज्ञानोत्पत्ति के प्रतिबन्धक दुरित के निराकरण हेतु प्रारम्भ किये गये नित्य एवं नैमित्तिक कर्मों का अनुष्ठान, तत्त्वज्ञान की उत्पत्ति के पश्चाद् भी लोकसंग्रह निमित्त महान् साधकों द्वारा किया जाता है।

अतएव किरणावली (टीकाग्रन्थ) में आचार्यप्रवर ने सुस्पष्ट कहा है— निःश्रेयस- प्राप्ति के प्रति तत्त्वज्ञान ही कारण है। तत्त्वज्ञान की प्राप्ति के उद्देश्य से अप्राप्तज्ञान से आचरित कर्म, ज्ञान-प्रतिबन्धक अधर्म की निवृत्ति द्वारा प्रायश्चित्त कर्म की भाँति उपयोगी होते हैं। जिस साधक को तत्त्वज्ञान उत्पन्न हो जाता है, उन्हें कारीरियागन्याय से प्रारम्भ किये गये आश्रमधर्म का (समापन) लोकसंग्रह के उद्देश्य से अनुवर्तमान रहता है।"

---

१. किर०, पृ० १३२.

चार्याभिप्रायानुसारेण तत्त्वज्ञानमेव साक्षाद् मिथ्याज्ञानविध्वंसनद्वाराऽपवर्गहेतुः, कर्म तु परम्परया चित्तशुद्ध्यादिकं विदधत् तत्त्वज्ञानानुकूल्येनैव मोक्षहेतुरिति सिद्धम्।

वस्तुतस्तु वैशेषिकदर्शनं मोक्षं प्रति ज्ञानकर्मसमुच्चयस्य साधनत्वमिति न निरूपयति, किन्तु तत्त्वज्ञानस्यैवेति। अत एव भगवत्पादैः शङ्कराचार्यैरपि सर्वसिद्धान्तसंग्रहे वैशेषिकपक्षनिरूपणावसरे–

षट्पदार्थपरिज्ञानान्मोक्षं वैशषिका विदुः।....
तेषां साध्यर्म्यवैधर्म्यज्ञानं मोक्षस्य साधनम्।।

इति तत्त्वज्ञानस्यैव मोक्षहेतुत्वं प्रतिपादितम्। तदेवं परिशीलनेनेत्थं निर्णेतुं शक्यते यत् तत्त्वज्ञानमेव साक्षान्मोक्षहेतुरतो तत्त्वज्ञानप्रेप्सुभिः सर्वैरपि तदुत्पत्तौ हेतुभूतो निवृत्तिलक्षणो धर्मो निष्कामकर्म वा समाचरणीयमिति।

**मोक्षस्वरूपम्**

तत्रभवता महर्षिणा कणादेन–"तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः[१]" इति तत्स्वरूपं प्रतिपादितम्। अस्यायमर्थः–तस्य अभावस्तदभावः, अदृष्टाभाव

---

एवंच आचार्यमतानुसार अपवर्ग के प्रति मिथ्याज्ञानविधूनन द्वारा साक्षात्कारणता तत्त्वज्ञान में ही मान्य है। विहित कर्मों में चित्तशुद्धि द्वारा परम्परया तत्त्वज्ञानजननपुरःसर मोक्षहेतुता मान्य है, साक्षात् नहीं।

वस्तुस्थित्या वैशेषिकदर्शन में मोक्ष के प्रति ज्ञानकर्मसमुच्चय को साधन नहीं माना गया है। तत्त्वज्ञान को ही मोक्ष के प्रति कारण माना गया है। अतएव भगवत्पाद शंकराचार्य जी ने सर्वसिद्धान्तसंग्रह में वैशेषिकपक्ष की स्थापना के प्रसङ्ग में तत्त्वज्ञान को ही मोक्ष का कारण बताया है। तद्यथा—

षट्पदार्थपरिज्ञानाद्............मोक्षस्य साधनम्।।१।।

उपर्युक्त विमर्शात्मकपरिशीलन से यह निष्कर्ष प्राप्त होता है— तत्त्वज्ञान ही मोक्ष का साक्षात् कारण है अतः तत्त्वज्ञानाभिलाषी साधकों को ज्ञानप्राप्ति के हेतु निवृत्तिलक्षण धर्म अर्थात् निष्काम कर्म का आचरण करना चाहिए।

**मोक्षस्वरूपम्–**

पूज्यचरण महर्षि कणाद ने मोक्षस्वरूप के प्रतिपादन हेतु निम्नाङ्कित सूत्र की रचना की— "तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः।" इसका अर्थ है।

---

१. वै० सू० ५।२।१८.

इत्यर्थः। अदृष्टस्यैव शरीरप्रापणद्वारा बन्धनहेतुत्वात्, तत्त्वज्ञेन पुरुषेण सञ्चितप्रारब्धकर्मणोरुपभोगेन क्षपितत्वात्, भाविशरीरारम्भकादृष्टाभावाच्च शरीरान्तरानारम्भः, तथा सति च मोक्षः। अर्थाददृष्टाभावसाध्यः शरीरनाशविशिष्टशरीरान्तरानुत्पादलक्षणो मोक्ष इत्यर्थः। तदुक्तं प्रशस्तपादेनापि– "ज्ञानपूर्वकात्तु कृतादसंकल्पितफलाद् विशुद्धे कुले जातस्य दुःखविगमोपायजिज्ञासोराचार्यमुपसङ्गम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाद्यभावात् तज्जयोर्धर्माधर्मयोरनुत्पत्तौ पूर्वसञ्चितयोश्चोपभोगान्निरोधे सन्तोषमुखं शरीरपरिच्छेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्तते। तदा निरोधान्निर्बीजस्यात्मनः शरीरादिनिवृत्तिः, पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्षः"[१] इति।

यथा दग्धेन्धनस्यानलस्य पुनरनुत्पादरूपोपशमस्तथैव शरीराद्यनुत्पत्तौ

---

तस्य=अदृष्टस्य अभावः तदभावः तस्मिन् तदभावे सति– यह अर्थ परिगृहीत होता है। यतश्च शरीरप्राप्ति अदृष्ट से होती है अतः बन्धन के प्रति अदृष्ट को कारण माना जाता है। तत्त्वज्ञानी साधक के संचित एवं प्रारब्ध कर्मों का क्षय उपभोग द्वारा हो जाता है। एवं भावी शरीर का आरम्भक अदृष्ट के प्रागभाव होने से शरीर (अन्य) का आरम्भ नहीं होता। परिणामस्वरूप साधक को मोक्ष की प्राप्ति होती है। निष्कर्ष-कथन प्राप्त होता है— अदृष्टाभाव से साध्य, पूर्वशरीरनाश के साथ शरीरान्तर के अनुत्पादस्वरूप मोक्ष की तत्त्वज्ञानसाध्यता है। इसका विशदीकरण आचार्य प्रशस्तपाद ने किया है– "फलसंकल्प के विना ज्ञानपूर्वक कर्मानुष्ठान से विशुद्ध कुल में उत्पन्न सुकृती को दुःखविगम के उपाय की जिज्ञासा होती है। पुनश्च आचार्य के समक्ष उपस्थित हुए षट्पदार्थ-तत्त्वज्ञान सम्पन्न उस जिज्ञासु के अज्ञान की निवृत्ति होने पर विरक्तिप्राप्त साधक के रागद्वेषादि का अभाव होता है। अतश्च उनसे उत्पन्न होने वाले धर्म एवम् अधर्म का अभाव होता है। यतश्च पूर्वसंचित धर्म एवम् अधर्म का उपभोग होने से निरोध हो जाता है। परिणामस्वरूप सन्तोषपुरःसर शरीरपरिच्छेदः का उत्पादन होने से रागादि की निवृत्ति होने से निवृत्तिलक्षण धर्म उदित होता है। वह परमार्थदर्शन से लभ्य सुख का प्रदान कर स्वतः निवृत्त हो जाता है। एवंच निरोध होने से निर्बीज जीव का शरीरादि-निवृत्ति हो जाती है पुनश्च शरीरादि की अनुत्पत्ति होने से इन्धन के जल जाने पर अनल के उपशम समोपम मोक्ष की प्राप्ति होती है।"

यद्वत् इन्धन के दग्ध हो जाने से अनल का पुनः अनुत्पाद-स्वरूप उपशम होता है तद्वत् शरीरादि की अनुत्पत्ति होने से बाह्य एवम् आन्तर करणों का

---

१. प्र० पा० भा०, पृ० ६७९-६८२.

करणोपरमात्मको मोक्षः सम्पद्यते। नैय्यायिकवद् वैशेषिका अपि मुक्तावात्मन आनन्दरूपत्वं नाङ्गीकुर्वन्ति। अत एव श्रीधरभट्टेन–"किं पुनरात्मनः स्वरूपं येनावस्थितिर्मुक्तिरुच्यते? आनन्दात्मतेति केचित्।तदयुक्तम्, विकल्पासहत्वात्"[१] इत्यत्र बहु विकल्प्यात्मन आनन्दरूपत्वं खण्डितं वर्तते। सर्वमतसंग्रहाख्यग्रन्थे पूज्यपादशङ्कराचार्या अपि–"यो वै भूमेत्यादिवाक्येषु परमात्मनो दुःखासंस्पृष्टस्वभावत्वमेवोच्यत इति निःशेषदुःखोच्छेद एव मोक्षः। स च बुद्ध्यादिगुणान्तरसद्भावे न सम्भवतीति नवगुणोच्छेदलक्षण इत्याचार्यः कणादः स्मरति" इति वैशेषिकाभिमतमुक्तौ निःशेषदुःखोच्छेदमात्रमिति प्रतिपादितवन्तः।

ननु नवगुणयुक्तत्वं हि संसार्यात्मनः स्वरूपम्। मुक्तौ तादृशात्मस्वरूपाभावाद् यस्य बन्धस्तस्यैव मोक्ष इति सामानाधिकरण्य-नियमभङ्गप्रसङ्ग इति चेन्न, नवगुणोपलक्षितस्यात्मन आत्यन्तिकी दुःखनिवृत्तिर्मोक्ष इति स्वीकारेण दोषाभावात्। तदुक्तं श्रीधरभट्टेन–

---

उपरमस्वरूप मोक्ष प्राप्त होता है। नैयायिकों के समान वैशेषिक भी मुक्तिदशा में आत्मा की आनन्दरूपता का प्रतिषेध करते हैं। अतएव श्रीधरभट्ट ने प्रश्नोत्तर-वाक्यों का उपस्थापन कर कहा है— आत्मा का कौन सा स्वरूप है जिसकी स्थिति मुक्ति कहलाती है। कुछ विवेचक आनन्दात्मकता को आत्मस्वरूप मानते हैं किन्तु यह अयुक्त है क्योंकि किसी भी प्रकार की विप्रतिपत्ति (विकल्प) युक्ति-समुपपन्न नहीं है। कन्दलीटीका में अनेकविध विकल्पों का उपस्थापन कर आत्मा की आनन्दरूपता का खण्डन किया गया है। सर्वमतसंग्रहनामक ग्रन्थ में पूज्यपाद शङ्कराचार्य जी ने भी वैशेषिकसम्मत मुक्ति में निःशेषदुःखोच्छेदमात्र को प्रतिपादित किया है— "यो वै भूमा........इत्यादि श्रुतिवाक्यों में परमात्मा का स्वभाव दुःख से असंस्पृष्ट प्रतिपादित है। अतः सकलदुःखोच्छेद ही मोक्षस्वरूप है यतश्च बुद्ध्यादिगुणों के अस्तित्व मान्य होने पर तादृश मोक्षस्वरूप उपपन्न नहीं होगा। अतः आचार्य कणादजी ने नवगुणोच्छेदलक्षण मोक्षस्वरूप का अभिधान किया है।"

जिज्ञासा उदित होती है— संसारी जीवात्मा नवगुणोपेत होता है, मुक्तिदशा में नवगुणोच्छेद होने से जिसको बन्ध है उसी को मुक्ति होने के सामानाधिकरण्य-नियम की भङ्गप्रसक्ति होगी। इसका सहज समाधान है— नवगुणोपलक्षित जीवात्मा की आत्यन्तिक दुःखनिवृत्ति को मोक्षस्वरूप मानने से दोष की निराकृति हो जाती

---

१. न्या० क०, पृ० ६९०.

"समस्तात्मविशेषगुणोच्छेदोपलक्षिता स्वरूपस्थितिरेव"[१] इति।

अत्रायमभिप्रायः—वैशेषिकमते आत्मा चतुर्दशगुणाधारः। तत्र संख्यापरिमाण-पृथक्त्व–संयोग–विभागाख्याः पञ्च सामान्यगुणाः; बुद्ध्यादयः षट्, धर्माधर्मौ, भावनाख्यसंस्कारश्चेति नव विशेषगुणाः। यदा बुद्ध्यादयो विशेषगुणाः सर्वे समुच्छिद्यन्ते, तदा शिलाकल्पस्यात्मनोऽवस्थानं सार्वदिकी स्थितिः। यथा प्रलयकाले आकाशविशेषगुणस्य शब्दस्यात्यन्तोच्छेदात् केवलमाकाशो व्यवतिष्ठते तद्वदिति। श्रीवल्लभाचार्यैरत्र विषयेऽनुमानं च प्रदर्शितम्। तद्यथा— "आत्मा कदाचिद्ध्वस्ताशेषविशेषगुणः, विभुत्वे सति कार्यविशेषगुणत्वात्, महाप्रलयावस्थायामाकाशवत्"[२] इति।

अत एवोदयनाचार्याः किरणावल्याम्—"निःश्रेयसं पुनर्दुःखनिवृत्ति-रात्यन्तिकी, अत्र च वादिनामविवाद एव" इति मुक्तौ

---

है। अतएव कन्दलीकार ने कहा है— "सभी आत्मविशेषगुणों के उच्छेद से उपलक्षित स्वरूपस्थिति ही मोक्ष कहलाती है।"

निष्कर्ष कथन यह है— वैशेषिकमत में आत्मा में १४ गुण माने जाते हैं। उनमें संख्या, परिमाण, पृथकत्व, संयोग एवं विभाग ये ५ सामान्य गुण हैं। इसके अतिरिक्त ९ विशेषगुण हैं— बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म तथा भावना- नामक संस्कार। जब बुद्धिप्रभृति ९ विशेष गुणों का सर्वथा उच्छेद हो जाता है तब शिलाकल्प जीवात्मा की स्थिति (सर्वदा विद्यमान रहनेवाली) उदित होती है। दृष्टान्तरूप में प्रलयकालिक आकाश को परिगृहीत किया जाता है। उक्त दशा में आकाश के विशेषगुण **शब्द** का अत्यन्त उच्छेद होने से केवल आकाश की ही स्थिति रहती है। श्रीवल्भाचार्य जी ने अपने अनुमान प्रयोग में इस बात को सुस्पष्ट किया है। तद्यथा— "आत्मा कदाचिद् ध्वस्ताशेषविशेषसद्गुणः, विभुत्वे सति कार्यविशेषगुणत्वात्, महाप्रलयावस्थायामाकाशवत्।"

श्रीमान् उदयनाचार्य जी ने किरणावली में विशद विवेचना की है। तद्यथा— "आत्यन्तिकी दुःखनिवृत्ति को निःश्रेयसस्वरूप मानने में किसी भी वादी दार्शनिक को विमति नहीं है! जो दार्शनिक नित्यसुखाभिव्यक्ति को मोक्षदशा में स्वीकारते हैं वे लोग भी दुःख की आत्यन्तिकी निवृत्ति का (आवश्यक रूप) से स्वीकार करते

---

१. न्या० क०, पृ० ६९२.

२. न्या० ली०, पृ० ५९८.

नित्यसुखाभिव्यक्तिमङ्गीकुर्वद्भिरपि दुःखस्यात्यन्तिकी निवृत्तिः स्वीक्रियत इति तदंशे विवादाभावादस्योपादेयत्वं समर्थितवन्तः।

तदेवं दुःखात्यन्तविमुक्तिर्वा, समस्तगुणोच्छेदो वा, समस्तगुणोच्छेदोपलक्षितस्वरूपस्थितिर्वा मुक्तिरित्येतयोर्न्यायवैशेषिकमतयोः सुतरामवैषम्यम्।

## सांख्यदर्शने बन्धमोक्षयोः स्वरूपम्

तत्र तावत् सांख्यदर्शने महर्षिणा कपिलेन–"अथ त्रिविधदुःखात्यन्त-निवृत्तिरत्यन्तपुरुषार्थः"[१] इत्युपक्रम्य "यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः"[२] इत्युपसंहृत्य च उपक्रमोपसंहारलिङ्गेन दुःखत्रयस्यात्यन्तिकी निवृत्तिरेव परमपुरुषार्थ इति प्रतिपादितम्। श्रीमदीश्वरकृष्णेनापि–

**दुःखत्रयाभिघाताज्जिज्ञासा तदुपघातके हेतौ।**[३]**इति,**

---

हैं। इस प्रकार आचार्य ने आत्यन्तिकी दुःखनिवृत्ति की मोक्षरूपता की उपादेयता का समर्थन किया है।

एवंच मोक्ष की त्रिविध परिभाषा प्राप्त होती है— १. दुःखों की अत्यन्त विमुक्ति मोक्ष कहलाती है २. समस्त आत्मगुणोच्छित्ति मुक्ति कहलाती है। ३. समस्त गुणोच्छेदोपलक्षित स्वरूपस्थिति मोक्ष कहलाती है। न्याय एवं वैशेषिक दर्शनों में यह समानसिद्धान्त है।

## सांख्यदर्शन में बन्ध एवं मोक्ष का स्वरूप

सांख्यदर्शन में उपक्रम एवम् उपसंहारस्वरूप दो लिङ्गों से त्रिविध दुःख की आत्यन्तिक निवृत्ति को परमपुरुषार्थ प्रतिपादित किया गया है। महर्षि कपिल का उपक्रमसूत्र अवलोकनीय है— "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः। तद्वत् उपसंहार सूत्र है— "यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः।"

आचार्य ईश्वरकृष्ण ने भी उपक्रमकारिका तथा उपसंहारकारिका द्वारा उपर्युक्त मोक्षस्वरूप का समर्थन किया है। तद्यथा— उपक्रमकारिका है—

"दुःखत्रयाभिघाता...................... के हेतौ।।½।।

---

१. सां० सू० १।१.

२. सां० सू० ६।७०.

३. सां० का० १.

**प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति।।**[1]

इति चोपक्रमोपसंहाराभ्यां स एवार्थः प्रतिपादितः। तस्मान्न्यायवैशेषिकवत् सांख्यैरप्याध्यात्मिकादिदुःखनिवृत्तिरेव परमपुरुषार्थोऽभ्युपगतः।

लोके यथा चिकित्साशास्त्रे रोगः, रोगनिदानम् (रोगकारणम्), आरोग्यम्, तदुपायश्चेति चत्वारो व्यूहाः प्रतिपादितास्तथैव ममुक्षुभिर्जिज्ञासितत्वान्मोक्षशास्त्रेऽपि हेयम्, हेयहेतुः, हानम्, हानोपायश्चेति चत्वारो व्यूहा निरूपिताः सन्ति। अत्र खलु सांख्यशास्त्रे दुःखत्रितयं हेयम्, प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः, दुःखात्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषोर्विवेकख्यातिस्तु हानोपायः। प्रकृते प्रबन्धे हेयहेतुः, हेयम्, हानोपायः, हानमिति क्रमेणालोच्यते।

**बन्धस्वरूपम् (हेयहेतुः)**

तत्रभवता कपिलेन–"प्रकारान्तराऽसम्भवादविवेक एव बन्धः"[2] इति

---

तद्वत् उपसंहारकारिका है—

प्राप्ते शरीरभेदे ......................... कैवल्यमाप्नोति।।१।।

एतावता न्यायवैशेषिकदर्शनाभिमत दुःखत्रयनिवृत्ति की मोक्षस्वरूपता का अङ्गीकार सांख्यदर्शन को भी अभीष्ट है।

लोक में चिकित्साशास्त्रीय चार व्यूह प्रतिपादित किये गये हैं— १. रोग २. रोग का निदान (कारण) ३. आरोग्य एवम् ४. आरोग्य के उपाय। तद्वत् मुमुक्षुहित में मोक्षशास्त्र में भी चार व्यूह प्रतिपादित हैं— १. हेय (त्याज्य) २. हेयहेतु ३. हान तथा ४. हानोपाय। तदनुसार सांख्यशास्त्र में त्रिविध दुःख को **हेय** बताया गया है। प्रकृति-पुरुष-संयोगजनित अविवेक को **हेयहेतु** बताया गया है। दुःख के आत्यन्तिकनिवृत्ति को **हान** कहा गया है तथा प्रकृति एवं पुरुष के पारस्परिक विवेकख्याति को **हानोपाय** बताया गया है। अभी क्रमशः हेयहेतु, हेय, हानोपाय तथा हान का संक्षिप्त स्वरूप प्रतिपादनीय है।

**हेयहेतु-बन्ध का स्वरूप**

पूज्यपाद कपिल मुनि "बुद्धि, आत्मा से भिन्न है।" इस प्रबोध को

---

१. सां० का० ६८.
२. सां० सू० ६।१६.

सूत्रेण 'बुद्धिरात्मनो भिन्ना'' इत्याकारकस्य विवेकख्यातेर्विपरीतरूपस्याविवेकस्यैव बन्धरूपत्वं निरूपितम्। अत्रायमाशयः—सांख्यदर्शने बन्धमोक्षौ महत्तत्त्वनामिकायां बुद्धावेव सम्भवतः, पुरुषस्तु पुष्करपलाशवन्निर्लेपः। बुद्धिसान्निध्यरूपदोषात् तद्भेदग्रहाभावाच्च पुरुषे तदुपचारमात्रम्। तदुक्तमीश्वरकृष्णेन—

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।**[1] इति।

अस्य च बन्धस्य 'नास्मि, न मे, नाहम्' इत्याकारकेण पुरुषबुद्ध्योर्विवेक-ज्ञानेनैव नाश्यमानत्वादविवेक एव बन्धनमित्युच्यते।

अस्य चाविवेकस्य सादित्वे तस्य स्वत एवोत्पत्तौ तदुत्पत्तेः प्राग् यो मुक्त आसीत् स इदानीं बद्ध इति मुक्तस्य बन्धनापत्तिः, कारणान्तरजन्यत्वे च तस्यापि पुनः कारणान्तरस्यावश्यकतेत्यनवस्थापत्तिरित्येवं दोषद्वयप्रसङ्ग इति

---

विवेकख्याति प्रतिपादित किया है। तथा इसके विपरीत अविवेक को बन्धरूप कहा है। तद्यथा— ''प्रकारान्तराऽसम्भवादविवेक एव बन्धः।'' आशय सुस्पष्ट है— सांख्यदर्शन में बन्ध एवं मोक्ष की सम्भावना महत्तत्त्व अर्थात् बुद्धि में ही मान्य है। पुरुष को तो पुष्कर- पलाशवत् निर्लेप बताया गया है। यतश्च बुद्धि-सान्निध्य रूप दोष जागृत है एवं बुद्धि के साथ पुरुष का भेदग्रह नहीं हो पाता है अतः पुरुष में लक्षणावृत्ति के आश्रयण से बन्ध एवं मोक्ष की स्थिति कही जाती है। आचार्य ईश्वरकृष्ण ने स्पष्ट अभिधान किया है—

तस्मान्न बध्यतेऽद्धा......................नानाश्रया प्रकृतिः॥१॥

प्रकृति एवं तत्कार्य बुद्धि में बन्धन एवं मोक्ष की सहजस्थिति विद्यमान रहती है। बुद्धिगत बन्धन त्रिविध विवेकज्ञान से नष्ट होते हैं— १. नास्मि २. न मे ३. नाहम्।

इस अविवेक को यदि सादि (सोत्पत्तिक) मानें तो इस पक्ष में दो विकल्प होंगे। **१. स्वतः उत्पत्ति–** इस विकल्प में अविवेक की उत्पत्ति से पूर्व जो मुक्त थे वह सम्प्रति बद्ध हैं— इस प्रकार मुक्त के बद्ध होने की आपत्ति होगी। **२. किसी अन्य कारण से उत्पत्ति–** इस विकल्प में जिस कारण से अविवेक की उत्पत्ति होगी उस कारण की उत्पत्ति के लिए दूसरे कारण की अपेक्षा होगी तथा उसके लिए भी कारणान्तर की अपेक्षा होने से अनवस्था की आपत्ति होने से दो दूषण उपस्थित होंगे।

---

१. सां० का० ६२.

सांख्यदर्शनेऽविवेकरूपस्य बन्धस्यानादित्वमङ्गीक्रियते। तदुक्तं कपिलमहर्षिणा– "अनादिरविवेकः, अन्यथा दोषद्वयप्रसक्तेः"[२] इति।

नन्वेवमविवेकस्यानादित्वे तस्य नित्यत्वापत्त्या तदनिवृत्तित्वप्रसङ्गः? इति चेन्न, सांख्यसिद्धान्ते कूटस्थनित्यत्वं परिणामिनित्यत्वं चेति द्विविधं नित्यत्वमङ्गीक्रियते। तत्र पुरुषः कूटस्थनित्यः, प्रकृतिस्तु परिणामिनित्या। अविवेकस्य बुद्धिधर्मत्वाद् बुद्धेश्च प्रकृतिपरिणामत्वात् कूटस्थनित्यत्वस्याविवेकेऽविद्यमानत्वात् सम्भवत्येव तन्निवृत्तिः। तदुक्तं भगवता कपिलेन–"न नित्यः स्यादात्मवत्, अन्यथाऽनुच्छितिः"[३] इति। अनेन चाविवेकेन पुरुषे दुःखत्रयाभिघातः, प्रतिकूलवेदनीयतयाऽभिसम्बन्ध इत्यर्थः।

## त्रिविधदुःखस्वरूपम् (हेयम्)

तत्रभवता कपिलेन–"कुत्रापि कोऽपि सुखी न"[४], "तदपि दुःखशबलमिति दुःखपक्षे निक्षिपन्ते विवेचकाः"[५] इत्यादिसूत्रैः सांसारिकसुखस्यापि

---

अतः सांख्यदर्शन में अविवेकस्वरूप बन्ध की अनादिता को स्वीकार किया जाता है। कपिल महर्षि ने सुस्पष्ट कहा है— "अनादिरविवेकः, अन्यथा दोषद्वयप्रसक्तेः॥"

जिज्ञासा उदित होती है— अविवेक के अनादि होने से उसकी नित्यता होगी एवञ्च उसकी अनिवृत्ति का प्रसङ्ग होगा। इसका समाधान है— सांख्यसिद्धान्त में नित्यता के दो भेद होते हैं— १. कूटस्थनित्यता एवम् २. परिणामिनित्यता। पुरुष में कूटस्थनित्यता है तथा प्रकृति में परिणामिनित्यता। पूर्व विवेचन से यह सुविदित हो चुका है कि अविवेक बुद्धि का धर्म है एवं बुद्धि, प्रकृति का परिणाम है अतः अविवेक में कूटस्थ नित्यता विद्यमान नहीं है अतः अविवेक की निवृत्ति सम्भव है, असम्भव नहीं। अतएव कपिलसूत्र पढ़ा गया है— न नित्यः स्यादात्मवत्, अन्यथाऽनुच्छित्तिः। इस अविवेक से प्रयुक्त दुःखत्रय का सम्बन्ध पुरुष में होता है अथ च वह सम्बन्ध प्रतिकूल- वेदनीय है।

## हेय (त्रिविध दुःख) का स्वरूप

पूज्यपाद कपिल ने सांसारिक सुखों में भी दुःखरूपता एवं दुःखाविनाभूतरूपता

---

१. सां० सू० ६।१२.
२. सा० सू० ६।१३.
३. सां० सू० ६।७.
४. सां० सू० ६।८.

दुःखाविनाभूतत्वं निरूपितमिति बौद्धा इव सांख्या अपि सर्वस्य प्रपञ्चस्य दुःखरूपत्वमभ्युपगच्छन्ति। सर्वत्र व्याप्तस्यास्य दुःखस्यात्र शास्त्रे आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं चेति त्रैविध्यं प्रतिपादयन्ति[१]। एतान्येव त्रितापशब्देनाप्युच्यन्ते। तत्र आत्मानम्, अर्थात् स्वसङ्घातं मनःशरीरं चाधिकृत्य प्रवृत्तमाध्यात्मिकं दुःखम्। शरीरे वात-पित्त-कफानामपचयोपचयाभ्यां यज्ज्वरादिदुःखमुपजायते। तच्छारीरम्। यच्च मनसि काम-क्रोध-लोभ-मोह-भय-ईर्ष्या-विषादादिभिर्दुःखमुत्पद्यते, तन्मानसम्। सर्वं चैतत् शारीरं मानसं चान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्।

तत्र तावत् सारबोधिनीकाराः-"असाध्योऽयं रोगः" इत्यादौ साध्धातोर्निवृत्तिरूपार्थदर्शनात् साध्यशब्दोऽत्र निवर्तनीयपर्याय इति "आन्तरोपायसाध्यत्वादाध्यात्मिकम्" इत्यस्य वाचस्पतेर्वचनस्यान्तरोपायनिवर्त-नीयत्वादाध्यात्मिकमित्यप्यर्थं प्रतिपादयन्ति। तद्यथा-"अनुपदमेव प्रदर्शितं शारीरं मानसं च दुःखम्, आन्तरोपायसाध्यत्वात्, आन्तराः = शरीराभ्यन्तरे वा

---

निरूपित की है। एवंच बौद्धों की भाँति सांख्याचार्यों ने भी सम्पूर्ण प्रपञ्च की दुःखरूपता का अङ्गीकार किया है। यह दुःख सर्वत्र व्याप्त है। शास्त्र में इसके तीन प्रभेद बताये गये हैं— आध्यात्मिक, आधिभौतिक एवम् आधिदैविक। इन्हें त्रिताप शब्द से भी कहा जाता है। इनमें आध्यात्मिक दुख वह है जो स्वसंघात, मनस् एवं शरीर को अधिकृत कर प्रवृत्त होता है। इसके दो प्रभेद होते हैं— **१. शारीर दुःख** शरीर में वात, पित्त एवं कफ के अपचय ह्रास अथवा उपचय (वृद्धि) से जो ज्वर-प्रभृति दुःख जनित होते हैं वह शारीर दुःख है।

इसके अतिरिक्त जो दुःख मन में क्रोध, लोभ, मोह, भय, ईर्ष्या एवं विषाद प्रभृति कारणों से जनित होता है वह मानस कहलाता है। शरीर एवं मनस् के अन्दर विद्यमान उपायों से होने वाले (द्विविध) समस्त दुःख आध्यात्मिक कहलाते हैं। अतः इन्हें आन्तरोपाय-साध्य कहा जाता है।

सारबोधिनीकार ने अपना मन्तव्य प्रतिपादित किया है— "यह रोग असाध्य है।" इत्यादि वाक्यों में साध् धातु का अर्थ निवृत्ति होने से वाचस्पति प्रोक्त वाक्य "आन्तरोपाय- साध्य का अर्थ है आन्तरोपायनिवर्तनीय दुःख। ऐसे दुःख को आध्यात्मिक कहा जाता है तद्यथा— "अनुपदमेव प्रदर्शितम्— शारीरं मानसं च दुःखम्, आन्तरोपायसाध्यत्वात्, आन्तराः (शरीराभ्यन्तरेवा अन्तःकरणे वा भवाः)

---

१. सां० त० कौ०, पृ० १२-१५.

अन्तःकरणे वा भवाः सत्तावन्तो य उपायाः = अन्नाम्बुभेषज-दम-दया-दान-विवेचनादयः साधनविशेषाः, तैः साध्यत्वात् = निवर्तनीयत्वाद् दुःखमप्युपचारादान्तरं सदाध्यात्मिकमित्युच्यत इत्यर्थः। तत्र अन्नमन्तर्गतं सद् बुभुक्षां वारयति, जलं चान्तर्गतं सत् पिपासां दूरीकरोति, औषधं चान्तरं सज्ज्वरादिकमपनयति, दमश्च कामं शिथिलयति, दया च क्रोधं शमयति, दानं च लोभं विनाशयति, विवेचनं च मोहमुन्मूलयतीत्येवमन्नादिभिः सर्वैरप्यान्तरैरेव सद्भिस्तत्तद्दुःखमपनीयत इत्यान्तरोपायसाध्यत्वादान्तरं सदाध्यात्मिकमित्युच्यत इति भावः"[१] इति।

आधिभौतिकं नाम भूतानि प्राणिनोऽधिकृत्य प्रवृत्तमित्याधिभौतिकम्, अर्थान्मनुष्य-पशु-पक्षि-सर्पादिभिर्यद् दुःखं जायते, तदाधिभौतिकमित्यर्थः।

आधिदैविकं नाम देवान् यज्ञादीन्, दिवः प्रभवान् वातवर्षाऽऽतपशीतोष्णादीन् वाऽधिकृत्य प्रवृत्तमाधिदैविकम्, अर्थाद् यक्षराक्षसपिशाचादिभिर्वर्षाऽऽतपैश्च यद् दुःखं जायते, तदाधिदैविकमित्यर्थः।

---

सत्तावन्तो य उपायाः = अन्नाम्बुभेषजदमदयादानविवेचनादयः साधनविशेषाः, तैः साध्यत्वात् (निवर्तनीयत्वाद्) दुःखमपि उपचारादान्तरं सदाध्यात्मिकमित्युच्यत इत्यर्थः। तत्र अन्नमन्तर्गतं सद् बुभुक्षां वारयति, जलं चान्तर्गतं सत् पिपासां दूरीकरोति औषधं चान्तरं सद् ज्वरादिकमपनयति, दमश्च कामं शिथिलयति, दया च क्रोधं शमयति, दानंच लोभं विनाशयति, विवेचनं च मोहमुन्मूलयति— इत्येव मन्नादिभिः सर्वैरप्यान्तरैरेव सद्भिस् तत्तद् दुःखमपनीयत इत्यान्तरोपायसाध्यत्वादान्तरं सद्— आध्यात्मिकमित्युच्यते- इति भावः।"

आधिभौतिक दुःख वह है जो भूतों (प्राणियों) को अधिकृत कर प्रवृत्त होता है। मनुष्य पशु, पक्षि तथा सर्पादि प्राणियों से उत्पन्न होने वाले दुःख आधिभौतिक कहलाते हैं।

आधिदैविक दुःख वह है जो देव (यज्ञादि) तथा दिवःप्रभव वात, वर्षा, आतप, शीत एवम् उष्ण आदि को अधिकृत कर प्रवृत्त होता है। यक्ष, राक्षस, पिशाच प्रभृति एवम् वर्षा, आतप प्रभृति कारणों से उत्पन्न दुःख आधिदैविक कहलाते हैं।

---

१. सांख्य तत्त्वकौमुद्याः सारबोधिनीव्याख्या, पृ० १३.

नव्यास्तु–"परमार्थतस्तु दुःखं द्विविधमेव–शारीरं मानसं च। देवसम्पादितस्य भूतादिकृतस्य वा दुःखस्य वस्तुतो मनःशरीरयोरेव जायमानत्वात्। नहि शरीरं मनश्च विहाय तत्कृतेऽन्यत् स्थानमस्ति, येन आधिदैविकस्याधिभौतिकस्य च पार्थक्येन कल्पनं सार्थकं स्यात्। तस्मात् त्रिधा वा चतुर्धा वा तत्प्रपञ्चनं केवलं शिष्यधीवैशद्यार्थमेव"[१] इति विवेचयन्ति। महाभारते भगवता व्यासेन–

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
सुखदुःखे मनुष्याणां चक्रवत् परिवर्ततः।।[२]

इति कथितत्वादाध्यात्मिकादीनि दुःखानि पुनरावृत्तिधर्मकाणीति लौकिकैर्मणिमन्त्रौषधादिभिरुपायैर्निवार्यमाणान्यपि कालान्तरे पुनस्तमेव पुरुषमाक्रामन्तीत्येतेषामात्यन्तिकी निवृत्तिर्दृष्टोपायैरसम्भवैव, तदर्थं च विवेकख्यातेरावश्यकत्वात् तस्यैव जिज्ञासा कर्तव्येति सांख्या अभिप्रयन्ति। तदुक्तमीश्वरकृष्णेन–"दृष्टे सापार्था चेन्नैकान्ताऽत्यन्ततोऽभावात्"[३] इति।

---

नवीन आचार्यों ने दुःख को दो प्रभागों में ही विभाजित किया है— शारीर एवं मानस। देवजनित अथवा प्राणिजनित दुःख मन एवं शरीर इन दो अधिकरणों में ही विभाजित होते हैं। यतश्च शरीर एवम् मनस् को छोड़कर तृतीय कोई भी स्थान नहीं है जिसके बल पर आधिदैविक एवम् आधिभौतिक दुःखों का पृथक् प्रविभाग माना जा सके। अतः तीन प्रभेद अथवा चार प्रभेदों का आकलन केवल शिष्यबुद्धिवैशद्यहेतु किया जाता है।" यह नव्यों की विवेचना है। भगवान् वेदव्यास ने महाभारत में कहा है—

सुखस्यानन्तरं दुःखं..........चक्रवत् परिवर्ततः।।१।।

तदनुसार दुःखों को पुनरावृत्तिधर्मक माना गया है। इनका लौकिक उपाय (मणि-मन्त्रौषधि प्रभृति उपायों) से निवारण होने पर भी पुनः इनका आक्रमण उसी पुरुष पर देखा जाता है अतः आत्यन्तिक निवृत्ति (समूलघात उन्मूलन) दृष्ट उपायों से असम्भव है। एतदर्थ विवेक-ख्याति आवश्यक है। अतः विवेकज्ञान की जिज्ञासा को सांख्याचार्यों ने अत्यावश्यक बताया है। आचार्य ईश्वरकृष्ण ने सुस्पष्ट कहा है— "दृष्टे साऽपार्था चेन्नैकान्ताऽत्यन्ततोऽभावात्।।" वाचस्पतिमिश्र जी ने भी कहा है—

---

१. सांख्यतत्त्वकौमुद्याः सारबोधिनीव्याख्या, पृ० १५.

२. म० भा०, शान्तिप० २५।२३.

३. सां० का० १.

वाचस्पतिमिश्रैश्चोक्तम्–"एतदुक्तं भवति–यथाविधि रसायनादिकामिनी-नीतिशास्त्राभ्यासमन्त्राद्युपयोगेऽपि तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनादनैकान्तिकत्वम्, निवृत्तस्यापि पुनरुत्पत्तिदर्शनादनात्यन्तिकत्वमिति सुकरोऽप्यैकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः।"[४] इति।

अपरं च वैदिकैर्ज्योतिष्टोमादिभिः प्राप्यस्य स्वर्गस्य क्षयसातिशयादिदोषदुष्टत्वात् स्वर्गोऽपि न श्रेयान्। तथाहि स्मर्यते–"ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति"[५] इति। एवं च लौकिकवद् वैदिकोपायानामपि नात्यन्तिकदुःखनिवृत्तौ हेतुत्वमित्युभयोः साम्यमेव। तदुक्तं महर्षिणा कपिलेन–"अविशेषश्चोभयोः"[६] इति। उक्तं चेश्वरकृष्णेन–

---

एतदुक्तं भवति........इति नापार्था जिज्ञासेत्यर्थः।" आशय यह है— विधिवत् रसायनादि-सेवन, कामिनीसङ्ग, नीतिशास्त्राभ्यास एवं मन्त्रप्रयोग होने पर भी अनेकविध दुःखों की निवृत्ति नहीं हो पाती अतः इस निवृत्ति को ऐकान्तिक नहीं कहा जा सकता। दुःख के निवृत्त होने पर पुनः उसकी उत्पत्ति देखी जाती है अतः इस दुःखनिवृत्ति को आत्यन्तिक निवृत्ति नहीं कहा जा सकता। एवंच सुकर होने पर भी दृष्ट उपाय, ऐकान्तिक एवं आत्यन्तिक दुःखनिवृत्ति के जनक नहीं हैं अतः व्यक्ताव्यक्तज्ञ-विज्ञान की जिज्ञासा व्यर्थ नहीं प्रत्युत सार्थक है।"

अन्य ज्ञातव्य यह है कि ज्योतिष्टोमादि वैदिक उपायों से प्राप्य स्वर्ग की क्षयिष्णुता, सातिशयता प्रभृति अनेक दूषणव्यक्तियोगिता है अतः आमुष्मिक उपाय भी प्रशस्त नहीं है। श्रीमद्भगवद्गीता में स्मृत है—

"ते तं भुक्त्वा...........मर्त्यलोकं विशन्ति।।"½।।

एवञ्च लौकिक उपायों की तरह वैदिक उपाय ज्योतिष्टोमादि में भी आत्यन्तिक दुःखनिवृत्ति की हेतुता नहीं है। अतः लौकिक उपायों के तुल्य वैदिक ज्योतिष्टोमादि प्रवृत्तिस्वरूप उपायों से भी विवेक-जिज्ञासा की गतार्थता नहीं होती। अतएव महर्षि कपिल ने कहा है— "अविशेषश्चोभयोः।" स्वयम् ईश्वरकृष्ण जी ने भी कहा है—

दृष्टवदानुश्रविकः.......व्यक्ताव्यक्तज्ञविज्ञानात्।।१।।

---

१. सां० त० कौ, पृ० २४-२६.

२. भ० गी० ९।२१.

३. सां० सू० १।६।

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्।।[१] इति।

तस्मादपवर्गस्य विवेकख्यातिप्राप्यत्वेन स्वर्गस्य च यागादिप्राप्यत्वादपवर्गस्य स्वर्गवैलक्षण्यसिद्धेरत्यन्तदुःखोपरमलक्षणविलक्षण-परमपुरुषार्थाय प्रवृत्तैर्जिज्ञासुभिर्विवेकख्यातिरेव समाश्रयणीयेति निष्पक्षपातः पन्थाः।

## विवेकख्यातेः स्वरूपम्

महामुनिनेश्वरकृष्णेन—

एवं तत्त्वाभ्यासान्नस्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्।।[२]

इति विवेकख्यातेः स्वरूपमुक्तम्। अस्यायमर्थः—गुरुवाक्येष्वादरपूर्वकं निरन्तरं दीर्घकालं च सेवितेन तत्त्वविषयकश्रवण-मनन-निदिध्यासनेन संशय-

---

अतः अपवर्ग की प्राप्ति विवेकख्याति से ही सम्भव है। यागादि से तो स्वर्ग की ही प्राप्ति हो सकती है। अपवर्ग, स्वर्ग से विलक्षण है। यह परम पुरुषार्थ है। इसमें अत्यन्त दुःखोपरम होता है अन्यत्र नहीं। अतः अपवर्ग की प्राप्ति हेतु प्रवृत्त मुमुक्षु को विवेकख्याति की प्राप्ति हेतु सांख्यशास्त्रों का अनुसरण करना चाहिए। यह मार्ग पक्षपात-वर्जित है।

### विवेकख्याति का स्वरूप

आचार्य ईश्वरकृष्ण ने विवेकस्वरूप को निम्नाङ्कित कारिका में प्रतिपादित किया है।—

एवं तत्त्वाभ्यासाद् ........उत्पद्यते ज्ञानम्।।१।।

इसका अर्थ है— जो साधक जिज्ञासु गुरुवाक्यों में आदरपूर्वक निरन्तर दीर्घकाल- पर्यन्त तत्त्वविषयक श्रवण, मनन एवं निदिध्यासन करता है उसके मिथ्याज्ञान (संशय एवं विपर्यय के साथ) की निवृत्ति हो जाती है। वह अपरिशेष (सम्पूर्ण) शुद्ध ज्ञान को प्राप्त कर लेता है। श्रुति एवं स्मृति के अनेक वचन इस शुद्धज्ञान का प्रतिपादन करते हैं। तद्यथा—

---

१. सां० का० २.
२. सां० का० ६४.

विपर्ययसहितस्य मिथ्याज्ञानस्य निवृत्तौ, अपरिशेषं नास्ति परिशेषो ज्ञातव्यो विषयो यस्मिन् तादृशम्, अर्थात्–"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्[१]", "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति"[२], "यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते"[३] इत्यादिश्रुतिस्मृतिवचनेभ्यः कस्यापि विषयस्य परिशेषाभावात् सम्पूर्णमित्यर्थः, एवम्भूतं नास्मि 'अहं क्रियाशून्योऽस्मि, नाहम् = अहं न कर्ता, अर्थाद् अकर्तास्मि, न मे "मम किञ्चिदपि नास्ति, अर्थात् स्वामित्वरहितोऽस्मीत्यात्मकं क्रिया–कर्तृ–स्वामित्वाभिमानरहितं यत् शुद्धं बुद्धि–पुरुषयोर्विवेकख्यात्यात्मकं केवलं ज्ञानमुत्पद्यते, तदेव तत्त्वज्ञानमिति।

अत्र 'अस्मि' इत्युत्तमपुरुषैकवचनेन 'अहम्' इति कर्तृपदस्याप्याक्षेपाद् 'अहं नास्मि' इत्यनेनैवात्मनः क्रिया–कर्तृत्वयोः प्रतिषेधात् 'नाहम्' इत्यनेन पुरुषे कर्तृत्वनिषेधे पुनरुक्तिः स्यादित्याशङ्क्य वाचस्पतिमिश्रः–"नास्मि इति पुरुषोऽस्मि न प्रसवधर्मा। अप्रसवधर्मित्वाच्चाकर्तृत्वमाह–नाहमिति"[४] इति

१. "येनाश्रुतं श्रुतं भवति अमतं मतम् अविज्ञातं विज्ञातम्।" २. कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति।" ३. यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते।" – इत्यादि।

इनसे प्रतिपादित शुद्ध तत्त्वज्ञान के आकार हैं– १. नास्मि। अर्थात् मैं क्रियाशून्य हूँ। २. नाहम्। अर्थात् मैं कर्ता नहीं हूँ। ३. न मे। अर्थात् मेरा कुछ भी नहीं है। मैं स्वामित्वरहित हूँ। एवंच शुद्धज्ञान, क्रियाभिमान,कर्तृत्वाभिमान तथा स्वामित्वाभमान से वर्जित है। इस शुद्धज्ञान से बुद्धि एवं पुरुष की विवेकख्याति स्वरूप केवल ज्ञान उत्पन्न होता है। इसे सांख्यशास्त्र में तत्त्वज्ञान कहा जाता है।

यहाँ **नास्मि** प्रतीति में अस्मि क्रियापद (उत्तम पुरुष एकवचन) से कर्तृपद-**अहम्** का भी आक्षेप सम्भव है। एवञ्च "अहं नास्मि" इस प्रतीति द्वारा क्रिया प्रतिषेध के साथकर्तृता का भी प्रतिषेध लब्ध हो जायेगा। एवंच **नाहम्**–इस द्वितीय प्रतीति से पुरुषगत कर्दृत्वनिषेध होने पर पुनरुक्ति की प्रसक्ति दुरुद्धर होगी–यह आशङ्का उदित होती है। इसका समाधान श्रीवाचस्पतिमिश्रजी ने किया है— **नास्मि** प्रतीति में ना+अस्मि अर्थात् न= (नृशब्द का प्रथमा एकवचन में शब्दरूप हैं) का अर्थ है—

१. छा० उ० ६।१।३.
२. मुण्ड० १।१।३.
३. भ० गी० ७।२.
४. सां० त० कौ, पृ० ४८५-४८६.

कर्तृरूपायाः प्रकृतेर्भिन्नत्वं पुरुषस्य प्रतिपादितम्। ना = पुरुषोऽस्मि, न प्रसवधर्मीत्यत्र ना इति नृशब्दस्य प्रथमैकवचनमिति ज्ञातव्यम्। गुणपरिणामं विना क्रियाप्रवृत्तेरसम्भवाद् अहं जानामि, अहं जुहोमि, इत्यादिव्यवहारः पुरुषे नास्त्येव। क्रियाश्रयस्यैव कर्तृपदवाच्यत्वात् पुरुषे क्रियाभावात् स कर्ताऽपि न भवति। एवं कर्तृत्वाभावात् तस्य स्वामित्वाभावोऽपि सुतरां सिद्ध्यति। स्वामित्वं च न स्वभावसिद्धम्, किन्त्वर्जनसाध्यम्। अर्जनं च क्रियाविशेषः। तदेवार्जयितुः स्वामित्वमाधत्ते। आत्मनः क्रियासामान्याभावेऽर्जनकर्तृत्वासम्भवात् स्वामित्वासम्भवेन मदीयमिदं हिरण्यादिकमिति धनस्य तन्निष्ठस्वामित्वनिरूपितस्वत्ववत्त्वज्ञानं विवेकदशायां न सम्भवति। अविवेकदशायामेव बुद्धेः क्रियाया आत्मन्यारोपाद् ममेदं धनमिति ज्ञानमुत्पद्यते। अतो ममेत्यभिमानेन बन्धः, न ममेति निरभिमानने च मुक्तिरिति विवेकख्यात्यनन्तरं पुरुषो 'न मे किञ्चित्' इति तात्त्विकं स्वस्य स्वामित्वाभावं गृह्णाति। अत एवोक्तम्–

---

पुरुष। एवंच मैं पुरुष हूँ प्रसवधर्म से युक्त (प्रकृति) नहीं हूँ— इस अर्थ का लाभ होता है। एवञ्च अप्रसवधर्मी होने से अकर्तृता पुरुष में रहती है। एवंच नाहम्-प्रतीति द्वारा कर्तृस्वरूप प्रकृति से पुरुष का भिन्न होना प्रतिपादित होता है। ना = पुरुषःअस्मि, न प्रसवधर्मी—इस व्युत्पत्ति में नृशब्द के प्रथमा एकवचन का शब्दरूप है— ना। = यह ज्ञातव्य है। जब तक गुण का परिणाम नहीं होगा तब तक क्रिया की प्रवृत्ति असम्भव है। अतएव अहं जानामि, अहं जुहोमि–इत्येवमादि व्यवहार पुरुष में सम्भव नहीं है। जो क्रिया का आश्रय होता है वह कर्ता कहलाता है। यतश्च पुरुष में कोई भी क्रिया आश्रित नहीं है अतः वह कर्ता नहीं हो सकता है। एवंच पुरुष में कर्तृत्व के अभाव होने से उसमें स्वामित्व भी नहीं हो सकता। किसी भी व्यक्ति में स्वभावसिद्ध स्वामित्व नहीं होता है। वह तो अर्जन से ही साध्य होता है। अर्जन ही अर्जयिता व्यक्ति में स्वामित्व का आधान करता है। यतश्च आत्मा (पुरुष में कोई भी क्रिया नहीं रहती है तो अर्जनक्रिया का नहीं रहना भी स्वाभाविक ही है। एवञ्च विवेकदशा में पुरुष की अर्जनप्रयुक्त स्वामिता का अभाव होने से "इदं मम हिरण्यम्—" इत्येवं प्रकार से अपनी स्वामिता तथा हिरण्यादि धन की स्वता का वोध निरस्त हो जाता है। केवल अविवेक होने से ही बुद्धिगत क्रिया का आत्मा में आरोप होने से **मम इदं धनम्**—यह ज्ञान उत्पन्न होता है। एवंच मम इस अभिमान से बन्ध होता है तथा "न मम" इस निरभिमान से मुक्ति होती है। अतः विवेकख्याति के अनन्तर पुरुष अपने तात्त्विक स्वामित्वाभाव को "न मे किञ्चित्" –प्रतीति द्वारा गृहीत करता है। सांख्यशास्त्र के इस सिद्धान्त का समर्थक निम्नाङ्कित वचन से प्राप्त

**द्वे पदे बन्ध-मोक्षाय न ममेति ममेति च।**
**ममेति बध्यते जन्तुर्न ममेति प्रमुच्यते।।इति।**

नन्वेतादृशेन तत्त्वज्ञानेन कथं दुःखानामात्यन्तिकी निवृत्तिः? सांख्य-सिद्धान्ते हि 'नासत उत्पादो न वा सतो निरोधः' इत्यङ्गीकाराद् दुःखानां च सद्रूपत्वादिति चेत्, सत्यम्, सत्कार्यवादिभिः सतां दुःखानामत्यन्तोच्छेदः कर्तुं न शक्यते, तदभिभव एवात्रोच्छेदशब्देन व्यवह्रियते। तदुक्तं वाचस्पतिमिश्रैः- "यद्यपि न सन्निरुध्यते दुःखम्, तथापि तदभिभवः शक्यः कर्तुम्"[१] इति।

अत्रेदं बोध्यम्–सांख्यदर्शने नैय्यायिकैरिवोत्पत्तेः प्राक् कार्यस्य कारणे न

---

होता है— द्वे पदे बन्धमोक्षाय.......न ममेति प्रमुच्यते।।१।।

इसका अर्थ सुस्पष्ट है— पुरुष के बन्ध में "मम"—प्रतीति हेतु है तथा उसके मोक्ष में "न मम"–प्रतीति की दृढ़ता हेतु है। एवंच न तो बन्ध (संसार) की तात्त्विकता है और न ही मोक्ष की। केवल ममताबोधक **मम–** पद हमारे बन्धन में हेतु बन जाता है तथा ममत्व प्रतिषेधक **न मम–** पद हमारे मुक्त स्वरूप का ख्यापन करता है।

अब जिज्ञासा उदित होती है— प्रकृति (बुद्धि) एवम् पुरुष के विवेकात्मक तत्त्वज्ञान से दुःखों की आत्यन्तिक निवृत्ति कैसे होगी? कारण यह है— सांख्यसिद्धान्त में यह माना जाता है— "असत् की उत्पत्ति नहीं होती और सत् का निरोध नही होता।" इस मान्यता के आधार पर यतः दुःखों की सद्रूपता है अतः उनका निरोध नहीं हो सकता।

इस जिज्ञासा की सत्यता का अपलाप नहीं हो सकता। सत्कार्यवाद के सिद्धान्त को दृढता से स्वीकार करने वाले के मत में सत्स्वरूप दुःखों का अत्यन्त उच्छेद कथमपि मान्य नहीं है। अतः दुःखों का अभिभव ही शास्त्रों में उच्छेद शब्द से अभिप्रेत माना गया है। आचार्य श्रीवाचस्पतिमिश्रजी ने इस अभिप्राय का निगदव्याख्यान किया है— "यद्यपि न सद् निरुध्यते दुःखम्, तथापि तदभिभवः शक्यः कर्तुम्।" इसका अर्थ है— दुःख सत् है अतः उसका निरोध सम्भव नहीं हो सकता किन्तु उसका अभिभव असम्भव नहीं है।

यहाँ तात्त्विक रूप से समझना आवश्यक है— सांख्यदर्शन में न्यायदर्शनसम्मत असत्कार्यवाद सिद्धान्त अमान्य है। अतः उत्पत्ति के पूर्व कारण में कार्य का प्रागभाव नहीं होता क्योंकि सत्कार्यवाद सिद्धान्त के अङ्गीकार करने से

---

१. सां० त० कौ०, पृ० १६-१७.

प्रागभावः, न वा ध्वस्तस्य प्रध्वंसाभावोऽङ्गीक्रियते, सत्कार्यवादित्वेनासत उत्पादस्य सतो विनाशस्य चासम्भवात्। किन्तूत्पत्तेः प्राक् कारणे सूक्ष्मरूपेण वर्तमानमेव कार्यमनागतरूपेण सद् 'अव्यपदेश्यम्' इत्यभिधीयते। कारणव्यापारेण स्थूलरूपेण व्यक्तं सद् 'उदितम्' इत्युच्यते। नाशकसामग्र्या च कारणरूपतामापन्नं तिरोहितं सत् 'शान्तम्' इत्याख्यायते। तदुक्तं महर्षिणा पतञ्जलिना–"शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी"[१] इति। तस्माद् दुःखस्य यदतीतावस्थीकरणं तदेवात्र दुःखोच्छेद इति कथ्यते, न त्वत्यन्तनाशः।

अत्रातीतं दुःखं भोगेनातीतावस्थां प्राप्तमिति, वर्तमानं च भोगारूढतया क्षणान्तरे स्वयमेवातीतावस्थां प्राप्स्यतीति न ते हेयकोटिं प्रविशतः, किन्त्वनागतमेव। अत एवोक्तं पतञ्जलिना–"हेयं दुःखमनागतम्"[२] इति। विवेकख्यात्यनन्तरमुत्पत्स्यमानमप्यनागतं दुःखं न पुरुषभोगयोग्यं भवति,

---

असत् की उत्पत्ति की तरह सत् के विनाश की भी सम्भावना निरस्त होती है। इस सिद्धान्त में उत्पत्ति से पूर्व कारण में सूक्ष्मरूप से विद्यमान रहने वाला कार्य अनागत रूप से स्थित रहने के कारण "अव्यपदेश्य" कहलाता है। जब कारण में व्यापार होने से वह स्थूल रूप से व्यक्त हो जाता है तब वह "**उदित**" कहलाता है। पुनश्च स्वविनाशसामग्री के बल पर वह कारण रूप में (सूक्ष्मतया) स्थित होने से तिरोहित हो जाता है तब वह "**शान्त**"कहलाता है। महर्षि पतञ्जलि ने अपने योगसूत्र में धर्मी के इन धर्मों का स्पष्ट उल्लेख किया है। तद्यथा— "शान्तोदिताव्यपदेश्यधर्मानुयायी धर्मी।" अर्थ सुस्पष्ट है।

एवञ्च प्रकृत में दुःखोच्छेद का अभिप्रेतार्थ है— दुःख की अतीतावस्था का (कारणरूप में सूक्ष्मतया) अवस्थापन करना। दुःख का अत्यन्तनाश इस सिद्धान्त में दुःखोच्छेद शब्द का अभिप्रेतार्थ नहीं हो सकता।

यहाँ विवेचनपुरःसर यह समझना अत्यावश्यक है- जो **अतीतदुख** है वह उपभोग के द्वारा बिना-प्रयत्न ही अतीतावस्था को प्राप्त कर लिया है। एवं जो दुःख वर्तमान है वह भोग-विषय बन जाने से क्षण विलम्ब मात्र से स्वतः अतीतावस्था में प्रविष्ट होने वाला है। अतः अतीत एवं वर्तमान (द्विविध) दुःख को हेयकोटि में नहीं रखा जाता है। केवल अनागत दुःख को हेयकोटि में रखा गया है। अतः आचार्य पतञ्जलि ने सुस्पष्ट कहा है— "हेयं दुःखमनागतम्।"

---

१. यो० सू० ३।१४.

२. यो० सू० २।१६.

उपभोगे स्वोपाधिसंयोगविशेषतत्कारणाविवेकादीनां निमित्तत्वात्, मुक्तस्य च तेषां निमित्तानामभावादन्यान् प्रति प्रधानस्योपसर्पणेऽपि न मुक्तस्योपभोगो भवति। तदुक्तं भगवता कपिलेन—"नान्योपसर्पणेऽपि मुक्तोपभोगः, निमित्ताभावात्"[1] इति।

तस्मादविवेकदशायां बुद्ध्या सहाभेदमभिमन्यमानः पुरुषस्तद्गतेन दुःखेन दुःखी भवन् विवेकख्यात्या तदभिमानशून्यो भूत्वा दुःखेनासंपृक्तो भवतीति तत्त्वज्ञानेऽस्त्येव दुःखाभिभवनसामर्थ्यम्। अयं च दुःखाभिभवो दुःखोच्छेदेन व्यपदिश्यत इति ज्ञातव्यम्। अयमेवाशयः सारबोधिनीकारैरपि प्रकटीकृतः। तथाहि—"पुरुषस्य स्वत एव दुःखं नास्ति, किन्त्वन्तःकरणगतदुःखेनैवाऽविवेकदशायां पुरुषस्य दुःखाभिमानित्वम्। प्रकृतिपुरुषयोर्विविक्तताज्ञानात्तु दुःखित्वाभिमानिता निवर्तत इति दुःखनिवृत्तिर्विवेकज्ञानफलतयोच्यते। तस्यां विवेकज्ञानावस्थायां बुद्धावुत्पन्नमपि दुःखं पुरुषो नात्मीयत्वेनाभिमन्यत इति पुरुषस्य दुःखोत्पादो न स्यादेवेति"[2] इति।

---

विवेकख्याति के पश्चात् उत्पन्न होने वाला अनागत दुःख, पुरुषभोग के योग्य नहीं होता। कारण यह है दुःखोपभोग के प्रति स्वोपाधिसंयोगविशेष एवम् तत्कारणीभूत अविवेकादि को निमित्तकारण माना जाता है। विवेकख्याति के उदय से प्राप्तापवर्ग के उन निमित्तों का अभाव होने से अन्य बद्धजीवों के प्रति प्रधान का उपसर्पण होने से भी मुक्त को भोगप्रसक्ति नहीं होती। अतएव भगवान् कपिल ने स्पष्ट कहा है' "नान्योपसर्पणेऽपि मुक्तोपभोगः, निमित्ताभावात्।"

एवञ्च अविवेकदशा में बुद्धि के साथ अभेद का अभिमान करने वाला पुरुष तद्गत दुःख से दुःखी होकर भटकता है। पर, विवेकख्याति के उदय होने से अभेदाभिमानरहित होने से पुरुष, दुःख से छुटकारा पा जाता है। एवञ्च तत्त्वज्ञान में दुःखाभिभव का सामर्थ्य विद्यमान है— यह सिद्धान्त सुव्यवस्थित है। यह दुःखाभिभव ही दुःखोच्छेद शब्द से व्यपदिष्ट होता है। इस आशय का प्रकाशन, सारबोधिनीकार ने इस प्रकार से किया है— "पुरुषस्य स्वत एव.......दुःखोत्पादो न स्यादेव।"

जिज्ञासा उदित होती है कि विवेकज्ञान के उदय होने के अनन्तर पुरुष को

---

१. सां० सू० ६।४४.

२. सांख्यतत्त्वकौमुद्याः सारबोधिनीव्याख्यायाष्टिप्पणी, पृ० ८१.

ननु विवेकज्ञानोत्पत्त्यनन्तरं पुरुषस्य भोगार्थं प्रकृतिः पुनः कथं न प्रवर्तत इति चेत्, श्रूयतां रहस्यम्। विवेकज्ञानसम्पन्नो हि पुरुषः कूटस्थवद् द्रष्टृरूपेणावतिष्ठते। एवं द्रष्टृस्वभावेन पुरुषेण दृष्टा सा प्रकृतिर्यथा कृतनृत्या नर्तकी रङ्गमञ्चान्निवर्तते, यथा वा सूदः पाकं कृत्वा तज्जनकव्यापारान्निवृत्तो भवति, तथैव प्राप्तकैवल्यं पुरुषं प्रति कृतकृत्या सा प्रकृतिः पुनस्तस्य भोगाय न प्रवर्तते, आकैवल्यार्थत्वात् प्रवृत्तः। तदुक्तमीश्वरकृष्णेन–

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः।।
दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य।।[१] इति।

महर्षिणा कपिलेनापि–"विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य, सूदवत् पाके"[२] इति सूत्रेणायमेवाशयः प्रकटीकृतः।

---

भोग देने हेतु प्रकृति की पुनः प्रवृत्ति क्यों नहीं होती। इसका समाधान रहस्यात्मक है। जो विवेक-ज्ञान-सम्पन्न पुरुष होता है वह कूटस्थवत् द्रष्टारूप से स्थित रहता है। ऐसे पुरुष से अवलोकित प्रकृति, प्राप्तकैवल्य पुरुष से निवृत्त हो जाती है। यद्वत् नृत्य प्रस्तुत करने के पश्चात् नर्तकी रङ्गमञ्च से निवृत्त हो जाती है एवं पाचक (रसोइया) पाक-पूर्ति के पश्चात् पाकानुकूल क्रिया से विरत हो जाता है तद्वत् प्राप्तकैवल्य पुरुष के प्रति कृतार्थ हो जाने से प्रकृति, मुक्तपुरुष के भोगार्थ पुनः प्रवृत्त नहीं होती है। क्योंकि कैवल्य-प्राप्ति कराने तक ही पुरुष के लिए प्रकृति की प्रवृत्ति होती है। ईश्वरकृष्ण ने सुस्पष्ट कहा है—

"रङ्गस्य दर्शयित्वा...........विनिवर्तते प्रकृतिः॥१॥

दृष्टो मयेत्युपेक्षक.............प्रयोजनं नास्ति सर्गस्य॥२॥

महर्षि कपिल ने भी अपने निम्नाङ्कित सूत्र के माध्यम से इस आशय को प्रगट किया है—

विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य, सूदवत्पाके।"।

---

१. सां० का० ५९, ६६.
२. सां० सू० ३।६३.

## मुक्तिस्वरूपम्

तदेवं सत्त्वरजस्तमसां साम्यावस्थारूपायाः प्रधानाभिधानाया जडायाः प्रकृतेस्तथा नित्यस्यापरिणामिन उदासीनस्य चेतनस्य च पुरुषस्य विवेकख्यात्याऽनादेरविवेकस्य निवृत्तौ त्रिविधदुःखात्यन्तनिवृत्तः स पुरुषो यद् वास्तविकेन कूटस्थरूपेणावतिष्ठते तदेव सांख्याभिमतं मोक्षस्वरूपम्।

## जीवन्मुक्तिः

ननु–"न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वा प्रियाप्रिये न स्पृशतः"[१] इति श्रुत्या सशरीरस्य सुखदुःखानिवृत्तेः प्रतिपादितत्वात् तत्त्वज्ञस्य पुरुषस्य शरीराङ्गीकारे मुक्तत्वव्याघातः, तदनङ्गीकारे च–"प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः"[२] इति तत्त्वज्ञेन प्रकृतिदर्शनप्रतिपादक-सिद्धान्तवचनविरोधः, यतो हि प्रकृतिदर्शनक्षणपर्यन्तं देहसद्भाव आवश्यकः, अन्यथा निष्क्रियेण निर्विकारेण पुरुषेण देहरहितेन कथं प्रकृतेर्दर्शनम्? इति चेन्न,

---

## मुक्ति का स्वरूप

एवंच यह विविक्तज्ञान उदित होता है— १. सत्त्व, रजस् एवं तमस् इन तीन गुणों की साम्यावस्था, प्रधानसंज्ञक प्रकृति, जड है। २. तद्विपरीत नित्य, अपरिणामी, उदासीन पुरुष, चेतन है। विवेकख्याति के अनन्तर अनादि अविवेक की निवृत्ति होने से पुरुष के त्रिविध दुःख की आत्यन्तिक निवृत्ति हो जाती है। फलस्वरूप पुरुष अपने वास्तविक अनौपाधिक स्वरूप में स्थित हो जाता है। यही सांख्याभिमत मोक्षस्वरूप है।

## जीवन्मुक्ति

जिज्ञासा उदित होती है कि "न वै सशरीरस्य.........प्रियाप्रिये न स्पृशतः।" इस श्रुतिप्रमाण से बोधित होता है कि सशरीर जीव के सुख-दुःखों की निवृत्ति नहीं होती है। ऐसी स्थिति में पुरुष (जीव) के तत्त्वज्ञानोदय के पश्चात् शरीर का अङ्गीकार करने पर मुक्तत्व का व्याघात होगा। शरीर का अस्वीकार करने पर "प्रकृतिं पश्यति..........स्वच्छः।" उक्ति से विदित होने वाले तत्त्वज्ञ व्यक्ति द्वारा प्रकृतिकर्मक- दर्शनप्रतिपादक सिद्धान्त का विरोध आपादित होगा। क्योंकि प्रकृतिदर्शन-क्षण पर्यन्त देहसद्भाव आवश्यक है। कथमन्यथा निष्क्रिय निर्विकार

---

१. छा० उ० ८।१२।१.

२. सां० का० ६५.

तत्त्वज्ञस्य प्रेक्षकवत् प्रकृतिं प्रपश्यतः सशरीरिणोऽपि पुरुषस्य ममेदमित्यभिमानराहित्यान्न प्रारब्धकर्मणां सुखदुःखजनकत्वम्। सञ्चितक्रियमाणे च ज्ञानाग्निना प्रदग्धे। अत एवाकारणतां प्राप्ते सती अपनीततुषा दग्धबीजभावा वा शालितण्डुला इव न भाविशरीरारम्भके इति यथा घटसम्पादनार्थं कुलालेन भ्रामितं चक्रं फलोत्पत्त्यनन्तरमपि वेगसंस्कारेण किञ्चित्कालपर्यन्तं भ्रमदेव तिष्ठति, तथा ज्ञानोत्पत्त्यनन्तरमपि प्रारब्धकर्मपरिक्षयपर्यन्तं सशरीरस्तिष्ठन् पुरुषो बुद्ध्यादिधर्मेषु निरभिमानः सन्–

हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते।।
यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते।
यः समः सर्वभूतेषु जीवितं तस्य शोभते।।
शान्तसंसारकलनः कलावानपि निष्कलः।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते।।

इत्यादिजीवन्मुक्तिवचनानुरूपं व्यवहरन् जीवन्मुक्त इत्युच्यते। तस्मात्

---

देहरहित पुरुष से प्रकृति-कर्मक दर्शन उपपन्न होगा।

इसका समाधान यह है— तत्त्वज्ञानी पुरुष प्रेक्षकवत् प्रकृतिकर्मक दर्शन करता हुआ सशरीर होकर भी ममेदम्— इस अभिमान से शून्य होकर स्थित रहता है अतः उसके प्रारब्ध कर्म, सुख अथवा दुःख के जनक नहीं होते। मुक्त पुरुष के संचित एवं क्रियमाण कर्म ज्ञानाग्नि से दग्ध हो जाते हैं। एवञ्च यद्वत् भूसी से विलग हुआ अथवा बीजाङ्कुरण सामर्थ्य के भुन दिये जाने से दग्ध धान्य-तण्डुल में अङ्कुरोत्पत्ति जनकता नहीं होती। यद्वत् संचित एवं क्रियमाण कर्म भाविशरीर के आरम्भक नहीं होते। एवंच घटनिर्माण हेतु कुलाल के द्वारा भ्रामित चक्र, घट उत्पन्न होने के पश्चात् वेगसंस्कारवशात् कुछ देर तक जैसे भ्रमण करता हुआ विद्यमान रहता है तद्वत् ज्ञानोत्पत्ति के अनन्तर भी प्रारब्धकर्म के विनाश पर्यन्त पुरुष, सशरीर होकर भी बुद्ध्यादि धर्म से अभिमान नहीं करता हुआ अनुरूप व्यवहार-परायण होकर जीवन्मुक्त की दशा में विराजमान रहता है। एवंच सशरीर तत्त्ववेत्ता की मुक्तता एवं प्रकृतिद्रष्टृता इन दोनों की सम्भावना अनिराकृत रहती है। तद्यथा— हर्षामर्षभयक्रोध ............स जीवन्मुक्त उच्यते।।३।।

आचार्य ईश्वरकृष्ण ने दृष्टान्त के साथ मुक्त पुरुष की शरीरधारिता का प्रतिपादन किया है। तद्यथा—

सशरीरस्य तत्त्वज्ञस्य मुक्तत्वं प्रकृतिद्रष्टृत्वं चेत्युभे अपि सम्भवत इति न कोऽपि दोषः।

मुक्तस्य शरीरधारित्वं सदृष्टान्तमुक्तमीश्वरकृष्णेन–

सम्यग् ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः।।[१]इति।

श्रीवाचस्पतिमिश्रैश्च–"तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्माशयप्रचयो दग्धबीजभावतया न जात्याद्युपभोगलक्षणाय फलाय कल्पते। क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्रसुवते। तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः"[२]? इति जीवन्मुक्तस्य सञ्चितागामिनोः कर्मणोः फलाऽनारम्भकत्वं प्रतिपादितमिति मुक्तस्य शरीरधारणे न काचिदनुपपत्तिः।

## विदेहकैवल्यम्

ननु–"तस्य तावदेव चिरं यावन्न विमोक्षेऽथ सम्पत्स्ये"[३] इति श्रुत्युक्तं परमकैवल्यं कदा भवतीति जिज्ञासायामुक्तं मुनिनेश्वरकृष्णेन–

---

सम्यग्ज्ञानाधिगमाद्........चक्रभ्रमिवद् धृतशरीरः।।१।।

आचार्यवाचस्पति मिश्रजी ने सुस्पष्ट शब्दों में जीवन्मुक्त के संचित एवम् क्रियमाण कर्मों के फलानुत्पादकता का प्रतिपादन किया है। अतः मुक्तपुरुष के सशरीरता (शरीरधारण) में कोई अनुपपत्ति नहीं है। तद्यथा—"तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियत-विपाककालोऽपि........ऊषरायां कुतः कर्मबीजानामङ्कुरप्रसवः?"

## विदेहकैवल्य

परमकैवल्य "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये।" इस श्रुति-प्रमाण से विदित होता है। यह परमकैवल्य कब प्राप्त होता है इस जिज्ञासा का समाधान, आचार्य ईश्वरकृष्ण ने कारिका द्वारा प्रतिपादित किया है–

प्राप्ते शरीरभेदे...........कैवल्यमाप्नोति।।१।।

---

१. सां० का० ६७.
२. सा० त० कौ०, पृ० ४९३.
३. छा० उ० ६।१।४।२.

प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति।।[१]इति।

अस्यायमर्थः–प्रारब्धकर्मणो बुद्ध्या भोगेनात्यन्तं विनाशे सति वर्तमानस्य शरीरस्य भेदः, अर्थात् नाशो भवति। एवं शरीरनाशे बुद्धितत्त्वादिद्वारा भोगापवर्गलक्षणस्य प्रयोजनस्य साधितत्वात् प्रधानं तस्मात् पुरुषाद्विनिवर्तते। प्रधानविनिवृत्तौ च पुरुष ऐकान्तिकमात्यन्तिकम्, अर्थात् सुनिश्चितं नित्यं च दुःखत्रयविगमरूपं परमकैवल्यं प्राप्नोतीति।

तदेवं विचार्यमाणे सतीदमेव ज्ञायते यन्न्यायवैशेषिकवत् सांख्यदर्शनेऽपि दुःखानामात्यन्तिकी निवृत्तिरेव परमप्रयोजनं न त्वानन्दावाप्तिरिति। महर्षिणा कपिलेन–"दुःखनिवृत्तेर्गौणः"[२], "विमुक्तिप्रशंसा मन्दानाम्"[३], "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः"[४] इत्यादिसूत्रेषु दुःखनिवृत्तेरेव परमप्रयोजनत्वम्, दुःखनिवृत्त्या च तत्र श्रुत्या प्रयुज्यमान आनन्दशब्दो गौण उत तत्प्रशंसामात्रपर इति प्रतिपादितम्।

---

इसका यह अर्थ है— प्रारब्ध कर्म का बुद्धि द्वारा भोग करने के पश्चात् आत्यन्तिक नाश होने पर वर्तमान शरीर के भेदन (नाश) हो जाने के अनन्तर बुद्धिद्वारक भोग एवम् अपवर्ग के सम्पन्न हो जाने से कृतार्थ प्रधान (प्रकृति) मुक्त-पुरुष से विनिवृत्त हो जाताहै। एवंच प्रधान के विरत हो जाने से पुरुष ऐकान्तिक एवम् आत्यन्तिक दुःखत्रयविगम-स्वरूप परमकैवल्य को प्राप्त कर लेता है।

उपर्युक्त विवेचना से सुविदित होता है कि न्यायवैशेषिकों की तरह सांख्यदर्शन में भी दुःख की आत्यन्तिक निवृत्ति ही परमप्रयोजन (पुरुषार्थ) है न कि आनन्दप्राप्ति। महर्षि कपिलने भी दुःखनिवृत्ति को ही परमप्रयोजन प्रतिपादित किया है। दुःखनिवृत्ति होने से भारापनोदनवत् श्रुतिवाक्यों में प्रयुक्त आनन्दशब्द गौणार्थक है अथवा आत्यन्तिक दुःखनिवृत्ति की प्रशंसाहेतु प्रयुक्त है। तद्यथा— "दुःखनिवृत्तेर्गौणः।" "विमुक्तिप्रशंसा मन्दानाम्।" एवम् "अथ त्रिविध-दुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।" इति।

---

१. सां० का० ६८.

२. सां० सू० ५।६७.

३. सां० सू० ५।६८.

४. सां० सू० १।१.

तस्मात्–"धीरो हर्षशोकौ जहाति"[१], "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"[२] इत्यादिश्रुतिप्रामाण्यान्मोक्ष इति पारिभाषिकशब्दस्य विमोचनार्थकत्वाद् दुःखैर्विमोचनम्, अर्थाद् दुःखनिवृत्तिरेव प्रयोजनं नानन्दावाप्तिरिति सांख्याभिप्रायः।

## योगदर्शने बन्धमोक्षयोः स्वरूपम्

तत्रभवता महर्षिणा पतञ्जलिना–"हेयं दुःखमनागतम्"[३], "द्रष्टृदृश्ययोः संयोगो हेयहेतुः"[४] "तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्"[५], "विवेकख्यातिरविप्लवा हानोपायः"[६] इति चतुर्भिः सूत्रैर्दुःखं हेयमिति, अविवेको हेयहेतुरिति, दुःखात्यन्ताभावो हानमिति, विवेकख्यातिश्च हानोपाय इति सांख्यदर्शनवदेव चत्वारो व्यूहा निरूपिताः। किन्त्वस्य विवेकख्यात्यपरपर्यायस्य हानोपायस्य तत्त्वज्ञानस्यैहिकामुष्मिकविषयवैतृष्ण्यं

---

एवंच निम्नाङ्कित श्रुतिवचनप्रामाण्य से पारिभाषिक मोक्षशब्द विमोचनार्थक है। दुःखों से विमोचन अर्थात् दुःखों की निवृत्ति ही परम प्रयोजन है, आनन्दावाप्ति नहीं— यह सांख्यसिद्धान्त – "धीरो हर्षशोकौ जहाति", अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः।" इत्यादि श्रुतिवाक्यों पर आधारित है।

## योगदर्शन में बन्ध एवं मोक्ष का स्वरूप

पूज्यचरण महर्षि पतञ्जलि ने अपने चार सूत्रों द्वारा दुःख को हेय, अविवेक को हेयहेतु, दुःखात्यन्ताभाव को हान तथा विवेकख्याति को हानोपाय कहा है। तद्यथा— "हेयं दुःखमनागतम्", द्रष्टृदृश्ययोः संयोगो हेयहेतुः", तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्," एवम् "विवेकख्यातिरविप्लवा हानोपायः।" इति। एवंच यह सुविदित होता है कि योगदर्शन में भी सांख्यदर्शनवत् चार व्यूहों का प्रतिपादन किया गया है। हानोपायस्वरूप तत्त्वज्ञान का अपरपर्याय है— विवेकख्याति। इसकी उत्पत्ति तब तक नहीं हो सकती जब तक ऐहिक एवम्

---

१. कठो० २।१२.
२. छा० उ० ८।१२।१.
३. यो० सू० २।१६.
४. यो० सू० २।१७.
५. यो० सू० २।२५.
६. यो० सू० २।२६.

विनोत्पत्त्यसंभवाद् योगदर्शने सांसारिकविषयेभ्यश्चित्तवृत्तिनिवृत्त्यर्थमष्टाङ्गयोग ईश्वरप्रणिधानं च प्राधान्येनाङ्गीकृतमिति सांख्यदर्शनादस्य वैलक्षण्यम्।

**बन्धस्वरूपम्**

भगवता पतञ्जलिना–"द्रष्टृदृश्ययोः संयोगो हेयहेतुः"[१] इत्युक्तत्वाद् योगदर्शनेऽप्यनादिरविवेक एव बन्धनम्। अनेन च बद्धोऽयं पुरुषः पञ्चक्लेशैरनादिकालात् परितप्यमान इव परिदृश्यते। सांख्यवद् योगदर्शनेऽपि पुरुषः पुष्करपलाशवन्निर्लिप्तः। अथापि प्रधानकार्यभूतायां बुद्धौ प्रधानगुणानां सत्त्वादीनां विद्यमानत्वाद् बुद्धिस्थितस्तापकारको रजोगुणस्तत्रत्यमेव सत्त्वं सन्तापयति। सत्त्वांशे च पुरुषस्य प्रतिबिम्बसत्त्वात् तदानीं तमोगुणोत्पन्नाऽविद्याभिधा मनोवृत्तिस्तयोः सत्त्वपुरुषयोरभेदभावमुत्पादयतीति भेदग्रहाभावात् सत्त्वांशगतं सन्तापं स्वात्मीयत्वेन जानन् पुरुषस्तप्य इत्युच्यते। तदुक्तमाचार्यैः–

**सत्त्वं तप्यं बुद्धिभावेन वृत्तं भावा ये वा राजसास्तापकास्ते।**
**तप्याभेदग्राहिणी तामसी या वृत्तिस्तस्यां तप्य इत्युक्त आत्मा।।**[२] इति।

---

आमुष्मिक विषयों में वितृष्णा नहीं उदित होती। अतएव योगदर्शन में सांसारिकविषयों से चित्तवृत्ति की निवृत्ति हेतु अष्टाङ्गयोग एवम् ईश्वरप्रणिधान प्रधानरूप से स्वीकार्य है। योगदर्शन का सांख्यदर्शनापेक्षया यही वैलक्षण्य सुप्रथित है।

**बन्ध का स्वरूप**

भगवान् पतञ्जलि ने अनादि अविवेक को योगदर्शनाभिमत बन्धनरूप में स्वीकार किया है। तद्यथा— "द्रष्टृदृश्ययोः संयोगो हेयहेतुः।" द्रष्टा एवं दृश्य के संयोग से बन्धनगत पुरुष अनादिकाल से पञ्चविध क्लेशों से आक्रान्त होकर परितप्त है। यद्यपि सांख्यसिद्धान्त की तरह योगसिद्धान्त में भी पुरुष को पुष्करपलाश की भाँति निर्लिप्त माना जाता है। तथापि प्रधान के कार्य (बुद्धि) में प्रधान के तीन गुणों (सत्त्व, रजस् एवं तमस्) के विद्यमान होने से बुद्धिस्थ रजोगुण, अपने साथ उपस्थित सत्त्वगुण को सन्तापित करता है। बुद्धिस्थ सत्त्वांश में पुरुषप्रतिबिम्ब होने से तमोगुण से उत्पन्न होने वाली अविद्यासंज्ञक मनोवृत्ति, सत्त्व एवं पुरुष के मध्य अभेदभावना का उल्लासन करती है। फलस्वरूप भेदग्रह के अभाव होने से पुरुषसत्त्वांशगत सन्ताप को आत्मीयतया समझता एवं मान लेता है। अत एव वह पुरुष तप्त कहलाने लगता है। तदनुगुण आचार्योक्ति परिशीलनीय है—

सत्त्वं तप्यं बुद्धिभावेन..........तप्य इत्युक्त आत्मा।।१।।

---

१. यो० सू० २।१७.  २. स० द० सं०, पृ० ६५४.

महर्षिणा पतञ्जलिनाप्युक्तम्–"सतत्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः"[१] इति।

ननु सुखदुःखादिकं बुद्धेरेव धर्मो न पुरुषस्येत्यत्र किं विनिगमकम्? इति चेत्, सर्वानुभवसिद्धान्वयव्यतिरेक एवात्र विनिगमकम्। तद्यथा– जाग्रत्स्वप्नयोर्बुद्धेर्विद्यमानत्वात् तदानीं सर्वैरपि सुखदुःखानुभवः क्रियते। सुषुप्तावस्थायां तु बुद्धेः स्वकारणे विलीनत्वात् तदानीं न कोऽपि सांसारिकसुखदुःखादिकमनुभवति। न च तदानीं पुरुषस्याभावः, तस्य कूटस्थनित्यत्वात्। तस्माद् बुद्धिसत्त्वे सुखदुःखसत्त्वं बुद्ध्यभावे सुखदुःखादेरभाव इत्यन्वयव्यतिरेकाभ्यां सुखदुःखादिकं बुद्धेरेव धर्मो न पुरुषस्येति निश्चीयते। तदुक्तं मधुसूदनसरस्वतीभिः–

रागेच्छा सुखदुःखादिबुद्धौ सत्यां प्रवर्तते।
सुषुप्तौ नास्ति तन्नाशे तस्माद् बुद्धेस्तु नात्मनः।।[२]इति।

माधवाचार्यैरपि–"तथा शुद्धोऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति,

---

महर्षि पतञ्जलि ने भी अपने सूत्र में इस आशय को प्रकाशित किया है— "सत्त्वपुरुषयो.............प्रत्ययाविशेषोभोगः।"

जिज्ञासा उदित होती है कि सुखदुःखादि-बुद्धि का ही धर्म है, पुरुष का नहीं है— ऐसा मानने में कोई विशिष्ट युक्ति कौन सी है? इसका समाधान है— सर्वानुभवसिद्ध अन्वयव्यतिरेक ही सुखादि के बुद्धिधर्म होने में विनिगमना है। तद्यथा— जाग्रत् एवं स्वप्न अवस्था में बुद्धि के विद्यमान होने से वहाँ सुखों एवं दुःखों का अनुभव सब लोगों को होता है। सुषुप्तावस्था में बुद्धि का स्वकारण में विलय हो जाने से वहाँ कोई व्यक्ति सांसारिक सुखदुःखादि का अनुभव नहीं करता। उस अवस्था में पुरुष का अभाव नहीं रहता क्योंकि वह कूटस्थ नित्य है। अतः यह व्याप्ति बनती है— बुद्धिसत्त्व होने से सुखदुःखों का सत्त्व होता है तथा बुद्धि के अभाव में सुखदुःखादि का अभाव होता है। एवंच अन्वय एवं व्यतिरेक द्वारा बुद्धि का ही धर्म सुखदुःखादि है, पुरुष का नहीं— यह निर्णीत होता है। अतएव मधुसूदनसरस्वती जी ने सयुक्ति कहा है—

रागेच्छा सुखदुःखादि...........बुद्धेस्तु नात्मनः।।१।।

माधवाचार्यजी ने भी कहा है— "तथा शुद्धोऽपि पुरुषः.........तदात्मक इव

---

१. यो० सू० ३।३५.

२. अद्वैतसिद्धि–लघुचन्द्रिका, पृ० ८०.

तमनुपश्यन्नतदात्मापि तदात्मक इव प्रतिभासते"[१] इत्युक्तत्वात् शुद्धोऽप्ययमनाद्यविवेकवशात् क्लेश-कर्म-विपाकाशयैर्युक्तः सन् पुरुषो बद्ध इत्युच्यते।

**पञ्च क्लेशाः**

भगवता भाष्यकारेण व्यासेन-"क्लेशा इति पञ्च विपर्यया इत्यर्थः"[२] इति प्रतिपादितत्वादविद्याऽस्मितारागद्वेषाभिनिवेशाख्याः पञ्च क्लेशाः पूर्वोक्तस्य विवेकख्यात्यपरपर्यायस्य विपर्ययज्ञानस्यावयवभूताः।

तत्र-"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या"[३] इति सूत्रेण महर्षिः पतञ्जलिः सर्वानर्थबीजभूताया अविद्यायाः स्वरूपं प्रतिपादितवान्। अस्यायमर्थः-अनित्ये नित्यत्वाभाववति, अर्थात् कार्यभूतघटादौ नित्यत्वज्ञानम्। अशुचौ = परमबीभत्से शरीरे शुचित्वज्ञानम्। योगभाष्यकारैः शरीरस्य पञ्चभिर्हेतुभिरशुचित्वं प्रदर्शितम्। तद्यथा-

---

प्रतिभासते।" तदनुसार शुद्ध होने पर भी अनादि अविवेक के वशीभूत होकर क्लेश, कर्म, विपाक एवम् आशय से सम्बद्ध होकर पुरुष-बद्ध कहलाता है।

**पञ्चविध क्लेश**

भगवान् भाष्यकार व्यास ने कहा है— "क्लेशा इति पञ्चविपर्यया इत्यर्थः।" तदनुसार अविद्या, अस्मिता, राग, द्वेष एवम् अभिनिवेश—ये पञ्चविध क्लेश, विवेकाख्याति (विपर्यय ज्ञान) के अवयवस्वरूप हैं। इनमें अविद्या समस्त अनर्थों की बीज मानी गयी है। इसका स्वरूप निम्नाङ्कित सूत्र में प्रतिपादित किया गया है— "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या।" सूत्र का अर्थ है— जो अनित्य है=नित्यत्वाभाववान् है (घट-पट प्रभृति कार्य है) उसमें नित्यत्व बुद्धिअविद्या कहलाती है। तद्वत् अशुचि (जुगुप्सित शरीर) में शुचिता का ज्ञान अविद्या है। योगभाष्यकार ने शरीर की अशुचिता को पञ्चविध हेतुओं से प्रसाधित किया है। तद्यथा—

---

१. स० द० सं०, पृ० ६५६.

२. यो० सू० भा० २।३.

३. यो० सू० २।५.

**स्थानाद् बीजादुपष्टम्भान्निःस्यन्दान्निधनादपि।**
**कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः।।[१]इति।**

अस्य शरीरस्योत्पत्तिस्थानं मलमूत्रादिदुर्गन्धवस्तुपूर्णं मातुरुदरम्, अस्य बीजमत्यन्तमपवित्रं मातापित्रो रजोवीर्यम्, अस्योपष्टम्भो भुक्तपीतानामन्नजलादीनां परिणामरूपमपवित्रं रसासृङ्मांसमेदोऽस्थिमज्जाशुक्ररूपं धातुसप्तकम्। एतावदेव न, किन्त्वस्मात् शरीरात् सर्वदा मल-मूत्र-स्वेद-कफाद्यपवित्राणामेव वस्तूनां निस्यन्दो भवति, अस्य च मरणेऽशौचप्राप्तिः, मृतशरीरस्पर्शे स्नानाद्युक्तेः। एवं शरीरस्य स्थानबीजोपष्टम्भनिष्यन्दनिधनानामपवित्रत्वाच्छरीरमप्यपवित्रमिति भाष्यकाराशयः। एवमशुचौ शरीरेऽज्ञानिनः शुचित्वभ्रान्तिस्तं मोहयति। एवमेव दुःखमयेषु स्रक्चन्दनवनितादिविषयभोगेषु सुखत्वज्ञानम्, परिणामे विषयभोगस्य दुःखरूपत्वं सर्वानुभवसिद्धम्। उक्तं च भर्तृहरिणा-"भोगे रोगभयम्"[२] इति।

---

स्थानाद् बीजाद्........पण्डिता ह्यशुचिं विदुः।।१।।

इस शरीर की उत्पत्ति स्थान माता का उदर है जो मलमूत्रादिदुर्गन्ध वस्तु से आपूरित है। इस शरीर का बीज भी अत्यन्त अपवित्र है जो माता एवं पिता के रज एवं वीर्य हैं। इस शरीर का उपष्टम्भक (पोषक तत्त्व) सप्त धातु हैं— रस, असृक्, मांस, मेद, अस्थि, मज्जा एवम् शुक्र। ये भुक्त अन्नादि एवम् पीत जलादि के परिणाम (कार्य) होने से अपवित्र हैं। इतना ही नहीं, और भी देखें— इस शरीर से सर्वदा अपवित्र वस्तुओं- (मल, मूत्र, स्वेद, कफ प्रभृति) का निःसरण होता रहता है। जब यह शरीर मरता है तब अशौच उपस्थित होता है। अतएव मृत शरीर के स्पर्श होने पर स्नानादि का विधान शास्त्रों में प्रतिपादित है। अतएव भाष्यकार का सुस्पष्ट आशय है— स्थान, बीज, उपष्टम्भ, निष्यन्द एवं निधन यतः अपवित्र हैं अतः शरीर भी अपवित्र है। एवंच अशुचि शरीर में अज्ञानिजन को शुचिता की भ्रान्ति होती है। इसी कारण अज्ञानी व्यक्ति मोहित रहता है। तद्वत् दुःखमय -स्रक्, चन्दन, वनिता प्रभृति विषयभोगों में जो सुखबुद्धि है वह अविद्या है। विषयभोग का परिणाम दुःखरूप है— यह सर्वानुभव सिद्ध है। अत एव भर्तृहरि ने कहा है— "भोगे रोगभयम्।" महाकवि भारवि ने भी कहा है— "आपातरम्या विषयाः पर्यन्तपरितापिनः।" यह अज्ञान की पराकाष्ठा है कि ऐसे

---

१. यो० सू० भा० २।५.
२. वै० श० ३१. श्लो०।

महाकविना भारविणाप्युक्तम्–"आपातरम्या विषयाः पर्यन्तपरितापिनः"[१] इति। अथाप्यज्ञानिनस्तत्र सुखबुद्ध्या प्रवर्तन्ते। एवमेवानात्मनि बुद्ध्यादावात्मत्वज्ञानमित्येवंप्रकारेणानित्ये नित्यत्वमिति, अशुचौ शुचित्वमिति, दुःखे सुखत्वमिति, अनात्मन्यात्मत्वमितीयमविद्या चतुष्पदा भवति[२]। इयमेवाविद्या उत्तरेषामस्मितादीनां प्रसवभूमिः। तदुक्तम्–"अविद्या क्षेत्रमुत्तरेषां......."[३] इति।

अस्मिता नाम सत्त्वपुरुषयोरहमस्मीत्येकताभिमानः। तदुक्तम्–"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता"[४] इति। अस्यायमर्थः–दृक्शक्तिः = पुरुषः, दर्शनशक्तिश्च बुद्धिः। अत्र पुरुषस्य चिद्रूपत्वात् तस्यैव द्रष्टृत्वसम्भव इति पुरुषो दृक्शक्तिरित्युच्यते। प्रपञ्चदर्शने च बुद्धेर्द्वारकत्वाद् बुद्धिर्दर्शनशक्तिरित्यभिधीयते। एवं नितान्तं भिन्नयोश्चिज्जडयोर्दृग्दर्शनशक्त्योरेकात्मतेव प्रतीयमानोऽहङ्कार एवास्मितेति। एवं बुद्ध्या सह तादात्म्यापत्तौ सत्यां पुरुषस्य सुखदुःखभोगः। तदुक्तम्–"सत्त्वपुरुषयोरत्यन्ताऽसङ्कीर्णयोः प्रत्ययाविशेषो

---

विषयभोग में भी सुखबुद्धि से बद्धजीवों की प्रवृत्ति होती है। तद्वत् अनात्मस्वरूप बुद्धि देहेन्द्रियादि में आत्मत्वबुद्धि भी अविद्या कहलाती है। इस प्रकार अविद्या को चतुष्पदा कहा गया है। तद्यथा— १. अनित्य में नित्यताबुद्धि २. अशुचि में शुचिताबुद्धि, ३. दुःख में सुखत्वबुद्धि तथा ४. अनात्मा में आत्मत्वबुद्धि अविद्या कहलाती है। यह अविद्या ही स्वोत्तरवर्ती अस्मिता आदि की प्रसवभूमि है। पतञ्जलि ने इस अर्थ की विशद व्याख्या प्रस्तुत की है— "अविद्या क्षेत्रमुत्तरेषाम्.......।" इति। सत्त्व एवं पुरुष में एकताभिमान (अहमस्मि) अस्मिता कहलाता है। तद्यथा— "दृग्दर्शनशक्त्योरेकात्मतेवा-स्मिता।" सूत्रार्थ है— दृक्शक्ति पुरुष एवं दर्शनशक्ति बुद्धि है। पुरुष के चिद्रूप होने से उसी में द्रष्टृता के सम्भव होने से पुरुष दृक्शक्ति कहलाता है। प्रपञ्च के ज्ञान में बुद्धि ही द्वार (सहायक) बनती है अतः बुद्धि दर्शनशक्ति कहलाती है। इस प्रकार अत्यन्त भिन्न होने पर भी चित् (दृक् शक्ति) एवं जड (दर्शनशक्ति) की एकात्मता से प्रतीत होने वाला अहंकार ही अस्मिता कहलाता है। इस प्रकार बुद्धि के साथ तादात्म्य होने पर पुरुष को सुख-

---

१. कि० म० ११।१२.
२. यो० सू० भा० २।५ तथा स० द० सं०, पृ० ६९६-६९८.
३. यो० सू० २।४.
४. यो० सू० २।६.

भोगः"[१] इति। तस्मात् सुखदुःखान्यतरसाक्षात्काररूपस्य भोगस्य वस्तुतो बुद्धिधर्मत्वेऽपि तत्तादात्म्यमापाद्य पुरुषं सुखदुःखैः क्लिश्नातीत्यस्मिता क्लेश इत्युच्यते। अत एवास्मितायामेव सत्यां पुरुषोऽहमस्मि सुखी दुःखी कर्ता भोक्तेत्यभिमन्यते[२]।

रागो नाम सुखभोगानन्तरमन्तःकरणे वर्तमानोऽभिलाषविशेषः। तदुक्तम्– "सुखानुशयी रागः"[३] इति। अस्यायमर्थः–सुखमनुशेते विषयीकरोतीति व्युत्पत्त्या सुखाभिज्ञस्य सुखानुस्मृतिपूर्विका सुखतत्साधनेषु या तृष्णा सैव राग इति। यदा यस्य यादृशसुखानुभवो भवति, तदा तच्चेतसि तादृशसुखसंस्कार-स्तत्साधनसंस्कारश्चोदेति, ततः संस्कारात् तस्य सुखतत्साधनयोः स्मृतिर्भवति, स्मृत्या च पुनस्तादृशसुखस्य तत्साधनस्य च योऽभिलाषो जायते, स एव राग इति तात्पर्यम्[१]।

---

दुःखों का भोग आपतित होता है। तत्प्रतिपादक सूत्र है— "सत्त्वपुरुषयोरत्यन्ता-संकीर्णयोः प्रत्ययाविशेषो भोगः।"

एवंच सुखसाक्षात्कार एवं दुःखसाक्षात्कार के भेद से भोग के दो भेद होते हैं। द्विविध भोग में बुद्धि-धर्मता होने पर भी बुद्धि के साथ तादात्म्यभावापन्न पुरुष को सुखदुःखद्वारक क्लेशान्वित करने के कारण भोग को क्लेशसंज्ञा दी गई है। एवंच अस्मिता के उदित होने पर पुरुष अभिमान कर बैठता है— अहमस्मि, सुखी, दुःखी, कर्ता भोक्ता चेति।

राग की परिभाषा है— सुखोपभोग के अनन्तर अन्तःकरण में वर्तमान होने वाला अभिलाषविशेष राग कहलाता है। तद्यथा— सुखानुशयी रागः। इसका अर्थ है— सुखम् अनुशेते = विषयीकरोति इस व्युत्पत्ति के आधार पर राग हम उसे कहते हैं— सुख के ज्ञाता को सुखानुस्मृति के साथ सुख एवम् उसके साधनों में रहने वाली तृष्णा राग कहलाती है। जब जिस व्यक्ति को यादृशं सुख की अनुभूति होती है तब उसके अन्तःकरण में तादृश सुख-संस्कार एवम् सुखसाधन-संस्कार उदित होते हैं। तदनन्तर संस्कार के उद्रिक्त होने से उस व्यक्ति को कभी कालान्तर में सुख एवम् उसके साधन की स्मृति होती है। स्मृति होने से पुनः तादृश सुख एवम् उसके साधन का अभिलाष उत्पन्न होता है उसे राग कहते हैं।

---

१. यो० सू० ३।३५.

२. यो० सू० भा० २।६; तत्त्ववैशारदी च।

३. यो० सू० २।७.

दुःखाभिज्ञस्य तदनुस्मृतिपुरःसरं दुःखतत्साधनयोर्यः क्रोधः स द्वेष इत्युच्यते। तदुक्तम्–"दुःखानुशयी द्वेषः"[२] इति। दुःखज्ञातुर्जीवस्य तस्य ज्ञातदुःखस्य ज्ञातदुःखीयसाधनस्य च स्मृतिपूर्वकस्तादृशदुःखविषयकस्तादृश-दुःखीयसाधनविषयकश्च यः क्रोधो भवति, स द्वेष इति तात्पर्यम्[३]।

प्राक्तनानेकमरणदुःखानां संस्काराज्ज्ञान्यज्ञानिनोः सञ्जायमानः शरीरविषयादेर्मम वियोगो मा भूदिति प्रत्यहं निमित्तं विना प्रवर्तमानो मरणत्रासोऽभिनिवेशः। तदुक्तम्–"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः"[४] इति। अत्र स्वरसवाहीत्यस्य–"स्वभावेन वासनारूपेण वहनशीलः, न पुनरागन्तुकः"[५] इति वाचस्पतिमिश्रैरनादिवासनारूपोऽर्थः प्रतिपादितः। तस्मादनेकजन्मानुभूतं यन्मरणदुःखं तज्जन्यो यः संस्कारः स स्वरसः, तेन वाही = सदा जायमानो यो मरणत्रासः, ममाभावः कदापि मा भूदित्यात्मकं मरणाद् यद् भयम्, सोऽभिनिवेश इति सरलार्थः।

---

दुःख के जानकार को दुःख की स्मृति होने पर दुःखविषयक अथवा दुःखसाधनविषयक जो क्रोध उत्पन्न होता है वह द्वेष कहलाता है। तद्यथा— दुःखानुशयी द्वेषः। दुःख के जानकार जीव को ज्ञात दुःख अथवा दुःखसाधनों की स्मृति होती है और तदनन्तर दुःखविषयक अथवा दुःखसाधनविषयक जो क्रोध उत्पन्न होता है वह द्वेष कहलाता है।

प्राक्तन अनेकमरण (मृत्यु) दुःखों का संस्कार मर्त्य प्राणियों में रहता है। उस संस्कार के कारण ज्ञानी को तथा अज्ञानी को भी यह त्रास होता है— शरीर एवं विषयादि से मेरा वियोग न हो। ऐसा प्रतिदिन किसी विशेषहेतु के बिना मरणत्रास होना ही अभिनिवेश कहलाता है। तद्यथा— स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः। आचार्य वाचस्पतिमिश्र ने स्वरसवाही शब्द की व्याख्या करते हुए लिखा है— स्वभावेन वासनारूपेण वहनशीलः, न पुनरागन्तुकः। एवंच अभिनिवेश का अर्थ है—

---

४. यो० सू० भा० २।७ तत्त्ववैशारदी च।

५. यो० सू० २।८; स० द० सं०, पृ० ६९९.

१. यो० सू० भा० २।८.

२. यो० सू० २।९.

३. त० वै०, पृ० ६८.

नन्वविदुषो भवतु मरणत्रासः, विदुषोऽपि कथं सम्भवेदिति चेन्न, सम्प्रज्ञातसमाधिसम्पन्नस्य मरणत्रासाऽभावेऽपि केवलं श्रौतानुमानविवेकिनो भवत्येव मरणत्रास इति पतञ्जलेराशयः। तदुक्तं वाचस्पतिमिश्रैः- न सम्प्रज्ञातवान् विद्वान्, अपि तु श्रुतानुमानविवेकीति भावः"[1] इति। एतेषु पञ्चक्लेशेष्वस्मिताद्यभिनिवेशपर्यन्तानां चतुर्णामप्यविद्यामूलकत्वादेतेऽविद्याया एव विभागरूपाः। तदुक्तं भाष्यकारेण व्यासेन-"सर्व एवामी क्लेशा अविद्याभेदाः कस्मात्? सर्वेष्वविद्यैवाभिप्लवते। यदविद्यया वस्त्वाकार्यते तदेवानुशेरते क्लेशा विपर्यासप्रत्ययकाल उपलभ्यन्ते क्षीयमाणां चाविद्यामनु क्षीयन्त इति"[2] इति।

एत एवाविद्यादयः पञ्च क्लेशाः सांख्यदर्शने तमोमोहमहामोहतामिस्राऽन्धतामिस्रसंज्ञया व्यवह्रियन्ते। तदुक्तं वाचस्पतिमिश्रैः-"अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः"[3]

---

## अनादिवासनाविशेष

एवंच अनेक जन्मों में अनुभूत होने वाला जो मरण-दुःख है उससे उत्पन्न होने वाला संस्कार, स्वरस कहलाता है—उससे उत्पन्न होने वाला मरणत्रास है। कभी भी मेरा अभाव न हो इस तरह का मृत्यु से होने वाला भय ही अभिनिवेश कहलाता है।

अब जिज्ञासा उदित होती है कि अविद्वान् को मरणत्रास होता है यह तो उचित है किन्तु विद्वान् को यह मरणत्रास कैसे हो सकता है? इसका उत्तर है—सम्प्रज्ञातसमाधि से सम्पन्न योगी विद्वान् को मरणत्रास नहीं हो सकता किन्तु साक्षात्कार के अभाव में श्रौत अथवा आनुमानिक विवेकी को मरणत्रास बना ही रहता है। इस आशय से पतञ्जलि मुनि ने विदुषोऽपि पद का उल्लेख सूत्र में किया है। इस आशय को अपनी व्याख्या में श्रीमिश्र ने अभिव्यक्त किया है— "न सम्प्रज्ञातवान् विद्वान् अपितु श्रुतानुमानविवेकीतिभावः।" इति। उपर्युक्त पञ्चविध क्लेशों में अस्मिता, राग, द्वेष एवम् अभिनिवेश इन चार प्रकार के क्लेशों का मूलकारण अविद्या है अतः इन्हें अविद्या का प्रभेद माना जाता है। अतएव भाष्यकार (व्यास) ने कहा है— "सर्व एवामी क्लेशा अविद्याभेदाः। कस्मात्? सर्वेष्वविद्यैव अभिप्लवते। यदविद्यया वस्त्वाकार्यते तदेवानुशेरते क्लेशा विपर्यासप्रत्ययकाल उपलभ्यन्ते क्षीयमाणां चाविद्यामनुक्षीयन्ते इति।"

---

१. त० वै०, पृ० ६८.
२. यो० सू० भा० २।४.
३. सां० त० कौ०, पृ० ४१६-४१८.

इति। योगभाष्यकारेणाप्यविद्यादीनां तमोमोहादिपर्यायवाचकत्वमुक्तम्–"सेयं पञ्चपर्वा भवत्यविद्या, अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशा इति। एत एव स्वसंज्ञाभिस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति"[१] इति।

तत्रभवता ईश्वरकृष्णेनाविद्यादिपञ्चक्लेशपर्यायाणां तमोमोहादीनां द्वाषष्टिरवान्तरभेदाः प्रतिपादिताः। तथा हि–

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः।।[२] इति।

अस्यायमर्थः–तत्राविद्यापर्यायं तमोऽव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वष्टस्वनात्मस्वात्मत्वबुद्धिं जनयतीति प्रधानादीनां विषयाणामष्टत्वेन विषयिणस्तमसोऽष्टविधत्वम्। देवा ह्यष्टविधैश्वर्यमासाद्यामृतत्वाभिमानिनः सन्त इदमणिमादिकमस्माकं शाश्वतिकमैश्वर्यमस्तीति जानन्ति। एवमशाश्वतिकेषु शाश्वतिकत्वाभिमानोऽस्मितापरपर्यायो मोहः। अत्राभिमानविषयाणामैश्वर्याणामष्टप्रकारकत्वान्मोहोऽप्यष्टविध इत्युच्यते। दिव्यादिव्यभेदेन दशविधेषु शब्द–स्पर्श–रूप–रस–गन्धेषु रञ्जनीयविषयेषु, अर्थादिष्टसाधनताज्ञानजन्येच्छाविषयेष्वासक्तिरूपो रागो महामोहः। अत्र महामोहविषयाणां दशविधत्वात् सोऽपि दशविधो भवति। दिव्यादिव्यभेदेन

---

उपर्युक्त अविद्याप्रभृति ५ क्लेशों को सांख्यदर्शन में तमस्, मोह, महामोह, तामिस्र तथा अन्धतामिस्र कहा जाता है। श्रीमिश्र ने सुस्पष्ट कहा है— 'अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः।" इति। योगभाष्यकार ने भी अविद्याप्रभृति को तमोमोहादि का पर्यायवाची कहा है— "सेयं पञ्चपर्वा भवत्यविद्या, अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशा इति। ये पञ्चविध क्लेश ही सांख्यनय में तमस्, मोह, महामोह, तामिस्र एवम् अन्धतामिस्र कहलाते हैं।"

पूज्य आचार्य ईश्वरकृष्ण ने अविद्याप्रभृति ५ क्लेशों के पर्याय तमः प्रभृति के ६२ अवान्तर भेदों को प्रतिपादित किया है। तद्यथा—

"भेदस्तमसोऽष्टविधो.......... भवत्यन्धतामिस्रः।।" इति।

इसका अर्थ है— पञ्चविध क्लेशों में अविद्या का पर्याय तमस् है। यह तमस् ८ अनात्मपदार्थों (अव्यक्त, महत्, अहंकार, एवं ५ तन्मात्र-शब्द, स्पर्श, रूप, रस, गन्ध) में आत्मबुद्धि को जन्म देता है। ८ विषयों के होने से (विषयभेद से विषयिभेद

---

१. यो० सू० भा० १।८.

२. सां० का० ४८.

दशविधानां शब्दादिविषयाणाम्, अणिमाद्यष्टविधैश्वर्याणां चोपभोगावसरे कदाचित् प्रतिबन्धे सति तस्मिन् प्रतिबन्धके यः क्रोधः स एव तामिस्रः। अत्र शब्दादिदशविषयाणामणिमाद्यष्टविधैश्वर्याणां च सङ्कलनयाऽष्टादश क्रोधस्य विषया इति क्रोधापरपर्यायस्तामिस्रोऽष्टादशविधो भवति। देवाःखल्वणिमादिकमष्टविधैश्वर्यमासाद्य दिव्यादिव्यभेदभिन्नान् दशविधान् शब्दादिविषयानुपभुञ्जाना अस्माकं भोग्याः शब्दादयस्तदुपायाश्चाणिमादयोऽसुरादिभिर्मा स्मोपहता भवेयुरिति बिभ्यति। अयमेवाभिनिवेशापरपर्यायोऽन्धतामिस्रः। अन्धतामिस्रोऽष्टादशविषयत्वाद् अष्टादशधेत्युच्यते। एवं तमसोऽष्टौ, मोहस्याष्टौ, महामोहस्य दश, तामिस्रस्याष्टादश, अन्धतामिस्रस्य चाष्टादश भेदा इत्याहत्य तमोमोहादीनां द्वाषष्टिरवान्तरभेदाः[१]।

---

मान्य होता है।) तमस् (विषयी) के ८ भेद होते हैं। देवगण अष्टविध ऐश्वर्य को प्राप्त कर अमृतत्व के अभिमानी होकर यह मानते हैं कि अणिम-प्रभृति ऐश्वर्य शाश्वत हैं। इस प्रकार अशाश्वत वस्तु में शाश्वत होने के अभिमान को अस्मिता या मोह कहा जाता है। यहाँ अभिमान के विषय ऐश्वर्य अष्टविध हैं अतः मोह भी अष्टविध कहलाता है। दिव्य एवम् अदिव्य के भेद से शब्द, स्पर्श, रूप, रस एवं गन्ध को दशविध रागविषय कहा जाता है। इनमें इष्टसाधनताज्ञानजन्य इच्छाविषयता होने से इनके प्रति आसक्ति उदित होती है जिसे राग या महामोह कहा जाता है। विषय के दशविध होने से महामोह को दशविध माना जाता है। दशविध शब्दादिविषयों एवम् अष्टविध अणिमादि ऐश्वर्यों के उपभोगावसर में कदाचित् किसी प्रकार के प्रतिबन्ध उपस्थित होने पर प्रतिबन्धक के प्रति जो क्रोध उदित होता है वह तामिस्र कहलाता है। शब्दादिदशविध विषय एवम् अणिमादि अष्टविध ऐश्वर्यों के योग से अष्टादश (१८) विध विषयों के आधार पर क्रोधसंज्ञक तामिस्र भी १८ प्रकार का माना जाता है। देवगण को यह भय बना रहता है कि "हम देवगण अणिमादि अष्टविध ऐश्वर्य को प्राप्त कर दिव्यएवम् अदिव्य भेद से दशविध शब्दादि विषयों का भोग करते हैं। असुरप्रभृति शत्रुओं द्वारा हमारे भोग्यविषयों का तथा उनके उपायों का अपहरण कर लेने से हम इनसे वञ्चित न हो जायँ।" यही अभिनिवेश अथवा अन्धतामिस्र कहलाता है। यतश्च अन्धतामिस्र के विषय १८ प्रकार के हैं अतः यह अष्टादशविध कहलाता है। एवञ्च तमस-०८+ मोह-०८+ महामोह १०+ तामिस्र १८+ अन्धतामिस्र १८ के सर्वयोग करने से तमः प्रभृति पाँच के अवान्तर भेद-६२ होते हैं।

---

१. सां० त० कौ०, पृ० ४१९-४२३.

भगवता पतञ्जलिना–"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः"[२] "सति मूले तद्विपाको जात्यायुर्भोगाः"[३] इति सूत्राभ्यां शुभाशुभकर्मणां तदाशयानाम्, अर्थाद् आफलविकासात् चित्तभूमौ शेरत इत्याशया धर्माधर्मसंस्कारास्तेषाम्, तत्फलानां च जात्यायुर्भोगानामुत्पत्तौ पूर्वोक्ताः पञ्च क्लेशा एव निमित्तकारणमिति प्रतिपादितम्। तस्माद् दुःखमूलानां क्लेशानां निवृत्तेर्विना न दुःखानामात्यन्तिकी निवृत्तिर्न वा कैवल्यावाप्तिरिति महर्षिणा पतञ्जलिना तदर्थं प्रमाणविपर्ययादिपञ्चप्रकाराणां वृत्तीनां निरोधरूपो योगोऽभिहितः।

**योगसाधनानि**

स च चित्तवृत्तिनिरोधरूपो योगः केनोपायेन प्राप्यत इति जिज्ञासायाम्– "अभ्यासवैराग्याभ्यां तन्निरोधः"[४], "ईश्वरप्रणिधानाद्वा"[५], "तपःस्वाध्यायेश्वर-प्रणिधानानि क्रियायोगः"[६], "यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यान-

---

भगवान् पतञ्जलि ने दो सूत्रों के आधार को ग्रहण किया है— १. "क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः २. सतिमूले तद्विपाको जात्यायुर्भोगाः।"। तदनुसार शुभ एवं अशुभ कर्म, फलप्राप्ति पर्यन्त चित्तभूमि में शयन करने वाले धर्माधर्म संस्कार तथा उनके फल (जाति=जन्म, आयु और भोग) की उत्पत्ति में पूर्वोक्त पञ्चविध क्लेश ही निमित्तकारण होते हैं— ऐसा प्रतिपादित किया है। अतः दुःखकारण क्लेशों की निवृत्ति के बिना दुःखों की आत्यन्तिक निवृत्ति नहीं हो सकती तद्वत् कैवल्य की प्राप्ति भी नहीं हो सकती। अतः महर्षि पतञ्जलि ने प्रमाण, विपर्यय, विकल्प, निद्रा एवं स्मृतिरूप पञ्चविध वृत्तियों के निरोध को योगशब्द से प्रतिपादित किया है।

**योग के साधन–**

पूर्व में प्रतिपादित किया गया है कि चित्तवृत्तिविशेष के निरोध को योग कहा जाता है— "योगश्चित्तवृत्तिनिरोधः।" जिज्ञासा होती है कि निरोधस्वरूप योग की प्राप्ति किस उपाय से होगी? इसका समाधान करते हुए महर्षि ने ४ प्रकार के उपाय

---

१. यो० सू० २।१२.
२. यो० सू० २।१३.
३. यो० सू० १।१२.
४. यो० यू० १।२३.
५. यो० सू० २।१.

समाधयोऽष्टावङ्गानि"[१] इत्युपायचातुर्विध्यमाह महर्षिः। तत्र च– "योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः"[२] इति सूत्रेण यमाद्यनुष्ठानेन स्थूलसूक्ष्मशरीरगताशुद्धिनिवारणद्वाराऽष्टाङ्गानि योगसाधनानीति निरूपितत्वाद् योगाङ्गानुष्ठाने उभयविधदोषवन्तस्तदपनिनीषव एवाधिकारिण इत्यूह्यते। "तपःश्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" इत्यस्यावतरणिकाभाष्ये भगवता व्यासेन–"उद्दिष्टःसमाहितचित्तस्य योगः, कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्येतदारभ्यते" इति निगदितत्वादितः प्राक् प्रथमपादे महर्षिणैव– "अभ्यासवैराग्याभ्यां तन्निरोधः", "ईश्वरप्रणिधानाद्वा" इत्युपायद्वयस्य विकल्पेन निरूपितत्वाच्च तावुपायौ समाहितचित्तायोत्तमाधिकारिण इति ज्ञायते। तस्मादभ्यासवैराग्यावीश्वरप्राणिधानं वोत्तमाधिकारिणां कृते, क्रियायोगो मध्यमाधिकारिणाम्, यमाद्यष्टाङ्गानि तु मन्दाधिकारिणां योगसाधनानीति निश्चेतुं शक्यते।

---

प्रतिपादित किये हैं। तद्यथा— १. "अभ्यासवैराग्याभ्यां तन्निरोधः, २. ईश्वरप्रणिधानाद्वा ३. तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ४. यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि।

यमनियम प्रभृति ८ योगाङ्गों के अनुष्ठान से अशुद्धि के क्षीण होने पर (स्थूल एवं सूक्ष्मशरीर से सम्बद्ध) विवेकख्याति उदित होती है। एवंच द्विविधअशुद्धि निवारण के उत्कट अभिलाषी जन ही योगाङ्गों के अनुष्ठान के अधिकारी प्रतीत होते हैं। यह अर्थ ऊह (तर्क) से लभ्य है। द्वितीय पाद के प्रथमसूत्र— "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" अवतरणिका में भाष्यकार भगवान् व्यास ने सुस्पष्ट कहा है— "जिनके चित्त समाहित हैं प्रथमपाद में उनका योग प्रतिपादित किया जा चुका है। जिनका चित्त समाहित नहीं है अपितु व्युत्थित है वह भी योगयुक्त किस उपाय से हो सकते हैं—एतदर्थ द्वितीय पाद का आरम्भ किया जा रहा है।" पूर्वोक्त प्रथम पाद में स्वयं सूत्रकार महर्षि पतञ्जलि ने दो उपायों को वैकल्पिक रूप से प्रतिपादित किया है— "अभ्यासवैराग्याभ्यां तन्निरोधः, ईश्वरप्रणिधानाद्वा।" ये दोनों उपाय उत्तम अधिकारियों के विषय में प्रयुक्त किये गये हैं। एवंच विवेचना करने से सुस्पष्ट प्रतीत होता है कि उत्तम अधिकारियों को ध्यान में रखकर अभ्यास, वैराग्य तद्वत् ईश्वर-प्रणिधान को उत्तमाधिकारी के उद्देश्य से प्रतिपादित किया गया है। मध्यमाधिकारी को उद्देश्य कर क्रियायोग का प्रतिपादन एवम् मन्दाधिकारी को उद्देश्य कर अष्टाङ्ग योगसाधनों का प्रतिपादन किया गया है।

---

१. यो० सू० २।२९.
२. यो० सू० २।२८.

उक्तं च विज्ञानभिक्षुणा—"तत्र मन्दमध्यमोत्तमभेदेन त्रिविधा योगाधिकारिणो भवन्त्यारुरुक्षुयुञ्जानयोगारूढरूपाः। ......उत्तमाधिकारिणस्त एव ये पूर्वभवानुष्ठितबहिरङ्गसाधनतया तन्नैरपेक्ष्येणैव योगारूढाः। यथा जडभरतादयः तेषां योगनिष्पत्तावभ्यासवैराग्ये एव मुख्यसाधनम्। न तु वक्ष्यमाणः क्रियायोगो वक्ष्यमाणानि योगबहिरङ्गानि वाऽऽवश्यकानि। .......अथ मध्यमाधिकारिणो युञ्जानस्य वानप्रस्थादेः प्रकृष्टक्रियायोगरूपं योगसाधनं निरूप्यते। तस्य च क्रियायोगो मुख्यतः साधनम्। ......तानि च यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति मन्दाधिकारिभिर्धारणादि-रूपोऽभ्यासो यमनियमादिरूपः समग्रक्रियायोगश्च यथाक्रममनुष्ठेय इत्याशयेन पिण्डीकृत्य सर्वमेव मन्दाधिकारिभ्य उपदिश्यते"[१] इति।

---

उपर्युक्त निष्कर्षकथन का विशदीकरण विज्ञानभिक्षु महोदय ने निम्नाङ्कित रूप से किया है— "योग के त्रिविध अधिकारी-आरुरुक्षु, युञ्जान एवं योगारूढ को क्रमशः मन्द, मध्यम एवम् उत्तम श्रेणियों में विभाजित किया गया है।.....उत्तम अधिकारी वो लोग होते हैं जो पूर्वजन्म में ही योग के बहिरङ्ग साधनों का अनुष्ठान भलीभाँति कर चुके होते हैं अतः उन्हें वर्तमान जीवन में बहिरङ्ग साधनों की अपेक्षा नहीं होती है तथा वो स्वरसतः योगारूढ होते हैं। इस तरह के साधक जडभरत प्रभृति इतिहास प्रसिद्ध महापुरुष होते हैं। ऐसे साधकों की योगनिष्पति (सम्पत्ति) में मुख्यसाधन-अभ्यास एवं वैराग्य होते हैं। उनके लिए क्रियायोग अथवा योग-बहिरङ्गसाधन-यम नियमादि की सापेक्षता नहीं होती।...... जो साधक मध्यम अधिकारी होते हैं वो लोग वानप्रस्थसेवी युञ्जान योगी कहलाते हैं उनका मुख्यसाधन क्रियायोग होता है।..........इन दोनों से अवरकोटि के मन्ध अधिकारी आरुरुक्षु गृहस्थजन होते हैं उनके लिए यमनियमादि अष्टाङ्ग योगसाधनों का उपदेश किया जाता है। इनमें यम, नियम, आसन, प्राणायाम तथा प्रत्याहार क्रियायोग एवं धारणा, ध्यान तथा समाधि रूप अभ्यासों की क्रमेण अवश्यानुष्ठेयता होती है— इस आशय से मन्दाधिकारी साधकों के लिए आठों अङ्गों को प्रतिपादित किया जाता है।"

---

१. यो० सा० सां०, पृ० ३७–६०.

## अष्टाङ्गस्वरूपम्

भगवता पतञ्जलिना चित्तशुद्धिद्वारा निर्बीजाख्यासम्प्रज्ञातसमाधिलाभार्थं यमाद्यष्टाङ्गानि प्रतिपादितानि। तत्र–"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः"[१] इति पञ्चविधं यमाख्यं प्रथमं योगाङ्गम्।

## पञ्चविधा यमाः

**१. अहिंसा**–अत्र भगवान् भाष्यकारो व्यासः–"तत्राऽहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः"[२] इत्याह। वृत्तिकारो भोजदेवोऽपि– "तत्र प्राणवियोगप्रयोजनं व्यापारो हिंसा, सा च सर्वानर्थहेतुः, तदभावोऽहिंसा"[३] इत्युक्तवान्। तस्मान्मीमांसकाभिमता–"वैदिकी हिंसा हिंसा न भवति" इत्युक्तिर्योगदर्शने नाभिमता। अग्नीषोमीये यागे पश्वालम्भनस्य क्रतूपकारकत्वेऽपि "मा हिंस्यात्" इति निषेधोल्लङ्घनात् सा हिंसा पुरुषस्य दोषमपि सम्पादयिष्यति।

---

## आठ योगाङ्गों के स्वरूप

भगवान् पतञ्जलि ने चित्तशुद्धि द्वारा निर्बीज एवम् असम्प्रज्ञात नाम वाली समाधि के लाभ हेतु योग के आठ अङ्गों को प्रतिपादित किया है। इनमें प्रथम योगाङ्ग यम है इसके पाँच प्रभेद बताये गये हैं— "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः।"

## पाँच प्रकार के यम

**१. अहिंसा**– भगवान् भाष्यकार व्यास ने अहिंसा को परिभाषित करते हुए व्याख्यायित किया है— "तत्राहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः।" इसका अर्थ सुस्पष्ट है— सभी प्रकार के सभी समय में सभी भूतों का द्रोहाभाव, अहिंसा कहलाता है। वृत्तिकार भोजदेव ने भी कहा है— "तत्र प्राण-वियोगप्रयोजनं व्यापारो हिंसा, साच सर्वानर्थहेतुः, तदभावोऽहिंसा।" एतावता यह निष्कर्ष प्राप्त होता है कि मीमांसकों का अभिमत सिद्धान्त-वेदप्रतिपादित हिंसा को हिंसा (निषेध्य) नहीं मानना— योगदर्शन में ग्राह्य नहीं है। एवंच अग्नीषोमीय याग में पश्वालम्भ की क्रतूपकारिता होने पर भी "मा हिंस्यात् सर्वा भूतानि।" के निषेध का उल्लङ्घन होने से वह हिंसा पुरुष के दोष का जनक होती है।

---

१. यो० सू० २।३०.
२. यो० सू० भा० २।३०.
३. यो० सू० वृ० २।३०.

ननु ""सति विरोधे सामान्यशास्त्राद् विशेषशास्त्रं प्रबलम्" इति न्यायेन "मा हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यत इत्यग्नीषोमीयपश्वालम्भनेन न पुरुषस्य दोषावाप्तिरिति चेन्न, सत्येव समानविषये सामान्यविशेषयोर्बलीयसा विशेषेण सामान्यं बाध्यते। प्रकृते च "मा हिंस्यात्" इति निषेधबोधकेन सामान्यवाक्येन "हिंसा पुरुषानर्थकरी" इत्येव बोध्यते, न तु "हिंसा यागोपकारिणी" इत्येवमपि। एवं "अग्नीषोमीयं पशुमालभेत" इत्यनेन विशेषवाक्येन "हिंसा यागोपकारिणी" इत्येव ज्ञाप्यते, न तु "हिंसा नानर्थकरी" इत्येवमपि। एवं चोभयोर्भिन्नविषयत्वान्न विरोधः, न वा बाध्यबाधकभावः। तस्मादग्नीषोमयागे पश्वालम्भनेन पुरुषस्य दोषः क्रतूपकारश्चेत्युभावपि सम्भवतः। तदुक्तं वाचस्पतिमिश्रैः–"न चानर्थहेतुत्व-क्रतूपकारकत्वयोः कश्चिद् विरोधोऽस्ति, हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति"[१] इति। मुनिना ईश्वरकृष्णेन च– "दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः"[२] इत्येवं सोमयागादौ पशुहिंसाविधानात् तेषां यागानामविशुद्धत्वं तत्प्राप्यस्वर्गस्य च क्षयातिशयदोषदुष्टत्वं प्रतिपादितम्।

---

यह जिज्ञासा उदित होती है "सति विरोधे सामान्यशास्त्राद् विशेषशास्त्रं प्रबलम्।" इस न्याय से विशेष शास्त्र— "अग्नीषोमीयं पशुमालभेत" से सामान्यशास्त्र— "न हिंस्यात्........" का बाध होने से अग्नीषोमीय पश्वालम्भन से पुरुष को दोष प्राप्त नहीं होगा। इसका समाधान यह है— सामान्यशास्त्र तथा विशेषशास्त्र के समानविषयक होने पर ही विशेष से सामान्य का बाध होता है। प्रकृत में "माहिंस्यात्" इस निषेधबोधक सामान्यवाक्य से यह बोध उदित होता है— हिंसा पुरुष का अनर्थ सम्पादन करती है। निषेधवाक्य से यह बोध कथमपि उदित नहीं होता— हिंसा याग की उपकारक है। तद्वत् 'अग्नीषोमीयं पशुमालभेत।" इस विशेषवाक्य से यह बोध उदित होता है— हिंसा याग की उपकारक है। यह बोध तो नहीं होता— हिंसा अनर्थकारिणी नहीं है। तदेवम् दोनों वाक्यों में समान विषय के नहीं होने से न तो विरोध उपस्थित होता है और न ही बाध्यबाधकभाव अतः अग्नीषोमयाग में पशु के आलम्भन से पुरुष का दोष उत्पन्न होता है साथ ही क्रतुका उपकार भी। इसकी विशदव्याख्या आचार्य वाचस्पति मिश्र ने की है— "नचानर्थहेतुत्व-क्रतूपकारकत्वयोः कश्चिद् विरोधोऽस्ति, हिंसा हि पुरुषस्य दोष-मावक्ष्यति क्रतोश्चोपकरिष्यतीति।"

---

१. सां० त० कौ०, पृ० ४६.

२. सां० का० २.

य: करोति बधोदर्का नि:श्रेयसकरी: क्रिया:।
ग्लानिदोषच्छिद: स्वच्छा: स मूढ: पङ्कयत्यप:[१]।।

इति धनञ्जयं प्रति देवराजेनेन्द्रेणापि यागादेर्हिंसादोषदूषितत्वमुक्तम्। अत एव भगवता कृष्णेनापि–"यज्ञानां जपयज्ञोऽस्मि"[२] इति जपयज्ञस्याहिंसारूपत्वेन प्राशस्त्यमुक्तम्। तस्माद् यागफलस्य स्वर्गसुखस्योपभोक्त्रा हिंसाजन्यं पापफलमप्यवश्यमनुभूयते। अत एवेन्द्रादेः शताश्वमेधफलस्वर्गभोगसमयेऽनेकशो रावणमहिषासुरादिभ्यो दुःखधाराः श्रुतिपुराणादिषूपवर्णिताः, यज्ञान्तर्गतहिंसा-जन्यपापफलस्य यज्ञफलभोगान्तरायत्वस्योपपत्तिसिद्धत्वात्। अत एव भाष्यकारेण व्यासेन–"यदि च कथञ्चित् पुण्यावापगता हिंसा भवेत्तत्र सुखप्राप्तौ भवेदल्पायुरिति"[३] इति यागे हिंसाकर्तुरल्पायुष्ट्वम्, अर्थात् तत्र स्वर्गेऽल्पकालसुखभोक्तृत्वमुक्तम्।

---

ईश्वरकृष्ण मुनि ने भी कहा है— "दृष्टवदानुश्रविक: सह्यविशुद्धि-क्षयातिशययुक्त:।" तथाच सोमयागादि में पशुहिंसा विहित होने पर भी याग की अविशुद्धता तथा तत्प्राप्य स्वर्ग की क्षयातिशयदोष से दुष्टता प्रतिपादित होती है।

देवराज इन्द्र ने भी धनञ्जय के प्रति कहा है— यागादि की हिंसादोष से दूषितता होती ही है। तद्‌यथा—

य: करोति वधोदर्का..........स मूढ: पङ्कयत्यप:।।१।।

अतएव हिंसारहित जपयज्ञ को प्रशस्त प्रतिपादित किया गया है— "यज्ञानां जपयज्ञोऽस्मि।" अत: जो सुकृती यागफल के रूप में स्वर्गसुख का उपभोग करता है वह यज्ञीयहिंसाजन्य पापफल का भी अनुभव अवश्य करता है। अतएव इन्द्रादि के (सौ अश्वमेधों के फल स्वर्गभोग के समय) अनेकश:, रावण, महिषासुर प्रभृति के आतङ्क से दुःखधारायें श्रुतिविशद पुराणों में उपवर्णित हैं। यज्ञ के अन्तर्गत की जाने वाली पशुहिंसा जनित से पाप-फल का यज्ञफलभोग में अन्तराय होना उपपत्तिसिद्ध है। अतएव भाष्यकार भगवान् व्यास ने यागीय हिंसापरायण व्यक्ति की आयु में अल्पता आ जाने की बात बतायी है। हिंसा के कारण स्वर्गसुख की अल्पकालोपभोग्यता प्राप्त होती है। तद्‌यथा— "यदि च कथंचित् पुण्यावापगता हिंसा भवेत् तत्र सुखप्राप्तौ भवेदल्पायुरिति।"

---

१. कि० म० ११।१९.

२. भ० गी० १०।२५.

३. यो० सू० भा० २।३४.

किञ्च, भाष्यकारेणैव–"तत्र हिंसा तावत् कृतकारितानुमोदितेति त्रिधा। एकैका पुनस्त्रिधा लोभेन मांसचर्मार्थेन, क्रोधेनापकृतमनेनेति, मोहेन धर्मो मे भविष्यतीति। लोभक्रोधमोहाः पुनस्त्रिविधा मृदुमध्याधिमात्रा इति। एवं सप्तविंशतिभेदा भवन्ति हिंसायाः। मृदुमध्याधिमात्राः पुनस्त्रिविधाः– मृदुमृदुर्मध्यमृदुस्तीव्रमृदुरिति, तथा मृदुमध्यो मध्यममध्यस्तीव्रमध्य इति, तथा मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति। एवमेकाशीतिभेदा हिंसा भवति। सा पुनर्नियमविकल्पसमुच्चयभेदादसंख्येया। प्राणभृद्भेदस्यापरिसंख्येयत्वादिति"[१] इति हिंसाया भेदाः प्रतिपादिताः। एतेषां सर्वेषामपि प्रकाराणां परित्यागोऽहिंसेति "सर्वथा सर्वदा सर्वप्राणिनामनभिद्रोहोऽहिंसा" इत्यनेन तद्वाक्येनैव परिज्ञायते। तस्मात् सांख्ययोगदर्शनयोर्वैदिकी हिंसाऽपि हिंसैव न त्वहिंसा, प्राणवियोगानुकूलव्यापारस्यैव हिंसात्वात् तस्य च तत्र सत्त्वात्। ईश्वरगीतायामपि–

---

भाष्यकार ने विशदता के साथ हिंसा-प्रभेदों का भी प्रतिपादन किया है। तद्यथा— "हिंसा तीन प्रकार की होती है कृत, कारित एवम् अनुमोदित। प्रत्येक के तीन प्रभेद होते हैं— १. लोभमूलक (मांस, चर्म आदि पशु सम्बन्धी) २. क्रोधमूलक (इसने मेरा अपकार किया है— प्रतिशोध से उत्प्रेरित) तथा ३. मोहमूलक (यज्ञीय हिंसा से क्रतूपकार होना तथा धर्म से स्वर्गादि की प्राप्ति)।

लोभ, क्रोध तथा मोह भी तीन प्रकार के (प्रत्येक) होते हैं— मृदुलोभ, मध्यलोभ तथा अधिमात्र लोभ। तद्वत् क्रोध एवं मोह के भी तीन प्रभेद होते हैं। मृदु क्रोध के भी तीन अवान्तर भेद होते हैं— मृदुमृदु, मध्यमृदु तथा तीव्रमृदु। मध्यक्रोध के तीन अवान्तर भेद होते हैं— मृदुमध्य, मध्यममध्य एवं तीव्रमध्य। तद्वत् मृदुतीव्र, मध्यतीव्र एवम् अतिमात्रतीव्र। इस प्रकार हिंसा के ८१ प्रकार होते हैं। वह हिंसा— नियम, विकल्प एवं समुच्चय के भेद से असंख्येय अर्थात् गणनातीत है। कारण यह है कि प्राणियों की संख्या परिगणित नहीं है।" इस प्रकार शास्त्र में हिंसा की प्रकारसंख्या के विषय में प्रतिपादन प्राप्त होता है। इन सर्वविध हिंसा प्रकारों का सर्वथा परित्याग अहिंसा कहलाती है। तद्यथा— "सर्वथा सर्वदा सर्वप्राणियों का अभिद्रोह नहीं करना अहिंसा कहलाता है।

एतावता यह निष्कर्ष प्राप्त होता है— सांख्य एवं योगदर्शन में वैदिकी हिंसा भी हिंसा मान्य है वह किसी भी युक्ति से अहिंसा की श्रेणी में नहीं लायी

---

१. यो० सू० भा० २।३४.

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा।
अक्लेशजननं प्रोक्ता त्वहिंसा परमर्षिभिः॥[१]

इति करणत्रयेणाप्यहिंसापरिपालनमुक्तम्।

**२. सत्यम्**–सत्यं नाम यथार्थभाषणम्, अर्थाद् यथा दृष्टं यथाऽनुमितं यथा च श्रुतं तथैव परान् प्रत्यभिभाषण्। एवं परान् प्रत्युक्तं वचो यदि नान्यान् वञ्चयति, नान्येभ्यो भ्रान्तिमुत्पादयति, न वा निरर्थकं भवति, तदेव सत्यवागित्यभिधीयते। अत एव भगवता व्यासेन–"सत्यं यथार्थे वाङ्मनसी। यथा दृष्टं यथानुमितं यथा श्रुतं तथा वाङ्मनश्च"[२] इति, भोजदेवेनापि–"सत्यं वाङ्मनसयोर्यथार्थत्वम्"[३] इति, ईश्वरगीतायामपि–"यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिः"[४] इति वाङ्मनसयोरेकरूपत्वमेव सत्यत्वमिति प्रतिपादितम्।

---

जा सकती। प्राणवियोगानुकूल व्यापार को ही हिंसा कहा गया है— ऐसी हिंसा (की परिभाषा) यज्ञीय हिंसा को पृथक् श्रेणी नहीं दे सकती। ईश्वरगीता भी त्रिविध उपायों से अहिंसा को परिपालनीय प्रतिपादित करती है—

"कर्मणा मनसा ..........................त्वहिंसा परमर्षिभिः॥"

**२. सत्य**— यथार्थसम्भाषण को सत्य कहा गया है। आशय यह है— जैसा प्रत्यक्ष जाना, अनुमान से जाना अथवा आप्तवाक्य (अनाप्तानुक्त) से जाना हो वैसा ही दूसरों के प्रति भी कथन करना सत्य कहलाता है। एवंच निष्कर्ष यह है— दूसरे लोगों को बतायी गई बात यदि अन्य किसी को वञ्चित न करती है अथवा भ्रान्ति न उत्पन्न करती हो तथा निरर्थक स्वरूप को प्राप्त न करती हो तभी वह सत्यवाक् कहलाती है अन्यथा नहीं। अत एव भगवान् व्यास ने कहा है— "सत्यं यथार्थे वाङ्मनसी। यथादृष्टं यथाऽनुमितं यथाश्रुतं तथा वाङ्मनश्च।" इति। भोजदेव ने भी कहा है— "सत्यं वाङ्मनसयोर्यथार्थत्वम्।" ईश्वरगीता में भी प्रोक्त है— "यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिः।" एवंच वाणी एवं मन की एकता ही सत्य कहलाती है।

---

१. ई० गी० ११।१४.
२. यो० सू० भा० २।३०.
३. यो० सू० वृ० २।३०.
४. ई० गी० ११।१६.

शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्।।[५]

इति भगवता मनुना वाचिकैः पारुष्यानृतादिभिर्दोषैर्मृगपक्ष्यादियोनेः प्राप्यमाणत्वस्य सूचितत्वात् सर्वथा परीक्ष्य सर्वभूतहितं सत्यं ब्रूयादिति महर्षेराशयः।

३. अस्तेयम्–"स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्। तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति"[६] इति व्यासदेवेन, "स्तेयं परस्वापहरणम्, तदभावोऽस्तेयम्"[७] इति भोजदेवेन, ईश्वरगीतायां च–

परद्रव्यापहरणं चौर्यादथ बलेन वा।
स्तेयं तस्यानाचरणादस्तेयं धर्मसाधनम्।।[८]

इत्यस्तेयस्वरूपं निरूपितम्। अत्र सर्वत्रास्तेये निरूपयितव्येऽभावस्य

---

भगवान् मनु ने भी वाचिक दोष (पारुष्य एवम् अनृत प्रभृति) से मृगादि पशुयोनि एवं काकादि पक्षियोनि में पतित होने की सूचना दी है। तद्यथा—

"शरीरजैः कर्मदोषैः...........मानसैरन्त्यजातिताम्।।"

एतावता महर्षि का सत्यपद से यह आशय प्रतीत होता है– सर्वथा परीक्षण करने के अनन्तर सर्वभूतहित सत्य का सम्भाषण करना चाहिए।

**३. अस्तेय–** स्तेय के अभाव को अस्तेय कहा जाता है। अतः अस्तेय को तभी ठीक से समझा जा सकता है जब स्तेय सुविदित हो। अतः सभी आचार्यों ने अस्तेय की परिभाषा करने से पूर्व स्तेय को परिभाषित ((प्रतिपादित) की है। तद्यथा भाष्यकार व्यासजी ने कहा है— "स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्। तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयम्।" इति। भोजदेव जी ने कहा है— "स्तेयं परस्वत्वापहरणम्, तदभावोऽस्तेयम्।" ईश्वरगीता में प्रोक्त है—

"परद्रव्यापहरणं ...............................अस्तेयं धर्मसाधनम्।।"

उपर्युक्त समस्त कथन में अस्तेय के निरूपण से पूर्व स्तेय का निरूपण किया

---

१. म० स्मृ० १२।९.
२. यो० सू० भा० २।३०.
३. यो० सू० वृ० २।३०.
४. ई० गी० ११।१७।

प्रतियोगिनिरूपणाधीननिरूपणत्वादादौ स्तेयमेव लक्षितम्।

**४. ब्रह्मचर्यम्**–"ब्रह्मचर्यं गुप्तेन्द्रयस्योपस्थस्य संयमः"[१] इति भाष्यकारः। विज्ञानभिक्षुस्तु–"संयम इत्यत्रान्येन्द्रियसाहित्यमुपस्थस्य ग्राह्यम्"[२] इत्युक्तवान्। तस्मादत्रोपस्थेत्युपलक्षण्। तद्विधया मैथुनविषयकचिन्तनभाषणादेरपि संयम आवश्यकः। तदुक्तमीश्वरगीतायाम्–

**कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा।**
**सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते।।**[३]**इति।**

उक्तं चान्यत्र–

**स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।**
**सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च।।**
**एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।**
**विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्।।इति।**

अत्र मैथुनस्याष्टाङ्गत्वमुक्त्वा तद्विपरीतविधया ब्रह्मचर्यस्याप्यष्टाङ्गत्वमुक्तम्। अतः समाधिकाङ्क्षिभिरष्टविधमैथुनस्य परित्यागः कर्तव्यः।

---

गया है। अभावपदार्थ का निरूपण, प्रतियोगिनिरूपण के बिना सर्वथा असम्भव है।

**४. ब्रह्मचर्य**–भाष्यकार व्यासदेव जी ने संयम की परिभाषा बतायी है– "ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थस्य संयमः।" इसका परिष्कार करते हुए आचार्य विज्ञानभिक्षु ने प्रतिपादित किया है– "संयम इत्यत्र अन्येन्द्रियसाहित्यमुपस्थस्य ग्राह्यम्।" एवंच भाष्यवचन का उपस्थ शब्द उपलक्षण है। एतावता मैथुनविषयक चिन्तन भाषणादि का भी संयम आवश्यक है। अतएव ईश्वरगीता एवम् अन्यत्र भी मैथुन को अष्टाङ्ग तथा तद्विरोधी ब्रह्मचर्य को भी अष्टाङ्ग प्रतिपादित किया है। अतः समाधि के अभिलाषी को अष्टविध मैथुन का परित्याग करना प्रतिपादित है। तद्यथा ईश्वरगीता–

"कर्मणा मनसा वाचा.......ब्रह्मचर्यं प्रचक्षते।।"

अन्यत्र भी प्रोक्त है–

स्मरणं कीर्तनं केलिः......एतदेवाष्टलक्षणम्।।२।। इति।

---

१. यो० सू० भा० २।३०.
२. यो० सू० वा० २।३०.
३. ई० गी० ११।१८.

**५. अपरिग्रहः–** "विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रहः"[१] इति भगवान् व्यासः, "अपरिग्रहो भोगसाधनानामनङ्गीकारः"[२] इति भोजदेवश्चापरिग्रहस्वरूपं प्रतिपादितवन्तौ। अत्रास्तेयपदेनैव द्रव्यादीनामपरिग्रह उक्तो भवति। अथाप्यस्तेयपदेन चौर्येणाग्रहणम्, अपरिग्रहपदेन च दानस्याप्यग्रहणमिति विशेषः।

अत्र यमशब्दस्य 'यम उपरमे' इति यमधातुनिष्पन्नत्वादहिंसादयः पञ्च निवृत्तिलक्षणा उपरमस्वरूपा इति यमशब्दवाच्या भवन्ति।

एत एवाहिंसाद्या जात्याद्यनवच्छेदेन दृढभूमयो महाव्रतशब्दाभिधेया भवन्ति। तदुक्तं पतञ्जलिना–"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्"[३] इति। अत्राऽयमाशयः–अहिंसाद्याः पञ्च यमा जाति-देश-काल-समयावच्छिन्नानवच्छिन्नभेदेन द्विधा भवन्ति। तद्यथा–हिंसारूपव्यसनपरस्य मृगातिरिक्तान्न हनिष्यामीति व्रतं जात्यवच्छिन्नम्। एवमेव क्षेत्रे न हनिष्यामि,

---

**५. अपरिग्रह–** भगवान् व्यास ने अपरिग्रह को परिभाषित किया है— "विषयाणामर्जनरक्षणक्षय-सङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रहः।" भोजदेव जी ने भी कहा है—"अपरिग्रहो भोगसाधनानामनङ्गीकारः।" यद्यपि यहां अस्तेयपद से ही द्रव्यादि का अपरिग्रह-प्रतिपादित हो जाता है। तथापि अस्तेयपद से चोरी द्वारा गृहीत न होना प्रतिपादित है तथा अपरिग्रह पद से दान का भी अग्रहण विवक्षित है।

यम् धातु उपरम अर्थ का वाचक है। इस धातु से निष्पन्न यमशब्द है। अतः उपरम (निवृत्तिलक्षण) स्वरूप अहिंसा, सत्य, अस्तेय, ब्रह्मचर्य एवम् अपरिग्रह इन पाँचों को यम के अन्तर्गत स्वीकारा गया है। ये पाँच यम-जाति, देश, काल एवं समय से अनवच्छिन्न होकर सार्वभौम महाव्रत कहलाते हैं। तद्यथा— जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्।"

इसका आशय है— अहिंसाप्रभृति पञ्चविध यम दो प्रकार के होते हैं— १. (जाति देश काल तथा समय से) अनवच्छिन्न एवम् २. अवच्छिन्न (अहिंसा)। शेष चार यम के भी अहिंसा की तरह दो प्रभेद होते हैं। हिंसारूप व्यसन के व्यसनी यदि व्रत लें— हिरण के अतिरिक्त जीव की हिंसा नहीं करूँगा— ऐसी अहिंसा जात्यवच्छिन्न है। तद्वत् पुण्यक्षेत्र में हिंसा नहीं करूँगा— यह देश से अवच्छिन्न

---

१. यो० सू० भा० २।३०.
२. यो० सू० वृ० २।३०.
३. यो० सू० २।३१.

चतुर्दश्यां न हनिष्यामि, देवब्राह्मणप्रयोजनमन्तरेण न हनिष्यामीत्यादिकं क्रमशो देश–काल–समयावच्छिन्नमिति ज्ञेयम्। यदा तु सर्वजाति–सर्वदेश–सर्वकाल–सर्वप्रयोजनेष्वपि न हनिष्यामीत्यहिंसाव्रतं धारयति, तदेव निरवच्छिन्नापरपर्यायमहिंसामहाव्रतमित्युच्यते। एवमेव गोब्राह्मणादि–प्राणत्राणादन्यत्रामिथ्याभाषणं सावच्छिन्नं सत्यम्[१]। सर्वथाऽमिथ्याभाषणमनवच्छिन्नं सत्यमहाव्रतम्। दुर्भिक्षादन्यत्राचौर्यं[२] सावच्छिन्नमस्तेयम्। दुर्भिक्षेऽप्यचौर्यमनवच्छिन्न–मस्तेयमहाव्रतम्। ऋतुकालमन्तरा न पत्नीगमनं सावच्छिन्नं ब्रह्मचर्यम्[३]। ऋतुकालेऽप्यगमनमनवच्छिन्नं ब्रह्मचर्यमहाव्रतम्। एवमेव गुर्वादिप्रयोजनमन्तरेणा–परिग्रहणं सावच्छिन्नम्। कदाप्यग्रहणमनवच्छिन्नापरिग्रहः[४]।

अत्र योगाभ्यासिनां निरवच्छिन्नसार्वभौममहाव्रतस्य परिपालनमादिष्टं महर्षिणा पतञ्जलिना। तदुक्तं व्यासदेवेन–"एभिर्जातिदेशकालसमयैरनवच्छिन्ना

---

अहिंसा है। तद्वत् काल एवं समय से अवच्छिन्न अहिंसायें भी होती हैं— मैं चतुर्दशी तिथि में हिंसा नहीं करूँगा तथा देव एवं ब्राह्मण से भिन्न प्रयोजन में हिंसा नहीं करूँगा। जब सर्वविध जाति, सर्वदेश, सर्वकाल एवं सर्वविध प्रयोजन में हिंसा नहीं करूँगा—इस प्रकार से कोई व्यक्ति अहिंसा व्रत का धारण करता है उसकी अहिंसा निरवच्छिन्न (महाव्रत) कहलाती है। एवम् गोब्राह्मणादित्राण से अन्यत्र अमिथ्याभाषण करूँगा। यह सविच्छिन्न सत्य है। सर्वथा अमिथ्याभाषण अनवच्छिन्न सत्य (महाव्रत) है। तद्वत् दुर्भिक्ष से अन्यत्र अचौर्यव्रत अनवच्छिन्न अस्तेय (महाव्रत) कहलाता है। ऋतुकाल से अन्यत्र पत्नीगमन- निषेध व्रत सावच्छिन्न ब्रह्मचर्य है। ऋतुकाल में भी अगमन निरवच्छिन्न ब्रह्मचर्य (महाव्रत) है। तद्वत् गुरुदेवादि प्रयोजन के बिना अपरिग्रह का व्रत सावच्छिन्न होता है एवं कदापि परिग्रह न लेना अनवच्छिन्न अपरिग्रह (महाव्रत) है।

महर्षि पतञ्जलि ने योगसाधकों के लिए निरवच्छिन्न सार्वभौम महाव्रत का परिपालन कर्तव्य प्रतिपादित किया है। जिसकी विशदव्याख्या व्यासदेव ने की है— "जाति, देश, काल तथा समय से अनवच्छिन्न अहिंसादि पञ्चविध यम का सर्वथा

---

१. "वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्" (याज्ञ० स्मृ० २।५।८३)।
स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे।
गोब्राह्मणार्थे हिसायां नानृतं स्याज्जुगुप्सितम्।। (भाग० ८।१९।४३).
२. स्तेयं निन्द्यमप्यापदि प्राणरक्षणार्थमिक्षुद्व्यादिरूपं स्तेयं न दोषावहम्।
३. "ऋतौ भार्यामुपेयात्। स ब्रह्मचारी"।
४. यो० सू० वृ० २।३१.

अहिंसादयः सर्वथैव परिपालनीयाः सर्वभूमिषु सर्वविषयेषु सर्वथैवाविदितव्यभिचाराः सार्वभौमा महाव्रतमित्युच्यन्ते''[१] इति। एतादृशव्रतदार्ढ्ये च कामक्रोधलोभानां त्रयाणामपि नरकद्वारभूतानां दोषाणां निवृत्तिर्जायते[२]।

**पञ्चविधा नियमाः**

**१. शौचम्**—महर्षिणा पतञ्जलिना—''शौच-सन्तोष-तपःस्वाध्यायेश्वर-प्रणिधानानि नियमाः''[३] इति पञ्चप्रकारा विधिरूपा नियमा निरूपिताः। शौचं बाह्याभ्यन्तरभेदेन द्विविधम्। तत्र मृज्जलादिभिः कायादिप्रक्षालनं हितमितमेध्याशनादि च बाह्यम्। मैत्रीमुदितादिभिर्मदमानादिचित्तमलक्षालनमाभ्यन्तरम्[४]। तदुक्तमीश्वरगीतायामपि—

**बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तम।**
**मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिरथान्तरम्।।**[५] **इति।**

**२. सन्तोषः**—सन्तोषो नाम विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपा

---

परिपालन करना चाहिए। सर्वभूमि में सर्वविषय में सर्वथा व्यभिचार रहित अहिंसादिव्रत को सार्वभौम महाव्रत कहा गया है।'' एतादृश महाव्रत की दृढ़ता होने पर (नरक के त्रिविध द्वार) काम, क्रोध एवं लोभ-दोषों की निवृत्ति होती है।

**पञ्चविध नियमों का स्वरूप**

**१. शौच**— महर्षि पतञ्जलि ने विधिरूप पञ्चविध नियमों का प्रतिपादन किया है। तद्यथा— ''शौच-सन्तोष-तपः-स्वाध्याय—ईश्वरप्रणिधानानि नियमाः।'' बाह्य एवम् आभ्यन्तर के भेद से शौच के दो भेद होते हैं। मिट्टी-जलादि से शरीरादिप्रक्षालन तथा हित-मित मेध्य अशन-पान से बाह्य शौच कहा जाता है। तद्वत् मैत्री-मुदिता आदि से चित्तमल (मद-मानादि) का प्रक्षालन आभ्यन्तर शौच कहलाता है। ईश्वरगीता में भी उपर्युक्त योगसूत्रोक्ति का समर्थन किया गया है। तद्यथा—

बाह्यमाभ्यन्तरं........मनःशुद्धिरथान्तरम्।।१।।

**२. सन्तोष**— विद्यमान भोगोपकरणों से अधिक के अनुपादान की चित्तवृत्ति

---

१. यो० सू० भा० २।३१।
२. भ० गी० १६।२१.
३. यो० सू० २।३२.
४. यो० सू० भा० २।३२ भोजवृत्तिश्च।
५. ई० गी० ११२८.

चित्तवृत्तिः[१]। तदुक्तमीश्वरगीतायाम्–

यदृच्छालाभतो वित्तमलं पुंसो भवेदिति।
प्राशस्त्यमृषयः प्राहुः सन्तोषं सुखलक्षणम्।।[२]इति।

३. तपः–तपो नाम शरीरशोषणम्, तच्च क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहनेन, काष्ठमौनाकारमौनाभ्याम्, कृच्छ्रचान्द्रायणव्रतादिना च। तत्र "काष्ठमौनम् इङ्गितेनापि स्वाभिप्रायाप्रकाशनम्, अवचनमात्रमाकारमौनम्"[३] इति वाचस्पतिमिश्रैर्द्वयोर्मौनयोर्लक्षणं कृतम्। य आकारमौनी स सति प्रसङ्गे शरीरचेष्टालेखनादिना च स्वाभिप्रायं प्रकटयिष्यति। काष्ठमौनी तु स्वाभिप्रायं कथमपि न प्रकाशयिष्यति। अत्र कृच्छ्रव्रतं दिनत्रयं केवलं प्रातःकाल एव कुक्कुटाण्डपरिमितं षड्विंशतिग्रासग्रहणम्, पुनर्दिनत्रयं च केवलं सायंकाल एव पूर्वोक्तपरिमितं द्वात्रिंशद्ग्रासग्रहणम्, एवमेवानन्तरदिनत्रयेऽयाचितागतस्यान्नस्य

---

सन्तोष कहलाती है। ईश्वरगीता में भी कहा गया है—

यदृच्छालाभतो........सन्तोषं सुखलक्षणम्।।१।।

**३. तप**–शरीरशोषण को तप कहा जाता है। वह शोषण, द्वन्द्व (क्षुधा-पिपासा, शीत-उष्ण प्रभृति) के सहन द्वारा काष्ठमौन एवम् आकारमौनों के अवलम्बन से तथा कृच्छ्र चान्द्रायण-प्रभृति व्रतों से साध्य होता है। द्विविध मौन का लक्षण आचार्य वाचस्पति मिश्र ने किया है— 'काष्ठमौनम् इङ्गितेनापि स्वाभिप्रायाप्रकाशनम्, अवचनमात्रमाकारमौनम्।'' जो आकारमौनी साधक होता है वह अवसरविशेष में चेष्टा अथवा लिखने के द्वारा स्वाभिप्राय का प्रकाशन करता है। काष्ठमौनी साधक स्वाभिप्राय का प्रकाशन अन्योपाय से भी नहीं करते।

कृच्छ्र व्रत में तीन दिनों तक केवल प्रातःकाल में कुक्कुट (मुर्गी) के अण्ड परिमाण के २६ ग्रास (कवल) आहार तथा तदनन्तर तीन दिनों तक केवल सायंकाल में उक्त परिमाण के ३२ ग्रास लिये जाते हैं। तत्पश्चात् तीन दिनों तक अयाचित रूप से प्राप्त अन्न का उक्तपरिमाण में ही २४ ग्रास आहार ग्रहण कर तदनन्तर के तीन दिनों में पूर्ण उपवास किया जाता है। १२ दिनों के इस क्रम को पुनः आवृत्ति करना कृच्छ्रव्रत कहलाता है।

---

१. यो० सू० भा० २।३२ भोजवृत्तिश्च।

२. ई० गी० ११२७.

३. त० वै०, पृ० १०८.

कुक्कुटाण्डपरिमितमेव चतुर्विंशतिग्रासग्रहणम्। अनन्तरदिनत्रये चोपवासः कर्तव्यः। एवमस्यैव क्रमस्य पुनः पुनरावृत्तिः कृच्छ्रव्रतमित्युच्यते[1]।

शुक्लपक्षप्रतिपदमारभ्य ग्रासैकैकवृद्धिक्रमेण पूर्णिमायां पञ्चदशग्रास-भोजनम्, एवमेव कृष्णपक्षप्रतिपदमारभ्यामावस्यापर्यन्तमेकैकग्रासह्रास-क्रमेणामावस्यायामुपवासः कर्तव्यः। एवं चन्द्रमसो वृद्धिह्रासानुसारेणान्नग्रासानामपि वृद्धिह्रासादिदं[2] चान्द्रायणव्रतमित्युच्यते।

**४. स्वाध्यायः**–"स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा"[3] इत्याह भगवान् व्यासः। मीमांसकास्तु–"अहरहः स्वाध्यायमधीयीत" इत्यादिवाक्यैः स्वाध्यायो वेदाध्ययनम्, न केवलमोक्षशास्त्रस्यैवाध्ययन-मित्यभिप्रयन्ति। वस्तुतस्तु–सु+आ+अध्यायः = स्वाध्यायः, उत्तममध्ययनम्, अर्थाद् यस्य यस्य येन येनाधीतेनैहिक-पारलौकिक-सुखसाधनं भवति,

---

शुक्लपक्ष की प्रतिपद् तिथि से एक ग्रास, वृद्धिक्रम से पूर्णिमा तिथि को १५ ग्रास आहार लेना एवम् कृष्णपक्ष प्रतिपद् से एक ग्रास ह्रास को अपना कर अमावस्या में एक ग्रास उपवास) ग्रहण करना चाहिए। इस प्रकार चन्द्रमा के वृद्धि-ह्रास के अनुसार अन्नग्रास के वृद्धि ह्रास से युक्त यह चान्द्रायण व्रत कहलाता है।

**४. स्वाध्याय**–भगवान् व्यास ने कहा है— "मोक्षशास्त्रों का अध्ययन अथवा प्रणवजप स्वाध्याय कहलाता है। मीमांसक लोग "अहरहः स्वाध्यायमधीयीत।" इत्यादि वाक्यों के आधार पर वेदाध्ययन को स्वाध्याय मानते हैं। केवल मोक्षशास्त्र के अध्ययन को ही स्वाध्याय नहीं मानते। प्रस्तुत ग्रन्थ के लेखक महोदय ने इस सन्दर्भ में अपना स्पष्टीकरण वस्तुतस्तु-शीर्षक से प्रतिपादित किया है— सु= सुष्ठु+आ=समन्तात् + अध्याय= अध्ययन को स्वाध्याय कहा जाता है। उत्तम

---

१. त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरेद् द्विजः।।　　(म० स्मृ० ११।२१२)
ग्राससंख्यापरिमाणापेक्षायां प्राह पराशरः–
सायं द्वात्रिंशतिर्ग्रासाः प्रातः षड्विंशतिस्तथा।
अयाचिते चतुर्विंशत् परं चानशनं स्मृतम्।।
कुक्कुटाण्डप्रमाणं च यावांश्च प्रविशेन्मुखम्।
एतं ग्रासं विजानीयाच्छुद्ध्यर्थं ग्रासशोधनम्।।　　(भ० स्मृ० मन्वर्थ० ११।२१२)

२. एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत्।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम्।।　　(म० स्मृ० ११।२२७)

३. यो० सू० भा० २।३२.

तस्याध्ययनमेव स्वाध्यायः। वेदस्य च सर्वविद्यानिधानत्वात् स एव स्वाध्याय-शब्देन गृह्यते। तस्माद् यथा प्रवृत्तिमार्गपरस्य त्रय्यध्ययनं स्वाध्यायस्तथैव निवृत्तिनिरतस्य मोक्षशास्त्राध्ययनमपि स्वाध्याय एवेति निष्कर्षः।

५. **ईश्वरप्रणिधानम्**—तस्मिन् परमगुरौ[1] परमेश्वरे सर्वकर्मणां फलनिरपेक्षतया समर्पणमीश्वरप्रणिधानमित्युच्यते। इति विधिरूपाः पञ्च नियमाः।

**आसनानि**—आस्यतेऽनेन प्रकारेणेति व्युत्पत्तेरुपवेशनस्य प्रकारविशेष आसनं भवति। महर्षिणा पतञ्जलिना—"स्थिरसुखमासनम्"[2] इत्यासन-स्वरूपमुक्तम्। "स्थिरं निश्चलं यत् सुखं सुखावहं तदासनम्"[3] इति वीरासनम् वाचस्पतिमिश्राः सूत्रार्थमूचुः। भगवान् व्यासः—पद्मासनम् वीरासनम्, भद्रासनम्, स्वस्तिकासनम्, दण्डासनम्, सोपाश्रयम्, पर्यङ्कम्, क्रौञ्चनिषीदनम्,

---

अध्ययन ही स्वाध्याय कहलाता है। निष्कर्ष यह है— जिस किसी को जिस किसी अध्ययन से ऐहिक अथवा पारलौकिक सुखसाधन (सिद्धि) होता है उस व्यक्ति का अध्ययन स्वाध्याय कहलाता है। यतश्च वेद सर्वविद्याओं का आकर है अतः वह स्वाध्यायशब्द से गृहीत होता है। एवंच यद्वत् प्रवृत्तिमार्गानुसरण करने वालों का वेदाध्ययन स्वाध्याय कहलाता है तद्वत् निवृत्ति मार्गी का मोक्षशास्त्राध्ययन भी स्वाध्याय कहलाता है— ऐसा निष्कर्ष ग्रन्थकार को अभिप्रेत है।

५. **ईश्वरप्रणिधान**—विधिस्वरूप नियम का पञ्चम (अन्तिम) प्रभेद ईश्वरप्रणिधान है। परमगुरु परमेश्वर में अपने द्वारा अद्यपर्यन्त किये गये सर्वकर्मों का फलनिरपेक्षतया समर्पण करना ईश्वर- प्रणिधान कहलाता है।

**आसनों का स्वरूप**—आसनशब्द का व्युत्पत्तिलभ्य अर्थ है— उपवेशन के जिस प्रकारविशेष से सुख की स्थिरता होती है— आस्यते अनेन-इति आसनम्। आसन के इस स्वरूप को महर्षि पतञ्जलि ने सूत्रित किया है— "स्थिरसुखमासनम्" इस सूत्र के अर्थ को श्रीवाचस्पतिमिश्र मे अपनी तत्त्ववैशारदी में प्रतिपादित किया है— 'स्थिर = निश्चल सुख में प्रतिष्ठित होने का साधन आसन कहलाता है।"

भगवान् व्यास ने योगसाधन में निम्नाङ्कित आसनों को स्थिरसुखावह

---

१. यो० सू० १।२६.
२. यो० सू० २।४६.
३. त० वै०, पृ० ११४.

हस्तिनिषीदनम्, उष्ट्रनिषीदनम्, समयसंस्थानमित्येवमादीन्यासनानि योगसाधने स्थिरसुखानीत्याचचक्षे[1]।

**प्राणायामः**–शास्त्रोक्तरीत्या श्वासप्रश्वासयोः स्वाभाविकगतेः प्रतिरोधः प्राणायामः। प्राणायामे कर्तव्ये ततः प्रागासनसिद्धिरावश्यकी। अत एवोक्तं महर्षिणा–"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः"[2] इति। तस्य च मुख्यतः पूरक–कुम्भक–रेचका इति त्रयो भेदाः।

**प्रत्याहारः**–श्रोत्रादीन्द्रियाणां स्वस्वविषयेभ्यो विमुखीकरणं प्रत्याहारः। प्राणायामेन यदा चित्तं निरुद्धं भवति, तदा सर्वाण्यपि बहिरिन्द्रियाणि स्वस्वविषयेभ्यो निवृत्तानि भवन्ति। अतश्चित्तनिरोधकाले चित्तवन्निरुद्धानीन्द्रियाणि स्वनिरोधाय नोपायान्तरमपेक्षन्ते। तदुक्तं सदृष्टान्तं भाष्यकारेण–"यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति, निविशमानमनुनिविशन्ते, तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः"[3] इति।

---

प्रतिपादित किया है— पद्मासन, वीरासन, भद्रासन, स्वस्तिकासन, दण्डासन, सोपाश्रय, पर्यङ्क, क्रौञ्चनिषीदन, हस्तिनिषीदन, उष्ट्रनिषीदन एवं समसंस्थान।

**प्राणायाम**–शास्त्रोक्त रीति से श्वास एवं प्रश्वास की स्वाभाविक गति का प्रतिरोधविशेष प्राणायाम कहलाता है। प्राणायाम से पूर्व में आसनसिद्धि आवश्यक होती है। अतएव महर्षि पतञ्जलि ने कहा है— "तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः।" अर्थात् आसन सिद्ध होने के अनन्तर प्राणायाम (योगाङ्ग) का अनुष्ठान किया जाता है। श्वास एवं प्रश्वास के गतिविच्छेद को प्राणायाम कहा जाता है। प्राणायाम के मुख्य तीन प्रभेद होते हैं— पूरक, कुम्भक तथा रेचक।

**प्रत्याहार**– श्रोत्रप्रभृति इन्द्रियों का स्व-स्वविषयों से विमुखीकरण प्रत्याहार कहलाता है। जब प्राणायाम से चित्त निरुद्ध होता है तब समस्त बहिरिन्द्रिय स्वस्वविषयों से निवृत्त हो जाते हैं। एवञ्च चित्तनिरोधकाल में चित्तवत् निरुद्ध इन्द्रियाँ स्वनिरोधहेतु उपायान्तरसापेक्ष नहीं होतीं। दृष्टान्त के साथ भाष्यकार व्यासदेव ने सुस्पष्ट कहा है— यद्वत् मक्षिकायें मधुकर राज के मधुछाते से उड़कर बाहर चलने पर उनके पीछे अनुगमन करती हैं एवं छाते में प्रविष्ट होने पर अनुप्रविष्ट हो जाती

---

१. यो० सू० भा० २।४६.

२. यो० सू० २।४९.

३. यो० सू० भा० २।५४.

**धारणा**–"देशबन्धश्चित्तस्य धारणा"[१] इति धारणास्वरूपं प्राह महर्षिः। नाभिचक्र–हृत्पुण्डरीक–नासिकाग्रादिषु देशेषु बाह्येषु वा चन्द्रसूर्याग्न्यादिषु चित्तस्य वृत्ति मात्रेण, अर्थात् ज्ञानमात्रेण बन्धो धारणा। उक्तं चेश्वरगीतायामपि–

**हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वसु मस्तके।**
**एवमादिप्रदेशेषु धारणा चित्तबन्धनम्।।**[२]**इति।**

**ध्यानम्**–"तत्र प्रत्ययैकतानता ध्यानम्"[३] इति महर्षिणोक्तम्। अस्यायमर्थः–धारणाया यो देशस्तत्रैव ध्येयालम्बनस्य या एकतानता। सदृशः प्रवाहः, अन्यप्रत्ययैरपरामृष्टः, तद् ध्यानमिति"[४]। उक्तं चेश्वरगीतायाम्–

**देशावस्थितिमालम्ब्य बुद्धेर्या वृत्तिसन्ततिः।**
**वृत्त्यन्तरैरसंस्पृष्टा तद्ध्यानं सूरयो विदुः**[५]**।।इति।**

**समाधिः**–अत्र योगाङ्गरूपसमाधेर्लक्षणम्–"तदेवार्थमात्रनिर्भासं

---

हैं तद्वत् चित्तनिरोध होने पर इन्द्रियाँ स्वरसत: निरुद्ध हो जाती हैं– योगदर्शन में इसे प्रत्याहार कहा जाता है।

**धारणा**– महर्षि पतञ्जलि ने धारणा के स्वरूपप्रतिपादन हेतु सूत्र बनाया है— देश- बन्धश्चित्तस्य धारणा।" इसका अर्थ है— शरीर के स्थानविशेष (नाभिचक्र, हत्पुण्डरीक एवं नासिकाग्र) में अथवा स्ववाह्य चन्द्र, सूर्य एवम् अग्नि प्रभृति में चित्त की वृत्ति (ज्ञान) मात्र से सम्पादित बन्ध धारणा कहलाता है। अतएव ईश्वरगीता में भी कहा गया है— "हृत्पुण्डरीकेनाभ्यांवा..............धारणा चित्तबन्धनम्।।१।।

**ध्यान**– ध्यान का लक्षण बताने हेतु महर्षि का सूत्र प्रवृत्त हुआ है— "तत्र प्रत्ययैकता ध्यानम्।" इसका अर्थ सुस्पष्ट है— धारणा का जो स्थान है उसमें ध्येयालम्बन की निरन्तरता (एकाग्रता) अर्थात् सदृशप्रवाह जब अन्य प्रत्ययों द्वारा परामृष्ट नहीं होता तब वह ध्यान कहलाता है। ईश्वरगीता में भी इसे सुविशद रूप से निरूपित किया गया है—

"देशावस्थितिमालम्ब्य..........तद्-ध्यानं सूरयो विदुः।।१।।

**समाधि**– योगाङ्गरूप से स्वीकृत समाधि का स्वरूप सूत्रित किया गया है—

---

१. यो० सू० ३।१.
२. ई० गी० ११३९.
३. यो० सू० ३।२.
४. यो० सू० भा० ३।२.
५. ई० गी० ११।४०.

स्वरूपशून्यमिव समाधिः"[१] इत्युक्तम्। ध्यानकाले ध्यातृ-ध्यान-ध्येयानां त्रिपुटीनां भासनं भवति। तस्यैवाभ्यासाधिक्ये तदेव ध्यानं यदा ध्येयमात्राकारमिव प्रतिभासते, तदा समाधिरित्युच्यते। यथा जले निमग्नं लवणखण्डं जले जलस्वरूपेण विद्यमानमपि खण्डाकारेण न प्रत्यवभासते, तथा समाध्यवस्थायां विद्यमानमपि ध्यानं ध्येयरूपं सञ्जातमिति ध्येयरूपेणैव भासते, न तु ध्यानरूपेण। अत एव महर्षिणा "स्वरूपशून्यमिव" इत्यत्र इवपदेनायमेवाशयः प्रदर्शितः। तस्मात् समाधिर्नाम ध्यानस्यैव परिपक्वावस्था। तत्र तावत् स्कन्दपुराणे–

धारणा पञ्चनाडीका ध्यानं स्यात् षष्टिनाडिकम्।
दिनद्वादशकेनैव समाधिरभिधीयते।।

इति धारणा-ध्यान-समाधीनां स्वरूपं निर्णीतम्। अस्यायमर्थः–अत्र नाडिका नाम घटिका। अतः पञ्चनाडिका नाम होराद्वयम्। तस्माद् होराद्वयपर्यन्तं चित्तवृत्तेरेकाग्रता धारणेति, चतुर्विंशतिहोरापर्यन्तं चित्तवृत्तेरेकाग्रता ध्यानमिति।

---

"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।" ध्यान के समय ध्याता, ध्यान एवम् ध्येय— इन त्रिपुटी का भासन होता है। उस ध्यानाभ्यास के आधिक्य से वह ध्यान जब ध्येयमात्राकार-सा प्रतिभासित होता है तब वह समाधि कहलाता है। जैसे जल में विलीन लवणखण्ड जल में जलस्वरूप से विद्यमान रहकर भी खण्डाकारतया प्रतिभासित नहीं होता वैसे ही समाधि अवस्था में विद्यमान रहकर भी ध्यान, ध्येयरूप में परिवर्तित हो जाने से ध्येयाकारतया प्रतिभासित होता है— ध्यानरूप से नहीं। महर्षि पतञ्जलि ने "स्वरूपशून्यम्-इव" सूत्रस्थ इव शब्द का उल्लेख कर यही आशय प्रदर्शित किया है। एतावता यह निष्कर्ष प्राप्त होता है— ध्यान की ही परिपक्व अवस्था समाधि कहलाती है। धारणा, ध्यान एवं समाधि का स्वरूप स्कन्दपुराण में इस प्रकार प्रतिपादित है—

धारणा पञ्चनाडीका.......समाधिरभिधीयते।।१।।

इसका यह अर्थ है— श्लोक में प्रयुक्त नाडिका शब्द का अर्थ घटिका है। पाँच घटिकाओं की दो होरा (घंटे) होती हैं। एवञ्च दो घंटे तक चित्तवृत्ति की एकाग्रता- **धारणा** कहलाती है। २४ घंटे तक स्थिर रहने वाली चित्तवृत्ति की एकाग्रता **ध्यान** कहलाती है। जब १२ दिनों तक सर्वथा विजातीय प्रत्ययों से वर्जित-सजातीय प्रत्यय प्रवाह—प्रवाहित होता है तब वह **समाधि** कहलाता है— यह विवेचना ध्यातव्य है।

---

१. यो० सू० ३।३।

यदा च द्वादशदिनपर्यन्तं सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः प्रवहति, तदा समाधिरिति ज्ञेयमिति। एवं चेमान्यष्टाङ्गानि स्थूलसूक्ष्मशरीरगतदोषनिवारणद्वारा चित्तस्थैर्यं सम्पाद्य पुरुषस्य स्वरूपप्रतिष्ठारूपकैवल्यप्राप्तौ साधनानि भवन्ति।

## अभ्यास-वैराग्ययो; कैवल्यसाधनत्वम्

भगवान् पतञ्जलिरुत्तमाधिकारिणां कृते–"अभ्यासवैराग्याभ्यां तन्निरोधः"[1] इति चित्तवृत्तिनिरोधद्वारा समाधिलाभार्थमभ्यासवैराग्यावुपदिष्टवान्। तत्राभ्यासो नाम चित्तस्य स्थितौ यत्नः[2]। स्थितिश्च योगचरमाङ्गसमाधिर्निश्चलैकाग्रताधाररूपः, तदर्थो यो यत्नो ध्येयाद् बहिर्गच्छतश्चित्तस्य पुनः पुनरानयनरूपं धारणाध्यानादिकम्[3]।

वैराग्यं च परापरभेदेन द्विविधम्। तत्रैहिकामुष्मिकविषयादौ दोषदर्शनान्निरभिलाषस्य पुरुषस्य ममैते विषया वश्याः, नाहमेतेषां वश्य इति वशीकाराख्यो विमर्शोऽपरवैराग्यम्। तदुक्तम्–"दृष्टानुश्रविकविषयवितृष्णस्य

---

ये आठ अङ्ग (योग के) अनुष्ठित होकर स्थूल एवं सूक्ष्म शरीरों के दोषों का निवारण कर चित्तस्थैर्य का सम्पादन कर पुरुष की कैवल्यप्राप्ति (स्वरूपप्रतिष्ठा) में साधन बनते हैं।

## कैवल्य के साधन-अभ्यास एवं वैराग्य

भगवान् पतञ्जलि ने उत्तमाधिकारियों के लिए समाधिलाभ हेतु अभ्यास एवं वैराग्य को चित्तवृत्तिनिरोध द्वारा साधनरूप में उपदिष्ट किया है। अभ्यास द्वारा चित्त की प्रतिष्ठा स्वस्वरूप में होती है। यह प्रतिष्ठा या स्थिति योग के चरम अङ्ग समाधि से अव्यतिरिक्त है। यह निश्चल एकाग्रता की आधारभूमि है। इस स्थिति की प्राप्ति हेतु जो यत्न (ध्येय से बाहर भागते चित्त का पुनः पुनः आनयन) है। इसे धारणा एवं ध्यान प्रभृति शब्दों का पर्याय माना जाता है।

वैराग्य के दो प्रभेद हैं— परवैराग्य एवम् अपरवैराग्य। वशीकारसंज्ञक विमर्श **अपरवैराग्य** कहलाता है। इसमें साधक को ऐहिक एवम् आमुष्मिक

---

१. यो० सू० १।१२.
२. "तत्र स्थितौ यत्नोऽभ्यासः" (यो० सू० १।१३)
३. यो० सा० सं०, पृ० ४१.

वशीकारसंज्ञावैराग्यम्''[१] इति। यदा च विवेकख्यात्युदये सत्त्वादिसकलगुणेषु वैतृष्ण्यं तत् परवैराग्यम्। तदुक्तम्–''तत् परं पुरुषख्यातेर्गुणवैतृष्ण्यम्''[२] इति।

अत्रायं भावः–तत्र तावच्चित्तनदी नाम पुण्यपापोभयवाहिनी[३]। तत्रापि स्वभावतो विषयाभिमुखमेव प्रवहति। यो ह्यैहिक-पारलौकिकविषयेषु प्रत्यहं दोषमनुपश्यन् ततो चित्तवृत्तिं व्यावर्त्यान्तर्मुखीभूय यदा धारणाध्यानादिकमभ्यस्यति, तदा स बुद्धेरात्मानं भिन्नत्वेन जानन् विवेकख्यातिमान् भवति। एवं च विवेकख्यात्युदये कृतकृत्यतया सत्त्वादिगुणेभ्योऽपि विरक्तो भवति। तदेव परवैराग्यमिति। इदं च परवैराग्यं विवेकख्यातेरेव पराकाष्ठा। एतादृशपरवैराग्येण पुरुषस्य स्वरूपप्रतिष्ठा बुद्धेश्च प्रयोजनशून्यतया स्वकारणप्रकृत्यां विलय

---

विषयों में दोषदृष्टि होने से निरभिलाष पुरुष को यह निश्चय बोध होता है— ये मेरे अधीन रहने वाले विषय हैं मैं इन विषयों के अधीन नहीं हूँ। तद्यथा— दृष्टानुश्रविकविषयवितृष्णस्य वशीकार- संज्ञा वैराग्यम्।''

जब विवेकख्याति का उदय हो जाता है तब सत्त्वादिसकल गुणों में वितृष्णा उदित होती है–यह **परवैराग्य** कहलाती है। तद्यथा—

''तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्।''

भावार्थ यह है— चित्तनदी में दो प्रकार के जल-पुण्य एवं पाप प्रवाहित होते हैं। स्वभावतः यह विषयोन्मुख होकर प्रवाहित होती है। जो साधक–ऐहिक एवं पारलौकिक विषयों में प्रतिदिन दोषदर्शन करने के कारण विषयों से चित्तवृत्ति को व्यावृत्त कर अन्तर्मुख होकर धारणा और ध्यानादि का अभ्यास करता है वह स्वयं को बुद्धि से भिन्न जानकर विशेषख्याति-सम्पन्न होता है। इस प्रकार विवेकख्याति के उदित होने पर साधक को (कृतार्थ होने से) सत्त्वादि गुणों से भी विरक्ति होती है। यही परवैराग्य कहलाता है। यह परवैराग्य विवेकख्याति की पराकाष्ठा है। ईदृश परवैराग्य से पुरुष की स्वरूपप्रतिष्ठा होती है, बुद्धि का कोई भी प्रयोजन शेष नहीं रह जाता अतएव उसका लय, स्वकारणीभूत प्रकृति में हो जाता है। एवञ्च अभ्यास और वैराग्यों में कैवल्य के प्रति कारणता (साधनभाव) सिद्ध होती है। अतएव भगवान् व्यास ने सुस्पष्ट कहा है— ''यह वैराग्य दो प्रकार का होता है। इनमें जो पर वैराग्य है वह ज्ञानप्रसाद मात्र है। जिसके उदित होने

---

१. यो० सू० १।१५.

२. यो० सू० १।१६.

३. यो० सू० भा० १।१२.

इत्यभ्यासवैराग्याभ्यामपि कैवल्यसिद्धिः। तदुक्तं भगवता व्यासेन–"तद् द्वयं वैराग्यम्। तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम्। यस्योदये प्रत्युदितख्यातिरेवं मन्यते–प्राप्तं प्रापणीयम्, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसंक्रमः, यस्याविच्छेदाज्जनित्वा म्रियते मृत्वा च जायत इति ज्ञानस्यैव पराकाष्ठा वैराग्यम्। एतस्यैव हि नान्तरीयकं कैवल्यमिति"[1] इति।

## योगदर्शने ईश्वरप्रणिधानस्यानिवार्यता

भगवता पतञ्जलिना चित्तवृत्तिनिरोधार्थं प्रथममुपदिष्टयोरभ्यास-वैराग्ययोर्विकल्पेन, पुनः क्रियायोगे, एवमष्टाङ्गयोगान्तर्गते नियमपञ्चके चेश्वरप्रणिधानस्य निरूपितत्वाद् योगदर्शने उत्तम-मध्यम-मन्दाख्यानां त्रयाणामपि योगाधिकारिणां समाधिप्राप्त्यर्थमीश्वरप्रणिधानमत्यन्तमावश्यकमिति निश्चेतुं शक्यते। अत एव–"समाधिसिद्धिरीश्वरप्रणिधानात्"[2] इति सूत्रेण महर्षिः पतञ्जलिः स्पष्टं प्रोवाच।

---

पर ही विवेकख्याति का उदय स्वरसतः होता है। तदनन्तर साधक को प्रतिभास होता है कि हमने प्राप्तव्य वस्तु की प्राप्ति कर ली है, क्लेश अपक्षीण हो चुके हैं, श्लिष्टपर्वा भवसंक्रम छिन्न हो चुका है। जिसके अविच्छेद से ही जन्म के पश्चात् मृत्यु तथा मृत्यु के पश्चात् जन्म का चक्र चलता रहता है। एवञ्च ज्ञान की पराकाष्ठा ही वैराग्य है। तथा वैराग्य का नान्तरीयक (आवश्यक फल) कैवल्य है।

## योगदर्शन में ईश्वरप्रणिधान की अनिवार्यता

भगवान् पतञ्जलि ने चित्तवृत्तिनिरोध हेतु दो उपायों (अभ्यास एवं वैराग्य) को प्रतिपादित किया है। उन्होंने इनके विकल्प में ईश्वरप्रणिधान को प्रतिपादित किया है। पुनश्च क्रियायोग में तथा अष्टाङ्गयोग के अन्तर्गत नियमप्रभेदों के मध्य भी ईश्वर प्रणिधान को प्रतिपादित किया है। इस प्रकार यह निष्कर्ष प्राप्त होता है कि योगदर्शन में उत्तम, मध्यम एवम् मन्द त्रिविध योगाधिकारियों को समाधि-प्राप्ति हेतु ईश्वरप्रणिधान अत्यन्त उपयोगी है। अतएव महर्षि ने सूत्रवाक्य में सुस्पष्ट कहा है—

"समाधिसिद्धिरीश्वरप्रणिधानात्।"

---

१. यो० सू० भा० १।१६

२. यो० सू० २।४५.

भगवान् व्यासोऽपि–"प्रणिधानाद् भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेणैव। तदभिध्यानमात्रादपि योगिन आसन्नतरः समाधिलाभः समाधिफलं च भवतीति"[१] इत्यादिनेदमस्याभिमतमस्त्वित्येतन्मात्रेणेश्वरसंकल्पेनैव समाधेस्तत्फलस्य कैवल्यस्य च प्राप्तिरित्यभिहितवान्।

तदेवं कैवल्यप्राप्त्यर्थमीश्वरानुग्रहोऽनिवार्यतयाऽपेक्ष्यत इत्येतन्मात्रेणैव सांख्याद्विलक्षणं सदिदं योगदर्शनं सेश्वरसांख्यमित्यभिधानभागभूत्।

एवमभ्यासवैराग्याभ्याम्, क्रियायोगेन, अष्टाङ्गयोगेन वा चित्तवृत्तीनां निरोधे सति प्रथमं सम्प्रज्ञातसमाधिर्भवति। तेन च क्लेशबन्धनानि शिथिलीभवन्ति। तदुक्तं भाष्यकारेण–"यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखीकरोति, स सम्प्रज्ञातो योग इत्याख्यायते"[२] इति। अस्यामेवावस्थायां बुद्धिपुरुषयोर्विवेकख्यातिरुत्पद्यते। यदा योगी विवेकख्यातिमधिगम्य तत्राप्यकुसीदः, अर्थाद् विवेकख्यातेर्गौणफलमणिमाद्यैश्वर्यं न प्रार्थयते, तदा

---

भगवान् व्यास ने भी निम्नाङ्कित वाक्यकदम्ब से यह प्रतिपादित किया है। इस साधक को अभिमत प्राप्त हो जाय— ऐसे ईश्वरसंकल्प से ही समाधि एवं उसके फल कैवल्य की प्राप्ति होती है। तद्यथा—

"भक्तिविशेष (प्रणिधान) से आवर्जित ईश्वर, साधक को अभिध्यानमात्र से अनुगृहीत करते हैं। ईश्वर के अभिध्यानमात्र से योगिजन को यथाशीघ्र समाधिलाभ एवं समाधिफल का लाभ होता है।"

योगदर्शन सांख्यदर्शन की अपेक्षया विलक्षण प्रस्थान है। योगदर्शन में कैवल्य की प्राप्ति हेतु ईश्वरानुग्रह अनिवार्यरूप से अपेक्षित है। इसी कारण योगदर्शन का दूसरा नाम **सेश्वरसांख्य** प्रसिद्ध हुआ।

एवंच अभ्यास-वैराग्यों द्वारा क्रियायोग से अथवा अष्टाङ्गयोग से चित्तवृत्तियों के निरोध होने पर प्रथमतः सम्प्रज्ञातसमाधि प्राप्त होती है। तत्फलतया क्लेशबन्धनों का शैथिल्य हो जाता है। अतएव भाष्यकार ने सुस्पष्ट कहा है— 'जो (योग) एकाग्र चित्त में सद्भूत अर्थ को प्रकाशित करता है, क्लेशों को प्रक्षीण करता है,

---

१. यो० सू० भा० १।२३.
२. यो० सू० भा० १।१.

निरन्तरं विवेकख्यातेरेवोदयात् तस्य योगिनो धर्ममेघो नाम समाधिर्भवति। अयमेवाऽसम्प्रज्ञातसमाधिरित्युच्यते।

धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः।
वर्षत्येष यतो धर्मामृतधाराः सहस्रशः[1]।।

इति विद्यारण्योक्त्यनुसारेण "धर्मं विवेकख्यातिम्, मेहति वर्षतीति धर्ममेघः" इति व्युत्पत्तिसिद्धाखण्डविवेकख्यात्या क्लेशकर्मादीनां समूलमुन्मूलने सति स जीवन्मुक्त इत्युच्यते। तदुक्तम्–"प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः"[2], "ततः क्लेशकर्मनिवृत्तिः"[3] इति। भगवता व्यासेनाप्युक्तम्–"तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति।

---

कर्मबन्धनों को शिथिल करता है तथा निरोध को अभिमुख करता है वह **सम्प्रज्ञात योग** कहलाता है।"

इसी अवस्था में बुद्धि एवम् पुरुष के मध्य विवेकख्याति उत्पन्न होती है। जब योगी विवेकख्याति के गौणफल (अणिमाप्रभृति ऐश्वर्य) की प्रार्थना नहीं करता तब निरन्तर विवेकख्याति की उपस्थिति बनी रहती है। फलस्वरूप उस योगी को धर्ममेघ संज्ञक समाधि प्राप्त होती है। इसका दूसरा नाम असम्प्रज्ञात समाधि है। श्रीविधारण्यमुनि की निम्नाङ्कित उक्ति से धर्म= विवेकख्याति को बरसनेवाला मेघ धर्ममेघ कहलाता है। उपर्युक्त व्युत्पत्ति के आधार पर अखण्ड विवेकख्याति के उदित होने से क्लेश-कर्मादि के समूल उन्मूलन होने पर साधक जीवन्मुक्ति प्राप्त कर लेता है—

धर्ममेघमिमं प्राहुः.......सहस्रशः।।१।।

यह सूत्रों द्वारा भी समर्थित एवं संवादित है। तद्यथा—"प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः।" एवम् "ततः क्लेशकर्मनिवृत्तिः।"

भगवान् व्यास ने भी इसका विशदीकरण किया है। तद्यथा समाधिलाभ से अविद्याप्रभृति क्लेशों का निर्मूलन हो जाता है। कुशल एवम् अकुशल समस्त कर्माशियों का समूल निर्मूलन हो जाता है। एवंच क्लेश-कर्मों की निवृत्ति हो जाने

---

१. प० द० १।६०.
२. यो० सू० ४।२९.
३. यो० सू० ४।३०.

कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति। क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति"[१] इति।

### कैवल्यस्वरूपम्

केवलस्य भावः कैवल्यम्, एकाकितेत्यर्थः। सा चान्योऽन्यवियोगरूपतया गुण-पुरुषयोरुभयोरपि भवतीति महर्षिणा पतञ्जलिना मुक्तिद्वयी प्रतिपादिता। तथाहि–"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः"[२] इति। अस्यायमर्थः–तत्र विवेकख्यात्या परवैराग्येण कृतकृत्यतया पुरुषार्थशून्यानां गुणानां महत्तत्त्वप्रभृतिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीराद्यात्मकानां पुरुषोपकरणानां यः प्रतिप्रसवः स्वकारणेऽत्यन्तं प्रलयः, न तु नाशः, "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यपुरुषसाधारणत्वात्"[३] इति सूत्रात्; एतदाद्यं पुरुषाद् वियोगरूपं प्रकृतेः कैवल्यम्। एवं बुद्धिविलये बुद्धिसत्त्वौपाधिकरूपशून्यतारूपं जपाकुसुमयोगापाये स्फटिकस्य स्वस्वरूपप्रतिष्ठावद् यत् सर्वदाऽवस्थानं तत्पुरुषस्य कैवल्यमिति।

---

से जीवनदशा में ही विद्वान् साधक विमुक्त हो जाता है।

### कैवल्यस्वरूप

केवल का भाव कैवल्य कहलाता है। कैवल्य एवम् एकाकिता पर्यायशब्द है। अन्योन्यवियोगरूपता के कारण यह कैवल्य=एकाकिता गुण में तद्वत् पुरुष में भी होती है। अतः महर्षि पतञ्जलि ने द्विविध मुक्ति का प्रतिपादन किया है। तद्यथा— "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः।" इसका अर्थ है– विवेकख्यातिरूप परवैराग्य की प्राप्ति से कृतकृत्यता समुदित होती है एवंच पुरुषार्थशून्य गुणों (महत् तत्त्व से लेकर सूक्ष्मभूतपर्यन्त लिङ्गशरीरादिरूप पुरुषोपकरणों) का प्रतिप्रसव अर्थात् स्वकारण में आत्यन्तिक प्रलय होता है। 'कृतार्थं प्रति नष्टमप्यनष्टं तदन्यपुरुषसाधारणत्वात्' इस सूत्र के आधार पर गुणों का नाश अमान्य है। पुरुष से प्रकृति का यह वियोग **आद्यकैवल्य** है। अथ बुद्धि का विलय होने पर बुद्धिसत्त्व-उपाधि के अभाव में पुरुष की स्वस्वरूपप्रतिष्ठा द्वितीय कैवल्य कहलाती है। यहाँ दृष्टान्तरूप से बताया

---

१. यो० सू० भा० ४।३०.

२. यो० सू० ४।३४.

३. यो० सू० २।२२.

ननु मूर्तद्रव्ययोर्जपाकुसुमस्फटिकयोः संयोगवियोगौ संभवेताम्, कथममूर्तयोः प्रधानपुरुषयोः संयोगवियोगव्यवहारः? इति चेत्, सत्यम्। अथापि श्रूयतां रहस्यम्। नहि मूलप्रकृतिपुरुषयोः संयोगवियोगौ बन्धमोक्षव्यवहारभाजौ भवतः, सदातनस्य तयोः संयोगस्य प्रपञ्चमात्रं प्रति कारणत्वात्। प्रकृते च बुद्धिरूपेण परिणतस्य प्रकृतेर्भोग्यत्वेनोपस्थानं संयोगः। तदुक्तम्– "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः"[१] इति। श्रीभोजदेवोऽस्यार्थमेवं न्यरूपयत्–"स्वशक्तिर्दृश्यस्य स्वभावः, स्वामिशक्तिर्द्रष्टुः स्वरूपम्,तयोर्द्वयोरपि संवेद्यसंवेदकत्वेन व्यवस्थितयोर्या स्वरूपोपलब्धिस्तस्याः कारणं यः स संयोगः। स च सहजभोग्यभोक्तृभावस्वरूपान्नान्यः। नहि तयोर्नित्ययोर्व्यापकयोः स्वरूपादतिरिक्तः कश्चित् संयोगः, यदेव भोग्यस्य भोग्यत्वं भोक्तुश्च भोक्तृत्वमनादिसिद्धं स एव संयोगः"[२] इति। विवेकख्यात्या च बुद्धिः स्वकारणे

---

गया है कि जपाकुसुम-सम्बन्ध का अभाव हो जाने पर स्फटिक में स्वच्छता-धवलता ही दृष्टिगोचर होती है, रक्तिमा नहीं।

अब जिज्ञासा उदित होती है— जपाकुसुम तथा स्फटिक–ये दोनों मूर्तद्रव्य हैं। इनका आपस में संयोग एवं वियोग होना सूपपाद है। इसके विपरीत प्रधान तथा पुरुष अमूर्त हैं इनमें संयोग अथवा वियोग का व्यवहार कैसे सम्भव होगा? इसका समाधान अर्द्धसत्य के रूप में स्वीकार करने से आरम्भ होता है। पुनश्च रहस्यार्थ का प्रतिपादन किया गया है। मूलप्रकृति तथा पुरुष के संयोग को बन्ध कहना तथा उनके वियोग को मोक्ष प्रतिपादित करना समुचित नहीं है। वस्तुस्थिति यह है–इन दोनों का संयोग सदातन है तथा प्रपञ्चमात्र के प्रति कारण है। प्रकृति का भोग्यत्वेन उपस्थान संयोग कहलाता है। अतएव सूत्रकारने सुस्पष्ट कहा है— "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः।" श्रीभोजदेव ने इसका अर्थ इस तरह प्रतिपादित किया है— स्वशक्ति, दृश्य का स्वभाव है तथा स्वामिशक्ति, द्रष्टा का स्वरूप है। ये दोनों संवेद्य-संवेदक भाव रूप से व्यवस्थित हैं। इनकी जो स्वरूपोपलब्धि है उसका जो कारण है वह संयोग कहलाता है। यह संयोग सहजभोग्यभोक्तृभावस्वरूप है उससे भिन्न नहीं। नित्य एवं व्यापक स्वरूप प्रकृति

---

१. यो० सू० २।२३.
२. यो० सू० वृ० २।२३.

लयं गच्छतीति भोग्यस्याभावाद् भोक्तृभोग्यभावनिवृत्तिरिति प्रकृतिपुरुषयोर्वियोग इत्युच्यते।

एवं बुद्धिपुरुषयोः परस्परवियोगे नूनमुपाध्युपाधिमतोरुभयोरेव केवलता = एकाकिता भवति। ते उभे अपि केवलते प्रधानपुरुषगते अनागतदुःख-निवृत्त्याख्यपुरुषार्थसाधने भवतः अतो द्वे अपि कैवल्ये मोक्षरूपे स्तः। तयोश्चाद्यं कैवल्यं मुख्यतया प्रकृतेरेवास्ति, पुरुषस्य तूपचरितम्। एतदभिप्राये-णैवोक्तमीश्वरकृष्णेन—

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः[१]।।इति।**

स्वरूपप्रतिष्ठारूपं द्वितीयं कैवल्यं तु पुरुषस्य न निराकृतम्। तथा सति मोक्षस्य प्रकृतिमात्रनिष्ठत्वेऽपुरुषार्थत्वेन तत्र पुरुषप्रवृत्त्यनुपपत्तेः। पुरुषार्थमेव करणानां प्रवृत्तिरित्यतः स्वरूपप्रतिष्ठारूपं सूत्रोक्तं द्वितीयं कैवल्यं पुरुषस्य

---

तथा पुरुष के स्वरूप से व्यतिरिक्त **संयोग** नहीं होता। जो भोग्य का भोग्यत्व है तथा भोक्ता का भोक्तृत्व (अनादिसिद्ध) है वही संयोग है।"

विवेकख्याति से बुद्धि, स्वकारण में लीन हो जाती है अतः भोग्य के अभाव होने से भोक्तृ-भोग्यभाव की निवृत्ति हो जाना ही प्रकृति एवं पुरुष का वियोग कहलाता है।

एवञ्च बुद्धि एवम् पुरुष के परस्पर वियोग होने पर न केवल उपाधि की केवलता (एकाकिता) होती है प्रत्युत उपाधिमान की भी केवलता स्वतः हो उठती है। ये दोनों प्रकार की केवलता जो प्रधान में अथवा पुरुष में स्थित रहती है वह परमपुरुषार्थ (अनागत दुःखनिवृत्ति) के प्रति कारण बनती है। अतः यह द्विविध केवलता मोक्षस्वरूप ही है। इनमें आद्यकैवल्य मुख्य रूप से प्रकृति का ही होता है जिसका लाक्षणिक प्रयोग, पुरुष के लिए किया जाता है। इसी अभिप्रेतार्थ को आचार्य ईश्वरकृष्ण ने कहा है— "तस्मान्न बध्यतेऽद्धा.......नानाश्रया प्रकृतिः।।१।।"

स्वरूप प्रतिष्ठारूप द्वितीय कैवल्य भी पुरुष का निराकृत नहीं है। यदि मोक्ष को प्रकृतिमात्रनिष्ठ माने तो पुरुषार्थ नहीं कहलायेगा और एतदर्थ पुरुष प्रवृत्ति की उपपत्ति नहीं होगी। पुरुषार्थ के उद्देश्य से ही करणों की प्रवृत्ति होती है अतः

---

१. सां० का० ६२.

मुख्यमेव[१]। तस्मादविवेकेन पुरुषप्रकृत्योर्भोक्तृभोग्यभावापत्तिः संयोग इति, विवेकख्यात्या च तादृशभोक्तृभोग्यभावनिवृत्त्या प्रकृतिपुरुषयोर्वियोग इति रहस्यम्। अत एवोक्तम्–"तदभावे संयोगाभावो हानं तद् दृशेः कैवल्यम्"[२] इति।

इयमेव कैवल्यावस्था सत्त्वपुरुषयोः शुद्धिः साम्यावस्थेत्यप्युच्यते। अस्याऽयं भावः–निर्धूतरजस्तमोमलं बुद्धिसत्त्वं यदा पुरुषप्रतियोगिकभेद-ज्ञानरूपविवेकख्यात्या दग्धक्लेशबीजं सत् स्वकारणे विलीयते, तदा शुद्धमित्युच्यते। एवमेवोपचरितभोगाभावः पुरुषस्य शुद्धिः, अर्थादविवेकदशा-यामुपचारेण प्रतीयमानानां बुद्धिगतभोगानां विवेकख्यात्याऽनवभासनं पुरुषस्य शुद्धिः। एवमुभयोः शुद्धिसाम्ये च पुरुषस्य कैवल्यं सिद्ध्यतीति[३]। तदुक्तम्–"सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्"[४] इति।

---

स्वरूपप्रतिष्ठारूप सूत्रोक्त द्वितीयकैवल्य पुरुष का मुख्य ही है। अतः निष्कर्ष कथन यह है— अविवेक से तादृशभोक्तृ-भोग्यभाव की आपत्ति संयोग कहलाती है एवं विवेकख्याति द्वारा एतादृश भोक्तृभोग्यभाव की निवृत्ति होने से प्रकृति एवं पुरुष का वियोग होता है। अतएव सूत्रकार का यह कथन सर्वथा उपयुक्त है– "तदभावे संयोगाभावो हानं तद्दृशेः कैवल्यम्।"

यह कैवल्यावस्था हि सत्त्व एवं पुरुष की शुद्धि एवम् साम्यवस्था कहलाती है।

आशय यह है—

जिस बुद्धिसत्त्व ने रजोगुण एवं तमोगुण के मलों का अपाकरण कर लिया है वह विवेक ख्याति (पुरुषप्रतियोगिकभेदज्ञान) से क्लेश रहित (दग्धबीज) रूप होकर स्वकारण में प्रलीन होकर **शुद्ध** कहलाती है। तद्वत् उपचार से बद्धावस्था में प्रतीयमान भोगों का विवेकख्याति के उदय होने पर अनवभासरूप अभाव होने से पुरुष भी **शुद्ध** कहलाता है। एवञ्च शुद्धिसाम्य-बुद्धिसत्त्व एवं पुरुष (उभय) में हो जाने से पुरुष का कैवल्य सिद्ध होता है। तद्यथा— "सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्।" यहाँ यह जिज्ञासा स्वरसतः उदित होती है— "हेयं दुःखमनागतम्" सूत्र से अनागत दुःख को ही हेय प्रतिपादित किया गया है। महर्षि ने विवेकख्याति

---

१. यो० सू० वा० ४।३४.
२. यो० सू० २।२५.
३. यो० सू० व० ३।५६।
४. यो० सू० ३।५६.

ननु "हेयं दुःखमनागतम्"[१] इति सूत्रेण विवेकख्यात्याऽनागतदुःखनिवृत्तिरेव पुरुषार्थत्वेन महर्षिणा निरूपिता। अनागतस्य दुःखस्यानुत्पन्नत्वेनास्तित्वमेव नास्तीति कीदृशी तस्य निवृत्तिः साधनीया भवेत्? इति चेच्छृणु। अत्रेदमैदम्पर्यम्—इह खलु दुःखं तावत् त्रिविधम्—भूतं भविष्यद् वर्तमानं चेति। तत्र यद् भूतं तदतिक्रान्तमिति, वर्तमानं च स्वक्षणे भोगारूढतया क्षणान्तरे स्वयमेवातीतावस्थां प्राप्स्यतीति न ते हेयकोटिं प्रविशतः, न वा तयोर्निवृत्तिः पुरुषार्थः। किन्त्वनागतदुःखनिवृत्तिरेव पुरुषार्थः। अनागतस्य कथं निवृत्तिरिति चेत्, अनागतस्य दुःखस्येदानीमभावेऽपि तस्य कारणस्याविवेकस्येदानीं विद्यमानत्वाद् विवेकख्यात्या तस्य समुच्छेदेनानागतस्य दुःखस्योत्पत्तिरेव न भविष्यति। एवमनागतस्य दुःखस्यानुत्पत्तिरेव तादृशदुःखस्य निवृत्तिरुच्यते। अयमेव पुरुषार्थ इति, अर्थात् प्रारब्धकर्मणो भोगेन, सञ्चितस्य च ज्ञानेन परिक्षय

---

से अनागत दुःख की निवृत्ति का प्रतिपादन किया है। अभी उत्पन्न नहीं है अतएव वह अनागत कहलाता है ऐसी स्थिति में जिसका अस्तित्व नहीं उसकी निवृत्ति कैसे मानी जा सकती है।

इसका समाधान यह है—

दुःख तीन प्रकार के होतै हैं— १. भूत, भविष्यद् एवं वर्तमान। भूत दुःख तो नष्ट हो चुका होता है। वर्तमान दुःख स्वक्षण में भोगारूढ है तथा क्षणान्तर में स्वयमेव अतिक्रान्त (अतीत) हो जायेगा। अतः वह भी हेयकोटि में नहीं रखा जाता है। अतः भूत एवं वर्तमान दुःखों की निवृत्ति को पुरुषार्थ नहीं माना जा सकता। एवंच एकमात्र भविष्यद् दुःख की निवृत्ति को ही पुरुषार्थ माना जा सकता है। अनागत दुःख की निवृत्ति कैसे हो सकती है— अविद्यमान की निवृत्ति सम्भव नहीं हो सकती— यह सर्वविदित है। इसको कार्यनिवृत्ति के स्थान पर कारणनिवृत्ति से समाधेय कहा जाता है। जिस अविवेक से भाविकाल में दुःख उत्पन्न होगा उस अविवेक (कारण) की विद्यमानता है जिसकी निवृत्ति विवेकख्याति द्वारा हो जाने से कारणाभावात् कार्याभावः इस न्याय से दुःख (अनागत) की उत्पत्ति ही बाधित हो जायेगी। इस प्रकार अनागत दुःख की अनुत्पत्ति को निवृत्तिशब्द से कहा जाता है। अनागत दुःख की अनुत्पत्ति ही पुरुषार्थ है। प्रारब्ध कर्म का क्षय भोग से होता है किन्तु संचित कर्मफल का ज्ञान से ही क्षय हो जाता है। अतः अनागत दुःख की उत्पत्ति ही कारण (अविवेक) के नाश से प्रतिबन्धित हो जाती है। दुःख के

---

१. यो० सू० २।१६.

इति नागामिदुःखादिसम्भवः, तत्कारणानां सवासनानां पञ्चक्लेशानां निवृत्तत्वात्।

एवं सांख्यवद् योगदर्शनेऽपि विवेकख्यात्या दुःखनिवृत्तिरेव पुरुषार्थत्वेन स्वीक्रियते, न त्वानन्दावाप्तिरपि।

## मीमांसादर्शने बन्धमोक्षयोः स्वरूपम्

तत्र तावन्मीमांसासूत्रकारेण भगवता जैमिनिना भाष्यकारेण शबरस्वामिना च जीवात्मनः स्वर्गतत्प्राप्त्युपायौ व्यवस्थापितौ। किन्तु मुक्ति-तत्प्राप्त्युपायविषये तौ न किमप्यूचतुः। अर्वाचीनाचार्यौ भट्टप्रभाकरौ विनैव मोक्षव्यवस्थां मीमांसादर्शनमपूर्णमिति मत्त्वा मोक्षतदुपाययोर्विचारं कृतवन्तौ।

तत्र भाट्टमीमांसकास्तु वेदान्तिभिः प्रतिपाद्यमानः प्रपञ्चविलयो मोक्ष इति मतं निरस्यन्तः प्रपञ्चसम्बन्धो बन्धः, तत्सम्बन्धविलयो मोक्ष इत्याचक्षते। एतन्मतानुसारेण शरीरम्, इन्द्रियाणि, विषयाश्चेति त्रिविधो हि बन्धः। एते पुरुषशब्दवाच्यमात्मानं बध्नन्ति। तैर्बद्धश्चाऽयं बद्ध इति व्यवह्रियते। तस्मादेतस्य त्रिविधस्यापि बन्धस्यात्यन्तिकसमुच्छेदो मोक्षः। तदुक्तं

---

कारण (पञ्चविध क्लेश एवम् उनकी वासना) निवृत्त हो जाने से कार्योत्पत्ति की सम्भावना निरस्त हो जाती है।

## मीमांसादर्शन में बन्ध एवं मोक्ष के स्वरूप

मीमांसादर्शन में सूत्रकार भगवान् जैमिनि एवं भाष्यकार शबरस्वामीजी ने जीवात्मा के स्वर्ग एवम् उसके उपाय की व्यवस्था की है। किन्तु मुक्ति एवम् उसके उपाय के विषय में उन्होंने कुछ भी नहीं कहा है। बाद के मीमांसाचार्य कुमारिल भट्ट एवं प्रभाकर मिश्र ने यह अनुभव किया कि मोक्षव्यवस्था के बिना मीमांसादर्शन अपूर्ण है। अतः इस कमी की पूर्ति हेतु उन्होंने मोक्ष एवम् तदुपाय का विचार विशदता के साथ किया है।

भट्टमीमांसक वेदान्तिसम्मत मोक्ष का निराकरण करते हैं। अतएव वे प्रपञ्चविलय को मोक्ष नहीं मानते। प्रत्युत प्रपञ्चसम्बन्ध को बन्ध तथा उक्त सम्बन्धविलय को वे मोक्ष मानते हैं। इस मत में बन्ध को तीन भागों में विभाजित किया जाता है— शरीर, इन्द्रिय एवं विषय। ये तीनों पुरुष (जीवात्मा) को बन्धन में अधीनस्थ रखते हैं। इनसे बद्ध जीव बद्ध होता है। अतः त्रिविध बन्ध का आत्यन्तिक समुच्छेद ही मोक्ष कहलाता है। इसकी विशद विवेचना पार्थसारथिमिश्र

पार्थसारथिमिश्रेण–"तस्मान्न प्रपञ्चविलयो मोक्षः, किन्तु प्रपञ्चसम्बन्धविलयः। त्रेधा हि प्रपञ्चः पुरुषं बध्नाति। भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः। भोग इति च सुखदुःखविषयोऽपरोक्षानुभव उच्यते। तदस्य त्रिविधस्यापि बन्धस्यात्यन्तिको विलयो मोक्षः"[1] इति।

**बन्धनकारणानि**

"कर्मजन्योपभोगार्थं शरीरं नः प्रवर्तते" इत्यभियुक्तोक्त्या जीवात्मा हि प्राक्तनशुभाशुभकर्मफलोपभोगायैव शरीरं धारयतीति शरीरोत्पत्तौ धर्माधर्माविव निमित्तभूतौ। तयोश्च धर्माधर्मयोः कारणानि काम्य-निषिद्धकर्माणीति त एव बन्धकारणानीत्युच्यन्ते।

**मोक्षप्राप्तौ कर्मणामुपयोगः**

एवं कर्मजन्यस्य सत्यबन्धस्य न केवलज्ञानेनैव निवृत्तिः सम्भवतीति काम्यनिषिद्धयोर्वर्जनपुरःसरं नित्यनैमित्तिकयोः कर्मणोर्यावदायुरवश्यकर्तव्यता-मुपदिशन्ति मीमांसकाः। तदुक्तं भट्टपादैः–

---

ने की है— "अतः प्रपञ्चविलय को मोक्ष नहीं माना जा सकता। अपितु प्रपञ्चसम्बन्ध के विलय को ही मोक्ष कहा जाता है। प्रपञ्च तीन भागों में विभाजित होकर पुरुष को आबद्ध करता है। तद्यथा— १. भोगायतन शरीर २. भोगसाधन इन्द्रियाँ तथा ३. भोग्यशब्दादिविषय। सुखदुःखविषयक अपरोक्ष अनुभव भोग कहलाता है। एवञ्च त्रिविध बन्ध का आत्यन्तिक विलय ही मोक्ष कहलाता है।"

**बन्धन के कारण**

यह विश्रुत अभियुक्तोक्ति है— "कर्मजन्य फल के उपभोग हेतु हमें शरीर प्राप्त होता है। एवंच जीव अपने प्राचीन शुभ तथा अशुभ कर्मफलों के उपभोग हेतु शरीर धारण करते हैं। एतावता यह निष्कर्ष प्राप्त होता है— शरीर की उत्पत्ति में निमित्तकारण है— जीव के धर्म एवम् अधर्म। इन धर्म एवम् अधर्म के कारण कर्म हैं— (काम्य एवं निषिद्ध) तथा ये ही जीवों के बन्धकारण भी हैं।

**मोक्षप्राप्ति में कर्मों का उपयोग**

बन्ध सत्य है। वह कर्मजन्य है। उसकी निवृत्ति केवल ज्ञान से सम्भव नहीं है। अतः काम्य एवं निषिद्ध कर्मों का वर्जन करना चाहिए तथा जीवनपर्यन्त नित्य

---

१. शा० दी० तर्कपादे, पृ० १२५.

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया।।[१] इति।

अत्रायं भावः—कर्म तावद् द्विविधम्, विहितं निषिद्धं चेति। तत्र वेदानुमोदितं विहितम्, तदननुमोदितं च निषिद्धम्। विहितकर्मापि नित्य-नैमित्तिक-काम्य-प्रायश्चित्तभेदेन चतुर्विधम्। येषां करणे विशेषपुण्यपापा-भावेऽप्यकरणे प्रत्यवायस्तानि नित्यकर्माणि। प्रत्यवायसाधनीभूताभाव-प्रतियोगीनीत्यर्थः, नियतनिमित्तकानीति यावत्। तदुक्तम्—

नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्।
उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात्।।
फलश्रुतेर्वीप्सया च तन्नित्यमिह कीर्तितम्।[२] इति।

तानि च नित्यानि—"अहरहः सन्ध्यामुपासीत" इत्यादिश्रुतिविहितानि सन्ध्यावन्दन-पञ्चमहायज्ञादीनि[३]।

---

एवं नैमित्तिक कर्मों का अनुष्ठान करना चाहिए। भट्टपाद की यह प्रासङ्गिक उक्ति मननीय है—

"मोक्षार्थी न प्रवर्तेत.............प्रत्यवायजिहासया।।१।।

इस श्लोक का आशय यह है— कर्म के दो भेद होते हैं—१. विहित कर्म एवं २. निषिद्ध। वेदानुमोदित कर्म विहित कहलाता है एवम् वेद से अननुमोदित कर्म निषिद्ध कहलाता है। विहित कर्म भी चतुर्विध होते हैं— १. नित्य २. नैमित्तिक ३. काम्य एवम् ४. प्रायश्चित। जिनके करने से विशेष रूप से न पुण्य होता है न पाप किन्तु अकरण से प्रत्यवाय होता है— ऐसे कर्म **नित्य** कहलाते हैं। प्रत्यवाय के साधन अभाव- प्रतियोगी कर्म के निमित्त नियत होते हैं। तद्यथा—

"नित्यं सदा यावादायुः......तन्नित्यमिह कीर्तितम्।।१ १/२।।

"अहरहः सन्ध्यामुपासीत।" इत्यादि श्रुतिवाक्यों से विहित सन्ध्यावन्दन एवं पञ्च महायज्ञ प्रभृति नित्य कर्म हैं। नैमित्तिक कर्म के निमित्त नियत नहीं होते। यथा "पुत्रे जाते वैश्वानरं द्वादशकपालं निर्वपेत्।" इत्यादि स्थलों में जो जातेष्टि तथा

---

१. श्लो वा०, पृ० ४७६.
२. न्या० को०, पृ० ४१७-४१८.
३. अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्।। (म० स्मृ० ३७०)

अनियतनिमित्तकानि नैमित्तिकानि। यथा "पुत्रे जाते वैश्वानरं द्वादशकपालं निर्वपेत्" इत्यादिस्थलेषु विहितानि जातेष्ट्यादीनि ग्रहणस्नानादीनि च नैमित्तिककर्माण्युच्यन्ते। नित्यकर्मवन्नैमित्तिकानां करणे न पुण्याद्युत्पत्तिः, अकरणे च प्रत्यवायोत्पत्तिः किन्त्वनयोरयं भेदः–नित्यानि यावदायुर्नित्यविहितानि, नैमित्तिकानि तु निमित्ते सतीति।

फलेच्छाधीनेच्छाविषयत्वम्, फलकामनाधीनकर्तव्यताकत्वं काम्यत्वम्[१]। अत एव यत्किञ्चित्फलापेक्षया क्रियमाणानि कर्माणि काम्यानीत्युच्यन्ते। यथा– "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिषु स्वर्गरूपफलेच्छाधीनेच्छाविषयत्वाज्ज्योतिष्टोमादीनि काम्यकर्माणि।

"प्रायः पापं विजानीयाच्चित्तं तस्यैव शोधनम्" इत्यभियुक्तोक्त्या, यद्वा–

**प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।**
**तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्।।**[२]

---

ग्रहणस्नान प्रभृति कर्म नैमित्तिक कहलाते हैं। नित्यकर्मवत् नैमित्तिक कर्म भी किसी पुण्य की उत्पत्ति में निमित्त नहीं बनते। किन्तु इनके अकरण से प्रत्यवाय उत्पन्न होता है। इन दोनों कर्मों में अन्तर (भेद) यही है— यावज्जीवन नित्यविहित कर्म नित्य कर्म हैं तथा किसी निमित्त के कारण जो करणीय हैं उन्हें नैमित्तिक कर्म कहा जाता है।

काम्यकर्म वह हैं जो किसी फलेच्छा के अधीनेच्छा का विषय हो। अथवा किसी फलकामना के अधीन जो कर्तव्य हो उसे काम्य कर्म कहते हैं। यत् किञ्चित् फल की अपेक्षा से क्रियमाण कर्म ही काम्य कर्म कहलाते हैं। यथा स्वर्गरूप फल की इच्छा से तदधीन इच्छा विषय ज्योतिष्टोम याग **काम्यकर्म** कहलाता है। एतदर्थ विधिश्रुति है— "ज्योतिष्टोमेन स्वर्गकामो यजेत।" किसी पाप के प्रक्षालन हेतु किये गये चान्द्रायण प्रभृतिकर्म **प्रायश्चितकर्म** कहलाते हैं। यह अभियुक्तोक्ति सुप्रसिद्ध है—

"प्रायः पापं विजानीयात् चित्तं तस्यैव शोधनम्।" तद्वत् स्मृतिवचन भी है–

"प्रायोनाम तपः.............................प्रायश्चित्तमिति समृतम्।।"

---

१. न्या० को, पृ० २१९.
२. न्या० को०, पृ० ५९२.

इति स्मृत्युक्त्या पापक्षालनार्थं क्रियमाणानि चान्द्रायणादीनि प्रायश्चित्तकर्माणि कथ्यन्ते।

निषेधविषयीभूतानि निषिद्धकर्माणि। तानि चानिष्टसाधनताबोधक-लिङ्गाद्यनुषक्तनञ्पदयोगिवाक्यगम्यानि। यथा–"न कलञ्जं भक्षयेत्", "न सुरां पिबेत्", "ब्राह्मणो न हन्तव्यः" इत्यादीनि। अत्र कलञ्जभक्षणसुरापान-ब्राह्मणहननादीनि नरकाद्यनिष्टसाधनानीति निषिद्धकर्माण्युच्यन्ते।[१]

एतेषु पञ्चकर्मसु यानि स्वर्गाद्युत्तमलोकनिमित्तानि ज्योतिष्टोमादीनि काम्यानि तानि देवादिशरीरप्राप्तिहेतूनि, ब्राह्मणहननादीनि निषिद्धकर्माणि तिर्यगादिशरीरप्राप्तिहेतूनि, नित्यानि नैमित्तिकानि चाकरणेन प्रत्यवायजननद्वारा नारक्यादिशरीरप्राप्तिहेतूनि। अत्र च दर्शने जीवात्मनः शरीरेऽवस्थानं किल बन्धनमित्युच्यते। "न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति"[२] इति श्रुत्या स एवाभिप्रायः प्रदर्शितः। तस्मान्मुमुक्षुणा काम्यनिषिद्धयोरनारम्भान्नित्य-

---

श्रुतिद्वारा किये गये निषेध के विषयीभूत कर्म **निषिद्धकर्म** कहलाते हैं। ये कर्म अनिष्टसाधनताबोधक लिङ् आदि से युक्त नञ्पदघटित वाक्यों द्वारा बोध्य होते हैं। यथा— "न कलञ्जं भक्षयेत्।" 'न सुरां पिबेत्" "ब्राह्मणो न हन्तव्यः।" इत्यादि। नरकप्रभृति अनिष्ट के साधन होने से कलञ्जभक्षण, सुरापान एवं ब्राह्मणहनन प्रभृति कर्म **निषिद्ध-कर्म** हैं।

पञ्चविध कर्म के अन्तर्गत जतिष्टोमप्रभृति **काम्य-कर्म** स्वर्ग-प्रभृति उत्तमलोकोद्देश्यक होते हैं जिनके अनुष्ठान से देवादि शरीर की प्रप्ति होती है। ब्राह्मण-हनन-प्रभृति **निषिद्ध-कर्म** तिर्यक् शरीर की प्राप्ति हेतु बनते हैं। सन्ध्यावन्दनादि **नित्य-कर्म** तथा जातेष्टि-प्रभृति **नैमित्तक-कर्म** के अनुष्ठान नहीं करने से प्रत्यवाय उत्पन्न होता है। ये द्विविधकर्म नारकीय शरीर की प्राप्ति में हेतु बनते हैं।

मीमांसादर्शन में जीवात्मा की शरीर में स्थिति होना **बन्धन** कहलाता है। यह अभिप्राय निम्नाङ्कित श्रुतिवाक्य द्वारा दर्शित है— "न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति।" अतः मुमुक्षु लोग काम्य एवं निषिद्धकर्म का आरम्भ नहीं करते तथा नित्य एवं नैमित्तिक कर्मों का सम्यक् अनुष्ठान करते हैं। अतः इनके

---

१. न्या० को०, पृ० ४४१.

२. छा० उ० ८।१२।१.

नैमित्तिककर्मणां सम्यगनुष्ठानेन प्रत्यवायानुदयात् प्रारब्धकर्मणश्चोपभोगेन क्षयाच्च जन्मान्तरारम्भकादृष्टाभावेन "निमित्ताऽपाये नैमित्तिकस्याप्यपायः" इति न्यायेन शरीरसम्बन्धाभावरूपो मोक्षः सिद्ध्यति। तदुक्तं पार्थसारथिमिश्रेण– "उत्पाद्यानां च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादात्, विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानां चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारात्, असति शरीरारम्भे पूर्वशरीरनिपाते चाशरीरोऽवस्थितो मुक्तो भवति"[१] इति।

ननूत्पत्स्यमानानां धर्माणां काम्यकर्मानुष्ठानेनैवोत्पत्तिर्भविष्यतीति काम्यकर्मपरित्यागेनास्तु तेषामनुत्पत्तिः, एवमेव भाविनां त्वधर्माणां विहितस्य नित्यनैमित्तिककर्मकलापस्य परित्यागान्निषिद्धस्य निषेवणादुत्पत्तिर्भविष्यतीति विहितस्यानुष्ठानात्प्रतिषिद्धस्य परित्यागात्तेषामप्यनुत्पत्तिर्भवतु, किन्तु पूर्वोत्पन्नानामत एव सञ्चिताख्यानां कथं परिक्षय इति जिज्ञासायां भाट्टमीमांसका नित्यनैमित्तिकसहकृतेनात्मज्ञानेन परिक्षय इत्यभिप्रयन्ति। तदुक्तं पार्थसारथिमिश्रेण– "नित्यनैमित्तिके च पूर्वकृताधर्मक्षयाय कर्तव्ये, तदैव चात्मोपासनस्यापि

---

प्रत्यवाय उदित नहीं होते तथा प्रारब्धकर्मों का भोग से क्षय हो जाने पर जन्मान्तर के आरम्भक अदृष्ट के अभाव होने से "निमित्त के अभाव होने से नैमित्तिक (कार्य) का अनुत्पाद (अपाय) होता है"— इस न्याय से शरीरसम्बन्धाभाव (मोक्ष) की सिद्धि होती है। इसकी विशद विवेचना पार्थसारथिमिश्र ने की है— "उत्पाद्यानां च..........चाशरीरोऽवस्थितो मुक्तो भवति।"

अब जिज्ञासा उदित होती है– जिन पुण्यों की उत्पत्ति-काम्यकर्मों के अनुष्ठान से होती है उनकी अनुत्पत्ति, ज्योतिष्टोमादि के अनुष्ठान नहीं करने से होगी। तद्वत् भावी पाप, नित्य-नैमित्तिक कर्मों के अननुष्ठान से तथा निषिद्धकर्मों के अनुष्ठान से उत्पन्न होंगे। एवञ्च विहितों (नित्य-नैमित्तिक) के अनुष्ठान से तथा निषिद्ध के अननुष्ठान से पापों की अनुत्पत्ति होगी। किन्तु जो कर्म पूर्व में उत्पन्न हो चुके हैं ऐसे **संचित-कर्मों** का क्षय कैसे होगा?

इसका समाधान भट्टमत में प्रतिपादित है— नित्यनैमित्तिक-सहकृत आत्मज्ञान से संचित कर्मों का क्षय होता है। पार्थसारथिमिश्र जी ने इसकी विशदव्याख्या की है— "नित्यनैमित्तिके च......... न विवेकज्ञानाभिप्रायमिति।"

---

१. शा० दी०, तर्कपादे, पृ० १३०.

पूर्वकृतकर्मक्षयद्वारेणैव मोक्षसाधनत्वम्। उपासनाभिप्रायमेव च–"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"[१] इति भगवद्वासुदेववचनम्, न विवेकज्ञानाभिप्रायमिति"[२] इति।

इदं चात्रावधेयम्–"अविनाशी वा अरे अयमात्मा", "आत्मानमुपासीत" इति द्विविधं ह्यात्मज्ञानमुपनिषत्सूपदिश्यते। तत्राद्यं देहाद्विवेकज्ञानम्, अपरं च प्राणायामाद्यङ्गोपेतमुपासनात्मकं ज्ञानम्। परलोकसाधनेषु दर्शपूर्णमासज्योतिष्टोमादिकर्मसु देहातिरिक्तात्मज्ञानं विना प्रवृत्त्यसम्भवाद् विवेकज्ञानं पारलौकिककर्मानुष्ठानप्रवृत्तिहेतुः। उपासनात्मकं च ज्ञानं निःश्रेयसफलकमिति भाट्टैः स्वीक्रियते। अत एवोपासनात्मकं ज्ञानं प्रवृत्ति-द्वारा न दृष्टादृष्टप्रयोजनहेतुरिति तदर्थवादमात्रमित्याक्षेपं परिहृत्य तस्य मोक्षसाधनत्वं निरूपितं भट्टपादैः। तथाहि–

**विज्ञाते चास्य पारार्थ्ये यापि नाम फलश्रुतिः।**
**सार्थवादो भवेदेव न स्वर्गादेः फलान्तरम्।।**[३]**इति।**

---

यहाँ ध्यातव्य है कि उपनिषदों में द्विविध आत्मज्ञान का उपदेश किया गया है। १. "अविनाशी वा अरे अयमात्मा। २. आत्मानमुपासीत। प्रथम ज्ञान में देह से आत्मा के विवेक को प्रतिपादित किया जाता है। द्वितीय ज्ञान में प्राणायामप्रभृति अङ्गोपेत उपासना को प्रतिपादित किया जाता है। जो कर्म परलोकसाधन हैं ऐसे दर्शपूर्णमास एवम् ज्योतिष्टोमादि कर्म में तब तक प्रवृत्ति नहीं हो सकती जब तक देहातिरिक्त आत्मज्ञान न हो जाय। अतः पारलौकिक कर्मानुष्ठान की प्रवृत्ति में हेतु है— विवेकज्ञान। तद्वत् मोक्ष की प्राप्ति हेतु उपासनात्मक ज्ञान को हेतु माना जाता है। यह भाट्टसम्मत सिद्धान्त है। किसी वादी के द्वारा आक्षेप किया जाता है— "उपासनात्मक ज्ञान प्रवृत्ति द्वारा दृष्ट अथवा अदृष्ट प्रयोजन की सिद्धि में हेतु नहीं होता अतः तत्प्रतिपादक वाक्य को अर्थवादवाक्य माना जाय।" भाट्ट मत में इस आक्षेप का परिहार कर उपासनात्मक ज्ञान को मोक्ष का साधन बताया गया है। तद्यथा—

"विज्ञाते चास्य पारार्थ्ये..........न स्वार्गादेः फलान्तरम्।।१।।

एतावता निष्कर्ष यह है— सांख्यप्रभृति दर्शनों में विवेकज्ञान को मोक्ष का

---

१. भ० गी० ४।३७.
२. श्लो० वा०, न्यायरत्ना०, पृ० ४७६.
३. श्लो० वा०, पृ० ४७५.

एवं भाट्टैः सांख्यादिवत् केवलं विवेकज्ञानं मोक्षहेतुरिति नाङ्गीक्रियते, किन्तूपासनासंवलितमेव, तदपि नित्य-नैमित्तिककर्मसमुच्चितमेवेत्यभिप्रेयते। अनेन सन्दर्भेण ज्ञानकर्मसमसमुच्चयवादो मोक्षसाधनत्वेन वार्त्तिककृताऽङ्गीकृत इति स्पष्टमवगम्यते। अयमेवार्थः सोमेश्वरेण तन्त्रवार्त्तिकव्याख्याने बृहट्टीकावचनैः स्पष्टीक्रियते। तथाहि–

ननु निःश्रेयसं ज्ञानाद् बन्धहेतोर्न कर्मणः।
नैकस्मादपि तत्किन्तु ज्ञानकर्मसमुच्चयात्।।
नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत्।।
वैराग्यात् पक्वविज्ञानः कैवल्यं लभते नरः।
न च ज्ञानविधानेन कर्मसम्बन्धवारणम्।।[१] इति।

### मुक्तिस्वरूपम्

एवं भाट्टनये उत्पन्नेषु धर्माधर्मेषु ये प्रारब्धास्तेषां भोगेन परिक्षयः, सञ्चितानां च नित्यनैमित्तिकसहकृतात्मज्ञानेन नाशः, अनागतानां च कर्मणामननुष्ठानादेवासत्त्वमित्युत्पन्नानां शरीरेन्द्रियाणां प्रध्वंसे सति यश्चानुत्पन्नानां

---

हेतु बताया गया है उससे भिन्न भाट्टसिद्धान्त में उपासनासंवलित विवेकज्ञान को मोक्ष हेतु माना जाता है। वह ज्ञान, नित्य-नैमित्तिक-कर्म-समुच्चित होना चाहिए। उपर्युक्त सन्दर्भ से सुविदित होता है कि वार्तिककार ने ज्ञानकर्मसमुच्चय को मोक्षसाधन प्रतिपादित किया है। इस अभिप्राय को तन्त्रवार्तिक व्याख्यान में सोमेश्वर ने वृहद्टीका वचनों से सुव्यक्त किया है। तद्‌यथा—

"ननु निःश्रेयसं ज्ञानात्.......कर्मसम्बन्धवारणम्"।।३।।

### मुक्ति का स्वरूप

भाट्टमत-सिद्धान्त है— उत्पन्न धर्म एवम् अधर्मों में जो प्रारब्ध हैं उनका क्षय भोग से होता है, संचित का नाश, नित्यनैमित्तिक सहकृत आत्मज्ञान से होता है तथा अनागत कर्मों का अननुष्ठान से ही असत्त्व होता है। ततश्च उत्पन्न शरीर एवम् इन्द्रियों के प्रध्वंस होने पर अनुत्पन्न कर्मों का प्रागभाव ही मोक्ष कहलाता है। इसको देहेन्द्रियादि का आत्यन्तिक समुच्छेद भी कहा जाता है। भट्टपाद ने

---

१. न्या० सु०, पृ० २३६.

प्रागभावः स एव मोक्षः। अयमेव देहेन्द्रियादीनामात्यन्तिकसमुच्छेद इत्युच्यते। तदुक्तं भट्टपादैः–

तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये।
उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः।।[1]इति।

भगवत्पादैः शङ्कराचार्यैरपि–"यत्तु कैश्चिज्जल्प्यते। नित्यानि नैमित्तिकानि कर्मानुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये, साम्प्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षप्यन्त इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसन्धानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतयैवं वृत्तस्य सेत्स्यतीति"[2] इति मीमांसकाभिमतं मोक्षस्वरूपं प्रदर्शितम्।

एवं बन्धकानां शरीरेन्द्रियादीनामत्यन्तोच्छेदे आत्मा समस्तवैषयिक-सुखदुःखैर्विमुक्तः सन् स्वस्वरूपेणावतिष्ठते न च तदानीं निर्विषयकसुखप्राप्तिरपि, किन्त्वत्यन्तदुःखोच्छेदमात्रम्। तदुक्तं पार्थसारथिमिश्रेण–"अतः प्रमाणान्तर-

---

सुस्पष्ट कहा है—

"तत्र ज्ञातात्मतत्त्वानां.......देहो नोत्पद्यते पुनः।।

भगवत् पाद शङ्कराचार्य ने भी मीमांसक मतखण्डन प्रसङ्ग में सुस्पष्ट कहा है— "कुछ लोगों का यह कथन है— नित्य एवं नैमित्तिक कर्मों का अनुष्ठान किया जाता है प्रत्यवाय की अनुत्पत्ति हेतु तद्वत् काम्य एवं प्रतिषिद्ध कर्मों का अनुष्ठान किया जाता है प्रत्यवाय की अनुत्पत्ति हेतु तद्वत् काम्य एवं प्रतिषिद्ध कर्मों का परिहार किया जाता है– स्वर्ग-नरक की अप्राप्ति हेतु तथा वर्तमान देह से भोगने योग्य प्रारब्ध कर्मों का क्षय भोग से ही होता है। अतः वर्तमान देह के पात होने से देहान्तर प्रतिसन्धान कारण के अभाव होने से स्वरूपावस्थान लक्षण कैवल्य, ब्रह्मज्ञान के बिना ही उपर्युक्त क्रम से सम्भव है। यह मीमांसक सम्मत मोक्षस्वरूप है।

निष्कर्ष यह है— बन्धकारण–शरीर, इन्द्रियादि के अत्यन्त उच्छेद होने पर जीव सर्वविध वैषयिक सुखदुःखों से विमुक्त होकर स्वरूप में प्रतिष्ठित होता है। उस अवस्था में निर्विषयक सुखप्राप्ति नहीं होती किन्तु अत्यन्त दुःखोच्छेदमात्र होता है।

---

१. श्लो० वा०, पृ० ४७५.
२. ब्र० सू० शा० भा० ४।३।१४.

वशादानन्दवचनं दुःखाभावपरम्, इतरत्तु यथाश्रुतमिति न्याय्यम्। तस्मात् सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः"[१] इति।

कुमारिलभट्टानुयायिना नारायणभट्टेन तु–

दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः।
सुखस्य मनसा मुक्तिर्मुक्तिरुक्ता कुमारिलैः[२]।।

इत्युक्त्वा "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते" इति श्रुतिबलेन सिद्धस्य नित्यस्य स्वरूपानन्दस्य संसारदशायामनभिव्यक्तस्य मुक्तावभिव्यक्तिर्भवति, तदानन्दानुभवे च देहेन्द्रियादीनामात्यन्तिकपरिध्वंसानुगृहीतं मनस्तदनुभवसाधनं भवतीति च प्रतिपाद्यते। अस्मिन् पक्षे नित्यसुखापरोक्षज्ञानसाधनत्वेन स्वीकृतमिदमन्तरिन्द्रियं मनो विभुपरिमाणमत एव निष्पन्दं चेति स्वीक्रियते।

एवं कुमारिलभट्टानुयायिना पार्थसारथिमिश्रेण मुक्तौ दुःखाभावमात्रमिति, नारायणभट्टेन च नित्यसुखाभिव्यक्तिरित्यङ्गीक्रियते। अत एव मधुसूदनस्वामिभिः–

---

पार्थसारथिमिश्र ने सुस्पष्ट कहा है—"अतः प्रमाणान्तरवशाद्.........आत्मगुणोच्छेदो मोक्षः।"

कुमारिलभट्ट के अनुयायी नारायण भट्ट ने सुस्पष्ट कहा है—

"दुःखात्यन्तसमुच्छेदे.........मुक्तिरुक्ता कुमारिलैः॥१॥"

तदनुसार "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते।" इस श्रुतिप्रमाण से सिद्ध नित्य स्वरूपानन्द संसार दशा में अनभिव्यक्त रहता है, वह मुक्तिदशा में ही अभिव्यक्त होता है। इस स्वरूपानन्दानुभव में देह, इन्द्रियादि का आत्यन्तिक परिध्वंस से अनुगृहीत मन ही अनुभवसाधन बनता है। इस पक्ष में नित्यसुख के अपरोक्ष ज्ञान का साधन रूप में स्वीकृत आन्तर इन्द्रिय मनस् विभुपरिमाण है तथा निःस्पन्द है।

तथाच सुस्पष्ट है— कुमारिलभट्ट के अनुयायी पार्थसारथि मिश्र का कथन है— मुक्ति में दुःखाभावमात्र की स्थिति होती है। किन्तु नारायणभट्ट का कथन है मुक्ति में नित्यसुखाभिव्यक्ति होती है।

अतएव मधुसूदनसरस्वतीस्वामीजी ने भट्ट के अनुयायी पक्षद्वय को उपस्थापित किया है— "भाट्टास्तु ज्ञानकर्मसमुच्चयादेव.......दुःखाभावमेव वा मुक्तिं तदीयाः केचित्।"

---

१. शा० दी० तर्कपादे, पृ० १३०.
२. मा० मे०, पृ० २०१.

"भाट्टास्तु ज्ञानकर्मसमुच्चयादेवात्मनो जडबोधात्मकस्य नित्यज्ञानं नित्यसुखं चोदेति। ततश्च विषयविशेषानपेक्षया नित्यज्ञानेन नित्यसुखाभिव्यक्तिर्मुक्तिरित्याहुः। मानसज्ञानेन सुखाभिव्यक्तिर्वा, दुःखाभावमेव वा मुक्तिं तदीयाः केचित्"[१] इत्युभावपि भाट्टानुयायिपक्षौ प्रदर्शितौ। तस्मान्मुक्तावानन्दाभिव्यक्तिमङ्गीकुर्वतां पक्षे मुक्तस्य बाह्येन्द्रियाण्येव निवर्तन्ते[२]। मनस्तु तदानन्दानुभवसाधनतया तस्यामप्यवस्थायामनुवर्तते। दुःखनिवृत्तिमात्रमङ्गीकुर्वतां पक्षे मनसोऽपि निवृत्तिरभिधीयते।

किञ्च, भट्टानुयायिना नारायणभट्टेन सञ्चितदुष्कृतनिवारणार्थं नित्यनैमित्तिकातिरिक्तत्वेन प्रायश्चित्तस्याप्यनुष्ठानमुक्तम्। तथाहि–

> **निषिद्धकाम्यकर्मभ्यः सम्यग्व्यावृत्तचेतसः।**
> **नित्यनैमित्तिकप्रायश्चित्तप्रध्वस्तदुष्कृतेः ॥**[३]इति।

### प्राभाकरमोक्षसिद्धान्तः

भाट्टा देहेन्द्रियादीनामत्यन्तोच्छेदमानन्दावाप्तिं च मोक्षमाहुः। प्राभाकरास्तु धर्माधर्मवशीकृतो हि जीवस्तासु तासु योनिषु संसरतीति जीवात्मनो देहसम्बद्धौ

---

एवंच मुक्तिदशा में आनन्दाभिव्यक्ति का अङ्गीकार करने वालों के पक्ष में मुक्त पुरुष की बाल इन्द्रियाँ ही निवृत्त होती हैं। आन्तरइन्द्रिय-**मनस्**, उस आनन्दानुभव के साधन रूप से मुक्तिदशा में भी अनुवर्तन करता है। दुःखनिवृत्तिमात्र की स्वीकृति करने वालों के पक्ष में मनस् की भी निवृत्ति मान्य है।

यह भी ध्यातव्य है— भट्टानुयायी नारायणभट्ट ने संचित दुष्कर्मों की निवृत्ति हेतु नित्य, नैमित्तिक के अतिरिक्त प्रायश्चित कर्म के अनुष्ठान पर भी बल दिया है। तद्यथा—

"निषिद्धकाम्यकर्मभ्यः..............प्रध्वस्त दुष्कृतेः॥१॥

### प्रभाकर सम्मत मोक्षसिद्धान्त–

भाट्ट लोग देह, इन्द्रियादि के अत्यन्त उच्छेद के साथ आनन्दावाप्ति को मोक्ष कहते हैं। किन्तु प्राभाकर लोगों काकहना है— धर्माधर्मवशीकृत जीव उन-

---

१. वे० क०, पृ० ७-८.

२. शा० दी० तर्कपादे, पृ० १२६-१२७.

३. मा० मे०, पृ० २०२.

धर्माधर्मा एव मूलकारणे इति तयोरुच्छेदपुरःसरं देहोच्छेदो मोक्ष इति प्राहुः। तथा हि–"अतो नाविद्यास्तमयो मोक्षः। आत्यन्तिकस्तु देहोच्छेदो निःशेषधर्माधर्मपरिक्षयनिबन्धनो मोक्ष इति सिद्धम्। धर्माधर्मवशीकृतो जीवस्तासु तासु योनिषु संसरति। तयोरेकान्तोच्छेदेऽप्यपगतदेहेन्द्रियसम्बन्धः समुत्खातनिखिलसांसारिकदुःखबन्धनो मुक्त इत्युच्यते"[1] इति।

प्राभाकरैर्मुक्त्युपायत्वेन ज्ञानकर्मसमुच्चयवाद एवाङ्गीक्रियते। अर्थादात्मज्ञानपूर्वकाद्वैदिककर्मानुष्ठानान्मोक्ष इति। अस्मिन् सम्प्रदायेऽपि सांसारिकदुःखैरुद्विग्नेन मुमुक्षुणा काम्यनिषिद्धेभ्यो निवर्तितव्यमित्युपदिश्यते। एवं मोक्षोपायविषये भाट्टप्राभाकरयोर्न विवादः, किन्तु मोक्षस्वरूपविषये। भाट्टा नित्यसुखाभिव्यक्तिरिति, प्राभाकराश्चात्यन्तिकदुःखनिवृत्तिरिति पक्षद्वयमुपस्थापयन्ति। प्रायः प्राभाकरैरात्मस्वरूपस्य नैय्यायिकवदङ्गीकृतत्वान्मोक्षस्वरूपमपि तन्मतानुरूपमिति ज्ञातव्यम्। अपि च, "नियोगसिद्धिरेव मोक्षः" इति प्रतिपादयन्तः प्राभाकरा मोक्षोपाययोर्ज्ञानकर्मणोर्मध्ये निष्कामकर्मण एव प्राधान्यमङ्गीकुर्वन्ति।

---

उन योनियों में संसरण करता है। अतः जीवात्म के देहसम्बन्ध में धर्म एवम् अधर्म को ही मूलकारण माना जाता है। अतः उन दोनों के उच्छेद से विधेय देहोच्छेद ही मोक्ष है। तद्यथा— "अतो नाविद्यास्तमयो मोक्षः — मुक्त इत्युच्यते।।"

प्रभाकर के अनुयायी मीमांसक मुक्ति के उपाय रूप से ज्ञान कर्म समुच्चयवाद का अङ्गीकार करते हैं। इस सिद्धान्त में आत्मज्ञानपूर्वक वैदिककर्मानुष्ठान से मोक्ष की प्राप्ति बतायी जाती है। इस सम्प्रदाय में भी सांसारिक दुःखों से उद्विग्न मुमुक्षु द्वारा काम्य एवं निषिद्धकर्मों से निवृत्त होना चाहिए, ऐसा उपदेश किया जाता है। निष्कर्षतः मोक्षोपाय के विषय में भाट्ट एवं प्राभाकरों में विमति नहीं है केवल मोक्षस्वरूप के विषय में विमति है। भाट्ट मीमांसक नित्यसुखाभिव्यक्ति को मोक्षस्वरूप मानते हैं किन्तु प्राभाकर आत्यन्तिक दुःखनिवृत्ति को। यतश्च प्राभाकरों द्वारा नैयायिकसम्मत आत्मस्वरूप स्वीकार्य है अतः तदनुरूप ही मोक्षस्वरूप भी मान्य है। किञ्च "नियोग सिद्धिरेव मोक्षः।" ऐसा प्रतिपादित करने वाले प्राभाकर मोक्षोपायभूत ज्ञान एवं कर्म के मध्य निष्काम कर्म के प्राधान्य का ही अङ्गीकार करते हैं।

---

१. प्र० प०, पृ० १५६.

## मीमांसादर्शने ईश्वरप्रणिधानम्

यद्यपि प्राचीनमीमांसकैरीश्वरो न सृष्ट्यर्थं न वा वेदनिर्माणार्थमङ्गीकृतः, तयोरुभयोरपि नित्यत्वात्। किन्त्वर्वाचीनौ आपदेवलौगाक्षिभास्करौ यज्ञपतित्वेनेश्वरमङ्गीकृत्य स्वर्गसाधनानां दर्शपूर्णमासादियागानामीश्वरार्पणबुद्ध्या करणेनापि तत्प्रसादेन निःश्रेयसावाप्तिरित्यभिहितवन्तौ। तथा हि–"सोऽयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः"[1], "एवं च 'यजेत स्वर्गकामः' इत्यादिनिखिलवेदस्य साक्षात् परम्परया वा यागादिधर्मप्रतिपादकत्वं सिद्धम्। सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः"[2] इति।

अत्राऽयं भावः–यान्यग्निहोत्र–दर्शपूर्णमास–चातुर्मास्यादिकर्माणि स्वर्गसाधनत्वेन श्रुतानि, "ज्योतिष्टोमेन स्वर्गकामो यजेत", "अग्निहोत्रं जुहुयात् स्वर्गकामः", "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिवचनैः, तान्येव यदि–

> यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
> यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्।।[3]

---

### मीमांसादर्शन में ईश्वर प्राणिधान–

यद्यपि प्राचीन मीमांसकों ने सृष्टिकर्ता अथवा वेदकर्ता के रूप में ईश्वर को स्वीकार नहीं किया है क्योंकि सृष्टि एवम् वेद दोनों की नित्यता इस सिद्धान्त में मान्य है। अर्वाचीन मीमांसकों (आपदेव एवम् लौगाक्षिभास्कर) ने यज्ञाधिपतिरूप में ईश्वर को स्वीकार किया है तथा स्वर्गसाधन दर्शपूर्णमासादि यागों का ईश्वरार्पणबुद्ध्या अनुष्ठान करने से ईश्वरप्रसाद से निःश्रेयसप्राप्ति को प्रतिपादित किया है। तद्यथा– "सोऽयं धर्मो यद्उद्देशेन........क्रियमाणस्तु निःश्रेयसहेतुः।।"

"ज्योतिष्टोमेन स्वर्गकामो यजेत।" "अग्निहोत्रं जुहुयात् स्वर्गकामः।" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत।" इत्यादि श्रुतिवाक्यों में स्वर्गसाधनरूप से अग्निहोत्र, दर्शपूर्णमास तथा चातुर्मास्य कर्म श्रुत हैं। इन कर्मों को "यत्करोषि यदश्नासि.........तत्कुरुष्व मदर्पणम्।" स्मृति के अनुसार ईश्वरार्पणबुद्धि से किये

---

१. मी० प्र०, पृ० २७७–२७८.

२. अर्थ० सं० , पृ० १६२.

३. भ० गी० ९।२७.

इति स्मृतिमनुसृत्येश्वरार्पणबुद्ध्या क्रियन्ते चेत्, "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति संयोगपृथक्त्वन्यायेन निःश्रेयससाधनानि भवन्ति। एवमीश्वरमङ्गीकुर्वाणा मीमांसकाः काम्यानामपि कर्मणामीश्वरार्पणबुद्ध्या करणेन मोक्षहेतुत्वं प्रतिपादयन्ति।

तदेवं पर्यालोचिते सतीदमेव ज्ञायते यन्मीमांसका ज्ञानकर्मसमसमुच्चय-वादिनः। तत्र भाट्टा मुक्तौ नित्यसुखाभिव्यक्तिमङ्गीकुर्वाणा वेदान्तपक्षपातिनः। अत एवाद्वैतिनो 'व्यवहारे भाट्टनयः' इति कथयन्ति। प्राभाकरैः मुक्तौ दुःखानामात्यन्तिकी निवृत्तिरिति स्वीक्रियते अतएवैते नैय्यायिकपक्षपातिन इत्यवगम्यते।

किञ्च, भाट्टैः प्राभाकरैश्च सशरीरत्वमेव बन्धनमिति स्वीकारात् शरीरसत्त्वे न मुक्तिरित्युभयपक्षेऽपि जीवन्मुक्तिर्नैव सम्भाव्यते।

"मुरारेस्तृतीयः पन्थाः" इत्यभियुक्तोक्त्यनुसारं मुरारिमिश्रस्तु न भाट्टवन्नित्यसुखाभिव्यक्तिर्मुक्तिरिति, न वा प्राभाकरवदात्यन्तिकी दुःखनिवृत्तिर्मुक्तिरित्यङ्गीकरोति, किन्तु दुःखानामत्यन्ताभाव एव मोक्ष इति स्वीकरोति[1]।

---

जाने पर "एकस्य तूभयत्वे संयोगपृक्कत्वम्।" न्याय से निःश्रेयससाधन बन जाते हैं। एवंच ईश्वर का अङ्गीकार कर मीमांसकों ने काम्यकर्मों का भी ईश्वरार्पण बुद्धि से अनुष्ठान करने पर उनकी मोक्षहेतुता को प्रतिपादित किया है।

पर्यालोचन से विदित होता है कि मामांसादार्शनिक ज्ञानकर्मसमुच्चयवादी हैं। भाट्टमीमांसक मुक्तिदशा में नित्यसुखाभिव्यक्ति को स्वीकृत कर वेदान्तसिद्धान्त के पक्षपाती बनते हैं। अतएव अद्वैती "व्यवहारे भाट्टनयः।" प्रतिपादित करते हैं। प्राभाकर मीमांसक मुक्ति में दुखों की आत्यन्तिक निवृत्ति मानते हैं एतावता ये नैयायिक सिद्धान्त के पक्षपाती हैं।

यतश्च भाट्ट एवं प्राभाकरों ने शरीरवत्त्व को बन्धन माना है अतः उभयपक्ष में जीवन्मुक्ति की सम्भावना निराकृत होती है।

"मुरारेस्तृतीयः पन्थाः" इस अभियुक्ति पर आधारित दुःखों का अत्यन्ताभाव ही मोक्ष है–यह मुरारिमिश्र का सिद्धान्त है। इस मत में नित्यसुखाभिव्यक्ति का भाट्टसिद्धान्त तथा आत्यन्तिक दुःखनिवृत्ति का प्राभाकरसिद्धान्त अमान्य है।

---

१. न्या० प्र०, पृ० ३९–४०.

## अद्वैतवेदान्ते बन्धमोक्षयोः स्वरूपम्

तत्र तावदद्वैतवेदान्ते—"तत्त्वमसि"[१] इत्यादिमहावाक्यैर्ब्रह्माऽभिन्नस्वात्मस्वरूपसाक्षात्कार एव मोक्ष इत्यभ्युपगम्यते। यद्यप्यत्र दर्शने—"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः"[२] इति भगवत्पादशङ्कराचार्योक्त्या जीवब्रह्मणोर्न वास्तविको भेदः, किन्तु स अविद्याकल्पितः। अतोऽविद्यैव बन्धनं तन्निवृत्तिरेव मोक्षः। तदुक्तं वार्तिककारेण—

अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।।इति।

तस्माद् ब्रह्मस्वरूपोऽप्ययं जीवोऽनाद्यविद्यावशादहङ्कारशरीरेन्द्रियादिष्वहं ममेत्यध्यासेन संसरन् दरीदृश्यते।

**बन्ध— (अध्यास) स्वरूपम्—**

अध्यासो नाम भ्रान्तिः। तस्य च "स्मृतिरूपः परत्र पूर्वदृष्टावभासः"[३] इति लक्षणमभिवदति भाष्यकारः। स च ज्ञानाध्यासार्थाध्यासभेदेन द्विविधः। तत्र

---

## अद्वैतवेदान्त में बन्ध एवं मोक्ष का स्वरूप

अद्वैतवेदान्त में "तत्त्वमसि" इत्यादि महावाक्यों द्वारा ब्रह्माभिन्नस्वात्मस्वरूप के साक्षात्कार को मोक्ष कहा गया है। यद्यपि इस दर्शन में "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।" इस आचार्योक्ति पर आधारित जीव एवं ब्रह्म के वास्तविक भेद का अभाव है। भेदावभास कल्पित है। अतः अविद्या ही बन्धन है तथा उसकी निवृत्ति ही मोक्ष है। अतः वार्तिककार का सिद्धान्त है—

"अविद्यास्तमयो मोक्षः.............ज्ञातत्वेनोपलक्षितः।।१।।

अतश्च ब्रह्मस्वरूप होने पर भी यह जीव अनादि अविद्यावशात् अहंकार तथा शरीरेन्द्रियादि में **अहम्** एवं **मम** का अध्यास करने से संसारी बनता है।

**बन्ध (अध्यास) का स्वरूप**

अध्यास का अर्थ है— भ्रान्ति। उसका लक्षण भाष्यकार ने कहा है— "स्मृतिरूपः परत्र पूर्वदृष्टावभासः।" यह अध्यास दो प्रकार का होता है— १.

---

१. छा० उ० ६।८।७.
२. ब्र० ज्ञा० मा०, श्लो० २०.
३. ब्र० सू० शा० भा०, पृ० १०-१३.

भ्रान्तिज्ञानं ज्ञानाध्यासस्तद्विषयश्चार्थाध्यासः। अर्थाध्यासश्च स्वरूपाध्यास-संसर्गाध्यासभेदेन स्थूलतः पुनर्द्विविधः। अधिष्ठानज्ञानेन येषां स्वरूपं बाध्यते, ते स्वरूपेणाध्यस्ता इत्युच्यन्ते। यथा रज्जुसर्प-शुक्तिरजतादिकम्। तत्र रज्जुज्ञानेन सर्पः, शुक्तिज्ञानेन रजतं च स्वरूपेण बाध्येते। अतो रज्जौ सर्पः, शुक्तौ रजतं च स्वरूपेणाध्यस्ते इत्युच्येते। अयमेव स्वरूपाध्यासः। एवमेवात्मन्यनात्मभूतानां शरीरादीनामात्मज्ञानेन मिथ्यात्वनिश्चयरूपस्य बाधस्यात्मज्ञैरनुभूयमानत्वादात्मनि शरीरादीनां स्वरूपाध्यासः।

अनेन स्वरूपाध्यासेनैव सच्चिदानन्दस्वरूपे आत्मनि नास्ति, न भातीत्यसज्जडदुःखरूपेषु शरीरादिषु सच्चिदानन्दभ्रान्त्या च जीवः स्थूलोऽहम्, गौरोऽहमिति शरीरधर्मान्; पश्यामि, गच्छामीतीन्द्रियधर्मान्; सुखी, दुःखी, कर्ता, भोक्तेत्यन्तःकरणधर्मान्; अहमित्यन्तःकरणं च स्वात्मन्यारोप्य व्यवहरति।

यत्र चाधिष्ठानज्ञानेन सम्बन्धमात्रस्य बाधः, स सम्बन्धाध्यासः। यथाऽनात्मन्यात्माध्यासः। आत्मस्वरूपस्याबाध्यत्वादनात्मनि देहादौ नात्मा स्वरूपेणाध्यस्यति, किन्तु तस्य सम्बन्धमात्रस्याध्यासः, तत्त्वज्ञानेनानात्मना साकमस्य सम्बन्धस्यैव बाध्यमानत्वात्। अयमेव संसर्गाध्यास इत्यप्युच्यते[२]।

---

ज्ञानाध्यास एवम् २. अर्थाध्यास। भ्रान्तिज्ञान को **ज्ञानाध्यास** कहा जाता है तथा उसके विषय को **अर्थाध्यास** कहा जाता है। अर्थाध्यास के दो प्रभेद हैं— १. स्वरूपाध्यास एवम् २. संसर्गाध्यास। जिनका स्वरूप अधिष्ठानज्ञान से बाधित होता है वे स्वरूपाध्यास हैं। रज्जुसर्प एवं शुक्तिरूप्य इसके उदाहरण हैं। यथा रज्जुज्ञान से सर्प का बाध होता है तद्वत् शुक्तिज्ञान से रजत का बाध होता है। अतः रज्जु में सर्प एवं शुक्ति में रजत स्वरूप से अध्यस्त होते हैं। यह स्वरूपाध्यास कहलाता है। इसी प्रकार आत्मा में अनात्मभूत शरीर, इन्द्रियादि का आत्मज्ञान द्वारा मिथ्यात्वनिश्चय (बाध) की अनुभूति आत्मज्ञों को होती है— यह आत्मा में शरीरादि का स्वरूपाध्यास है।

इस स्वरूपाध्यास से ही सच्चिदानन्द स्वरूपआत्मा में नास्ति एवं न भाति की प्रतीति होती है तथा जो असत् है जड है तथा दुखात्मा है ऐसे शरीरादि में सच्चिदानन्द की भ्रान्ति से जीव **''स्थूलोऽहं'' ''गोरोऽहम्''** शरीर धर्मों को तथा पश्यामि, गच्छामि इत्यादि इन्द्रियधर्मों की, सुखी, दुःखी, कर्ता, धर्ता भोक्ता-

---

२. विचारचन्द्रोदये, पृ० १५८-१६६.

एवमनात्मन्यात्मनः सम्बन्धाध्यासः, अनात्मनश्चात्मनि स्वरूपाध्यास इत्ययमेवान्योन्याध्यास इत्यभिधीयते। अनेनैवान्योन्याध्यासेन जीवो बुद्धावहमिति, शरीरेन्द्रियगृहकलत्रादिषु च ममेति व्यवहरति। तदुक्तं भाष्यकारैः– "तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः"[१] इति।

अत्र बुद्धिरप्यहंप्रत्ययवेद्या, आत्माप्यहंप्रत्ययवेद्यः, एवमुभयोरेकप्रत्ययवेद्यत्वादुभयोरत्यन्तसान्निध्याच्च बुद्ध्यात्मनोस्तादात्म्यमेवाऽहमध्यासः, अयमेव हृदयग्रन्थिरित्युच्यते। एवमनाद्यविद्यापूर्वकयोरहंममाध्यासयोर्निवृत्त्यर्थमात्मयाथार्थ्यज्ञानमेव कारणमिति ज्ञानमेव मुक्तये मुख्योपायः।

---

इत्यादि अन्तःकरणधर्मों की एवम् अहम् –इस अन्तःकरण-धर्म की आरोपित-प्रतीति स्वात्मा में करता है।

जिस स्थल में अधिष्ठान ज्ञान से सम्बन्धमात्र का बाध होता है वह सम्बन्धाध्यास कहलाता है। यथा अनात्मा में आत्माध्यास। आत्मस्वरूप के अबाध्य होने से अनात्मभूत देहादि में आत्मा स्वरूप से अध्यस्त नहीं होता। केवल आत्म-सम्बन्ध का अध्यास होता है। तत्त्वज्ञान से बाध्य होता है अनात्मा के साथ आत्म-सम्बन्ध का। यह संसर्गाध्यास कहलाता है।

एवञ्च अनात्मवस्तु में आत्मसम्बन्ध का अध्यास तथा अनात्मा का आत्मा में स्वरूपाध्यास होना अन्योन्याध्यास कहलाता है। इसी अन्योन्याध्यास के कारण जीव का **अहम्**-व्यवहार बुद्धि में तथा **मम**-व्यवहार शरीर, इन्द्रिय, गृह, कलत्र प्रभृति में उपपन्न होता है। अतएव भाष्यकार ने सुस्पष्ट कहा है— "तथाप्यन्योन्यस्मिन् ........लोकव्यवहारः।"

यद्वत् बुद्धि अहम्पदवेदनीय है तद्वत् आत्मा भी अहम्प्रत्ययवेद्य है। एक-प्रत्ययवेद्य होने से तथा इन दोनों में अत्यन्त सान्निध्य होने से बुद्धि तथा आत्मा का तादात्म्य ही अहमात्मक अध्यास है। इसे शास्त्रकार ने हृदयग्रन्थि की संज्ञा प्रदान की है। इस प्रकार अनादि अविद्यामूलक द्विविध अध्यास (अहम् एवं मम) की निवृत्ति के प्रति आत्मज्ञान (यथार्थ) को कारण माना जाता है। अतः मुक्ति का मुख्य उपाय ज्ञान ही है।

---

१. ब्र० सू० शा० भा०, ९-१०.

**मोक्षोपायः**

एवमनाद्यविद्यापूर्वकयोरहंममाध्यासयोर्निवृत्त्यर्थमात्मयाथार्थ्यज्ञानमेव कारणमिति बन्धनिवृत्तौ ज्ञानमेव मुख्योपाय इत्यद्वैतिभिरङ्गीक्रियते। तच्च ज्ञानं नहि सर्वेषां सुलभम्, किन्त्वधिकारिणामेव। "अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता"[१] इति परमहंसेन सदानन्दयतिनाऽधिकारिणो लक्षणमुक्तम्। अत एव भगवत्पादैः शङ्कराचार्यैरपि–"अथातो ब्रह्मजिज्ञासा"[२] इत्यत्र 'अथ'-शब्दस्यानन्तर्यार्थत्वात् कस्मादनन्तरं ब्रह्म जिज्ञासितव्यमिति जिज्ञासायाम्–"नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं च। तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये। तस्मादथशब्देन यथोक्तसाधनसम्पत्त्याऽऽनन्तर्यमुपदिश्यते"[३] इति विवेकादिसाधन-चतुष्टयसम्पन्न एवात्राधिकारीति निदर्शितम्।

---

**मोक्ष का उपाय**

द्विविध अध्यास (अहम् एवम् मम) की निवृत्ति आत्मज्ञान (तात्त्विक) से ही होती है अतः अद्वैती लोग बन्धनिवृत्ति के प्रति ज्ञान को ही मुख्य उपाय मानते हैं। यह उदात्तज्ञान सर्वसुलभ नहीं है। कतिपय साधक ही इस ज्ञान के अधिकारी होते हैं। परमहंस सदानन्द यति ने अधिकारी का लक्षण बताया है— "अधिकारी तु विधिवदधीत....... साधनचतुष्टसम्पन्नः प्रमाता।।" भगवत्पाद शङ्कराचार्य ने "अथातो ब्रह्मजिज्ञासा" सूत्र में अथशब्द के आनन्तर्य अर्थ को बताकर किस के अनन्तर ब्रह्मजिज्ञासा करनी चाहिए ऐसी जिज्ञासा का समाधान किया है— "नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः। शमदमादिसाधनसम्पद्, मुमुक्षुत्वं च।.........यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदिश्यते। इस ग्रन्थ द्वारा आचार्य भगवत्पाद ने विवेकादि-साधन-चतुष्टयसम्पन्न साधक की ही अधिकारिता प्रतिपादित की है।

साधनचतुष्टय के अन्तर्गत शम, दम, उपरति, तितिक्षा, समाधान एवं श्रद्धा की परस्पर सापेक्षता होने से इनके सम्मिलितस्वरूप को एक साधन के रूप में गृहीत

१. वे० सा०, पृ० ३-४.
२. ब्र० सू० १।१।१.
३. ब्र० सू० शा० भा०, पृ० ३६-३७.

अत्र साधनचतुष्टये शमदमोपरतितितिक्षासमाधानश्रद्धाख्याः परस्परसापेक्षा इति सम्मिलितानां तेषामेकसाधनत्वेन ग्रहणम्। शमो नामान्तरिन्द्रियस्य मनसो निग्रहः, दमस्तु बहिरिन्द्रियनिग्रहः, उपरतिर्नाम स्रक्चन्दनवनितादिविषयेभ्यो व्यावृत्तानामिन्द्रियाणां पुनस्तत्राप्रवृत्तिः, यद्वा नित्यादिकर्मणां विधिवच्चतुर्थाश्रमस्वीकारेण परित्यागः, नाऽहं कर्तेत्यवस्थानमुपरतिरित्यर्थः। शीतोष्णादिद्वन्द्वसहिष्णुता तितिक्षा। समाधानं नाम मनसो विक्षेपनाशः। गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धेत्युच्यते[1]।

## ज्ञानस्यान्तरङ्गसाधनानि

अद्वैतदर्शने नित्यनैमित्तिकादिकर्माणि चित्तशुद्धिद्वाराऽऽरादुपकारकाणीति तान्यात्मज्ञाने बहिरङ्गसाधनानीत्युच्यन्ते। विवेकादिसाधनचतुष्टयं श्रवण-मनन-निदिध्यासनानि तत्त्वंपदार्थशोधनं चेत्यष्टौ सन्निपत्योपकारकाणीत्यन्तरङ्ग-साधनानीत्यभिधीयन्ते। तत्रापि श्रवण-मनन-निदिध्यासनानि मुख्यान्तरङ्गाणि[2]। अत एव मैत्रेयीब्राह्मणे–"आत्मा वा अरे द्रष्टव्यः"[3] इत्यात्मदर्शनमनूद्य

---

किया गया है। अन्तरिन्द्रिय=मनस् का निग्रह **शम** कहलाता है। बाह्य इन्द्रियों का निग्रह **दम** कहलाता है। स्रक्, चन्दन, वनिता प्रभृति विषयों से व्यावृत्त इन्द्रियों की पुनः उनमें अप्रवृत्ति **उपरति** कहलाती है। अथवा चतुर्थाश्रम स्वीकार द्वारा नित्यप्रभृति कर्मों का परित्याग, उपरति कहलाता है। "अहं कर्ता नास्मि" इस निश्चय से स्थित रहना उपरति कहलाता है। शीतोष्णादि द्वन्द्व की सहिष्णुता तितिक्षा है। मनस् के विक्षेपनाश को **समाधान** कहा जाता है। गुरुपदिष्टवेदान्तवाक्यों में विश्वास (दृढ़ निश्चय) श्रद्धा कहलाता है।

## ज्ञान के अन्तरङ्ग साधन

अद्वैतदर्शन में नित्य-नैमित्तिक प्रभृति कर्मों को चित्तशुद्धि द्वारा आराद्-उपकारक माना जाता है। इन्हें आत्मज्ञान के प्रति बहिरङ्गसाधन माना जाता है। विवेकादि साधनचतुष्टय, श्रवण, मनन, निदिध्यासन तथा तत्त्वम्पदार्थशोधन–इन आठों के सन्निपत्य उपकारक होने से इन्हें अन्तरङ्ग साधन माना जाता है। श्रवण, मनन एवं निदिध्यासन इन तीनों को मुख्य अन्तरङ्ग साधन माना गया है। अतएव मैत्रेयी ब्राह्मण में "आत्मा वा अरे द्रष्टव्यः।" इस श्रुति से आत्मदर्शन का अनुवाद

---

१. विचारसागरस्य पीताम्बरजीकृतस्य १९तमा टिप्पणी, पृ० १०६-१०७.

२. विचारसागरे, पृ० १०७-११०.

३. बृ० उ० २।४।५.

तत्साधनत्वेन–"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"[1] इति श्रवणादीन्यात्मदर्शने साधनत्वेनोपदिष्टानि।

तत्रभवता श्रीधर्मराजाध्वरीन्द्रेण–"तत्र श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया। मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः। निदिध्यासनं नामानादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलो मानसो व्यापारः"[2] इति श्रवणादीनां लक्षणान्युक्तानि।

मुमुक्षुः स्वात्मस्वरूपजिज्ञासया–"स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"[3] इति श्रुत्यादेशानुसारं यदा हि गुरुमुपसरति, तदा स कारुणिको गुरुरुपनताय शिष्याय प्रपञ्चाध्यारोपापवादाभ्यां[4] 'तत्'-पदस्वरूपम्,

---

कर उसके साधन रूप से श्रवणादि त्रिक को उपदिष्ट किया गया है— "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।"

आचार्य श्रीधर्मराजाध्वरीन्द्र ने श्रवणादि के लक्षण (सुविशद) प्रतिपादित किये हैं। तद्‌यथा—

"तत्र श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि.........मानसीक्रिया। मननं नाम......मानसो व्यापारः। निदिध्यासनं.......मानसोव्यापारः।"

मुमुक्षु साधक स्वात्मस्वरूप जिज्ञासा से "स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।" इस श्रौत आदेशसे गुरु के समीप जाता है तब कारुणिक गुरु उपनत शिष्य को अध्यारोप एवम् अपवादन्याय से तत्पदस्वरूप को, पञ्चकोशविवेक द्वारा मुञ्ज से इषीका की भाँति त्वम् पद स्वरूप का बोधन कर तत् एवं त्वम् पद के लक्ष्य आत्मा = ब्रह्म के अभेद को "तत् त्वमसि" इस महावाक्य से प्रबोधित करते हैं। इस प्रकार गुरुमुख से महावाक्य के तात्पर्य का अवधारण कर वेदान्तवाक्य से जीव और ब्रह्म के मध्य भेद का प्रतिपादन होता

---

१. बृ० उ० २।४।४.
२. वे० प०, पृ० ३९१.
३. मुण्ड० १।२।१२.
४. अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते।
शिष्याणां बोधसिद्ध्यर्थं तत्त्वज्ञैः कल्पितः क्रमः।।

पञ्चकोशविवेकेन[१] च मुञ्जादिषीकेव 'त्वं'-पदस्वरूपं बोधयित्वा तयोस्तत्त्वंपदयोर्लक्ष्यभूतयोरात्मब्रह्मणोरभेदं "तत्त्वमसि"[२] इति महावाक्येन प्रबोधयति। एवं गुरुमुखान्महावाक्यतात्पर्यावधारणेन 'वेदान्तवाक्येन जीवब्रह्मणोर्भेदोऽभिहितः, उताभेदः' इत्याकारकस्य प्रमाणगतसंशयस्य निवृत्तिर्जायते।

एवं श्रवणेन प्रमाणगतदोषनिवृत्तावपि 'अहं ब्रह्माऽभिन्नो न वा' इत्याकारकस्य प्रमेयगतसंशयस्य विद्यमानत्वात् तन्निवृत्त्यर्थं 'जीवो ब्रह्माऽभिन्नः, सच्चिदानन्दरूपत्वात्, ईश्वरचैतन्यवत्'; यद्वा 'यथा घटाकाशो महाकाशाभिन्नस्तथाऽऽत्मापि ब्रह्माऽभिन्नः' इत्यभेदसाधकयुक्तिभिस्तथा 'जीवब्रह्मणोर्भेदो मिथ्या,

---

है या अभेद का इत्याकारक प्रमाणगत संशय की निवृत्ति होती है।

श्रवण द्वारा प्रमाणगत दोष निवृत्ति होने पर भी "मैं ब्रह्म से अभिन्न हूँ या नहीं" इत्याकारक प्रमेयगत संशय की विद्यमानता बनी ही रहती है। उसकी निवृत्ति हेतु अनेक प्रकार से मनन का उपदेश किया जाता है। तद्यथाअभेदसाधक युक्ति (अनुमान) वाक्य है— "जीवो ब्रह्माऽभिन्नः, सच्चिदानन्दरूपत्वात् ईश्वरचैतन्यवत्। दूसरा वाक्य है— यथा घटाकाशो महाकाशाभिन्नस्तथात्मापि ब्रह्माभिन्नः। भेदबाधक

---

१. अद्वैतदर्शने स्थूल-सूक्ष्म-कारणाख्येषु शरीरत्रयेष्वेवान्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाख्यः पञ्चकोशविभागः क्रियते। तत्र पञ्चीकृतपञ्चभूतानां पञ्चविंशतितत्त्वात्मकं स्थूलशरीरमन्नरसेनैव भूत्वान्नरसेनाभिवृद्धिं प्राप्यान्नारसमयपृथिव्यां विलीयत इत्यन्नमयकोश इत्युच्यते। अपञ्चीकृतपञ्चमहाभूतानां रजोगुणोद्भूतैः पञ्चप्राण-पञ्चकर्मेन्द्रियैर्युक्तः प्राणमयः। अपञ्चीकृतानामेव भूतानां सत्त्वांशसमुद्भूतैः पञ्चज्ञानेन्द्रियैर्मनोयुक्तो मनोमयः। तैरेव ज्ञानेन्द्रियैर्बुद्धियुक्तो विज्ञानमयः। एतत् कोशत्रयं लिङ्गशरीरमित्युच्यते। स्वरूपाज्ञानमानन्दमयकोशः तदेव कारणशरीरम्। तदुक्तं विद्यारण्यस्वामिभिः—

स्यात् पञ्चीकृतभूतोत्थो देहः स्थूलोऽन्नसंज्ञकः।<br>
लिङ्गे तु राजसैः प्राणैः प्राणः कर्मेन्द्रियैः सह।।<br>
सात्त्विकैर्धीन्द्रियैः साकं विमर्शात्मा मनोमयः।<br>
तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका।।<br>
कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः।<br>
तत्तत्कोशैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत्।। इति।

(पञ्च० १।३४-३६)

२. छा० उ० ६।८।७.

औपाधिकत्वात्, घटाकाशमहाकाशगतभेदवत्' इति भेदबाधकयुक्तिभिश्चानुशीलनरूपं मननमुपदिष्टम्। अनेन मननेन प्रमेयगतसंशयो निवर्तते। एवं मननशीलस्यापि कदाचिदनादिवासनावशात् 'प्रपञ्चः सत्यः, जीवब्रह्मणोर्भेदोऽपि सत्यः, अहं कथं ब्रह्म स्याम्' इत्याकारिकी विपरीतभावना चोदीयादिति तन्निवारणार्थं तैलधारावन्निरन्तरात्मानुचिन्तनरूपं निदिध्यासनमुपदिष्टम्[1]। एवं श्रवणादीनि ब्रह्म-साक्षात्कारे प्रतिबन्धकानामसम्भावनाविपरीतभावनादीनां निवर्तनद्वारा सहायका-नीत्येतानि ब्रह्मज्ञानेऽन्तरङ्गसाधनानीति कथ्यन्ते। श्रवणादीनां प्रतिबन्धकनिवारकत्वं वेदान्तकल्पलतिकायामुक्तं मधुसूदनसरस्वतीभिः। तथाहि—"महावाक्यकरण-कस्तत्स्वरूपसाक्षात्कार एव प्रतिबन्धचतुष्टयरहितो मोक्षसाधनम्.....। प्रतिबन्धचतुष्टयं च विषयभोगवासना, प्रमाणगतासम्भावना, प्रमेयगतासम्भावना, विपरीतभावना चेति। तत्र विषयासक्तेः श्रवणाङ्गभूताः शमदमादयो निवर्तकाः, प्रमाणगतासम्भावनायाः श्रवणं निवर्तकम्, प्रमेयगतासम्भावनाया मननम्, विपरीतभावनायाश्च निदिध्यासनं निवर्तकमिति"[2] इति।

---

युक्तिवाक्य है— "जीवब्रह्मणोर्भेदो मिथ्या औपाधिकत्वात् घटाकाशमहाकाशगतभेदवत्। इस मनन से प्रमेयगत संशय की निवृत्ति होती है।

उपर्युक्त प्रकार से मननशील साधक को भी अनादिवासनावशात् विपरीत-भावना उदित हो सकती है— "प्रपञ्चः सत्यः।" "जीवब्रह्मणोर्भेदोऽपि सत्यः।" "अहं ब्रह्म कथं स्याम्।" इत्येवमादि। इस विपरीतभावना की निवृत्ति हेतु तैलधारावत् निरन्तर आत्मानुचिन्तन के लिए निदिध्यासन का उपदेश किया गया है। इस प्रकार सुविदित होता है कि ब्रह्मसाक्षात्कार के प्रति प्रतिबन्धक-असम्भवाना एवं विपरीत-भावना के निवर्तन करने से श्रवण, मनन एवं निदिध्यासन को ब्रह्मज्ञान में अन्तरङ्ग साधन कहा गया है। मधुसूदन सरस्वती ने वेदान्तकल्पलतिका में श्रवणादित्रिक को प्रतिबन्धक निवारक कहा है। तद्यथा— "महावाक्यकरणकस्तत्वस्वरूप-साक्षात्कार एवं प्रतिबन्धचतुष्टयरहितो मोक्षसाधनम्..........। प्रतिबन्धचतुष्टयं च निदिध्यासनं निवर्तकमिति।।"

श्रीवाचस्पति मिश्र ने "ते ध्यानयोगानुगता........निगूढाम्।" श्रुति के प्रामाण्य से निदिध्यासन को ब्रह्मसाक्षात्कार में साक्षात् कारण प्रतिपादित किया है। उनका

---

१. वि० सा० टिप्पणी ३०-३१, पृ० १११-११२.
२. वे० क०, पृ० ११-१२.

तत्र–"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्"[१] इति श्रुतिं प्रमाणयद्भिर्वाचस्पतिमिश्रैर्निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणमित्युच्यते। तेषामयमाशयः–त्रिषु साधनेषु नहि त्रीण्यपि समानरूपेण साधनानि भवन्ति, किन्त्वङ्गाङ्गिभावेन। तस्मात् श्रवणमननोभयविशिष्टध्यानस्यैव फलसाधनत्वं युक्तमिति श्रवणमननयोरङ्गत्वम्, निदिध्यासनस्याङ्गित्वमिति[२]।

विवरणाचार्यास्तु श्रवणं प्रधानम्, मनननिदिध्यासने तदुत्तराङ्गे इति श्रवणस्यैव ब्रह्मसाक्षात्कारे साक्षात्कारणत्वमित्यङ्गीकुर्वन्ति। यथा घटादिकार्योत्पत्तौ मृत्पिण्डादीनां प्रधानकारणत्वम्, चक्रचीवरादीनां च सहकारिकारणत्वम्, तथैव ब्रह्मसाक्षात्कारे श्रवणं प्रधानम्, मनननिदिध्यासने च सहकारिकारणे इति तेषामभिप्रायः[३]।

श्रीनिश्चलदासास्तु न श्रवणादीनि, किन्तु श्रोत्रेन्द्रियसंयुक्तं 'तत्त्वमसि' इति महावाक्यमेव ब्रह्मज्ञाने साक्षात्साधनमित्यभिप्रयन्ति। तेषामिदमैदम्पर्यम्–यथा कज्जलं नेत्रगतदोषनिवारणद्वारा सूर्यदर्शने नेत्रस्य सहायकं भवति, तथा श्रवण-मनन-निदिध्यासनानि प्रमाणगत-प्रमेयगत-संशययोर्विपरीतभावनायाश्च निवर्तकतया सहायकानि, न तु मुख्यसाधनानीति[४]।

---

आशय है— तीन श्रवणादि साधनों में अङ्गाङ्गिभाव है। फलसाधन के प्रति अङ्गी कारण निदिध्यासन है तथा अङ्गभाव श्रवण एवम् मनन साधनों में है।

विवरणाचार्य श्रवण को प्रधान कारण मानते हैं तथा मनन एवं निदिध्यासन उसके उत्तराङ्ग हैं। अतः ब्रह्मसाक्षात्कार के प्रति साक्षात्कारण श्रवण ही है। यद्वत् घटादिकार्य की उत्पत्ति में मृत्पिण्डादि को प्रधानकारण माना जाता है तथा चक्रचीवरादि को सहकारिकारण माना जाता है तद्वत् ब्रह्मसाक्षात्कार के प्रति श्रवण प्रधानकारण तथा मनन-निदिध्यासन सहकारिकारण होते हैं। श्रीनिश्चलदास ने ब्रह्मज्ञान के प्रति साक्षात्साधन श्रोत्रेन्द्रियसंयुक्त "तत्त्वमसि" महावाक्य को ही माना है श्रवण या निदिध्यासन को नहीं। उनका आशय यह है— सूर्यदर्शन में नेत्र का सहायक कज्जल नेत्रगत दोषनिवारण द्वारा उपकारक होता है तद्वत् श्रवण, मनन एवं निदिध्यासन प्रमाणगत एवं प्रमेयगत संशयों का तथा विरीतभावना का निवर्तन करने में सहायक कारण होते हैं मुख्यसाधन नहीं।

---

१. श्वे० उ० १।३.
२. वे० प०, पृ० ३९२.
३. वे० प०, पृ० ३९३.
४. वि० सा०, पृ० ११३–११५.

**ब्रह्मज्ञानेनाविद्यासहितप्रपञ्चनिवृत्तिः**

एवं 'दशमस्त्वमसि' इतिवत् "तत्त्वमसि" इति महावाक्येन ब्रह्मापरोक्षज्ञानोदये ब्रह्म नास्ति, न भातीत्याकारयोरसत्त्वापादकाभानापादका-वरणयोर्निवृत्त्या जीवस्य देहेन्द्रियादिषु विद्यमानो ममाध्यासः, अहङ्कारात्मनोस्तादात्म्यरूपोऽहमध्यासश्च निवर्तते। अहमध्यासनिवृत्तिरेव सिद्धान्ते हृदयग्रन्थिभेदनमित्युच्यते। तथा हि श्रूयते–

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।[1] इति।

इदं च ब्रह्मज्ञानमविद्यासहितप्रपञ्चस्यापि निवर्तकमित्यद्वैतवेदान्ते ब्रह्मज्ञानिनः प्रपञ्चस्य मिथ्यात्वं प्रतिपादयन्ति।

ननु ब्रह्मण एव प्रपञ्चसाधकत्वात् तदेव कथं तस्य निवर्तकमपि भवतीति

---

**ब्रह्मज्ञान से अविद्यासहित प्रपञ्च की निवृत्ति**

यद्वत् "दशमस्त्वमसि" महावाक्य से अपरोक्ष ज्ञान उदित होता है तद्वत् तत् त्वमसि–महावाक्य से ब्रह्मात्मसाक्षात्कार उदित होता है। तदनन्तर ब्रह्म नास्ति— इस असत्त्वापादक आवरण की निवृत्ति होती है एवम् नभाति–इस अभानापादक आवरण की निवृत्ति होती है। एवञ्च देह एवम् इन्द्रिय आदि में जीव का ममाध्यास अथ च अहंकार एवम् आत्मा का तादात्म्यरूप अहमध्यास स्वतः (कारण-निवृत्ति से) निवृत्त हो जाते हैं। वेदान्तसिद्धान्त में अहमध्यासनिवृत्ति का पर्याय हृदयग्रन्थिभेदन शब्द पर्याप्त आदृत है। तद्यथा—

भिद्यते हृदयग्रन्थिः.............तस्मिन् दृष्टे परावरे॥१॥

यह ब्रह्मज्ञान अविद्यासहित प्रपञ्च का निवर्तक है। अतएव अद्वैतवेदान्त-सिद्धान्त में ब्रह्मज्ञानी साधक प्रपञ्च के मिथ्यात्व का प्रतिपादन करते हैं।

जिज्ञासा उदित होती है कि जो ब्रह्म प्रपञ्च का साधक है वह उसका निवर्तक कैसे हो सकता है। इसका समाधान है— सामान्य सूर्यप्रकाश तृण-काष्ठादि का प्रकाशक होता है वही सूर्यप्रकाश जब सूर्यकान्तमणि पर आरूढ होता है तब वह तृणकाष्ठादि को जला देता है। तद्वत् सामान्य ब्रह्मचैतन्य जगत् का साधक है किन्तु वह वृत्ति (अहं ब्रह्मास्मि) पर आरूढ होता है तो सम्पूर्ण प्रपञ्च का बाधक बन जाता है। स्वामी मधुसूदन सरस्वती ने दृष्टान्तोपस्थापन के साथ सुस्पष्ट कहा है— "तरति

---

१. मुण्ड० २।२।८.

चेन्न, यथा सामान्यो हि सूर्यप्रकाशस्तृणादेर्भासकोऽपि सूर्यकान्तमण्यारूढः सन् तस्यैव दाहको भवति, तथा सामान्यं हि ब्रह्म-चैतन्यं जगतः साधकमपि तदेव 'अहं ब्रह्मास्मि' इति वृत्त्यारूढं सत् सर्वस्यापि प्रपञ्चस्य बाधकं भवति। तदुक्तं सदृष्टान्तं मधुसूदनसरस्वतीभिः-"तरति शोकमात्मवित्"[१], "सोऽविद्याग्रन्थिं विकिरतीह सोम्य"[२] इत्यादिना तन्निवर्तकत्वस्य च प्रमितत्वात्। वृत्तिप्रतिबिम्बतचितो निवर्तकत्वे तु नोक्तवचसः शङ्कापि। तदुक्तम्-

तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत्।
सूर्यकान्तमुपारुह्य तन्न्यायं विनियोजयेत्।।[३]इति।

तदेवमद्वैतदर्शने ब्रह्मज्ञानेन हृदयग्रन्थेर्भेदे, अविद्यासहितसकलप्रपञ्चस्य निवृत्तौ च स्वस्वरूपावाप्त्या मुक्त इत्युच्यते। तस्मादत्र सिद्धान्ते मोक्षो नाम न लोकान्तरप्राप्तिरूपः,

न मोक्षो नभसः पृष्ठे न पाताले न भूतले।
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते।।[४]

"न तस्य प्राणा उत्क्रामन्ति"[५], "ब्रह्म वेद ब्रह्मैव भवति"[६] इत्यादिश्रुतिषु लोकान्तरप्राप्तेर्निषिद्धत्वात्।

---

शोकमात्मवित्।" एवम् "सोऽविद्याग्रन्थिं विकिरतीह सौम्य।" इत्यादि श्रुतिवाक्यों द्वारा वृत्त्यारूढ ब्रह्म में प्रपञ्च- निवर्तकता प्रमित है। एवंच वृत्तिप्रतिबिम्बित चित् के प्रपञ्चनिवर्तक होने में कोई आशङ्का शेष नहीं रहती। तद्यथा— "तृणादेर्भासिकाऽप्येषा.........तन्न्यायं विनियोजयेत्।।१।।

इस प्रकार अद्वैत दर्शन में ब्रह्मज्ञान से हृदयग्रन्थि के भेदन होने से अविद्या एवम् उसके कार्य सम्पूर्ण प्रपञ्च की निवृत्ति होने पर स्वस्वरूप की प्राप्ति से साधक मुक्त कहलाता है। अतः अद्वैत-सिद्धान्त में लोकान्तर-प्राप्ति को मोक्ष नहीं कहा जाता। तद्यथा— "न मोक्षो नभसः पृष्ठ......मोक्ष इतीष्यते।।१।।

"न तस्य प्राणा उत्क्रामन्ति।" एवं "ब्रह्म वेद ब्रह्मैव भवति।" इत्यादि श्रुतियों में लोकान्तरप्राप्ति का स्पष्ट निषेध प्राप्त होता है। यह स्वस्वरूप की प्राप्ति अप्राप्त ग्राम की प्राप्ति जैसी नहीं है किन्तु प्राप्त चामीकर में अप्राप्तत्वभ्रम की निवृत्ति होने से चामीकर प्राप्ति कही जाती है तद्वत् स्वरूप के अप्राप्त नहीं रहने पर भी जो

---

१. छा० उ० ७।१।३. २. मुण्ड० २।१।१०.
३. अ० सि०, पृ० ८८६. ४. अ० पू० २।२३.
५. बृ० उ० ४।४।६. ६. मुण्ड० ३।२।९.

इयं च स्वस्वरूपप्राप्तिर्न ग्रामादेरिवाप्राप्तस्य प्राप्तिः, किन्तु प्राप्तस्यैव चामीकरस्याप्राप्तत्वभ्रमनिवर्तनमात्रेणेव प्राप्तत्वप्रतीतिः। यथा रोगनिवृत्तौ स्वाभाविकस्यारोग्यस्य प्राप्तिव्यपदेशः, तथैवाऽज्ञाननिवृत्तौ ब्रह्मणः प्राप्तत्वव्यपदेशः। अत एव भगवत्पादैः शङ्कराचार्यैः प्रश्नोत्तररत्नमालिकायाम्–"मोक्षश्च को ह्यविद्यास्तमयः"[१] इत्यभिहितम्। नन्वेवं प्राप्तस्यैव प्राप्तित्वे तस्यासाध्यत्वादपुरुषार्थत्वापत्तिरिति चेन्न, स्वरूपावारकाविद्यानिवर्तकान्तःकरणवृत्तेः साध्यत्वमात्रेणापि पुरुषार्थत्वोपपत्तेः। तदुक्तं मधुसूदनसरस्वतीभिः– "प्राप्तप्राप्तिरूपतया फलस्यानन्दप्रकाशस्य स्वरूपतोऽसाध्यत्वेऽपि तत्तिरोधायकाज्ञाननिवर्तकवृत्तेः साध्यत्वमात्रेण साध्यत्वोपपत्तेः, कण्ठगतचामीकरादौ तथा दर्शनात्। तस्मादज्ञानहानिरात्मस्वरूपं तदाकारा वृत्तिर्वेति सिद्धम्। ये तु पञ्चमप्रकारादिपक्षाः, ते तु मन्दबुद्धिव्युत्पादनार्था इति न तत्समर्थनमर्थयामः"[२] इति। अत एवाविद्यानिवृत्तौ मुक्तस्यैव पुनर्मुक्तत्वव्यपदेश इति विद्यारण्यस्वामिभिरप्युक्तम्–

---

अप्राप्तत्वभ्रम रहता है उसकी निवृत्तिमात्र से स्वरूपावाप्ति कही जाती है।

यथा नीरोग व्यक्ति को आगन्तुक रोग से सम्पर्क होने पर ओषधिप्रयोग से रोगनिवृत्ति होती है। आरोग्य स्वाभाविक है तथापि आरोग्यप्राप्ति का व्यपदेश होता है। तद्वत् साधक के अज्ञान की निवृत्ति होने से ब्रह्मप्राप्ति का व्यपदेश होता है। अतएव भगवत्पाद शङ्कराचार्य ने प्रश्नोत्तरमालिका में "मोक्षश्च को ह्यविद्यास्तमयः।" कहा है।

जिज्ञासा उदित होती है कि प्राप्त की प्राप्ति मानने पर वह पुरुषोपाय से असाध्य होगा ऐसी स्थिति में मोक्ष की अपुरुषार्थता प्राप्त होगी। इसका समाधान है– स्वरूप का आवरण करने वाली अविद्या का निवर्तन अन्तःकरण की वृत्ति से होता है। वह वृत्ति पुरुषोपायसाध्य होती है इतने मात्र से मोक्ष का पुरुषार्थ होना निर्बाध है। आचार्य मधुसूदन सरस्वती जी ने इसकी विशद व्याख्या की है। तद्यथा—

"प्राप्तप्राप्तिरूपतया फलस्यानन्दप्रकाशस्य......न तत्समर्थनमर्थयामः।"

विद्यारण्यस्वामी ने भी अविद्यानिवृत्तिमात्र से मुक्त का ही पुनर्मुक्तत्वव्यपदेश होता है—ऐसा कहा है। तद्यथा—

१. प्र० मा०, श्लो० ६६.

२. अ० सि०, पृ० ८८५.

मुक्तौ तमोऽतिरेकेण नान्तरायोऽन्य इष्यते।
यतोऽतोऽज्ञानविध्वस्तौ मुक्तः सन्नेव मुच्यते।।[1] इति।

**ज्ञानकर्मणोः क्रमसमुच्चयवादः**

एवं स्वस्वरूपावाप्तिरूपाया मुक्तेर्नित्यसिद्धत्वाज्ज्ञानमात्रमविद्यानिवर्तनद्वारा तद्धेतुरुच्यते। न चात्र नित्यनैमित्तिकादीनि कर्माणि मोक्षहेतुत्वेनाभ्युपगम्यन्ते। यतो हि मोक्षस्य क्रियाजन्यत्वे यदुत्पद्यते तद्विनश्यतीति नियमेन मोक्षस्यानित्यत्वापत्तिः। किञ्च, "उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च क्रियाफलम्" इति वार्त्तिककारेण क्रियाफलस्य चातुर्विध्यमुक्तम्। अत्र ब्रह्मणो नित्यसिद्धत्वात् तत्प्राप्तिरूपो मोक्षो नोत्पद्यते। ब्रह्मणः स्वात्मरूपत्वेन न च तस्यापूर्वाप्तिरपि, एवमनुत्पन्नत्वादेव तस्य विकृतिरपि न सम्भवति। नापि संस्कार्यश्च मोक्षः संस्कारो हि गुणाधानेन, दोषापनयनेन वा भवति। न चात्र गुणाधानसम्भवः, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य। नापि दोषापनयः, नित्यशुद्धब्रह्मस्वरूप-

"मुक्तौ तमोऽतिरेकेण........मुक्तःसन्नेव मुच्यते।।१।।

**ज्ञान एवं कर्म का क्रमसमुच्चयवाद**

उपर्युक्त विवेचन से सुविदित होता है कि स्वस्वरूपावाप्तिरूप मुक्ति नित्यसिद्ध है इसकी अप्राप्तप्राप्तिवत् प्राप्ति अविद्यानिवर्तक ज्ञानहेतुक है। अतः अद्वैतदर्शन में मोक्ष के प्रति नित्यनैमित्तकादि कर्मों की हेतुता अमान्य है। कारण सुस्पष्ट है— मोक्ष को यदि क्रियाजन्य माने तो उत्पत्तिशील की विनाशशीलता नियमेन प्राप्त होने से मोक्ष की अनित्यता आपतित होगी। यह भी ध्यातव्य है— वार्तिककार ने क्रियाफल को चार श्रेणियों में विभाजित किया है— १. उत्पत्ति २. आप्ति (प्राप्ति) ३. विकृति तथा ४. संस्कृति। यतश्च ब्रह्म स्वात्मा है अतः उसकी अपूर्व प्राप्ति नहीं मान्य होगी। यतश्च स्वात्मरूप ब्रह्म उत्पन्न नहीं होता अतः उसकी विकृति (विकार्यता) भी नहीं होगी। तद्वत् मोक्ष (ब्रह्म) की संस्कृति (संस्कार्यता) भी सम्भव नहीं है। संस्कार-क्रिया में गुणाधान द्वारा दोषापनयन होता है। जिसमें अतिशय का आधान सम्भव नहीं होगा तादृश ब्रह्मस्वरूप मोक्ष में गुणाधान कथमपि सम्भव नहीं है। नित्यशुद्ध ब्रह्मरूप मोक्ष में दोष है नहीं जिसका अपनोदन किया जा सके। इस प्रकार क्रिया के चतुर्विध फल में से किसी एक की भी (उत्पत्ति, आप्ति, विकृति एवं संस्कृति) उपपत्ति सम्भव नहीं होने से मोक्ष को क्रियाजन्य नहीं माना जा सकता। अतएव नाना श्रुतिवाक्यों द्वारा

१. बृ० वा० सा०, पृ० २३४४.

त्वान्मोक्षस्य। एवं क्रियाफलानामुत्पत्ति–आप्ति–विकृति–संस्कृतीनां मोक्षेऽनुपपन्नत्वान्न क्रियाजन्यो हि मोक्षः[१]। अत एव–"ज्ञानादेव तु कैवल्यम्", "ऋते ज्ञानान्न मुक्तिः" इत्यादिश्रुतयो ज्ञानस्यैव मोक्षहेतुत्वं प्रतिपादयन्ति।

तस्मादद्वैतवेदान्ते ज्ञानमेव साक्षान्मोक्षसाधनम्। नित्यनैमित्तिकादिकर्माणि तु चित्तशुद्धिमात्रोपयोगीनीति। न चात्र ज्ञानकर्मणोः समसमुच्चयः, किन्तु क्रमसमुच्चयः। तदुक्तं सुरेश्वराचार्यैः–"नित्यकर्मानुष्ठानाद्धर्मोत्पत्तिर्धर्मोत्पत्तेः पापहानिस्ततश्चित्तशुद्धिस्ततः संसारयाथात्म्यावबोधस्ततो वैराग्यं ततो मुमुक्षुत्वं ततस्तदुपायपर्येषणं ततः सर्वकर्मसंन्यासस्ततो योगाभ्यासस्ततश्चित्तस्य प्रत्यक्प्रवणता ततस्तत्त्वमस्यादिवाक्यार्थपरिज्ञानं ततोऽविद्योच्छेदस्ततः स्वात्मन्यवस्थानम्"[२] इति।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते।।[३]

इति गीतायामपि स एवाभिप्रायो निरूपितः।

---

ज्ञान की ही मोक्षहेतुता प्रतिपादित की गई है। तद्यथा– "ज्ञानादेव तु कैवल्यम्, ऋते ज्ञानान्न मुक्तिः।" इत्येवमादि।

अतः अद्वैतवेदान्तदर्शन में ज्ञान को ही मोक्ष के प्रति साक्षात् कारण माना जाता है। नित्यनैमित्तिक प्रभृति कर्म चित्तशुद्धिमात्र में उपयोगी होते हैं। अतः अद्वैतदर्शन में ज्ञान एवं कर्म का समसमुच्चय मान्य नहीं है, प्रत्युत इन दोनों का क्रमसमुच्चय ही मान्य है। इसका विशदीकृत व्याख्यान श्रीसुरेश्वराचार्य ने किया है— "नित्यकर्मों के अनुष्ठान से धर्मोत्पत्ति होती है, धर्मोत्पत्ति से पापहानि होती है तदनन्तर चित्तशुद्धि होती है तदनन्तर संसार का सही बोध (परिचय) होता है तत्पश्चात् वैराग्य उत्पन्न होता है पुनश्च मोक्षेच्छा प्रबल होती है तदनन्तर उपायान्वेषण होता है तत्पश्चात् सर्वकर्म-संन्यास होता है तत्पश्चात् योगाभ्यास तत्पश्चात् चित्त की प्रत्यक्प्रवणता तदनन्तर 'तत् त्वमसि'-महावाक्य के अर्थ का परिज्ञान तत्पश्चात् अविद्या का उच्छेद तत्पश्चात् स्वस्वरूप में अवस्थान प्राप्त होता है। इस आशय का प्रकाशन गीता में भी किया गया है। तद्यथा–

आरुरुक्षोर्मुनेर्योगं............शमः कारणमुच्यते॥१॥

---

१. ब्र० सू० शा० भा० १।१।४.
२. नैष्क० सि०, पृ० ४७.
३. भ० गी० ६।३.

## जीवन्मुक्तिः

जीवन्मुक्तिर्नाम कृतवेदान्तविचारस्य मनननिदिध्यासनाभ्यां ब्रह्मापरोक्षज्ञानवतः, अत एव विनष्टसर्वसञ्चितकर्मणोऽवशिष्टप्रारब्धकर्मणश्चाप्रारब्धपरिक्षयं जीवनम्। ननु "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"[१] इति श्रुत्या, "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"[२] इति स्मृत्या च ज्ञानेन सर्वकर्मक्षयस्य प्रतिपादितत्वात् कथं प्रारब्धस्य न परिक्षयः? इति चेन्न, "विमुक्तश्च विमुच्यते"[३], "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"[४] इति श्रुतिभ्याम्, "नाभुक्तं क्षीयते कर्म" इति स्मृत्या चोत्पादितकार्यकर्मव्यतिरिक्तानां सञ्चितकर्मणामेव ज्ञानविनाशित्वावगमात्।

जीवन्मुक्तिव्यवस्थार्थमद्वैतिष्वेवास्ति परस्परवैमत्यम्। तत्र केचिदेवमभिप्रयन्ति—अविद्या हि आवरणविक्षेपाख्यांशद्वययुक्ता। तत्र तत्त्वज्ञानेनावरणांशनाशेऽपि

---

## जीवन्मुक्ति

जीवन्मुक्ति की परिभाषा है— जिस साधक ने सद्गुरु के मार्गदर्शन में वेदान्तवाक्यों की विचारणा की है, मनन तथा निदिध्यासन द्वारा ब्रह्मसाक्षात्कार कर लिया है, संचित समस्त कर्म विनष्ट कर लिये हैं, प्रारब्ध कर्म का पूर्ण फलभोग नहीं किये हैं तथा प्रारब्ध-परिक्षय तक जीवन में बने हैं उनकी मुक्ति **जीवन्मुक्ति** कहलाती है।

जिज्ञासा उदित होती है— श्रुतिवचन— "क्षीयन्ते चास्य कर्माणि......" तथा स्मृतिवचन– "ज्ञानाग्निः सर्वकर्माणि.....।" द्वारा ज्ञान द्वारा सर्वकर्मक्षय का प्रतिपादन होने से प्रारब्धकर्मक्षय क्यों नहीं होता? इसका समाधान है— श्रुतिवचनों– "विमुक्तश्च विमुच्यते," "तस्य तावदेव चिरं यावन्न......।" तथा स्मृतिवचन- "नाभुक्तं क्षीयते कर्म।" द्वारा उत्पादित कार्यकर्म से व्यतिरिक्त संचित कर्मों का ही ज्ञानाग्नि-नाश्यता विदित होती है।

जीवन्मुक्तिव्यवस्था की उपपत्ति को लेकर अद्वैती आचार्यों का परस्पर वैमत्य दृष्टिगोचर होता है। प्रस्थानविशेष में यह अभिप्राय प्राप्त होता है–अविद्या के दो

---

१. मुण्ड० २।२।८.
२. भ० गी० ४।३७.
३. कठ० २।५।१.
४. छा० उ० ६।१४।२.

विक्षेपस्य विद्यमानत्वादयमेवाविद्यांशः प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्तिप्रयोजको भवति। तस्य च प्रयाणकालोत्पन्न–चरमसाक्षात्कारवृत्त्या निवृत्तौ सत्यां विदेहकैवल्यं भवतीति। अपरे तु क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्पोऽविद्या–संस्कारस्तत्त्वज्ञानानन्तरमप्यनुवर्तते, तेनैव मुक्तस्य देहाद्यनुवृत्तिरित्यभिप्रयन्ति[1]। अन्ये त्वेवमाहुः–यथा द्रोणास्त्रेणाऽर्जुनस्य रथे दग्धेऽपि भगवच्छक्त्या संग्रामसमाप्तिपर्यन्तं 'तद्रथस्यावस्थितिः, तथा तत्त्वज्ञानादविद्याया निःशेषनाशेऽपि शरीरादिकार्यप्रपञ्चस्तु यावत्प्रारब्धभोगमनुवर्तत इति।

ननु कारणनाशे कथं कार्यानुवृत्तिरिति चेत्, यथा समवायिकारणनाशाद् द्रव्यनाशमङ्गीकुर्वद्भिरपि नैय्यायिकैर्निरुपादानमपि द्रव्यं क्षणमात्रं तिष्ठतीत्यङ्गीक्रियते, तथा प्रकृतेऽप्यवगन्तव्यम्। तदुक्तम्–

---

अंश हैं— आवरण एवं विक्षेप। आवरण (अंशमात्र) का परिक्षय, तत्त्वज्ञान से होता है। प्रारब्धकर्म तथा देहादि की अनुवृत्ति का प्रयोजक विक्षेपांश विद्यमान ही रहता है। उस विक्षेप (अंश) की निवृत्ति प्रयाणकालोत्पन्न चरमसाक्षात्कारवृत्ति द्वारा होती है तदनन्तर विदेहकैवल्य प्राप्त होता है।

दूसरे प्रस्थान में यह मान्य है— लशुनभाण्ड का लशुन हटाकर धो डालने पर भी उसकी वासना (प्राय) यथा अनुवर्तित होती है तथा तत्त्वज्ञान के अनन्तर भी अविद्या संस्कार का अनुवर्तन होता है। उस संस्कार बल से मुक्त साधक की देहाद्यनुवृत्ति की उपपत्ति होती है। अन्य प्रस्थान में यह अभिप्राय स्वीकार्य है— यथा द्रोण के अस्त्र से अर्जुन के रथ दग्ध हो गये तथापि भगवान् वासुदेव की शक्ति से संग्रामसमाप्ति पर्यन्त उस रथ की स्थिति बनी रही तथा तत्त्वज्ञान से अविद्या का निःशेष नाश हो जाने पर भी प्रारब्धभोगपर्यन्त शरीरादि कार्यप्रपञ्च अनुवृत्त होता है।

जिज्ञासा उदित होती है— कारणनाश होने के अनन्तर कार्य की अनुवृत्ति कैसे हो सकती है? इसका समाधान है— नैयायिकों का सिद्धान्त है समवायिकारणनाश से द्रव्यनाश होता है इसके बावजूद निरुपादान द्रव्य की भी क्षणमात्र की स्थिति यथा मान्य होती है तथा जीवन्मुक्त की शरीरादिस्थिति (अनुवृत्ति) मान्य है। तद्यथा—

---

१. सि० ले० सं०, पृ० ५१२.

उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीयते।
इत्याहुस्तार्किकास्तद्वदस्माकं किं न सम्भवेत्[1]।।इति।

ननु तार्किकैः कार्यस्य क्षणमात्रावस्थानमङ्गीकृतम्, न चिरकालम्। प्रकृते तु शरीरादीनां चिरकालानुवृत्तिदर्शनात् कथं क्षणत्वोक्तिः, इति चेच्छृणु, पटोपादानकारणभूतानां तन्तूनां दिनमासाद्यारब्धत्वात् तत्कार्यस्य यथा तद्योग्यः क्षणः कल्प्यते, तथा प्रकृतेऽपि संसारस्यानादिकालानुवृत्तत्वाद् यावत्प्रारब्धक्षयः कालोऽत्र क्षण इत्युच्यते। तदुक्तम्–

तन्तूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः।
भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यताम्[2]।।इति।

ननु यदेकेनाप्रामाणिकं किञ्चित् कल्प्यते चेत्, तद् दृष्टान्तेनापरेणापि स्वमतसमर्थनमयुक्तमिति चेन्न, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ

---

उपादाने विनष्टेऽपि.........किं न सम्भवेत्।।१।।

पुनः जिज्ञासा उदित होती है— तार्किकों द्वारा कार्य का क्षणमात्रावस्थान अङ्गीकार्य है चिरकाल नहीं। प्रकृत में शरीरादि की चिरकालानुवृत्ति परिदृष्ट है अतः क्षणमात्रावस्थान की उक्ति अनुपपन्न है। इसका समाधान है— पटोपादान तन्तुओं द्वारा दिनभर में या मासभर में पटका तन्तुनाशानन्तर योग्यकाल क्षण की अवस्थानाधिकरणता कल्पित होती है। प्रकृत में संसार का अनुवर्तन अनादिकाल से चला आ रहा है। अतः यहाँ तद्योग्य यावत् प्रारब्धक्षयकाल को क्षणसंज्ञा दी गई है। तद्यथा—

तन्तूनां दिनसंख्यानां.........योग्यः क्षण इहेष्यताम्।।१।।

पुनः अन्यजिज्ञासा उदित होती है। एक दार्शनिक द्वारा यदि किसी अप्रामाणिक वस्तु की कल्पना की जाती है तो उसको दृष्टान्त मानकर अन्य दार्शनिक द्वारा स्वमत- समर्थन कैसे उपपन्न होगा?

इसका समाधान है— "तस्य तावदेव चिरं...........सम्पत्स्ये।" इस श्रुति-प्रमाण से प्रारब्धकर्मभोगपर्यन्त जीवन्मुक्त की शरीरानुवृत्ति समर्थित है। श्रुति का अर्थ है— तस्य = उत्पन्नसाक्षात्कार साधक का तावदेव= उतने ही काल तक

---

१. अ० ब्र० सि०, पृ० २८६.
२. अ० ब्र० सि०, पृ० २८६.

सम्पत्स्ये"[१] इति श्रुत्या जीवन्मुक्तस्य प्राब्धकर्मभोगपर्यन्तं शरीरानुवृत्तेः तावानेव कालः, चिरं = क्षेपः, सदात्मस्वरूपसम्पत्तेरिति शेषः। कियान् कालः चिरमित्युच्यते? यावत् न विमोक्ष्ये = न विमोक्ष्यते। येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयाद् देहपातो यावन्न भवतीत्यर्थः। अथ = शरीरपातक्षण एव, सम्पत्स्ये = सम्पत्स्यते, विदेहकैवल्यं प्राप्नोतीति। नात्राथशब्द आनन्तर्यार्थः। नहि देहमोक्षस्य सत्सम्पत्तेश्च कालभेदोऽस्ति, येनाथशब्द आनन्तर्यार्थः स्यात्। किञ्च, "विमुक्तश्च विमुच्यते"[२] इति श्रुत्यापि जीवन्मुक्तस्य विदेहमोक्षपर्यन्तं शरीरधारित्वस्य समर्थितत्वादुपादानभूताविद्याया नाशेऽपि न तत्कार्यस्य शरीरादेरनुवृत्तिकल्पनमप्रामाणिकम्। अत एवोक्तं विद्यारण्यस्वामिभिः—

विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते।
श्रुतियुक्त्यनुभूतिभ्यो वदतां किं न दुःशकम्।।इति।

श्रीमधुसूदनस्वामिनः—यथा यागे नष्टेऽपि तत्सूक्ष्मावस्थारूपेणापूर्वेण स्वर्गप्राप्तिः, तथा तत्त्वज्ञानेनाविद्याया नाशेऽपि "भूयश्चान्ते विश्वमायानिवृत्तिः"[३] इत्यादिश्रुत्याऽविद्यालेशानुवृत्तेः समर्थितत्वात् तेनैवाविद्यालेशेन जीवन्मुक्तस्य

---

चिरम् सदात्मस्वरूपसम्पत्ति के अनन्तर यावत् विमोक्ष नहीं हो जाता। जिस कर्म से शरीर निर्मित हुआ है उसका उपभोगपूर्वक क्षय जब तक न हो जाय। अथ= शरीरपातक्षण में ही विदेहकैवल्य प्राप्त होता है। यहाँ अथ शब्द का आन्तर्य अर्थ विवक्षित नहीं है। क्योंकि देहमोक्ष एवम् सत्सम्पत्ति के मध्य कोई भी अन्तराल-काल स्थित नहीं है। इतना ही नहीं "विमुक्तश्च विमुच्यते।" इस श्रुति से भी जीवन्मुक्त की विदेहमोक्षप्राप्तिपर्यन्त देहधारिता समर्थित है। एवञ्च उपादानकारणरूप अविद्या के नाश होने पर भी तत्कार्य=शरीरादि की अनुवृत्तिकल्पना अप्रामाणिक नहीं है। अतः श्रीविद्यारण्य मुनि ने कहा है—

विना क्षोदक्षमं मानं...........वदतां किं न दुःशकम्।।१।।

श्री मधुसूदन सरस्वती जी ने अविद्यालेश से जीवन्मुक्त की शरीरादिव्यवस्था का उपपादन किया है। यथा याग के नष्ट हो जाने पर भी उसकी सूक्ष्मावस्थ-अपूर्व, स्वर्ग को प्राप्त कराता है तथा तत्त्वज्ञान से अविद्या के नष्ट हो जाने पर

---

१. छा० उ० ६।१४।२.
२. कठ० २।५।१.
३. श्वे० उ० १।१०.

शरीरादिव्यवस्थेति प्रतिपादयन्ति। तथाहि यथा–

तस्मात् फले प्रवृत्तस्य यागादेः शक्तिमात्रकम्।
उत्पत्तावपि पश्चादेरपूर्वं न ततः पृथक्।।

इति वार्त्तिकेन यागे गतेऽपि यागसूक्ष्मावस्थारूपमपूर्वं यागे साधनतानिवार्हकमङ्गीक्रियते, तथाऽज्ञाने गतेऽपि तत्सूक्ष्मावस्थारूपो लेशो देहादिप्रतीत्यनुकूलः स्वीक्रियते, स्वर्गजनकताग्राहकश्रुतेरिवात्रापि जीवन्मुक्तिश्रुतेस्तादृगर्थस्वीकारात्। तस्मादविद्यालेशानुवृत्त्या जीवन्मुक्तिरुपपन्नतरा"[१] इति। पूज्यपादसर्वज्ञात्ममुनिस्तु–

सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्सम्भवं
सद्यो वस्तुबलप्रवर्तनमरुद्व्यापारसंदीपितः।
निर्लेपेन हि दन्दहीति न मनागप्यस्य रूपान्तरं
संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा।।
जीवन्मुक्तिप्रत्ययं शास्त्रजातं
जीवन्मुक्ते कल्पिते योजनीयम्।
तावन्मात्रेणार्थवत्त्वोपपत्तेः
सद्यो मुक्तिः सम्यगेतस्य हेतोः[२]।।

---

"भूयश्चान्ते.........निवृत्तिः।" इत्यादि श्रुतिद्वारा प्रमाणित अविद्यालेश की अनुवृत्ति समर्थित होती है। यद्वत् "तस्मात् फले.......न ततः पृथक्।। इस वार्तिकवचन से याग के नष्ट होने पर भी तदीय सूक्ष्म रूप अपूर्व द्वारा याग की स्वर्गसाधनता का निर्वाह होता है तद्वत् अज्ञान के नष्ट हो जाने पर भी तदीय सूक्ष्मावस्था-लेश देहादिप्रतीति का जनक स्वीकार्य है। दृष्टान्त में स्वर्गजनकताग्राहक श्रुति की तरह दार्ष्टान्तिक में जीवन्मुक्तिग्राहक श्रुति विद्यमान (जागरूक) है। एवञ्च अविद्यालेश की अनुवृत्ति द्वारा जीवन्मुक्ति उपपन्न होती है।

पूज्यचरण सर्वज्ञात्ममुनिमहाशय जीवन्मुक्तिश्रुति को अर्थवादवाक्य मानते हैं। तद्यथा—

सम्यग्ज्ञानविभावसुः....................सद्यो विमुक्तिर्ध्रुवा।।१।।

जीवन्मुक्तिप्रत्ययं........सम्यगेतस्य हेतोः।।२।।

---

१. अ० ब्र० सि०, पृ० ८९२.

२. सं० शा० ४।३८-३९.

इति विरोधिसाक्षात्कारोदये लेशतोऽप्यविद्याऽनुवृत्त्यसम्भवात् "तस्य तावदेव चिरम्"[१] इति श्रूयमाणं जीवन्मुक्तिशास्त्रमर्थवादमात्रम्, शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात्। अतः कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारो-दयमात्रेण सविलासवासनाऽविद्यानिवृत्तिरित्यपि कश्चित् पक्षमाह।

वस्तुतस्तु यत्र देहपाताव्यवहितपूर्वक्षणे तत्त्वसाक्षात्कारस्तत्र न जीवन्मुक्तिः सम्भवति, यत्र पुनः प्रारब्धावशेषस्तत्र प्रारब्धकर्मपरिक्षयपर्यन्तं जीवन्मुक्तिरभ्युपेयैव। अत एव भगवान् बादरायणः–"भोगेन त्वितरे क्षपयित्वा सम्पद्यते"[२] इति सूत्रेण तत्त्वज्ञस्य प्रारब्धभोगानन्तरमेव विदेहकैवल्यं प्रतिपादितवान्।

**ज्ञानस्य सप्तभूमयः**

किञ्च, यदि जीवन्मुक्तिर्नाङ्गीक्रियेत, तदा योगवासिष्ठे आदिकविना वाल्मीकिनोक्ता ज्ञानस्य सप्तभूमयो निरर्थिकाः स्युः। महर्षिणा–

---

कारिकोक्त युक्ति से विरोधि-साक्षात्कार के उदय होने पर लेशमात्र भी अविद्या की अनुवृत्ति सम्भव नहीं है। तन्मतानुसारेण शास्त्र को जीवन्मुक्ति प्रतिपादन का कोई प्रयोजन नहीं है। अतः निदिध्यासनपर्यन्त अन्तरङ्ग साधन का अनुष्ठान करने से ब्रह्मसाक्षात्कार होने पर सविलासवासना अविद्या की निवृत्ति हो जाती है।

वस्तुतस्तु जिस स्थलविशेष में देहपात के अव्ययहित पूर्वक्षण में तत्त्वसाक्षात्कार होता है वहाँ जीवन्मुक्ति की कल्पना सम्भव नहीं। अन्यत्र प्रारब्ध का अवशेष रहते प्रारब्धकर्म के क्षयपर्यन्त जीवन्मुक्ति का अङ्गीकार करना चाहिए। अतएव भगवान् बादरायण ने निजसूत्र द्वारा तत्त्वज्ञ साधक को प्रारब्धभोग के अनन्तर विदेहकैवल्य की प्राप्ति प्रतिपादित की है— "भोगेन त्वितरे.......सम्पद्यते।"

**ज्ञान की सप्तविध भूमि**

यदि हम जीवन्मुक्ति की अवधारणा का खण्डन करते हैं तो योगवासिष्ठ में वाल्मीकिप्रोक्त ज्ञान की सप्तभूमिकल्पना निरर्थक हो जायेगी।

---

१. छा० उ० ६।१४।२.
२. ब्र० सू० ४।१।१९.

शास्त्रसज्जनसम्पर्कैः प्रज्ञामादौ विवर्धयेत्।
प्रथमा भूमिकैषोक्ता योगस्यैव च योगिनः।।
विचारणा द्वितीया स्यात् तृतीयाऽसङ्गभावना।
विलापनी चतुर्थी स्याद्वासनाविलयात्मिका।।
शुद्धसंविन्मयानन्दरूपा भवति पञ्चमी।
अर्धसुप्तप्रवृद्धाभो जीवन्मुक्तोऽत्र तिष्ठति।।
स्वसंवेदनरूपा च षष्ठी भवति भूमिका।
आनन्दैकघनाकारा सुषुप्तसदृशस्थितिः।।
तुर्यावस्थोपशान्ताथ मुक्तिरेवेह केवलम्।
समता स्वच्छता सौम्या सप्तमी भूमिका भवेत्[1]।।

इति शुभेच्छादिसप्तभूमिकाः प्रकीर्तिताः। तत्र विवेक-वैराग्य-शमदमादिषट्क-सम्पत्तिरूपसाधनत्रयपूर्विका फलपर्यन्तं मोक्षेच्छाकारणीभूता या मुमुक्षुतेत्याचक्षते, सा शुभेच्छा। ततः श्रोत्रियब्रह्मनिष्ठगुरुमुखाद् वेदान्तवाक्यश्रवणम्, श्रुतस्य चार्थस्य मननं विचारणाख्या द्वितीया भूमिका। ततो निदिध्यासनरूपाभ्यासेन मनस एकाग्रतया तत्र मनसि सूक्ष्मवस्तुग्रहणकरणयोग्यता या, सा तनुमानसाख्या तृतीया भूमिका। इमास्तिस्रोऽपि भूमिका ज्ञानप्राप्तेः साधनरूपाः सन्ति। आसु तिसृष्वपि भूमिकासु सर्वमिदं जगद् भेदविशिष्टं प्रतीतं

---

शास्त्र सज्जनसम्पर्कैः............सप्तमी भूमिका भवेत्।।५।।

वचनों द्वारा महर्षि ने ज्ञान की शुभेच्छा प्रभृति सप्तभूमिकायें प्रतिपादित की है। इनमें विवेक-वैराग्य-शमदमादिषट्कसम्पत्ति रूप तीन साधनों को पुरःसर कर फलपर्यन्त मुमुक्षुता को शुभेच्छा कहा जाता है। तदनन्तर श्रोत्रियब्रह्मनिष्ठ गुरुमुख से वेदान्तवाक्य का श्रवण एवं श्रुतअर्थ की मननात्मक विचारणा द्वितीय भूमिका है। तृतीय भूमिका तनुमानसा कहलाती है। मनन के पश्चात् निदिध्यासनात्मक अभ्यास से मन की एकाग्रता होने से सूक्ष्मवस्तुग्रहणयोग्यता उदित होती है यह तनुमानसा कहलाती है। ये तीन प्रकार की भूमिकायें ज्ञानप्राप्ति की साधन हैं। इन तीन प्रकार की भूमिकाओं में यह सम्पूर्ण जगत् भेदविशिष्टतया प्रतीत होता है अतः इन तीनों का नाम **जाग्रदवस्था** है। तद्यथा— "पूर्वावस्थात्रयं त्वत्र जाग्रदित्येव संस्थितम्।।"

---

१. यो० वा० पू० १२०।१-५.

भवतीति जाग्रदवस्थानाम्नाऽपीमाः कीर्त्यन्ते। तदुक्तम्–"पूर्वावस्थात्रयं त्वत्र जाग्रदित्येव संस्थितम्"[१] इति।

ततोऽस्याधिकारिणः पुरुषस्य "तत्त्वमसि"[२] इति महावाक्येन निर्विकल्पकब्रह्मात्मैक्यविषयकः साक्षात्कारो भवति, इयमेव सत्त्वापत्त्याख्या चतुर्थी भूमिका। अस्यां च चतुर्थ्यां भूमिकायां सर्वमिदं जगत् स्वप्नवद् मिथ्यारूपेण भातीति स्वप्नावस्थानाम्नापीयं निगद्यते। तदुक्तम्–"चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत्"[३] इति। इमां चतुर्थीं भूमिकामापन्नः पुमान् 'ब्रह्मवित्' इति नाम्ना कथ्यते शास्त्रकृद्भिः। पञ्चम–षष्ठ–सप्तमभूमिकास्तु तिस्रोऽपि जीवन्मुक्तस्यैवावान्तरभेदरूपा इति बोद्धव्यम्।

तत्र सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि येयं निर्विकल्पकसमाध्यवस्था सैव असंसक्तिः। इयं च पञ्चमी भूमिका सुषुप्तिरिति नाम्नापि कथ्यते। एतद्-भूमिको योगी स्वयमेव समाधितो व्युत्थानं लभत इति 'ब्रह्मविद्वरः' इति नाम्नाऽसावभिधीयते। ततोऽसंसक्तिभूमिकापरिपाकेन चिरकालं यन्निर्विकल्पक-समाध्यवस्थास्थैर्यं सा पदार्थाभाविनी। इयं च षष्ठी भूमिका गाढसुप्तिरिति

---

तदनन्तर मोक्ष के अधिकारी साधक को "तत्त्वमसि।" इस महावाक्य के श्रवण से निर्विकल्पक ब्रह्मात्मैक्यसाक्षात्कार होता है। यह चतुर्थ भूमिका **सत्त्वापत्ति** कहलाती है। इस भूमिका में यह सम्पूर्ण जगत् स्वप्न की भाँति मिथ्यारूप में भासित होती है अतः इसका दूसरा नाम **स्वप्नावस्था** है। तद्यथा— "चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत्।" जो साधक इस चतुर्थ भूमिका में प्रवेश कर लेता है उसे ब्रह्मविद् नाम से शास्त्रकारों ने सम्बोधित किया है। इसके अनन्तर की तीन भूमिकायें (५-७) जीवन्मुक्त के ही अवान्तर भेद हैं।

पञ्चम भूमिका का नाम **असंसक्ति** है। जब साधक सविकल्पक समाधि द्वारा मनस् को निरुद्ध कर लेता है उसकी निर्विकल्पक समाधि अवस्था उदित होती है। इस भूमिका की दशा में साधक (योगी) समाधि से व्युत्थानदशा में स्वयं उपस्थित होता है। वह योगी "ब्रह्मविद्वर" कहलाता है। तदनन्तर असंसक्ति भूमिका के परिपाक से चिरकाल तक निर्विकल्पकसमाधि में स्थैर्य प्राप्त होता है। इस दशा की संज्ञा है— पदार्थाभाविनी। इस षष्ठ भूमिका का दूसरा नाम है— गाढसुप्ति। इसे

---

१. यो० वा० पू० १२०।७.

२. छा० उ० ६।८।७.

३. यो० वा० पू० १२०।७.

नाम्नापि व्यवह्रियते। तदुक्तम्–

आनन्दैकघनीभावात् सुषुप्ताख्या तु पञ्चमी।
असंवेदनरूपाथ षष्ठी तुर्यपदाभिधा।।
तुर्यातीतपदावस्था सप्तमी भूमिकोत्तमा।
मनोवचोभिरग्राह्या स्वप्रकाशपदात्मिका[1]।।इति।

इमां सप्तमीं भूमिकां प्राप्तो योगी शिष्यादिप्रयत्नेन समाधितो व्युत्थानं लभते न स्वयमित्यसौ 'ब्रह्मविद्वरीयान्' इत्यभिलप्यते। यत्समाध्यवस्थातो नायं स्वयं व्युत्थानं लभते, नापि शिष्यादिप्रयत्नतो व्युत्थानं प्राप्नोति, किन्तु सर्वथा भेददर्शनाभावेन तद्रूप एव समुपजायते, स्वप्रयत्नं विनैव परमेश्वरप्रेरितात् प्राणवायुवशात् प्रारब्धकर्मवशाद्वा यस्यां स्थितस्य विदुषः पुरुषस्य देहव्यवहारमन्ये लोका एव साधयन्ति, यस्यां च विद्वान् पुरुषः सर्वदा परिपूर्णपरमानन्दघन एव तिष्ठति, साऽवस्था तुरीयानाम्नी सप्तमी भूमिका। एनां प्राप्तो योगी 'ब्रह्मविद्वरिष्ठः' इति नाम्नाऽभिधीयते। तथैव–

देहं च नश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम्।
दैवादपेतमुत दैववशादुपेतं
वासो यथा परिकृतं मदिरामदान्धः।।

---

तुर्यपद भी कहा जाता है। तदनन्तर साधक, समाधि से व्युत्थान में स्वयं नहीं आता। एतदर्थ शिष्यादि का प्रयत्न आवश्यक होता है। ऐसा योगी "ब्रह्मविद्वरीयान्" कहलाता है। इस समाधि के नैरन्तर्य से स्वप्रयत्न एवं शिष्यप्रयत्न से भी योगी व्युत्थान में नहीं लौटता। वह भेददर्शनाभाव की स्थिति में रहकर ब्रह्ममय बन जाता है। वह स्वप्रयत्न के बिना परमेश्वरप्रेरित प्राणवायु द्वारा प्रारब्धकर्मवशाद् वा सप्तम भूमिका में प्रविष्ट योगी का देहव्यवहार, अन्यजन द्वारा सम्पादनीय होता है। यह साधक परिपूर्ण परमानन्दघन रूप से स्थित रहता है। उसकी यह तुरीयावस्था अथवा तुर्यातीतावस्था सप्तमी-भूमिका कहलाती है। इसमें स्थित योगी को ब्रह्मविद्वरिष्ठ कहा जाता है। तद्यथा—

आनन्दैकघनीभावात्.........स्वप्रकाशपदात्मिका।।२।।

एवम् वेदव्यास की उक्ति है—

देहं च नश्वरमवस्थितमुत्थितं वा.......प्रतिबुद्धवस्तुः।।२।।

---

१. यो० वा० पू० १२०।८-९.

देहोऽपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रतिसमीक्षत एव सासुः।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः[१]।।

इति भगवता वेदव्यासेनापि ब्रह्मविद्वरिष्ठस्य स्वरूपमुपवर्णितम्।

एवमुक्ताः सप्तभूमयः प्रयत्नसाध्याः, तत्रापि पञ्चम-षष्ठ-सप्तमभूमिका ज्ञानोत्तरा इति जीवन्मुक्तेरङ्गीकारं विनाऽनुपपन्ना इत्यन्यथाऽनुपपत्त्या जीवन्मुक्तिरङ्गीकर्तव्यैव। येऽसंसक्त्यादिभूमिकाः साधयन्ति, त एव जीवन्मुक्तेर्विलक्षणानन्दमनुभवितुं समर्था भवन्ति, न चान्ये। किञ्च, जीवन्मुक्तानां जीवनव्यवहारे न च शास्त्रस्य शासनं प्रवर्तते। अत एव ज्ञानिनो नैकविधाः। तेषां वैविध्ये स्वेच्छापरेच्छाऽनिच्छारूपप्रारब्धवैचित्र्यमेव कारणम्। अत एव तत्त्वज्ञानां कृष्ण-शुक-वसिष्ठादीनां च न व्यवहारैकरूपता दरीदृश्यते। तदुक्तम्–

कृष्णो भोगी शुकस्त्यागी नृपौ जनकराघवौ।
वसिष्ठः कर्मकर्ता च त एते ज्ञानिनः समाः।।इति।

---

इस प्रकार साधक को प्रयत्नपूर्वक सप्तविध भूमिकाओं में प्रवेश करने हेतु श्रीगुरु का मार्गदर्शन आवश्यक है। उत्तर की तीन भूमिकायें (५-७) ज्ञान की उत्तरावस्था है। जीवन्मुक्ति-स्वीकार के बिना अनुपपन्न होने से इन भूमिकाओं की अन्यथाऽनुपपत्ति होने से जीवन्मुक्ति अवश्य स्वीकार्य है। जो साधक असंसक्ति प्रभृति भूमिकाओं की साधना में सफल (समर्थ) होते हैं वे ही जीवन्मुक्ति का विलक्षण आनन्द अनुभव करते हैं अन्य नहीं। जीवन्मुक्त योगी के जीवनोपयोगी व्यवहार में शास्त्र का शासन लागू नहीं होता। अतः ज्ञानियों के अनेक प्रकार होते हैं। उनकी विविधता में प्रारब्धवैचित्र्य कारण होता है। यह वैचित्र्य स्वेच्छा, परेच्छा तथा अनिच्छा के भेद से अनेक प्रकार का होता है। अतएव तत्त्वज्ञ महापुरुषों (श्रीकृष्ण, शुक-वसिष्ठ प्रभृति) के व्यवहार में एकरूपता नहीं देखी जाती। तद्यथा—

कृष्णो भोगी ..........................ज्ञानिनः समाः।।

---

१. भा० पु० ११।१३।३६-३७.

एवं कर्मभेदेऽपि सर्वेषाम् 'अहं ब्रह्मास्मि' इति ज्ञानमेकाकारं निरवद्यब्रह्मरूपेणावस्थानं च समानमिति श्रीविद्यारण्यस्वामिनोऽप्याहुः। तथाहि–

आरब्धकर्मनानात्वाद् बुद्धानामन्यथाऽन्यथा।
वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पण्डितैः।।
स्वस्वकर्मानुसारेण वर्तन्तां ते यथा तथा।
अविशिष्टः सर्वबोधः समा मुक्तिरिति स्थितिः[१]।।इति।

**विदेहमुक्तिः**

प्रारब्धकर्माऽधीनस्य भोगस्य परिसमाप्तावारब्धयोः पुण्यपापयोः क्षये विदेहमुक्तिः सम्पद्यते। तथा हि–

अविद्याऽस्तमयो मोक्षः सा च बन्ध उदाहृतः।
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।।

इति वार्त्तिककारोक्त्यनुसारं स्थूलसूक्ष्मरूपाया अविद्यायाः सकार्याया निरतिशयेन विनाशेऽखण्डाकारवृत्तिविषयत्वोपलक्षिताऽऽत्मस्वरूपं विदेह-कैवल्यमित्युच्यते। अध्यासनिवृत्तेरधिष्ठानरूपत्वान्नाऽद्वितीयत्वभङ्गापत्तिः।

---

व्यावहारिक कर्मभेद होने पर भी सभी तत्त्ववेत्ता महापुरुषों के एकाकारक ज्ञान– "अहं ब्रह्मास्मि।" तथा निरवद्य ब्रह्मरूपतया अवस्थान (समान) होता है। श्रीविद्यारण्य स्वामी जी ने सुस्पष्ट इसे कहा है—

आरब्धकर्मनानात्वाद्..............समा मुक्तिरिति स्थितिः।।२।।

**विदेहमुक्ति–**

प्रारब्ध कर्म के अधीन भोग की परिसमाप्ति होने पर आरब्ध पुण्य और पाप प्रक्षीण हो जाते हैं तदनन्तर योगी साधक की विदेह-मुक्ति होती है। तद्यथा—

अविद्याऽस्तमयो मोक्षः.......ज्ञातत्वेनोपलक्षितः।।१।।

उपर्युक्त वार्तिक वाक्य के अनुसार कार्यसहित अविद्या (स्थूल तथा सूक्ष्म) के सर्वथा विनष्ट हो जाने परअखण्डाकारवृत्तिविषयत्वोपलक्षित आत्मस्वरूप विदेहकैवल्य की प्राप्ति होती है। यतश्च अध्यासनिवृत्ति अधिष्ठान से अतिरिक्त नहीं है अतः अद्वैतभङ्ग आपादित नहीं होता। विदेहकैवल्य में "न स पुनरावर्तते।" "भोगेन

---

१. पञ्च० ६।२८७-२८८.

विदेहकैवल्ये च "न स पुनरावर्तते"[१], "भोगेन त्वितरे क्षपयित्वा सम्पद्यते"[२] 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्'[३] इत्यादिश्रुतिसूत्राण्येव प्रमाणानि।

विदेहमुक्तौ हि सच्चिदानन्दब्रह्मात्मनाऽवस्थितिरिति प्रकाशमाननित्यसुख-रूपतया परमपुरुषार्थत्वोपपत्तिः तदेवमद्वैतवेदान्ते मिथ्याज्ञानप्रयुक्तस्याध्यासस्य तत्त्वज्ञानेनैव निवृत्तिरिति ज्ञानमेवात्र मुक्तौ मुख्योपायः। एवमध्यासनिवृत्तौ चौपाधिकभेदनिवृत्त्या जीवब्रह्मणोरैक्यमङ्गीक्रियते। अत्रात्मनः सच्चिदानन्दरूपत्वात् तदाप्तिरेव मुक्तिरिति स्वीकारान्मोक्षो न न्यायवैशेषिकादिवत् केवलं दुःखनिवृत्तिरूपः, किन्तु सर्वदुःखनिवृत्तिद्वारा परमानन्दप्राप्तिरूपः।

## सिद्धान्तशिखामण्यनुसारं बन्धमोक्षयोः स्वरूपम्

तत्र तावद्वीरशैवदर्शने सङ्कोचविकासवादेन बन्धमोक्षौ व्यवस्थाप्येते, अर्थात् इच्छाज्ञानादिशक्तिसङ्कोचरूपमलत्रयावृतत्वेन बन्धः, पुनस्तासामेव

---

त्वितरे क्षपयित्वा सम्पद्यते।" इत्यादिश्रुति प्रमाण है तद्वत् सूत्र— "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" भी प्रमाण है। विदेहमुक्ति में योगी की स्थिति सच्चिदानन्दब्रह्मरूप से होती है। एतावता प्रकाशमान नित्यसुखरूप परमपुरुषार्थ मोक्ष की उपपत्ति निर्बाध है।

एवञ्च अद्वैतवेदान्त में मिथ्याज्ञानप्रयुक्त अध्यास की तत्त्वज्ञान से ही निवृत्ति यतः होती है अतः मुक्ति के प्रति ज्ञान ही मुख्य एवं साक्षात् कारण है। अध्यासनिवृत्ति होने पर औपाधिक भेद की निवृत्ति होने से जीव एवं ब्रह्म का ऐक्य सम्पन्न होता है। इस दर्शन में आत्मा का सच्चिदानन्द स्वरूप होने से स्वरूपप्रकाशन (प्राप्ति) ही मुक्ति कहलाता है। अतः इस सिद्धान्त में न्याय-वैशेषिकादि दर्शनों की तरह मोक्ष दुःखनिवृत्ति रूप नहीं प्रत्युत सर्वदुःखनिवृत्ति द्वारा परमानन्दप्राप्तिस्वरूप है।

## सिद्धान्तशिखामणि के अनुसार बन्ध एवं मोक्ष का स्वरूप

वीरशैवदर्शन की बन्धमोक्षव्यवस्था संकोचविकासवाद पर आधारित है। आशय यह है— इच्छाशक्ति, ज्ञानशक्ति एवं क्रियाशक्ति के संकोच से त्रिविध मलों का आवरण होता है तत्प्रयुक्त बन्ध उपस्थित होता है। पुनश्च उन शक्तियों का विकास होने से मुक्ति होती है। अतएव शंकरशास्त्रिमहाशय ने कहा है— "संकुचित

---

१. छा० उ० ८।१५।१.

२. ब्र० सू० ४।१।१९.

३. ब्र० सू० ४।४।२२.

शक्तीनां विकासे मुक्तिरित्यर्थः अत एवोक्तं श्रीमद्भिः शङ्करशास्त्रिमहाभागैः– "सङ्कुचितशक्तित्रयरूपमलत्रयनिवृत्तिः शक्तिविकासरूपशिवत्वप्राप्तिर्मोक्षः"[१] इति।

## बन्ध (मल)-स्वरूपम्

भगवत्पादै रेणुकाचार्यैः–

जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।
निरस्यते गुरोर्बोधाज्ज्ञानशक्तिः प्रकाशते।।[२]

इति मलावृतत्वमेव जीवत्वमित्युपदिष्टत्वान्मल एवात्र बन्धनम्। परमेश्वरस्य नैसर्गिकेच्छा-ज्ञान-क्रियाशक्तीनां सङ्कुचितं स्वरूपमेव 'मल' इत्युच्यते। सोऽयं मल आणव-मायीय-कार्मभेदेन त्रिविधः। तत्र परशिवस्येच्छाशक्तिसंकोच आणवमलः। अस्यावरणेन हि जीवः स्वकीयं विभुत्वं विस्मृत्य 'अपूर्णोऽस्मि' इति स्वात्मानमणुत्वेन व्यवहरति। तदुक्तं क्षेमराजाचार्येण–"अपूर्णम्मन्यतारूपमाणवं मलम्"[३] इति।

---

त्रिविधशक्ति (इच्छा, ज्ञान एवं क्रिया) त्रिविध मल (मायीय, आणव एवं कार्म) जीव को बन्धन में डालते हैं। इनकी निवृत्ति, शक्तिविकास से होती है। तदनन्तर स्वात्मशिवता प्रकाशित होती है उसे मोक्ष कहा जाता है।"

### बन्धस्वरूप

भगवत्पाद श्रीरेणुकाचार्य ने मल से आवृत चेतन की जीवसंज्ञा प्रतिपादित की है। अतः मल से व्यतिरिक्त बन्ध नहीं है। तद्यथा— "जीवत्वं दुःखसर्वस्वं.....ज्ञानशक्तिः प्रकाशते।।२।।"

परमेश्वर की नैसर्गिक शक्तियाँ हैं— इच्छाशक्ति, ज्ञानशक्ति तथा क्रियाशक्ति। इनका संकुचित स्वरूप ही मल कहलाता है। यह मल तीन प्रकार का होता है— आणव, मायीय एवं कार्म। परशिव की इच्छाशक्ति का संकोच **आणवमल** कहलाता है। इस मल से आवृत जीव अपने विभुत्व का विस्मरण कर अपूर्णोऽस्मि की भावना से स्वयं को बद्धजीव के रूप से व्यवहार करता है। आचार्य क्षेमराज ने सुस्पष्ट कहा है— "आणवमल अपूर्णम्मन्यता है उससे व्यतिरिक्त नहीं।"

---

१. ई० उ० शा० व्या०, पृ० २४.
२. सि० शि० १८।१७, पृ० १३३.
३. प्रत्यभिज्ञा० ९ सूत्रस्य व्याख्या।

परशिवस्य संकुचिता ज्ञानशक्तिरेव मायीयो मल उच्यते। परशिवस्यापरिमितं ज्ञानं संकुचितं सद् बन्धनकारकं भवतीति "ज्ञानं बन्धः"[१] इत्यस्य सूत्रस्य व्याख्याने–"स एव शिवाभेदाख्यात्यात्मकाज्ञानस्वभावोऽपूर्णम्मन्यतात्मकाणवमलसतत्त्वसंकुचितज्ञानात्मा बन्धः"[२] इति श्रीक्षेमराजेन संकुचितमेव ज्ञानं बन्ध इत्युक्तम्। अत एव भगवता श्रीकृष्णद्वैपायनव्यासेन–

ज्ञानं बन्ध इतीदं तु द्वितीयं सूत्रमीशितुः।
ज्ञानमित्यात्मनस्तस्य किञ्चिज्ज्ञानक्रियात्मकम्।।[३]

इति शिवसूत्रोक्तस्य 'ज्ञानम्' इत्यस्य किञ्चिज्ज्ञानमिति तस्य संकुचितत्वमेवोपस्थापितम्। अनेन मायीयमलाऽवरणेन जीवः स्वात्मानं परशिवाद् भिन्नं मत्वा शरीरादिष्वहमिति, सती-पुत्र-गृहादिषु च ममेति व्यवहरति। उक्तं च क्षेमराजाचार्येण–"भिन्नवेद्यप्रथारूपं मायीयं मलम्"[४] इति।

परशिवस्य संकुचिता क्रियाशक्तिरेव कार्ममल इत्यभिधीयते। अयं च शुभाऽशुभवासनारूपः। अनयैव वासनया शुभाऽशुभकर्माणि कुर्वन् तत् फलानि

---

परशिव की संकुचित ज्ञानशक्ति ही मायीय मल कहलाती है। परशिव का अपरिमित ज्ञान संकुचित होकर बन्धन-कारक होता है। अत एव आचार्य क्षेमराज ने "ज्ञानं बन्धः" सूत्र की व्याख्या में संकुचित ज्ञान को बन्ध प्रतिपादित किया है। तद्यथा— "वह शिवाभेद की अख्याति-अज्ञान अथवा मल कहलाती है। यह अपूर्णम्मन्यतास्वरूप है। इसको आणवमल कहा जाता है। अतः संकुचित ज्ञान ही मूलतः बन्ध कहलाता है। अतः श्रीकृष्णद्वैपायन भगवत्पाद व्यास ने कहा है—

ज्ञानं बन्ध इतीदन्तु.......किञ्चिज्ज्ञानक्रियात्मकम्।।१।।

एवंच शिवसूत्रोक्त ज्ञानपद की व्याख्या-किञ्चिद् ज्ञानम् की गई है। अतः ज्ञान का संकुचितत्व (संकोच) ही मल अथवा बन्ध कहलाता है। इस मायीय मल के आवरण से जीव स्वयं को परशिव से भिन्न मानकर शरीर, इन्द्रिय प्रभृति में अहम्-व्यवहार तथा सती, पुत्र, गृहादि में मम-व्यवहार करता है। आचार्य क्षेमराज ने कहा है— "भिन्नवेद्यप्रथारूपं मायीयं मलम्।"

तद्वत् परशिव की संकुचित क्रियाशक्ति कार्ममल कहलाती है। इसे शुभ

---

१. शि० सू० १।२.
२. शि० सू० वि०, पृ० १२.
३. शि० पु० ६।१६।४६–४७.
४. प्रत्यभिज्ञा० ९ सूत्रस्य व्याख्या।

सुखदुःखानि चानुभवन् स्वकर्मानुसारेणैव देवतिर्यङ्मनुष्यादियोनिषु जीवः परिभ्रमति। तदुक्तं रेणुकभगवत्पादैः–

अविद्यामोहिता जीवा ब्रह्मैक्यज्ञानवर्जिताः।।
परिभ्रमन्ति संसारे निजकर्मानुसारतः।
देवतिर्यङ्मनुष्यादिनानायोनिविभेदतः ।।
चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरिणः।
जात्यायुर्भोगवैषम्यकारणं कर्म केवलम्।।[१] इति।

अत एव–"शुभाशुभानुष्ठानमयं कार्ममलम्"[२] इति श्रीक्षेमराजाचार्येण कार्ममललक्षणमुक्तम्।

श्रीशिवानुभवशिवाचार्यैरपि–"स्वतादात्म्यापृथग्भावान्यतरसम्बन्धेन कलादिभूम्यन्तस्थूलचिदचिद्रूपशक्तिविशिष्टत्वादस्य जीवचैतन्यस्य सर्वकर्तृत्व-सर्वज्ञत्व-पूर्णत्व-नित्यत्व-व्यापकत्वरूपाः सूक्ष्मशक्तयः संकोचवत्यो भवन्ति। तस्मादस्याप्रतिहतस्वातन्त्र्यरूपेच्छाशक्तिः संकुचिता सती अपूर्णम्मन्यतारूप-माणवमलमित्युच्यते। ज्ञानशक्तिः संकुचिता सती सर्वज्ञत्वस्य किञ्चिज्ज्ञत्वाप्ते-रन्तःकरणबुद्धीन्द्रियसम्बन्धवशाद् भेदवेद्यप्रथारूपं मायीयं मलमित्युच्यते। एवं

---

अथवा अशुभ वासनारूप माना जाता है। इसी वासना से जीव शुभ अथवा अशुभ कर्मों को करता हुआ उनके फलों (सुख अथवा दुःख) का उपभोग करता है। इसी क्रम में वह विभिन्न योनियों (देव, तिर्यक् प्रभृति) में परिभ्रमण करता रहता है। श्रीरेणुकाचार्य जी ने सुस्पष्ट कहा है—

"अविद्यामोहिता जीवा.......कर्म केवलम्।।२½।।

तदनुसार आचार्य क्षेमराज ने कार्ममल का लक्षण प्रतिपादित किया है— "शुभाशुभानुष्ठानमयं कार्ममलम्।"

श्रीशिवानुभव शिवाचार्य जी ने भी निम्नाङ्कित कथन से इच्छादि शक्तित्रय के संकोच को आणवादि मलत्रय के रूप में प्रतिपादित किया है। तद्यथा— "स्वतादात्म्य- सम्बन्ध अथवा अपृथग्भावसम्बन्ध से कलातत्त्वप्रभृति भूमितत्त्वपर्यन्त स्थूल-चिदचिद्रूप शक्तिविशिष्ट होने से जीवचैतन्य की सूक्ष्मशक्तियाँ (कर्तृत्व, सर्वज्ञत्व, पूर्णत्व, नित्यत्व एवं व्यापकत्व) संकोच युक्त हो जाती है। अतः

---

१. सि० शि० ५।४७-४९, पृ० ७०-७१.
२. प्रत्यभिज्ञा० ९ सूत्रस्य व्याख्या।

क्रियाशक्तिः संकुचिता सती सर्वकर्तृत्वस्य किञ्चित्कर्तृत्वप्राप्तेः कर्मेन्द्रियसम्बन्धवशात् शुभाशुभानुष्ठानमयं कार्ममलमित्युच्यते"[१] इतीच्छा-ज्ञान-क्रियाशक्तीनां संकुचित-स्वरूपमेवाणवादिमलत्रयस्वरूपमिति प्रतिपादितम्।

तदेवमाणवो मलोऽणुत्वापादकत्वेन, मायीयमलोऽखण्डाद्विच्छिद्याणु-भूतस्यांशस्य देहसम्बन्धापादकत्वेन, शुभाशुभकर्मप्रवर्तकत्वेन च कार्ममलो जीवस्य बन्धनकारणानि भवन्ति। अत एव श्रीक्षेमराजेनापि-"अपूर्णम्मन्यता-भिन्नवेद्यप्रथा-शुभाशुभवासनात्मकम्"[२] इति क्रमश आणवमायीय-कार्ममलस्वरूपमुक्तम्। एतानि च मलत्रयाणिअनादीनि। तस्माद् यथा शिवःपरिपूर्णेच्छा-ज्ञान-क्रियाशक्तिविशिष्टस्तथा जीवोऽपि तत्संकोचभूतैराणवमायीय-

---

स्वभावतः जिसका स्वातन्त्र्य अप्रतिहत हो ऐसी इच्छाशक्ति संकुचित होकर अपूर्णम्मन्यता को जन्म देती है। इसे शास्त्रकारों ने **आणवमल** कहा है। तद्वत् ज्ञानशक्ति संकुचित होकर स्वाभाविक सर्वज्ञत्व को किञ्चिज्ञत्व के रूप में परिवर्तित कर देती है। इसी कारण से अन्तःकरण एवं ज्ञानेन्द्रियों के सम्बन्धवशात् भेदवेद्यों का प्रथनरूप मायीय मल जीव को आवृत करता है।

तद्वत् क्रियाशक्ति संकुचित होकर स्वाभाविक सर्वकर्तृत्व को किञ्चित्कर्तृत्व के रूप में परिवर्तित कर देती है। इसी कारण से कर्मेन्द्रियों के साथ सम्बन्ध होने से शुभकर्मानुष्ठान एवं अशुभकर्मानुष्ठान रूपों में कार्ममल जीव को आवृत कर लेता है।"

एवञ्च उपर्युक्त विश्लेषण से सुस्पष्ट होता है कि आणवमल जीव में अणुत्व का आपादन करता है। मायीयमल जीव को अखण्डचैतन्य से विच्छेदन कर अणुभूत अंशात्मा जीव का देहसम्बन्ध का आपादन करता है। तद्वत् कार्ममल शुभाशुभात्मक कर्मों में जीव में प्रवर्तक बनता है। अतः ये त्रिविध कर्म, जीव को बन्धन में डालने वाले हैं। एतद्रूप त्रिविध मल का स्वरूपकथन श्रीक्षेमराज ने किया है। तद्यथा—'अपूर्णम्मन्यता, भिन्नवेद्यप्रथा एवं शुभाशुभवासना ही क्रमशः आणवमल, मायीयमल तथा कार्ममल कहलाते हैं।"

ये त्रिविध मल अनादि हैं। भगवान् शिव यथा परिपूर्ण इच्छा, ज्ञान एवं क्रियाशक्ति से विशिष्ट हैं तथा जीव उन त्रिविध शक्तियों के संकोच रूप त्रिविध मलों से सहजतया आवृत रहता है। एवंच जीव स्वभावात् परमात्मा से भिन्न है। जैसे शिव सत्य है वैसे जीव भी सत्य है अतः संसारदशा में इन दोनों का आपस में भेद

१. शि० द०, पृ० ३५.
२. शि० सू० वि०, पृ० १६.

कार्ममलैः सहजतया आवृतः। अतो जीवः स्वभावतः परमात्मनो भिन्नः। तस्माद् यथा शिवः सत्यस्तथा जीवोऽपि सत्य इति संसारदशायां तयोर्भेदो नौपाधिकः, किन्तु वास्तविकः। मुक्तौ तयोरभेदोऽपि सत्य एवाङ्गीक्रियते। तथाहि स्मर्यते–

शिवः सत्यं जगत्सत्यं जीवः सत्यं स्वभावतः।
तेषामभेदः सत्यो वा क्रिमिभ्रमरयोरिव।।[1] इति।

प्रायः शैवशाक्तदर्शनेष्वपि मलस्य त्रैविध्यमेवाङ्गीक्रियते। किन्तु "आत्माश्रितो दुष्टभावो मलः" इति मललक्षणमभिदधद्भिर्नकुलीशपाशुपतैस्तस्य १. मिथ्याज्ञानम्, २. अधर्मः, ३. सक्तिहेतुः, अर्थाद् विषयासक्तिहेतुर्विषयसन्निधानादिः, ४. च्युतिः = सदाचरणाद् भ्रंशः, ५. पशुत्वमूलम्, अर्थाज्जीवत्वप्रापकोऽनादिसंस्कार इति पञ्चविधत्वमङ्गीक्रियते। तदुक्तम्–

मिथ्याज्ञानमधर्मश्च सक्तिहेतुश्च्युतिस्तथा।
पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः।।[2] इति।

एते च पूर्वोक्तत्रिविधमलेष्वेवान्तर्भवन्ति। एतन्मलत्रयमेव पाशशब्देनाप्यभिधीयते। तदुक्तं शिवमहापुराणे–"मलत्रयमयं पाशं

---

औपाधिक नहीं प्रत्युत वास्तविक है। पर, मुक्तिदशा में जीव तथा शिव में अभेद विद्यमान रहता है अतः यह अभेद भी सत्य है। तद्यथा—

शिवः सत्यं ............................क्रिमिभ्रमरयोरिव।।इति।

प्रायेण शैवागमदर्शन एवं शाक्तागमदर्शन में भी मल के तीन भेद ही मान्य हैं। किन्तु नकुलीशपाशुपत दर्शन में मल के स्वरूप एवं प्रभेद विलक्षणरूप से प्रतिपादित हुए हैं। तद्यथा— मल का लक्षण है— "आत्माश्रित दुष्टभाव को मल कहा जाता है।" इसके ५ प्रभेद होते हैं— १. मिथ्याज्ञान २. अधर्म ३. सक्ति हेतु (आसक्तिहेतुक विषयसन्निधानादि) ४. च्युति (सदाचार-भ्रंश) एवम् ५. पशुत्वमूल (जीवत्वप्रापक अनादिसंस्कार)। तथाहि–

मिथ्याज्ञानमधर्मश्च.......तन्त्रे हेया विविक्तितः।।१।।

इन पाँचों मलप्रभेदों का अन्तर्भाव, उपर्युक्त त्रिविध मल में ही हो जाता है। इन त्रिविध मलों का पाशशब्द से भी प्रतिपादन प्राप्त होता है। अतएव शिवमहापुराण में कहा गया है— "मलत्रयमयं पाशं भोगभोग्यत्वलक्षणम्।" मलत्रयरूप पाशों से

---

१. ब्र० सू० श्रीकर० २।३।४०.
२. स० द० सं०, पृ० ३००.

भोगभोग्यत्वलक्षणम्"[२] इति। एतन्मलत्रयरूपपाशबद्धोऽयं जीवः पशुरित्यप्युच्यते। पाशनिवृत्तौ च पशुः पत्या समरसो भवति।

**मोक्षोपायेषु शक्तिपातो दीक्षा च**

वीरशैवदर्शनस्य साधनाप्रधानत्वादत्र दीक्षां विना साधने प्रवेशाभावान्मुमुक्षोरत्र दीक्षाऽनिवार्यैव। दीक्षया जीवस्याणवादिमलत्रयनिवृत्तिर्भवति, परब्रह्मपरशिवाख्यमहालिङ्गेन साकं स्वात्माऽभेदरूपशिवज्ञानं च प्राप्यत इति भगवत्पादै रेणुकाचार्यैः–

दीयते च शिवज्ञानं क्षीयते पाशबन्धनम्।
यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः।।[३]

इति दीक्षाशब्दस्याक्षरार्थो निरूपितः। श्रीकृष्णद्वैपायनव्यासेनापि–

---

आबद्ध होने के कारण जीव को पशु कहा गया है। जब शिवगुरुकी कृपा प्राप्त होती है तब पाश की निवृत्ति होती है तथा पशुता की निवृत्ति होने से जीव पशुपति के साथ समरस होकर कृतार्थ हो जाता है।

**मोक्षोपायो में शक्तिपात एवं दीक्षा का स्वरूप**

वीरशैव दर्शन में साधना की प्रधानता है। अतः दीक्षा के विना यहाँ प्रवेश अमान्य है। अतः मुमुक्षु के लिए यहाँ दीक्षा अनिवार्य मानी गई है। दीक्षा से जीव के त्रिविध मल का अपसारण होता है। परिणामस्वरूप साधक को परब्रह्म (परशिव महालिङ्ग) के साथ स्वात्मप्रभेद शिवज्ञान प्राप्त होता है। दीक्षाशब्द के अक्षरों पर आधारित अर्थ को भगवत्पाद रेणुकाचार्य ने सुस्पष्टता से प्रतिपादित किया है— दीयते च शिवज्ञानं.......दीक्षेतीयं विचक्षणैः।।१।।

श्रीकृष्णद्वैपायन व्यासभगवान् ने भी यही कहा है—

"संस्कारं परमं पुण्यं.........दीक्षेत्यपि च कथ्यते।।१छ।।

श्रीजयरथ ने इसी अभिप्राय को प्रकट किया है तदर्थ निम्नाङ्कित वचन को उद्धृत किया है—

दीयते ज्ञानसद्भावः.......दीक्षा तेनेह कीर्तिता।।१।।

किन्तु यह दीक्षा उन्हीं को प्राप्त होती है, जो शक्तिपात प्राप्त कर चुके हों। यह सर्वसुलभ नहीं है। तद्यथा—

---

२. शि० पु० ७।२।१७।२७.

३. सि० शि० ६।११, पृ० ८५.

संस्कारं परमं पुण्यं शिवेन परिभाषितम्।।
दीयते येन विज्ञानं क्षीयते पाशबन्धनम्।
तस्मात् संस्कार एवाऽयं दीक्षेत्यपि च कथ्यते।।[1]

इति स एवार्थो निरूपितः। श्रीजयरथोऽपि–

दीयते ज्ञानसद्भावः क्षीयन्ते पशुवासनाः।
दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता।।[2]

इति वचनमुद्धरन् तमेवाभिप्रायं प्राकटयत्। इयं च दीक्षा न सर्वेषां सुलभा, किन्तु–"शक्तिपातं समालोक्य दीक्षया योजयेदमुम्"[3] इति रेणुकभगवत्पादोक्त्या शक्तिपातविशिष्टानामेव।

ईश्वरानुग्रह एवात्र 'शक्तिपातः' इत्युच्यते। ईश्वरानुग्रहरूपोऽयं शक्तिपातो बहुषु जन्मसु नित्य–नैमित्तिक–प्रायश्चित्तकर्मानुष्ठानेन पूर्वार्जितपापक्षयरूपमलपरिपाके सति जायते। एतादृशशक्तिपातार्हः साधकस्तप्ततनुः पक्वमलश्चेत्युच्यते। तद्विपरीतश्चातप्ततनुरपक्वमलश्चेत्यभिधीयते। तदुक्तम्–

तपस्तप्ता तनुर्यस्य स तप्ततनुरुच्यते।
परिपक्वोविमोक्षाय सोऽश्नुते लिङ्गधारणम्।।
न करोति तपः पूर्वं सोऽतप्ततनुरुच्यते।
अपक्वोऽयं विमोक्षाय नाश्नुते लिङ्गधारणम्।।[4] इति।

---

'शक्तिपातं समालोक्य दीक्षया योजयेदमुम्।।"½।।

ईश्वरानुग्रह ही शक्तिपात कहलाता है। यह शक्तिपात तभी प्राप्त होता है जब अनेकजन्मसाध्य नित्य, नैमित्तिक प्रायश्चित्तों के अनुष्ठान से पूर्वार्जित पापों का क्षय हो जाने पर मल परिपक्व हो जाता है। तद्विपरीत व्यक्ति अतप्ततनु एवम् अपक्वमल कहलाता है— 'तपस्तप्ता तनुर्यस्य.......नाश्नुते लिङ्गधारणम्।।२।।"

अतएव भगवत्पाद श्रीरेणुकाचार्य जी ने अपक्वमल के ईश्वरानुग्रहविरही होने से दीक्षाधिकार की अप्राप्ति प्रतिपादित की है। वीरशैवसम्प्रदाय में क्रियादीक्षा-प्रकरण में अप्राप्तशक्तिपात व्यक्ति को इष्टलिङ्गधारण में अनधिकारी बताया गया है।

---

१. शि० पु० ७।२।१५।५.
२. तन्त्रा० वि० १।४३.
३. सि० शि० ६।१०, पृ० ८५
४. वी० आ० च०, पृ० ७८

अत एव रेणुकभगवत्पादैः–

अतप्ततनुरज्ञो वै आमः संस्कारवर्जितः।
दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तमम्।।[१]

इत्यत्रापक्वमलस्य, अत एवेश्वरानुग्रहरहितस्य दीक्षाऽनधिकारिणो वीरशैवसम्प्रदाये क्रियादीक्षायां प्राप्यमाणस्येष्टलिङ्गधारणेऽनधिकारित्वं सूचितम्।

अत्रेदं ज्ञातव्यम्–पूर्वोक्तस्त्रिविधोऽपि मल आमः पक्वश्चेति द्विविधः। तदुक्तं कृष्णद्वैपायनव्यासेन–"मलोऽप्यामश्च पक्वश्च भवेत् संसारकारणम्"[२] इति। तत्र तपसा प्रक्षीणः पक्वः, तद्विपरीतश्चामः। पक्वकर्मा मुमुक्षुरेवेश्वरानुग्रहरूपं शक्तिपातं प्राप्नोति। तदुक्तं जगद्गुरुरेणुकाचार्यैः–

स्वकर्मपरिपाकेन प्रक्षीणमलवासनः।
शिवप्रसादाज्जीवोऽयं जायते शुद्धमानसः।।
शुद्धान्तःकरणे जीवे शुद्धकर्मविपाकतः।
जायते शिवकारुण्यात् प्रस्फुटा भक्तिरैश्वरी।।[३]इति।

एवं जीवोऽनेकजन्मार्जितसुकृतजन्यस्वकर्मपरिपाकवशेन विनष्टमलवासनो नित्याऽनुष्ठितशिवार्चनशिवाचारादिजनितशिवप्रसादप्रभावेण शुद्धान्तःकरणो यदा जायते, तदाऽस्य जीवस्य किञ्चिज्ज्ञत्व-किञ्चित्कर्तृत्वादिशक्तयो भक्तिरूपेण

---

यहाँ विविक्ततया ज्ञातव्य है कि उपर्युक्त त्रिविध मल प्रकारान्तर से दो प्रकार के होते हैं आममल एवं पक्वमल। तप से प्रक्षीण होने पर मल पक्व कहलाता है। तद्भिन्न मल आम कहलाता है। तद्यथा कृष्णद्वैपायन भगवत्पाद ने कहा है—

'मलोऽप्यामश्च पक्वश्च भवेत् संसारकारणम्।।½।।'

पक्वमल मुमुक्षु ही ईश्वरानुग्रहरूप शक्तिपात की प्राप्ति का अधिकारी होता है। जगद्गुरु रेणुकाचार्य ने सुस्पष्ट कहा है—

स्वकर्मपरिपाकेन.............प्रस्फुटा भक्तिरैश्वरी।।२।।

एवंच जीव, अनेकजन्मार्जित सुकृत से कर्मपरिपाकवशात् मल एवं वासना के विनष्ट हो जाने पर नित्य अनुष्ठित शिवार्चन एवं शिवाचार से प्राप्त शिवप्रसाद के

१. सि० शि० ६।३९, पृ० ९९
२. शि० पु० ७।१।३१।७२.
३. सि० शि० ५।५२-५३, पृ० ७२.

परिणमन्ति। तदाऽयं जीवोऽङ्ग इत्युच्यते। अस्यैव शुद्धजीवस्य पिण्ड इत्यपि नामान्तरं वर्तते। तदुक्तं भगवत्पादैः–

बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे।
शुद्धान्तःकरणो देही पिण्डशब्देन गीयते।।
शिवशक्तिसमुत्पन्ने प्रपञ्चेऽस्मिन् विशिष्यते।
पुण्याधिकः क्षीणपापः शुद्धात्मा पिण्डनामकः।।[१] इति।

एतादृशशुद्धान्तःकरणस्यैव साधकस्यात्मानात्मविवेकः सञ्जायते। अनेनैव विवेकेन स शरीरेन्द्रियमनोबुद्धिभ्यो व्यतिरिक्तं स्वात्मानं ज्ञात्वा, ईश्वरं च स्वस्मादपि भिन्नं स्वस्य प्रेरकं च जानाति। एवं क्षेत्र-क्षेत्रज्ञ-विवेक्यत्र पिण्डज्ञानीति कथ्यते। तदुक्तमाचार्यैः–

शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तः सनातनः।
आत्मस्थितिविवेकी यः पिण्डज्ञानी स कथ्यते।।
शरीरात् पृथगात्मानमात्मभ्यः पृथगीश्वरम्।
प्रेरकं यो विजानाति पिण्डज्ञानीति कथ्यते।।[२] इति।

एवमात्मानात्मविवेकेन सत्संस्कारबलादैहिकामुष्मिकफलभोगेषु विरक्तिर्जायते। विरक्त्या रागद्वेषाद्यन्तरिन्द्रियविषयाणां शब्दादिबहिरिन्द्रियविषयाणां च वैमुख्येन

---

प्रभाव से शुद्धान्तःकरण हो जाता है। चित्तशुद्धि के अनन्तर जीव की संकुचित शक्ति (किञ्चिज्ज्ञता एवं किञ्चित्कर्तृता प्रभृति) भक्तिरूप से परिणत होती है। तब यह जीव, परमेश्वर का अङ्ग कहलाता है। शुद्ध जीव का ही दूसरा नाम **पिण्ड** कहा गया है। भगवत्पाद ने कहा है— बहुजन्मकृतैः पुण्यैः............शुद्धात्मा पिण्डनामकः॥१॥

इस प्रकार जिसका अन्तःकरण शुद्ध है— ऐसे साधक को आत्मा एवम् अनात्मा का विवेकप्रबोध हो जाता है। इसी विवेक से वह शरीर, इन्द्रिय, मनस् एवं बुद्धि से व्यतिरिक्त स्वयं (स्वात्मा) को जानकर ईश्वर को अपने से भिन्न-प्रेरक रूप में जानता है। ऐसे क्षेत्र-क्षेत्रज्ञविवेकी साधक को पिण्डज्ञानी कहा जाता है। तद्यथा—

शरीरेन्द्रियबुद्धिभ्यो.......पिण्डज्ञानीति कथ्यते॥२॥

एवंच आत्मा और अनात्मा के विवेक से शुभसंस्कार के बल पर ऐहिक और आमुष्मिक फलभोगों में विरक्ति उत्पन्न होती है। विरक्ति होने से अन्तरिन्द्रिय

---

१. सि० शि० ५। ३१-३३, पृ० ६२-६३.
२. सि० शि० ५।४, ६, पृ० ७३-७५.

शमदमादिषट्कसम्पत्तिस्ततो मुमुक्षुता, तया च संसारदुःखनिवृत्त्युपायभूते महालिङ्गे जिज्ञासा भक्तिश्चोदेति।

अथ–"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"[१] इति श्रुत्यादेशानुसारं पूर्वोक्तपिण्डता-पिण्डविज्ञान-संसारहेयस्थलसम्पन्नो जीवः संसारनाशकं महालिङ्गपर्यायवाचकं परं ब्रह्म जिज्ञासुरुपहारपाणिः सन् शिवसिद्धान्ततत्त्वज्ञं शिष्यसन्देहविच्छेदकं सर्वतन्त्रस्वतन्त्रमाचार्यकुलसञ्जातम् अर्थाद् वीरमाहेश्वराभिधजङ्गमवंशसंजातं लिङ्गाङ्गसामरस्यरहस्यबोधकं भगवन्तं श्रीगुरुमुपसृत्य[२]–

भो! कल्याणमहाभागशिवज्ञानमहोदधे।
आचार्यवर्य सम्प्राप्तं रक्ष मां भवरोगिणम्।।[३]

इति प्रार्थयेत्। तदा हि गुरुः–"शक्तिपातं समालोक्य दीक्षयां योजयेदमुम्"[४] इति रेणुकभगवत्पादादेशानुसारम्–

---

विषय (रागद्वेषादि) तथा बहिरिन्द्रियविषय (शब्दस्पर्शादि) से विमुखता होती है। तदनन्तर शमदमादि षट्कसाधनसम्पन्नता उदित होने पर मुमुक्षुता उत्पन्न होती है। तत्प्रेरित महालिङ्ग (संसारदुःखनिवृत्ति के परमोपाय) के सन्दर्भ में जिज्ञासा तथा भक्ति उदित होती है।

अथ पिण्डता, पिण्डविज्ञान एवं संसारहेयस्थल की सम्पन्नता होने पर जीव-संसार-नाशक महालिङ्ग के अपर पर्याय परब्रह्म का जिज्ञासु बनता है। वह श्रद्धया उपहार लेकर शिवसिद्धान्त तत्त्ववेत्ता तथा शिष्यसन्देहहारक आचार्यकुलोत्पन्न सर्वतन्त्रस्वतन्त्र वीरमाहेश्वर जङ्गमवंशोत्पन्न लिङ्गाङ्गरहस्यबोधक पूज्य-श्रीसद्गुरु के समीप पहुँचता है और विनीत भाव से प्रार्थना करता है— 'भो कल्याण..... रक्ष मां भवरोगिणम्।।१।।

तत्पश्चात् रेणुकभगवत्पाद की निम्नाङ्कित आज्ञा के अनुसार सद्गुरु अपने शिष्यगत शक्तिपात-चिह्नों की परीक्षा करते हैं। तदनन्तर वह अनुरूप दीक्षा का विधान करते हैं। तद्यथा—

---

१. मुण्ड०१।२।१२.
२. सि० शि० ६।१-७, पृ० ८२-८३, क्रि० सा०, भा० ३, पृ० १३३-१३४.
३. सि० शि० ६।९, पृ० ८४.
४. सि० शि० ६।१०, पृ० ८५.

लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः।
सा यस्मात् परमा शक्तिः प्रबोधानन्दरूपिणी।।
आनन्दबोधयोर्लिङ्गमन्तःकरणविक्रियाः।
यथा स्यात् कम्परोमाञ्चस्वरनेत्राङ्गविक्रियाः।।[1]

इत्युक्तानि शक्तिपातचिह्नानि परीक्ष्य तदनुरूपां दीक्षां विधत्ते।

**दीक्षात्रैविध्यम्**

योगाङ्ग-भोगाङ्ग-त्यागाङ्गापरपयार्येषु कारण-सूक्ष्म-स्थूलाख्येषु विद्यमानानामाणव-मायीय-कार्माख्यानां मलत्रयाणां निवारणार्थं शैव-शाक्तदर्शनेष्विव वीरशैवदर्शनेऽपि त्रिविधा हि दीक्षाऽङ्गीकृता। तदुक्तं कुम्भजं प्रति भगवत्पादै रेणुकाचार्यैः—

सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः।
वेधारूपा क्रियारूपा मन्त्ररूपा च तापस।।[2] इति।

---

'शक्तिपातं समालोक्य दीक्षया योजयेदमुम्।।''½।। इति
'लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः।
........................स्वरनेत्राङ्गविक्रियाः।।२।।'' इतिच।

**त्रिविध दीक्षा का स्वरूप**

योगाङ्गसंज्ञक कारणशरीर, भोगाङ्गसंज्ञक सूक्ष्मशरीर तथा त्यागाङ्गसंज्ञक स्थूलशरीर में विद्यमान क्रमशः आणव, मायीय एवं कार्ममल के निवारणार्थ शैवदर्शन तथा शाक्तदर्शन की तरह वीरशैवदर्शन में भी तीन प्रकार की दीक्षा स्वीकार्य है। अगस्त्यमुनि को भगवत्पाद रेणुकाचार्यजी ने कहा है—

सा दीक्षा.......मन्त्ररूपा च तापस।।१।।

श्रीमायिदेवमहाशय ने भी त्रिविध दीक्षा से त्रिविध मल की निवृत्ति को प्रतिपादित किया है। तद्यथा—

---

१. क्रि० सा०, भा० २, पृ० १९५.
२. सि० शि० ६।१२, पृ० ८५.

श्रीमायिदेवोऽपि–

तनुत्रयगतानादिमलत्रयमसौ गुरुः।।
दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशत्।
यथा पुरत्रयं दग्धं युगपत् पुरवैरिणा।।
तथा मलत्रयं दग्धं युगपद् देशिकात्मना।
वेधा-मनु-क्रियाकारा दीक्षा शैवी शिखा मता।।[५]

इति दीक्षात्रयेण मलत्रयनिवृत्तिं प्रतिपादयामास।

**वेधा दीक्षा**

गुरोरालोकमात्रेण हस्तमस्तकयोगतः।
यः शिवत्वसमावेशो वेधा दीक्षेति सा मता।।[१]

इत्याचार्योक्त्यनुसारं यदा गुरुः स्वदिव्यदृष्टिपातेन स्वामृतकरेण च शिष्यस्य मस्तकं स्पृष्ट्वा शिष्ये चिद्रूपमाविष्करोति, अर्थाद् गुरोरालोकेन हस्तमस्तकसंयोगेन च शिष्यस्य स्वकीयचिद्रूपबोधो भवति, सा वेधा दोक्षेत्युच्यते। अनया दीक्षया शिष्यस्याणवमलो निवर्तते, 'शिवोऽहम्' इति भावनाया उदयश्च जायते। इयमेव 'शिवोऽहम्' इति भावना भावलिङ्गमित्युच्यते। एवं वेधादीक्षयाऽऽणवमलनिवृत्तौ सत्यां शिवोऽहमिति भावनया शिवजीवयोः

---

तनुत्रयगतानादि........दीक्षा शैवी शिखा मता॥२½॥

**वेधादीक्षा–**

"गुरुरालोकमात्रेण......वेधा दीक्षेति सा मता॥१॥

उपर्युक्त आचार्योक्ति के अनुसार सद्गुरु निज दिव्य-दृष्टिपात से अथवा निज अमृतमय कर से शिष्य के मस्तक का स्पर्श कर शिष्य में चिद्रूप को आविष्कृत करते हैं। इस प्रकार सद्गुरु के अवलोकन अथवा हस्तमस्तक संयोग से शिष्य का चिद्रूपबोध उदित होता है। यह वेधा दीक्षा कहलाती है। इस दीक्षा से शिष्यगत आणवमल की निवृत्ति होती है। तदनन्तर 'शिवोऽहम्'' –भावना का उदय होता है। इस भावना का नाम भावलिङ्ग बताया गया है। इस प्रकार वेधादीक्षा से आणवमल की निवृत्ति होने पर शिवोऽहम्– की भावना से शिव एवं जीव के सामरस्यरूप योग

---

१. अनु० सू० ५।५२-५४.
२. सि० शि० ६।१३, पृ० ८६.

सामरस्यरूपयोगप्राप्तिर्भवतीति वेधादीक्षया प्राप्तशिवोऽहंभावनारूपभावलिङ्गकोऽयं जीवोऽत्र सिद्धान्ते 'योगाङ्ग' इत्युच्यते। अत एव–

संयुयोज त्रिधाभूतं परादीक्षाबलेन तु।
योगाङ्गे भावलिङ्गं तु वेधादीक्षाबलेन वै।।[१]

इति मायिदेवेनापि वेधादीक्षया योगाङ्गे भावलिङ्गधारणमुपदिष्टम्।

### मान्त्री दीक्षा

"मान्त्री दीक्षेति सा प्रोक्ता मन्त्रमात्रोपदेशिनी"[२] इत्याचार्योक्त्या शिष्यस्य दक्षिणकर्णे निगूढं यथा स्यात् तथा यः पञ्चाक्षरीमन्त्रमात्रोपदेशोऽस्ति, सा मननत्राणधर्मिणी मान्त्री दीक्षेति कथ्यते। शिवो हि पञ्चाक्षरमन्त्रस्वरूपः, अतोऽस्य मन्त्रस्य गुर्वादेशानुसारं प्राणायामपूर्वकं पुनः पुनरावृत्त्या मननेन च साधकस्य सूक्ष्मशरीरे, अर्थान्मनसि विद्यमानो मोहरूपो भेदापादकश्च मायीयो मलो निवृत्तो भवति। किञ्च, अनया दीक्षया शिष्यस्य 'चिद्रूपोऽहम्' इत्याकारकः प्रबोधो जायते। इयमेव 'चिदहन्ता' 'प्राणलिङ्गम्' इति कथ्यते। एवं शिष्यस्य मायीयमलनिवारिका प्राणलिङ्गप्रबोधिका च दीक्षा मान्त्री दीक्षेत्याख्यायते।

---

की प्राप्ति होती है। एवंच वेधादीक्षा से भावलिङ्ग की स्थिति प्राप्त कर साधक जीव वीरशैवसिद्धान्त में **योगाङ्ग** कहलाता है। अतएव मायिदेव जी ने भी वेधादीक्षा द्वारा योगाङ्ग में भावलिङ्ग धारण का उपदेश किया है।

### मान्त्री दीक्षा

'मान्त्री दीक्षेति सा प्रोक्ता मन्त्रमात्रोपदेशिनी।'' इस आचार्योक्ति से शिष्य के दक्षिण कर्ण में गोपनीयता के साथ पञ्चाक्षरी मन्त्र मात्र का उपदेश किया जाता है। इसे मान्त्री दीक्षा कहते हैं। मनन करने से जो त्राण करे वह मन्त्र कहलाता है। भगवान् शिव, पञ्चाक्षर-मन्त्रस्वरूप है। अतः इस मन्त्र का सद्गुरु के आदेशानुसार प्राणायामपूर्वक पुनः पुनः आवृत्ति एवं मनन करने से साधक के सूक्ष्म शरीर (मनस्) में विद्यमान मोहरूप मायीयमल (भेद का आपादन करने वाला) निवृत्त हो जाता है। इस दीक्षा से शिष्य का उत्कृष्ट प्रबोध 'चिद्रूपोऽहम्' जागृत होता है। यह चिदहन्ता अथवा प्राणलिङ्ग कहलाता है। शिष्य की (मायीयमल-निवर्तन करने वाली) यह मान्त्री दीक्षा प्राणलिङ्ग की प्रबोधिका है। इस दीक्षा से युक्त साधक,

---

१. अनु० सू० ५।५७.
२. सि० शि० ६।१४, पृ० ८६.

एतादृशदीक्षासम्पन्नो हि साधकः सर्वाण्यपि भोग्यवस्तूनि परशिवाय विनिवेद्यैवोपभुङ्क्त इत्ययं 'भोगाङ्ग' इत्यभिधीयते। अत एव–"मन्त्र-दीक्षाबलेनैव भोगाङ्गे प्राणलिङ्गकम्"[१] इति शिवयोगिना मायिदेवेन भोगाङ्गापरपर्याये सूक्ष्मशरीरे मान्त्रदीक्षया प्राणलिङ्गधारणमुपदिष्टम्।

### क्रियादीक्षा

"कुण्डमण्डलिकोपेता क्रियादीक्षा क्रियोत्तरा"[२] इत्याचार्योक्त्या मण्डपदेवतादिप्रतिष्ठापूर्वकक्रियाप्रधाना हि दीक्षा क्रियादीक्षेत्युच्यते। वीरशैवसिद्धान्ते एतत्सम्प्रदायप्रवर्तकानां रेणुकदारुकादिपञ्चाचार्याणां सम्प्रदायानुवर्तिन आचार्याः पट्टाभिषिक्ताः परम्परागतमठस्थलसमुत्पन्ना एव गुरवो दीक्षां प्रदास्यन्ति[३]। ते खल्वेकस्मिन् शुभमुहूर्ते मठमन्दिरादिपवित्रस्थानेषु मण्डपं विरचय्य तन्मध्ये रेणुक–दारुक–घण्टाकर्ण–धेनुकर्ण–विश्वकर्णाख्यभुवनप्रसिद्धपञ्चाचार्यप्रतीकान् पञ्चकलशान् संस्थाप्य तेषु तत्तदाचार्यानाहूय तत्साक्षित्वे च कलशोदकैः शिष्यं त्रिवारमभिषिच्य, शिष्यस्य मांसपिण्डं देहं मन्त्रपिण्डं विधातुं तस्य दक्षिणकर्णे

---

समस्त भोग्यवस्तु को परशिव के प्रति निवेदन करने के अनन्तर ही ग्रहण करता है। ऐसे साधक का अन्वर्थ (नामानुरूप) नाम 'भोगाङ्ग' है। अतएव शिवयोगी मायिदेव ने भोगाङ्ग संज्ञक सूक्ष्मशरीर में मान्त्रदीक्षा द्वारा प्राणलिङ्गधारण का उपदेश किया है।

### क्रियादीक्षा

'कुण्डमण्डलिकोपेता क्रियादीक्षा क्रियोत्तरा।' यह आचार्यकथन है। तदनुसार क्रियाप्रधान दीक्षा को क्रियादीक्षा कहा जाता है। इसमें मण्डपनिर्माण तथा देवता की प्रतिष्ठा करने के अनन्तर इस दीक्षा का विधान किया जाता है। वीरशैवसिद्धान्त में इस सम्प्रदाय के प्रवर्तक रेणुक-दारुक प्रभृति पाँच आचार्यों के सम्प्रदायानुवर्ती आचार्यों का पट्टाभिषेक होता है। परम्परागत मठस्थल में उत्पन्न पट्टाभिषिक्त गुरु ही दीक्षादान के लिए अधिकृत होते हैं। वे एक शुभमुहूर्त में मठ-मन्दिर जैसे पवित्र स्थान में मण्डप बनाकर उसके मध्य रेणुक-प्रभृति प्रसिद्ध पाँच आचार्यों के प्रतीकस्वरूप

---

१. अनु० सू० ५।५।८.

२. सि० शि० ६।१५, पृ० ८६.

३. क्रि० सा०, भा० ३, पृ० १३३; सि० शि० ६।४-७, पृ० ८२-८३.
तदर्धं गौमुखं चैव प्रोक्तं लिङ्गस्य लक्षणम्।। (क्रि० सा०, भा० ३, पृ० ४१)

शिवपञ्चाक्षरमहामन्त्रं निगूढम्, अर्थात् परश्रुतिगोचरीभूतं यथा न भवति तथा कीर्तयन्ति। किञ्च, तदानीमेव तस्याः पञ्चाक्षर्याः स्वरूपम्, तस्याश्छन्दः, तन्मन्त्रद्रष्टारं महर्षिम्, तद्देवता–प्रत्यधिदेवताः, करन्यासमङ्गन्यासं च निरूपयन्ति। तदुक्तं रेणुकाचार्यैः–

पञ्चब्रह्ममयैस्तत्र स्थापितैः कलशोदकैः।
आचार्यः सममृत्विग्भिस्त्रिः शिष्यमभिषिञ्चयेत्।।
अभिषिच्य गुरुः शिष्यमासीनं परितः शुचिम्।
ततः पञ्चाक्षरीं शैवीं संसारभयतारिणीम्।।
तस्य दक्षिणकर्णे तु निगूढमपि कीर्तयेत्।
छन्दोरूपमृषिं चास्य देवतान्यासपद्धतिम्।।[1] इति।

एवं मन्त्रोपदेशेन शिष्यदेहं संशोध्य पञ्चसूत्रप्रक्रियया विनिर्मितमङ्गुष्ठप्रमाणं शैलजं शिवलिङ्गं[2] यद्वा नर्मदाबाणं गृहीत्वा जलाधिवास–धान्याधिवासक्रियया पञ्चगव्यैः पञ्चामृताभिषेकैश्च तस्य शिलात्वं निवर्त्य मूलपञ्चाक्षरमन्त्रेण संस्कृते तस्मिन् शिवलिङ्गे शिवकलानियोजनद्वारा प्राणप्रतिष्ठां च कृत्वा तल्लिङ्गं शिष्यस्य हस्ते प्रदाय,

---

पाँच कलशों को स्थापित कर उनमें ५ आचार्यों का आवाहन किया जाता है। उन आचार्यों को साक्षी मानकर कलशोदक से तीन बार शिष्य को अभिषिक्त किया जाता है। शिष्य के मांसपिण्डात्मक देह को मन्त्रपिण्ड बनाने हेतु उसके दाहिने कान में शिवपञ्चाक्षर महामन्त्र का गोपनीय शैली से उपदेश किया जाता है। इस अवसर पर पञ्चाक्षरी का स्वरूप, छन्द, मन्त्रद्रष्टा ऋषि, देवता प्रत्यधि-देवता करन्यास एवम् अङ्गन्यास (प्रत्येक) का निरूपण किया जाता है। तद्यथा—पञ्चब्रह्ममयैस्तत्र.....देवतान्यासपद्धतिम्।।३।।

उपर्युक्त प्रकार से मन्त्रोपदेश द्वारा शिष्यदेह का शोधन कर पञ्चसूत्रप्रक्रिया द्वारा निर्मित अङ्गुष्ठप्रमाण का शैलसुलभ शिवलिङ्ग अथवा नर्मदाबाण का ग्रहण कर जलाधिवास एवं धान्याधिवास क्रियाद्वारा पञ्चगव्य एवं पञ्चामृत के अभिषेक से उसका शिलाभाव निवर्तन कर मूल पञ्चाक्षर मन्त्र द्वारा संस्कृत उस शिवलिङ्ग में शिवकला का नियोजन कर प्राणप्रतिष्ठापुरःसर उस लिङ्ग को शिष्य के हाथ में रखकर निम्नांकित उपदेश, गुरु द्वारा किया जाता है—

---

१. सि० शि० ६।१९-२१, पृ० ८७-८८.
२. लिङ्गवृत्तसमं पीठं दैर्घ्यं विस्तार एव च।

प्राणवद्धारणीयं तत्प्राणलिङ्गमिदं तव।
कदाचित् कुत्रचिद्वापि न वियोजय देहतः।।
यदि प्रमादात् पतिते लिङ्गे देहान्महीतले।
प्राणान् विमुञ्च सहसा प्राप्तये मोक्षसम्पदः।।[1]

इत्युपदिशन्ति। एवं क्रियादीक्षया प्राप्तमिदं शिवलिङ्गमिष्टलिङ्गमित्यभिधीयते। इष्टलिङ्गधारणमेव क्रियादीक्षायाः परमोद्देश्यम्। अनया क्रियादीक्षया कार्ममलस्य, अर्थात् शुभाशुभवासनानां निवृत्तिर्जायते।

तदेवं वीरशैवसिद्धान्ते मुक्त्युपायेषु दीक्षायाः प्राधान्यं वर्तते। पूर्वोक्तो दीक्षारहितः पुरुषो बद्धजीव इति, यद्वा पशुरिति; दीक्षासम्पन्नश्च शुद्धजीव इति, गुर्वादेशानुसारं प्राप्तशिवस्वरूपश्च मुक्तजीव इति शिवागमेषु प्रतिपाद्यते। तदुदाहृतं भाष्यकारैः श्रीपतिपण्डिताराध्यैः—

बद्धशुद्धादिभेदेन जीवत्रयमिदं स्मृतम्।
गुरुदीक्षाविहीनश्च शिवभक्तिविवर्जितः।।
स्वकर्तृत्वाभिमानी तु बद्धः स पशुरुच्यते।
गुरुदीक्षां परां लब्ध्वा कैङ्कर्यत्रयसंयुतः।।

---

'प्राणवद्धारणीयं तत्प्राणलिङ्गमिदं तव। .......प्राप्तये मोक्षसम्पदः।।२।।

क्रियादीक्षा द्वारा प्राप्त शिवलिङ्ग-इष्टलिङ्ग कहलाता है। क्रियादीक्षा का परम उद्देश्य इष्टलिङ्ग धारण है। इस क्रियादीक्षा से कार्ममल (शुभाशुभ-वासना) की निवृत्ति होती है।

इस प्रकार वीरशैवसिद्धान्त में मुक्ति के उपायों की दीक्षा की प्रधानता है। यहाँ यह विवेचना अत्यावश्यक है— दीक्षारहित पुरुष बद्धजीव है, अर्थात् पशु है। दीक्षा की प्राप्ति से वह शुद्धजीव कहलाता है तथा गुरु की कृपापूर्ण आज्ञा से शिवस्वरूप को प्राप्त कर वह मुक्त जीव कहलाता है। भाष्यकार. श्रीपतिपण्डिताराध्य महाशय ने इसकी सुविशद व्याख्या की है—

बद्धशुद्धादिभेदेन............मुक्तजीव इति स्मृतः।५।।

त्रिविध जीवों में दीक्षासम्पन्न शुद्धजीव ही मोक्ष का अधिकारी है अतः वह मुमुक्षु कहलाता है।

---

१. सि० शि० ६।५-६, पृ० ९०.

शक्त्यादिसद्गुणोपेतो मुमुक्षू रागवर्जितः।
शिवाधीनः सुधीर्भक्तः शुद्धजीव इति स्मृतः।।
शिवयोगशिवज्ञानविभवानन्दसंयुतः ।
प्रचण्डातपमध्यस्थशुद्धकर्पूरदीपवत् ।।
शिवाकारे पराकाशे कोटिसूर्यप्रकाशके।
विलीनचित्तवृत्तिस्तु मुक्तजीव इति स्मृतः।।[१] इति।

उक्तेषु त्रिविधजीवेषु दीक्षासम्पन्नः शुद्धजीव एव मोक्षाधिकारीति स एव मुमुक्षरित्युच्यते।

**ज्ञानकर्मणोः समसमुच्चयः**

अत्र वीरशैवसिद्धान्ते पूर्वमीमांसकैरिव न केवलं कर्मणो न वा सांख्यन्याय–वैशेषिकाद्वैतवेदान्तिभिरिव केवलं ज्ञानस्य मोक्षहेतुत्वमङ्गीक्रियते, किन्तु "भावकर्मसमायुक्तं ज्ञानमेव विमुक्तिदम्"[२] इत्याचार्योक्त्या भावकर्मसमुच्चितं ज्ञानं मोक्षहेतुरित्युररीक्रियते। अत्र भावना तूभयान्वयिनी, अर्थात् कर्माचरणे ज्ञानप्राप्तौ च भावनाया आवश्यकता वर्तते। तत्र कर्मान्विता भावना भक्तिरिति, ज्ञानान्विता च भावना निदिध्यासनमिति कथ्यते। अत एव भगवत्पादै रेणुकाचार्यैः–

---

**ज्ञान एवं कर्म का समुच्चय (समात्मक)**

पूर्वमीमांसा दर्शन में केवल कर्म को मोक्षसाधन बताया गया है। सांख्य, न्याय-वैशेषिक एवम् अद्वैतवेदान्त दर्शनों में केवल ज्ञान को मोक्षसाधन बताया जाता है। इसके विपरीत वीरशैवसिद्धान्त में भावकर्मसमुच्चित ज्ञान को मोक्षहेतु बताया जाता है। तद्यथा— 'भावकर्मसमायुक्तं ज्ञानमेव विमुक्तिदम्।'' इति।

यहाँ भाव (भावना) की आवश्यकता केवल कर्म में नहीं अपितु ज्ञान में भी प्रतिपादित है। कर्मान्वित भावना भक्ति कहलाती है तथा ज्ञानान्वित भावना निदिध्यासन कहलाती है। भगवत्पाद श्रीरेणुकाचार्य की स्पष्ट उक्ति है— भावनारहित कर्म निन्दनीय है तथा भावनाविशिष्ट कर्म प्रशंसनीय है। तद्यथा—

---

१. ब्र० सू० श्रीकर० २।३।४६.
२. सि० शि० १६।२, पृ० ७९.

अर्थहीना यथा वाणी पतिहीना यथा सती।
श्रुतिहीना यथा बुद्धिर्भावहीना तथा क्रिया।।[1]

इति भावनारहितस्य कर्मणो निन्दां कृत्वा,

भावनाविहितं कर्म पावनादपि पावनम्।
तस्माद् भावनया युक्तं परधर्मं समाचरेत्।।
भावेन हि मनःशुद्धिर्भावशुद्धिश्च कर्मणा।
इति सञ्चिन्त्य मनसा योगी भावं न संत्यजेत् ।।
शिवभावनया सर्वं नित्यनैमित्तिकादिकम्।
कुर्वन्नपि महायोगी गुणदोषैर्न बाध्यते।।[2]

इति भावनाविशिष्टस्य कर्मणः प्राशस्त्यमुक्तम्। एवमेव–

चक्षुर्हीनो यथा रूपं न किञ्चिद्वीक्षितुं क्षमः।
भावहीनस्तथा योगी न शिवं द्रष्टुमीश्वरः।।[3]

इति निषेधविधया भावनाविशिष्टस्य ज्ञानस्यापि प्राशस्त्यमुक्तम्। तस्माद् भावकर्मसमन्वितं ज्ञानं मोक्षकारणमिति निश्चीयते।

ननु यदि ज्ञान–कर्म–भावनानां त्रयाणामपि मोक्षसाधनत्वम्, तर्हि–"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[4] इति श्रुतौ ज्ञानातिरिक्तस्य

---

अर्थहीना.....तथा क्रिया।।१।।इति

एवम्—

भावनाविहितं कर्म.....गुणदोषैर्न बाध्यते ।।३।। इति

आचार्य ने निषेधविधया भावनाविशिष्ट ज्ञान का प्राशस्त्य कहा है। एवंच भावकर्म- समन्वित ज्ञान को मोक्षकारण माना जाता है।

जिज्ञासा होती है कि ज्ञान, कर्म एवं भावना इन तीनों की मोक्षसाधनता मानी जाती है तो 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।'' इस श्रुति में ज्ञानातिरिक्त की मोक्षसाधनता का निरास तथा एकमात्र ज्ञान की मोक्षसाधनता का

---

१. सि० शि) १६।५, पृ० ७७.

२. सि० शि० १६।२-४, पृ० ९३-९४.

३. सि० शि० १६।६, पृ० ७७.

४. श्वे० उ० ३।८.

मोक्षसाधनत्वं निरस्य ज्ञानस्यैकस्यैव मोक्षसाधनत्वश्रवणं विरुध्येत, इति चेन्न, ज्ञानकर्मणोः समसमुच्चयेन, ज्ञानकर्मणोरङ्गाङ्गिभाव-समुच्चयेन चेति द्विधाऽत्र समाधातुं शक्यत्वात्। तथा हि-

अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी।
फलोत्पत्तौ विरक्तस्तु तस्मात् तद्द्वयमाचरेत्।।
ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते।
फलाभिसन्धिरहितं तस्मात् कर्म न संत्यजेत्।।
आचार एव सर्वेषामलङ्काराय कल्प्यते।
आचारहीनः पुरुषो लोके भवति निन्दितः।।
ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्।।[1]
ज्ञानहीनं सदा कर्म पुंसां संसारकारणम्।
तदेव ज्ञानयोगेन संसारविनिवर्तकम्।।[2]

इत्यादिस्थलेषु रेणुकभगवत्पादाचार्या महर्षिमगस्त्यं प्रति ज्ञानकर्मणोः समसमुच्चयं प्रतिपादितवन्तः। इदमत्र रहस्यम्—कर्म तावद् द्विविधम्—पतिकर्म, पशुकर्म चेति। तत्राऽग्निष्टोमाद्यश्वमेधान्तानि यज्ञानि स्वार्गादिसाधनानीति नहि तैर्निःश्रेयसप्राप्तिरिति च पाशाश्रयत्वात् तेषां पशुकर्मता। इष्टलिङ्गधारण-

---

श्रवण विरुद्ध होगा। इसका समाधान है— (दो प्रकार से इसका समाधान किया जाता है।) १. ज्ञान एवं कर्म का समसमुच्चय मोक्षसाधन है तथा २. ज्ञान एवं कर्म का अङ्गाङ्गिभावसमुच्चय है। तद्यथा—

अन्धपङ्गुवदन्योन्य......संसारविनिवर्तकम्॥५॥

इस प्रकरण में रेणुक भगवत्पाद ने महर्षि अगस्त्य के प्रति ज्ञान एवं कर्म का समसमुच्चय प्रतिपादित किया है। रहस्यार्थ यह है— कर्म दो प्रकार का होता है— १. पतिकर्म एवं २. पशुकर्म। अग्निष्टोम से लेकर अश्वमेध पर्यन्त यज्ञों में स्वर्गादिसाधनता मानी जाती है। अतः इनसे निःश्रेयस की प्राप्ति नहीं हो सकती। यज्ञादि में पाशाश्रयता होने से पशुकर्मता मानी जाती है। इसके विपरीत इष्टलिङ्गधारण, लिङ्गार्चन, लिङ्गार्पित प्रसादग्रहण, लिङ्गानुसन्धान, गुरुजङ्गमपूजन,

---

१. सि० शि० १६।११-१४, पृ० ७४-७५.
२. सि० सि० १६।४, पृ० ८०.

लिङ्गार्चन-लिङ्गार्पितप्रसादग्रहण-लिङ्गानुसन्धान-गुरुजङ्गमपूजन-तत्पादोदक-प्रसादसेवन-लिङ्गाङ्गसामरस्यबोधकपञ्चाक्षरमन्त्रजप-भस्मरुद्राक्षधारण-पञ्चाचारादिवीरशैवीयधर्माणां पाशमोचकत्वात् तेषां पतिकर्मता। भगवत्पादैर्नीलकण्ठशिवाचार्यैः "अथाऽतो ब्रह्मजिज्ञासा"[1] इत्यस्य सूत्रस्य व्याख्यानावसरेऽथशब्दस्य धर्मानन्तर्यार्थमुक्त्वा,

धर्मानन्तर्यमेवातो वाच्यं धर्मो द्विधा मतः।
पशुधर्मः प्राथमिकः पतिधर्मो द्वितीयकः।।
पशुधर्म इति प्राहुर्यस्तु काम्यफलप्रदः।
निष्कामेन स्वपापस्य विच्छित्त्यै समनुष्ठितः।।
यो धर्मस्तं तु शास्त्रेषु पतिधर्मं प्रचक्षते।[2]

इति तस्य धर्मस्य द्वैविध्यं प्रतिपाद्य,

भस्मधारणमुख्यं हि कालाग्न्युपनिषन्मुखैः।
बृहज्जाबालमुख्यैश्च विहितं तत् पदे पदे।।
रुद्राक्षधारणं चैव दहरोपासनादिकम्।
कालयोः शिवपूजा च त्रिषु कालेषु वा सदा।।
विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ।
तत्र पञ्चाक्षरो मन्त्रः शिव इत्यक्षरद्वयम्।।

---

गुरुपादोदक प्रसादसेवन, लिङ्गाङ्गसामरस्य- बोधक पञ्चाक्षर-मन्त्रजप, भस्मधारण, रुद्राक्षधारण, पञ्चाचार प्रभृति वीरशैवधर्म पाशविनाशक होते हैं अतः इनकी पतिधर्मता होती है।

भगवत्पाद नीलकण्ठ शिवाचार्य ने भी 'अथातो ब्रह्मजिज्ञासा' सूत्र के व्याख्यान में अथशब्द का कर्मान्तर -अर्थ प्रतिपादित कर धर्म के दो भेद प्रतिपादित किये हैं। तद्यथा—

धर्मानन्तर्यमेवातो..........पतिधर्मं प्रचक्षते॥२½॥

उन्होंने पतिधर्मों का स्वरूप भी प्रपञ्चित किया है। तद्यथा— 'भस्मधारण मुख्यं हि............तदानन्तर्यमत्र च॥५॥

---

१. ब्र० सू० १।१।१.
२. क्रि० सा०, भा० १, पृ० १६-१७.

इति श्रुतिशिरोरत्नशिरोरत्नमनोर्जपः।
आचार्यदेव इत्युक्तमन्त्रदेशिकपूजनम्।।
प्रसादग्रहणं तस्येत्याद्याः पाशविमोचकाः।
पतिधर्मा इमे ज्ञेयास्तदानन्तर्यमत्र च।।[१]

इति पतिधर्माणां स्वरूपं प्रपञ्चितम्। किञ्च, तैरेवाचार्यचरणैः–

अनुतिष्ठन् पशोर्धर्मान् पतिधर्मान् स चार्हति।
यथा पिपीलिका वृक्षमूलमाघ्राय तत्फलम्।।
आरुह्य लभते तद्वत् पतिधर्मैकतत्परः।
यथा विहङ्गः पक्षाभ्यां फलितं वृक्षमागतः।।
पश्यन् फलमवाप्नोति तद्वच्छीघ्रं तदर्हति।[२]

इत्यादिना निष्कामस्य स्वपापविच्छित्त्यै पशुधर्मानुष्ठानपरस्य पिपीलिकासादृश्यम्, पतिधर्मानुष्ठानपरस्य विहङ्गमसादृश्यमुक्तम्। एतेन पशुधर्माणां निष्कामसमनुष्ठितानामपि पतिधर्मसमर्पकत्वेन परम्परया मुक्तिसाधनत्वम्। पतिधर्माणां तु ज्ञानेन सह साक्षात्कारणत्वं मुक्ताविति पर्यवसितम्। तस्मात् पशुकर्मभिर्यज्ञादिभिः साकं ज्ञानस्य समसमुच्चये विरोधेऽपि पतिकर्मभिरिष्टलिङ्गपूजादिभिर्ज्ञानेन समसमुच्चये न कोऽपि विरोधः। अपि च–

विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।।[३]

---

श्रीशिवाचार्य जी ने निष्काम की पापविच्छित्ति उद्देश्य है ऐसा प्रतिपादित करते हुए कहा है— पशुधर्म का अनुष्ठाता पिपीलिकासदृश होता है तथा पतिधर्म का अनुष्ठाता विहङ्गमसदृश होता है। निष्कर्ष यह है— १. निष्काम भाव से किये गये पशुधर्मों में पतिधर्मसमर्पकता रहती है अतः उसमें परम्परया मुक्ति की जनकता मानी जाती है। २. पतिधर्म का ज्ञान के साथ मुक्ति की साक्षात् कारणता होती है। एतावता पशुकर्म-यज्ञादि के साथ ज्ञान के समसमुच्चय में भले ही विरोध हो किन्तु पतिकर्म-इष्टलिङ्ग पूजनादि के साथ ज्ञान के समसमुच्चय में कोई भी विरोध नहीं है।

श्रुति स्वयं ज्ञानकर्म के समसमुच्चय का प्रतिपादन करती है। तद्यथा– "विद्यां चाविद्यांच.......विद्ययामृतमश्नुते।।१।।

---

१. क्रि० सा०, भा० १, पृ० १७.
२. क्रि० सा) भा० १, पृ० १७.
३. ई० उ०, ११,

इति श्रुत्यापि ज्ञानकर्मणोः समसमुच्चयः प्रतिपादितः। अस्याः श्रुतेर्व्याख्यानावसरे पण्डितप्रवर–उमचिगिशङ्करशास्त्रिमहाभागा वीरशैवदर्शनस्य वैशिष्ट्यमेवं प्रतिपादितवन्तः। तथाहि–"विद्यां च ब्रह्मात्मैक्यज्ञानं च, अविद्यां च विद्याभिन्नां क्रियां च शिवलिङ्गयजनभजनादिरूपाम्, तदुभयं सह मिलितं परस्परं सामानाधिकरण्यापन्नम्, यः परमपुरुषार्थसाक्षात्साधनत्वेन वेद जानाति, स अविद्यया शिवलिङ्गार्पितपतिकर्मणा, मृत्युं मरणजननादिप्रवाहमूलं मलत्रयम्, तीर्त्वा अतिक्रम्य, विद्यया स्वस्वरूपशिवज्ञानेन अमृतं शक्तिविकासरूपममृतत्वम्, अश्नुते प्राप्नोति"[१] इति।

ननूत्पत्त्याप्तिविकृतिसंस्कृतीनां कर्मफलत्वादविद्यानिवृत्तिफलत्वाच्च विद्यायाः कथमनयोः सामानाधिकरण्यम्? नहि शुक्तिकाशकलं साकल्येनाकलयतः कलधौतविभ्रमनिवृत्तिः स्नानाचमनकर्मापेक्षया विलम्बते। तस्माद् ब्रह्मसाक्षात्कारस्यैव तदविद्यानिवृत्तिफलकत्वमित्यभ्युपेयम्। श्रूयते च–"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[२] इति। स्मर्यते च–"ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते। तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः"।।, इति चेन्न, तेषां

---

इस श्रुति के व्याख्यान के अवसर पर पण्डितप्रवर उमचिगि शङ्करशास्त्रीजी ने वीरशैवदर्शन का वैशिष्ट्य इस प्रकार से प्रतिपादित किया है— 'विद्या अर्थात् ब्रह्मात्मैक्य-ज्ञान तथा अविद्या अर्थात् विद्याभिन्न क्रिया (शिवलिङ्ग-यजनादि) ये दोनों मिलित रूप (परस्पर समानाधिकरण) से मोक्ष के प्रति साक्षात्कारण हैं— ऐसा जानने वाले अविद्या (शिवलिङ्गार्पित पतिकर्म) से मृत्यु (मरणजननप्रवाहहेतु मलत्रय) का अतिक्रमण कर विद्या (स्वरूप-शिवज्ञान) से अमृत-शक्तिविकास-प्रयुक्त अमरत्व) को प्राप्त कर लेता है।

जिज्ञासा उदित होती है कि कर्मफल चतुर्विध होता है— उत्पत्ति, प्राप्ति, विकृति एवं संस्कृति। तद्विपरीत विद्या का फल है— अविद्यानिवृत्ति। ऐसी स्थिति में विद्या एवं कर्म की एकाधिकरणता कैसे सम्भव होगी? लोक में भी यह देखा जाता है कि शुक्तिका खण्ड को सर्वथा जानकर अविलम्बेन रजतविभ्रम की निवृत्ति होती है। उसमें किसी प्रकार के स्नान अथवा आचमन प्रभृति कर्म की अपेक्षा नहीं होती है। अतः केवल ब्रह्मसाक्षात्कार को ही अविद्यानिवृत्ति के प्रति कारण मानना समुचित है। तदनुगुण श्रुति भी है— 'तमेव विदित्वा......विद्यतेऽयनाय।' स्मृति भी श्रुति के

---

१. ई० उ० ११ शा०।
२. श्वे० उ० ३।८.

वचनानां केवलानामेव स्थूलकर्मणां कैवल्यसाधनत्वनिराकरणपरत्वात्, समुच्चितानामुपपन्नत्वात् तत्साधनभावस्य, अन्यथा–"अन्धं तमः प्रविशन्ति"[३] इत्याद्युक्तेरेकैकनिन्दापुरस्सरम् "विद्यां चाविद्यां च" इत्यादिना ज्ञानकर्मणोः समुच्चितयोर्मोक्षसाधनत्वप्रतिपादनं न स्यात्। तथा च सङ्कुचितशक्तित्रयरूपमलत्रयनिवृत्तिः शक्तिविकासरूपशिवत्वप्राप्तिर्मोक्षः तत्र मृत्युशब्दितकार्मादिमलनाशफलकत्वमविद्याशब्दितकर्मणां हार्दाकाशमध्यलिङ्ग-धारणादीनां सूक्ष्माणाम्, विद्यायास्तु तिरोहितस्वशक्तेराच्छादनविगलनफलकत्वम्, वायोः सूर्याच्छादकमेघनिःसरणफलकत्ववत्।

किञ्च, श्रुतिस्मृतयोऽपि ज्ञानकर्मणोः समसमुच्चयं प्रतिपादयन्ति। तद्यथा–"तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च"[४] "सत्येन लभ्यस्तपसा ह्येष आत्मा। सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्"[५], "तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं

---

अर्थ का अनुगमन करती है— ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते। तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः।।१।। इति

इसका समाधान है— उपर्युक्त वचनों का निराकरण में तात्पर्य है— स्थूल कर्म को कैवल्य का साधन नहीं माना जा सकता। तद्विपरीत ज्ञान-समुच्चित कर्म में कैवल्यसाधनता अनुपपन्न नहीं है। अन्यथा 'अन्धन्तमः प्रविशन्ति' श्रुति से प्रत्येक की कारणता में दोष दिखाकर 'विद्यां चाविद्यां च'– श्रुति से समुच्चय में मोक्षसाधनता का प्रतिपादन नहीं किया जा सकता।

एवं च संकुचित शक्तित्रयरूप मलत्रय की निवृत्ति होने से शक्तिविकासरूपशिवता की प्राप्ति मोक्ष कहलाती है। सूक्ष्म कर्मों (हृदयाकाश में लिङ्गधारण प्रभृति) का फल है मृत्युशब्दित कार्मप्रभृति मलों का विनाश। तद्विपरीत विद्या का फल है— तिरोहित स्वशक्तिकृत आच्छादन का विगलन। दृष्टान्त है- वायुद्वारा सूर्याच्छादक मेघ का अपसारण।

श्रुतिवचन एवं स्मृति वचन भी ज्ञान एवं कर्म के समसमुच्चय का प्रतिपादन करते हैं। तद्यथा (१) 'तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च।' (२) 'सत्येन लभ्यस्तपसा ह्येष आत्मा, सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।'' (३) तत्प्राप्तिहेतुर्ज्ञानंच

---

१. ई० उ० १२.
२. बृ० उ० ४।४।९.
३. मु० उ० ३।५.

महामुने"[१], "यथान्नं मधुसंयुक्तं मधु चाऽन्नेन संयुतम्। एवं तपश्च विद्या च संयुक्तं भेषजं महत्।।" इति। तस्मात् कर्मनिन्दाप्रतिपादकवाक्यानां केवलज्योतिष्टोमादिस्थूलकर्मविषयत्वमेवेति निश्चीयते। नहि ज्ञानसहकृतलिङ्ग-धारणादिपतिकर्मजन्यमोक्षस्य भवन-दोहन-अभिषव-प्रोक्षणैःपिण्डपयःसोम-व्रीहीणामिवोत्पाद्याप्य-विकार्य-संस्कार्यत्वं सम्भवति। उत्पत्त्याप्ति-विकृति-संस्कृतयस्तु ज्ञानाऽसहकृतपशुकर्मणा फलानि सन्तु। ज्ञानविशिष्टलिङ्गधारणा-दिपतिकर्मणां तु पुनरावृत्तिरहितसर्वज्ञत्वादिषडङ्गशिवत्व-प्राप्तिरेव फलमिति निश्चीयते।

डॉ० टि० जि० सिद्धप्पाराध्यमहोदयास्तु पक्षान्तरेणापि समादधति। तद्यथा-"अत्र केचित् पुरुषार्थाधिकरणे विहितत्वाधिकरणे च कर्मणां ज्ञानाङ्गत्वं भाष्ये स्पष्टं प्रतिपादितम्। तत्र यद्यपि ज्ञानकर्मोभयानुष्ठानं सर्वेषामाश्रमिणां विधेयमिति भाष्ये ज्ञानकर्मसमुच्चयशब्दः प्रयुक्तः, अथापि पूर्वमुत्तरत्र च कर्मणामङ्गत्वस्य ज्ञानस्याङ्गित्वस्य च स्पष्टं प्रतिपादनेन समुच्चयो न

---

कर्म चोक्तं महामुने।' (४) यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम्। एवं तपश्च विद्या च संयुक्तं भेषजं महत्।" इति च।

एवंच कर्मनिन्दा-प्रतिपादक वाक्यों का विषय स्थूल कर्म (ज्योतिष्टोमादि) है सूक्ष्म कर्म नहीं— ऐसा विनिश्चय मनीषिजन करते हैं। ज्ञानसहकृत पतिकर्म (लिङ्गधारणादि) से जन्य मोक्ष में भवन, दोहन, अभिषव अथवा प्रोक्षण के द्वारा पिण्ड की उत्पाद्यता, दुग्ध की प्राप्यता, सोम की विकार्यता एवं ब्रीहि की संस्कार्यता सम्भव नहीं है। ज्ञान से असहकृत पशुकर्मों का ही फल होता है— उत्पत्ति, प्राप्ति, विकृति अथवा संस्कृति। जो पतिकर्म (लिङ्गधारणादि) ज्ञान-विशिष्ट हैं उनका फल है— पुनरावृत्तिरहित सर्वज्ञत्वादि-षडङ्ग-शिवत्व की प्राप्ति।

डा० टि.जि. सिद्धप्पाराध्य महोदय ने पक्षान्तर द्वारा भी समाधान प्रस्तुत किया है। यथा— कतिपय मनीषियों ने यह निष्कर्ष बताया है— पुरुषार्थाधिकरण एवं विहितत्वाधिकरण में भाष्यकार ने कर्म की ज्ञानाङ्गता का प्रतिपादन किया है। यद्यपि भाष्य में कहा गया है— सभी आश्रमी के लिए ज्ञान एवं कर्म उभय का अनुष्ठान कर्तव्य है इस प्रकार ज्ञानकर्म-समुच्चय प्रतिपादित है। तथापि पूर्व में एवम् पश्चाद्वर्ती ग्रन्थ में कर्मों की अङ्गता एवम् ज्ञान की अङ्गिता का प्रतिपादन होने से यह

---

१. भ० सं० ङ० १।३२.

समसमुच्चयः, अपि त्वङ्गाङ्गिभावसमुच्चय एव। कर्मज्ञानयोरङ्गाङ्गिभावेऽप्यङ्गिनोर्यत्फलं तदेवाङ्गस्यापि फलमिति न्यायेन कर्मणोऽपि मोक्षसाधनत्वं न विरुध्येत। सिद्धान्तशिखामणौ–"अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी"[1] इति कथनेऽपि, उपसंहारे–"ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः"[2] इत्यत्राचारयुक्तेन ज्ञानेनेति निर्देशाज्ज्ञानस्य प्राधान्यं प्रतीयते। ज्ञानस्य प्राधान्ये कर्मणोऽङ्गत्वं स्वतः प्राप्नोत्येव। यदि 'अन्धपङ्गुवत्' इत्यादिश्लोकमात्रेण ज्ञानकर्मणोरुभयोरपि मोक्षसाधनत्वं वक्तव्यमित्याग्रहः, तर्हि–

शिवोऽहमिति भावो हि शिवतापत्तिकारणम्।
न ज्ञानमात्रं नाचारो भावयुक्तः शिवो भवेत्[3]।।

इत्यत्र भावस्यापि मोक्षसाधनत्वकथनेन ज्ञान–कर्म–भावानां त्रयाणामेव समुच्चयो वक्तव्यो भवेत्। अतो ज्ञानमेव साक्षान्मोक्षसाधनम्, भावः कर्म च तदङ्गम् 'अङ्गिफलमङ्गस्यापि' इति न्यायेन कर्मज्ञानयोरपि मोक्षसाधनत्वात् तथा

---

समसमुच्चय नहीं प्रत्युत अङ्गाङ्गिभाव-समुच्चय है। कर्म तथा ज्ञान के अङ्गाङ्गिभाव होने पर भी अङ्गी का फल ही अङ्ग का भी फल होता है। इस न्याय से कर्म में भी मोक्षसाधनता प्रतिषिद्ध (विरुद्ध) नहीं हो सकती।

सिद्धान्तशिखामणि ग्रन्थ में 'अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी' यह कथन प्राप्त है। इसके उपसंहार वाक्य में आचारयुक्त ज्ञान से मोक्षप्राप्ति का निर्देश किया गया है अतः प्रधानता ज्ञान की ही प्रतीत होती है। तद्यथा— 'ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।' ज्ञान की प्रधानता प्रतिपादित होने से स्वत एव कर्म की अङ्गता प्रतिपादित हो जाती है।

यदि अन्धपङ्गुवत्............इत्यादि श्लोकमात्र से ज्ञानकर्म उभय की मोक्षसाधनता मान्य होने का आग्रह हो तो निम्नाङ्कित श्लोक में भाव की भी मोक्षसाधनता उक्त होने से ज्ञान, कर्म तथा भाव–इन तीनों में समुच्चय मानना होगा। यतश्च मोक्ष का साधन (साक्षात्) ज्ञान है अतः भाव एवं कर्म को उसका अङ्ग मानना होगा। अङ्गी का फल ही अङ्ग का भी फल माना जाता है— इस न्याय से कर्म एवं ज्ञान की मोक्षसाधनता का प्रतिपादन प्राप्त होता है। अतः कर्म एवं ज्ञान में अङ्गाङ्गिभाव से

---

१. सि० शि० १६।११, पृ० ७४.
२. सि० शि० १६।१४, पृ० ७५.
३. सि० शि० १६।२, पृ० ७६.

व्यपदेशः। अतः कर्मज्ञानयोरङ्गाङ्गिभावसमुच्चयो विवक्षितः, न समसमुच्चयः। तथा च कर्मणोऽप्रधानत्वेन स्वातन्त्र्येण तस्य मोक्षसाधनत्वाभावात् "नान्यः पन्था विद्यतेऽयनाय" इत्यत्र ज्ञानातिरिक्तस्य मोक्षसाधनत्वनिषेधो न विरुध्यत इति श्रुतिसूत्रागमानां सामरस्यमिति वदन्ति।

नान्यः पन्थेति वाक्येन मार्गान्तरनिषेधतः।
तेषां विद्याङ्गता प्रोक्ता नान्यथेति विनिश्चयः।।

इति क्रियासारेऽपि कर्मणां विद्याङ्गत्वमुक्तम्"[1] इति।

## शिवानुग्रहस्य मोक्षकारणत्वम्

वस्तुतस्तु वीरशैवदर्शने–

शम्भोः शिवप्रसादेन संसारच्छेदकारिणा।
मोहग्रन्थिं विनिर्भिद्य मुक्तिं यान्ति विवेकिनः।।
विना प्रसादमीशस्य संसारो न निवर्तते।
विना सूर्योदयं लोके कुतः स्यात् तमसो लयः।।
सर्वानुग्राहकः शम्भुः केवलं कृपया प्रभुः।
मोचयेत् सकलान् जन्तून्न किञ्चिदिह कारणम्[2]।।

---

समुच्चय विवक्षित है न कि समसमुच्चय। यतश्च कर्म अप्रधान है अतः स्वातन्त्र्येण उसकी मोक्षसाधनता नहीं होने से ज्ञानातिरिक्त की मोक्षसाधनता का प्रतिषेध विरुद्ध नहीं है— 'नान्यः पन्था विद्यतेऽयनाय।' एवंच श्रुति, आगम एवं सूत्र-वचनों का सामरस्य सर्वथा उपपन्न है।

क्रियासार-ग्रन्थ में कर्मों की विद्याङ्गता प्रतिपादित की गई है। तद्यथा— 'नान्यः पन्थेति वाक्येन............नान्यथेति विनिश्चयः।।१।।

## शिवानुग्रह की मोक्षकारणता

वस्तुस्थित्या वीरशैव-दर्शन में निम्नाङ्कित आचार्यवचन के आधार पर परशिव के अनुग्रह से ही मोक्षप्राप्ति होती है। तद्यथा—

'शम्भोः शिवप्रसादेन संसारच्छेदकारिणा।......

............................किञ्चिदिह कारणम्।।३।।

---

१. श० वि० द०, पृ० १२८-१२९.
२. सि० शि० १८।४-६, पृ० १४८-१४९.

इत्याचार्योक्त्या परशिवानुग्रहादेव मोक्ष इति स्वीक्रियते। स चानुग्रहो न केवलं परशिवज्ञानादेव, अपि तु तदर्थं तदर्चनरूपं कर्माप्यपेक्षते। अत एव रेणुकभगवत्पादैः—"शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते"[१] इति कर्मणः,

शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते।
शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम्।।[२]
ज्ञानस्याविषये तत्त्वे शिवाख्ये चित्सुखात्मनि।
आत्मैकत्वानुसन्धानं ज्ञानमित्युच्यते बुधैः।।[३]

इत्यादिना ज्ञानस्य च लक्षणमुक्तम्। तस्मात् शिवज्ञानसम्पन्नः शिवार्चनेन शिवानुग्रहं प्राप्य मुक्तो भवतीति शिवानुग्रहार्थमपेक्षितयोर्ज्ञानकर्मणोरपि मोक्षहेतुत्वं स्वीकृत्य ज्ञानकर्मणोः समसमुच्चयः प्रतिपाद्यते।

किञ्च, वीरशैवदर्शने शिवोऽहमिति शिवात्मैक्यज्ञानसम्पन्नो यदि स्वैराचारी स्याच्चेत् तदा सामान्यलौकिका अपि तं दृष्ट्वा स्वैराचारिणो भूत्वा सामाजिकव्यवस्थां दूषयेयुरिति तद्दोषदूरीकरणार्थं रेणुकभगवत्पादा ज्ञानामृतेन तृप्तस्यापि शिवयोगिनो यावज्जीवं नित्यादिविहितकर्मणामनुष्ठानमादिशन्ति। तथा हि—

---

परशिव का अनुग्रह केवल शिवज्ञान से ही नहीं अपितु शिवार्चनरूप कर्म से भी सापेक्ष होता है। अतएव श्रीरेणुकभगवत्पाद ने यथा कर्म का लक्षण प्रतिपादित किया है तद्वत् ज्ञान का भी। तद्यथा 'शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते।' इति ½।।

'शिवात्मकमिदं...............तदेव ज्ञानमुत्तमम्।।१।। एवम्

..........'ज्ञानस्याविषये.......बुधैः।।१।।

एवञ्च शिवज्ञानसम्पन्न साधक शिवार्चन द्वारा शिवानुग्रह प्राप्त कर मुक्त होता है। अतः शिवानुग्रहप्राप्त्यर्थ अपेक्षित ज्ञान एवं कर्म की भी मोक्षहेतुता को मानकर ज्ञान एवं कर्म का समसमुच्चय वीरशैवशास्त्र में मान्य है।

वीरशैवसिद्धान्त में यह भी विवेचना की गई है कि 'शिवोऽहम्' इस अनुभूति से सम्पन्न साधक शिवात्मैक्यज्ञान से विजृम्भित होकर यदि स्वैराचारी हो जाय तो सामान्य जन उन्हें देखकर स्वेच्छाचारी होकर सामाजिक व्यवस्था को दूषित कर देंगे।

---

१. सि० शि० ९।२२; पृ० १४४.
२. सि० शि० १६।८, पृ० ८१.
३. सि० शि० १९।४, पृ० १८६.

अधर्मं न स्पृशेत्किञ्चिद्विहितं धर्ममाचरेत्।
तं च कामविनिर्मुक्तं तमपि ज्ञानपूर्वकम्।।
धर्म एव समस्तानां यतः संसिद्धिकारणम्।
निःस्पृहोऽपि महायोगी धर्ममार्गं च न त्यजेत्।।
ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न सन्त्यजेत्।
आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः।।
सदाचारप्रियः शम्भुः सदाचारेण पूज्यते।
सदाचारं विना तस्य प्रसादो नैव जायते।।[१] इति।

तस्माल्लोकसंग्रहार्थं ज्ञानिना कर्मानुष्ठानस्यावश्यकर्तव्यत्वादपि ज्ञानकर्मणोः समुच्चय आवश्यक एव।

ननु तत्त्वज्ञानसम्पन्नोऽपि लोकसंग्रहार्थं यदि कर्म करोति, तर्हि तत्फलभोगोऽपि तस्यावश्यक एवेति चेन्न, ज्ञानिनोऽहङ्कारशून्यत्वात् कर्मफलभोगो न भवत्येव। तदुक्तं रेणुकभगवत्पादैः–

ज्ञानिनो यानि कर्माणि तानि नो जन्महेतवः।
अग्निदग्धानि बीजानि तथा नाङ्कुरकारणम्।।
कर्मणा किं कृतेनापि ज्ञानिनो निरहङ्कृतेः।
विक्रिया प्रतिबिम्बस्था किं करोति हिमद्युतेः।।

---

अतः इस दोष से समाज को बचाने हेतु रेणुकाचार्य जी ने ज्ञानामृत से तृप्त शिवयोगी को भी नित्य--नैमित्तिक प्रभृति विहित कर्मों के अनुष्ठान का आदेश किया है। तद्यथा अधर्मं न..........प्रसादो नैव जायते।।४।।

एवंच लोकसंग्रह को ध्यान में रखकर भी ज्ञानी को कर्मानुष्ठान करना अनिवार्य है। एवञ्च एतदर्थ भी ज्ञान एवं कर्म का समुच्चय आवश्यक है।

जिज्ञासा उदित होती है— तत्त्वज्ञानसम्पन्न योगी भी लोकसंग्रह के उद्देश्य से यदि कर्म करें तो उन्हें भी कर्मफलभोग करना पड़ेगा। इसका समाधान है— यतः ज्ञानी अहंकारशून्य होते हैं अतः कर्मफल भोग की विवशता उन्हें नहीं होती। आचार्य रेणुकभगवत्पाद ने सुस्पष्ट कहा है—

'ज्ञानिनो यानि.........भोक्त्री चापि न लिप्यते।।३।।

---

१. सि० सि) १६।४-९, पृ० ९१-९३.

ज्ञानी कर्मनिरूढोऽपि लिप्यते न क्रियाफलैः।
घृतादिना यथा जिह्वा भोक्त्री चापि न लिप्यते।।[१] इति।

तदेवं वीरशैवदर्शने ज्ञानिभिरपि लोकसंग्रहार्थं विहितं कर्म कर्तव्यमेव। एवं ज्ञानकर्मोभयनिष्ठः साधकः षट्स्थलोपासनामार्गेण मोक्षमाप्नोति।

**षट्स्थलोपासनक्रमः**

ज्ञानकर्मसमुच्चयवादिभिर्वीरशैवैरुपासकः षट्सोपानक्रमेण मुक्तिं प्राप्नोतीति प्रतिपाद्यते। तान्येव षट्सोपानानि 'षट्स्थल'शब्देन व्यवह्रियन्ते। तानि च स्थलानि भक्तः, माहेश्वरः प्रसादी, प्राणलिङ्गी, शरणः, ऐक्य इत्याख्यया प्रसिद्धानि। अत्रोपासनाया ज्ञानस्य च तारतम्येन साधकः प्रथमं भक्तो भवति। पुनः स एवोपासनाबलेन माहेश्वरः, माहेश्वरश्च प्रसादी, प्रसादी च क्रमेण प्राणलिङ्गी भवति। प्राणलिङ्गी क्रमेण शरणो भवति। शरणश्चान्ते शिवैक्यो भवतीति षट्स्थलोपासनायाः क्रमः। तदुक्तं रेणुकभगवत्पादैः–

वीरशैवास्तु षड्भेदाः स्थलधर्मविभेदतः।
भक्तादिव्यवहारेण प्रोच्यन्ते शास्त्रपारगैः।।
आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम्।

---

एतावता वीरशैव-दर्शन में ज्ञानी को भी लोकसंग्रह के उद्देश्य से विहित कर्म करने का सत्परामर्श दिया जाता है। एवंच ज्ञान एवं कर्म उभय में निष्ठा रखने वाला साधक षट्स्थल की उपासना द्वारा मोक्ष को प्राप्त करता है।

**षट्स्थल की उपासना का क्रम**

ज्ञान एवं कर्म के समुच्चयसिद्धान्त को मानने वाले वीरशैवों का मत है कि उपासक षट्सोपानक्रम से मुक्ति को प्राप्त करता है। ये छह सोपान **षट्स्थल** कहलाते हैं। ये हैं—

१. भक्त २. माहेश्वर ३. प्रसादी ४. प्राणलिङ्गी ५. शरण एवं ६. ऐक्य। उपासना एवं ज्ञान के तारतम्य से साधक में प्रथमतः भक्तरूपता उदित होती है। क्रमशः उपासनाबल की वृद्धि से भक्त-माहेश्वर, प्रसादी, प्राणलिङ्गी, शरण एवम् ऐक्य-स्वरूप में क्रमशः प्रतिष्ठित होता है। श्रीरेणुकाचार्य जी ने विशदता से इसे प्रतिपादित किया है—

'वीरशैवास्तु..........ऐक्यस्थलं मतम्।।२½।।

---

१. सि० शि० १९।२-५, पृ० १६५-१६६.

प्रसादिस्थलमन्यत्तु प्राणलिङ्गिस्थलं ततः।।
शरणस्थलमाख्यातं षष्ठमैक्यस्थलं मतम्।[१] इति।

१. भक्तः

शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते।
तस्यानुष्ठेयधर्माणामुक्तिर्भक्तस्थलं मतम्।।[२]

इत्याचार्योक्त्या भक्तस्थले प्रतिपादितानामाचाराणामाचरणशीलः शिवे श्रद्धावान् च साधको भक्त इत्युच्यते। यो ह्यनेकजन्मार्जितनिष्कामकर्मप्रभावेण शुद्धान्तःकरणः सन् संसारमसारं मन्यमानो गुरोः शरणं गत्वा, दीक्षात्रयेण इष्ट-प्राण-भावाख्यलिङ्गत्रयं प्राप्य, यथाविधि भस्मरुद्राक्षादीन् धारयित्वा शिवपञ्चाक्षरीं जपन्, सोपाधि-निरुपाधि-सहजाख्यदानत्रयं च कुर्वन्, गुरु-लिङ्ग-जङ्गमेषु श्रद्धान्वितः सन् शिवपञ्चयज्ञरतो भवति, स एव भक्त इति तात्पर्यम्। तत्र तपः, कर्म, जपः, ध्यानम्, ज्ञानं चेति पञ्चप्रकारः शिवयज्ञो भवति। तपो नाम शरीरसंशोषः, स च न कृच्छ्रचान्द्रायणादिव्रतैः, किन्तु शिवपूजार्थं सामग्रीसम्पादने यत् शरीरशोषणं तदेव तप इत्युच्यते। एतेन कृच्छ्रचान्द्रायणादिना देहशोषो वीरशैवानां न सम्मत इति ज्ञायते। कर्म नाम न

---

१. भक्त

शैवी भक्तिः समुत्पन्ना......भक्तस्थलं मतम्।।१।।

उपर्युक्त आचार्यवचन के अनुसार भक्तस्थल में प्रतिपादित आचारों का अनुष्ठाता, शिव की श्रद्धा से युक्त साधकभक्त कहलाता है। जो साधक अनेक जन्मों में निष्काम कर्म करता हुआ अन्तःकरण की शुद्धि प्राप्त कर लेता है संसार को वृथा मानता है गुरु की शरणं में जाता है, त्रिविध दीक्षा द्वारा इष्ट, प्राण-भावलिङ्गों को प्राप्त करता है, यथाविधि भस्म एवं रुद्राक्ष धारण करता है, शिवपञ्चाक्षर मन्त्र का जाप करता है, त्रिविध दान (सोपाधि, निरुपाधि एवं सहज) करता है, गुरु-लिङ्ग-जङ्गम के प्रति श्रद्धाभाव रखता है तथा शिव-पञ्चयज्ञ का अनुष्ठान करता है— वही **भक्त** कहलाता है। पञ्चविध शिवयज्ञ है— १. तप २. कर्म ३. जप ४. ध्यान एवं ५. ज्ञान। शरीरशोषण को तप कहा जाता है। सिद्धान्त में कृच्छ्रचान्द्रायणादि व्रतों से शरीर-शोषण नहीं किया जाता अपितु शिवपूजा हेतु सामग्री-सम्पादन से शरीर-शोषण

---

१. सि० शि० ५।२२-२५, पृ० ६०.
२. सि० शि० ५।२६, पृ० ६१.

यज्ञादिरूपम्, किन्तु शिवलिङ्गपूजैव। एतेन वीरशैवानां ज्योतिष्टोमादीनां निषेधो व्यज्यते। जपो नाम पञ्चाक्षरमहामन्त्रस्य, प्रणवस्य, श्रीरुद्राध्यायस्य वा पुनः पुनरावृत्तिर्न तु वेदाध्ययनादिकम्। आत्मचिन्तनमत्र ध्यानमिति न कथ्यते, किन्तु शिवचिन्तनमेव ध्यानमित्यभिधीयते। एवमेव ज्ञानं नाम न सांख्याद्यन्यशास्त्रार्थज्ञानम्, किन्तु शिवागमार्थविज्ञानमेव ज्ञानमित्युच्यते। एवं भक्तस्थले प्रतिपादित-शिवपञ्चयज्ञरतो हि साधको भक्त इति कथ्यते। तदुक्तं रेणुकभगवत्पादैः–

पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः।
तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम्।।
शिवार्थे देहसंशोषस्तपः कृच्छ्रादि नो मतम्।
शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते।।
जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा।
रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम्।।
ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम्।
शिवागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम्।।
इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः।
अनेन पञ्चयज्ञेन यः पूजयति शङ्करम्।।
भक्त्या परमया युक्तः स वै भक्त इतीरितः।[1] इति।

एवं च पूर्वोक्तलक्षणयुक्तः श्रद्धाभक्तिमान् साधको भक्त इत्युच्यते।

---

को **तप** कहा जाता है। अतः चान्द्रायणादि को इस सिद्धान्त में अग्राह्य बताया गया है। शिवलिङ्गपूजन ही **कर्म है**— यागदि नहीं। एतावता ज्योतिष्टोमादि का यहाँ निषेध मान्य है। जप से यहाँ तात्पर्य है— पञ्चाक्षर-महामन्त्र, प्रणव अथवा श्रीरुद्राध्याय की पुनरावृत्ति, स्वाध्याय नहीं। यहाँ आत्मचिन्तन को नहीं अपितु शिवचिन्तन को **ध्यान** कहा गया है। तद्वत् सांख्यादिशास्त्रों के अर्थज्ञान को नहीं अपितु शैवागमार्थ-विज्ञान को यहाँ **ज्ञान** कहा जाता है।

एवंच भक्तस्थल में प्रतिपादित शिवपञ्चयज्ञ का अनुष्ठाता साधक **भक्त** कहलाता है। श्रीरेणुकाचार्य की स्पष्ट उक्ति है—

'पञ्चधा कथ्यते.......स वै भक्त इतीरितः।। ५½।।

उपर्युक्त लक्षणों से उपेत श्रद्धाभावभरित साधक **भक्त** कहलाता है।

---

१. सि० शि) ९।२१-२५, पृ० १४४-१४५.

## २. माहेश्वरः

माहेश्वरस्थलं षट्स्थलोपासनाया द्वितीया भूमिकेत्युच्यते। भक्तस्थलस्य भक्ताभिधस्य साधकस्येष्टलिङ्गादिषु विद्यमाना हि श्रद्धा सलिलमुक्तान्यायवत्, अर्थात् स्वात्यां सागरशुक्तिमध्यपतितं जलं घनीभूय यथा मुक्ताफलं भवति, तथा दृढीभूय यदा निष्ठारूपमाधत्ते, तदा स भक्त एव 'माहेश्वरः' इत्यभिधीयते। साधकोऽयं भक्तेः समुत्कर्षेण दृढवैराग्येण च महेश्वरेऽत्यन्तनिष्ठासम्पन्न इति माहेश्वर इत्यभिधीयते। माहेश्वरो ब्रह्मादिसर्वदेवापेक्षया महेश्वर एव श्रेष्ठतमः, स एव मोक्षप्रदश्चेति निष्ठावान् भवति। तदुक्तं माहेश्वरस्य लक्षणं रेणुकभगवत्पादैः—

भक्तेर्यदा समुत्कर्षो भवेद् वैराग्यगौरवात्।
तदा माहेश्वरः प्रोक्तो भक्तः स्थिरविवेकवान्।।
विश्वस्मादधिको रुद्रो विश्वानुग्रहकारकः।
इति यस्य स्थिरा बुद्धिः स वै माहेश्वरः स्मृतः।।
ईश्वरः सर्वभूतानां ब्रह्मादीनां महामुने।
बुद्धियोगात् तदासक्तो भक्तो माहेश्वरः स्मृतः।।
अनादिमुक्तो भगवानेक एव महेश्वरः।
मुक्तिदश्चेति यो वेद स वै माहेश्वरः स्मृतः।।[1] इति।

अस्यान्तःकरणस्य शुद्धत्वादयं नित्याऽनित्यवस्तुविवेकवान्, इहामुत्रार्थ-फलभोगेषु विरक्तश्च भवति। किञ्चायम्—

---

**२. माहेश्वर**

षट्स्थलोपासना की द्वितीय भूमि माहेश्वर कहलाती है। भक्तस्थल (भक्त) साधक की इष्टलिङ्गादि में विद्यमान श्रद्धा सलिलमुक्तान्याय से सुदृढ होने पर निष्ठाभाव में परिणत होती है तब वह भक्त 'माहेश्वर' कहलाता है। यह साधक उत्कृष्ट भक्ति एवं दृढ वैराग्य द्वारा महेश्वर में अत्यन्त निष्ठावान् होता है अतः माहेश्वर कहलाता है। इस साधक की यह निष्ठा होती है कि ब्रह्मा प्रभृति सर्वदेवापेक्षया श्रेष्ठ देव महेश्वर हैं और वे ही मोक्षदान करते हैं। तद्यथा—

'भक्तेर्यदा.......स वै माहेश्वरः स्मृतः।।४।।

---

१. सि० शि) १०।३, ८, १०, १२; पृ० १६७-१७०.

आदातृदातृदेयानां शिवभावं विचिन्त्य हि।
आत्मनोऽकर्तृभावं च यद्दत्तं सहजं तु तत्।।[1]

इत्युक्तसहजदाने निष्ठावान् भवति। तदुक्तं रेणुकभगवत्पादैः–

केवले सहजे दाने निष्णातः शिवतत्परः।
ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः।।[2] इति।
पतिः साक्षान्महादेवः पशुरेव तदाश्रयः।
अनयोः स्वामिभृत्यत्वमभेदे कथमिष्यते।।[3]

इत्याचार्योक्त्यनुसारं माहेश्वरः परमात्मानं पतिमिति, स्वात्मानं च तस्य पशुः, अर्थात् सेवक इति मत्वा स्वामिभृत्यभावेन परमात्मानं पूजयति। तस्मान्माहेश्वरावस्थायां जीवपरमात्मनोरत्यन्तभेद एव वर्तते। माहेश्वरावस्थायाः क्रियाप्रधानत्वाद् भेदाऽभावे पूजादिकर्मैव न सम्भवतीति तत्र भेदावस्थाया आवश्यकता वर्तते। तदुक्तम्–

भेदस्य कर्महेतुत्वाद् व्यवहारः प्रवर्तते।
लिङ्गपूजादिकर्मस्थो न चाद्वैतं समाचरेत्।।[4] इति।

एवं भेदबुद्धियुक्तोऽयं माहेश्वरः–

---

यतश्च इस साधक का अन्तःकरण शुद्ध होता है अतः इसे नित्याऽनित्यवस्तु- विवेक रहता है तथा ऐहिक एवम् आमुष्मिक फलभोगों में वैराग्य होता है इसकी निष्ठा सहजदान में होती है। यह परमेश्वर को पति तथा स्वयं को पशु (सेवक) मानकर पूजापरायण होता है। स्वामिभृत्यभाव की आस्था से **माहेश्वर** को जीव एवं परमात्मा के मध्य भेद दृष्टिगत होता है। क्रियाप्रधान होने से भेदाभाव मानने पर पूजादि कर्म की उपपत्ति नहीं हो सकती। तद्यथा—

'भेदस्य कर्महेतुत्वात्......नचाद्वैतं समाचरेत्।।१।।

भेदबुद्धि होने के कारण माहेश्वर की इष्टलिङ्ग-पूजा में प्रौढ़ निष्ठा होती है। तद्यथा—

---

१. सि० शि० ९।५, पृ० १६२.
२. सि० शि० १०।२, पृ० १६७.
३. सि० शि० १०।४, पृ० १७९.
४. सि० शि० १०।६, पृ० १७९.

अपगच्छतु सर्वस्वं शिरच्छेदनमस्तु वा।
माहेश्वरो न मुञ्चेत लिङ्गपूजामहाव्रतम्।।[1]

इत्याचार्योक्त्या स्वेष्टलिङ्गपूजादावेव निष्ठावान् भवति। अयं यदेष्टलिङ्गार्पितमेवान्नमुपभुञ्जन् तद्व्यतिरिक्तं चास्पृशन् स्वदेहवृत्तिं यापयति, तदा 'महामाहेश्वर'[2] इति, यदा च कदाचित् कुत्रचित् शिवापकर्षसम्प्राप्तौ तन्निवारणे स्वप्राणानपि विमुञ्चति, तदा 'वीरमाहेश्वर'[3] इति च कथ्यते।

ननु शिवस्य सर्वत्र व्याप्तत्वात् कथमिष्टलिङ्गमात्रे शिवभावना कर्तव्येत्युच्यत इति चेन्न, यद्यपि शिवः सर्वगत एव, अथापि सर्वत्र व्याप्तोऽप्यग्निः शमीगर्भे विशेषेण व्यज्यते, तथा शिवोऽपि स्वाधारेष्टलिङ्गे विशेषेण निवसतीति माहेश्वरस्येष्टलिङ्गमात्रे शिवभावना विहिता। तदुक्तं रेणुकभगवत्पादैः–

शिवः सर्वगतश्चापि स्वाधारे व्यज्यते भृशम्।
शमीगर्भे यथा वह्निर्विशेषेण विभाव्यते।।

---

'अपगच्छतु सर्वस्वं........लिङ्गपूजामहाव्रतम्।।१।।

माहेश्वर-साधक इष्टलिङ्गार्पित अन्न को ही प्रसाद रूप में ग्रहण करता है तद्-व्यतिरिक्त का स्पर्श नहीं करता हुआ देहवृत्ति का यापन करता है तब इसकी संज्ञा– **'महामाहेश्वर'** होती है। जब कहीं पर कदाचित् शिव के प्रति अपकर्ष-व्यवहार को देखता है तथा उसके निवारणार्थ अपने प्राणों का भी परित्याग कर देता है तब वह **'वीरमाहेश्वर'** कहलाता है।

जिज्ञासा होती है कि शिव सर्वत्र व्याप्त हैं ऐसी स्थिति में इष्टलिङ्गमात्र में शिवभावना करनी चाहिए–यह कैसे समुचित होगा। इसका समाधान है– यद्यपि शिव सर्वगत हैं तथापि सर्वगत अग्नि भी यथा शमीगर्भ में विशेष रूप से अभिव्यक्त होती है तद्वत् शिव भी स्वाकार इष्टलिङ्ग में विशेष (स्तुत्य) रूप से निवास करते हैं। अतएव माहेश्वर साधक के लिए इष्टलिङ्गमात्र में शिवभावना का विधान किया गया है। तद्यथा—

'शिवः सर्वगतश्चापि........पूजयेत् पूजकोत्तमः।।३।।

---

१. सि० शि० १०।२, पृ० १७३.
२. अर्पितेनान्नपानेन लिङ्गे नियमपूजिते।
ये देहवृत्तिं कुर्वन्ति महामाहेश्वरा हि ते।। (सि० शि० १०।५, पृ० १७४)
३. शिवापकर्षसम्प्राप्तौ प्राणत्यागेऽप्यशङ्कितः।
शिवैकनिष्ठः सर्वात्मा वीरमाहेश्वरो भवेत्।। (सि० शि० १०।२० पृ० १७१)

नित्यं भासि तदीयस्त्वं या ते रुद्र शिवा तनूः।
अघोराऽपापकाशीति श्रुतिराह सनातनी।।
तस्मात् सर्वप्रयत्नेन सर्वस्थानपराङ्मुखः।
स्वेष्टलिङ्गे महादेवं पूजयेत् पूजकोत्तमः।।[१] इति।

एवमिष्टलिङ्गमात्रे महादेवं यजन्नपि माहेश्वरो गच्छता कालेन शिवस्य सर्वगत्वमपि विभावयन् परिपक्वान्तःकरणो भूत्वा माहेश्वरस्थलस्य पराकाष्ठां प्राप्नोति।

## ३. प्रसादी

प्रसादिस्थलस्य किल षट्स्थलोपासनायां तृतीया भूमिका। "मनसो निर्मलत्वचिह्नं प्रसादः, तादृशः प्रसादोऽस्यास्तीति प्रसादी" इति व्युत्पत्त्या पूर्वोक्तो माहेश्वरो यदा प्रसादगुणयुक्तमनस्को भवति, तदा प्रसादीति कथ्यते। तदुक्तम्–

लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः।
मनःप्रसादयोगेन प्रसादीत्येष कथ्यते।।[२] इति।

"अन्नमयं हि सौम्य मनः"[३] इति श्रुतावन्नस्याणुरूपं मन इति प्रतिपादितम्। तस्माद् यादृशं ह्यन्नं मनोऽपि तादृशमेव। अतो

---

एवंच इष्टलिङ्गमात्र में महादेव जी की पूजाअर्चना करने वाला साधक -**माहेश्वर** शनैः शनैः शिव की सर्वव्यापिता को अनुभव करने लगता है तथा अन्तःकरण के परिपाक से माहेश्वर की पराकाष्ठा को प्राप्त कर लेता है

## ३. प्रसादी

षट्स्थलोपासना की तृतीयभूमि **प्रसादी** कहलातीहै। 'मन की निर्मलता प्रसाद कहलाती है तथा प्रसाद से युक्त साधक प्रसादी कहलाता है।' एवंच माहेश्वर में प्रसाद का आधान होने पर वह प्रसादी कहलाता है तथा उसका पापौघ नष्ट हो जाता है। तद्यथा—

'लिङ्गनिष्ठादि भावेन ........................कथ्यते।।१।।

यतश्च 'अन्नमयं हि सौम्य मनः।' श्रुति में अणुमन को अन्नमय बताया गया है

---

१. सि० शि० १०।३, ५-६, पृ० १८५-१८६.
२. सि० शि० ११।२, पृ० १९३.
३. छा० उ० ६।५।४.

मनःशुद्ध्यर्थमन्नशुद्धिरावश्यकी। शिवार्पितत्वमेवान्नस्य शुद्धिराख्यायते। तस्मात् शिवार्पितान्नभक्षणेनैव मनःशुद्धिरिति पर्यवस्यति। तदुक्तं रेणुकभगवत्पादैः—

अन्नशुद्ध्या हि सर्वेषां सत्त्वशुद्धिरुदाहृता।
विशुद्धमन्नजातं हि यच्छिवाय समर्पितम्।।
तदेवं सर्वकालं तु भुञ्जानो लिङ्गतत्परः।
मनःप्रसादमतुलं लभते ज्ञानकारणम्।।
आत्मभोगाय नियतं यद्यद् द्रव्यं समाहितम्।
तत्तत्समर्प्य देवाय भुञ्जीतात्मविशुद्धये।।[1]इति।
यथा शिवप्रसादान्नं स्वीकार्यं लिङ्गतत्परैः।
तथा गुरोः प्रसादान्नं तथैव शिवयोगिनाम्।।[2]

इत्याचार्योक्त्याऽयं साधको लिङ्गार्पितप्रसादमिव गुरुजङ्गमयोरपि प्रसाद-मवधानभक्त्या स्वीकरोति। एवं प्रतिदिनं गुरु-लिङ्ग-जङ्गमानां प्रसादं स्वीकुर्वन् तत्प्रसादमहिम्ना सर्वमपि विश्वं शिवात्मकं पश्यति। तदुक्तम्—

प्रसादे शाम्भवे सिद्धे परमानन्दकारणे।
सर्वं शिवमयं विश्वं दृश्यते नात्र संशयः।।[3]इति।

माहेश्वरस्थले साधक इष्टलिङ्गमात्रे शिवत्वबुद्धिमान् भवति। स एव यदा

---

अतः अन्नानुरूप मन होता है। अतः मनःशुद्धि के लिए अन्नशुद्धि आवश्यक है। अन्न तभी शुद्ध होता है जब उसका शिवार्पण हो। शिवार्पित अन्नभक्षण करने से मनःशुद्धि होती है। तद्यथा—

'अन्नशुद्ध्या...........तथैव शिवयोगिनाम्।।४।।

उपर्युक्त वचन के अनुसार लिङ्गार्पित प्रसाद की तरह गुरु एवं जङ्गम का प्रसाद भी साधक श्रद्धया ग्रहण करता है। प्रतिदिन गुरु-लिङ्ग-जङ्गम के प्रसाद को ग्रहण करता हुआ साधक प्रसाद की महिमा से सम्पूर्ण विश्व को शिवात्मक समझता है। तद्यथा—

'प्रसादे शाम्भवे.........नात्र संशयः।।१।।

साधक माहेश्वरस्थल में इष्टलिङ्ग-मात्र में शिवत्व-बुद्धि करता है जबकि प्रसादिस्थल में प्रविष्ट हुआ वह शिवप्रसाद से सम्पूर्ण विश्व को शिवरूप में देखता

---

१. सि० शि० ११।९-११, पृ० १९५-१९६.
२. सि० शि० ११।१८, पृ० १९८.
३. सि० शि० ११।८, पृ० २१६.

प्रसादिस्थलमायाति, तदा शिवप्रसादेन समस्तविश्वमेव शिवरूपेण पश्यन्नहङ्कारशून्यो भूत्वा जले पद्मपत्रमिव संसारे वर्तमानोऽपि निर्लिप्तो भवति।

### ४. प्राणलिङ्गी

प्राणलिङ्गस्योपासकः प्राणलिङ्गीति कथ्यते। मूलाधारस्थितेनापानवायुना साकं गुरूपदिष्टमार्गेण प्राणवायोर्यदा संघट्टनं भवति, तदैकं दिव्यज्योतिरुदितं भवति। मूलाधारादुत्पन्नमिदं ज्योतिः सुषुम्नामार्गेण प्रस्थाय कुण्डलिनीमूर्ध्वमुखीं कुर्वद् हृदयस्थाऽनाहतचक्रे, अर्थाद् द्वादशदलकमलकर्णिकायां स्थिरं भवति। ज्योतिरिदमङ्गुष्ठपरिमाणं विद्रुमवर्णं च भवतीति शिवयोगिनो वर्णयन्ति। भास्करोदये यथा तुहिनकणास्तत्प्रकाशे लयं यान्ति, तथाऽस्मिन् ज्योतिषि प्राणवायोर्लयो भवतीति प्राणशक्तिविशिष्टमिदं ज्योतिः प्राणलिङ्गमिति वीरशैवाचार्यैः प्रतिपाद्यते। तथाहि–

> प्राणापानसमाघातात् कन्दमध्याद्यदुत्थितम्।
> प्राणलिङ्गं तदाख्यातं प्राणापाननिरोधिभिः।।
> प्राणो यत्र लयं याति भास्करे तुहिनं यथा।
> तत्प्राणलिङ्गमुद्दिष्टं तद्धारी स्यात् तदाकृतिः।।[1] इति।

---

हुआ अहंकार शून्य होकर जल में पद्मपत्र की तरह संसार में वर्तमान रहकर भी निर्लिप्त रहता है।

### ४. प्राणलिङ्गी

प्राणलिङ्ग का उपासक साधक **प्राणलिङ्गी** कहलाता है। मूलाधारस्थित अपानवायु के साथ गुरुदर्शित मार्ग से प्राणवायु का संघट्ट होने पर दिव्यज्योति उदित होती है। मूलाधार से उत्पन्न यह ज्योति सुषम्नामार्ग से प्रस्थान कर कुण्डलिनी को ऊर्ध्वमुखी बनाकर हृदयस्थ अनाहत चक्र (द्वादशदल कमलकर्णिका) में सुस्थिर होती है। इस ज्योति का परिमाण अङ्गुष्ठसम्मित तथा विद्रुमवर्णाभ होता है– यह शिवयोगियों से अनुभूत होता है। यथा भगवान् भास्कर के उदय होने पर उनके प्रकाशकिरणों में तुहिनकण विलीन हो जाते हैं तद्वत् उपर्युक्त ज्योति में प्राणवायु का लय हो जाता है। वीरशैवाचार्यों ने प्राणशक्तिविशिष्ट इस ज्योति को प्राणलिङ्ग कहा है। तद्यथा—

'प्राणापानसमाघातात्.............तद्धारीस्यात् तदाकृतिः॥२॥'

---

१. सि० शि० १२।६–७, पृ० २–३.

पदवाक्यप्रमाणज्ञैर्मरितोण्टदार्यैरपि–"कुम्भकशब्दितप्राणवायुनिरोधजनितकशेरुकादण्डान्तरस्थैकविंशतिग्रन्थिभेदनपूर्वककुण्डलिन्यूर्ध्वमुखीकरणद्वारा हृदयस्थितानाहतपद्माष्टदलव्यतिरिक्तचतुर्दलमध्यस्थकर्णिकान्तःस्थिताङ्गुष्ठपरिमाणविद्रुमप्रभप्राणशक्तिविशिष्टचित्स्वरूपमेव प्राणलिङ्गम्"[1] इति प्राणलिङ्गस्वरूपमुपवर्णितम्।

प्राणलिङ्गिस्थलं हि साधकस्य चतुर्थी भूमिका भवति। भक्तमाहेश्वरप्रसाद्याख्यास्तिस्रो भूमिकाः क्रियाप्रधाना आसन्। चतुर्थी भूमिका तु ज्ञानप्रधाना वर्तते। अस्यामेवावस्थायां साधकस्य स्वकीयचिद्रूपस्य, अर्थात् प्राणलिङ्गस्य ज्ञानं जायते। एतादृशप्राणलिङ्गज्ञानवानेव प्राणलिङ्गीति कथ्यते। तदुक्तम्–

भक्तो माहेश्वरश्चैष प्रसादीति च कीर्तितः।
कर्मप्राधान्ययोगेन ज्ञानयोगोऽस्य कथ्यते।।
लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी।
तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते।।[2] इति।

अयं च प्राणलिङ्गी भ्रमरकीटन्यायेन सदा स्वान्तःस्थितं संविल्लिङ्गं

---

तदनुसार पदवाक्यप्रमाणों के विशेषज्ञ मरितोण्डदार्य ने प्राणलिङ्ग का विशद विवरण किया है— 'कुम्भक (प्राणवायु-निरोध) द्वारा कशेरु का दण्डान्तरस्थ २१ ग्रन्थियों का भेदन कर कुण्डली को ऊर्ध्वमुख किया जाता है। तदनन्तर हृदयस्थ अनाहत पद्म (अष्टदलव्यतिरिक्त) चतुर्दलमध्यस्थ कर्णिका में स्थित अङ्गुष्ठ-परिमाण, विद्रुम की आभा से युक्त प्राणशक्ति उदित होती है। उपर्युक्त प्राणशक्ति से युक्त चित्स्वरूप को **प्राणलिङ्ग** कहा जाता है। प्राणलिङ्गी स्थल, साधक की चतुर्थ भूमि है। इसके पूर्व की भूमिकाओं (भक्त, माहेश्वर एवं प्रसादी) में क्रिया की प्रधानता रहती है। चतुर्थ भूमि में ज्ञान की प्रधानता रहती है। इस अवस्था में साधक को स्वचिद्रूप प्राणलिङ्ग का ज्ञान उदित होता है। उक्त ज्ञानवान् साधक 'प्राणलिङ्गी' कहलाता है। तद्यथा—

'भक्तो माहेश्वरश्चैव..........प्राणलिङ्गीति कथ्यते।।२।।'

---

१. वी० आ० च०, पृ० ४५६.
२. सि० शि० १२।२-३, पृ० २-३.

भावनामयपदार्थैः प्रपूजयति। तत्र क्षमा ह्यभिषेकजलम्, नित्यानित्यवस्तुविवेको वस्त्रम्, सत्यभाषणमेवाभरणम्, वैराग्यमेव पुष्पमालिका, श्रद्धा हि धूपः, मौनमेव घण्टानादः, बुद्धेश्चिद्रूपलिङ्गरूपत्वमेव नमस्कारक्रियेति प्राणलिङ्गार्चनायाः पदार्थाः प्रतिपादिताः तथाहि—

क्षमाऽभिषेकसलिलं विवेको वस्त्रमुच्यते।
सत्यमाभरणं प्रोक्तं वैराग्यं पुष्पमालिका।।
गन्धः समाधिसम्पत्तिरक्षता निरहङ्कृतिः।
श्रद्धा धूपो महाज्ञानं जगद्भासि प्रदीपिका।।
भ्रान्तिमूलप्रपञ्चस्य निवेद्यं तन्निवेदनम्।
मौनं घण्टापरिस्पन्दस्ताम्बूलं विषयार्पणम्।।
विषयभ्रान्तिराहित्यं तत्प्रदक्षिणकल्पना।
बुद्धेस्तदात्मिका शक्तिर्नमस्कारक्रिया मता।।
एवंविधैर्भावपुष्पैरुपचारैरदूषितैः।
प्रत्युन्मुखमना भूत्वा पूजयेल्लिङ्गमान्तरम्।।[1] इति।

साधकोऽयमनुभवभक्तिमान् भवति, अर्थात् प्राणलिङ्गव्यवस्थायामेवास्य स्वहृदयकमले प्रथमतश्चिद्रूपेण शिवानुभवः सञ्जायते। प्राणलिङ्गव्यवस्था हि ज्ञानेन साकं योगप्रधानापि वर्तते।

---

प्राणलिङ्गी साधक भ्रमरकीटन्याय से स्वान्तःस्थ शिवलिङ्ग (संविल्लिङ्ग) को भावपदार्थों से अर्चित करता है। इस भूमि में आचार्यों ने क्षमा को अभिषेकजल कहा है। तद्वत् नित्यानित्यवस्तुविवेक वस्त्र है, सत्यभाषण आभरण है, वैराग्य पुष्पमाल्य है। श्रद्धा धूप है, मौन घण्टानाद है एवं बुद्धिप्रतिबिम्बित चिद्रूप की लिङ्गरूपता नमस्कृति है। तद्यथा—

'क्षमाऽभिषेकसलिलं.........लिङ्गमान्तरम्।।५।।'

साधक को इस चतुर्थ भूमि में निजहृदय में चिद्रूप शिव की अनुभूति जागृत हो जाती है। इस भूमि में ज्ञान के साथ योग का सामरस्य उदित होता है।

---

१. सि० शि० १२।४-८, पृ० ६-७.

**५. शरणः**

शिवमेवानन्यभावेन शरणं गतः साधकः 'शरण' इत्युच्यते। शरणावस्था हि षट्स्थलोपासनायां पञ्चमी भूमिका भवति। प्राणलिङ्गिस्थले साधकः चिद्रूपज्ञानवान् भवति, शरणस्थले तस्य शिवानन्दानुभवो भवति।

तस्मात् चिद्रूपज्ञानवान् हि प्राणलिङ्गी यदा शिवानन्दमनुभवति, तदा स एव 'शरण' इति कथ्यते।

सतीपतिन्यायेन साधकोऽयं स्वात्मानं सतीमिति परशिवं च पतिमिति विभावयन् "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"[१] इति श्रुतिप्रसिद्धमलौकिकमानन्दमनुभवति। तदुक्तम्—

अङ्गलिङ्गी ज्ञानरूपः सती ज्ञेयः शिवः पतिः।
यत्सौख्यं तत्समावेशे तद्वान् शरणनामवान्।।
सतीव रमणे यस्तु शिवे शक्तिं विभावयन्।
तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान्।।[२] इति।

तदेवं सर्वप्रयत्नेन मनोवाक्कायकर्मभिः शिवं शरणं गतोऽयं

---

**५. शरण**

अनन्यभाव से शिवशरणागतिप्राप्त साधक **शरण** कहलाता है। षट्स्थलोपासना की यह पञ्चम भूमि है। प्राणलिङ्गिस्थल में साधक को चिद्रूप का ज्ञान उदित होता है पर, शरणस्थल में उसे शिवानन्दानुभूति भी जागृत होती है। इस भूमि में स्थित साधक स्वयं को सती तथा परशिव को स्वामी (पति) रूप से विभावना करता है तथा अलौकिक अमन्द आनन्द की अनुभूति से उपोद्वलित होता है। श्रुति में इसका अच्छा वर्णन प्राप्त होता है— 'तद्यथा प्रियया........न बाह्यं किञ्चन वेदनान्तरम्।' शिखामणिकार ने भी कहा है—

'अङ्गलिङ्गी ज्ञानरूपः...........ज्ञातः शरणनामवान्।।२।।'

इस भूमि में साधक प्रयत्नपुरःसर मन, वचन एवं कर्म द्वारा शिवशरणागति को प्राप्त कर इष्टचिन्तन से अनन्तसुख को प्राप्त कर मोदमान रहता है किन्तु

---

१. बृ० उ० ४।३।२१.
२. सि० शि० १३।२, ५; पृ० १९-२०.

शरणनामकः साधकस्तदनन्तसुखं प्राप्यानन्यचिन्तया मोदते। साधकोऽयं शिवेन साकं सायुज्यं न प्राप्तवानितीयमवस्था भेदाऽभेदरूपा भवति।

### ६. ऐक्यः

प्राणलिङ्गादियोगेन सुखातिशयमेयिवान् ।
शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत्।।[1]

इत्याचार्योक्त्या, 'एकस्य भाव ऐक्यम्' इति व्युत्पत्त्या च परशिवेन साकमेकतां प्राप्तो हि ऐक्य इत्युच्यते। शरणे विद्यमाना 'शिवोऽहंभावना' हि यदा दृढीभवति, तदा शिवेनैकतां प्राप्तः शरण एवैक्यो भवति। एतादृशावस्थैव लिङ्गाङ्गसामरस्यावस्थेत्युच्यते। इयमेवान्तिमा षष्ठी भूमिका। शिखिकर्पूरन्यायेन, अर्थाद् अग्निसंयुक्तकर्पूरमिव साधकोऽत्र शिवस्वरूपो भवति।

जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम्।
परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते।।[2]

इति रेणुकभगवत्पादाः शिवैक्यस्य सामरस्यमुपवर्णितवन्तः। एवमैक्यभावमापन्नस्य प्राक्तनः पशुपतिभावः, सतीपतिभावश्च विलीनो भवति।

---

शिवसायुज्य अभी भी अप्राप्त होने से वह भेदाभेद स्थिति का अनुभव करता है।

### ७. ऐक्य–

'प्राणलिङ्गादियोगेन............ऐक्यवान् भवेत्।।१।।' इस कथन के अनुसार साधक परमशिव के साथ ऐक्य (अभेद) को प्राप्त कर लेता है। शरण भूमि में उदित शिवोऽहम् की भावना दृढ़ होने पर साधक शिव के अभेद को प्राप्त कर ऐक्य कहलाता है। इस अवस्था को **लिङ्गाङ्गसामरस्य** नाम से भी जाना जाता है। यह अन्तिम षष्ठी भूमिका है। शिखिकर्पूरन्यायसे साधक शिवस्वरूप बन जाता है। यथा कर्पूर अग्निसंयोग से अग्निसात् हो जाता है। शिवैक्य के सामरस्य का वर्णन निम्नाङ्कित पद्य में उपवर्णित है—

'जले जलमिव न्यस्तं............विभागेन न दृश्यते।।१।।

इस ऐक्यभाव में प्रतिष्ठित साधक की पूर्वावस्था के भेदपरक पशु-पतिभाव एवं सती-पतिभाव विलीन हो जाते हैं। ऐक्यावस्था की अद्वैत स्थिति मुक्तिपद-वेदनीय है। तद्यथा—

---

१. सि० शि० १४।२, पृ० ३१.
२. सि० सि०२०२, पृ० २१०.

तदा च सर्वत्राद्वैतस्थितिरेव पर्यवस्यति। तदुक्तमाचार्यवर्यैः–

पशुत्वं च पतित्वं च मायामोहविकल्पितम्।
तस्मिन् प्रलयमापन्ने कः पशुः को नु वा पतिः।।
भेदबुद्धिसमुत्पन्नमहासंसारसागरम्।
अद्वैतबुद्धिपोतेन समुत्तरति देशिकः।।
अद्वैतभावनाजातं क्षणमात्रेऽपि यत्सुखम्।
तत्सुखं कोटिवर्षेण प्राप्यते नैव भोगिभिः।।
चित्तवृत्तिसमालीनजगतः शिवयोगिनः।
शिवानन्दपरिस्फूर्तिर्मुक्तिरित्यभिधीयते।। [१]इति।

तदेवं वीरशैवसिद्धान्ते साधको भक्तस्थलादारभ्यैक्यस्थलपर्यन्तं क्रमशो विकासं प्राप्यैक्यस्थले शिवेन साकं समरसो भवति। ऐक्यावस्थायां च संसारकारणीभूतस्य प्राकृताहङ्कारस्य निवृत्तिः, शिवोऽहमित्याकारिकायाः पराहन्ताया उदयश्च भवतीति देहादिषु तस्य रतिर्नैव जायते। अत एवाऽयं देहस्थोऽपि निर्देहीति कथ्यते। तदुक्तं रेणुकभगवत्पादैः–

देहिनोऽपि परात्मत्वभाविनो निरहङ्कृतेः।
निरस्तदेहधर्मस्य निर्देहागम उच्यते।।
गलिते ममताहन्ते संसारभ्रमकारणे।
पराहन्तां प्रविष्टस्य कुतो देहः कुतो रतिः।।
अखण्डसंविदाकारमद्वितीयं सुखात्मकम्।
परमाकाशमात्मानं मन्वानः कुत्र मुह्यति।। [२]इति।

---

'पशुत्वं च पतित्वं च...........मुक्तिरित्यभिधीयते।।४।।

वीरशैवसिद्धान्त में साधक की साधनायात्रा भक्तस्थल से आरम्भ होकर क्रमशः उच्चैस्त्व में प्रवेश के साथ गन्तव्य ऐक्यस्थल को प्राप्त कर मोक्षश्री का सम्पादन कर सम्पूर्णता को प्राप्त होती है। यतश्च ऐक्यस्थल में साधक की प्राकृताहंकारनिवृत्ति होती है तथा पराहन्ता उदित होती है अतः देहादि में उसका अनुराग नहीं होता। देह रहने पर भी वह निर्देह (विदेह) कहलाता है। तद्यथा—

'देहिनोऽपि.......मन्वानः कुत्र मुह्यति।।१।।

---

१. सि० शि० १४।९,११,१४-१५; पृ० ३४-३५.
२. सि० शि० १८।१,२,५, पृ० १३९-१४०.

## मुक्तेरानन्दरूपत्वम्

मुक्तिरेव परा तृप्तिः सच्चिदानन्दलक्षणा।
नित्यतृप्तस्य मुक्तस्य किमन्यैर्भोगसाधनैः।।[३]

इति रेणुकभगवत्पादैरुक्तत्वाद् वीरशैवैरप्यद्वैतवेदान्तिभिरिव मुक्तेरानन्दरूपत्वमङ्गीक्रियते। इदं च मुक्तिसुखं न ब्रह्मादिलोकवत् सातिशयरूपम्, किन्तु सर्वोत्कृष्टत्वान्निरतिशयरूपमिति प्रतिपाद्यते। तथाहि–

कुतो ब्रह्मा कुतो विष्णुः कुतो रुद्रः कुतो रविः।
साक्षात्कृतपरानन्दज्योतिषः साम्यकल्पना।।
अपरोक्षपरानन्दविलासस्य महात्मनः।
ब्रह्मविष्ण्वादयो देवा विशेषाः सुखबिन्दवः।।
यन्मात्रासहितं लोके वाञ्छन्ति विषयं नराः।
तदप्रमेयमानन्दं परमं को न वाञ्छति।।[१]इति।

## जीवन्मुक्तिः

स्वस्वरूपं चिदाकारं ज्योतिः साक्षाद्विचिन्तयन्।
देहवानपि निर्देहो जीवन्मुक्तो हि साधकः।।[२]

---

## मुक्ति की आनन्दरूपता

अद्वैतवेदान्तवत् वीरशैवमत में भी मुक्ति की आनन्दरूपता स्वीकार्य है। तद्यथा—

'मुक्तिरेव...........किमन्यैर्भोगसाधनैः।।१।।'

मुक्तिसुख की ब्रह्मलोकादिवत् सातिशयता नहीं प्रत्युत निरतिशयरूपता है क्योंकि वह सर्वोत्कृष्ट है। तद्यथा— 'कुतो ब्रह्मा कुतो विष्णुः.......परमं को न वाञ्छति।।३।।'

## जीवन्मुक्ति–

आचार्य रेणुक ने जीवन्मुक्ति का स्वरूप प्रतिपादित किया है—

'स्वस्वरूपं चिदाकारं............जीवन्मुक्तो हि साधकः।।१।।'

---

३. सि० शि० १८।६, पृ० १५३.
१. सि० सि० १९।८–१०, पृ० १६३–१६४.
२. सि० शि० १६।६, पृ० ८९.

**शुद्धाचारः शुद्धभावो विवेकी ज्योतिः पश्यन् सर्वतः शैवमेकम्।**
**ज्ञानध्वस्तप्राकृतात्मप्रपञ्चो जीवन्मुक्तश्चेष्टते दिव्ययोगी।।**[३]

इत्याद्यनेकस्थानेषु रेणुकभगवत्पादैर्जीवन्मुक्तिस्वरूपमुपवर्णितम्। एतेन यथा दर्शनान्तरेष्ववशिष्टप्रारब्धस्य ज्ञानिनो भोगेन प्रारब्धपरिक्षयपर्यन्तं जीवन्मुक्तिस्थितिरङ्गीक्रियते, तद्वद्वीरशैवदर्शनेऽपि शिवज्ञानसम्पन्नस्य यावद् देहपातं जीवन्मुक्तिरङ्गीक्रियत इति निश्चीयते। जीवन्मुक्तेरभावे गुरुशास्त्रादिपरम्परैव विच्छिद्येतेति दार्शनिकसमाजे जीवन्मुक्तेः परमावश्यकता वर्तते।

ननु जीवन्मुक्तस्यापि लौकिकप्रवृत्तेर्दृश्यमानत्वात् सोऽपि तज्जन्यदोषभाग् भवेदेवेति चेन्न,

**शिवस्य पररूपस्य सर्वानुग्राहिणोऽर्चने।**
**त्यागो देहाभिमानस्य कायार्पितमुदाहृतम्।।**
**यदा योगी निजं देहं शिवाय विनिवेदयेत्।**
**तदा भवति तद्रूपं शिवरूपं न संशयः।।**[१]
**यद्यत्करणमालम्ब्य भुङ्क्ते विषयजं सुखम्।**
**तत्तच्छिवे समर्प्यैष करणार्पक उच्यते।।**[२]

---

शुद्धाचारः शुद्धभावो विवेकी........चेष्टते दिव्ययोगी।।१।।

अन्य दर्शनों में प्रारब्धशेष ज्ञानी का भोग से प्रारब्धपरिक्षयपर्यन्त जीवन्मुक्ति की स्थिति यथा स्वीकार्य है तद्वद् वीरशैवदर्शन में भी शिवज्ञानसम्पन्न की देहपात-पर्यन्त जीवन्मुक्ति स्वीकृत है। जीवन्मुक्ति के अभाव में गुरुशास्त्रादि-परम्परा ही विच्छिन्न हो जायगी। अतः दार्शनिक समाज में जीवन्मुक्ति की अवधारणा अत्यन्त महत्वपूर्ण है।

जिज्ञासा होती है— जीवन्मुक्त की भी लौकिक प्रवृत्ति होने से उससे उत्पन्न दोष से वह लाञ्छित होगा। इसका समाधान है— शिवार्पणबुद्धि से कार्यकारणभावपुरःसर जीवन्मुक्त का सकल व्यवहार प्रवर्तित होने से त्रिकरणजनित दोष की प्रसक्ति नहीं होती। तद्यथा—

'शिवस्य पररूपस्य.........विपरीते तु संसृतिः।।५।।'

---

३. सि० शि० १६।९, पृ० ९८.
१. सि० शि० १७।१-२, पृ० १०९-११०.
२. सि शि० १७।२, पृ० १११.

शिवे निश्चलभावेन भावानां यत्समर्पणम्।
भावार्पितमिदं प्रोक्तं शिवसद्भाववेदिभिः।।
भाव एव हि जन्तूनां कारणं बन्धमोक्षयोः।
भावशुद्धौ भवेन्मुक्तिर्विपरीते तु संसृतिः।।[१]

इत्यादिरेणुकभगवत्पादोक्तिभिर्जीवन्मुक्तः शिवार्पितैरेव काय-करण-भावैर्व्यवहरतीति न त्रिकरणजन्यदोषभाग् भवति। किञ्च,

घ्राणस्य घ्राणमाचारलिङ्गस्य मुखमुच्यते।
जिह्वायाश्च तथा जिह्वा गुरुलिङ्गमुखं भवेत्।।
चक्षुषश्च तथा चक्षुः शिवलिङ्गमुखं भवेत्।
त्वचस्त्वक् चररूपस्य लिङ्गस्य मुखमुच्यते।।
मुखं प्रसादलिङ्गस्य श्रोत्रं श्रोत्रस्य कथ्यते।
हृदयं हृदयस्यैव महालिङ्गमुखं भवेत्।।
एवं लिङ्गमुखं ज्ञेयं तत्तदङ्गे प्रतिष्ठितम्।[२]

इति शिवागमोक्त्या वीरशैवसिद्धान्ते षडिन्द्रियेषु षड्विधलिङ्गानि भावयित्वा तत्तद्विषयान् तत्तल्लिङ्गाय समर्प्य गन्धादीनां प्रसादरूपेण ग्रहणमुपदिष्टम्।

---

वीरशैवसिद्धान्त में निम्नाङ्कित आगमोक्ति प्रमाण के आधार पर षड्विध इन्द्रियों में षड्विध लिङ्गों की भावना बतायी गयी है। तदनुसार इन्द्रियविषयों को लिङ्गार्पित कर गन्धादि का प्रसादबुद्धि से ग्रहण करने का उपदेश दिया जाता है। तद्यथा—

घ्राणस्य घ्राणमाचार........तत्तदङ्गे प्रतिष्ठितम्।।३½।।

तदनुरूप जीवन्मुक्त व्यक्ति घ्राणेन्द्रिय में आचारलिङ्ग की भावना करे तथा घ्राणयोग्य सुगन्ध का अर्पण कर उसे प्रसादबुद्धि से ग्रहण करे। तद्वत् रसनेन्द्रिय को गुरुलिङ्गरूप में भावना कर रस का अर्पणकर उसे ग्रहण करे। चक्षुरिन्द्रिय को शिवतया भावित कर रूपसमर्पण द्वारा उसका ग्रहण विहित है। त्वगिन्द्रिय को चरलिङ्गतया भावित कर स्पर्शसमर्पण द्वारा उसका ग्रहण एवम् श्रोत्र को प्रसादलिङ्गतया भावित कर शब्द को अंर्पित कर उसका ग्रहण विहित है।

मन में महालिङ्ग की भावना, तृप्तिप्रद पदार्थ का अर्पण एवं ग्रहण उपदिष्ट है। कर्मेन्द्रियों में भी क्रमशः पायु में आचारलिङ्ग, उपस्थ में गुरुलिङ्ग, पाद में शिवलिङ्ग,

१. सि शि० १७।१, ३; पृ० ११४-११५.
२. शि० द०, पृ० ४७-४८.

तदनुरूपं जीवन्मुक्तो घ्राणेन्द्रिये आचारलिङ्गं भावयित्वा तस्मै घ्रेयपदार्थगतं गन्धं समर्प्य तदनुभूतं गन्धप्रसादम्, रसनेन्द्रिये गुरुलिङ्गं भावयित्वा तस्मै रस्यपदार्थगतं रसं समर्प्य रसप्रसादम्, चक्षुरिन्द्रिये शिवलिङ्गं भावयित्वा तस्मै रूपं समर्प्य रूपप्रसादम्, त्वगिन्द्रिये चरलिङ्गं भावयित्वा तस्मै स्पर्शं समर्प्य स्पर्शप्रसादम्, श्रोत्रेन्द्रिये प्रसादलिङ्गं भावयित्वा तस्मै शब्दं समर्प्य शब्दप्रसादम्, मनसि च महालिङ्गं भावयित्वा तस्मै तृप्त्याख्यं पदार्थं समर्प्य तत्प्रसादं चोपभुङ्क्ते। एवमेव हस्तपादादिकर्मेन्द्रियेष्वप्युपर्युक्तानि लिङ्गानि, अर्थात् पाय्विन्द्रिये आचारलिङ्गम्, उपस्थे गुरुलिङ्गम्, पादे शिवलिङ्गम्, पाणौ चरलिङ्गम्, वागिन्द्रिये च प्रसादलिङ्गं भावयित्वा तत्तदिन्द्रियविषयं पूर्ववत् समर्प्य तत्तत्प्रसादं गृह्णातीति जीवन्मुक्तो लिङ्गभोगोपभोगीति च कथ्यते। अपरं च, तैरेव रेणुकभगवत्पादैः—

दर्शनात् स्पर्शनाद् भुक्तेः श्रवणाद् घ्राणनादपि।
विषयेभ्यो यदुत्पन्नं शिवे तत्सुखमर्पयेत्।।[१]
इन्द्रियैरेव जायन्ते पापानि सुकृतानि च।
तेषां समर्पणादीशे कुतः कर्मनिबन्धनम्।।
इन्द्रियाणि समस्तानि शरीरं भोगसाधनम्।
शिवपूजाङ्गभावेन भावयन् मुक्तिमाप्नुयात्।।[२]

इत्यादिरूपेण सर्वेन्द्रियैः शिवप्रसादोपभोगिनो न सांसारिकदोषप्रसक्तिरिति

---

पाणि में चरलिङ्ग, वाक् में प्रसादलिङ्ग की भावना तथा विषय का समर्पण एवं प्रसादरूप में ग्रहण विहित है। एतदनुरूप जीवन्मुक्त की अपरसंज्ञा है—लिङ्गभोगोपभोगी।

एवंच यतः इन्द्रियों द्वारा शिवप्रसाद का उपभोग करने वाले साधक को सांसारिक दोषों की प्रसक्ति नहीं होती अतः सर्वव्यवहारवर्ती जीवन्मुक्त को दोषलेश-प्रसक्ति प्रतिषिद्ध होती है। तद्यथा—

'दर्शनात् स्पर्शनात्............ भावयन् मुक्तिमाप्नुयात्।।३।।'

पुनश्च जिज्ञासा उदित होती है कि शिवैक्यभावापन्न ज्ञानियों के जीवन्मुक्ति

---

१. सि० शि० १७।४, पृ० ११०.
२. सि० शि० १७।७, ११; पृ० ११३-११४.

प्रतिपादितत्वान्न जीवन्मुक्तस्य सर्वव्यवहारं कुर्वतोऽपि दोषप्रसक्तिसम्भवः।

नन्वेवं शिवभावमापन्नस्य ज्ञानिन आगामिकर्माभावेऽपि सञ्चितस्य कर्मणः का गतिरिति जिज्ञासायाम्—"ज्ञानिनो यानि कर्माणि तानि नो जन्महेतवः। अग्निदग्धानि बीजानि यथा नाङ्कुरकारणम्।।"[1] इति भर्जितबीजवत् शिवोऽहमिति ज्ञानेन दग्धसञ्चितकर्मणः शिवयोगिनो नोत्तरजन्मप्राप्तिरिति रेणुकभगवत्पादा महर्षिमगस्त्यं प्रत्युपदिष्टवन्तः।

एवं शिवोऽहमिति शिवेन सह स्वात्मन ऐक्यं भावयतः शिवयोगिनः शिवोऽहमिति भावना यदा दृढा भवति, तदा तादृशवृत्तिज्ञानस्यापि विलये शिवयोगी शिव एव भवतीति शिवयोगिन इयमवस्था ज्ञानशून्यावस्थेत्युच्यते। तदानीं ज्ञातृ-ज्ञान-ज्ञेयानां त्रिपुटीनामभावो जायते। जीवन्मुक्तस्येयं ज्ञानशून्यावस्था जीवन्मुक्तेर्हि पराकाष्ठा उच्यते। अत एवोक्तम्—

**सर्वात्मनि परे तत्त्वे भेदशङ्काविवर्जिते।**
**ज्ञात्रादिव्यवहारोत्थं कुतो ज्ञानं विभाव्यते।।**
**ज्योतिर्लिङ्गे चिदाकारे स्वप्रकाशे निरुत्तरे।**
**एकीभावमुपेतस्य कथं ज्ञानस्य सम्भवः।।**

---

समकाल कर्म के बन्धन नहीं होने पर भी संचित कर्म तो बिना भोग के क्षीण नहीं होंगे। इसका समाधान है— 'शिवोऽहम्' इस ज्ञान से संचित कर्मों का दाह हो जाता है। एतावता भर्जित बीज की तरह ज्ञानी के संचित कर्मों का दाह हो जाने से उत्तर जन्म की प्राप्ति नहीं होती। तद्यथा—

'ज्ञानिनो यानि कर्माणि.........यथा नाङ्कुरकारणम्।।१।।

'शिवोऽहम्'—इस रूप से स्वात्मा के ऐक्य की भावना करने वाले शिवयोगी की उक्त भावना के दृढ़ हो जाने पर तादृशवृत्तिज्ञान का भी विलय हो जाता है। एवंच शिवयोगी शिव ही बन जाता है। यह अवस्था **ज्ञानशून्यावस्था** कहलाती है। उक्त अवस्था में त्रिपुटी (ज्ञाता, ज्ञान, ज्ञेय) का अभाव हो जाता है। यह अवस्था जीवन्मुक्ति की पराकाष्ठा मानी जाती है। अतः यह कहा गया है—

'सर्वात्मनि परे तत्त्वे...........स मुक्तः पर उच्यते।।३।।'

---

१. सि० शि० १९।२, पृ० १६५.

**यस्य कार्यदशा नास्ति कारणत्वमथापि वा।**
**शेषत्वं नैव शेषित्वं स मुक्तः पर उच्यते।।[१] इति।**

तदेवं वीरशैवदर्शने वस्तुतः परमात्मनो भिन्नस्य जीवस्य मुक्तावस्थायां परशिवेन साकमभेदः प्रतिपाद्यते। तस्मादत्र भेदाऽभेदौ सत्यभूतौ वर्तेते। अत एवेदं दर्शनं भेदाऽभेदवादीति नाम्ना व्यवह्रियत इति सर्वं समञ्जसम्।।

---

निष्कर्ष कथन है–वीरशैवसिद्धान्त में व्यवहारपद में जीव, परमात्मा से भिन्न है किन्तु मुक्तावस्था में जीव को परशिव से एकता सम्पादित हो जाती है। अतः भेद एवम् अभेद दोनों ही यहाँ सत्य माने जाते हैं। इसी कारण इस दर्शन को भेदाभेदवादी कहा जाता है।

***

१. सि० शि० २०।३, १०–११; पृ० २११–२१३.

श्रीविश्वाराध्याय नमः

# ।।सप्तमः परिच्छेदः।।

## दार्शनिकसिद्धान्तसमीक्षा

तदेतावता ईश्वर-जीव-जगद्-बन्ध-मोक्षाख्या दार्शनिकसिद्धान्ता न्याय-वैशेषिक-सांख्य-योग-पूर्वोत्तरमीमांसादर्शनानुसारेण तथा सिद्धान्त-शिखामण्युक्तवीरशैवदर्शनानुसारेण पृथक् विस्तरेण पर्यालोचिताः। अधुना न्यायादिदर्शनान्तरीयसिद्धान्तैः साकं सिद्धान्तशिखामण्युक्तवीरशैवाभिमत-दार्शनिकसिद्धान्तानां समीक्षा क्रियते।

### ईश्वरस्वरूपसमीक्षा

तत्र तावत् तत्त्वज्ञानप्रतिपादनाय प्रवृत्तेष्वास्तिकनास्तिकदर्शनशास्त्रेषु निखिलेष्वप्युपपाद्यत्वेन निरसनीयत्वेन वेश्वरनिर्देशः प्रातःस्मरणीयचरितै-र्महर्षिभिस्तत्त्वदर्शिभिर्विद्वद्धौरेयैश्च कृतो दरीदृश्यते। तत्र नास्तिकदर्शनेषु

---

श्रीविश्वाराध्य भगवान् को नमस्कार अर्पित हो

# ।।सप्तम परिच्छेद।।

## दार्शनिकसिद्धान्तसमीक्षा

षष्ठ परिच्छेदः तक ईश्वर, जीव, जगत्, बन्ध एवं मोक्ष-इन दार्शनिक सिद्धान्तों की विवेचना पृथक्-पृथक् की गई है। जिनमें न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा तथा उत्तर मीमांसा के साथ सिद्धान्तशिखामणि में वर्णित वीरशैवदर्शन के प्रस्थानों को आधार माना गया है। इस सप्तम परिच्छेद में उपर्युक्त षट् दर्शनों के सिद्धान्तों की वीरशैवाभिमत (सिद्धान्तशिखामणि के परिप्रेक्ष्य में) सिद्धान्तों के साथ समीक्षा कर्तव्य है।

### ईश्वरस्वरूप की समीक्षा

समस्त आस्तिक दर्शन तथा नास्तिक दर्शन तत्त्वज्ञान के प्रतिपादनार्थ प्रवृत्त हैं। प्रातःस्मरणीय तत्त्वदर्शी महर्षि एवं विद्वज्जन ने ईश्वर को केन्द्रित कर उनकी सिद्धि अथवा निरास का प्रतिपादन किया है। यह सर्वविदित है कि चार्वाक, जैन

चार्वाक-जैन बौद्धेषु तथाऽऽस्तिकेष्वपि सांख्यमीमांसादर्शनयोर्व्युदसनीयत-यैवेश्वरोपादानं कृतमवलोक्यत इति सर्वसम्प्रतिपन्नोऽयं विषयः।

आस्तिकेषु न्याय-वैशेषिक-योग-अद्वैतवेदान्त-वीरशैवदर्शनेष्वीश्वरसाधनाय हेतुद्वयं समानमेव दृश्यते। तत्र प्रथमं सृष्टिप्रलयादिसमर्थनम्, द्वितीयं वेदागमप्रामाण्यसमर्थनं च। सांख्या मीमांसकाश्चेश्वरस्य सृष्ट्यादिकर्तृत्वे-नाङ्गीकारे तस्य प्रयोजनसिद्धौ नित्यतृप्तत्वहानिः, असिद्धौ च मन्दप्रवृत्तिप्रसङ्ग इत्युभयतः पाशारज्जुभयेनेश्वरं नाङ्गीकुर्वन्त्येव। तस्मादत्र वैदिकदर्शनेष्वीश्वर-विषयकविचाराणां पूर्वं पृथक् पृथगालोचितानां परस्परं किं वैशिष्ट्यम्, वीरशैवदर्शनस्य च ततोऽपि किं वैशिष्ट्यमिति समीक्ष्यते।

## ईश्वरस्य सगुणत्वनिर्गुणत्वयोः समीक्षा

तत्र न्यायवैशेषिकदर्शनयोरीश्वरस्तदभिमतनवद्रव्यान्तर्गतात्मद्रव्येऽन्त-र्भवतीति[1] स सगुण एव न निर्गुणः, द्रव्यसामान्यस्य गुणक्रियावत्त्वाङ्गीकारात्।

---

एवं बौद्ध (नास्तिकों ने) तथा सांख्य एवं मीमांसकों (आस्तिकद्वय) ने ईश्वर को खण्डनीय मान कर अपनी विवेचना की है।

न्याय, वैशेषिक, योग, अद्वैतवेदान्त तथा वीरशैवदर्शन (आस्तिक) में ईश्वर सिद्धि के दो हेतु समान रूप से स्वीकृत हैं— १. सृष्टिप्रलयादि का समर्थन तथा २. वेदागमप्रामाण्य का समर्थन। सांख्य एवं मीमांसा दर्शनों में ईश्वर को नहीं माना जाता है। यदि ईश्वर को सृष्ट्यादि के कर्ता के रूप में माना जाय तो उनको सप्रयोजन मानने पर नित्यतृप्तता की हानि होगी।प्रयोजन की असिद्धि मानने पर मन्दप्रवृत्ति की प्रसक्ति होगी। एवंच उभयतः पाशा रज्जु की स्थिति होगी। अतः यहाँ वैदिक दर्शनों में ईश्वर-विषयक विचारों का परस्पर वैशिष्ट्य क्या है अथ च वीरशैवदर्शन को षड्दर्शनों से भी समधिक वैशिष्ट्य क्या है इसकी समीक्षा कर्तव्य है।

## ईश्वर की सगुणत्व-निर्गुणत्व समीक्षा–

न्याय एवं वैशेषिक दर्शनों में ईश्वर को नवविध द्रव्य के अन्तर्गत आत्म-द्रव्य में अन्तर्भाव माना जाता है। अतः उसे सगुण ही माना जायगा निर्गुण नहीं। क्योंकि गुणवत्त्व अथवा क्रियावत्त्व को द्रव्य-सामान्य का लक्षण प्रतिपादित किया

---

१. "ज्ञानाधिकरणमात्मा। स द्विविधः–जीवात्मा परमात्मा चेति।"(त० सं०, पृ० १९-२०)

अतोऽत्रेश्वरः सर्वज्ञत्वादिनित्यगुणाश्रयः। योगदर्शने पुरुषविशेष ईश्वर इत्यङ्गीकृत्य तस्य वैशिष्ट्यमविद्यादिपञ्चक्लेशराहित्यं सर्वज्ञत्वाद्युत्कृष्टगुणयुक्तत्वं चेति प्रतिपादितत्वात्[1] सोऽपि सगुण एव। अद्वैतवेदान्ते मायाशबलितस्य ब्रह्मणः सगुणत्वं शुद्धब्रह्मणश्च निर्गुणत्वं प्रतिपादितम्। वीरशैवदर्शनेऽपि परशिवस्याऽविभागपरामर्शदशापन्नचिच्छक्तियुक्तत्वेन निर्गुणत्वम्, विभागपरामर्शदशापन्नसत्त्वादित्रिगुणात्मकमायाशक्तिविशिष्टत्वेन च सगुणत्वं व्यवस्थाप्यते[2]। अत्रेश्वरस्य सगुणत्वविषये परस्परवैमत्याऽभावेऽपि द्रव्यत्वेन तस्य सगुणत्वप्रतिपादनाऽपेक्षया विलक्षणशक्तिवैशिष्ट्येन सगुणत्वप्रतिपादनमेव योग्यम्। एतद्विषये न्यायवैशेषिकदर्शनाभ्यां योग-अद्वैतवेदान्त-वीरशैवदर्शनान्युत्कृष्टानि प्रतिभान्ति। योगदर्शनस्येश्वरस्य सर्वज्ञत्वादिगुणयोगाय न कश्चिदुपाधिस्तत्र प्रतिपादितः। अतः स स्वभावत एव सगुणः।

अद्वैतवेदान्त-वीरशैवदर्शनयोस्तु मायासम्बन्धेनेश्वरस्य सगुणत्वं प्रतिपाद्यते। तत्राऽद्वैतिनो 'या मा (नास्ति) सा माया' इति व्युत्पत्त्या मायाया

---

गया है। अतः वीरशैव सिद्धान्त में ईश्वर को सर्वज्ञत्वादि नित्यगुणों का आश्रय माना गया है। योगदर्शन में यतः पुरुषविशेष को ईश्वर माना गया है तथा उसके वैशिष्ट्य अविद्याप्रभृति-क्लेशपञ्चवर्जितत्व तथा उत्कृष्ट (सर्वज्ञत्वादि) गुणों से युक्तत्व प्रतिपादित हैं। अतः वह भी सगुण मान्य हैं, निर्गुण नहीं। अद्वैतवेदान्त में मायाशबलित ब्रह्म को सगुण एवं शुद्ध-ब्रह्म को निर्गुण कहा गया है। वीरशैवसिद्धान्त में भी परशिव के अविभाग-परामर्शदशापन्न चितिशक्ति से युक्त होने से निर्गुणरूपता है तद्वत् विभागपरामर्शदशापन्न सत्त्वादि-त्रिगुणात्मक मायाशक्तिविशिष्ट होने से ब्रह्म की सगुणरूपता की व्यवस्था प्रदत्त है। यहाँ ईश्वर की सगुणता के विषय में पारस्परिक विमति के अभाव होने पर भी द्रव्यत्वेन सगुणत्वप्रतिपादन की अपेक्षा विलक्षणशक्तिविशिष्ट होने से सगुणत्व का प्रतिपादन समीचीन है। इस विषय में न्याय-वैशेषिक दर्शनों की अपेक्षा योग, अद्वैतवेदान्त एवम् वीरशैव-दर्शनों के सिद्धान्त उत्कृष्ट प्रतीत होते हैं। योगदर्शनसम्मत ईश्वर में सर्वज्ञत्व-प्रभृतिगुण के उपपादक उपाधि का प्रतिपादन नहीं होने से वह स्वाभाविकरूप से सगुण मान्य है।

अद्वैतवेदान्त एवं वीरशैवदर्शनों में मायासम्बन्ध से ईश्वर की सगुणरूपता प्रतिपादित है। अद्वैतसिद्धान्त में माया की व्युत्पत्ति 'या मा (नास्ति) सा माया' स्वीकार्य है। तदनुसार माया अनिर्वचनीय है अतएव माया का मिथ्यात्व मान्य

अनिर्वचनीयत्वम्, अत एव तस्य मिथ्यात्वं संसाध्य तथा ब्रह्मचैतन्येन साकमस्याआध्यासिकसम्बन्धं च प्रतिपाद्येश्वरस्य सगुणरूपमपि न पारमार्थिकम्, किन्तु निर्गुणब्रह्मचैतन्यमेव पारमार्थिकमिति व्यवस्थापयन्ति। वीरशैवदर्शने तु–

**मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।**
**मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी।।**

इति सिद्धान्तागमप्रामाण्येन 'मं = शिवम्, अयति = स्वभावतः प्राप्नोतीति माया' इति व्युत्पत्त्या मायाया नित्यत्वं नित्यसम्बन्धत्वं च प्रतिपाद्य परशिवस्य सगुणरूपस्यापि सत्यत्वमेवाङ्गीक्रियते। यदि च निर्गुणस्यैव सत्यत्वं सगुणस्य च मिथ्यात्वं स्यात्, तदा "तदैक्षत बहु स्यां प्रजायेयेति"[३], "स ईक्षां चक्रे"[४] इत्यादीनामीश्वरस्य सगुणत्वप्रतिपादकश्रुतीशतानां निर्विषयत्वापत्तिः स्यात्। अपरं च, उपासकानामनुग्रहाय स भगवान् परशिवो दयया सगुणं रूपमङ्गीकरोति। उक्तं च श्रीरेणुकभगवत्पादैः–

---

है तथा ब्रह्मचैतन्य के साथ इसका आध्यासिक सम्बन्ध मान्य है। अत एव ईश्वर का यह सगुण रूप पारमार्थिक नहीं है। एतावता अद्वैताचार्यों ने निर्गुण ब्रह्मचैतन्य को ही पारमार्थिक माना है। वीरशैवदर्शन में 'मं=शिवम् अयति= स्वभावतः प्राप्नोति इति माया'–व्युत्पत्ति स्वीकार्य है। एतावता माया की नित्यता तथा नित्यसम्बन्धरूपता का प्रतिपादन होने से परशिव का सगुणरूप भी सत्य ही माना जाता है। तद्यथा—

'मं शिवं परमं ब्रह्म..............ब्रह्मनिष्ठा सनातनी।।१।।

यदि निर्गुण ही सत्य है सगुण तो मिथ्या है तब 'तदैक्षत बहु स्यां प्रजायेय', 'स ईक्षांचक्रे' प्रभृति सैकड़ों श्रुतिवाक्य जो सगुण का प्रतिपादन करते हैं वे निर्विषय हो जायेंगे।

उपासकों को अनुगृहीत करने हेतु भगवान् परशिव दया से सगुण रूप धारण करते हैं। तभी तो भगवत्पाद ने कहा है—

---

१. ओ० सू० भा० १।२४.
२. सि० शि) तत्तवप्रदीपिका०, ५।३९, पृ० ६५-६६.
३. छा० उ० ६।२।३.
४. प्रश्नो० ६।३.

चन्द्रार्धशेखरं शुद्धं शुद्धस्फटिकसन्निभम्।
शुद्धमुक्ताफलाभासमुपास्यं गुणमूर्तिभिः।।[१] इति।

तस्मादुपास्यस्य मिथ्यात्वे उपासकानां श्रद्धाऽनुदयाद् भक्तिसिद्धान्तस्य वैयर्थ्यापत्तिः। अतः सगुणरूपस्य सत्यत्वमेवाङ्गीकर्तव्यम्। एवं चेश्वरस्य सगुणस्वरूपविषये वीरशैवपक्ष एव भक्तैर्मुमुक्षुभिः समाद्रियत इति निश्चप्रचम्।

परब्रह्मणो निर्गुणरूपत्वमद्वैतवेदान्ते, वीरशैवदर्शने च स्वीक्रियते। निर्गुणविषयेऽपि नोभयोरेकरूपता। अद्वैतिनो निर्गुणस्य ब्रह्मणो निर्विशेषत्वमपि प्रतिपादयन्ति। वीरशैवदर्शने तु निर्गुणो हि परशिवो न निर्विशेषः, किन्तु सविशेष एव। अत्राऽयं भावः–"सत्यं ज्ञानमनन्तं ब्रह्म"[२], "विज्ञानमानन्दं ब्रह्म"[३] इत्यादिश्रुतिप्रामाण्येन ब्रह्मणः सच्चिदानन्दरूपत्वं स्वरूपलक्षणमद्वैतिनः प्रतिपादयन्ति। तत्र सच्चिदानन्दानां गुणत्वे स्वरूपत्वे वा द्वैतापत्तिः स्यादित्यसद्भिन्नत्वात् सत्, जडभिन्नत्वात् चित्, दुःखभिन्नत्वाच्चानन्दमिति ब्रह्मणोऽसज्जडदुःखभिन्नत्वप्रतिपादनार्थमेव तस्य सच्चिदानन्दत्वकथनम्। वस्तुतस्तत्र कस्यापि विधानाभाव इत्यद्वैतिभिरङ्गीक्रियते। वीरशैवदर्शने तु– "सत्यं ज्ञानमनन्तं ब्रह्म"[४] इत्यादिश्रुत्युक्तानां सच्चिदानन्दानां

---

'चन्द्रार्धशेखरं शुद्धं.............गुणमूर्तिभिः।।१।।'

एवञ्च उपास्य का मिथ्यात्व मानने पर उपासकों की श्रद्धा का उदय नहीं होने से भक्तिसिद्धान्त का वैयर्थ्य आपादित होगा। अतः सगुणरूप का सत्यत्व ही स्वीकरणीय है। अतः ईश्वर के सगुणस्वरूप विषय में वीरशैव पक्ष ही मुमुक्षु भक्तों द्वारा समादृत होता है— यह निश्चप्रच है।

परब्रह्म का निर्गुण स्वरूप अद्वैतवेदान्त तथा वीरशैवदर्शन में स्वीकृत है। निर्गुण-स्वरूप के विषय में भी दोनों दर्शनों की सहमति नहीं है। अद्वैती लोग निर्गुण ब्रह्म को निर्विशेष भी मानते हैं तद्विपरीत वीरशैवी निर्गुण परशिव को निर्विशेष नहीं अपितु सविशेष मानते हैं। आशय यह है— 'सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म।' इत्यादि श्रुतिप्रमाणों के आधार पर ब्रह्म का स्वरूपलक्षण

---

१. सि० शि० २।१०, पृ० १३.
२. तै० उ० २।१.
३. बृ० उ० ३।९।२८.
४. तै० उ० २।१.

परशिवस्याऽनुभवाऽभावे स्वप्रकाशस्यापि तस्य स्फटिकादिवज्जडत्वापत्तिः स्यादिति परशिवेऽस्मि, प्रकाशे, नन्दामीति बोधरूपा विमर्शशक्तिः स्वीक्रियते। तस्मात् सत्त्वादिगुणाभावेन निर्गुणोऽपि परशिवो बोधरूपविमर्शशक्तिविशिष्टत्वेन सविशेष एव।

### ईश्वरस्य नित्यमुक्तत्वसमीक्षा

तत्र न्यायदर्शने शरीराद्येकविंशतिदुःखानामात्यन्तिकी निवृत्तिर्मुक्तिरित्यभ्युपगम्यते[1]। तत्र दुःखादिकारणं मिथ्याज्ञानमिति प्रतिपादितत्वादीश्वरे तादृशमिथ्याज्ञानाऽभावेन तत्प्रयुक्तरागद्वेषाद्यभावः, रागद्वेषाऽभावेनैव तज्जन्ययोर्धर्माऽधर्मयोरभावः, धर्माऽधर्माभावेन च शरीरादीनां सुतरामभाव इति

---

सच्चिदानन्द रूप है— ऐसा अद्वैत-वेदान्त में प्रतिपादित है। यदि सत्, चित् एवम् आनन्द को ब्रह्म का गुण माने अथवा स्वरूप माने दोनों ही स्थितियों में द्वैत की आपत्ति होगी। अतः सत् से अभिप्राय है— असद्भिन्न, चित् का अर्थ है— जडभिन्न, तथा आनन्द का अभिप्राय है— दुःखभिन्न। एवंच असत्, जड, एवं दुःख से भिन्नता को प्रतिपादित करने हेतु ब्रह्म को सच्चिदानन्द कहा जाता है। वास्तव में किसी भी विधान का अभाव ब्रह्म में अद्वैतीजन मानते हैं।

वीरशैवदर्शन में यह प्रतिपादित किया गया है– 'सत्यं ज्ञानमनन्तं ब्रह्म इत्यादि श्रुतियों द्वारा प्रतिपादित सत्, चित् एवम् आनन्द का अनुभव यदि परशिव को न हो तो स्वप्रकाश कहलाने वाले का उल्टे स्फटिक की तरह जडता आपादित होगी। अतः जडत्वापत्ति से त्राण पाने हेतु स्वप्रकाश परशिव में अस्मि, प्रकाशे तथा नन्दामि इत्येवं बोधरूपा विमर्शशक्ति को स्वीकार किया जाता है। अतः वीरशैव मत में सत्त्वप्रभृति-गुणों का अभाव होने के कारण निर्गुणशब्द से अभिहित परशिव में बोधरूप विमर्शशक्ति के विद्यमान होने से वह निर्विशेष नहीं प्रत्युत सविशेष है।

### ईश्वर के नित्यमुक्तत्वसिद्धान्त की समीक्षा

न्यायदर्शन में शरीरादि २१ दुःखों की आत्यन्तिक निवृत्ति को मुक्ति माना जाता है। दुःखों का मूलकारण मिथ्याज्ञान है। यतश्च तादृश मिथ्याज्ञान ईश्वर में नहीं होता। अतः तत्प्रयुक्त राग एवं द्वेष का भी उनमें अभाव होता है। राग-द्वेष के अभाव में तज्जनित धर्म-अधर्म का भी अभाव होता है। धर्म-अधर्म के

---

१. न्या० सू० भा० १।१।२२.

न्यायदर्शने ईश्वरो नित्यमुक्त एव। एवं वैशेषिकदर्शने आत्मनो नवविशेषगुणोच्छित्तिर्मुक्तिरित्यङ्गीक्रियते[१]। जीवात्मनो ये विशेषगुणा त ईश्वरे न सन्तीत्यत्राऽपि स नित्यमुक्त एव।

योगदर्शने मुक्तपुरुषः, प्रकृतिलीनपुरुषः, पुरुषविशेषश्चेत्यङ्गीकृत्य मुक्तानां पूर्वं बन्धनमासीत्, प्रकृतिलीनानां चोत्तरकाले बन्धनं भविष्यतीति व्यवस्थाप्य; ईश्वरस्य च न पूर्वा बन्धकोटिरासीत्, न चोत्तरा बन्धकोटिर्भविष्यतीति तस्य नित्यमुक्तत्वं प्रतिपादितम्[२]।

अद्वैतवेदान्ते ईश्वरोपाधिभूताया मायायाः शुद्धसत्त्वगुणप्रधानत्वात् तत्रावरणशक्तेरभावाच्चेश्वरो नित्यमुक्त एव। एवं वीरशैवदर्शनेऽपि–

उपाधिः पुनराख्यातः शुद्धाऽशुद्धविभेदतः।
शुद्धोपाधिः परा माया स्वाश्रयाऽमोहकारिणी।।
मायाशक्तिवशादीशो नाममूर्तिधरः प्रभुः।
सर्वज्ञः सर्वकर्ता च नित्यमुक्तो महेश्वरः।।[३]

---

अभाव होने से शरीरादि का भी अभाव होगा। एतावता सुस्पष्ट है न्यायदर्शनाभिमत ईश्वर नित्यमुक्त है। तद्वत् वैशेषिकदर्शन में आत्मा के नौ विशेष-गुणों की उच्छित्ति को मुक्ति कहा जाता है। जीवात्मा के विशेष गुण ईश्वर में होते नहीं अतः इस दर्शन में भी ईश्वर की नित्यमुक्तता है।

योगदर्शन में बन्धनरहित पुरुष को तीन श्रेणियों में विभाजित किया जाता है— १. मुक्तपुरुष २. प्रकृतिलीन पुरुष ३. पुरुष-विशेष। मुक्त-पुरुष को मुक्ति-प्राप्ति से पूर्व में बन्धन का सद्भाव था। प्रकृतिलीन पुरुष को उत्तरकाल में बन्धन की प्राप्ति होगी। तथा पुरुषविशेष (ईश्वर) को न पूर्व में बन्धन था और न उत्तरकाल में बन्ध होगा अतः ईश्वर को नित्यमुक्त माना जाता है।

अद्वैतवेदान्त में ईश्वर की उपाधि-माया शुद्धसत्त्वगुणप्रधान है अतः आवरणशक्ति के दुष्प्रभाव नहीं होने से ईश्वर को नित्यमुक्त कहा गया है।

वीरशैवदर्शन में भी महेश्वर को शुद्ध उपाधि से विशिष्ट माना गया है अतः उनकी नित्यमुक्तता प्रतिपादित है।

---

१. वै० सू० ५।२।१८; प्र० पा० भा०, पृ० ६७९–६८२; न्या० क०, पृ० ६९२.

२. यो० सू० भा० १।२४.

३. सि० शि० ५।४४,४६; पृ० ६९–७०.

इति श्रीरेणुकभगवत्पादोक्त्या महेश्वरस्य शुद्धोपाधिविशिष्टत्वात् स नित्यमुक्त इत्यङ्गीक्रियते। तदेवमीश्वरस्य नित्यमुक्तत्वविषये वैदिकषड्दर्शनानां वीरशैवदर्शनस्य च न परस्परं वैमत्यम्।

## ईश्वरस्य सृष्टिकारणत्वसमीक्षा

प्रपञ्चोत्पत्तौ निमित्तोपादानभेदेन कारणद्वयमभ्युपगम्यते दार्शनिकैः। तत्र नैयायिक-वैशेषिका जगत्सर्जन ईश्वरो निमित्तकारणम्, परमाणवश्चोपादानकारणमिति स्वीकुर्वन्ति। सांख्यदर्शने "ईश्वरासिद्धेः"[१], "प्रमाणाभावान्न तत्सिद्धिः"[२] इत्यादिसूत्रैरीश्वरनिषेधस्य प्रतीयमानत्वेऽपि प्रवचन-भाष्यकारेण विज्ञानभिक्षुणा नैयायिकाभिमतः सर्वज्ञत्वादिनित्यगुणयुक्त एवेश्वरो नास्तीति महर्षिणा कपिलेन प्रतिपाद्यते। तस्मादौपाधिकसर्वज्ञत्वादिगुणयुक्त ईश्वरोऽस्तीति, तस्य च संकल्पेन सृष्टिरिति स्वीकारे तत्र प्रयोजनं वक्तव्यम्, प्रयोजनस्वीकारे च नित्यतृप्तत्वहानिरिति मणिवत् संकल्पं विनैव प्रकृतेः सन्निधानरूपनिमित्तकारणेनैव सृष्टिरिति स्वमतमुपस्थापितम्।[३]

---

एतावता यह सुविदित होता है कि ईश्वर की नित्यमुक्तता की अवधारणा, छहो वैदिक दर्शनों एवम् वीरशैवदर्शन में एकसमान (अविरुद्ध) है

## ईश्वर की सृष्टिकारणता की समीक्षा–

दार्शनिक जगत् में प्रपञ्च (जगत्) की उत्पत्ति में द्विविध कारण मान्य हैं— १. निमित्त कारण एवम् २. उपादानकारण।

नैयायिक एवं वैशेषिकों ने जगत् की सृष्टि में ईश्वर को निमित्तकारण एवम् परमाणु को उपादान कारण माना है। सांख्यदर्शन में 'ईश्वरासिद्धेः।' 'प्रमाणाभावान्न तत्सिद्धिः।' इत्यादि सूत्रों द्वारा ईश्वरनिषेध प्रतीत होता है। तथापि प्रवचनभाष्यकार विज्ञान-भिक्षु ने 'नैयायिकाभिमत सर्वज्ञत्वादि-नित्यगुण-युक्त ईश्वरनिषेध में महर्षिकपिल का तात्पर्य है'—ऐसा कहा है। एतन्मतानुसार औपाधिक सर्वज्ञत्वादि गुणयुक्त ईश्वर का अस्तित्व मान्य है। उनके संकल्प से सृष्टि होती है–ऐसा स्वीकारने से प्रयोजन बताना आवश्यक होगा। प्रयोजन स्वीकृत होने से ईश्वर की नित्यतृप्ति की हानि होगी। अतः मणिवत् संकल्प के बिना ही प्रकृति के सन्निधानरूप निमित्तकारण से ही सृष्टि होती है।

---

१. सां० सू० १।९२.

२. सां० सू० ५।१०।

३. सां० सू० प्र० भा० १।९६.

योगदर्शने महर्षिणा पतञ्जलिना–"ईश्वरप्रणिधानाद्वा"[२], "समाधिसिद्धिरीश्वर-प्रणिधानात्"[३] इत्यादिसूत्रैरीश्वरो योगिनां शीघ्रतरसमाधिलाभायाऽनुग्राहक इति प्रतिपादितम्। वार्त्तिककारेण विज्ञानभिक्षुणा, वृत्तिकारेण भोजदेवेन चेश्वरेच्छां विनैवोदासीनस्य पुरुषस्य जडायाः प्रकृतेश्च संयोगवियोगौ न संभवत इतीश्वरस्य स्वसंकल्पमात्रेण तन्नियामकत्वं प्रतिपाद्य तदर्थमस्य निमित्तकारणत्वं स्वीकृतम्[४]। तदेवं न्याय–वैशेषिक–सेश्वरसांख्य–योगदर्शनेष्वीश्वरः सृष्टौ केवलं निमित्तकारणमित्येतेषां मिथः साम्यम्।

अद्वैतवेदान्ते, वीरशैवदर्शने च "यथोर्णनाभिः सृजते गृह्णते च"[५] इति श्रुतिप्रमाणेनेश्वरस्याऽभिन्ननिमित्तोपादानकारणत्वं समर्थ्यते। एवमीश्वरस्याभिन्न-निमित्तोपादानकारणत्वविषये उभयोः साम्येऽप्यद्वैतवेदान्ते मायोपहितस्येश्वर-स्याऽपारमार्थिकत्वं तदुत्पन्नजगतश्च मिथ्यात्वं प्रतिपाद्यते। वीरशैवदर्शने तु परशिवसगुणरूपस्य महेश्वरस्य सत्यत्वात् तदुत्पन्नजगतश्च,

---

योगदर्शन में महर्षि पतञ्जलि ने 'ईश्वरप्रणिधानाद् वा' 'समाधिसिद्धि-रीश्वरप्रणिधानात्' इत्यादि सूत्रों द्वारा सुस्पष्ट प्रतिपादित किया है कि योगियों को शीघ्रतर समाधिलाभ हेतु ईश्वर अनुग्राहक होते हैं। वार्तिककार विज्ञानभिक्षु ने तथा वृत्तिकार भोजदेव ने भी ईश्वरेच्छा के बिना उदासीन पुरुष तथा जड प्रकृति के संयोग और वियोग सम्भव नहीं होने से इनके नियामक रूप में ईश्वर के संकल्प को माना है। एतावता ईश्वर को निमित्तकारण माना गया है।

इस प्रकार न्यायवैशेषिक, सेश्वरसांख्य, तथा योग-दर्शनों में सृष्टि के प्रति ईश्वर को निमित्तकारण माना जाता है। यह साम्य है।

अद्वैतवेदान्त तथा वीरशैव-दर्शन में 'यथोर्णनाभिः सृजते गृह्णते च' इत्यादि श्रुति-प्रमाण से ईश्वर को अभिन्ननिमित्तोपादानकारण माना गया है। अद्वैतवेदान्त में मायोपहित ईश्वर को अपारमार्थिक एवम् उनसे उत्पन्न जगत् को मिथ्या माना जाता है। वीरशैवदर्शन में परशिव के सगुणरूप महेश्वर सत्य हैं तथा उनसे निर्मित जगत् भी शिव से अव्यतिरिक्त होने के कारण सत्य ही माना गया है। तद्यथा—

---

१. यो० सू० १।२३.

२. यो० सू० २।४५.

३. यो० सू० वा० १।२४; यो० सू० भो० वृ० १।२४.

४. मुण्ड० १।१।७.

**पत्रशाखादिरूपेण यथा तिष्ठति पादपः।**
**तथा भूम्यादिरूपेण शिव एको विराजते[1]।।**

इति श्रीरेणुकभगवत्पादोक्त्या शिवरूपत्वात् सत्यत्वमङ्गीक्रियत इत्ययं विशेषः।

## सृष्ट्यादीनामीश्वरलीलारूपत्वसमीक्षा

सृष्टियादिव्यवहारनिर्वाहार्थमस्मदादिविलक्षणचेतनपुरुषस्येश्वरस्याङ्गीकारे जगन्निर्मातुस्तस्य किमपि प्रयोजनं वक्तव्यम्, प्रयोजनसत्त्वे च तस्य नित्यतृप्तत्वहानिः स्यादितीश्वरमनङ्गीकुर्वाणाः सांख्यादय एवमाक्षिपन्ति–"न प्रयोजनवत्त्वात्"[2] इति। आक्षेपस्यायं भावः– न खुल चेतन ईश्वर इदं जगद्विम्बं विरचयितुमर्हति। कुत इति चेत्, प्रयोजनवत्त्वात् प्रवृत्तीनाम्। उक्तं च श्रीमद्भिः कुमारिलभट्टैः–"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते"[3] इति। लोकप्रसिद्धाऽनुवादिका श्रुतिरपि–"न वा अरे पत्युः कामाय पतिः प्रियो भवति,

---

'पत्रशाखादिरूपेण........शिव एको विराजते।।१।।'

## सृष्टियादि में ईश्वरलीलारूपता की समीक्षा

सृष्टिप्रभृति व्यवहार के निर्वाह हेतु अस्मदादिविलक्षण चेतन पुरुषविशेष ईश्वर का अङ्गीकार करने पर जगन्निर्माता के किसी प्रयोजन को बताना आवश्यक होगा। यदि प्रयोजन है तो उनके नित्यतृप्ति की हानि होगी। अतः ईश्वर को अस्वीकार करने वाले सांख्यदार्शनिकों का यह आक्षेप है— 'न प्रयोजनवत्त्वात्।' आशय यह है— चेतन ईश्वर— जगद्विम्ब की रचना नहीं कर सकते। कारण सुस्पष्ट है— प्रेक्षित प्रवृत्ति का सप्रयोंजन होना। आचार्य कुमारिल भट्ट ने सुस्पष्ट कहा है—

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।।½।।'

लोकप्रसिद्ध अर्थ की अनुवादश्रुति चेतनपुरुष की प्रवृत्ति के प्रयोजन का श्रवण कराती है— 'नवाअरे पत्युः कामाय.......सर्वं प्रियं भवति।

यह कहना अनुपयुक्त होगा— उन्मत्त होने से चेतन पुरुष की प्रवृत्ति के प्रयोजन का श्रवण कराती है— 'नवाअरे पत्युः कामाय.........सर्वं प्रियं भवति।

---

१. सि० शि० १०।९, पृ० १८९.

२. ब्र० सू० २।१।३२.

३. श्लो० वा०, पृ० ४६३.

आत्मनस्तु कामाय पतिः प्रियो भवति; न वा अरे जायायाः कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति.......न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति"[१] इति चेतनपुरुषस्य प्रवृत्तेः प्रयोजनं श्रावयति। किञ्च, चेतनोऽप्युन्मत्तः पुरुषः बुद्ध्यपराधात् प्रयोजनं विना यथा प्रवर्तते, तथेश्वरस्यापि प्रवृत्तिः स्यादिति चेत्, तदा "यः सर्वज्ञः सर्ववित्"[२] इत्यादिश्रुत्या प्रतिपादितस्य सर्वज्ञत्वस्य बाधप्रसङ्ग इति।

अस्याक्षेपस्य परिहारो न नैयायिकैः, नापि वैशेषिकैः कृतः। योगदर्शने च भगवता भाष्यकारेण–"तस्य आत्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्, ज्ञानधर्मोपदेशेन कल्प–प्रलय–महाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति"[३] इति भूतानुग्रह एव प्रयोजनम्, न त्वीश्वरस्य स्वतः किमपि प्रयोजनं भवितुमर्हतीति पूर्वोक्तस्याक्षेपस्य परिहारः कृतः।

अद्वैतवेदान्ते, वीरशैवदर्शने च "लोकवत्तु लीलाकैवल्यम्"[४] इति बादरायणसूत्रमनुरुध्येश्वरस्य जगत्सृष्टौ प्रयोजनाभावेऽपि लीलार्थमपि प्रवृत्तिरुपपद्यत इति समाहितं वर्तते।

---

यह कहना अनुपयुक्त होगा— उन्मत्त होने से चेतनपुरुष बुद्धिकृत अपराध से जैसे निष्प्रयोजन प्रवृत्त होता है तद्वत् ईश्वर की भी प्रवृत्ति होगी। क्योंकि 'यः सर्वज्ञः सर्ववित्।' इत्यादि श्रुति-प्रमाण के बल पर निरूपित सर्वज्ञत्व (ईश्वर को) बाधित होगा।

इस आक्षेप का निराकरण न्याय-वैशेषिक दर्शनों में अप्राप्त है। योगदर्शन के भाष्यकार ने प्राणियों पर अनुग्रह करना ही प्रयोजन बताया है। तद्यथा— 'तस्य आत्मानुग्रहाभावेऽपि भूतानुग्रहः......संसारिणः पुरुषान् उद्धरिष्यामि।' यतश्च ईश्वर को स्वयं के लिए कोई भी प्रयोजन नहीं होता अतः पूर्वोक्त आक्षेप का परिहार हो जाता है।

अद्वैतवेदान्त एवं वीरशैवदर्शन में इस सन्दर्भ में बादरायणसूत्र— 'लोकवत्तु लीलाकैवल्यम्' सूत्र के अनुरोध से जगत्सृष्टि में स्वप्रयोजन नहीं होने पर भी लीलाहेतुक प्रवृत्ति अनुपपन्न नहीं है। यह समाधान प्राप्त है।

---

१. बृ० उ० २।४।५.
२. मुण्ड० १।१।९
३. यो० सू० भा० १।२५.
४. ब्र० सू० २।१।३३.

अत्रेदमाकूतम्—लीलाभिन्ना याः प्रवृत्तयस्तदर्थमेव प्रयोजनविशेषप्रति-सन्धानस्यावश्यकता। याश्च पुनर्लीलारूपास्ताः प्रयोजनं नापेक्षन्त एव। यथा लोके आप्तकामस्य कस्यचिद् राज्ञः, तदमात्यादेर्वा क्रीडादिषु प्रवृत्तिः प्रयोजनमनुद्दिश्यैव भवति, तद्वदीश्वरस्यापि।

ननु महतीयं विश्वरचना कथं लीलेत्युच्यते? इति चेत्, सत्यम्; अल्पज्ञानामल्पशक्तियुक्तानामस्माकं कृते विश्वरचना महतीव प्रतिभाति। अथापि सर्वज्ञस्य सर्वशक्तिसमन्वितस्येश्वरस्य कृते तु लीलैव केवलम्। याऽल्पायाससाध्या, विधेयनिष्पत्तिमात्रफलिका, लीलाकर्तुरुद्देश्यस्यासाधिका च सैव लीला। विश्वरचनाया अल्पायाससाध्यत्वे,

निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि।
स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः।।[१]

इति भामतीकारेण श्रीमता वाचस्पतिमिश्रमहाभागेन,

---

निष्कर्ष यह है— लीलाभिन्न प्रवृत्ति में ही प्रयोजन विशेष की अपेक्षा होती है। लीलात्मक प्रवृत्ति में प्रयोजन की सापेक्षता नहीं होती। यथा-लोक में किसी राजा अथवा अमात्यादि की क्रीडादि में प्रवृत्ति प्रयोजनसापेक्ष नहीं होती तद्वद् ईश्वर की भी सृष्टि में प्रयोजन की अपेक्षा नहीं होती।

जिज्ञासा उदित होती है— इतनी बृहत् विश्वसृष्टि, लीला कैसे हो सकती है। इसका समाधान है— अल्पज्ञ एवम् अल्पशक्तिमान् अस्मादृशजन की दृष्टि में विश्वरचना बृहत् भासित होती है। किन्तु सर्वज्ञ एवं सर्वशक्तिमान् ईश्वर के लिए यह लीलामात्र है। जो अल्पप्रयत्न से साध्य हो, विधेयनिष्पत्तिमात्र जिसका फल हो तथा लीलाकर्ता के किसी प्रयोजन (उद्देश्य) विशेष का साधन न हो वह लीला कहलाती है।

भामतीकार श्रीमान् वाचस्पतिमिश्र ने अपने मङ्गलश्लोक में ईश्वर के अत्यल्प आयास से विश्वरचना का प्रतिपादन किया है—

'निःश्वसितमस्य.......सुप्तं महाप्रलयः॥१॥

तद्वत् श्रीमान् शिवयोगिशिवाचार्य जी ने भी विश्वरचना की अल्पायास-साध्यता प्रतिपादित की है–

---

१. ब्र० सू० भा०, मङ्गलश्लो० २.

स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने।
स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे।।[१]

इति श्रीमच्छिवयोगिशिवाचार्येण चोक्तत्वादनेनायासेनेश्वरस्य प्रयोजनविशेषस्य सिद्धेरभावादद्वैतदर्शने वीरशैवदर्शने च सृष्टि-स्थिति-संहारादिक्रिया ईश्वरस्य लीलारूपा इत्युच्यन्ते। यद्यपि लौकिकलीलासु किञ्चिदपि प्रयोजनमुत्प्रेक्षितुं शक्यते, अथापि नेश्वरलीलायाम्, "आप्तकामस्य का स्पृहा" इति तस्य नित्यतृप्तत्वप्रतिपादनात्। न चैवं सत्यप्रवृत्तिः, "यतो वा इमानि भूतानि जायन्ते"[२] इत्यादिश्रुत्या विश्वरचनायामीश्वरप्रवृत्तिश्रवणात्। नाप्युन्मत्तप्रवृत्तिः, "यः सर्वज्ञः सर्ववित्"[३] इत्यादिना तस्य सर्वज्ञत्वप्रतिपादनात्। अत एव विश्वरचना लीलामात्रमित्येव प्रस्फुटम्। एवमीश्वरलीलाविषये वीरशैवाचार्याणामद्वैताचार्याणां च तर्कसाम्यादस्मिन् विषये उभयोरैकमत्यमिति विज्ञेयम्।

---

'स्वेच्छाविग्रहयुक्ताय.............नमः साम्बाय शम्भवे।।१।।

एतावता अल्पायास से ईश्वर के प्रयोजनविशेष की सिद्धि नहीं हो सकती। अतः अद्वैतसिद्धान्त एवं वीरशैवसिद्धान्त में सृष्टि-स्थिति-प्रभृति क्रिया को ईश्वर की लीला कहा जाता है। लौकिक लीला में कदाचित् किसी प्रयोजन विशेष का उत्प्रेक्षण किया जा सकता है। नित्यतृप्त ईश्वर की लीला में अणुमात्र प्रयोजन भी उत्प्रेक्षित नहीं हो सकता। तद्यथा— 'आप्तकामस्य का स्पृहा।'

प्रयोजन के अभाव में सृष्टयादिकर्म में ईश्वर की अप्रवृत्ति होगी–यह आशङ्का निर्मूल है। निम्नाङ्कित श्रुतिप्रमाण से विश्वसृष्टि आदि में ईश्वर की प्रवृत्ति श्रुत है। तद्यथा— 'यतो वा इमानि भूतानि जायन्ते.......' इति। इसकी तुलना उन्मत्त प्रवृत्ति के साथ नहीं की जा सकती क्योंकि ईश्वर सर्वज्ञ हैं। तद्यथा— 'यः सर्वज्ञः सर्ववित्।' एतावता विश्वरचना को लीला कहना सर्वथा समीचीन है। ईश्वर की इस लीला की मान्यता में तर्कसाम्य होने से अद्वैत एवं वीरशैव के आचार्यों में मतभेद नहीं है।

---

१. ति० शि० १।६, पृ० ३.
२. तै० उ० ३।१.
३. मुण्ड० १।१।९.

## वैषम्यनैर्घृण्यदोषपरिहारसमीक्षा

प्रपञ्चोत्पत्तावीश्वरस्य निमित्तकारणत्वे, अभिन्ननिमित्तोपादानकारणत्वे वा प्राय आलोचका विश्ववैचित्र्यमवलोक्येश्वरे वैषम्यनैर्घृण्यदोषम्, तन्निवारणाय प्राणिनामदृष्टसापेक्षत्वे ईश्वरस्येश्वरत्वहानिरित्याक्षेपं च कुर्वन्ति। एतद्दोषदूरीकरणाय– "सृज्यप्राणिकृतदुष्कृतसुकृतपरिपाकविशेषाद् वैषम्योपपत्तेः। न च स्वातन्त्र्यभङ्गः शङ्कनीयः, स्वाङ्गं स्वव्याघातकं न भवतीति न्यायेन प्रत्युत तन्निर्वाहात्"[१] इति नैयायिक–वैशेषिकाः, "पुण्यापुण्यसहायः सुख–दुःखे भावयन्नपि नाकारुणिकः"[२] इति योगदर्शनभाष्यव्याख्याने श्रीवाचस्पतिमिश्रमहाभागाः, "अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः, ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः"[३] इति भगवत्पादशङ्कराचार्याः, "न च

## वैषम्य-नैर्घृण्य दोषों की परिहारविधि की समीक्षा

प्रपञ्च की उत्पत्ति के प्रति ईश्वर को निमित्तकारण अथवा अभिन्ननिमित्तोपादानकारण मानने पर विश्ववैचित्र्य का अवलोकन कर आलोचकगण ईश्वर में वैषम्य-नैर्घृण्य का आपादान करते हैं। इस दोष के निवारण हेतु ईश्वर में प्राणियों के अदृष्ट की सापेक्षता का समाधान देने से ईश्वर के ईश्वरत्व की हानि होगी।

इस द्विविध आपादन (दूषण) के निवारण का सही समाधान यह है– जिस प्राणी की सृष्टि अभीप्सित है उसके दुष्कृत एवं सुकृत के परिपाकविशेष से विलक्षण वैषम्य की उपपत्ति निर्बाध है। जहाँ तक स्वातन्त्र्यभङ्ग की आशंका है वह 'स्व केअङ्ग स्व के व्याघात नहीं करते' इस न्याय से समाहित हो जाती है। यह वक्तव्य न्याय-वैशेषिक की ओर से प्रस्तुत किया जाता है।

योगदर्शनभाष्य की व्याख्या करनेवाले वाचस्पतिमिश्र महोदय ने आरोप का निवारण करने हेतु समाधान प्रस्तुत किया है— 'पुण्यापुण्यसहायः सुखदुःखे भावयन्नपि नाकारुणिकः।'

भगवत्पाद शङ्कराचार्यजी ने सुस्पष्ट समाधान कहा है—

'अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमासृष्टिरिति नायमीश्वरस्यापराधः, ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः।' श्रीवाचस्पतिमिश्रजी ने सुस्पष्ट दृष्टान्त के साथ

---

१. स० द० सं०, पृ० ५१०.
२. यो० सू०, तत्त्ववै० १।२५.
३. ब्र० सू० शा० भा० २।१।३४.

कर्मापेक्षायामीश्वरस्यैश्वर्यव्याघातः, नहि सेवादिकर्मभेदापेक्षः फलप्रदः प्रभुरप्रभुर्भवति''[1] इति भामतीकारा वाचस्पतिमिश्रमहाभागाः,

चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरिणः।
जात्यायुर्भोगवैषम्यकारणं कर्म केवलम्।।
एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः।
एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणैः।।[2]

इति श्रीरेणुकभगवत्पादाश्च प्रतिपादयन्ति। एतेन न्याय-वैशेषिक-योग-अद्वैतवेदान्त-वीरशैवदर्शनेषु वैषम्य-नैर्घृण्यदोषपरिहारविषये साम्यं दृष्टिपथमायाति।

निरीश्वरसांख्याः, मीमांसकाश्च जगदुत्पादकेश्वराङ्गीकारे स सशरीरः, अशरीरो वा? वैषम्यादिदोषभाग् वा, अभाग् वा? स्वप्रयोजनायेश्वरः प्रवर्तते, उताऽनुकम्पया? प्रयोजनसत्त्वे कृतार्थतालक्षणमैश्वर्यं तस्य भज्येत, अनुकम्पया प्रवृत्तौ च सुखमेवैकं सृजेन्न दुःखम्। किञ्च, यदि सिसृक्षा अनुकम्पानिमित्ता, संजिहीर्षा तर्हि किंनिमित्ता स्यात्? तस्याप्यनुकम्पा निमित्वं नोक्तुं शक्यते,

---

समाधान को सुबोध बना दिया है— 'कर्मापेक्षायाम् ईश्वरस्य ऐश्वर्यव्याघातः, नहि सेवादिकर्मभेदापेक्षः फलप्रदः प्रभुरप्रभुर्भवति।'

श्रीरेणुकाचार्य जी ने विशदता के साथ समाधान को उपस्थापित किया है। तद्यथा—

'चक्रनेमिक्रमेणैव.......कर्मयन्त्रनियन्त्रणैः।।२।।'

उपर्युक्त विवेचन से सुविदित होता है कि न्याय, वैशेषिक, योग, अद्वैतवेदान्त तथा वीरशैवदर्शनों में दूषण (वैषम्य-नैर्घृण्य) के परिहार हेतु समान समाधान प्रस्तुत किया जाता है।

निरीश्वर सांख्य एवम् मीमांसक गण जगदुत्पादत्क ईश्वर का अङ्गीकार करने वाले आस्तिकों के प्रति अनेक प्रश्नों का उपस्थापन करते हैं— (१) ईश्वर सशरीर है या अशरीर? (२) वह वैषम्यादिदोषयुक्त है या नहीं? (३) स्वप्रयोजन से पर प्रवृत्त होते हैं या अनुकम्पार्थ?

यदि स्वप्रयोजन से वह प्रवृत्त होते हैं तो कृतार्थताप्रयुक्त ऐश्वर्य खण्डित होगा। अनुकम्पया प्रवृत्ति होती तो वह सुखमयी सृष्टि करते दुःख की नहीं। इतना

---

१. ब्र० सू० भा० २।१।३४.

२. सि० शि० ५।४९-५०, पृ० ७१.

विरुद्धयोस्तयोरनुकम्पैकहेतुकत्वासंभवात्। इत्याद्यनेकाक्षेपसंभवभयेनेश्वर एव नास्तीति मूले कुठारप्रहारं कुर्वन्ति। तदिदं न युक्तियुक्तं प्रतिभाति। किं लोके मृगाः सन्तीति शालयो नोप्यन्ते? भिक्षुकाः सन्तीति वा किं स्थाल्यो नाधिश्रीयन्ते? तथा प्रकृतेऽपि सम्भाविताक्षेपपरिहारेणेश्वराङ्गीकरणमेव वरमिति प्रतिभाति।

ननु वैषम्यादिदोषनिराकरणाय सर्वैरप्यदृष्टमनन्यगत्या समाश्रीयत इति तेनैव सर्वव्यवस्थोपपत्तौ किमर्थमीश्वराङ्गीकार इति चेन्न, अदृष्टस्य जडत्वात्, जडे च स्वतःप्रवृत्तिः प्रवर्तकत्वं वा लोके नाऽनुभूयते। तस्माद्यथाऽऽपणिको ग्राहकेप्सितानि वस्तूनि तत्प्रदत्तमूल्यानुरूपं प्रददाति, तथा प्राणिनामदृष्टानुरूपफलप्रदः सर्वज्ञत्वादिगुणयुक्त ईश्वरोऽवश्यमङ्गीकर्तव्य एव। एवमदृष्टसापेक्षत्वेन न तस्य

---

ही नहीं, सिसृक्षा को अनुकम्पामूलक मानें तो संहार को किंनिमित्तक मानेंगे। उसकी भी अनुकम्पा- मूलकता है यह नही कह सकते। दो विरुद्ध कार्यों के प्रति एक अनुकम्पा को कारण नहीं माना जा सकता।

इस प्रकार अनेक आक्षेप के सम्भवरूप भय से दो प्रस्थानों में ईश्वर है ही नहीं–ऐसा कुठाराघात मूल में ही कर दिया गया। किन्तु यह समीचीन नहीं है। लोकव्यवहार में भी यह देखा जाता है कि मृग हैं फसल नष्ट कर देंगे इस भय से फसल लगाना बन्द नहीं करते। भिखारी आकर माँग लेंगे इस भय से भोजन बनाने से कोई भला आदमी परहेज नहीं करता। तद्वत् प्रकृत में भी सम्भावित समस्त आक्षेपों का निराकरण करने के साथ ईश्वर का अङ्गीकार आवश्यक है न कि पलायन।

अब जिज्ञासा उदित होती है— वैषम्यप्रभृतिदोष-निराकरण हेतु जिन दार्शनिकों ने अदृष्ट को अनन्यशरण माना है तो फिर सर्वव्यवस्था की उपपत्ति हेतु अदृष्ट से ही कर्तव्यपूर्ति हो जाती है तो ईश्वर का अङ्गीकार करना आवश्यक नहीं। इसका समाधान यह है— अदृष्ट जड है, जड़ में स्वत; प्रवृत्ति अथवा उसकी प्रेरणा लोक में देखी नहीं जाती। अत: जैसे दुकानदार ग्राहक के अभीप्सित वस्तु को उसे उचित मूल्य पर देता है तद्वत् प्राणियों के अदृष्ट के अनुरूप फल को देने वाले भगवान् सर्वज्ञ परमेश्वर अनिवार्य रूप से स्वीकार्य हैं।

इस प्रकार अदृष्ट को स्वीकार करने से ईश्वर में वैषम्यादिदोष अतिप्रसक्त नहीं होता। स्वकृत नियम का प्रतिपालन ईश्वर की प्रभुता का विघातक नहीं होता। प्रत्युत यही उनकी उत्कृष्ट प्रभुता है जो उन्हें सामान्य से विशेष बनाता है।

वैषम्यादिदोषः। स्वकृतनियमपरिपालनेन च न तस्य प्रभुत्वहानिः, प्रत्युतोत्कृष्टप्रभुत्वप्राप्तिः। लोकेऽपि स्वकृतनियमपरिपालकं राजानं बहु मन्यन्ते हि प्रजाः, न तु स्वैराचारिणमिति सर्वं समञ्जसम्।

### वेदागमप्रामाण्यसमीक्षा

दार्शनिका वेदागमादीनां प्रामाण्यं पौरुषेयत्वेनाऽपौरुषेयत्वेन च व्यवस्थापयन्ति। अत्र प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं पौरुषेयत्वम्, तद्विपरीतं चापौरुषेयत्वमिति पौरुषेयत्वाऽपौरुषेयत्वयोः सामान्ये लक्षणे। नैयायिक-वैशेषिका वेदानां पौरुषेयत्वमभ्युपगच्छन्ति। महर्षेः कणादस्य "तद्वचनादाम्नायस्य प्रामाण्यम्"[1] इति सूत्रस्योपस्कारव्याख्यायां श्रीशङ्करमिश्राः- "तद्वचनात्तेनेश्वरेण वचनात् प्रणयनादाम्नायस्य वेदस्य प्रामाण्यम्। तथा हि वेदास्तावत् पौरुषेया वाक्यत्वादिति साधितम्। न चास्मदादयस्तेषां सहस्रशाखावच्छिन्नानां वक्तारः सम्भाव्यन्ते, अतीन्द्रियार्थत्वात्। न चातीन्द्रियार्थदर्शिनोऽस्मदादयः। ......किञ्च, प्रमाया गुणजन्यत्वेन वैदिकप्रमाया अपि गुणजन्यत्वमावश्यकम्। तत्र च गुणो वक्तृयथार्थवाक्यार्थज्ञानमेव वाच्यः, तथा च तादृश एव वेदे वक्ता, यः स्वर्गापूर्वादिविषयकसाक्षात्कारवान्। तादृशश्च

---

लोकव्यवहार में भी स्वनिर्मित नियमपालक राजा को प्रजाजन बहुत सम्मान देते हैं स्वच्छन्दाचारी को नहीं।

### वेदागमप्रामाण्य की समीक्षा

दार्शनिकगण वेदशास्त्रों के प्रामाण्य की व्यवस्था दो प्रकार से करते हैं— १. पौरुषेय होने से तथा २. अपौरुषेय होने से। प्रमाणान्तर से अर्थ को प्राप्त कर विरचित होना पौरुषेय कहलाता है तथा तद्भिन्न अपौरुषेय कहलाता है। यही दो सामान्य लक्षण हैं।

नैयायिक एवम् वैशेषिक लोग वेद को पौरुषेय मानते हैं। महर्षि कणाद के सूत्र 'तद्वचनादाम्नायस्य प्रामाण्यम्।' की उपस्कारव्याख्या में आचार्यशङ्करमिश्र ने सुस्पष्ट कहा है- "तद्वचनात्...........नचातीन्द्रियार्थदर्शिनोऽस्मदादयः। ........किञ्च, प्रमाया गुणजनकत्वेन.........नेश्वरादन्य इतिसुष्ठु' इति वेदानां पौरुषेयत्वम्= अतः वेदों का पौरुषेयत्व सिद्ध होता है। तथा 'तत्प्रणेता

---

१. वै० सू० १०।२।९.

नेश्वरादन्य इति सुष्ठु"[१] इति वेदानां पौरुषेयत्वम्, "तत्प्रणेता चास्मदादिभिरन्य ईश्वर एव, तस्य चोत्कृष्टगुणवत्त्वात् तदुच्चरितत्वेन वेदानां प्रामाण्यम्" इति तत्प्रामाण्यं च व्यवस्थापयामासुः। एवं "'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"[२] इत्यस्य गौतमीयसूत्रस्य भाष्ये भगवता वात्स्यायनेनापि–"य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च, त एवायुर्वेदप्रभृतीनामित्यायुर्वेदप्रामाण्यवद् वेदप्रामाण्यमनुमातव्यम्"[३] इति वेदानां पौरुषेयत्वेनैव प्रामाण्यमिति प्रतिपादितत्वादत्रापि स उत्कृष्टगुणयुक्त ईश्वर एव प्रवक्तेत्यूह्यते।

योगदर्शने–"योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः, स किं सनिमित्त आहोस्विन्निर्निमित्त इति। तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किन्निमित्तम्। प्रकृष्टसत्त्वनिमित्तम्। एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिः सम्बन्धः"[४] इति भगवान् भाष्यकार ईश्वरस्योत्कृष्टत्वे वेदः प्रमाणमिति, वेदस्योत्कृष्टत्वे चेश्वरोत्कृष्टत्वं प्रमाणमिति प्रतिपाद्य वेदानामीश्वरप्रणीतत्वं कथयामासेत्यत्रापि वेदानां पौरुषेयत्वेनैव प्रामाण्यम्।

---

चास्मदादिभिरन्य ईश्वर एव,........वेदानां प्रामाण्यम्।' इस कथन से वेदों का प्रामाण्य प्रतिपादित किया है।

तद्वत् 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्।' इस सूत्रभाष्य में भगवान् वात्स्यायन ने कहा है— 'य एवाप्ता वेदार्थानां द्रष्टारः........ वेदप्रामाण्यमनुमातव्यम्।' इस प्रकार वेदों का पौरुषेय होने से प्रामाण्य है यह प्रतिपादित होता है। अतः उत्कृष्टगुणों से मण्डित ईश्वर ही प्रवक्ता है— यह प्रतर्कित होता है।

योगदर्शन में — 'योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य..........अनादिः सम्बन्धः।' इस कथन से भाष्यकार ने ईश्वरोत्कर्ष के प्रति वेदों को प्रमाण बताया है तथा वेदों के उत्कर्ष में ईश्वर को प्रमाण बताया है। एवंच वेदों में ईश्वररचितत्व-कथन से वेदों का पौरुषेय होने से ही प्रामाण्य माना गया है। वीरशैवदर्शन में श्रीपतिपण्डिताराध्य भगवत्पाद ने निम्नाङ्कित स्मृतिवचनों के आधार पर वेदागमों का ईश्वरोच्चरितत्वेन प्रामाण्य माना है। तद्यथा—

१. वै० सू० उप० १०।२।९.
२. न्या० सू० भा० २।१।६९.
३. यो० सू० भा० १।२४.
१. न्या० सू० २।१।६९.

वीरशैवदर्शने–

सद्योजातेन ऋग्वेदं वामदेवेन याजुषम्।
अघोरेण तथा साम पुरुषेण त्वथर्वणम्।।
ईशानेन मुखेनैव कामिकाद्यागमांस्तथा।
जनयामास विश्वेशः सर्वसिद्धिप्रदायकः।।[1]

इति स्मृतिमुदाहरन्तः श्रीपतिपण्डिताराध्यभगवत्पादा अपि वेदागमाना-मीश्वरोच्चरितत्वेनैव प्रामाण्यं प्रतिपादयामासुः। तदेवमीश्वरोच्चरितत्वेन वेदानां प्रामाण्यविषये न्याय–वैशेषिक–योग–वीरशैवदर्शनाचार्याणां विचारसाम्यं वर्तते।

ईश्वरमनङ्गीकुर्वाणाः सांख्या मीमांसकाश्च वेदानामपौरुषेयत्वेन प्रामाण्यं प्रतिपादयन्ति। भगवान् कपिलः–"न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात्"[2] इतीश्वराभावात् तत्कर्तृत्वस्य सुतरामभाव इति वेदानामपौरुषेयत्वं समादिशति।

श्रीजैमिनिमुनिपादाश्च–"कर्मैके तत्र दर्शनात्"[3] इत्यादिसूत्रैर्वेदस्य नित्यत्वप्रतिपादनद्वारा तदपौरुषेयत्वं सूचयामासुः। ईश्वरमङ्गीकुर्वाणा अप्यद्वैतिनो व्यवहारे भाट्टनय इति प्रतिपादयन्तो वेदानामपौरुषेयत्वमेव स्वीकुर्वन्ति।

---

'सद्योजातेन ऋग्वेदं..........सर्वसिद्धिप्रदायकः।।२।।'

एवञ्च यह सुविदित होता है कि ईश्वरोच्चरित होने से वेदों का प्रामाण्य है इस विषय में न्याय, वैशेषिक, योग तथा वीरशैव दार्शनिकों का विचारसाम्य है।

ईश्वर को नहीं मानने वाले सांख्य तथा मीमांसक अपौरुषेय होने से वेदों का प्रामाण्य प्रतिपादित करते हैं। भगवान् कपिल 'न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात्।' इस सूत्र द्वारा ईश्वर के अभाव होने से उनकी कर्तृता का अभाव स्वाभाविक है अतः वेदों का अपौरुषेयत्व मानते हैं।

श्रीजैमिनि मुनि ने 'कर्मैके तत्रदर्शनात्।' इत्यादि सूत्रों द्वारा वेद की नित्यता का प्रतिपादन कर उनके अपौरुषेयत्व को सूचित किया है। ईश्वर को स्वीकार करने वाले अद्वैतदार्शनिक यतः व्यवहार में भट्टसिद्धान्त का अङ्गीकार करते हैं अतः वेदों का अपौरुषेयत्व स्वीकार करते हैं।

---

१. ब्र० सू० श्रीकर० १।१।३.

२. सां० सू० ५।४६.

३. मी० सू० १।१।६.

अत्रेदमवधेयम्—अद्वैतवेदान्तनयेऽनाप्ताऽप्रणीतत्वमपौरुषेयत्वस्य लक्षणम्। नन्वनाप्ताप्रणीतत्वान्यथाऽनुपपत्त्याऽऽप्तप्रणीतत्वसिद्धौ कथमपौरुषेयत्वं वेदानामिति चेन्न,

ये ब्रह्माणं विदधति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये।।[३]

इति श्रुत्या सर्गादावीश्वरेण श्रुतीनां केवलं जन्म श्रूयते, न च प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वमपि, येन तवाक्षेपस्य सिद्धिः स्यात्। तस्मात् पुरुषोच्चरितत्वमात्रं न पौरुषेयत्वम्, किन्तु प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वम्। तदुक्तं श्रीमता चित्सुखमुनिना—

श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम्।
मानान्तरोपलब्धेऽर्थे रचना तु न मीयते।।[४] इति।

तस्माद्यथेदानीमस्माभिरुच्चार्यमाणेषु वेदवाक्येषु नास्माकं कर्तृत्वम्, तथा सर्गादावीश्वरोऽपि विनैवाऽनूपूर्वीव्यत्ययमुच्चारयतीति न च तावता तस्य वेदकर्तृत्वोपपत्तिः, वेदानामानुपूर्वीव्यत्यासे ईश्वरस्यापि सामर्थ्याभावात्।

---

यहाँ ध्यातव्य है कि अद्वैतवेदान्तसिद्धान्त में अनाप्ताऽप्रणीतत्व को अपौरुषेयत्व कहा गया है। किन्तु अनाप्त प्रणीतत्व की अन्यथाऽनुपपत्ति से आप्तप्रणीतत्व की सिद्धि होने पर वेदों का अपौरुषेयत्व कैसे हो सकता है। इस जिज्ञासा का समाधान यह है— 'यो ब्रह्माणं विदधाति.........शरणमहं प्रपद्ये।।' इस श्रुति के बल पर सर्ग के आदि में ईश्वर द्वारा श्रुति का जन्म विदित होता है। यदि प्रमाणान्तर से ज्ञात की ईश्वर द्वारा रचना प्रमाणित होती तभी उपर्युक्त आक्षेप की सिद्धि होती।

अतः पुरुषोच्चरितत्वमात्र पौरुषेय नहीं कहलाता अपितु अन्य प्रमाण से अर्थ को प्राप्त कर विरचित होने से पौरुषेय कहलाता है। अतएव आचार्य चित्सुखमुनि ने कहा है—

श्रुतीनामीश्वराज्जन्म........रचना तु न मीयते।।१।।

अतः यथा सम्प्रति हमलोगों से उच्चारित वेदवाक्यों में हमारी कर्तृता नहीं है

---

३. श्वे० उ० ६।१८.
४. तत्त्व० प्र०, पृ० २७३.

मीमांसानये महाप्रलयस्याभावाद् वेदस्याऽऽनुपूर्वीविच्छेदो न संभवतीति तदर्थमीश्वरो नापेक्ष्यते। अद्वैतवेदान्ते महाप्रलयस्याङ्गीकारात् तदानीं शास्त्रसम्प्रदायस्योच्छेदसम्भव इति सर्गादावीश्वरेण पुनः सम्प्रदायप्रारम्भः प्रतिपाद्यत इत्युभयोरयं विशेषः।

एवं न्याय-वैशेषिक-योग वीरशैवदर्शनेषअवीश्वरोच्चरितत्वेन तेषां पौरुषेयत्वम्, सांख्य-मीमांसादर्शनेष्वीश्वरस्यैवाऽभावातदनुच्चरितत्वेन तेषामपौरुषेयत्वम, अद्वैवेदान्ते सर्गादावीश्वरेण प्रलयोच्छिन्नाऽनुपूर्व्याः प्रारम्भकत्वेऽपि प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं तत्र नास्तीति वेदानामपौरुषेयत्वमङ्गीक्रियत इति विशेषः। पौरुषयापौरुषेयत्वविषये एतेषां परस्परवैमत्येऽपि तेषां प्रामाण्यविषये सर्वेषां मतैक्यं विद्यते। अत एवैतेषां वैदिकदर्शनानीति, आस्तिकदर्शनानीति वा व्यवहारः।

---

तद्वत् सर्गादि में ईश्वर आनुपूर्वी-व्यत्यय के बिना वेदवाक्यों का उच्चारण करते हैं तावता ईश्वर में वेद की कर्तृता सिद्ध नहीं होती। ईश्वर में भी यह सामर्थ्य नहीं है कि वह वेदों के आनुपूर्वी का व्यत्यास करें।

मीमांसासिद्धान्त में महाप्रलय अमान्य है अतः वेद की आनुपूर्वी का विच्छेद सम्भव नहीं है। एतदर्थ ईश्वर की अपेक्षा नहीं होती। अद्वैतवेदान्त में महाप्रलय स्वीकार्य है। अतः उक्त महाप्रलयकाल में शास्त्रसम्प्रदाय के उच्छेद की सम्भावना होने से सर्गादि में ईश्वर द्वारा पुनः सम्प्रदाय का प्रारम्भ होना प्रतिपादित है। यह पूर्वमीमांसा एवम् उत्तरमीमांसा के सिद्धान्तों में अन्तर है।

एवंच न्याय, वैशेषिक, योग, वीरशैव दर्शनों में ईश्वरोच्चारित होने से वेदों का पौरुषेयत्व मान्य है। सांख्य एवं मीमांसादर्शनों में ईश्वर का सद्भाव नहीं होने से तदनुच्चरित होने से वेदों का अपौरुषेयत्व मान्य है। अद्वैतवेदान्त में माना जाता है कि सर्गादि में ईश्वर प्रलयोच्छिन्न आनुपूर्वी का उपदेशक एवम् प्रवर्तक होते हैं किन्तु अन्य प्रमाण से अर्थ को प्राप्त कर वेदों की रचना नहीं करते अतः वेदों का अपौरुषेयत्व स्वीकार्य है। उपर्युक्त विवेचन से दर्शनों में अपौरुषेयत्व तथा पौरुषेयत्व विचारों के अन्तर का बोध (समीचीन) होता है। इस विवेचना में विमति होने पर भी वेदों के प्रामाण्य में उपर्युक्त दार्शनिकों का मतैक्य होने से सभी दर्शनों को आस्तिक अथवा वैदिक दर्शन कहा जाता है।

## ईश्वरानुग्रहेण मोक्षप्राप्तिसमीक्षा

न्यायदर्शने महर्षिणा गौतमेन मोक्षप्राप्तौ श्रवणादिना साकं यमाद्यष्टाङ्गयोगश्चावश्यक इति प्रतिपाद्यते[१]। नैयायिको भासर्वज्ञो महर्ष्युक्ताऽष्टाङ्गयोगेनाऽनभिरतिसंज्ञस्य परवैराग्यस्योदयस्ततो महेश्वरे परा भक्तिः, तद्भक्त्या च शिवसाक्षात्कारः, ततः शिवाऽनुग्रहेण च मोक्ष इति प्रतिपादयन् तदर्थम्,

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति।।[२]

इति श्रुतिं प्रमाणत्वेनोपस्थापयति[३]। वैशेषिकदर्शने महर्षिणा कणादेन– "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"[४], "धर्मविशेषप्रसूताद्............... तत्त्वज्ञानान्निःश्रेयसम्"[५] इत्यादिसूत्रैर्निवृत्तिलक्षणधर्मेण पदार्थानां साधर्म्यवैधर्म्य-तत्त्वज्ञानोदयस्ततश्च मोक्ष इति समादिष्टम्, किन्तु भाष्यकारेण

---

## ईश्वरानुग्रह द्वारा मोक्षप्राप्ति की समीक्षा

न्यायदर्शन में महर्षि गौतम ने प्रतिपादित किया है— मोक्ष की प्राप्ति में श्रवणमननादि के साथ यमनियमादि अष्टाङ्ग योग आवश्यक है। न्यायाचार्य श्रीमान् भासर्वज्ञ ने श्रुतिप्रमाण का उपस्थापन कर मोक्षप्राप्ति के प्रति कारणमाला का प्रतिपादन किया है— महर्षिप्रोक्त अष्टाङ्ग योग के अनुष्ठान से अनभिरतिसंज्ञक परवैराग्य का उदय होता है तदनन्तर महेश्वर के प्रति पराभक्ति उदित होती है। उक्तभक्ति से शिव का साक्षात्कार होता है तदनन्तर शिव के अनुग्रह कृत्य से मोक्ष की प्राप्ति होती है। तद्यथा—

'यदा चर्मवदाकाशं.....................दुःखस्यान्तो भविष्यति।।१।।'

वैशेषिकदर्शन में महर्षि कणाद ने निजनिर्मित सूत्रों (यतोऽभ्युदय....०, धर्मविशेषप्रसूताद् ..........।' द्वारा स्वाभिप्राय का सुस्पष्ट प्रकाशन किया है— निवृत्तिलक्षण धर्म से पदार्थों के साधर्म्यवैधर्म्यपुरःसर तत्त्वज्ञान का उदय होता है

---

१. न्या० सू० ४।२।३८, ४२, ४६.
२. श्वे० उ० ६।२०.
३. न्या० सा०, पृ० ३०.
४. वै० सू० १।१।२.
५. वै० सू० १।१।४.

प्रशस्तपादाचार्येण–"तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव"[१] इति, श्रीधरभट्टेन च–"धर्मोऽपि तावन्न निःश्रेयसं करोति यावदीश्वरेच्छया नाऽनुगृह्यते"[२] इतीश्वरेच्छाविशेषेण कार्यारम्भाऽभिमुखीकृताद् धर्मात् तत्त्वज्ञानम्, ततश्च निःश्रेयसमिति व्यवस्थापितम्। अतो वैशेषिकदर्शनेऽपि मोक्षप्राप्तावीश्वराऽनुग्रहोऽपेक्षितः।

योगदर्शने महर्षिणा पतञ्जलिना–"समाधिसिद्धिरीश्वरप्रणिधानात्"[३] इति सूत्रेण समाधिफलस्य कैवल्यस्य प्राप्तिरीश्वराऽनुग्रहेण भवतीति स्पष्टमभिहितम्। मीमांसादर्शने प्राचीनाचार्यैरीश्वरनिरासेऽप्यर्वाचीनाभ्यामापदेवलौगाक्षिभास्कराभ्यामीश्वरो यज्ञपतित्वेनाऽङ्गीकृतः, स्वर्गसाधनानां दर्शपूर्णमासादियागानामीश्वरार्पणबुद्ध्या करणेन च तदनुग्रहबलान्निःश्रेयसावाप्तिरित्यभिहितम्[४]। वीरशैवदर्शने–

---

तदनन्तर मोक्ष की प्राप्ति होती है। पश्चाद्वर्ती आचार्य प्रशस्तपाद ने भाष्य में 'ईश्वरीयप्रेरणा से अभिव्यक्त धर्म को मोक्षप्रयोजक कहा है। तद्वत् टीकाकार श्रीधरभट्ट ने उक्त पङ्क्ति की विशद व्याख्या कर भाष्यसम्मतसिद्धान्त का पोषण किया है— 'धर्मोऽपि तावन्न निःश्रेयसं करोति यावदीश्वरेच्छया नाऽनुगृह्यते।'

एवंच ईश्वरेच्छाविशेष से कार्यारम्भ की अभिमुखता धर्म में उदित होती है तदनन्तर तत्त्वज्ञान तथा तत्पश्चात् निःश्रेयस की प्राप्ति होती है। इस व्यवस्था के अनुसार वैशेषिकसिद्धान्त में भी मोक्षप्राप्ति में ईश्वरानुग्रह अपेक्षित है।

योगदर्शन में सुस्पष्ट रूप से कहा गया है— समाधिफल कैवल्य की प्राप्ति ईश्वरानुग्रह से होती है। तद्यथा— 'समाधिसिद्धिरीश्वरप्रणिधानात्।'

मीमांसादर्शन में प्राचीन आचार्यों द्वारा ईश्वर का सद्भाव अमान्य है। परन्तु अर्वाचीन आचार्यों (आपदेव तथा लौगाक्षिभास्कर) ने ईश्वर को यज्ञपति रूप में मान्य किया है। स्वर्गसाधन दर्शपूर्णमासप्रभृति यागों के ईश्वरार्पणबुद्धि से अनुष्ठान करने से तदनुग्रहबलात् निःश्रेयस की प्राप्ति होती है। ऐसा परवर्ती मीमांसकों का सिद्धान्त है।

वीरशैवसिद्धान्त में श्रीरेणुकाचार्य ने मोक्षप्राप्ति में ईश्वरानुग्रह को कारण माना है। तद्यथा—

---

१. प्र० पा० भा०, पृ० १८.

२. न्या० क०, पृ० १९.

३. यो० सू० २।४५.

४. मी० प्र०, पृ० २७७–२७८; अ० सं०, पृ० १६२.

शम्भोः शिवप्रसादेन संसारच्छेदकारिणा।
मोहग्रन्थिं विनिर्भिद्य मुक्तिं यान्ति विवेकिनः।।
विना प्रसादमीशस्य संसारो न निवर्तते।
विना सूर्योदयं लोके कुतः स्यात्तमसो लयः।।
सर्वाऽनुग्राहकः शम्भुः केवलं कृपया प्रभुः।
मोचयेत् सकलान् जन्तून्न किञ्चिदिह कारणम्।।[१]

इति भगवत्पादैः श्रीरेणुकाचार्यैरीश्वराऽनुग्रहेण मोक्षप्राप्तिरिति निरूपितत्वादस्मिन् विषये न्याय-वैशेषिक-योगार्वाचीनपूर्वमीमांसकैः साकं वीरशैवाचार्याणां विचारसाम्यं दरीदृश्यते।

तदेतावता पर्यालोचनेन निष्कर्षोऽयमायाति—न्याय-वैशिषिकदर्शनयोरीश्वरो जगत्सृष्टौ केवलं निमित्तकारणमिति स्वीकारेण, कुलालादिमनुष्यैः साकमस्य तुलनाकरणेन च विचारोऽयं न पूर्णेश्वरवादरूपेण प्रतिभाति। अत एव सृष्टौ स्वातिरिक्तान् परमाणूनुपादानरूपेणापेक्षमाणोऽयमीश्वरः कथं सर्वशक्त इति प्रोच्येत। किञ्च, अत्र सृष्टेः स्रष्टृत्वेन स्वीकृतेनापीश्वरेण न परमाणवः सृज्यन्ते, नापि जीवात्मानः, तेषां नित्यत्वाभ्युपगमात्। तस्मादयं न सर्वस्रष्टा, किन्तु सर्वनियामकमात्रम्। अपरं च, नैयायिका वैशेषिकाश्चात्यन्ताग्रहेणेश्वरं साधयित्वा मनुष्येष्वीश्वरं प्रति भक्तिं संवर्ध्य तेषामादर्शप्रायधार्मिकजीवनसम्पादने

---

'शम्भोः शिवप्रसादेन..... न किञ्चिदिह कारणम्।।३।।'

एवंच न्याय, वैशेषिक, योग, मीमांसा के (अर्वाचीन आचार्यों ने) साथ वीरशैव-दर्शन में विचारों की समता परिदृष्ट होती है।

उपर्युक्त पर्यालोचन से निष्कर्ष-कथन प्राप्त होता है– न्याय एवं वैशेषिक दर्शनों में ईश्वर, जगत् की सृष्टि में केवल निमित्तकारण माने जाते हैं। ईश्वर की तुलना कुलाल-प्रभृति मानव के साथ की जाती है। यहाँ स्वीकृत ईश्वरवाद अपूर्ण है। यतश्च सृष्टि में स्वातिरिक्त परमाणुओं से सापेक्ष होते हैं अतः ईश्वर सर्वशक्त नहीं हैं। जगत् के स्रष्टा रूप में स्वीकृत ईश्वर परमाणुओं एवं जीवों की सृष्टि नहीं करते क्योंकि इन्हें नित्य माना गया है। अतः न्याय-वैशेषिक दर्शनों में ईश्वर सर्वनियामक हैं, सर्वस्रष्टा नहीं। इन आचार्यों ने अत्यन्त आग्रह से ईश्वर की (युक्ति तथा श्रुति द्वारा) सिद्धि की हैं। ये मानवों की भक्ति का संवर्धन (ईश्वर के प्रति) करते हैं। साथ ही उनके

---

१. सि० शि० १८।४-६, पृ० १४८-१४९.

सफलप्रयत्ना अपि जीवानामीश्वरेण साकं तादात्म्यसम्पादने न सफला:, अथापीदमवश्यमङ्गीकर्तव्यं यद्भारतीयानां धार्मिकजीवने नैयायिक-वैशेषिकयोरीश्वरविषयकविचाराणां प्रभावः सम्यक् सञ्जात एव।

इदमत्रावधेयं यन्नैयायिक–वैशेषिकयोरुपास्यदेवः शिव एव। अत एवोदयनाचार्यः[1] श्रीशङ्करमिश्रश्च[2] स्वस्वप्रबन्धेषु शिवमेव स्तुतवन्तौ। शिवोपासकयोरप्यनयोर्नैयायिकाः शैवा इति, वैशेषिकाश्च पाशुपता इत्यालोचका भेदं व्यवस्थापयन्ति[3]। मतमिदं प० व्रजबल्लभद्विवेदमहाभागैस्तन्त्रयात्रायां समालोचितम्[4]।

सांख्यदर्शने टीकाकारा विज्ञानभिक्षुप्रभृतय ईश्वरमङ्गीकुर्वाणा अपि तं सङ्कल्पशक्त्या सर्जनसमर्थं नाभ्युपगच्छन्ति, किन्तु सन्निधानमात्रेण प्रकृतौ क्रियाशक्तिप्रवर्तकं चुम्बकसदृशम्। एवं जडेन चुम्बकेन तस्य

---

आदर्शप्राय धार्मिक जीवन के सम्पादन में सफल प्रयास करते हैं। यद्यपि जीव का ईश्वर के साथ तादात्म्य-सम्पादन में इनका योगदान नहीं होता। तथापि यह श्रेय, इन आचार्यों को अवश्य प्राप्त है कि भारतीय मानवों के धार्मिक जीवन में इन आचार्यों के ईश्वरविषयक विचारों का सम्यक् प्रवाह दृष्टिगोचर होता है।

यह ध्यातव्य है— न्याय एवं वैशेषिक-दर्शनों में उपास्य शिव हैं। अतएव श्रीमान् उदयनाचार्य एवं श्रीशंकरमिश्र अपने प्रबन्धग्रन्थों में शिव की स्तुति करते हैं। समान रूप से शिवोपासक होने पर भी नैयायिकों को **शैव** कहा जाता है तथा वैशेषिकों को **पाशुपत**। इस मत की समालोचना आचार्य व्रजवल्लभ द्विवेद महोदय ने स्वरचित **तन्त्रयात्रा**-ग्रन्थ में की है।

सांख्यदर्शन में टीकाकार विज्ञानभिक्षु प्रभृति आचार्यों ने ईश्वर का अङ्गीकार किया है किन्तु उन्हें स्वसंकल्प बल से जगत् की सृष्टि करने की सामर्थ्य से युक्त नहीं मानते। सन्निधानमात्र से प्रकृति में क्रियाशक्ति के प्रवर्तक रूप से ईश्वर को चुम्बक तुल्य माना जाता है। यतश्च जड चुम्बक का सादृश्य ईश्वर में माना गया है अतः ईश्वर

---

१. तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि।। (न्या० कु० २।४)

२. ऊर्ध्वबद्धजटाजूटक्रोडक्रीडत्सुरापगम्।
नामामि यामिनीकान्तकान्ताभालस्थलं हरम्।। (वै सू० उप०, मङ्गलश्लो० १)

३. भा० द०, भा० २, पृ०१६९ (डा० राधाकृष्णन्) हिन्दीसंस्करणम्।

४. त० या०, पृ० ५४.

सादृश्यादेषामपीश्वरवादो न पूर्णेश्वरवादात्मकः। किञ्चास्येश्वरवादस्य नाधिकः प्रचारोऽप्यस्ति।

योगदर्शनाभिमतेश्वरो योगिनां मोक्षप्राप्तावन्तरायनिवारणद्वारा सहायक एव, न च स स्वयं मोक्षं प्रदास्यति। तस्मादीदृशेश्वरविषयको विचारो न सन्तोषप्रदः। अथापि योगसाधनपद्धतेः प्रचारका मनुष्याणां सहजाया आस्तिकभावनायाः सन्तोषमकृत्वा स्वयोगसाधनपद्धतेः प्रचारोऽशक्य इति तदर्थमीश्वरस्याङ्गीकारं कृतवन्त इति डा० राधाकृष्णन्महोदया अभिप्रयन्ति[५]।

अर्वाचीनमीमांसकाभिमतेश्वरोऽपि न सृष्ट्यादिरचनासमर्थः, किन्तु धर्मानुरूपमनुग्राहक एव। अद्वैतवेदान्ताभिमतेश्वरस्तु सृष्ट्यादिसमर्थः प्राणिनामदृष्टानुसारेण तत्तत्कर्मणि तेषां प्रेरकः सन् पूर्णेश्वर इव प्रतीयमानो न पारमार्थिकः, किन्तु मायाशबलितत्वान्मायावत् सोऽपि मिथ्याभूतः।

वीरशैवदर्शनाभिमतेश्वरो जगदुत्पत्ताभिन्ननिमित्तोपादानकारणम्, प्राणिनां हृदये निवसन् तत्तत्कर्मानुसारेण शुभाशुभकर्मणि तेषां प्रेरकः, मायाविशिष्टोऽपि स न मिथ्याभूतः। तथाऽयं मुमुक्षूपास्यः, मुक्तात्मनां प्राप्तिस्थानभूतश्च वर्तते। एवमयं परशिवः सगुणरूपेण विश्वान्तर्यामित्वेन सर्वत्र सञ्चालकः सन्

---

का यह अपूर्ण स्वरूप ही माना गया है। अतएव ईदृश ईश्वरवाद का समधिक प्रचार-प्रसार नहीं है। योगदर्शन सम्मत ईश्वर, योगिजन के मोक्षोदय में उपस्थित विघ्न को वारित करते हैं अतः सहायक रूप में मान्य है। वह स्वयमेव मोक्षदाता नहीं माने जाते। अतः ईश्वर विषयक (एकदेशमाहात्म्यमात्र से मण्डित) विचार सन्तोषप्रद नहीं है। अतः श्रीमान् डा० राधाकृष्णन् महानुभाव ने अपना यह आशय प्रकाशित किया है— योगसाधनापद्धति के प्रचारकों ने मानवों की सहज आस्तिकभावना का सन्तोष किये बिना अपनी साधना पद्धति के प्रचार को असमर्थ समझा अतः ईश्वर को स्वीकार्य माना है। अर्वाचीन मीमांसकों द्वारा स्वीकार्य ईश्वर भी सृष्टयादि की रचना में समर्थ नहीं प्रत्युत धर्मानुरूप अनुग्रहकर्तामात्र हैं।

अद्वैतवेदान्तसम्मत ईश्वर यद्यपि सृष्ट्यादिसमर्थ हैं तथा प्राणियों के अदृष्टानुरूप शुभाशुभ कर्मों में प्रवर्तक हैं। एतावता उनका ईश्वरवाद पूर्णकल्प है। तथापि पारमार्थिक नहीं होने से मायावत् मायाशबलित ईश्वर की मिथ्यारूपता अङ्गीकृत है।

---

५. भा० द०, भा० २, पृ० ३६६ (डा० राधाकृष्णन्) हिन्दीसंस्करणम्।

निर्गुणरूपेण विश्वोत्तीर्णश्चास्तीति पूर्णेश्वरवादोऽत्र सार्थको भवति।

एतावता श्रद्धार्हे शिवविषये दार्शनिकमतमवलम्ब्य मयाऽऽलोचितम्। वस्तुतस्त्वीश्वरो भावगम्यः। स चैक एव। अथापि यथैकोऽपि पुरुषो मातृदृष्ट्या पुत्र इति, पत्नीदृष्ट्या पतिरिति, पितामहदृष्ट्या च पौत्र इत्यनेकैर्नामभिर्व्यवह्रियते, तथा देवोऽप्युपासकानां भेदेन भिन्नभिन्ननामभाग् भवति। यथोक्तं हनुमन्नाटककारेण–

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः।।[१] इति।

---

वीरशैवसिद्धान्त में स्वीकृत ईश्वर जगत् की उत्पत्ति के प्रति अभिन्ननिमित्तोपादान-कारण है। वह प्राणियों के हृदय में निवास करते हैं तथा उनके कर्मानुसार उन्हें शुभाशुभ कर्मों के लिए प्रेरित करते हैं। परन्तु माया से विशिष्ट होने पर भी वह मिथ्या नहीं प्रत्यत सत्य हैं। यह मुमुक्षुजन के उपास्य हैं तथा मुक्तात्मजन के प्राप्य हैं।

तथाच परशिव सगुणरूप से जगत् के अन्तर्यामी हैं तथा सर्वसंचालक हैं। तद्वत् निर्गुणरूप से वह विश्वोत्तीर्ण हैं। एतावता यह पूर्ण सार्थक ईश्वरवाद श्लाघनीय है।

उपर्युक्त प्रतिपादन द्वारा श्रद्धास्पद भगवान् शिव के विषय में दार्शनिक विभिन्नमत का अवलम्बन कर मैंने उनकी आलोचना की है। वास्तविक रूप से देखा जाय तो ईश्वर भावग्राह्य हैं। वह एक हैं।

यथा एक ही पुरुष अपनी माँ की अपेक्षा पुत्र होता है, पत्नी की दृष्टि में **पति** होता है, पितामह की दृष्टि में **पौत्र** कहलाता है— इस प्रकार वह अनेक नाम (एवं तदनुरूप काम) को धारित करता है तद्वत् देव भी उपासकों के भेद से विभिन्न नाम से सम्बोधित होते हैं। हनुमन्नाटककार ने इसकी विशद व्याख्या की है—

'यं शैवाः समुपासते......त्रैलोक्यनाथो हरिः।।'

अतः अनन्तमहिमासम्पन्न ईश्वर के विषय में अधिक कुछ कहना समुचित नहीं।

---

१. हनुमन्ना० १ अङ्क ३ श्लोक.

तस्मादीश्वरविषयेधिकमनुक्त्वा,

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाऽऽह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम्[१]।।

इति श्रीमच्छङ्करभगवत्पादोक्तिमेव मनसा मुहुर्मुहुः स्मरन् विरमामि।

## जीवस्वरूपसमीक्षा

अत्र खुल न्यायवैशेषिक-प्राभाकरमतेष्वात्मा विभुः, संख्ययाऽनन्तः, नित्यः, प्रतिशरीरं भिन्नश्चास्ति। तदिदं सांख्यतो न विशिष्यते, सांख्याचार्यैरपि पुरुषे विभुत्वादेः स्वीकाराद्। किन्तु सांख्याः पुरुषं चिद्रूपमङ्गीकुर्वन्ति। नैयायिकादयस्त्वात्मानं स्वरूपतो जडमभ्युपगच्छन्ति। अत एव तत्रात्ममनः-संयोगे ज्ञानादीनामुत्पत्तिरिति कथ्यते। तस्मान्न्याय-वैशेषिका आत्मनि ज्ञानादिसंस्कारान्ताश्चतुर्दशगुणास्तिष्ठन्तीत्यभ्युपगच्छन्ति। सांख्यास्तु निर्गुणमिति विशेषः।

---

भगवत्पाद की निम्नाङ्कित उक्ति को मनोभाव से पुनः पुनः स्मरण कर इस प्रसङ्ग को यहाँ विश्राम देता हूँ। तद्यथा— 'नमन्त्रं नो यन्त्रं......त्वदनुसरणं क्लेशहरणम्।।'

## जीवस्वरूप की समीक्षा

न्याय, वैशेषिक तथा प्राभाकर प्रस्थान (मीमांसा) दर्शनों में आत्मा का विभु परिमाण मान्य है, उसकी संख्या अनन्त है, वह नित्य है तथा प्रतिशरीर भिन्न है। ये सारी बातें सांख्यदर्शन में भी अविरुद्ध हैं। सांख्याचार्यों ने भी पुरुष में विभुत्वादि को स्वीकृत किया है। अन्तर यह है सांख्याचार्यों ने पुरुष को चिद्रूप माना है। नैयायिक, वैशेषिक एवं प्राभाकर-आत्मा को स्वरूपतः जड मानते हैं। यही कारण है इन दर्शनों में आत्ममनःसंयोग होने पर ही ज्ञानादि की उत्पत्ति मान्य है। अतएव न्याय एवं वैशेषिक के आचार्य आत्मा में ज्ञान से लेकर संस्कारपर्यन्त १४ गुणों की स्थिति मानते हैं। सांख्याचार्यों ने पुरुष को निर्गुण माना है।

---

१. देव्यपराधक्षमापनस्तोत्रम्, श्लो० १.

न्याय-वैशेषिकाभ्यां देहेन्द्रियाद्यनात्मवस्तुभ्य आत्मानं व्यावर्त्य तद्भिन्ने विभुरूपे नित्ये आत्मनि जिज्ञासूनां बुद्धिः स्थिरीकृता, परं तस्मिन् बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-संस्कार-कर्तृत्व-भोक्तृत्वादयोऽपि धर्माः स्वीकृताः नहि ताभ्यां तद्धर्मरहितस्य नित्य-शुद्ध-बुद्ध-विभुस्वरूपस्यात्मन उपदेशः कृतः सांख्यदर्शने तु सुखादिधर्मरहितस्य निर्लेपस्य चिद्रूपस्य पुरुषस्याङ्गीकारः कृत इति नैयायिक-वैशेषिकाभ्यामस्य वैशिष्ट्यं श्रेष्ठत्वं च। अत एवात्र विषये डा० राधाकृष्णन्महोदयाः कथयन्ति[१]— अचेतनयोर्द्वयोरश्मनोः सङ्घर्षेण यथा प्रकाशः सम्भवति, तथैवाचेतनयोरात्ममनसोः संयोगेनात्मनि ज्ञानाख्यो गुण उत्पद्यत इति नैयायिकानामियं कल्पना भौतिकवाद इव प्रतिभाति। किञ्च, आत्मनो विभुत्वेन मनसश्चाणुत्वेनोभयोर्निरवयवत्वात् तयोः संयोगस्य कल्पनापि कर्तुं न शक्यते। अपि च, आत्मनो विभुत्वात् तस्य मनसा सह संयोगस्य सर्वदा विद्यमानत्वेऽपि यदा मन इन्द्रियैः साकं संयुज्यते, तदानीमेव ज्ञानगुण उत्पद्यत इति नैयायिकैः प्रतिपाद्यते। अत्राणोर्मनस एकस्मिन्नेव समये

---

न्याय एवं वैशेषिक दर्शनों की मनीषा देह, इन्द्रिय प्रभृति अनात्मवस्तु से आत्मा को व्यावृत्त करती है तथा अनात्मभिन्न आत्मा (विभु एवं नित्य) में जिज्ञासुओं की बुद्धि को स्थिर करती है। यहाँ आत्मा में बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म तथा संस्कार के अतिरिक्त कर्तृत्व एवं भोक्तृत्व आदि धर्मों का भी स्वीकार किया जाता है। इन दोनों दर्शनों में उपर्युक्त धर्मों से वर्जित नित्यशुद्धबुद्ध विभुस्वरूप आत्मा का उपदेश नहीं किया गया है किन्तु सांख्यदर्शन में सुखादिधर्मवर्जित निर्लेप चिद्रूप पुरुष को स्वीकृत किया गया है अतः न्याय एवं वैशेषिक की अपेक्षया सांख्यदर्शन की उपर्युक्त विशेषता को लेकर श्रेष्ठता है। अतएव इस विषय में डा० राधाकृष्णन् महोदय ने सुविवित्त कथन किया है— यथा दो पत्थरों के आपसी संघर्ष से प्रकाश की उत्पत्ति होती है तद्वत् दो अचेतनों (आत्मा एवं मनस्) के संयोग से आत्मा में ज्ञानगुण की उत्पत्ति होती है— ऐसी कल्पना (नैयायिकों की) भौतिकवाद-सी प्रतिभात होती है। इतना ही नहीं, आत्मा विभु है तथा मनस् अणु है एतावता दोनों निरवयव हैं। ऐसी स्थिति में इन दोनों के मध्य संयोग सम्बन्ध की कल्पना भी नहीं की जा सकती। और भी अनुपपत्ति है। यद् यथा-आत्मा विभु है अतः उसका मनस् के साथ संयोग सर्वदा विद्यमान रहने पर भी जब मनस् इन्द्रियों के साथ संयुक्त होता है तभी

---

१. भा० द०, भा० २, पृ० १५३-१५५ (हिन्दी संस्करणम्)।

आत्मना इन्द्रियैश्च साकं कथं संयोगः? इत्यस्याः शङ्काया उत्तरप्रदानेऽसमर्थाः सन्तो नैयायिका ईश्वरशक्तिं नियामिकां मन्यन्ते। तदेतत्पर्यालोचनेनात्मनि चैतन्यस्यावश्यकत्वात् तस्यैव चेतनरूपेणाङ्गीकरणं वरम्। एतद्विषये सांख्यमतं न्यायमतापेक्षया सुचारु प्रतिभाति।

अपि च, सांख्याचार्या नैयायिक-वैशेषिकवदात्मनि ज्ञानेच्छाप्रयत्नादीन् साक्षात्सम्बन्धेन नाङ्गीकुर्वन्तीति तन्मते शुद्धस्फटिकवत् पुरुषः स्वच्छो निर्गुणश्च। ज्ञानादिगुणानामन्तःकरणधर्मतया पुरुषे तेषां प्रतीतिर्जपाकुसुमसंयोगेन स्फटिके रक्तरागप्रतीतिरिवाऽवास्तविकीति स्वीकारेण सांख्याभिमतः पुरुषो नैयायिक-वैशेषिक-प्राभाकराभिमतात्मापेक्षया श्रेष्ठः। भाट्टमीमांसका आत्मानं न केवलं जडं नापि चेतनं किन्तु खद्योतवदुभयात्मकं मन्यन्ते। तत्राऽचेतनांशः सुखाद्याकारेण परिणमते, चेतनांशश्च जानातीति कथयतां तेषामुक्तिरर्धजरतीयते।

---

ज्ञानगुण की उत्पत्ति होती है— ऐसा नैयायिकों का कथन है। यहाँ अणु मनस् का एक ही समय में आत्मा के साथ भी तथा इन्द्रिय के साथ भी संयोग कैसे हो सकता है। इस जिज्ञासा के उत्तर देने में असमर्थ होकर नैयायिक लोग ईश्वर की शक्ति को नियामक मानकर समाधान देने की चेष्टा करते हैं।

उपर्युक्त पर्यालोचन से आत्मा में चैतन्य को मानने की अपेक्षा आत्मा को ही चेतनरूप में अङ्गीकार कर लेना श्रेष्ठ है। अतः आत्मा को ही चित्स्वरूप मानने वाले सांख्यदार्शनिक नैयायिक की अपेक्षा अधिक विचारवान तथा अन्तर्मुख प्रतीत होते हैं।

यह भी विवेचनीय है— नैयायिक एवं वैशेषिक के समान सांख्यदार्शनिकों द्वारा आत्मा में ज्ञान, इच्छा एवं प्रयत्न प्रभृति गुणों का साक्षात् सम्बन्ध नहीं स्वीकारा जाता है। सांख्यमत में तो शुद्धस्फटिक के समान पुरुष स्वच्छ तथा निर्गुण है। ज्ञानादि गुणों को अन्तःकरण का धर्म माना जाता है। पुरुष में उनकी प्रतीति जपाकुसुम-संयोग से स्फटिक में रक्तिमा की प्रतीति के समान होती है। अत एव वह अवास्तविक है। इस स्वीकृति के कारण सांख्यसम्मत पुरुष न्याय, वैशेषिक एवं प्राभाकरों के अभिमत आत्मा की अपेक्षया श्रेष्ठ है।

भाट्ट मीमांसक आत्मा को न तो एकान्ततः जड मानते हैं और न ही चेतन। किन्तु खद्योततुल्य उभयात्मक मानते हैं। आत्मा का अचेतनांश सुखादि के आकार में परिणत होता है तथा चेतनांश ज्ञान (बोध) क्रिया से युक्त होता है। ऐसा कहने वाले इनकी उक्ति अर्द्धजरती तुल्य है। अतएव हिन्दूदर्शनसार ग्रन्थ में

अत एव श्रीश्रीनिवासाचार्याः कथयन्ति[१]– भाट्टमीमांसका जडभूते द्रव्यरूपे चात्मनि चिदंशमपि प्रतिपादितवन्तः। एतेनैते बौद्धाभिमतविज्ञानात्मवाद-नैयायिकाभिमतजडद्रव्यात्मवादयोः समन्वयं कृत्वा मध्यमार्गिणोऽभूवन्निति प्रतीयते।

डा० राधाकृष्णन् महोदयास्तु[२]–भाट्टाभिमतात्मनि योऽचिदंश उक्तः, सम्भवतस्तदन्तःकरणमेव, तद्द्वारैव आत्मा ज्ञानसुखाद्याकारेण परिणमते। तस्मादेकस्मिन् विषय–विषयीभावसमर्थनार्थं नह्येकस्मिन्नेव चिदचिद्रूपांशद्वयस्य प्रकल्पनं युक्तमिति प्रतिपादयन्ति। किन्त्वेषामियमुक्तिरद्वैतवेदान्तसरणिमनुसरति।

न्याय–वैशेषिक–सांख्य–योग–मीमांसादर्शनेष्वात्मनः शरीरपरिमाणत्वे शरीरवृद्धिह्रासाभ्यामात्मनोऽपि वृद्धिह्रासौ स्यातामिति, तेन च तदनित्यत्वप्राप्तिरिति

---

श्रीश्रीनिवासाचार्य ने इनके विषय में कहा है–भाट्टमीमांसक जडात्मक द्रव्यस्वरूप आत्मा में चिदंश को भी स्वीकारते हैं। इस कारण ये बौद्धाभिमत विज्ञानात्मवाद एवं नैयायिकाभिमत जड द्रव्यात्मवाद का समन्वय कर मध्यमार्ग का अवलम्बन करते हैं। यह सुविदित होता है।

इस प्रसङ्ग में डा० राधाकृष्णन् महोदय ने अपनी सम्मति प्रतिपादित किया है— भाट्टसम्मत आत्मा में जो अचिदंश कहा गया है वह सम्भवतः अन्तःकरण है। तद्द्वारेणैव आत्मा सुखाकार और ज्ञानाकार रूप से परिणत होता है। अतः एक ही वस्तु में विषयविषयिभाव के समर्थन हेतु एक ही वस्तु में विरुद्ध चिद्रूप तथा अचिद्रूप दो कल्पनायें उपयुक्त नहीं हैं। किन्तु समालोचक की यह उक्ति वेदान्तमार्ग का अनुसरण करती है। न्याय, वैशेषिक, सांख्य, योग तथा मीमांसादर्शनों में शरीरपरिमाणतुल्य आत्मपरिमाण मान्य नहीं है। तुल्यपरिमाण मानने पर शरीर की वृद्धि तथा ह्रास की तरह आत्मा की भी ह्रास-वृद्धि मान्य होगी तथा शरीरवत् आत्मा की भी अनित्यता प्रसक्त होगी। अतः जैनाभिमत आत्मा की शरीरपरिमाणता आस्तिक दर्शनों में अमान्य है। यदि आत्मा का अणुपरिमाण मानें तो युगपत् चन्दन (अनुकूल द्रव्य) तथा कण्टक (प्रतिकूल द्रव्य) संयोग से शरीर के विभिन्न भागों में उत्पन्न होने वाले सुखप्रतीति और दुःखप्रतीति की उपपत्ति नहीं हो सकेगी। अतः आत्मा आकाशवत् विभु है यह स्वीकार्य है। विभु होने से ही आत्मा का नित्य होना भी सिद्ध होता है।

---

१. हिन्दू दर्शनसार, पपृ० १६९.

२. भा० द०, भा० २, पृ० ४०८ (हिन्दीसंस्करणम्)।

न जैनाभिमतशरीरपरिमाणत्वमात्मनोऽङ्गीक्रियते। तस्याणुत्वे च चन्दन-कण्टकाद्यनुकूलप्रतिकूलद्रव्यसंयोगेन शारीरकसर्वदेशेषु जायमानायाः सुख-दुःखयोः प्रतीतेरनुपपत्तिरित्याकाशवदात्मा विभुरस्तीति स्वीक्रियते। विभुत्वाच्च तस्य नित्यत्वमपि सम्भवतीति तेषामाशयः। किन्तु विभुरूपाणां नानात्मनां स्वरूपविषये किञ्चिदपि भेदाभावात् ते तत्त्वतो भिन्नभिन्नाः केन प्रकारेण सिद्धाः स्युः? इति न तैर्दार्शनिकैरधिकं चिन्तितम्।

किञ्च, सर्वात्मनां समानदेशत्वेन मनः, लिङ्गशरीरम्, स्थूलं वा शरीरं केनचिदेकेनैवात्मना कथं सम्बन्धं करोति? कया रीत्या च भिन्नभिन्नशरीराणि पृथक् पृथगात्मनः कर्मसम्बन्धं सम्पादयन्ति? केन च प्रकारेण पृथक् पृथगात्मानः फलान्युपभुञ्जन्ते? इत्याद्यनेकप्रश्नानामुत्तरमेभिरिदं प्रदीयते–पृथक्

---

समीक्षक आचार्य (प्रकृत ग्रन्थ के रचयिता) यह ध्यान दिलाते हैं— न्यायप्रभृति दर्शनों के आचार्यों ने इस सन्दर्भ में सूक्ष्म चिन्तन नहीं किया है अनन्तसंख्यक जीवों के व्यापक होने एवम् उनके आपस के कुछ भी भेद नहीं होने से वे तत्त्वतः परस्पर किस प्रकार से भिन्न-भिन्न होंगे?

अन्य भी विचारणीय बातें हैं— व्यापक होने से सभी आत्मा का देश समान है। एवंच मनस्, लिङ्गशरीर एवं स्थूलशरीर जो देवदत्त के हैं वह देवदत्त के अतिरिक्त अन्य सभी या किसी एक से सम्बन्ध क्यों नहीं करते। कौन सी वह रीति है जिसके सहारे भिन्न-भिन्न शरीर पृथक् पृथक् आत्मा के कर्मसम्बन्ध का सम्पादन करते हैं। कौन सा वह प्रकार है जिसके बल पर पृथक् पृथक् आत्मा स्वकृत कर्मफलों का उपभोग करते हैं। इस प्रकार के अन्य भी अनेक प्रश्न हैं। उनका उत्तर न्यायप्रभृति दर्शनों में निम्नाङ्कित प्रकार से क़रते हैं— मनस्, लिङ्ग शरीर (पृथक् पृथक्) के पृथक् पृथक् आत्मा के साथ समान रूप से संयोग होने पर भी उसका विलक्षण सम्बन्ध निजआत्मा से होता है। उसके प्रभाव से ही नियत रूप से निज आत्मा को ही फळोपभोग कराने में मनःप्रभृति सहयोग करते हैं। अन्य आत्मा भी उसी प्रकार से भिन्न-भिन्न देशों में स्थित निज लिङ्गशरीर द्वारा फलों का उपभोग करते हैं।

इसके बावजूद शरीर प्रदेश से अन्यत्र विद्यमान आत्मा का सुखदुःखादि के साथ किसी प्रकार का सम्बन्ध नहीं होने से (विद्यमान होने पर भी अविद्यमान सा) वर्तमान आत्मा क़े अन्यथा सिद्ध होने से अनेक (अनन्त) आत्मव्यक्तियों की विभुता युक्तिसंगत नहीं परिलक्षित होती है।

पृथङ्मनसां लिङ्गशरीराणां वा पृथगात्मभिः समानरूपेण संयोगे सत्यपि स्वात्मना तस्य विलक्षणः सम्बन्धोऽस्ति। तत्प्रभावेणैव तद्द्वारा स्वकमेव नियतमात्मानं फलान्युपभोजयति। अन्ये आत्मानोऽपि तेनैव प्रकारेण भिन्नभिन्नदेशीय-स्वस्वलिङ्गशरीरद्वारा फलान्युपभुञ्जत इति। किन्तु शरीरप्रदेशादन्यत्र विद्यमानस्यात्मनः सुखदुःखादिसम्बन्धाभावाद् विद्यमानत्वेऽप्यविद्यमान इव वर्तमानस्यात्मनोऽन्यथासिद्धत्वादनेकात्मनां विभुत्वं नैव सङ्गच्छते।

अपि च, जीवात्मनो विभुत्वे तस्य सर्वदा सर्वत्र स्थित्या तदुत्क्रान्तिगत्यागतिप्रतिपादिकानां श्रुतीनामानर्थक्यप्रसङ्गः। तत्र हि श्रुतिषु-"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः"[१] इति उत्क्रान्तिः, "ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति"[२] इति गतिः, "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे"[३] इत्यागतिश्चेति जीवात्मनः परलोकगमनागमनादिकं श्रूयते। तस्य विभुत्वे शरीरवियोगासम्भवः। न च लिङ्गशरीरादिगमनागमनेनात्मनि तदुपचार इति वक्तुं शक्यते,

---

अन्य भी विचारणा उपस्थित होती है— जीवात्मा के विभु होने पर सर्वदा सर्वत्र उसकी स्थिति विद्यमान रहने से उसकी उत्क्रान्ति, गति एवम् आगति के प्रतिपादक श्रुतिवाक्यों का नैरर्थक्य प्रसक्त होता है। तथाहि- 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्योऽपि वा शरीरदेशेभ्यः।' इस श्रुतिवाक्य से जीव की उत्क्रान्ति विदित होती है। 'ये वैके चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति।' इस श्रुतिवाक्य से जीव की गति प्रतिपादित होती है। तद्वत् 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे।' इस श्रुतिवाक्य से जीव की आगति (आगमन) प्रतिपादित होती है। यदि जीव की विभुता होगी तो शरीर के साथ वियोग कैसे हो सकेगा। यदि लिङ्गशरीर के गमन एवम् आगमन से आत्मा में उनका औपचारिक (लक्षणा द्वारा) प्रयोग मानें तो निम्नाङ्कित श्रुति की संगति नहीं उपपन्न होगी- 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति।' इस श्रुति में सुस्पष्टता से प्रथम आत्मा का गमन प्रतिपादित है तत्पश्चात् प्राणोपलक्षित लिङ्गशरीर का गमन। पाराशरस्मृति में भी आत्मा को ही सूर्यमण्डलभेदक बताया गया है—

---

१. बृ० उ० ४।४।२.

२. कौषी० १।२.

३. बृ० उ० ४।४।६.

"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति"[१] इति श्रुत्या ह्यात्मनः प्रथमतो गमनं पश्चात् तत्प्राणोपलक्षितलिङ्गशरीरस्य गमनमुच्यते। अत एव–

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः।।[२]

इत्यात्मन एव सूर्यमण्डलभेत्तृत्वं स्मर्यते। तस्मात्–"एषोऽणुरात्मा चेतसा वेदितव्यः"[३], "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा"[४] इत्यादिश्रुतिसंमतमणुत्वमेव जीवात्मनोऽङ्गीकर्तव्यम्। "स वा एष महानज आत्मा"[५], "आकाशवत् सर्वगतं सुसूक्ष्मम्"[६] इत्यादिविभुत्ववाचकश्रुतीनां परमात्मपरत्वं वेदितव्यम्[७]। एवं जीवात्मनोऽणुत्व एव तस्य नित्यत्वं प्रतिशरीरं भिन्नत्वं च सम्भवति। अत एव वीरशैवदर्शने जीवस्याणुत्वमभ्युपगम्य शरीरान्तरव्याप्तया तया ज्ञानप्रभया शारीरकसुखदुःखसाक्षात्कार इति व्यवस्थापितम्। अतो भोगसाङ्कर्यनिवारणार्थम्,

---

'द्वाविमौ पुरुषौ .................................. चाभिमुखो हतः।।१।।'

अतः श्रुतिसम्मत अणुत्व ही जीवात्मा का स्वीकार करना युक्ति संगत है। तद्यथा—'एषोऽणुरात्मा चेतसा वेदितव्यः।' 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा।' इत्यादि।

जिन श्रुतियों में आत्मा के लिए विभुत्व का प्रतिपादन किया गया है। उनका परमात्मविषयकत्व् में तात्पर्य समझना चाहिए। तद्यथा— 'स वा एष महानज आत्मा।' 'आकाशवत् सर्वगतं सुसूक्ष्मम्।' इत्यादि।

एवंच जीवात्मा का अणुत्व मानने से श्रुतिसंगति के साथ नित्यत्व एवम् प्रतिशरीरभिन्नत्व भी उपपन्न होता है। अतएव वीरशैवदर्शन में जीव का अणुत्व मानकर शरीर के अन्दर व्याप्त उसकी ज्ञानप्रभा से शरीरावच्छेदेन सुख एवं दुःख के साक्षात्कार की व्यवस्था उपपादित की जाती है। अतः उपर्युक्त भोगसांकर्य के निराकरणार्थ तथा जगद्-वैचित्र्य की व्यवस्था हेतु अथच श्रुतिप्रोक्त उत्क्रान्ति-गति

---

१. बृ० उ० ४।४।२.
२. परा० स्मृ० २।३२.
३. मुण्ड० ३।१।९.
४. कठ० २।६।१७.
५. बृ० उ० ४।४।२२.
६. शाण्डि० उ० २।१।३.
७. ब्र० सू० श्रीकर० २।३।१८-१९.

जगद्वैचित्र्यव्यवस्थार्थम्, उत्क्रान्तिगत्यागतीनां च व्यवस्थार्थमात्मनोऽणुत्वप्रतिपादकं वीरशैवदर्शनमेव तत्त्वचिन्तकैर्बहु मन्येतेत्यत्र न कोऽपि विवादः।

किञ्च, षड्दर्शनानां मध्ये न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसादर्शनेषु प्रतिशरीरमात्मनो भेदाङ्गीकारात् तानि द्वैतदर्शनानि, उत्तरमीमांसायां तु सर्वशरीरेष्वेकस्यैवात्मनोऽङ्गीकारात् तदद्वैतदर्शनमिति हि प्रसिद्धिः। तत्र न्यायवैशेषिकदर्शनयोः–"स च देहेन्द्रियादिव्यतिरिक्तः प्रतिशरीरं भिन्नो नित्यो विभुश्च"[१], "नानात्मानो व्यवस्थातः"[२], "शास्त्रसामर्थ्याच्च"[३] इत्यादिस्थलेषु सप्रमाणं प्रतिशरीरमात्मभेदो व्यवस्थापितः। एवमेव पूर्वमीमांसादर्शनेऽप्यात्मनः प्रतिशरीरं भिन्नत्वं नित्यत्वं विभुत्वं तस्यैव च कर्तृत्वं भोक्तृत्वमपि स्वीकृतम्। सांख्ययोगदर्शनयोः पुरुषस्यासंगत्वान्निर्गुणत्वाच्च तस्य वास्तविक-कर्तृत्वभोक्तृत्वाभावेऽपि पुरुषभेदस्तु नौपाधिकः, अपि तु वास्तविक इति प्रतिशरीरं नित्यो विभुः पुरुषोऽभ्युपगम्यते। तदुक्तं श्रीमधुसूदनसरस्वतीभिः–

---

एवम् आगति की सम्यक् व्यवस्था हेतु आत्मा के अणुत्व का पोषक वीरशैवदर्शन ही तत्त्वचिन्तकों द्वारा सम्मानयोग्य हैं इसमें कोई विवाद नहीं है।

षड्दर्शनों के न्याय, वैशेषिक, सांख्य, योग तथा पूर्वमीमांसा दर्शनों में प्रतिशरीर आत्मभेद स्वीकार्य है अतः ये द्वैतदर्शन कहलाते हैं। उत्तरमीमांसा में सर्वशरीर में एक ही आत्मा का अङ्गीकार किया है अतः वह अद्वैत दर्शन है— यह सुप्रसिद्ध है। इनमें न्याय-वैशेषिक दर्शनों में निम्नाङ्कितं सूत्रों द्वारा विवेचना के साथ प्रतिशरीर आत्मभेद की व्यवस्था की गई है। तद्यथा—

'स च देहेन्द्रियादिव्यतिरिक्तः प्रतिशरीरंभिन्नो नित्यो विभुश्च।'

नानात्मानो व्यवस्थातः।' 'शास्त्रसामर्थ्याच्च।' इत्यादि।

तद्वत् मीमांसादर्शन में आत्मा का प्रतिशरीर भिन्न होना, नित्य होना, विभु होना तथा उसी का कर्ता एवं भोक्ता होना भी प्रतिपादित है। सांख्य-योगदर्शनों में पुरुष का असंग होना, निर्गुण होना प्रतिपादित है। उसमें वास्तविक कर्तृत्व एवं भोक्तृत्व का अभाव है। अथापि पुरुषभेद औपाधिक नहीं अपितु वास्तविक है। वह प्रतिशरीर में नित्य एवं विभु पुरुष) है। अतएव श्रीमधुसूदनसरस्वतीजी

---

१. तर्क० भा०, पृ० १४५.

२. वै० सू० ३।२।२०.

३. वै० सू० ३।२।२१.

"नन्वात्मनो नित्यत्वे विभुत्वे च न विवदामः, प्रतिदेहमेकत्वं तु न सहामहे। तथाहि–बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्म–भावनाख्यनवविशेषगुणवन्तः प्रतिदेहं भिन्ना एव नित्याः विभवश्चाऽऽत्मान इति वैशेषिका मन्यन्ते। इममेव च पक्षं तार्किकमीमांसकादयोऽपि प्रतिपन्नाः सांख्यास्तु विप्रतिपद्यमाना अप्यात्मनो गुणवत्त्वे, प्रतिदेहं भेदे न विप्रतिपद्यन्ते, अन्यथा सुखदुःखादिसंकरप्रसङ्गात्"[१] इति।

तत्र द्वैतदर्शनेषु नैयायिक–वैशेषिकाः "एकमेवाद्वितीयं ब्रह्म"[२] इत्यत्राद्वितीयत्वं नाम एकत्वसमनियतविजातीयवैलक्षण्यमिति, "सर्वं खल्विदं ब्रह्म"[३] इत्यस्य सर्वं ब्रह्मव्याप्तम्, व्याप्तत्वं नाम सम्बन्धत्वम्, अन्यथा घटादीनामपि ब्रह्मत्वापत्त्या ब्रह्मणोऽनित्यत्वापत्तिर्जडतापत्तिश्चेति, "तत्त्वमसि"[४], "ब्रह्म वेद ब्रह्मैव भवति"[५] इत्यादीनां क्वचित् कैवल्यपरत्वम्, क्वचिद् ब्रह्मसाम्यपरत्वम्, क्वचिद् ब्रह्मसाम्यपरत्वम्, क्वचिच्च सर्वप्रपञ्च–

---

ने कहा है— आत्मा के नित्य होने तथा विभु होने में सांख्य-वेदान्तों का कोई भी विवाद नहीं है किन्तु सांख्याचार्य, वेदान्त की प्रतिदेह आत्मा की एकता को कथमपि स्वीकार्य नहीं मानते। तथाहि-वैशेषिकों की जो मान्यता है— बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म एवम् भावनासंज्ञक संस्कार–इन नौ विशेष गुणों से युक्त आत्मा प्रतिदेह भिन्न-भिन्न हैं, नित्य हैं, एवं विभु हैं। तार्किक तथा मीमांसक गण भी इसी मत का समर्थन करते हैं। किन्तु सांख्य दार्शनिक, आत्मा के उक्त गुणों से युक्त होने में अपनी असहमति प्रतिपादित करते हैं। किन्तु प्रतिशरीर आत्मभेद मानने से वह सर्वथा सहमत हैं अन्यथा सुख-दुःखों की कर्माधारित जीवभेदपुरःसर व्यवस्था अनुपपन्न हो जावेगी।

द्वैतदर्शनों में न्याय एवं वैशेषिक–अभेदप्रतिपादक श्रुतियों की गौणार्थता की विशद व्याख्या प्रस्तुत करते हैं। तद्यथा— 'एकमेवाद्वितीयं ब्रह्म।' की अद्वितीयता का तात्पर्य एकत्वसमनियत विजातीयवैलक्षण्य अर्थ में प्रतिपादित है। तद्वत् 'सर्वं खल्विदं ब्रह्म।' इस वाक्य का सर्वजगत् को ब्रह्म से व्याप्त (आच्छादित) अर्थात्

---

१. भ० गी० मधुसूदनी, २।१४.
२. त्रि० म० ना० ३।३।
३. छा० उ० ३।१४।१.
४. छा० उ० ६।८।७.
५. मुण्ड० ३।२।९.

नियन्तृपरमात्मैकत्वपरत्वं व्यवस्थापयन्तस्तेषां गौणार्थत्वमभ्युप-गच्छन्ति"[१]। उक्तं च श्रीधरभट्टेन-"अभेदश्रुतयस्तु गौणार्था इति दिक्"[२] इति।

सांख्य-योगदर्शनयोः-"नाद्वैतश्रुतिविरोधो जातिपरत्वात्"[३] इति। सूत्रेण कपिलमहर्षिणाऽद्वैतश्रुतीनां विजातीयद्वैतनिषेधपरत्वं व्यवस्थापितम्। अतोऽद्वैतवाक्यानि-"निरञ्जनः परमं साम्यमुपैति"[४] इत्यादिश्रुतिबलेन चिदेकरूपत्वादवैधर्म्यलक्षणाभेदपराण्येव, न त्वखण्डार्थपराणीति विज्ञानभिक्षुरत्र प्रतिपादयति[५]। मीमांसादर्शनेऽप्यद्वैतश्रुतयो जातिपरत्वेन व्यवस्थापिताः[६]

---

सम्बद्ध प्रतिपादित करते हैं। अन्यथा जीवों की तरह घटादि में भी ब्रह्मत्व के आपादन होने से ब्रह्म की अनित्यता एवं जडता आपादित होगी। तद्वत् 'तत्त्वमसि।' 'ब्रह्म वेद ब्रह्मैव भवति।' इत्यादि वाक्यों में स्थलविशेष में कैवल्यपरता, अन्यत्र ब्रह्मसाम्यपरता तथा इतरत्र नियामक-परमात्मैकत्वपरता को गौणार्थ रूप में व्यवस्थापित किया जाता है। आचार्य श्रीधरभट्ट (कन्दलीकार) ने सुस्पष्ट कहा है— 'अभेदश्रुतयस्तु गौणार्था इतिदिक्।'

सांख्य-योग-दर्शनों में अद्वैतश्रुतियों का तात्पर्य विजातीय-द्वैत-निषेध में प्रतिपादित किया गया है। तद्यथा— 'नाद्वैतश्रुतिविरोधो जातिपरत्वात्।' अद्वैत वाक्यों का 'निरञ्जनः परमं साम्यमुपैति।' इत्यादि श्रुति के साथ समन्वित अर्थ-चिदेकरूपता है जिसका अवैधर्म्यलक्षण अभेदरूपता में तात्पर्य है न कि अखण्डार्थपरता में। विज्ञानभिक्षु ने विशदता के साथ इस तात्पर्य का प्रतिपादन किया है।

उपर्युक्त विवेचना से सुस्पष्ट विदित होता है कि जिन दर्शनों (न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा) ने द्वैतवास्तवत्व का प्रतिपादन किया है उनके यहाँ द्वैतप्रतिपादक श्रुतियाँ सावकाश हैं तथा अद्वैत श्रुतियाँ निरवकाश होने से गौणार्थक हैं।

---

१. सिद्धान्तचन्द्रोदये, पृ० ४०-४१.
२. न्या० क०, पृ० २१३.
३. सां० सू० १।१५४.
४. मुण्ड० ३।१।३.
५. सां० सू० १।१५४. प्र० भाष्यम्।
६. शास्त्रदीपिका, तर्कपादः, पृ० १२५.

तदेवं वास्तविकद्वैतप्रतिपादकेषु न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसादर्शनेषु द्वैतश्रुतीनां सावकाशत्वेऽप्यद्वैतश्रुतीनामनवकाशः। उत्तरमीमांसादर्शने तु "जीवो ब्रह्मैव नापरः" इति भगवत्पादैः शङ्कराचार्यैर्जीवब्रह्मणोर्न वास्तविकभेदः, किन्त्वन्तःकरणोपाधिना एकमेव ब्रह्म नानाभूतमिव प्रतीयत इति भेदस्यौपाधिकत्वं प्रतिपाद्यते। अत्राद्वैतदर्शने आत्मनो निःसङ्गत्वात् कर्तृत्वभोक्तृत्वसुखदुःखादेश्चान्तःकरणधर्मत्वादन्तःकरणभेदेनैव जगद्वैचित्र्यं व्यवस्थाप्यते। अतोऽत्रात्मा नित्यः, विभुः, एक एवेति "द्वा सुपर्णा सयुजा सखाया",[१] "द्वे ब्रह्मणी वेदितव्ये"[२] इत्यादिद्वैतश्रुतीनामनवकाशः। अत एव भाष्यकृद्भिः श्रीपतिपण्डिताराध्यभगवत्पादैर्भेदाऽभेदप्रतिपादकं वीरशैवदर्शनं सर्वश्रुतिसमन्वयात्मकमिति तस्य 'विशेषाद्वैतम्' इति नामधेयं कृतम्। तथाहि–

श्रुत्येकदेशप्रामाण्यं द्वैताऽद्वैतमतादिषु।  
द्वैताऽद्वैतमते शुद्धे विशेषाद्वैतसंज्ञिते।  
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः।।[३]इति।

---

उत्तरमीमांसा में 'जीवो ब्रह्मैव नापरः।' का उद्घोष कर भगवत्पाद शङ्कराचार्य ने जीव और ब्रह्म में वास्तविक भेद का प्रतिषेध किया है। व्यवस्था की उपपत्ति हेतु अन्तःकरण उपाधि के प्रभावभेद से एक ब्रह्म की नानारूपता औपाधिक मानी जाती है। अद्वैत दर्शन में आत्मा को निःसङ्ग माना जाता है तथा कर्तृत्व, भोक्तृत्व एवं सुखदुःखादि को अन्तःकरण का धर्म कहा गया है। एवंच अन्तःकरणभेद से जगत् का वैचित्र्य भी व्यवस्थित (सोपपत्तिक) है।

एवंच अद्वैतवेदान्त में आत्मा नित्य है, विभु है तथा एक है। अतः इस मत में द्वैतश्रुतियों ('द्वा सुपर्णा सयुजा सखाया......।' तथा 'द्वे ब्रह्मणी वेदितव्ये।') का अनवकाश होता है।

भेदप्रतिपादक तथा अभेदप्रतिपादक दर्शनों की अपेक्षा भेदाभेदवाद का प्रतिपादक वीरशैवदर्शन है। इसमें सर्वश्रुतिवाक्यों का समन्वय होता है। भाष्यकार श्रीपतिपण्डिताराध्य भगवत्पाद ने अपने सिद्धान्त को **विशेषाद्वैत** की संज्ञा से विभूषित किया है। तद्यथा–

'श्रुत्यैकदेश प्रामाण्यं द्वैताऽद्वैत...............सर्वश्रुतिसमन्वयः।।१½।।'

---

१. श्वे० उ० ४।६.

२. त्रि० ता० ५।१७.

३. ब्र० सू० श्रीकर० मङ्गलश्लो० १५.

अत्र विश्च शेषश्च विशेषौ परमात्म-जीवौ, तयोरद्वैतं 'विशेषाद्वैतम्' इति तस्य व्युत्पत्तिः। अत्र 'विः' इत्यनेन "विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि"[१] इति निघण्टुषु पक्षिवाचकस्य विशब्दस्य परमात्मनोऽपि वाचकत्वात् "द्वा सुपर्णा"[२], "हंस हंसेति यो ब्रूयाद्धंसो ब्रह्मा हरिः शिवः"[३] इत्यादिश्रुतिषु च परमात्मनः पक्षिरूपेण वर्णनाद् विशब्देन परमात्मैव गृह्यते। एवमेव "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति"[४] इत्यादिश्रुतिषु जीवानां परमेश्वरांशत्वव्यपदेशात् शेषशब्देन जीवो व्यवह्रियते। अद्वैतपदेन "यथा नद्यः"[५] इत्यादिश्रुतिसिद्धं सायुज्यं जीवब्रह्मणोरुपदिष्टम्। तस्माज्जीवेश्वरयोः संसारदशायां भेदः, मोक्षदशायामभेदो भ्रमरकीटन्यायेनोपदिश्यते। तदुक्तम्–

विशब्देनोच्यते शम्भुः द्वासुपर्णेति मन्त्रतः।
शेषशब्देन शारीरो यथाग्नेरिति मन्त्रतः।
अद्वैतेन भवेद्योगो यथा नद्यादिभिस्तथा।।[६] इति।

---

**विशेषाद्वैत** का व्युत्पत्ति लभ्य अर्थ है— विश्च शेषश्च-इति विशेषौ= परमात्मजीवौ, तयोः अद्वैतम् = विशेषाद्वैतम्। 'विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि।' इस निघण्टुवाक्य के आधार पर पक्षिवाचक विशब्द परमात्मवाचक भी है। 'द्वा सुपर्णा....।' एवम् 'हंसहंसेतियो ब्रूयाद् हंसो ब्रह्मा हरिः शिवः।' इत्यादि श्रुतियों में परमात्मा का पक्षिरूप में वर्णन प्राप्त है। अतः विशब्द प्रकृत में परमात्मा का वाचक है। तद्वत् 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति........।' इत्यादि श्रुतियों में जीवों को परमेश्वर का अंश कहा गया है। अतः शेष शब्द से जीव का व्यवहार होता है। अद्वैत शब्द (वि-शेष-अद्वैत) का अर्थ 'यथा नद्यः....' इत्यादि श्रुतिश्रुत ब्रह्म के साथ जीव का सायुज्य है। एवंच जीव और ईश्वर का संसारदशा में भेद तथा मोक्षदशा में अभेद (भ्रमरकीटन्याय से ) विशेषाद्वैतवाद में प्रतिपाद्यतया अभीप्सित है।

तद्यथा— 'विशब्देनोच्यते शम्भुः.....यथा नद्यादिभिस्तथा।।१½।।'

निष्कर्ष यह है— न्याय, वैशेषिक एवं योगदर्शन में जीवात्मा व्यक्तियों में परस्पर तथा ईश्वर के साथ भेद पारमार्थिक (वास्तव) है। सांख्य एवं पूर्वमीमांसा में

---

१. एकाक्षरनामकोषसंग्रहः, पृ० १८.
२. श्वे० उ० ४।६.
३. ब्र० वि० ३४.
४. बृ० उ० ३।१।२०.
५. मुण्ड० ३।२।८.
६. ब्र० सू० श्रीकर०, मङ्गलश्लो० १६.

तस्मान्न्याय-वैशेषिक-योगदर्शनेष्वात्मनां परस्परमीश्वरेण साकं च भेद एव पारमार्थिकः। सांख्यपूर्वमीमांसादर्शनयोरीश्वरस्याभावेऽपि जीवात्मनामेव परस्परं वास्तविको भेदोऽङ्गीक्रियते। अद्वैतवेदान्ते तु जीवात्मनां परस्परमीश्वरेण साकं च प्रतीयमानो भेदो न पारमार्थिकः, किन्त्वौपाधिकः, अभेदस्तु पारमार्थिकः। अत एवैतानि दर्शनानि श्रुत्यैकदेशीनीत्युच्यन्ते।

वीरशैवदर्शने तु भेदाभेदयोः समन्वयाद् वैशिष्ट्यं चास्य दर्शनस्य। तदुक्तं भगवत्पादैः श्रीरेणुकाचार्यैः—

वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने।
सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते।।
शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत् सदा।।[१] इति।

तदेवं नैयायिक-वैशेषिक-प्राभाकरा जीवात्मानं सद्रूपम्, भाट्टमीमांसकाः सद्रूपेण साकं किञ्चित् चिद्रूपम्, सांख्ययोगाश्च सद्रूपं पूर्णचिद्रूपम्,अद्वैतवेदान्तिनश्च

---

ईश्वर का सद्भाव नहीं है अतश्च जीवात्मा (नाना व्यक्तियों) में परस्पर वास्तविक भेद का अङ्गीकार किया गया है। तद्व्यतिरिक्त अद्वैतवेदान्त में नानाजीवों में तथा जीव एवं परमेश्वर में प्रतीयमान भेद पारमार्थिक नहीं अपितु औपाधिक है। तथा अभेद पारमार्थिक है।

उपर्युक्त सभी दर्शनों को श्रुत्येकदेशी कहा जाता है। किसी मत में भेदप्रतिपादक श्रुति की चरितार्थता है तो अन्य मत में अभेदप्रतिपादक श्रुति की।

वीरशैवदर्शन में उभयविध श्रुतियों का समन्वय होना इसके वैशिष्ट्य को प्रतिपादित करता है। भगवत्पाद श्रीरेणुकाचार्य ने इस सिद्धान्त के वैशिष्ट्य को उजागर किया है—

'वेदैकदेशवर्तिभ्यः............प्रामाण्यं वेदवत्सदा।।२।।'

उपर्युक्त विवेचना से सुविदित होता है— नैयायिक, वैशेषिक एवम् प्राभाकर जीव को सद्रूप मानते हैं, भाट्टमीमांसक उसे सद्रूप एवं आंशिक चिद्रूप मानते हैं, सांख्य एवं योग दार्शनिकों ने सद्रूप एवं पूर्णचिद्रूप माना है तथा अद्वैत दार्शनिकों ने जीव को सच्चिदानन्द ही माना है। इस क्रम में यद्यपि जीवात्मा का विकास स्पष्ट परिलक्षित होता है। तथापि न्याय, वैशेषिक, सांख्य, योग, मीमांसा-दर्शनों में भेद

---

१. सि० शि० ५।७-८, पृ० ५५.

सच्चिदानन्दरूपमिति स्वीकुर्वन्तः क्रमशो विकासोन्मुखा दरीदृश्यन्ते। अथापि न्याय–वैशेषिक–सांख्य–योग–पूर्वमीमांसादर्शनेषु भेदमात्रस्य पारमार्थिकत्वकथनात्, अद्वैतवेदान्ते च भेदस्यौपाधिकत्वमभेदस्य च पारमार्थिकत्वमिति श्रुत्यैकदेशवाक्यानामेव प्रामाण्यग्रहणात् तेषां श्रुत्यैकदेशित्वम्। भेदाभेदयोः पारमार्थिकत्वं स्वीकृत्य सर्वश्रुतीनां प्रामाण्यप्रतिपादकं वीरशैवदर्शनं तु सर्वश्रुतिसमन्वयात्मकमित्युक्तषड्दर्शनेभ्योऽस्य वैशिष्ट्यं दिनकरप्रकाशवत् सर्वत्र विद्योतते।

## सृष्टिसमीक्षा

इह खलु प्राचीना महर्षयः परिदृश्यमानस्यास्य विचित्रविश्वस्य "नैको ऋषिर्यस्य मतं न भिन्नम्" इत्युक्त्यनुसारेण सृष्ट्यादिव्यवस्थां नैकरूपेण निरूपयन्ति। अधुना तेषां सष्टिविचाराणां मिथो वैशिष्ट्यं तावत् समीक्ष्यते।

### सृष्टिकारणसमीक्षा

तत्र तावन्न्याय–वैशेषिका जगदुत्पत्तौ परमाणव उपादानकारणमिति, ईश्वरश्च निमित्तकारणमित्यभ्युपगच्छन्ति। पाश्चात्त्या अपि परमाणुभ्यः सृष्टिं

---

को पारमार्थिक माना गया है एवम् अद्वैत वैदान्त में भेद को औपाधिक और अभेद को पारमार्थिक माना गया है। यतश्च श्रुति के एकदेश को ही इन सभी दर्शनों में प्रमाण माना गया है अतः श्रुत्येकदेशी कहलाते हैं। अवस्थाभेद से भेद तथा प्रभेद दोनों को पारमार्थिक मानकर सर्वश्रुति के प्रामाण्य का प्रतिपादक वीरशैवदर्शन सर्वश्रुतिसमन्वयात्मक है। एतावता उपर्युक्त षड्विध दर्शनों की अपेक्षया वीरशैवदर्शन का वैशिष्ट्य सूर्यप्रकाशवत् सर्वत्र प्रकाशमान है।

## सृष्टि-समीक्षा

प्राचीन महर्षियों को यदि हम समझना चाहे तो पायेंगे कि दृश्य विचित्र विश्व की सृष्टि आदि के सन्दर्भ में उनका निरूपण एक-सा नहीं है। अतएव यह सूक्ति सुप्रसिद्ध है— 'नैको ऋषिर्यस्य मतं न भिन्नम्।' अतः सम्प्रति महर्षियों के उन विविध प्राचीन सृष्टिविचारों की पारस्परिक विशेषता की समीक्षा की जाती है।

### सृष्टिकारणसमीक्षा

नैयायिक एवं वैशेषिक जगत की उत्पत्ति में परमाणुओं को उपादानकारण मानते हैं तथा ईश्वर को निमित्तकारण मानते हैं। यद्यपि पाश्चात्य दार्शनिकों ने

निरूपयन्ति, किन्तु पाश्चात्त्याभिमतपरमाणवः केनापि चेतनपुरुषेणाप्रेरिता अपि 'घुणाक्षरन्यायेन' स्वयमेव मिलित्वा सृष्टिं विधास्यन्तीति पाश्चात्त्यपरमाणुवादापेक्षया नैयायिकपरमाणुवादस्य वैशिष्ट्यम्।

सांख्ययोगदर्शनयोर्जगदिदं सुखदु:खमोहात्मकमिति तत्कारणमपि तादृशमेव भवितव्यमिति कृत्वा सुख–दु:ख–मोहानां कारणीभूतानां सत्त्वरजस्तमसां साम्यावस्थारूपा प्रकृतिरेव जगदुपादानकारणमिति प्रतिपाद्यते। अत्र "कार्यगुणाः कारणगुणानपेक्षन्ते" इत्युक्त्यनुसारेण विचार्यमाणे न्यायवैशेषिकाभिमतपरमाणुवादापेक्षया सांख्ययोगदर्शनयोः प्रकृतिपरिणामवादः सुष्ठु प्रतिभाति। सांख्ययोगदर्शने या प्रकृतिरुच्यते, सैवाद्वैतवेदान्ते माया–कल्पितप्रकृतिरित्यादिशब्दैर्व्यवह्रियते। किन्त्वयं विशेषो यत् सांख्याभिमता प्रकृतिर्नित्या, अद्वैताभिमता माया चानित्या।

तदेवं न्यायवैशेषिकयोः सांख्ययोगदर्शनयोश्च परमाणुः प्रकृतिश्च जगदुपादानमिति प्रतिपादितत्वादेतेषां सर्वेषां जडत्ववादरूपेण साम्यमस्ति।

---

परमाणुओं से सृष्टि का प्रतिपादन किया है तथापि उनके प्रेरक अथवा नियन्ता के रूप में किसी चेतनपुरुष को उन्होंने स्वीकार नहीं किया है। एतावता उनके मत में घुणाक्षर-न्याय से सृष्टि होती है किन्तु नैयायिक के परमाणुवाद (आरम्भवाद) में सुविचारित-रमणीयता का वैशिष्ट्य सुस्पष्ट रूप से परिलक्षित होता है।

सांख्य एवं योगदर्शनों में दृश्य जगत् को सुखदुःखमोहात्मक माना जाता है अत: उसका कारण भी तादृश ही होना चाहिए। इस कारण से सुखदुःखमोह के कारण सत्त्व रजस्-तमस् की साम्यावस्था प्रकृति को जगत् का उपादान कारण माना जाता है। 'कार्य के गुण कारण के गुणों की अपेक्षा रखते हैं।' इस युक्तिपूर्ण उक्ति के आधार पर विवेचना करने से प्रतीत होता है कि न्यायवैशेषिकाभिमत परमाणुवाद की अपेक्षया सांख्य-योग दर्शनों में जिसे प्रकृति कहा जाता है वही अद्वैतवेदान्त में माया, कल्पित-प्रकृति-प्रभृति शब्दों से व्यवहृत होता है। अन्तर यह है— सांख्यकी प्रकृति नित्य है तथा अद्वैत की माया अनित्य। न्यायवैशेषिक दर्शनों में परमाणु को जगत् का उपादान कहा गया है तथा सांख्य-योग दर्शनों में प्रकृति को। अत: इन चारों की समता है— जडकारणतावाद में।

अद्वैतवेदान्त में मायाविशिष्ट चेतन (ईश्वर) को जगत् का अभिन्ननिमित्तोपादानकारण प्रतिपादित किया है अत: इन दर्शनों की अपेक्षया

अद्वैतवेदान्ते मायाविशिष्टश्चेतन ईश्वरो जगदभिन्ननिमित्तोपादानकारणमिति प्रतिपादनेन पूर्वोक्तैर्न्याय-वैशेषिक-सांख्य-योगदर्शनैरस्य चोत्कृष्टता प्रतिभाति। किन्त्वद्वैतवेदान्ते तादृशेश्वरस्य तदुत्पन्नजगतश्च मिथ्यात्वं व्यवस्थाप्यते।

तत्र तावद्वीरशैवदर्शने तु शक्तिविशिष्टः परशिव एव जगदभिन्ननिमित्तोपादानकारणमिति स्वीक्रियते। अत एव श्रीरेणुकभगवत्पादाः-

यस्मादेतत् समुत्पन्नं महादेवाच्चराचरम्।
तस्मादेतन्न भिद्येत तथा कुम्भादिकं मृदः।।
यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः।
तथा शिवात् समुत्पन्नं शिव एव चराचरम्।।
आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात्।।[१]

इति शक्तिविशिष्टस्य परशिवस्य जगदुपादानत्वं प्रतिपादयामासुः। नैयायिकादिवदीश्वरस्य जगतो निमित्तकारणत्वस्वीकारे "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्"[२] इति श्रुतिप्रतिपादितस्यैकविज्ञानेन

---

अद्वैतवेदान्त की उत्कृष्टता सुस्पष्ट प्रतिभासित होती है। किन्तु अद्वैत वेदान्त में तादृश ईश्वर तथा उससे उत्पन्न जगत् दोनों को मिथ्या माना जाता है। इन सब दर्शनों से विलक्षण वीरशैवदर्शन में शक्तिविशिष्ट परशिव को ही जगत् के प्रति अभिन्ननिमित्तोपादानकारण माना जाता है। श्रीरेणुकभगवत्पाद ने शक्तिविशिष्ट पर शिव की जगदुपादानकारणता का विशद विवेचन किया है। तद्यथा—

'यस्मादेतत् समुत्पन्नं...........पटः स्वस्य प्रसारणात्।।१।।'

नैयायिकप्रभृति दार्शनिकों की तरह ईश्वर को केवल निमित्तकारण मानें तो 'यथा सौम्यैकेन.....सर्वं मृण्मयं विज्ञातं स्यात्।' श्रुति द्वारा प्रतिपादित एकविज्ञान से सर्वविज्ञान का सिद्धान्त उपपन्न नहीं होगा। लोकव्यवहार में कुलालज्ञान से समस्त घटादिकार्य का ज्ञान नहीं देखा जाता है अपितु उपादान (मृत्पिण्ड) के ज्ञान से ही कार्यों का ज्ञान देखा जाता है। अतः घट के प्रति मृत्पिण्ड की तरह जगत्-प्रपञ्च के प्रति उपादानकारणरूप से भी मान्य हैं।

अद्वैतवेदान्त में प्रपञ्च को माया का परिणाम कहा जाता है। यतश्च तन्मत में

---

१. सि० शि) १०।२, ४-५, पृ० १८७-१८८.
२. छा० उ० ६।१।४.

सर्वविज्ञानस्य सिद्धान्तो नोपपद्येत। नहि लोके कुलालज्ञानेन सर्वस्य घटादि-कार्यस्य ज्ञानं भवति, किन्तु तदुपादानमृत्पिण्डज्ञानेन। तस्मात् शिवो घटं प्रति मृत्पिण्डवत् प्रपञ्चं प्रत्युपादानकारणमपि वर्तते।

अद्वैतवेदान्ते प्रपञ्चो मायायाः परिणामः। तत्र मायाया मिथ्यात्वात् प्रपञ्चस्य मिथ्यात्वेऽपि वीरशैवदर्शने शक्तिविशिष्टशिवस्य परिणामत्वात् तादृशशिवस्यामिथ्यात्वात् प्रपञ्चस्याप्यमिथ्यात्वमेव।

### प्रपञ्चगततत्त्वसमीक्षा

प्रपञ्चे विद्यमानानि वस्तूनि न्यायवैशेषिकाचार्यैः 'पदार्थ' शब्देन, सांख्य-योगदर्शनाचार्यैर्वीरशैवदर्शनाचार्यैश्च 'तत्त्व' शब्देन व्यवह्रियन्ते। वीरशैवदर्शने, सांख्यदर्शने च तत्त्वशब्दसाम्येऽपि तत्त्वपरिगणनायां तत्स्वरूपविषये च वैषम्यं वर्तते। तत्र सांख्याः पञ्चविंशतितत्त्वान्यङ्गीकुर्वन्ति। वीरशैवाश्च–

यस्योर्मिबुद्बुदाभासः षट्त्रिंशत्तत्त्वसञ्चयः।
निर्मलं शिवनामानं तं वन्दे चिन्महोदधिम्।।[1]

इति श्रीरेणुकभगवत्पादोक्त्या षट्त्रिंशत् तत्त्वान्यभ्युपगच्छन्ति। तत्र १. शिवः, २. शक्तिः, ३. सदाशिवः, ४. ईश्वरः, ५. शुद्धविद्या, ६. माया, ७. कला,

---

माया मिथ्या मानी गयी है अतः प्रपञ्च भी मिथ्या ही माना जाता है। वीरशैवदर्शन में शक्तिविशिष्ट शिव मिथ्या नहीं अपितु सत्य है अतः उनका परिणाम प्रपञ्च भी मिथ्या नहीं अपितु सत्य है।

### प्रपञ्चगत तत्त्वों की समीक्षा

प्रपञ्च (जगत्) के अन्तर्गत विद्यमान वस्तुओं को न्याय-वैशेषिक के आचार्यों ने पदार्थशब्द से तथा सांख्य-योग एवम् वीरशैवदर्शन के आचार्यों ने तत्त्वशब्द से व्यवहृत किया है। वीरशैवदर्शन एवं सांख्यदर्शन में तत्त्वशब्द की समता होने पर भी तत्त्व की परिगणना एवम् उनके स्वरूप के विषय में विषमता दृष्टिगोचर होती है। सांख्याचार्यों ने २५ तत्त्वों का अङ्गीकार किया है जबकि वीरशैवाचार्यों ने ३६ तत्त्वों का अङ्गीकार किया है। तद्यथा—

'यस्योर्मिबद्बुदाभासः........तं वन्दे चिन्महोदधिम्।।१।।

सांख्यसम्मत २५ तत्त्वों के अतिरिक्त (११ अन्य) तत्त्वों का भी अङ्गीकार

---

१. सि० शि० १।३, पृ० २.

८. विद्या, ९. रागः, १०. कालः, ११. नियतिरित्येकादशतत्त्वानि सांख्याद्विलक्षणानि। सांख्यदर्शने प्रकृति–पुरुषावेवान्तिमे परमतत्त्वे इति गृह्येते, किन्तु वीरशैवदर्शने प्रकृति–पुरुषयोरपि सूक्ष्मान्येकादशतत्त्वान्यङ्गीकृतानीति तत्त्वानां सूक्ष्मातिसूक्ष्मस्वरूपविवेचनायां वीरशैवदर्शनं स्ववैशिष्ट्यं द्योतयति।

किञ्च, समाननामधेयानामवशिष्टानां पञ्चविंशतितत्त्वानां स्वरूपविषयेऽपि सांख्यवीरशैवदर्शनयोः किञ्चिदन्तरं वर्तते। तथा हि– सांख्याः पुरुषाख्यं तत्त्वमसङ्गं नित्यमुक्तं वाङ्गीकृत्य बुद्धावेव बन्धमोक्षौ व्यवस्थापयन्ति[1]। वीरशैवदर्शनाभिमतः पुरुषः पञ्चकञ्चुकैर्बद्धः संसरति, तैर्मुक्तश्च सन् मुच्यत इति वीरशैवदर्शने पुरुषस्य बन्धमोक्षौ वास्तविकौ।

---

वीरशैव दर्शन में किया गया है। तद्यथा— १. शिव २. शक्ति ३. सदाशिव ४. ईश्वर ५. शुद्धविद्या ६. माया ७. कला ८. विद्या ९. राग १०. काल तथा ११. नियति।

सांख्य दर्शन में प्रकृति और पुरुष ही अन्तिम (मूल) परमतत्त्व माने गये हैं। तद्विपरीत वीरशैवदर्शन में प्रकृति और पुरुष से भी सूक्ष्म ११ तत्त्वों का अङ्गीकार किया गया है। एतावता सूक्ष्म अतिसूक्ष्म विवेचना के सन्दर्भ में वीरशैवदर्शन का अपना वैशिष्टय सुप्रकाशित होता है।

इतना ही नहीं; एक समान नाम वाले जो २५ तत्त्व हैं उनके स्वरूप के विषय में भी सांख्य एवं वीरशैवदर्शनों में कुछ अन्तर (भेद) विद्यमान है। तथाहि सांख्य के आचार्यों ने पुरुष को असङ्ग अथवा नित्यमुक्त तत्त्व मानकर बुद्धि में बन्ध तथा मोक्ष की व्यवस्था स्वीकार की है। इसके विपरीत वीरशैवदर्शन के आचार्यों ने पुरुष को पञ्च-कञ्चुकों से आबद्ध होने के कारण संसारी माना है तथा कञ्चुकों से मुक्त होने पर उसकी मुक्ति-प्राप्ति प्रतिपादित की है। एतावता पुरुष का बन्ध भी वास्तव है तथा मोक्ष भी।

तद्वत् सांख्याभिमत प्रकृतितत्त्व से वीरशैवाभिमत प्रकृतितत्त्व विलक्षण है। तद्यथा— सांख्याचार्यों ने सत्त्वादिगुणत्रय की साम्यावस्था को प्रकृति कहा है। तद्विपरीत वीरशैवाचार्यों ने सत्त्वादिगुणत्रय के आश्रय भूत द्रव्य को प्रकृति कहा है। भाष्यकार श्रीपतिपण्डिताराध्य महोदय ने सुस्पष्ट विवेचना की है—

---

१. तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरपि कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।। (सां० का० ६२)

अपरं च, सांख्याभिमतप्रकृतितत्त्वतो वीरशैवाभिमतप्रकृतितत्त्वं विलक्षणं वर्तते। तथाहि–सांख्याः सत्त्वादिगुणत्रयाणां साम्यावस्था प्रकृति–रित्यङ्गीकुर्वन्ति[1]। वीरशैवसिद्धान्ते तादृशगुणाश्रयभूतं द्रव्यं प्रकृतिरित्युच्यते। तदुक्तं भाष्यकारैः श्रीपतिपण्डिताराध्यैः–"सत्त्वादयो द्रव्यधर्माः, न तु द्रव्यस्वरूपाः सत्त्वादयोऽपि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतु–भूतास्तत्स्वभावविशेषा एव, न तु मृद्धिरण्यादिद्रव्यतया कार्यान्विता उपलभ्यन्ते। गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः"[2] इति। महदादिभूम्यन्तानां तत्त्वानां स्वरूपं तु सांख्यवीरशैवदर्शनयोः प्रायः समानमेव।

## प्रपञ्चस्य सत्यत्वमिथ्यात्वयोः समीक्षा

अद्वैतवेदान्तमपहाय न्याय–वैशेषिक–सांख्य–योग–मीमांसा–वीरशैवदर्शनेषु प्रपञ्चस्य सत्यत्वमभ्युपगम्यते। वीरशैवदर्शने प्रपञ्चो नाम शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वात्मकः। एतानि च षट्त्रिंशत्तत्त्वानि शक्तिविशिष्टस्य परशिवस्यैव विकासरूपाणीति तेषां मिथ्यात्वं नैव सिद्ध्यति। अत एवात्र

---

'सत्त्वादि गुण, द्रव्य के धर्म हैं स्वयं द्रव्यस्वरूप नहीं हैं। पृथिव्यादि द्रव्यों में उपलब्ध (कार्यरूप से) होने वाले लघुत्व प्रकाशत्व आदि के कारणभूत सत्त्वादि गुण भी द्रव्य के धर्म होने से स्वभाव-विशेष हैं। मृत्तिका आदि कारण द्रव्य का घटादि कार्यों में अनुस्यूत होने जैसी स्थिति सत्त्वादि में नहीं है। अतएव सत्त्वादि की प्रसिद्धि गुणरूपों में है द्रव्यरूप में नहीं। तन्तुरूप यद्वत् पटरूप के प्रति कारण होता है तद्वत् पृथिव्यादि में विद्यमान सुखादि के प्रति प्रकृति में विद्यमान सत्त्वादि की कारणता है। महत् से लेकर पृथिवी पर्यन्त तत्त्वों का स्वरूप सांख्य एवं वीरशैव दर्शनों में प्रायः एक-सा ही है।

## प्रपञ्च की सत्यता एवं मिथ्यारूपता की समीक्षा

अद्वैतवेदान्त के अतिरिक्त उपर्युक्त सभी दर्शनों (न्याय, वैशेषिक, सांख्य, योग एवं वीरशैव) में प्रपञ्च की सत्यता स्वीकृत है। वीरशैवदर्शन में शिव से लेकर भूमिपर्यन्त ३६ तत्त्वों का समुदाय प्रपञ्च कहलाता है। ये ३६ तत्त्व, शक्तिविशिष्ट परशिव के विकासस्वरूप हैं। अतः कारण के सत्य होने से कार्य-प्रपञ्च का भी सत्य होना समीचीन है, मिथ्या होना नहीं। अतएव इस दर्शन में

---

१. "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः........" (सां० सू० १।६१)

२. ब्र० सू० श्रीकर० २।२।१.

पदार्थानां तत्त्वशब्देन व्यपदेशः कृतः। "तत्त्वं नाम अनारोपितं रूपम्, प्रमितिविषयत्वं वा" इति तत्त्वशब्दस्य व्युत्पत्तिसिद्धार्थ एव प्रपञ्चस्य सत्यत्वं प्रतिपादयति।

किञ्च, भाष्यकाराः श्रीपतिपण्डिताराध्यभगवत्पादाः–"किञ्च, मिथ्यात्वं नाम असत्त्वम्, अनिर्वचनीयत्वम्, बाध्यत्वं वा? नाद्यः, वेदाप्रामाण्यप्रसङ्गात्। न द्वितीयः, मौनत्वापत्तेः। न तृतीयः, किमिदं बाध्यत्वम्? त्रैकालिकनिषेधप्रतियोगित्वम्, ज्ञाननिवर्त्यत्वं वा? नाद्यः, प्रपञ्चस्य विद्यमानत्वात्, अर्थसिद्धिक्रियासिद्धिसत्त्वाच्च। अनादित्वान्न पूर्वकालनिषेधः, अनुभूयमानत्वान्न वर्तमानकालनिषेधः, संकोचरूपेण वेदराशेः प्रलयेऽपि परमेश्वरे सत्त्वान्न भविष्यत्कालनिषेधः। न द्वितीयः, ज्ञानिनां पूर्ववत्प्रपञ्चस्य

---

इन्हें पदार्थ नहीं कहाहै प्रत्युत **तत्त्व** कहा गया है। तत्त्व को अनारोपित स्वरूप अथवा प्रमा का विषय माना गया है। इस व्युत्पत्ति पर आधारित तत्त्व एवं उनका समुदाय सत्य सिद्ध होता है, मिथ्या नहीं।

भगवत्पाद भाष्यकार श्रीपतिपण्डिताराध्य ने मिथ्यातत्त्व के त्रिविध विकल्पों (विप्रतिपत्तियों) को उपस्थापित कर उनका प्रतिक्षेप किया है। तद्यथा— १. मिथ्यात्व का अर्थ है असत्त्व २. अनिर्वचनीयत्व ३. बाध्यत्व। प्रथम पक्ष में वेद के अप्रामाण्य की प्रसक्ति होगी। द्वितीयपक्ष में मौनत्व (मूकभाव) की प्रसक्ति होगी। तथा तृतीय पक्ष में बाध्यत्व को दो प्रकार से परिष्कृत किये जाने की सम्भावना व्यक्त की गयी है— १. बाध्यत्व का अर्थ है— त्रैकालिकनिषेधप्रतियोगित्व तथा २. ज्ञाननिवर्त्यत्व। प्रथम प्रकार अमान्य है क्योंकि प्रपञ्च विद्यमान है तथा उसमें अर्थसिद्धि एवं क्रियासिद्धि की सत्ता है। यतश्च प्रपञ्च अनादि है अतः पूर्वकाल में उसका निषेध सम्भव नहीं। अनुभूयमान है अतः वर्तमान काल में भी उसका प्रतिषेध सम्भव नहीं।

प्रलयावस्था में वेदराशि संकोचरूप से परमेश्वर में विद्यमान रहता है अतः प्रपञ्च का भविष्यत्काल में भी प्रतिषेध अनुपपन्न है।

द्वितीय प्रकार भी समीचीन नहीं है। ज्ञानी साधक को भी पूर्ववत् प्रपञ्च का अवभासन होता रहता है। साथ ही क्षुधा एवं पिपासा आदि का अनुवर्तन ज्ञान (मुक्ति) अवस्था में भी देखा जाता है।' इस प्रकार की अनेक युक्ति एवं प्रत्युक्ति द्वारा प्रपञ्च के मिथ्यात्व का निराकरण कर उसकी सत्यता स्थापित की गई है।

भासमानत्वात्, तेषां क्षुत्पिपासादिकस्य दृष्टत्वाच्च"[३] इत्यादिबहुभिर्युक्तिप्रत्युक्तिभिः प्रपञ्चस्य मिथ्यात्वं निरस्य, तस्य सत्यत्वं च प्रतिष्ठाप्य, पुनरग्रे–

जीवः सत्यं जगत्सत्यं शिवः सत्यं स्वभावतः।
तयोरभेदः सत्यं वा क्रिमिभ्रमरयोरिव।।

इत्यागमोक्त्या च प्रपञ्चस्य सत्यत्वं समर्थितवन्तः।

प्रपञ्चस्य सत्यत्वप्रतिपादने वीरशैवाचार्याणामिदमैदम्पर्यम्–लोके हि ज्ञानिनामपेक्षयाऽज्ञानिनो बहवो वर्तन्ते। प्रपञ्चो मिथ्येति कथनेन यद्यपि ज्ञानिनः प्रपञ्चे आस्थां परित्यज्य परे ब्रह्मणि निष्ठावन्तो भवन्ति, किन्त्वज्ञानिनस्तद्वचनं श्रुत्वा नित्यनैमित्तिकादिकर्मसु श्रद्धारहिताः सन्तो नास्तिका भवेयुः। तथा सति च लौकिकजीवनं निरादर्शतामापद्येत। यदा तु–"तथा शिवात् समुत्पन्नं शिव एव चराचरम्"[१], "शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते"[२] इत्यादिभिः श्रीरेणुकभगवत्पादोक्तिभिः प्रपञ्चस्य शिवरूपत्वं प्रतिपाद्यते, तदा यथा ज्ञानिनां प्रपञ्चे परशिवत्वबुद्धिः समुदेति, तथाऽज्ञानिनामपि नित्यादिकर्मसु श्रद्धा समुत्पद्यते। एवं च सति लौकिकजीवनमप्यादर्शप्रायं भवतीति।

---

तत्पश्चात् आगम वचन के आधार पर प्रपञ्च की सत्यता का समर्थन उन्होंने विशदता से की है। तद्यथा–

'जीवः सत्यं जगत्सत्यं...........क्रिमिभ्रमरयोरिव।।१।।'

प्रपञ्च की सत्यता के प्रतिपादन में वीरशैवाचार्यों का तात्पर्य निम्नाङ्कित है— लोक में ज्ञानियों की अपेक्षा बहुत अधिक अज्ञानी लोग हैं। 'प्रपञ्च मिथ्या है'— इस कथन के आधार पर ज्ञानी लोग प्रपञ्च में आस्था का परित्याग कर ब्रह्म में निष्ठावान् होते हैं। किन्तु जो अज्ञानी लोग हैं वे इस तरह के वचनों का अनुसरण कर नित्यकर्म एवं नैमित्तिक कर्मों में श्रद्धारहित होकर नास्तिक बन जायेंगे। ऐसी स्थिति में लौकिक जीवन आदर्शशून्य हो जायेगा। इसके विपरीत– 'तथा शिवात् समुत्पन्नं शिव एव चराचरम्'। 'शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते इत्यादि आचार्यवचनों द्वारा प्रपञ्च की शिवरूपता प्रतिपादित होने पर यद्वत् ज्ञानिजन की प्रपञ्च में शिवत्वबुद्धि उदित होती है तद्वत् अज्ञानी लोगों को भी नित्य एवं नैमित्तिक कर्मों में श्रद्धा उत्पन्न होती है। इस प्रकार लौकिक जीवन भी आदर्शमय होता है।

---

३. ब्र० सू० श्रीकर० १।१।२.
१. सि० शि० १०।६, पृ० १८८.
२. सि० शि० १०।३, पृ० १८७.

तस्मात् प्रपञ्चनिषेधमुखेन परमतत्त्वस्य स्वरूपबोधनापेक्षया प्रपञ्चस्यैव परशिवरूपत्वं प्रतिपाद्य परमतत्त्वबोधनमधिकं लाभप्रदमिति सिद्ध्यति। एतद्विषये वीरशैवदर्शनमेव दर्शनान्तरापेक्षया प्रमुखं स्थानं निर्वहतीति विभावनीयं विपश्चिद्भिः।

## बन्धमोक्षयोः स्वरूपसमीक्षा

### साधनसमीक्षा

तत्र तावन्न्याय-वैशेषिक-सांख्य-योगाद्वैतवेदान्तिनो ज्ञानादेव मोक्ष इति, मीमांसका वीरशैवाश्च ज्ञानकर्मणोः समुच्चयो मोक्षहेतुरिति प्रतिपादयन्ति। कर्मणो मोक्षोपायत्वे सर्वेषामैकमत्याभावेऽपि ज्ञानस्य मोक्षहेतुत्वं सर्वैरप्यभ्युपगम्यते। तत्र न्याय-वैशेषिक-सांख्य-योगाद्वैतवेदान्तिनो मिथ्याज्ञानादेव बन्धनमिति, तत्त्वज्ञानस्य च मोक्षहेतुत्वमङ्गीकुर्वन्तोऽपि तत्त्वज्ञानस्वरूपविषये न समानाभिप्रायाः सन्ति। तत्र महर्षिणा गौतमेन–"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां

---

अतः प्रपञ्च का निषेध कर परमतत्त्व के स्वरूपबोधन की अपेक्षा प्रपञ्च की शिवरूपता को प्रतिपादित कर परमतत्त्व का प्रबोधन अधिक लाभप्रद है। यह स्वरसतः विदित होता है। अतः इस सन्दर्भ में वीरशैवदर्शन ही दर्शनान्तर की अपेक्षा प्रमुख स्थान का निर्वहण करता है। यह विद्वज्जन भलीभाँति समझ सकते हैं।

## बन्ध एवं मोक्ष के स्वरूप की समीक्षा

### साधन की समीक्षा

न्याय, वैशेषिक, सांख्य, योग एवं अद्वैत-वेदान्ती ज्ञान से मोक्ष की प्राप्ति प्रतिपादित करते हैं। मीमांसक एवं वीरशैव ज्ञान और कर्म के समुच्चय को मोक्ष का हेतु मानते हैं। कर्म के मोक्षोपाय होने में सभी दार्शनिकों का ऐकमत्य नहीं प्राप्त होता है किन्तु ज्ञान की मोक्षहेतुता में किसी का विवाद नहीं है।

न्याय, वैशेषिक, सांख्य, योग तथा अद्वैतवेदान्ती सुस्पष्ट स्वीकारते हैं— १. मिथ्याज्ञान ही बन्धन का कारण है तथा २. तत्त्वज्ञान ही मोक्ष का हेतु है। परन्तु तत्त्वज्ञान का स्वरूप क्या है इस प्रश्न का उत्तर इन दर्शनों के आचार्यों ने एक समान नहीं बताया है।

तत्त्वज्ञानान्निःश्रेयसाधिगमः"[१] इति सूत्रेण षोडशपदार्थानां तत्त्वज्ञानं मोक्षहेतुरिति प्रतिपाद्य, पुनः—"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्"[२] इति सूत्रे द्वादशानां प्रमेयाणां गणना कृता। भगवान् भाष्यकारोऽपि—"अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्"[३] इत्युक्तानां द्वादशप्रमेयाणां तत्त्वज्ञानादेव मोक्ष इत्यभिहितवानिति न्यायदर्शने आत्मादिप्रमेयाणां तत्त्वस्य यथार्थरूपस्य ज्ञानमेव तत्त्वज्ञानम्, अर्थात् शरीरादीनां सर्वेषामात्मेतरत्वेन आत्मनश्चात्मेतरभिन्नत्वेनेत्यात्मविशेष्यकमात्मेतरभेदप्रकारकं साक्षात्कारात्मकं ज्ञानमेव तत्त्वज्ञानम्, तदेव च मोक्षहेतुरिति प्रतिपाद्यते।

वैशेषिकाः—"अनारोपितं रूपमेव तत्त्वम्" इति तत्त्वलक्षणमुक्त्वा द्रव्यादिषट्पदार्था एव तत्त्वानि, तेषां साधर्म्यवैधर्म्यरूपं साक्षात्कारात्मकं ज्ञानमेव तत्त्वज्ञानम्, तच्च मोक्षकारणमित्याशेरते। एवं नित्याऽनित्यवस्तुविवेक-रूपत्वादुभयोरपि तत्त्वज्ञानस्वरूपमेकरूपमेव। एतादृशतत्त्वज्ञानोत्पत्तौ भगवान् गौतमः— "समाधिविशेषाभ्यासात्"[४] "तदर्थं यमनियमाभ्यामात्मसंस्कारो

---

महर्षि गौतम ने १६ पदार्थों के तत्त्वज्ञान से निःश्रेयस की प्राप्ति प्रतिपादित की है। तद्यथा— 'प्रमाणप्रमेय.........निःश्रेयसाधिगमः।' तदनन्तर इन्होंने १२ प्रकार के प्रमेयों की गणना की है। भगवान् भाष्यकार ने भी १२ प्रकार के प्रमेयों के तत्त्वज्ञान से ही मोक्षप्राप्ति को प्रतिपादित किया है—

'यस्य तु तत्त्वज्ञानाद् अपवर्गो मिथ्याज्ञानात् संसारः।'

एवञ्च न्यादर्शन में आत्मप्रभृति प्रमेयों के तत्त्व (यथार्थ रूप) का ज्ञान ही तत्त्वज्ञान कहलाता है। अनात्मभूत शरीरादि का आत्मेतरत्वेन तथा आत्मा का आत्मेतरभिन्नत्वेन साक्षात्कारात्मक ज्ञान तत्त्वज्ञान कहलाता है। परिष्कृत भाषा में समीक्षाकार ने आत्मविशेष्यक तथा आत्मेतरभेदप्रकारक साक्षात्कार रूप ज्ञान को मोक्ष के प्रति कारण होना— निरूपित किया है। वैशेषिकाचार्यों ने तत्त्व का लक्षण किया है— 'अनारोपितं रूपमेव तत्त्वम्।' द्रव्यगुणप्रभृति छह पदार्थों को उन्होंने तत्त्व शब्द से कहा है। उनके साधर्म्य एवं वैधर्म्य रूप साक्षात्कारात्मक ज्ञान को तत्त्वज्ञान कहा जाता है। यह तत्त्वज्ञान ही मोक्ष के प्रति कारण माना जाता है। न्याय एवं

---

१. न्या० सू० १।१।१.
२. न्या० सू० १।१।९.
३. न्या० सू० भा० १।१।९.
४. न्या० सू० ४।२।३८.

योगाच्चाध्यात्मविध्युपायैः"[१] इत्यादिसूत्रैः श्रवणादिना साकं यमाद्यष्टाङ्गयोगश्च कारणमित्यभिप्रैति। नैयायिको भासर्वज्ञः–"एवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकारदुःखभावनयाऽनभिरतिसंज्ञितं परं वैराग्यं महेश्वरे च परां भक्तिमाश्रित्यात्यन्ताभियोगेन सेवितव्यानि। ततोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति। तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति"[२] इति महर्ष्युक्तानां यमादियोगाङ्गानां परमवैराग्योत्पादकत्वं प्रतिपाद्य ततश्च महेश्वरे पराभक्तिः, तद्भक्त्या च शिवसाक्षात्कारः, ततश्च मोक्ष इत्युक्त्वा,

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति[३]।।

इति श्रुतिं च प्रमाणयन् शिवानुग्रहस्य मोक्षहेतुत्वमङ्गीकरोति।

---

वैशेषिक—इन दोनों दर्शनों में तत्त्वज्ञान की नित्यानित्यवस्तुविवेकरूपता एक समान है।

आचार्य गौतम ने एतादृश तत्त्वज्ञान की उत्पत्ति में कतिपय सूत्रों ('समाधिविशेषाभ्यासात्', 'तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः।') के आधार पर श्रवण-मननादि के साथ यमनियमादि अष्टाङ्ग योग को कारण माना है। न्यायाचार्य श्रीभासर्वज्ञ ने सुस्पष्ट कहा है— 'यमनियमादि योगाङ्गों का सेवन करना चाहिए। मुमुक्षु को ब्रह्मादि के स्थानों में भी अनेक प्रकार के दुःख क़ी भावना द्वारा अनभिरतिसंज्ञक पर वैराग्य उत्पन्न होता है तथा परशिव में पराभक्ति का आश्रयण कर अत्यन्त अभिनिवेश के साथ योगाङ्गों का सेवन बताया गया है। फिर तो शीघ्र ही अनुपम शिवभगवान् का प्रत्यक्ष-दर्शन साधक को प्राप्त होता है। शिव के साक्षात्कार से साधक निरतिशय श्रेय को प्राप्त करता है।' उपर्युक्त कथन से आचार्य ने महर्षि कपिलप्रोक्त योगाङ्गों के अनुष्ठान का फल परवैराग्य की उत्पत्ति प्रतिपादित की है। तदनन्तर महेश्वर में साधक की पराभक्ति उदित होती है उक्त भक्ति का फल है शिव का साक्षात्कार तदनन्तर मोक्ष की प्राप्ति होती है। तदनन्तर निम्नाङ्कित श्रुति के आधार पर शिवानुग्रह के उदित होने से मोक्षप्राप्ति होती है। आचार्य भासर्वज्ञ पर शैवसम्प्रदायों का अतिशय प्रभाव परिलक्षित होता है। तद्यथा—

'यथाचर्मवदाकाशं..........दुःखस्यान्तो भविष्यति।।१।।'

---

१. न्या० सू० ४।२।४६.

२. न्या० सा०, पृ० ३०.

१. श्वे० उ० ६।२०.

एतेनास्योपरि शैवसम्प्रदायानां प्रभावः परिलक्ष्यते।

वैशेषिकदर्शने–"धर्मविशेषप्रसूतात् पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्"[२] इति महर्षिणा कणादेन तत्त्वज्ञानोत्पत्तौ निवृत्तिलक्षणो धर्मः कारणमिति प्रतिपादितम्, किन्तु भाष्यकारः प्रशस्तपादो[३] न्यायकन्दलीकारः श्रीधरभट्टश्च[४] निवृत्तिलक्षणस्य धर्मस्याचेतनत्वात् तस्य स्वयं नियतविषये प्रवृत्तिसामर्थ्यविरहेण तस्य मुक्तिफलोन्मुखत्वाऽसम्भवात् परमेश्वरानुग्रहोऽपेक्षित इति मन्वाते। एनयोरयमाशयो भासर्वज्ञस्य विचारेण साकं साम्यं भजते। किञ्च,

शम्भोः शिवप्रसादेन संसारच्छेदकारिणा।
मोहग्रन्थिं विनिर्भिद्य मुक्तिं यान्ति विवेकिनः।।
विना प्रसादमीशस्य संसारो न निवर्तते।
विना सूर्योदयं लोके कुतः स्यात्तमसो लयः।।[५]

---

वैशेषिकदर्शन में महर्षि कणाद ने तत्त्वज्ञान की उत्पत्ति के प्रति निवृत्तिलक्षणधर्म को कारण प्रतिपादित किया है। तद्यथा—

'धर्मविशेषप्रसूतात् पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्'।

अनन्तर काल में भाष्यकार प्रशस्तपाद तथा कन्दलीकार श्रीधरभट्ट ने निवृत्तिलक्षण धर्म के अचेतन होने से उसकी स्वतः नियतविषय में प्रवृत्ति-सामर्थ्य के अभाव होने से मुक्ति फल के प्रति उन्मुखता यतः सम्भव नहीं है अतः परमेश्वर का अनुग्रह अपेक्षित मानते हैं। इन दोनों के विचार भासर्वज्ञ के विचारसाम्य को धारित करते हैं।

यतश्च श्रीरेणुकाचार्य ने विवेकी को भी शिवानुग्रह से ही मोक्षप्राप्ति प्रतिपादित की है अतः वीरशैवाचार्य का भी विचारसाम्य उपर्युक्त तीन आचार्यों के विचारों से मान्य है। तद्यथा—

'शम्भोः शिवप्रसादेन........कुतः स्यात् तमसो लयः।।२।।'

सांख्यदर्शन में बुद्धि और पुरुष के विवेकख्याति रूप ज्ञान को ही तत्त्वज्ञान

---

१. वै० सू० १।१।४.
२. "तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव" (प्र० पा० भा०, पृ० १८)।
३. "धर्मोऽपि तावन्न निःश्रेयसं करोति यावदीश्वरेच्छया नानुगृह्यते" (न्या० क०, पृ० १९)।
४. सि० शि० १८।४-५, पृ० १४८.

इति श्रीरेणुकभगवत्पादैर्विवेकिनोऽपि शिवानुग्रहादेव मोक्ष इति प्रतिपादितत्वादेतद्विषये वीरशैवाचार्याणां भासर्वज्ञ-प्रशस्तपाद-श्रीधरभट्टानां च विचारसाम्यं परिदृश्यते।

सांख्यदर्शने–

**एवं तत्त्वाभ्यासान्नास्मि न मे नाऽहमित्यपरिशेषम्।**
**अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम्।।**[१]

इतीश्वरकृष्णोक्त्या नास्मि = अहं क्रियाशून्योऽस्मि, नाऽहम् = अहं न कर्ता, अर्थाद् अकर्तास्मि, न मे = मम किञ्चिदपि नास्ति, अर्थात् स्वामित्वरहितोऽस्मि–इत्याकारकं क्रिया-कर्तृ-स्वामित्वाभिमानरहितं यच्छुद्धं बुद्धिपुरुषयोर्विवेकख्यात्यात्मकं ज्ञानमुत्पद्यते, तदेव तत्त्वज्ञानमिति प्रतिपाद्यते। योगदर्शनेऽपि–"विवेकख्यातिरविप्लवा हानोपायः"[२] इति महर्षिणा पतञ्जलिना प्रतिपादितत्वात् सांख्याभिमता बुद्धिपुरुषयोर्विवेकख्यातिरेव तत्त्वज्ञानमिति निश्चीयते। एवमुभयोस्तत्त्वज्ञानस्वरूपस्यैकरूपत्वेऽपि सांख्यास्तदुत्पत्तौ श्रवणादीनि मुख्योपाया अष्टाङ्गयोगश्च सहकारिकारणमित्यभिप्रयन्ति। योगदर्शने त्वष्टाङ्गयोग एव मुख्योपाय इति निरूप्यते। किञ्च, योगिभिरसम्प्रज्ञातसमाधिप्राप्तिद्वारा

---

कहा जाता है। ईश्वरकृष्ण की कारिका में शुद्ध ज्ञान की परिभाषा प्रतिपादित की गई है—

'एवं तत्त्वाभ्यासान्नास्मि........केवलमुत्पद्यते ज्ञानम्।।१।।'

नास्मि = क्रियाशून्य हूँ। नाहम् = मैं कर्ता नहीं हूँ। न मे = मेरा कुछ भी नहीं है। एतावता क्रियाभिमान, कर्तृत्वाभिमान तथा स्वामित्वाभिमान से वर्जित ज्ञान, शुद्धज्ञान कहलाता है।

योगदर्शन में श्री महर्षिपतञ्जलि ने प्रतिपादित किया है—'विवेकख्यातिरविप्लवा हानोपायः।' बुद्धिपुरुष के मध्य विवेक की ख्याति ही तत्त्वज्ञान कहलाती है। सांख्य तत्त्व-ज्ञान की उत्पत्ति के प्रति श्रवण-मनन-निदिध्यासन को मुख्य कारण मानते हैं तथा अष्टाङ्ग योग को सहकारी। तद्विपरीत तत्त्वज्ञान की उत्पत्ति में अष्टाङ्ग योग को ही मुख्य कारण मानते हैं—योगदार्शनिक। योगाचार्यों ने असम्प्रज्ञात समाधि की प्राप्ति के पश्चात् कैवल्य-प्राप्ति का अङ्गीकार

---

१. सां० का० ६४.
२. यो० सू० २.२६.

कैवल्यप्राप्तिरङ्गीक्रियते। स च समाधिः–"समाधिसिद्धिरीश्वरप्रणिधानात्"[१] इति महर्षिणा पतञ्जलिना, "प्रणिधानाद् भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण। तदभिध्यानमात्रादपि योगिन आसन्नतरः समाधिलाभः समाधिफलं च भवतीति"[२] इति भगवता व्यासेन चेश्वरसंकल्पेनैव समाधेस्तत्फलस्य कैवल्यस्य च प्राप्तिरित्यभिहितत्वादित्येतन्मात्रेणैव सांख्याद् विलक्षणं सदिदं योगदर्शनं सेश्वरसांख्यमित्यभिधानभागभवत्। एवं न्यायवैशेषिक–वीरशैवदर्शनेष्विव योगदर्शनेऽपि कैवल्यार्थमीश्वरानुग्रहापेक्षणाद् विषयेऽस्मिन् त्रयाणामपि दर्शनानां साम्यं दरीदृश्यते।

अद्वैतवेदान्ते– "तत्त्वमसि"[३] इत्यादिमहावाक्यैर्ब्रह्मात्मनोर्यदभेदात्मकं ज्ञानमुत्पद्यते, तत् तत्त्वज्ञानमिति, तदेव च साक्षान्मोक्षहेतुरित्युच्यते। सांख्यैः– "असङ्गो ह्ययं पुरुषः"[४] इति श्रुतिमनुरुध्य प्रकृतितत्कार्यभूतप्रपञ्चाद् भिन्नोऽयं पुरुष इति भेदज्ञानस्य सर्वोत्कृष्टता मन्यते चेत्, "द्वितीयाद्वै भयं भवति"[५] इति

---

किया है। महर्षि पतञ्जलि ने समाधिसिद्धिरीश्वरप्रणिधानात्' सूत्र द्वारा तथा भगवान् व्यास ने अपने भाष्यवचन (प्रणिधानाद् भक्तिविशेषाद्.......... समाधिफलंच भवतीति।) द्वारा प्रतिपादित किया है— ईश्वरसंकल्प से ही **समाधि** तथा उसके फल **कैवल्य** की प्राप्ति होती है। इतने मात्र से सांख्यदर्शन की अपेक्षा योगदर्शन में विलक्षणता है जिसे **सेश्वरसांख्य** शब्द से जाना जाता है।

एवंच न्याय, वैशेषिक एवं वीरशैवदर्शनवत् योगदर्शन में भी कैवल्यप्राप्ति में ईश्वरानुग्रह-सापेक्षता प्रतिपादित है। अत: इन दर्शनों का इस विषय में विचारसाम्य सुस्पष्ट है।

अद्वैतवेदान्त में 'तत् त्वमसि।' इत्यादि महावाक्यों द्वारा जीव एवं ब्रह्म में अभेदज्ञान उत्पन्न होता है। इस ज्ञान को तत्त्वज्ञान कहा जाता है। मोक्ष के प्रति इस तत्त्वज्ञान को साक्षात् कारण माना जाता है।

सांख्याचार्यों ने 'असङ्गो ह्ययं पुरुषः।' इस श्रुति के अनुरोध से प्रकृति एवम् उसके कार्यरूप जगत् प्रपञ्च से पुरुष भिन्न है इस भेद ज्ञान की सर्वोत्कृष्टता माना है।

---

१. यो० सू० २।४५.
२. यो० सू० भा० १।२३.
३. छा० उ० ६।८७.
४. बृ० उ० ४।३।१५.
५. बृ० उ० १।४।२.

श्रुतिमङ्गीकुर्वन्तोऽद्वैतवेदान्तिनोऽभेदज्ञानस्यैव सर्वोत्कृष्टतां प्रतिपादयन्ति। तदेवं सांख्यसिद्धान्ते द्वैतज्ञानान्मोक्षश्चेदद्वैतवेदान्तेऽभेदज्ञानान्मोक्षः। तस्मात् स्थूलतो विचार्यमाणे सति यज्ज्ञानेन सांख्यैर्मोक्षोधिगम्यते। तेनैवाद्वैतिनां बन्धनप्राप्तिरिति वक्तुं शक्यते। एवं चात्र नैव सामञ्जस्यं समापादयितुं शक्यते।

मीमांसादर्शने भाट्टैः प्राभाकरैश्च नित्यनैमित्तिककर्मानुष्ठानसमुच्चितमात्मनो देहेन्द्रियाद्यतिरिक्तत्वज्ञानं मोक्षहेतुरित्युररीक्रियते। **"कर्मणा सत्त्वसंशुद्धिर्ज्ञानेनात्मविनिश्चयः। भवेद् विमुक्तिरभ्यासात् तयोरेव समुच्चयात्।।"** इति वचनं प्रमाणयता श्रीधरभट्टेनापि प्रशस्तपादभाष्यव्याख्यायां न्यायकन्दल्यां[1] मीमांसकवन्नित्यनैमित्तिककर्मसमुच्चिताज्ज्ञानादेव मोक्ष इति प्रतिपादितम्। उदयनाचार्यास्तु–"तत्त्वज्ञानमेव निःश्रेयसहेतुः, कर्माणि त्वनुत्पन्नज्ञानस्य ज्ञानार्थिनस्तत्प्रतिबन्धकाधर्मनिवारणद्वारेण प्रायश्चित्तवदुपयुज्यन्ते। उत्पन्नज्ञानस्य त्वन्तरालब्धवृष्टेः कारीरिपरिसमाप्तिवत् प्रारब्धाश्रमधर्मसमापनं लोकसंग्रहार्थमिति

---

जबकि अद्वैताचार्यों ने 'द्वितीयाद् वै भयं भवति' इस श्रुति के अनुरोध से जीवब्रह्म के अभेदज्ञान को ही सर्वोत्कृष्ट माना है।

एतावता यह सुविदित है कि सांख्यसिद्धान्त में द्वैतज्ञान से मोक्षप्राप्ति प्रतिपादित है। तद्विपरीत अद्वैतसिद्धान्त में अभेदज्ञान से मोक्षप्राप्ति।

स्थूल रूप से यह कहा जा सकता है— जिस भेदज्ञान से सांख्याचार्यों ने मोक्ष की प्राप्ति प्रतिपादित की है उसी से अद्वैताचार्यों ने बन्धन की प्राप्ति प्रतिपादित की है। अतः इन दोनों मतों में कथमपि सामञ्जस्य की स्थापना नहीं की जा सकती।

मीमांसादर्शन के भाट्ट प्रस्थान तथा प्राभाकर (गुरु) प्रस्थान में कर्म- (नित्यनैमित्तिक) समुच्चित आत्मज्ञान (देहेन्द्रियादिव्यतिरिक्त) को मोक्ष का हेतु माना गया है। तद्वत् कन्दलीकार श्रीधर (आचार्य) ने भी निम्नाङ्कित वचन को प्रमाण मानकर कर्मसमुच्चित ज्ञान को ही मोक्ष का कारण माना है। तद्यथा—

'कर्मणा ..............................तयोरेव समुच्चयात्।।१।।'

इस सन्दर्भ में न्यायाचार्य श्रीमान् उदयनाचार्य का कथन ध्यातव्य है— 'तत्त्वज्ञानमेव निःश्रेयसहेतुः, कर्माणि त्वनुत्पन्नज्ञानस्य ज्ञानार्थिनः तत्प्रतिबन्धकाधर्मनिवारणद्वारेण प्रायश्चित्तवद् उपयुज्यन्ते। उत्पन्नज्ञानस्य त्वन्तरालब्धदृष्टेः कारीरिपरिसमाप्तिवत् प्रारब्धाश्रमधर्मसमापनं लोकसंग्रहार्थमिति युक्तमुत्पश्यामः।'

---

१. न्या० क०, पृ० ६८३-६८९.

युक्तमुत्पश्यामः"[१] इति ज्ञानोत्पत्तेः प्राग् नित्यनैमित्तिककर्माकरणेन दुरितोत्पत्तिसम्भवेऽप्युत्पन्नज्ञानस्य मिथ्याज्ञानरूपदोषाभावात् तत्प्रयोज्यरागद्वेषयो-रप्यभावात् प्रवृत्तेरभाव इति तेन नित्यनैमित्तिकानामकरणेऽपि न प्रत्यवायोत्पत्तिः, अथापि यथा वृष्ट्यर्थं प्रारब्धस्य कारीरियागस्य परिसमाप्तेः प्राग् मध्य एव वृष्टिर्भविष्यति चेत्, तदा संकल्पितस्य यागस्य विधिवत् समाप्तिः क्रियते, तथा ज्ञानोत्पत्त्यर्थं यावज्जीवं कर्तव्यत्वेन संकल्पितानां नित्यनैमित्तिकानां ज्ञानोत्पत्त्यनन्तरं केवलं लोकसंग्रहार्थमनुष्ठानमिति प्रशस्तपादाभिप्रायं प्रकटितवन्तः। तस्माज्ज्ञानिनोऽपि नित्यनैमित्तिककर्माचरणं प्रतिपादयतां श्रीधरभट्टानामप्ययमेवाशयः स्यात्। किञ्च–

ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न सन्त्यजेत्।
आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः।।[२]

इति वीरशैवनिर्णयग्रन्थे सिद्धान्तशिखामणौ श्रीरेणुकभगवत्पादाचार्यैरपि

---

तदनुसार ज्ञानोत्पत्ति के पूर्व नित्य एवं नैमित्तिक कर्मों के अनुष्ठान से दुरित की उत्पत्ति होने पर भी प्राप्तज्ञान साधक को मिथ्याज्ञानरूप दोष के अभाव में तत्प्रयुक्त राग एवं द्वेष के भी अभाव होने से प्रवृत्ति का अभाव उपपन्न होगा। अतः उक्त कर्मों के अकरण से उन्हें प्रत्यवाय की उत्पत्ति नहीं होगी।

अथापि वृष्टि के उद्देश्य से कारीरियाग के आरम्भ होने पर उसकी समाप्ति से पूर्व ही वृष्टि हो जाने पर भी संकल्पित याग की विधिवत् समाप्ति की जाती है।

तद्वत् ज्ञान की उत्पत्ति हेतु यावज्जीवन कर्तव्यरूप से संकल्पित नित्य एवं नैमित्तिक कर्मों का (ज्ञान की उत्पत्ति हो जाने के अनन्तर) अनुष्ठान लोकसंग्रहार्थ किया जाता है। न्यायाचार्य जी ने उपर्युक्त प्रशस्तपादीय अभिप्राय को प्रकाशित किया है। एवंच ज्ञानिजन के लिए भी नित्य एवं नैमित्तिक कर्मों का आचरण कर्तव्य है— ऐसा प्रतिपादित करने वाले श्रीधरभट्ट का भी यही आशय तर्कित है।

श्रीमान् उदयनाचार्य के विचारसाम्य को वीरशैवाचार्यों के विचार में देखा जा सकता है। श्रीरेणुक भगवत्पाद ने भी ज्ञानियों द्वारा अनुष्ठित नित्यनैमित्तिक कर्मों का फल लोकसंग्रह प्रतिपादित किया है। तद्यथा—

'ज्ञानामृतेन तृप्तोपि......................................हि लौकिकाः।।१।।'

श्रीरेणुकाचार्यजी ने ज्ञान एवं कर्म के समुच्चय को मुक्ति का हेतु बताया है।

---

१. किर०, पृ० १३२.

२. सि० शि० १६।८, पृ० ९३.

ज्ञानिनो नित्यनैमित्तिकादिधर्माचरणं लोकसंग्रहार्थमिति प्रतिपादितत्वाद् विषयेऽस्मिन् वीरशैवाचार्याणां विचार उदयनाचार्यस्य विचारेण साकं साम्यमावहति। अपरं च, श्रीरेणुकभगवत्पादैः–

अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी।
फलोत्पत्तौ विरक्तस्तु तस्मात् तदद्वयमाचरेत्।।
ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्।।[१]

इति मुक्त्यर्थं ज्ञानकर्मणोः समुच्चयः प्रतिपादितः। आपाततोऽवलोकने ज्ञानकर्मसमुच्चयवादिभिर्मीमांसकैः साकं वीरशैवदर्शनस्य साम्यं परिलक्ष्यते, किन्तु मीमांसकाभिमतज्ञानकर्मापेक्षया वीरशैवाभिमतज्ञानकर्मणोः स्वरूपे वैशिष्ट्यं वर्तते। मीमांसकैरग्निहोत्रादिकं कर्मेत्युच्यते, वीरशैवास्तु शिवार्चनमेव कर्मेति प्रतिपादयन्ति। अत एव–"शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते"[२] इति कर्मलक्षणं प्रतिपादयन्तो श्रीरेणुकभगवत्पादाः–

किमन्यैर्धर्मकलिलैः कीकषार्थप्रदायिभिः।
साक्षान्मोक्षप्रदः शम्भोर्धर्मो लिङ्गार्चनात्मकः।।
लिङ्गनिष्ठस्य किं तस्य कर्मणा स्वर्गहेतुना।
नित्यानन्दशिवप्राप्तिर्यस्य शास्त्रेषु निश्चिता।।[३]

---

तद्यथा—

'अन्धपङ्गुवदन्योन्यं............भवेदादेहपातनम्।।२।।'

यद्यपि आपाततः वीरशैवदर्शन का साम्य इस विषय में ज्ञानकर्मसमुच्चयवादी मीमांसादर्शन में परिलक्षित होता है तथापि वीरशैवाभिमत ज्ञान एवं कर्म के स्वरूप में वैलक्षण्य दृष्टिगोचर होता है। मीमांसक अग्निहोत्रादि को कर्म कहते हैं जबकि वीरशैवाचार्य शिवार्चन को ही कर्म मानते हैं। वीरशैवमत में बाह्य याग की उपेक्षा की गई है तथा शिवार्चा को कर्म कहा गया है। अनित्य स्वर्गादिफलक याग की अपेक्षा शिवानन्द (नित्य) फलक इष्टलिङ्गार्चन कर्म का प्राशस्त्य स्वीकृत है। तद्यथा— 'शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते।' एवं– 'किमन्यैर्धर्मकलिलैः ........शास्त्रेषु निश्चिता।।२।।'

---

१. सि० शि० १६।११, १४; पृ० ७४-७५.
२. सि० शि० ९।२२, पृ० १४४.
३. सि० शि० १०।४, ८; पृ० १७३, १७५,

इत्यनित्यस्वर्गादिफलप्रदायकयज्ञाद्यपेक्षया नित्यशिवानन्दप्रदायकस्येष्ट–लिङ्गार्चनरूपस्य कर्मणः प्राशस्त्यमूचुः। एवमेव मीमांसका नैयायिकवत् शरीराद्यनात्मपदार्थेभ्य आत्मनः पार्थक्यज्ञानमेव तत्त्वज्ञानमिति प्रतिपादयन्ति। वीरशैवदर्शने तु–

शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते।
शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम्।।[१]

इति श्रीरेणुकभगवत्पादोक्त्या स्वात्मना साकं सर्वस्यापि प्रपञ्चस्य शिवस्वरूपेणावलोकनमेव श्रेष्ठज्ञानमिति, तेनैव च मोक्षप्राप्तिरित्युररीक्रियते। तस्माज्ज्ञानकर्मसमुच्चयवादिनोरपि वीरशैवमीमांसकयोर्मध्ये महदन्तरं वर्तते।

तत्र तावदद्वैतवेदान्ते "सर्वं खल्विदं ब्रह्म"[२] इति श्रुतिवचनेन सर्वस्यापि प्रपञ्चस्य ब्रह्मरूपत्वमङ्गीकृत्य "अयमात्मा ब्रह्म"[३], "तत्त्वमसि"[४] इत्यादिमहावाक्यैर्जीवस्यापि ब्रह्मरूपत्वप्रतिपादनाद् वीरशैवाभिमततत्त्वज्ञानेन साकमद्वैतवेदान्तस्य तत्त्वज्ञानं समतां धत्ते। अथाप्ययं विशेषः–सर्वस्यापि प्रपञ्चस्य

---

मीमांसाचार्यों ने नैयायिकवत् अनात्मपदार्थों से आत्मा के पार्थक्यज्ञान को तत्त्वज्ञान माना है। किन्तु वीरशैवाचार्यों ने स्वात्मा एवं समस्त प्रपञ्च को शिवस्वरूपतया अवलोकन श्रेष्ठ (तत्त्व) ज्ञान कहा है। यही मोक्ष की प्राप्ति में हेतु माना गया है।

अतः शब्दसाम्य होने पर भी ज्ञानकर्मसमुच्चयवादी वीरशैव और मीमांसक के मध्य महान् अन्तर विद्यमान है।

एवमेव वीरशैवाभिमत तत्त्वज्ञान के साथ अद्वैतवेदान्त के तत्त्वज्ञान में समता विद्यमान है। अद्वैतवेदान्त में 'सर्वं खल्विदं ब्रह्म'—श्रुतिप्रवाह से सर्वप्रपञ्च की ब्रह्मरूपता प्रतिपादित है। तद्वत् 'अयमात्मा ब्रह्म।' 'तत् त्वमसि।' इत्यादि महावाक्यों द्वारा जीव की भी ब्रह्मरूपता प्रतिपादित की गई है। जो वीरशैवसिद्धान्त से अविरुद्ध है। तथापि इन दोनों दर्शनों में मूलभूत विशेष यह है। सम्पूर्ण प्रपञ्च को ब्रह्मरूप मान लेने पर भी प्रपञ्च को वेदान्ती कल्पित मानते हैं अतएव बाध-सामानाधिकरण्य द्वारा प्रपञ्च की ब्रह्मरूपता प्रतिपादित करते हैं।

---

१. सि० शि० १६।८, पृ० ८१.
२. छा० उ० ३।१४।१.
३. बृ० उ० २।५।१९.
४. छा० उ० ६।८।७.

ब्रह्मरूपत्वं प्रतिपादयद्भिर्वेदान्तिभिः प्रपञ्चस्य कल्पितत्वमङ्गीकृत्य बाधसामानाधिकरण्येन च प्रपञ्चस्य ब्रह्मरूपत्वं प्रतिपाद्यते, किन्तु वीरशैवदर्शने–

पत्रशाखादिरूपेण यथा तिष्ठति पादपः।
तथा भूम्यादिरूपेण शिव एको विराजते।।[४]

इति श्रीरेणुकभगवत्पादोक्त्या प्रपञ्चस्य बाधं विनैव तस्य परशिवरूपत्वमङ्गीक्रियत इति। तस्मादद्वैतवेदान्ते प्रपञ्चस्याध्यस्तत्वात् मिथ्यात्वम्, वीरशैवदर्शने च प्रपञ्चः परशिवावयवरूप इति न मिथ्यात्वम्। अत एवोपर्युक्तश्लोकव्याख्यानावसरे पदवाक्यप्रमाणज्ञैर्मरितोण्टदार्यैः–"तत्र परशिवस्य धृत्या धरणिः, करुणया जलम्, उज्ज्वलतया तेजः, परमानन्दस्पन्देन वायुः, चिद्व्याप्त्या व्योम, चितिसंकोचचित्तविशिष्टो जीव इति विवेकः"[५] इति परशिंवस्यानन्तशक्तीनां पृथिव्यादिरूपेण परिणतत्वमुक्तम्।

तदेवं पर्यालोच्यमाने इदं निश्चीयते यन्न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसादर्शनाभिमतं तत्त्वज्ञानं केवलमनात्मपदार्थैरात्मनः पार्थक्यं प्रबोधयति, न तु केनचित् परमतत्त्वेन साकमभेदम् अद्वैतदर्शने तथाभूतस्यात्मनो ब्रह्मणा

---

वीरशैवदर्शन में प्रपञ्चबाध के बिना ही उसकी परशिवरूपता मानी जाती है। तद्यथा—

'पत्रशाखादिरूपेण.....शिव एको विराजते।।१।।'

इस श्लोक की व्याख्या पदवाक्यप्रमाणविज्ञ श्रीमरितोण्डदार्य महोदय ने इस प्रकार की है— 'तत्र परशिवस्य धृत्या धरणिः, करुणया जलम्, उज्ज्वलतया तेजः, परमानन्दस्पन्देन वायुः, चिद्-व्याप्त्या व्योम, चितिसंकोचचित्तविशिष्टो जीव इति विवेकः।' परशिव की अनन्तशक्तियाँ पृथिव्यादि रूप में परिणत होती हैं। यहाँ अद्वैत वेदान्त की तरह प्रपञ्च को अध्यस्त मानकर मिथ्या नहीं माना जाता प्रत्युत प्रपञ्च को शिव का अवयव माना जाता है अतः वह सत्य है।

उपर्युक्त प्रकार से पर्यालोचन करने पर विदित होता है कि न्याय, वैशेषिक, सांख्य, योग तथा मीमांसा दर्शनों में स्वीकृत तत्त्वज्ञान-अनात्मपदार्थों से आत्मा के पार्थक्य को प्रबोधित करता है। न कि परमतत्त्व के साथ अभेद को। अद्वैत वेदान्त में आत्मा को ब्रह्म के साथ अभेद प्रतिपादित किया जाता है। अतः न्यायादिसम्मत

---

१. सि० शि० १०।९, पृ० १८९.
२. सि० शि० १०।९ तत्त्वप्रदीपिकाव्याख्या, पृ० १८९.

साकमभेदः प्रतिपाद्यत इति न्यायाद्यभिमततत्त्वज्ञानापेक्षयाऽस्य वैशिष्ट्यम्। वीरशैवदर्शने त्वात्मनः परशिवेन साकमभेदस्य बोध्यमानत्वेऽप्यद्वैतवेदान्तवत् तत्त्वज्ञानेन प्रपञ्चस्य बाधो नाङ्गीक्रियते, किन्तु प्रपञ्चस्यापि बाधं विनैव परशिवस्वरूपत्वं प्रतिपाद्यत इत्यद्वैतवेदान्तापेक्षया वीरशैवदर्शनस्य वैशिष्ट्यम्।

**मुक्तिस्वरूपसमीक्षा**

अत्र हि मुक्त आत्मा किं सर्वविधदुःखैरेव विमुच्यते, उतानन्दमप्यनुभवति? इत्येतस्मिन् विषये केचन दुःखाभावपक्षं केचन चानन्दावाप्तिपक्षं रोचन्ते। मुक्तावस्थायामानन्दावाप्तिमङ्गीकुर्वद्भिरपि दुःखनिवृत्तेरपि स्वीकाराद् दुःखनिवृत्तिविषये वादिनामविवाद एव।

तत्र न्यायदर्शने एकविंशतिदुःखानामात्यन्तिकी निवृत्तिर्मुक्तिरिति, वैशेषिकदर्शने च आत्मविशेषगुणोच्छित्तिर्मुक्तिरिति प्रतिपाद्यते। उभयत्राप्यात्मा स्वरूपतः पाषाणवज्जडस्वरूपः। यदा च सप्राणशरीरेन्द्रिययुक्तेन मनसा सह

---

तत्त्वज्ञान की अपेक्षा जीवब्रह्माभेदज्ञान विशिष्ट (विलक्षण) है। वीरशैवदर्शन में तत्त्वज्ञान से प्रपञ्च-बाध के बिना ही जीव और प्रपञ्च की भी परशिवरूपता मानी जाती है। अतः वीरशैवदर्शनअद्वैतवेदान्त की अपेक्षा भी विशिष्ट (विलक्षण) है।

**मुक्तिस्वरूप की समीक्षा**

जिज्ञासा उदित होती है कि मुक्त होने पर जीव की सर्वविध दुःखों की निवृत्ति मात्र मान्य है? अथवा दुःखनिवृत्ति के साथ आनन्द की अनुभूति भी होती है? इसका समाधान है- कतिपय दर्शन के आचार्य दुःखाभावपक्ष को प्रतिपादित करते हैं तथा उनसे अन्य आचार्य आनन्दानुभूति पक्ष को। यतश्च आनन्दानुभूति के समर्थक दुःखनिवृत्ति को भी स्वीकारते हैं अतः दुःखनिवृत्ति के विषय में सभी आचार्य निर्विवादरूप से एकमत हैं।

**न्यायदर्शन** में २१ प्रकार के दुःखों की आत्यन्तिक निवृत्ति को **मुक्ति** कहा गया है।

**वैशेषिक दर्शन** में आत्मा के विशेष गुणों का उच्छेद (विनाश) मुक्ति कहलाता है। इन दोनों दर्शनों में आत्मा स्वरूपतः पाषाणवत् जड माना गया है। जब उस आत्मा का प्राण, शरीर, इन्द्रियों के सहित मनस् के साथ संयोग होता है तब उस (आत्मा) में सुख, दुःख, इच्छा, द्वेष, कर्तृत्व एवं भोक्तृत्व प्रभृति धर्मों तथा ज्ञान की उत्पत्ति होती है। मुक्तावस्था में तादृश मनस् के साथ संयोग नहीं होने से उस

तस्य संयोगो जायते, तदा तस्मिन् सुख-दुखेच्छाद्वेषकर्तृत्व-भोक्तृत्वादीनां धर्माणां ज्ञानस्य चोत्पत्तिर्भवति। मुक्तावस्थायां च तादृशमनसा सह संयोगाभावात् तस्मिन् ज्ञानसुखादीनां केषाञ्चिदपि धर्माणां गुणानां वोत्पत्त्यभावात् स आत्मा निर्विकारेण स्वकीयजडस्वरूपेणावतिष्ठते। तस्मादुभयदर्शनेऽपि मोक्षो न भावरूपः, किन्त्वभावरूपः, अर्थात् मुक्तात्मना हि न किमपि प्राप्यते, किन्तु तस्य सर्वविधदुःखानां विशेषगुणानां वा समुच्छित्तिरेव जायते। अत एव महर्षिणा गौतमेन—"तदत्यन्तविमोक्षोऽपवर्गः"[1], महर्षिणा कणादेन च—"तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः"[2] इति मोक्षस्थितिरुपवर्णिता।

मुक्तावस्थायामानन्दावाप्त्यनङ्गीकारेण न्यायवैशेषिकाभिमतेयं मुक्तिरपुरुषार्थरूपेत्यालोचका आक्षिपन्ते। तत्र—"यदि तु जडः पाषाणनिर्विशेष एव तस्यामवस्थायामात्मा भवेत्, तदलमपवर्गेण। संसार एव वरमस्तु, यत्र तावदन्तरान्तरापि दुःखकलुषितमपि कियदपि सुखमनुभुज्यते। चिन्त्यतां तावत् किमल्पसुखानुभवो भव्य उत सर्वसुखोच्छेद एव"[3] इति श्रीमल्लिषेणसूरिर्दुःखेन

---

(आत्मा) में किसी भी धर्म (ज्ञान, सुख प्रभृति) अथवा गुण की उत्पत्ति नहीं होती। एवञ्च वह आत्मा निर्विकार भाव से जडस्वरूप में स्थित रहता है।

अतश्च न्याय एवं वैशेषिक दर्शनों में मोक्ष भावरूप नहीं है किन्तु अभावरूप है। मुक्त होने पर जीवात्मा को कोई भावपदार्थ प्राप्त नहीं होता किन्तु उसके सर्वविध दुःखों की निवृत्ति हो जाती है अथवा समस्त विशेषगुणों का उच्छेद हो जाता है। अतः महर्षि गौतम ने मोक्षस्वरूप को प्रतिपादित करने हेतु सूत्र निर्मित किया— 'तदत्यन्त- विमोक्षोऽपवर्गः।' तद्वत् महर्षिकणाद का सूत्र है—

'तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः।'

आलोचकों का आक्षेप है कि मुक्तावस्था में आनन्दावाप्ति नहीं होने से न्यायवैशेषिकाभिमत मुक्ति को पुरुषार्थ नहीं कहा जा सकता। श्रीमल्लिषेणसूरि ने सुस्पष्ट कहा है— 'यदि तु जडः पाषाणनिर्विशेष एव तस्यामवस्थायामात्मा भवेत्, तदलमपवर्गेण। संसार एव वरमस्तु, यत्र तावदन्तरान्तरापि दुःखकलुषितमपि कियदपि सुखमनुभुज्यते। चिन्त्यतां तावत् किमल्पसुखानुभवो भव्य उतसर्वसुखोच्छेद एव।' आशय सुस्पष्ट है— दुःख के साथ सुख की भी आत्यन्तिक निवृत्ति को मोक्ष बतलाने

---

१. न्या० सू० १।१।२२.

२. वै० सू० ५।२।१८.

३. स्या० म०, पृ० ६३.

साकं सुखस्याप्यात्यन्तिकीं निवृत्तिं मोक्षं प्रतिपादयतां न्यायवैशेषिकाणां मोक्षापेक्षया यदा कदाचित् सुखलेशप्रदायकं सांसारिकजीवनमेव वरमिति तर्कं प्रस्तौति। किञ्च, मुक्तस्यानन्दधाम्नो गोलोकस्य प्राप्तिं प्रतिपादयद्भिर्वैष्णवैरपि–

वरं वृन्दावने रम्ये शृगालत्वं वृणोम्यहम्।
वैशेषिकोक्तमोक्षात्तु सुखलेशविवर्जितात्।।

इति निरानन्दस्य शिलाकल्पस्य वैशेषिकमोक्षस्यापेक्षया आनन्ददायके वृन्दावने शृगालजन्मन एव श्रेष्ठता प्रतिपाद्यते। कवितार्किकचक्रवर्ती श्रीहर्षमिश्रोऽपि–

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः।।[१]

इति 'अतिशयेन गौः गोतमः' इति व्युत्पत्तिलभ्यसार्थकनामधेयत्वं महर्षेर्गौतमस्य प्रतिपादितवान् अपि च, वर्तमानशरीरपाते सति पुनः शरीरान्तराप्राप्तिर्मोक्ष इति कथयतां नैयायिक-वैशेषिकाणां मुक्तिरापाततो

---

वाले न्यायवैशेषिकों की मुक्ति से अच्छा सांसारिक जीवन है जिसमें यदा कदा सुख का लवलेश तो प्राप्त होता है। यह सर्वजन सुलभ तर्क है। मुक्त को आनन्दधाम **गोलोक** की प्राप्ति होती है। वैष्णवों का कहना है कि वैशेषिक की मुक्ति से अच्छा है आनन्दधाम वृदावन में शृगाल जन्म पाना। तद्यथा—

'वरं वृन्दावने रम्ये.......सुखलेशविवर्जितात्॥१॥'

कवितार्किकचक्रवर्ती श्रीहर्ष ने शिलाकल्प मुक्ति के उपदेष्टा मुनि को अतिशयेन गौःगोतमः की व्युत्पत्ति से युक्त नामवाला कहकर निन्दित किया है।

वर्तमान शरीर के पात होने पर शरीरान्तर की प्राप्ति मोक्ष है ऐसा कहने वाले न्यायवैशेषिकों की उक्ति, चार्वाक की उक्ति— 'मरणं मोक्षः।' के समान है। चार्वाकाभिमत मरण पुरुषार्थ नहीं कहलाता है। न्यायवैशेषिक दर्शनों में तत्त्वज्ञान से मुक्ति की प्राप्ति प्रतिपादित है अतः उनकी मुक्ति पुरुषार्थ है। एवंच मुक्तावस्था में आनन्द का प्रतिषेध करने से आपतित आक्षेपों के निराकरणार्थ नैयायिक भासर्वज्ञ जी को मुक्ति में नित्यसुखाभिव्यक्ति को स्वीकार करना पड़ा। तद्यथा– 'नित्यसंवेद्यमानेन सुखेन विशिष्टाऽऽत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः।'

आशय सुस्पष्ट है— 'आनन्दं ब्रह्मणो रूपम्......' विज्ञानमानन्दं ब्रह्म।' इत्यादि

---

१. नै० च० ७।७५.

'मरणमेव मोक्षः' इति कथयतां चार्वाकाणां मुक्तेः साम्यं भजते, किन्तु मरणस्य सहजावस्थात्वाच्चार्वाकाभिमतो मरणरूपो मोक्षो न पुरुषार्थः। नैयायिक-वैशेषिकैस्तु मुक्तेस्तत्त्वज्ञानप्राप्यत्वस्य प्रतिपादितत्वात् तन्मतानुसारेण मोक्षः पुरुषार्थं इत्येव स्वीक्रियते। एवं मुक्तावस्थायामानन्दाऽनङ्गीकारेणाक्षिप्यमाणा-नामाक्षेपाणां परिहारार्थमेव नैयायिकोऽपि भासर्वज्ञः—"नित्यसंवेद्यमानेन सुखेन विशिष्टाऽऽत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः"[१] इति मुक्तौ नित्यसुखाभिव्यक्तिमङ्गीचकार। तस्यायमाशयः—"आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते", "विज्ञानमानन्दं ब्रह्म"[२] इत्यादिश्रुतिषु मुक्तावानन्दावाप्तेः प्रतिपादितत्वाद् मुख्यार्थे बाधकाभावाच्च नोपचारप्रकल्पनेति।

न्यायवैशेषिकमते परमाणुरूपाणां सर्वेषां द्रव्याणां नित्यत्वाभ्युपगमात् तन्मते मनसोऽपि परमाणुरूपत्वात् तदपि नित्यमेव। तस्मान्मुक्तावस्थायां न मनसो नाशो भवति, किन्तु तस्य नैष्फल्यं जायते, अर्थादात्मना संयुक्तेनापि मनसा न सुखदुःखादीनामुत्पत्तिः। सुखदुःखादीनामुत्पत्तावदृष्टसहकृतात्ममनः-संयोगस्यैव कारणत्वाद् मुक्तावस्थायां चात्मन्यदृष्टाभावाद् निरदृष्टेनात्मना संयुक्तमपि मन उदासीनमेवावतिष्ठते।

प्राभाकरसिद्धान्ते चात्मनो नैयायिकवदेव स्वीकाराद् यथा

---

श्रुतियाँ मुक्तिदशा में आनन्दाभिव्यक्ति का प्रतिपादन करती हैं। यतश्च प्रमाणान्तर से मुख्यार्थबाध नहीं हैं अतः उपचार (लक्षणा) की कल्पना अनुचित है।

अन्य भी विचारणीय बात है— न्यायवैशेषिक मत में परमाणु नित्य हैं। परमाणुरूप मनस् भी नित्य होने से मुक्तावस्था में उसका ध्वंस अमान्य होगा। निष्फल हो जाने से ही उसका ध्वंस शब्द से व्यपदेश किया जाता है— एकविंशतिदुःखध्वंसो मोक्षः। मुक्तिदशा में आत्मा से संयुक्त हुआ भी मनस् सुखादिकी उत्पत्ति में साधन नहीं बनता। कारण यह है— सुखादि की उत्पत्ति में अदृष्टसहकृत आत्ममनःसंयोग को ही कारण माना जाता है। यतश्च मुक्तावस्था में आत्मस्वरूप अधिकरण में अदृष्ट का सद्भाव नहीं होता अतः निरदृष्ट आत्मा से संयुक्त होने वाला भी मनस् उदासीन ही रहता है।

प्राभाकर सिद्धान्त में नैयायिकसम्मत आत्मस्वरूप एवं मुक्तिस्वरूप अभिमत

---

१. न्या० सा०, पृ० ३२.

२. बृ० उ० ३।९।२४.

नैयायिकैर्मुक्तिरङ्गीक्रियते, प्राभाकरैरपि तथैवाभिमन्यते। तस्मात्तत्रोक्ता आक्षेपा अत्राप्यूहनीयाः। भट्टानुयायिष्वपि मुक्तिविषये वैमत्यं दरीदृश्यते।

दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः।
सुखस्य मनसा मुक्तिर्मुक्तिरुक्ता कुमारिलैः।।[१]

इति श्रीनारायणभट्टेन मुक्तौ नित्यसुखाभिव्यक्तिरङ्गीकृता। तच्च सुखं संसारदशायामव्यक्तं सद् मुक्तावस्थायामभिव्यज्यते। तदिदं सुखं नात्मनो भिन्नं किन्त्वात्मस्वरूपमेव, अथापि विनैव मनसा तस्योपभोगो न भवतीति श्रीनारायणभट्टो मुक्तावस्थायां नित्यसुखानुभवार्थं नित्यमनोऽङ्गीचकार[२]।

भट्टानुयायिभिः पार्थसारथिमिश्रैः–"अतः प्रमाणान्तरवशादानन्दवचनं दुःखाभावपरम्, इतरत्तु यथाश्रुतमिति न्याय्यम्। तस्मात् सुखदुःखादि-समस्तवैशेषिकात्मगुणोच्छेदो मोक्षः"[३] इति मुक्तौ नित्यसुखप्राप्तिप्रतिपादकवचनानां दुःखाभावपरत्वमङ्गीकृत्य मुक्तस्यात्यन्तदुःखोच्छेदमात्रत्वं प्रतिपाद्यते।

कुमारिलभट्टानुयायिना नारायणभट्टेन नित्यसुखाभिव्यक्तिर्मुक्तिरिति, सा चात्मस्वरूपैवेति प्रतिपादनादस्येयं कल्पनाऽद्वैतवेदान्तेन साम्यं भजते, किन्तु

---

है। अतः नैयायिकों के प्रति किये गये आक्षेप को प्राभाकरों के साथ भी समझना चाहिए। भट्ट के अनुयायी लोग मुक्ति के विषय में एकमत नहीं हैं।

श्रीनारायण भट्ट ने मुक्ति में नित्यसुख की अभिव्यक्ति का अङ्गीकार किया है। तद्यथा—

'दुःखात्यन्तसमुच्छेदे.....मुक्तिरुक्ता कुमारिलैः।।१।।'

वह नित्यसुख संसारदशा में अव्यक्त रहता है तथा मुक्तावस्था में अभिव्यक्त होता है। यह नित्यसुख आत्मा से अतिरिक्त नहीं अपितु आत्मस्वरूप ही है। यतश्च मनस् के बिना नित्यसुख का उपभोग नहीं हो सकता अतः श्रीनारायणभट्ट ने मुक्तावस्था में नित्यसुख की अनुभूति हेतु नित्यमनस् को स्वीकार किया है।

भट्टानुयायी श्रीपार्थसारथि मिश्र ने अपना मत व्यक्त करने हेतु कहा है— 'अतः प्रमाणान्तरवशादानन्दवचनं दुःखाभावपरम्, इतरत्तु यथाश्रुतमिति न्याय्यम्। तस्मात् सुखदुःखादि-समस्तवैशेषिकात्मगुणोच्छेदो मोक्षः।' श्रीमिश्र ने नित्य-सुख की प्राप्ति

---

१. मा० मे०, पृ० २०१.
२. मा० मे०, पृ० २०१-२०३.
३. शा० दी० तर्कपादे, पृ० १३०.

यथाऽनित्यस्य वैशेषिकसुखस्यानुभवार्थं मनस आवश्यकता वर्तते, तथैवात्मस्वरूपस्यापि नित्यसुखानुभवार्थं नित्यमनस आवश्यकताया अत्र प्रतिपादनेनाद्वैतवेदान्ततोऽत्यन्तं मतमेतद् भिद्यते, अद्वैतवेदान्ते मुक्तावस्थायामात्मातिरिक्तानां सर्वेषां निषेधात्।

सांख्ययोगदर्शने प्रकृतिपुरुषयोः संयोग एव बन्धनम्, तयोर्वियोग एव मुक्तिरित्युच्यते। अत्र संयोगवियोगशब्दाभ्यां न मूर्तद्रव्ययोरिव स्वाभाविकौ संयोगवियोगावभिप्रेतौ, किन्तु पुरुषप्रकृत्योर्भोक्तृभोग्यभावापत्तिरेव संयोगः, विवेकख्यात्या च तादृशभावनिवृत्तौ वियोग इति तस्मात् सांख्ययोगदर्शने पुरुषस्य बन्धमोक्षौ न वास्तविकौ, किन्त्वौपचारिकौ। वस्तुतो बन्धमोक्षौ तु बुद्धावेव पर्यवस्यतः। तदुक्तम्–

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।**[१] **इति।**

---

के प्रतिपादक वचनों का अर्थ दुःखाभाव माना है। अतः एतन्मतानुसार मुक्त का अत्यन्तदुःखोच्छेदमात्र प्रतिपादित है। कुमारिलभट्ट के अनुयायी नारायणभट्ट ने नित्यसुखाभिव्यक्ति को मुक्ति बताकर उसे आत्मस्वरूपा कहा है। अतः उनकी यह कल्पना अद्वैतवेदान्तसिद्धान्त से साम्य रखती है। अन्तर यह है कि अनित्य वैशेषिक सुख के अनुभव हेतु यथा मनस् की सापेक्षता होती है तद्वत् आत्मस्वरूप होने पर भी नित्यसुख की अनुभूति हेतु नित्यमनस् की आवश्यकता नारायण भट्ट ने बतायी है। एतावता यह वेदान्तसिद्धान्त से स्वयं को भिन्न सिद्ध करता है। क्योंकि अद्वैतवेदान्त में मुक्तावस्था में आत्मा के अतिरिक्त अन्य सभी का निषेध किया जाता है।

सांख्य-योगदर्शनों में प्रकृति और पुरुष के संयोग को बन्धन कहा गया है। उनके वियोग को मुक्ति कहा जाता है। यहाँ संयोग एवं वियोग शब्दों से दो मूर्त द्रव्यों के स्वाभाविक संयोग और वियोग अभिप्रेत नहीं हैं। यहाँ संयोग पारिभाषिक है– पुरुष एवं प्रकृति की भोक्तृभोग्यभावापत्ति। तद्वद् वियोग का अर्थ है–विवेकख्याति द्वारा भोक्तृभोग्यभाव की निवृत्ति। एवंच सुस्पष्ट है कि सांख्ययोगदर्शनों में पुरुष के बन्धन-मोक्ष वास्तविक नहीं, किन्तु औपचारिक हैं। वस्तुतः इन दर्शनों में बुद्धि में ही बन्ध एवं मोक्ष की स्थिति पर्यवसित होती है। तद्यथा— 'तस्मान्न बध्यतेऽद्धा.........नानाश्रया प्रकृतिः।।१।।'

---

१. सां० का० ६२.

तस्मादत्र मुक्तो हि पुरुषः सर्वविधौपाधिकसम्बन्धशून्यः सन् शुद्धस्फटिकवत् स्वस्वरूपेणावतिष्ठते। न्यायवैशेषिकैरपि मुक्तात्मनः केवलस्थितिरेवाङ्गीक्रियते, किन्तु सा स्थितिर्जडरूपा, सांख्याभिमतात्मस्थितिश्च चिद्रूपेत्युभयोर्वैलक्षण्यम्।

किञ्च, सांख्ययोगदर्शने पुरुषो यथा नित्यमुक्तस्तथैवाद्वैतवेदान्ते चात्मा नित्यमुक्त एव। अत्राप्यात्मप्रतिबिम्बविशिष्टायामेव बुद्धौ बन्धमोक्षव्यवहारः। सांख्यसिद्धान्ते आनन्दः सत्त्वगुणस्य परिणामः, स च प्रकृतेर्धर्म इति मुक्तस्यानन्दरूपत्वं नाङ्गीक्रियते। अद्वैतवेदान्ते च सुखस्य नित्याऽनित्यभेदेन द्वैविध्यं स्वीकृत्य मुक्तावस्थायामनित्यस्य वैशेषिकस्य सत्त्वगुणपरिणाम-भूतस्यानन्दस्याभावेऽपि नित्यस्यात्मस्वरूपस्यानन्दस्याभिव्यक्तिरङ्गीक्रियते। इदमेवाद्वैतवेदान्तस्य सांख्याद्वैशिष्ट्यम्।

तदेवं न्याय-वैशेषिक-प्रभाकरमीमांसकैर्मुक्तात्मनः केवलं सद्रूपत्वम्, सांख्ययोगदर्शने च सद्रूपेण साकं चिद्रूपत्वम्, भाट्टमीमांसकैरद्वैतवेदान्तिभिश्च

---

सांख्य-योग दर्शनों में मुक्त पुरुष को सर्वविध औपाधिक सम्बन्ध से वर्जित रहते हुए स्फटिकवत् स्वरूप में स्थित कहा जाता है। यद्यपि न्याय-वैशेषिकों द्वारा भी मुक्तात्मा की केवलस्थिति ही मान्य है किन्तु वह स्थिति जडस्वरूप ही है जबकि सांख्याभिमत आत्मस्थिति चिद्रूपा होती है— यह दो सिद्धान्तों में अन्तर है।

दूसरी तरफ देखें तो सांख्य-योग दर्शनों में यथा पुरुष को नित्यमुक्त कहा गया है तद्वत् अद्वैत वेदान्त में भी आत्मा नित्यमुक्त ही है। वेदान्तसिद्धान्त में भी आत्मप्रतिबिम्बविशिष्ट बुद्धि में ही बन्ध एवं मोक्ष का व्यवहार होता है। यतश्च सांख्यसिद्धान्त में आनन्द को सत्त्वगुण का परिणाम माना गया है जो स्वयं प्रकृति का धर्म है। अतः मुक्त को आनन्द रूप नहीं माना जा सकता।

अद्वैत वेदान्द में सुख के दो भेद हैं— नित्यसुख एवम् अनित्यसुख। मुक्तावस्था में अनित्य वैषयिक (सत्त्वगुण परिणाम) आनन्द का अभाव रहने पर भी नित्य आत्मस्वरूप आनन्द की अभिव्यक्ति मान्य है। सांख्य की अपेक्षा अद्वैतवेदान्त का यह वैशिष्ट्य है।

निष्कर्ष यह कि न्याय, वैशेषिक तथा प्राभाकरमीमांसा के आचार्यों ने मुक्तात्मा को केवल सद्रूप माना है। सांख्य-योग दर्शन के आचार्यों ने मुक्तात्मा को सद्रूप होने के साथ चिद्रूप भी माना है। भाट्टमीमांसा एवम् अद्वैतवेदान्त दर्शनों के आचार्यों ने मुक्तात्मा को सच्चिदानन्द रूप माना है। आधुनिक आलोचकों ने

सच्चिदानन्दरूपत्वमिति स्वीकारादाधुनिकालोचका मुक्तिस्वरूपविषये न्यायवैशेषिकादारभ्याऽद्वैतवेदान्तपर्यन्तं क्रमशो विकासवादमभ्युपगम्याद्वैतवेदान्तस्य पूर्णविकसितत्वं प्रतिपादयन्ति[1]। तद्रीत्या विचार्यमाणे सति वीरशैवाभिमतमोक्षस्वरूपमपि पूर्णतया विकसितमिति वक्तुं शक्यते, यतो ह्यत्राप्यद्वैतवेदान्तवद् मुक्तावस्थायां जीवात्मा हि परशिवेन साकमभिन्नो भवति, सा च स्थितिः सच्चिदानन्दरूपेत्यपि वर्ण्यते। तथा चोक्तं श्रीरेणुकभगवत्पादैः-

मुक्तिरेव परा तृप्तिः सच्चिदानन्दलक्षणा।
नित्यतृप्तस्य मुक्तस्य किमन्यैर्भोगसाधनैः।।[2] इति।

मुक्तात्मनः सच्चिदानन्दरूपत्वविषये वीरशैवदर्शनमद्वैतवेदान्तेन साम्यमावहन्नपि वैशिष्ट्यं च भजते। तदेवात्र परिशीलयामः।

अद्वैतवेदान्ते वीरशैवदर्शने च मुक्तात्मनः परमतत्त्वेन ब्रह्मणा परशिवेन वा साकमभेदोऽभ्युपगम्यते। उभयदर्शनयोरपि मुक्तस्य सर्वदुःखनिवृत्तिपूर्वक-परमानन्दप्राप्तिरप्यङ्गीक्रियते। अथाप्युभयोर्मध्ये भेदोऽयं यदद्वैतवेदान्तिभिः

---

मुक्तिस्वरूप के विषय में न्याय-वैशेषिक से लेकर अद्वैतवेदान्तपर्यन्त क्रमशः विकासवाद को स्वीकार किया है। पूर्ण विकसित स्वरूप अद्वैत वेद्रान्त में उन्होंने स्वीकारा है। उक्तरीति से विचार करने पर वीरशैवाभिमत मोक्षस्वरूप को भी पूर्णतया विकसित माना जा सकता है। क्योंकि इस दर्शन में भी मुक्तावस्था में जीवात्मा परशिव के साथ अभेद को प्राप्त कर लेता है। वह स्थिति सच्चिदानन्दस्वरूपा है। तद्यथा— 'मुक्तिरेव परातृप्तिः.......किमन्यैर्भोगसाधनैः॥१॥'

मुक्तात्मा के सच्चिदानन्दरूप होने के विषय में वीरशैवदर्शन अद्वैतवेदान्त के साथ साम्य से युक्त है। पर कतिपय विशेषतायें वीरशैव दर्शन के पक्ष में उपलब्ध हैं उनका परिशीलन आवश्यक है।

अद्वैतवेदान्त और वीरशैवदर्शन में मुक्तात्मा का परतत्त्व (ब्रह्म/परशिव) के साथ अभेद माना जाता है। दोनों दर्शनों में मुक्त की सर्वदुःखनिवृत्ति के साथ परमानन्द की प्राप्ति भी स्वीकृत है। इन दोनों दर्शनों में अन्तर यह है कि अद्वैतवेदान्ती संसारावस्था में प्रतीयमान जीवब्रह्मभेद को कल्पित मानते हैं जबकि वीरशैव सत् मानते हैं। भेद की सत्यता रहने पर ही अभेद का स्वारसिक आनन्द है। यथा जिसने

---

१. भारतीय दर्शन में मोक्षचिन्तन, पृ० १२६-१२७.

२. सि० शि १८।६, पृ० १५२.

संसारावस्थायां प्रतीयमानो जीवब्रह्मणोर्भेदः कल्पित इति, वीरशैवैश्च सत्य इत्युच्यते। भेदस्य सत्यत्व एवाभेदस्य स्वारस्यम्। यथा पूर्वमनुभूतकष्टस्यैव पश्चाद्भाविसुखानुभवस्य माहात्म्यं स्पष्टं प्रतीयते, तथा वस्तुतः परमात्मनो भिन्नस्यैव तदभेदे सत्यद्वैतानन्दस्य स्फुटतया प्रतीतिर्जायते। यच्चाद्वैतिभिर्व्यावहारिकभेदमङ्गीकृत्याभेदो व्यवस्थाप्यते, तन्न समीचीनम्, भेदस्य पारमार्थिकत्वे दोषाभावात्।

ननु जीवः परमार्थतः परशिवाद् भिन्नश्चेत् कथमनयोरभेदः स्यात्? इति चेच्छ्रूयतां रहस्यम्–"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्[1]।।" इति श्रुतिर्नदीसमुद्रदृष्टान्तेन जीवस्य मुक्तिमभिदधाति। अत एव यथा समुद्रजलस्यैव मेघैर्वर्षितस्य नदीरूपत्वप्राप्तिः, तथा शक्तिसंकोचरूपमलत्रयावरणेन शिवांशस्यैव जीवत्वप्राप्तिर्भवति। तस्माद्यथा नदीसमुद्रयोः स्वाभाविको भेदस्तथा जीवपरशिवयोरपि भेदः सत्य एव। समुद्राद् वस्तुतो भिन्नापि नदी यदा सागरं प्रविष्टा तदा तज्जले तस्याः स्वाभाविकमपि नदीत्वं निवृत्तं भवति, तथा परशिवाद् भिन्नोऽयं जीवो मुक्तौ परशिवेनैकीभूतः सन् स्वकीयं जीवत्वं विहाय

---

पूर्व में कष्ट की अनुभूति की है उसको पश्चाद्भावी सुखानुभूति का माहात्म्य सुविदित होता है। तद्वत् वस्तुतः परमात्मा से भिन्न जीव को अभेदप्राप्ति होने पर अद्वैतानन्द की सुस्पष्ट प्रतीति होती है। अद्वैताचार्यों ने व्यावहारिक भेद को मानकर अभेद की व्यवस्था की है वह समीचीन नहीं है। भेद को पारमार्थिक मानने पर दोष नहीं होने से व्यावहारिक मानना समीचीन नहीं है।

अब जिज्ञासा होती है— जीव परमार्थतः परशिव से भिन्न हो तो इन दोनों में अभेद कैसे हो सकता है। इसका समाधान रहस्यात्मक है। 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।' इस श्रुति में नदीसमुद्रदृष्टान्त से जीव की मुक्ति प्रतिपादित है। यथा समुद्र का जल ही मेघों द्वारा वर्षित होने पर नदीरूपता को प्राप्त होता है तथा शक्तिसंकोच रूप त्रिविधमल के आवरण होने से शिवांश की जीवत्वप्राप्ति होती है। एवंच यथा नदी और समुद्र के मध्य स्वाभाविक भेद होता है तथा जीव एवं परशिव के मध्य भी भेद सत्य ही है। समुद्र से वस्तुतः भिन्न होने पर भी नदी जब सागर में प्रविष्ट हो जाती है तब नदी-जल में उसका स्वाभाविक नदीत्व निवृत्त हो जाता है। तद्वत्

---

१. मुण्ड० ३।२।८.

परशिवत्वं प्राप्नोति। श्रुत्युक्तोऽयं दृष्टान्तः संसारावस्थायां जीवशिवयोर्भेदस्य सत्यत्वं प्रतिपादयन् वीरशैवदर्शन एव समन्वितो भवति, नाद्वैतदर्शने। अद्वैतवेदान्ते च जीवभावस्य मिथ्यात्वात् तन्नामरूपादीनामपि मिथ्यात्वमेव। तस्मात् 'नामरूपे विहाय' इति श्रुत्युक्तिस्तत्र न समन्विता भवति। हानं हि सत्यस्यैव भवति। मिथ्याभूतस्य तु निवृत्तिरेव, न तु हानम्। 'विहाय' इत्यस्य लक्षणया निवृत्तिपरत्वेन प्रतिपादनमस्वरसमेव। भेदस्यौपाधिकत्वात् श्रुत्युक्तो नदीसमुद्रदृष्टान्तो न युज्यत एवेति स्पष्टम्। किञ्च–

कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्।
मानवः शिवयोगेन शिवो भवति सर्वदा।।[१]

इत्यागमवचनेनापि मुक्तौ सत्यभेदस्यैव हानं निरूप्यते। अत्राऽयं भावः–

यथा भृङ्गाद् भिन्नरूपोऽपि कीटो नैरन्तर्येण भृङ्गचिन्तनसामर्थ्येन कीटाकारं कीटस्वभावं च परित्यज्य भ्रमराकारं भ्रमरत्वं च प्राप्नोति; अपि च, यथा भ्रमरभूतोऽयं कीटः पुनः कीटो न भवति, तथाऽनादिकालादनादिमलावरणेन

---

परशिव से भिन्न जीव मुक्तिदशा में परशिव के साथ एकीभूत होकर स्वकीय जीवत्व को छोड़कर परशिवत्व को प्राप्त कर लेता है। श्रुतिप्रोक्त यह दृष्टान्त संसारावस्था में जीव और शिव के भेद की सत्यता को प्रतिपादित करता हुआ वीरशैवदर्शन में ही समन्वित होता है, अद्वैतदर्शन में नहीं।

अद्वैतवेदान्त में जीवभाव मिथ्या है तथा नामरूपादि भी मिथ्या है। अतः 'नामरूपे विहाय' यह श्रुतिकथन अद्वैतवेदान्त में समन्वित नहीं होता है। हान तो सत्य का ही होता है। मिथ्यावस्तु की तो निवृत्ति होती है, हान नहीं। 'विहाय' शब्द का लक्षणावृत्ति से निवृत्ति अर्थ करना अस्वारसिक है। अद्वैतवेदान्त में भेद के औपाधिक होने से श्रुतिप्रोक्त नदी-समुद्र दृष्टान्त उपयुक्त नहीं है यह अत्यन्त सुस्पष्ट है।

श्रुतिवत् आगमवचन से भी सत्य भेद का हान ही मुक्ति-दशा में निरूपित होता है। तद्यथा—

'कीटो भ्रमरयोगेन..........................भवति सर्वदा।।१।।'

आशय यह है — भृङ्ग से भिन्न कीट निरन्तर भृङ्ग का चिन्तन कर कीटाकार एवं कीटस्वभाव का परित्याग कर भ्रमराकृति एवं भ्रमरस्वभाव को प्राप्त कर लेता है। इतना ही नहीं, भ्रमरत्व को प्राप्त हुआ जीव-कीट, पुनः कीट नहीं बनता तद्वत्

---

१. ब्र० सू० श्रीकर० १।२।६.

परशिवाद् भिन्नोऽयं जीवोऽनवरतं 'शिवोऽहम्' इत्याकारकशिवध्यानेन शिवरूपः सञ्जायते।

अपरं च, रससम्पर्कसामर्थ्येन ताम्रस्य ताम्रत्वं सहजमपि विनश्यति, सुवर्णत्वं च प्राप्यते। एवमेव जलं सत्यमपि स्वातिनक्षत्रसमये शुक्तौ पतितं तत्सम्बन्धसामर्थ्येन सहजमपि जलभावं परित्यज्यानर्घमुक्ताकारतां धत्ते, पश्चाच्च जलरूपं नाधिगच्छति। एवं हि यदा लोकेऽपि जडपदार्थेष्वप्यसाधारणवस्तुसम्पर्केण सत्यभूतस्यापि स्वभावस्य निवृत्तिर्दृश्यत इति सर्वानुभवसिद्धम्, तर्ह्यघटित-घटनासमर्थः परशिवः स्वकीयोपासनायामासक्तस्य शुद्धजीवस्य शक्तिसंकोचरूपं स्वाभाविकं मलं परिहृत्य स्वस्मिन् विलयरूपमैक्यमनुगृह्णातीत्यत्र किमाश्चर्यम्।

अत एव–"अभेदबोधे प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदोऽपि तन्त्रम्। यथा 'नीलो घट' इत्यत्र नीलत्वघटत्वोर्भेदस्य 'नीलाऽभिन्नो घटः'इत्यभेदबोधे कारणत्वमिष्यते, तथा "तत्त्वमसि", "जीवस्तु परमः शिवः" इति वैदिकलौकिकवाक्यजनितपरोक्षबोधे "अहं ब्रह्मास्मि", "ॐ शिवोऽहम्" इति वैदिकलौकिकवाक्यजनिताऽपरोक्षबोधे च प्रकारता-

---

अनादिकाल से अनादिमलावरण द्वारा परशिव से भिन्न बना जीव सतत् 'शिवोऽहम्' के ध्यान से शिवरूप बन जाता है।

अन्य भी ध्यातव्य बात है— रससम्पर्क के सामर्थ्य से ताम्र का सहज ताम्रत्व विनष्ट हो जाता है तथा सुर्वणत्व प्राप्त होता है। तद्वत् सत्य जल ही स्वाति नक्षत्र में शुक्ति में आपतित होकर तत्सम्बन्धसामर्थ्य से सहज जलभाव का परित्याग कर देता है एवम् अनर्घमुक्ताकृति को धारित कर लेता है तथा कभी भी बाद में वह पुनः जलरूप में वापस नहीं लौटता है। एवं च लोकव्यवहार में जडपदार्थों में भी असाधारण वस्तु के सम्पर्क से सत्यस्वभाव की निवृत्ति देखी जाती है— यह सर्वानुभवसिद्ध है।

तब अघटितघटनासमर्थ परशिव अपनी उपासना में व्यापृत शुद्ध जीव के शक्तिसंकोचरूप स्वाभाविक मल का परिहार कर निजस्वरूप में विलय कर ऐक्य (अभेद) दान से अनुगृहीत करता हो तो इसमें आश्चर्य क्या है?

अतएव अभेदबोध के प्रति प्रकारतावच्छेदक एवम् विशेष्यतावच्छेदक धर्मों का भेद कारण माना जाता है। यथा 'नीलोघटः' वाक्य से नीलाभिन्नो घटः इस अभेद बोध की उत्पत्ति के प्रति नीलत्व एवम् घटत्व (प्रकारतावच्छेदक+ विशेष्यतावच्छेदक)

वच्छेदकविशेष्यतावच्छेदकयोर्भेदस्य कारणत्वमिष्यते। एतच्च भेदाऽभेदयोः पारमार्थिकत्वे सङ्गच्छते। अन्यथा "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इति मायावादिस्वीकृते जीवमिथ्यात्वपक्षे जगन्मिथ्यात्वपक्षे च समानप्रत्यासत्त्या प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदाभावात् कथमभेदबोधः सङ्गच्छेत। यथा 'घटो घटः' इत्यादौ प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदाभावादभेदबोधस्य प्रतिकूलत्वम्, तथैव मायावादेऽपि 'जीवो ब्रह्मैव' इत्यत्रावधारणोक्तजीवमिथ्याङ्गीकारे सति जीवे ब्रह्मत्वबोधात् 'ब्रह्म ब्रह्मैव' इति वाक्यार्थावगमेनात्रापि प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदाभावाज्जीवब्रह्मणोरभेदबोधस्य प्रतिकूलत्वमनिवार्यम्। तस्मात् "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय"[१] इत्यादिश्रुतिशतप्रबोधितं नामरूपापन्नदशायां सूक्ष्म-स्थूलशक्तिरूप-प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदं तात्त्विकमङ्गीकृत्य स्वशक्तिविकासवशेन नामरूपविनिर्मुक्तदशायां जीवानां परशिवेन सामरस्यं प्रतिपादयितुं शिवाद्वैतसिद्धान्त एव सुगमः पन्थाः"[२] इति पूवल्लीवृहन्मठीय-

---

धर्मों का भेद कारण माना जाता है। तद्वत् 'तत्त्वमसि।' एवम् 'जीवस्तु परमः शिवः।' इस वैदिक तथा लौकिक वाक्यों से उत्पन्न अपरोक्षबोध में प्रकारतावच्छेदक एवं विशेष्यतावच्छेदक धर्मों का भेद कारण होता है। यह कार्यकारणभाव भेद एवम् अभेद के पारमार्थिक होने पर ही युक्तिसंगत होता है। अन्यथा 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।' यह मायावाद में स्वीकृत जीवमिथ्यात्व एवं जगन्मिथ्यात्व पक्ष में समानप्रत्यासत्ति से प्रकारतावच्छेदक एवं विशेष्यतावच्छेदक धर्मों में भेद नहीं होने पर अभेदबोध की उपपत्ति कैसे हो सकती है। यद्वत् 'घटोघटः' स्थल में प्रकारतावच्छेदक एवं विशेष्यतावच्छेदक धर्मों में भेद नहीं होने से अभेदबोध की प्रतिकूलता रहती है, तद्वत् मायावाद में 'जीवो ब्रह्मैव' इस वाक्य से अवधारणवचन के जीवमिथ्यात्व का अङ्गीकार करने से जीव में ब्रह्मबुद्धि होने से 'ब्रह्म ब्रह्मैव।' वाक्यार्थ-बोध होने से यहाँ भी प्रकारतावच्छेदक एवं विशेष्यतावच्छेदक धर्मों के मध्य भेद नहीं होने से जीव और ब्रंह्म के अभेदबोध की प्रतिकूलता अनिवार्य हो उठती है। अतः 'यथा नद्यः स्यन्दमानाः........।' इत्यादि श्रुतियों के द्वारा प्रबोधित सूक्ष्म-स्थूल-शक्तिरूप प्रकारतावच्छेदक एवं विशेष्यतावच्छेदक धर्मों के तात्त्विक भेद को स्वीकृत कर स्वशक्तिविकासवशात् नामरूप मुक्त दशा में जीवों का परशिव के साथ सामरस्य प्रतिपादन करने हेतु शिवाद्वैत सिद्धान्त ही सुगम राजमार्ग है।' इस आशय

---

१. मुण्ड० ३।२।८.
२. शि० प०, पृ० ५५-५६.

श्रीनीलकण्ठशिवाचार्यैरभेदबोधस्य वास्तविकभेदतन्त्रत्वमुक्त्वा तच्च शिवाद्वैताख्ये वीरशैवदर्शन एव सम्भवतीति वीरशैवदर्शनस्य वैशिष्ट्यमुक्तम्।

श्रीपतिपण्डिताराध्यभगवत्पादा अपि–"तस्मादात्यन्तिकपाशनिवृत्ति-पूर्वकशिवत्वप्राप्तिरेव मुक्तिरित्युपदिश्यते। न चागन्तुकत्वेनानित्यत्वात् कथं शिवत्वप्राप्तिरेव मुक्तिरिति वाच्यम्, भ्रमरकीटन्यायेन सत्यकृमेः सत्यभ्रमरत्वप्राप्तिदर्शनात् सत्यात्मकस्य जलस्य स्वभावनिवृत्तिपूर्वकसत्यमौक्ति-कत्वप्राप्तिदर्शनात् किमर्थं बन्धमिथ्यात्वकल्पनमिति विवेकिभिर्बोद्धव्यम्। ननु मरुमरीचिकायां भासमानस्यासत्यस्य तोयज्ञानस्य सत्यमरीचिकाज्ञानं निवर्तकमिति व्याप्तिबलाज्ज्ञानेन सत्यस्य कथं निवृत्तिः इति चेन्न, सत्यस्य पूर्वज्ञानस्योत्तरज्ञानेन, स्मृत्या संस्कारस्य, शिवस्मरणेन पापस्य, प्रियस्मरणेन दुःखस्य, प्रत्यधिकरणं संशयस्य पूर्वपक्षनिर्णयेन, पूर्वपक्षस्य च सिद्धान्तेन निवृत्तिदर्शनात्"[१] इति सत्यकृमेः सत्यभ्रमरप्राप्तिवत् सत्यस्यापि जीवस्य बन्धनिवृत्तौ सत्यशिवत्वप्राप्तिः संभवतीति निर्णीय सत्यबन्धनमपि ज्ञानेन निवर्त्यत इति युक्तिमपि प्रदर्शितवन्तः।

---

का प्रकाशन पूवल्लीबृहन्मठीय श्रीश्रीनीलकण्ठशिवाचार्य ने किया है। इसप्रकार वीरशैवदर्शन का वैशिष्ट्य सुविवेचित होता है।

श्रीपतिपण्डिताराध्य भगवत्पाद ने निम्नाङ्कित सन्दर्भवाक्यों द्वारा सत्यक्रिमि द्वारा सत्यभ्रमराकृतिप्राप्तिवत् सत्यजीव के बन्ध की निवृत्तिद्वारा सत्यशिवत्व की प्राप्ति सम्भव है–ऐसा निर्णय प्रस्तुत कर सत्यबन्धन का ज्ञान से निवर्तन की युक्ति भी दर्शायी है। तद्यथा—

'तस्मादात्यन्तिकपाशनिवृत्ति.......पूर्वपक्षस्य च सिद्धान्तेन निवृत्तिदर्शनात्।'

सभी दार्शनिक सिद्धान्तों को परितः विचार करने पर विदित होता है कि न्याय, वैशेषिक, सांख्य, योग तथा पूर्वमीमांसा के आचार्यों ने मुक्तावस्था में परमतत्त्व के साथ अभेद का प्रतिपादन नहीं किया है तथा उपक्रमोपसंहार प्रभृति की अनदेखी कर द्वैतश्रुतियों की प्रामाणिकता का प्रतिपादन किया है एवम् अद्वैतश्रुतियों की उपचारितार्थता को प्रतिपादित किया है।

दूसरी ओर अद्वैत श्रुतियों की प्रामाणिकता का अभिधान करते हुए अद्वैत वेदान्ती द्वैतश्रुतियों की गौणार्थता का अभिधान करते हैं। अतः द्विविधदार्शनिक

---

१. ब्र० सू० श्रीकर० १।१।१.

तदेवं विचार्यमाणे सति मुक्तावस्थायां केनचित् परमतत्त्वेन साकमभेदमप्रतिपादयन्तो नैयायिक-वैशेषिक-सांख्य-योग-पूर्वमीमांसका द्वैतश्रुतीनामेव प्रामाणिकतां प्रतिपादयन्तोऽद्वैतश्रुतीनामुपचरितार्थत्वमङ्गीकुर्वन्ति। एवमेवाद्वैतश्रुतीनामेव प्रामाणिकतां कथयन्तोऽद्वैतवेदान्तिनो द्वैतश्रुतीनां गौणार्थत्वं स्वीकुर्वन्ति। तस्मादेतानि दर्शनानि श्रुत्यैकदेशीनीत्युच्यन्ते। वीरशैवदर्शने च बद्धावस्थायां द्वैतस्य, मुक्तावस्थायामद्वैतस्य च स्वीकारादिदं दर्शनं सर्वश्रुतिसमन्वयात्मकमित्युच्यते।

अपि च, मुक्तिसोपानाख्येषु षट्स्थलेषु साधको भक्तमाहेश्वरावस्थयोर्द्वैतभावनया, प्रसादिप्राणलिङ्ग्यवस्थयोर्भेदाऽभेदभावनया, शरण-ऐक्यावस्थयोश्चाभेदभावनया शिवोपासनां कृत्वा शिवस्वरूपो भवतीति प्रतिपादितत्वाद् वीरशैवदर्शनं द्वैत-द्वैताद्वैत-अद्वैतप्रतिपादकानां सर्वश्रुतीनां समन्वयरूपमिति वक्तुं शक्यते।

## जीवन्मुक्तिसमीक्षा

जीवन्नेव मुक्तो जीवन्मुक्तः, तस्य स्थितिर्जीवन्मुक्तिः। इयमवस्था नैयायिक-वैशेषिकैर्नाङ्गीक्रियते। तन्मते एकविंशतिविधदुःखध्वंसो हि मुक्तिः. तत्रैकविंशतिदुःखेषु शरीरस्यापि गणना कृता। जीवन्मुक्तौ च

---

श्रुत्येकदेशी कहलाते हैं। इसके विपरीत वीरशैवदर्शन में बद्धावस्था में द्वैत का अङ्गीकार तथा मुक्तावस्था में अद्वैत का अङ्गीकार किया गया है। परिणामस्वरूप सर्वश्रुति का समन्वय इस वीरशैवदर्शन में समादृत हुआ है।

मुक्तिसोपानों (षट्स्थलों) में भक्तस्थल तथा माहेश्वर स्थल में भेदभावना, प्रसादिस्थल एवं प्राणलिङ्गिस्थल में भेदाभेदभावना तथा शरणस्थल एवम् ऐक्यस्थल में अभेदभावना को आत्मसात् कर परशिव की उपासना करने वाला साधक शिवप्रमातृभाव में सुप्रतिष्ठ होता है। एतादृश प्रतिपादनपाटव प्रवीण वीरशैवदर्शन- द्वैतश्रुति, द्वैताद्वैतश्रुति तथा अद्वैतश्रुति का समन्वयक होने से श्लाघनीय है।

## जीवन्मुक्ति-समीक्षा

शरीरप्राणादिसम्बन्ध के रहते मुक्त हो जाना जीवन्मुक्त कहलाता है। यह अवस्था न्यायवैशेषिक दर्शनों में अस्वीकार्य है। क्योंकि उनके मत में २१ प्रकार के दुःखध्वंस को **मुक्ति** कहा जाता है। यतश्च २१ दुःखों में एक शरीर भी परिगणित है अतः शरीर के रहते मुक्ति नहीं सम्भव है तो जीवन्मुक्ति कैसे सम्भव

शरीरादीनामवस्थितिरपेक्ष्यते। तस्माद् दुःखरूपस्य शरीरस्य सत्त्वे कथं मुक्तिरिति तत्सूत्रभाष्यकाराणामाशयः न्यायवार्त्तिककारः श्रीभारद्वाजोद्योतकरो[१] वृत्तिकृद्विश्वनाथश्च[२] जीवन्मुक्तिमङ्गीचक्रतुः। तत्रोद्योतकरो जीवन्मुक्तेरनङ्गीकारे शास्त्रसम्प्रदायो विच्छिद्येत, शास्त्राणि च न तत्त्वदृक्पूर्वकाणीति धूर्तप्रणीतानि स्युः, अत एवाप्रमाणानि स्युरिति तदर्थं जीवन्मुक्तिमङ्गीकृत्य तत्प्रणीतत्वेन च शास्त्राणां प्रामाण्यमभिदधाति। एवमेव वृत्तिकारो विश्वनाथोऽपि भाषते। तदवलोकनेनेदमेव ज्ञायते नैयायिकानां विचारा गच्छता कालेन विकासोन्मुखा अभूवन्निति।

सांख्ययोगदर्शनयोः 'नास्मि', 'नाऽहम्', 'न मे' इत्याकारकेण तत्त्वज्ञानेन मुक्तिरित्युच्यते। इदं च ज्ञानं जीवत एव पुरुषस्य सम्भवतीत्युभयत्र जीवन्मुक्तिरङ्गीकृता। अत एवोक्तमीश्वरकृष्णेन–

---

हो सकती है। यतश्च जीवन्मुक्ति में शरीरप्राणादि की स्थिति अभीष्ट है अतः सूत्रकार एवं भाष्यकार ने जीवन्मुक्ति को अस्वीकार्य कहा है। न्यावार्तिककार श्रीभारद्वाज उद्योतकर ने तथा वृत्तिकार विश्वनाथ ने भी जीवन्मुक्ति को स्वीकार्य कहा है। उद्योतकर ने उद्घोष किया कि जीवन्मुक्त अस्वीकार्य हो तो शास्त्रसम्प्रदाय का विच्छेद होगा। शास्त्र वही है जो तत्त्वद्रष्टा द्वारा साक्षात्कृत हो अन्यथा उनका धूर्तप्रणीतत्व होना आपतित होगा और वह अप्रमाण हो जावेंगे। अतः उन्होंने जीवन्मुक्ति को स्वीकार्य बताया तथा जीवन्मुक्तों द्वारा रचित होने से ही शास्त्रों के प्रामाण्य का अभिधान किया। वृत्तिकार विश्वनाथ ने भी उद्योकर की तरह जीवन्मुक्ति का प्रबल समर्थन किया। इनके विचारों का अनुशीलन करने से सुविदित होता है कि उत्तरवर्ती काल में सिद्धान्तों के विशद विवेचन अत्यन्त मनोज्ञ बन गये हैं।

सांख्य और योग दर्शनों में नास्मि, नाऽहम्, न मे–इत्याकारक तत्त्वज्ञान से मुक्ति की लभ्यता प्रतिपादित है। यह ज्ञान जीवनकाल में ही पुरुष को अलङ्कृत करते हैं अतः इन दोनों दर्शनों में जीवन्मुक्ति सर्वथा स्वीकार्य है। ईश्वरकृष्ण ने सुस्पष्ट कहा है—

---

१. न्या० सू० वा० १।१।१.

२. न्या० सू० वृ० १।१।१.

सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ।
तिष्ठति संस्कारवशात् चक्रभ्रमिवद् धृतशरीरः।।[१]इति।

तत्र मीमांसकाः—भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाश्चेति बन्धनस्य त्रैविध्यमङ्गीकृत्य तत्सम्बन्धेनात्मनो बन्धः, सम्बन्धविलयेन च मोक्ष इति प्रतिपादयन्ति। तस्माज्जीवन्मुक्तौ शरीरसम्बन्धस्य विद्यमानत्वात् तत्र न मुक्तिरित्येतदद्दर्शनेऽपि न्यायवैशेषिकवज्जीवन्मुक्तेर्नावकाशः।

अद्वैतवेदान्ते तत्त्वज्ञानेनाविद्याया विलयेऽपि क्षालितलशुनभाण्डानुवृत्त-लशुनवासनाकल्पोऽविद्यासंस्कारस्तत्त्वज्ञानानन्तरमप्यनुवर्तते, तेनैव मुक्तस्य देहाद्यनुवृत्तिः, यद्वा तत्त्वज्ञानेनाविद्याया आवरणांशस्य नाशेऽपि विक्षेपांशोऽनुवर्तते, तेनैव शरीराद्यनुवृत्तिरिति जीवनस्य मोक्षस्य च सामञ्जस्यं प्रतिपाद्य जीवन्मुक्तिर्दृढतापूर्वकमङ्गीक्रियते। अत्राऽयं भावः—अद्वैतवेदान्तानुसारेणात्मा

---

'सम्यग्ज्ञानाधिगमाद्........चक्रभ्रमिवद्धृतशरीरः।।१।।'

मीमांसा के आचार्य त्रिविध बन्धन का अङ्गीकार करते हैं— १. भोगायतन शरीर २. भोगसाधन इन्द्रियवर्ग तथा ३. भोग्य शब्दादि विषय। इनके सम्बन्ध से आत्मा का बन्ध होता है तथा सम्बन्ध के विलय हो जाने से मोक्ष प्राप्त होता है। तदनुसार मीमांसादर्शन में भी (न्यायवैशेषिकों की भाँति) शरीरसम्बन्ध-सापेक्ष जीवन्मुक्ति में मुक्तिरूपतां नैव सुघटित होगी।

अद्वैतवेदान्त में तत्त्वज्ञान से अविद्या के विलय हो जाने पर भी क्षालितलशुनभाण्ड में अनुवृत्त लशुनवासनाकल्प अविद्यासंस्कार का अनुवर्तन अप्रतिषिद्ध रहता है। उक्त संस्कार से ही मुक्त के देहादि की अनुवृत्ति होती है। अथवा तत्त्वज्ञान द्वारा अविद्या के आवरणांश का नाश हो जाने पर भी विक्षेपांश का अनुवर्तन प्रतिषिद्ध नहीं होता। अतएव शरीरादि की अनुवृत्ति बनी रहती है। एतावता जीवन एवं मोक्ष इन दोनों के सामञ्जस्य उपपन्न होने से सुदढतया जीवन्मुक्ति स्वीकार्य है।

आशय यह है— अद्वैतवेदान्त के अनुसार शरीरादि के सम्बन्धमात्र से आत्मा का बन्धन नहीं होता अथवा सम्बन्धविरहमात्र से आत्मा की मुक्ति नहीं होती। प्रत्युत शरीरादि के साथ ममता होना बन्धन है तथा ममत्वाभिमानरहित होना

---

१. सां० का० ६७.

शरीरादिभिः सम्बन्धमात्रेण न बध्यते, सम्बन्धविरहमात्रेण च न मुच्यते। किन्तु–

द्वे पदे बन्धमोक्षाय ममेति निर्ममेति च।
ममेति बध्यते जन्तुर्न ममेति विमुच्यते।।[१]

इत्युक्त्या शरीरादिषु ममत्वे सति बन्धः, तदभिमानराहित्ये च मुक्तिः। तस्मात् तत्त्वज्ञः शरीरेण सम्बद्धोऽपि शरीरादिषु तस्य ममत्वबुद्धिर्निवृत्तेति स जीवन्मुक्तो भवितुमर्हति। अत एव सांख्यैरपि 'नाऽहम्', 'न मे', 'नास्मि' इत्यभिमानशून्यत्वमेव तत्त्वज्ञानमित्यङ्गीकारात् तन्मतेऽपि जीवन्मुक्तिः सम्भवति।

वीरशैवदर्शनेऽपि शिवदानसम्पन्नो हि पुरुषः सर्वं शिवमयं पश्यतीति सोऽप्यहङ्कारममकारशून्यो भवतीत्यत्रापि जीवन्मुक्तिरङ्गीकृतैव। अद्वैतवेदान्ते तत्त्वज्ञः सर्वस्यापि प्रपञ्चस्य मिथ्यात्वबुद्ध्या ममकारशून्यश्चेद् वीरशैवदर्शनेऽपि प्रपञ्चस्यामिथ्यात्वात् सर्वं शिवमयं पश्यन् स ममकारशून्यो भवतीत्ययं विशेषः।

---

मुक्ति है। तद्यथा–

'द्वे पदे ........................................ ममेति विमुच्यते।।१।।'

एवंच तत्त्वसाक्षात्कारी सिद्ध शिवयोगी, शरीर से सम्बद्ध रहकर भी शरीरादि में ममत्वबुद्धि की निवृत्ति होने से जीवन्मुक्त बनकर अनुग्रहमूर्तिरूप से लोकपूजित होता है।

अन्यथा नाहम्, नमे, नास्मि की अभिमानशून्यता ही तत्त्वज्ञान है एतन्मतावलम्बी सांख्यनय में जीवन्मुक्ति की सम्भावना निरस्त हो जायगी।

वीरशैवदर्शन में शिवज्ञानसम्पन्न साधक यतः सम्पूर्ण जगत् को शिवमय देखता है। एवंच अहंकार और ममकार से रहित होकर भी जीवन्मुक्ति को अधिगत कर लेता है।

अद्वैतवेदान्त में तत्त्ववेत्ता सर्वप्रपञ्च की मिथ्यात्वबुद्धि द्वारा ममकार शून्य होता है किन्तु वीरशैवदर्शन में प्रपञ्च के अभिथ्यात्व से साधक, सम्पूर्ण विश्वप्रपञ्च को शिवमय देखता है और ममकारशून्य होता है। यह वीरशैवदर्शन का वैशिष्ट्य सुतरां स्तुत्य है। श्रीरेणुक भगवान् की शब्दावली का अवलोकन करें—

---

१. कुलार्णव० १।१११.

तदुक्तं श्रीरेणुकभगवत्पादैः—

स्वस्वरूपं शिवाकारं ज्योतिः साक्षाद्विचिन्तयन्।
देहवानपि निर्देहो जीवन्मुक्तो हि साधकः।।[१]
गलिताहङ्कृतिग्रन्थिः क्रीडाकल्पितविग्रहः।
जीवन्मुक्तश्चरेद्योगी देहिवन्निरुपाधिकः।।[२]
इन्द्रियाणि समस्तानि शरीरं भोगसाधनम्।
शिवपूजाङ्गभावेन भावयन् मुक्तिमाप्नुयात्।।[३]
सर्वेन्द्रियगतं सौख्यं दुःखं वा कर्मसम्भवम्।
शिवार्थं भावयन् योगी जीवन्मुक्तो भविष्यति।।[४] इति।

तदेवं तत्त्वज्ञस्य शिवमयदृष्टिप्राप्त्या ''शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते'' इति श्रीरेणुकभगवत्पादोक्त्या स्वात्मानं सर्वं जगच्च शिवरूपेण पश्यन् जीवन्मुक्तिविलक्षणमानन्दं चानुभवन्नन्ते शिवसायुज्यमाप्नोतीतीदमस्य दर्शनान्तरापेक्षया वैशिष्ट्यमिति शिवम्।।

---

'स्वस्वरूपं शिवाकारं........भावयन् मुक्तिमाप्नुयात् ।।३।।'

तथा

'सर्वेन्द्रियगतं सौख्यं.......जीवन्मुक्तो भविष्यति।।१।।'

उपर्युक्त विवेचन से सुविदित होता है कि तत्त्वसाक्षात्कारी साधक शिवमय-दृष्टि- सम्पन्न होकर शिवात्मकमिदं सर्वम् की भावना से भावित होकर स्वयं को तद्वत् सम्पूर्ण जगत् को शिवरूप से देखता हुआ जीवन्मुक्तरूप से विलक्षण आनन्दमयभाव का अनुभव करता है। शरीरत्याग के पश्चात् वह शिवसायुज्य को प्राप्तकर (विदेहमुक्ति की प्राप्ति से) समुल्लसित होता है। यह वैशिष्ट्य वीरशैवदर्शन को अतिशय श्लाघनीय बनाता है।।

***

१. सि० शि० १६।६, पृ० ८९.
२. सि० शि० १७।१३, पृ० १०२.
३. सि० सि० १७।११, पृ० ११४.
४. सि० शि० १७।८, पृ० ११७.

श्रीसाम्बसदाशिवाय नमः

# अष्टमः परिच्छेदः

## सिद्धान्तशिखामणेर्विशिष्टाः सिद्धान्ताः

तदेतावता पूर्वतनपरिच्छेदेष्वीश्वर-जीव-जगद्-बन्ध-मोक्षाख्यानां सर्वसाधारणदार्शनिकसिद्धान्तानां सिद्धान्तशिखामण्युक्तेश्वर-जीव-जगद्-बन्ध-मोक्षविषयकसिद्धान्तैः सह समीक्षा कृता। उपर्युक्तदार्शनिकसिद्धान्तातिरिक्ताः केचन विशिष्टाः सिद्धान्ताः सिद्धान्तशिखामणौ प्रतिपादिताः सन्ति। तेषां स्वरूपं तावदस्मिन् परिच्छेदे निरूप्यते।

तत्र तावद्वीरशैवदर्शनस्य परशिवेन साकं तदंशभूतस्य जीवस्याभिन्नत्व-प्रतिपादनमेव मुख्यं प्रयोजनम्। तदर्थं ज्ञानकर्मणोः समसमुच्चयवादः पूर्वं प्रतिपादितः। तदतिरिक्तानि च केचन सहकारिसाधनान्यष्टावरणपञ्चाचारा-ख्यान्यभ्युपगतानि। वीरशैवदर्शनेऽष्टावरणानि साधकस्याङ्गानीति, पञ्चाचारास्तस्य पञ्च प्राणा इति कथ्यन्ते। यथा लोके सामान्यतो जीवानां लौकिकव्यवहारः

---

श्री साम्बसदाशिव को नमस्कार अर्पित हो।

# ।।अष्टम परिच्छेद।।

## सिद्धान्तशिखामणि के विशिष्ट सिद्धान्त

सप्तम परिच्छेदपर्यन्त ईश्वर, जीव, जगत्, बन्ध एवं मोक्ष संज्ञक दार्शनिक सिद्धान्तों (सर्वसाधारण) का सिद्धान्तशिखामणि प्रोक्त ईश्वर, जीव, जगत्, बन्ध एवं मोक्ष विषयक सिद्धान्तों के साथ समीक्षा की गई उपर्युक्त विषयों के अतिरिक्त भी कतिपय विशिष्ट सिद्धान्त, सिद्धान्त शिखामणि (ग्रन्थरत्न) में प्रतिपादित हैं। उनका स्वरूप इस अष्टम परिच्छेद में निरूपित किया जा रहा है।

वीरशैवदर्शन का मुख्य प्रयोजन है— परशिव के साथ तदंश जीव का अभिन्नतया प्रतिपादन। एतदर्थ ज्ञान और कर्म का समसमुच्चयवाद प्राक्तन परिच्छेद में प्रतिपादित किया जा चुका है। तदतिरिक्त कतिपय सहकारिकारणतया अष्टावरण एवं पञ्चाचार भी स्वीकृत हैं। वीरशैवदर्शन में अष्टविध आवरणों को साधक का अङ्ग माना गया है तथा पञ्चविध आचारों को शैवसाधकों के पञ्चप्राणरूपों में स्वीकार्य बताया है।

करचरणाद्यष्टाङ्गयुक्तात् सप्राणात् शरीराद् भवति, तथा वक्ष्यमाणाष्टावरणपञ्चाचारैरेव वीरशैवसाधकानां दार्शनिको व्यवहारः सम्पद्यत इत्यष्टावरणान्यङ्गानीति, पञ्चाचाराश्च प्राणा इति व्यवह्रियन्ते। तेषां स्वरूपं तावद्विमृश्यते।

## अष्टावरणविमर्शः

तत्र–१. गुरुः, २. लिङ्गम्, ३. जङ्गमः, ४. पादोदकम्, ५. प्रसादः, ६. भस्म, ७. रुद्राक्षः, ८. मन्त्र इतीमान्यष्टौ वीरशैवदर्शनेऽष्टावरणानीत्युच्यन्ते। अत्रावरणशब्दो न स्वरूपावरणार्थकः, किन्तु रक्षाकवचवाचकः। यथा युद्धभूमौ योद्धा शत्रूणां शस्त्रप्रहारैः स्वशरीरपरिरक्षणाय कवचेन स्वशरीरमावृणोति, तथैभिरष्टैः शिवभक्तः कामक्रोधादिभिः परिरक्ष्यत इतीमान्यष्टावरणानीत्युच्यन्ते। तदुक्तं चन्द्रज्ञानागमे–

गुरुर्लिङ्गं जङ्गमश्च तीर्थं चैव प्रसादकः।
भस्मरुद्राक्षमन्त्राश्चेत्यष्टावरणसंज्ञिताः ।।
इमानि शिवभक्तानां भवदोषततेः सदा।
निवारणैककार्याणि ख्यातान्यावरणाख्यया।।[1] इति।

---

लोकव्यवहार में करचरणादि अष्टाङ्गों से युक्त सप्राण शरीर से व्यवहार्यता का निर्वाह होता है। तद्वत् वीरशैव साधकों का दार्शनिक व्यवहार के निर्बहण हेतु अष्टावरण एवं, पञ्चविध आचार को क्रमशः अङ्गों एवम् प्राणों के रूप में स्वीकार्य बताया गया है। सम्प्रति उनका स्वरूप प्रतिपादनीय है।

## अष्टावरणविमर्श

वीरशैवदर्शन में आठ आवरण, साधकों के दार्शनिकजीवन के अङ्गरूपतया स्वीकार्य हैं— १. गुरु २. लिङ्ग ३. जङ्गम ४. पादोदक ५. प्रसाद ६. भस्म ७. रुद्राक्ष तथा ८. मन्त्र। आवरण का अर्थ वस्त्राच्छादन जैसा नहीं अपितु **रक्षाकवच** है।

यद्वत् युद्धभूमि में योद्धा शत्रुओं द्वारा प्रयुक्त शास्त्रप्रहारों से स्वशरीर के रक्षार्थ कवचधारण करता है। तद्वत् शिवभक्त काम-क्रोध प्रभृति आन्तर शत्रुओं से स्वरक्षार्थ अष्टविध आवरणों को कवचवत् धारित करता है। यथा चन्द्रज्ञानागम में कहा है—

'गुरुर्लिङ्गं जङ्गमश्च........ख्यातान्यावरणाख्यया।।२।।'

---

१. च० ज्ञा० आ० क्रियापादे० २।१-२.

एतेष्वष्टावरणेषु गुरुर्लिङ्गं जङ्गमश्चेति त्रय आराध्याः (पूजनीयाः) सन्ति। विभूति-रुद्राक्ष-मन्त्राः पूजायाः सामग्रीरूपाः सन्ति। पादोदकप्रसादौ च पूजायाः फलरूपाविति तेषां विभागः। तदधुना क्रमशस्तेषां स्वरूपमवलोकयामः।

## १. गुरुस्वरूपम्

गुणातीतं गुकारं च रूपातीतं रुकारकम्।
गुणातीतमरूपं च यो दद्यात् स गुरुः स्मृतः।।[1]

इति श्रीरेणुकभगवत्पादा गुरोर्लक्षणमुक्तवन्तः। अस्यायमर्थः—अत्र प्राकृतगुणातीतत्वं गुकारस्यार्थः, अशुद्धमायारूपातीतत्वं च रुकारस्यार्थः। तदेवं निर्गुणं निराकारं च चिन्मयं वस्तु यो ददाति, अर्थादुपदिशति, स गुरुरिति। अस्यैव चाचार्य इत्यपि व्यवहारो भवति। आचार्यलक्षणमुक्तं तैरेव—

आचिनोति च शास्त्रार्थानाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते।।[2] इति।

वीरशैवसम्प्रदाये वीरमाहेश्वरवंशे, अर्थाज्जङ्गमवंशे समुत्पन्नः,

---

उपर्युक्त आठ आवरणों में गुरु, लिङ्ग एवं जङ्गम-ये तीन आराध्य हैं। विभूति, रुद्राक्ष तथा मन्त्र ये तीन पूजा की सामग्री हैं। तद्वत् पादोदक एवं प्रसाद, पूजा के फलस्वरूप हैं। इस प्रकार इन अष्टाङ्गों को तीन भागों में विभाजित किया गया है। सम्प्रति क्रमशः इनके स्वरूप का निरूपण किया जाना है—

## १. गुरुस्वरूप

श्रीरेणुकाचार्यजी ने गुरु का लक्षण बताते हुए कहा है—

'गुणातीतं गुकारं ..................................गुरुः स्मृतः।।१।।'

गुरु वह है, जो गुकार = प्राकृतगुणातीत, रुकार = अशुद्धमायारूपातीत, गुणातीत एवम् रूपातीत (निराकार) चिन्मय वस्तु प्रदान करे (उपदेश माध्यम से)।

उन्होंने आचार्यका स्वरूप बताते हुए कहा है—

'आचिनोति च ..........................यस्मादाचार्यस्तेन चोच्यते।।१।।'

श्रीनीलकण्ठशिवाचार्यजी ने सुस्पष्ट कहा है— वीरशैवसम्प्रदाय में वीरमाहेश्वर

---

१. सि० शि) १५।८, पृ० ४९.
२. सि० शि० १५।९, पृ० ४९.

कस्मिंश्चिदपि वीरशैवसाम्प्रदायिकमठे आचार्यत्वेन पट्टाभिषिक्तः, शिवाचार्य इत्युपाधिमान् तथा वीरशैवागमार्थविज्ञानी च गुरुरिति कथ्यते। तदुक्तं श्रीमद्भिर्नीलकण्ठशिवाचार्यैः–

मठस्थलसमुत्पन्नः शान्तः शैवागमार्थवित्।
अनूचानः प्रसन्नात्मा शिवदीक्षाभिषेचितः।। [१]इति।

अनेनैव शिवाचार्येण वीरशैवानामिष्टलिङ्गदीक्षा विधीयते। श्रीरेणुकभगवत्पादा दीक्षार्थं कीदृशं गुरुमभिगच्छेदिति जिज्ञासायाम्–"कुलक्रमागताचारं कुमार्गाचारवर्जितम्"[१] इत्यारभ्य "लिङ्गाङ्गस्थलभेदज्ञं श्रीगुरुं शिववादिनम्"[२] इत्यन्तं गुरोर्वैशिष्ट्यं निरूप्य कुलक्रमागताचारमित्यनेन शुद्धजङ्गमवंशोद्भवस्यैव गुरुत्वयोग्यतां सूचितवन्तः। अत एव टीकाकाराः श्रीमरितोण्टदार्या अपि 'कुलक्रमागताचारः= गुरुवंशक्रमानुगताचारवान्' इति गुरुवंशोत्पन्नस्य, अर्थाज्जङ्गमवंशोत्पन्नस्यैव गुरुपदयोग्यतां समर्थितवन्तः।

एक एवायं गुरुर्दीक्षाप्रदानेन दीक्षागुरुरिति, शिक्षाप्रदानेन शिक्षागुरुरिति, ज्ञानोपदेशेन ज्ञानगुरुरित्यभिधीयते। तदुक्तं श्रीरेणुकभगवत्पादैः–

---

वंश (जङ्गमवंश) में उत्पन्न हो, किसी वीरशैवसम्प्रदाय के मठ में आचार्य के रूप में पट्टाभिषिक्त हो, शिवाचार्यपदवी से विभूषित हों तथा वीरशैवागमों के अर्थ का विशिष्टज्ञानवान् हो वह गुरु कहलाते हैं। तद्यथा—

'मठस्थलसमुत्पन्नः........शिवदीक्षाभिषेचितः।।१।।'

शिवाचार्यगुरु द्वारा वीरशैवों को इष्टलिङ्गदीक्षा प्रदान की जाती है। श्रीरेणुकाचार्य जी ने कैसे गुरु के पास दीक्षाप्राप्ति हेतु जाना चाहिए? इस जिज्ञासा का समाधान करने हेतु 'कुलक्रमागताचारं.......से आरम्भ कर .....श्रीगुरुं शिववादिनम्।।२।। गुरु के वैशिष्ट्य का निरूपण कर शुद्ध जंगम वंशोद्भव विद्वान् की गुरुत्वयोग्यता को सूचित किया है। टीकाकार श्रीमरितोण्डदार्य जी ने भी गुरुवंशोत्पन्न=जंगमवंशोत्पन्न को ही गुरुपदयोग्यता का समर्थन किया है।

एक ही यह गुरु दीक्षाप्रदान करने से दीक्षागुरु कहलाते हैं, शिक्षा प्रदान करने से शिक्षागुरु कहलाते हैं तथा ज्ञानोपदेश करने से ज्ञानगुरु कहलाते हैं। श्रीरेणुकाचार्यजी

---

१. सि० शि० ६।४, पृ० ८२.
२. सि० शि० ६।७, पृ० ८३.

दीयते परमं ज्ञानं क्षीयते पाशबन्धनम्।
यया दीक्षेति सा तस्यां गुरुर्दीक्षागुरुः स्मृतः।।[३]
दीक्षागुरुरसौ शिक्षाहेतुः शिष्यस्य बोधकः।
प्रश्नोत्तरप्रवक्ता च शिक्षागुरुरितीर्यते।।[४]
उपदेष्टोपदेशानां संशयच्छेदकारकः।
सम्यग्ज्ञानप्रदः साक्षादेष ज्ञानगुरुः स्मृतः।।[५]इति।

अयं गुरुः साधकस्य योग्यतामवलोक्य तदन्तर्हितशिवस्वरूपमुपदिश्य संसारात् तमुद्धरिष्यतीत्यष्टावरणेषु गुरोः प्रथमं स्थानम्।

वीरशैवानां रम्भापुरी, उज्जयिनी, केदारः, श्रीशैलम्, काशीति पञ्चस्थानेषु विद्यमानानां पञ्चप्रधानपीठानां पञ्चाचार्या एव मुख्या गुरवः।

पञ्चपीठानां शाखानुवर्तिन आचार्या उपाचार्या पट्टाधिकारिण इति वा कथ्यन्ते।

## २. लिङ्गस्वरूपम्

लयं गच्छति यत्रैव जगदेतच्चराचरम्।
पुनः पुनः समुत्पत्तिं तल्लिङ्गं ब्रह्म शाश्वतम्।।[१]

---

ने कहा है—'दीयते परमं ज्ञानं......एष ज्ञानगुरुः स्मृतः।।३।।'

यह गुरु साधक की योग्यता का अवलोकन कर उसके अन्तर्निहित शिवस्वरूप का उपदेश प्रदान कर संसार से साधक का उद्धार करता है अतः अष्टविध आवरणों में सर्वप्रधान गुरु को प्रथम स्थान प्राप्त है।

वीरशैवों के ५ स्थान सुप्रसिद्ध हैं— रम्भापुरी, उज्जयिनी, केदार, श्रीशैल एवं श्रीकाशी। इन स्थानों में विद्यमान ५ प्रधान पीठों के ५ शिवाचार्य ही मुख्य गुरु हैं। ५ पीठों के शाखानुवर्ती आचार्यों को उपाचार्य अथवा पट्टाधिकारी कहा जाता है।

## २. लिङ्गस्वरूप

'लयं गच्छति यत्रैव..........तल्लिङ्गं ब्रह्मशाश्वतम्।।१।।'

---

१. सि० शि० १५।७, पृ० ४८.
२. सि० शि० १५।१, पृ० ५०.
३. सि० शि० १५।१, पृ० ५३.
४. सि० सि० ६।१६, पृ० ९३.

इति श्रीरेणुकभगवत्पादाः प्रपञ्चोत्पत्तिलयकारणीभूतं परमतत्त्वमेव लिङ्गमिति तल्लक्षणमुक्तवन्तः। परं त्वत्र लिङ्गपदेन तस्यैव परमतत्त्वस्य चिह्नभूतमेतन्मतासाधारणमिष्टप्राणभावात्मकं सदा देहे धार्यमाणं साधकस्य प्रियतममिष्टलिङ्गमभिप्रेतम्।

अत्रेदमवधेयम्—वीरशैवसम्प्रदाये गुरुः क्रियादीक्षायां पञ्चसूत्रप्रमाणेन निर्मितं शैलजं स्फाटिकं वाऽङ्गुष्ठपरिमाणं लिङ्गमेकं गृहीत्वा जलाधिवास-धान्याधिवासादिक्रियाभिस्तस्य शिलात्वं निवर्त्य मन्त्रसंस्कारेण तल्लिङ्गे प्राणप्रतिष्ठां च कृत्वा पञ्चाक्षरीमन्त्रोपदेशपूर्वकं तल्लिङ्गं शिष्यस्य हस्ते प्रदाय तत्प्राणवद्धारणीयमित्युपदिशति। तथा चोक्तम्—

**स्फाटिकं शैलजं वापि चन्द्रकान्तमयं तु वा।**
**बाणं वा सूर्यकान्तं वा लिङ्गमेकं समाहरेत्।।**
**सर्वलक्षणसम्पन्ने तस्मिल्लिङ्गे विशोधिते।**
**पीठस्थितेऽभिषिक्ते च गन्धपुष्पादिपूजिते।।**
**मन्त्रपूते कलां शैवीं योजयेद्विधिना गुरुः।**
**शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत्।।**
**तल्लिङ्गं तस्य तु प्राणे स्थापयेदेकभावतः।**
**एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत्।।**

---

इस कथन से श्रीरेणुकभगवत्पाद ने प्रपञ्च की उत्पत्ति एवं लय के कारणस्वरूप परमतत्त्व को लिङ्ग कहा है। इस दर्शन में लिङ्गपद से उसी परमतत्त्व के चिह्नभूत इष्टप्राणभावात्मक स्वदेह में सदा धारणीय साधक के लिए अतिशय प्रिय इष्टलिङ्ग अभिप्रेत होता है।

यहाँ ध्यातव्य है कि वीरशैवसम्प्रदाय में गुरु क्रियादीक्षा में पञ्चसूत्रप्रमाण से निर्मित शैलज अथवा स्फटिकनिर्मित अङ्गुष्ठपरिमाण एकलिङ्ग को लेकर जलाधिवास एवं धान्याधिवासादि क्रिया द्वारा शिलात्व की व्यावृत्ति कर मन्त्रसंस्कार द्वारा उस लिङ्ग में प्राणप्रतिष्ठा कर पञ्चाक्षरमन्त्र का उपदेशकर उस लिङ्ग को शिष्य के हाथ में देकर उसे प्राणवत् धारण करने हेतु उपदेश करता है। तद्यथा—

प्राणवद् धारणीयं तत्प्राणलिङ्गमिदं तव।
कदाचित् कुत्रचिद्वापि न वियोजय देहतः।।[1]इति।

अस्य शरीरे धारणेन साधकस्य संसारपाशलक्षणानिष्टपरिहारः, इष्टरूपपरात्परमुक्तिश्च प्राप्यत इतीदम् 'इष्टलिङ्गम्' इत्युच्यते। तथा चोक्तम्–

इष्टलिङ्गमिदं साक्षादनिष्टपरिहारतः।
धारयेदवधानेन शरीरे सर्वदा बुधः।।[2]इति।

## इष्टलिङ्गधारणस्य वैदिकत्वम्

श्रीरेणुकभगवत्पादा महर्षिमगस्त्यं प्रति ऋग्वेद–यजुर्वेद–मन्त्रप्रमाणेनेष्ट-लिङ्गधारणस्य वैदिकत्वं प्रतिपादयामासुः। तथाहि–

ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते।
तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमनामयम्।।
अघोरा पापकाशीति या ते रुद्र शिवा तनूः।
यजुषा गीयते यस्मात्तस्माच्छैवोऽघवर्जितः।।[3]इति।

अनयोरुभयोः श्लोकयोरर्थष्टीकाकारेणैवं प्रतिपादितः–"पवित्रं ते

---

'स्फाटिकं शैलजं वापि..,......न वियोजय देहतः।।५।।'

यतश्च इसको विधिवत् धारण करने से साधक के संसारपाशलक्षण अनिष्ट का परिहार होता है तथा इष्टरूप परात्परमुक्ति प्राप्त होती है। अतः यह **इष्टलिङ्ग** कहलाता है। तद्यथा—

'इष्टलिङ्गमिदं.........सर्वदा बुधः।।१।।'

## इष्टलिङ्गधारण वेदविहित है

श्रीरेणुक भगवत्पाद ने महर्षि अगस्त्य के प्रति ऋग्वेद, यजुर्वेदके मन्त्रवचनों से प्रमाणित इष्टलिङ्ग धारण को वेदविहित बताया है। तद्यथा—

'ऋगित्याह पवित्रन्ते..........तस्माच्छैवोऽघवर्जितः।।२।।'

उपर्युक्त दोनों श्लोकों के अर्थ का प्रतिपादन टीकाकार ने निम्नाङ्कित प्रकार से किया है—

---

१. सि० शि० ६।१-५, पृ० ८८-९०.
२. सि० शि० ६।२९, पृ० ९६.
३. सि० शि० ६।३७, ४०; पृ० ९८-९९.

ब्रह्मणस्पते'[१] इति ऋग्वेद आह–भो ब्रह्मणस्पते! ते तव लिङ्गमिति शेषः, विततं शिवादिभूम्यन्तं विस्तृतम्, पवित्रं पावनम्, तस्माद् अनामयं दोषरहितं शैवं तल्लिङ्गं धार्यमित्यर्थः"[२] इति।

'या ते रुद्र शिवा तनूरघोराऽपापकाशिनी'[३] इति श्रीरुद्रश्रुतिः। अस्याः श्रुतेरयमर्थः–"भो रुद्र, ते तव शिवा मङ्गलस्वरूपा, या तनूः, 'लिङ्गं तु शिवयोर्देहः' इत्यागमोक्तेः, शिवशक्त्यात्मिका लिङ्गमूर्तिः, सा अघोरा शान्ता, अपापकाशिनी अपापेषु भक्तेषु काशत इति अपापकाशिनी इष्टलिङ्गरूपेण तत्र स्थिता इति यजुषा यजुर्वेदेन यस्माद् गीयते, तस्मात् शैवः शिवलिङ्गसम्बन्धी, अघवर्जितः पापरहित इत्यर्थः"[४] इति।

भाष्यकारा श्रीपतिपण्डिताराध्या अपि–"लिङ्गधारणसिद्धान्तस्तु प्रात्यक्षिकश्रुतिस्मृत्यागमपुराणेतिहासविहितस्तेन लिङ्गधारणस्याग्निहोत्रादिवद् वैदिकत्वं सिद्धम्"[५] इति निरूपयन्तो जिज्ञासाधिकरणे बहुविस्तरेण

---

हे ब्रह्मणस्पते! तेरा लिङ्ग, शिव से भूमिपर्यन्त ३६ तत्त्वों में विस्तृत–अनुस्यूत है। यह पवित्र=पावन है तथा अनामय=दोषवर्जित है। ईदृश गुणगणोपेत शिवलिङ्ग को निष्ठा के साथ धारण करना चाहिए।

तद्वत् 'याते रुद्र शिवातनूरघोरा पापकाशिनी।' यह श्रीरुद्रश्रुति है। इस श्रुति का अर्थ है— हे रुद्रशिव! आपकी मङ्गलमयी जो तनु (शरीर) है वह शिवशक्ति उभयस्वरूप लिङ्गमूर्ति है। यह अघोरा=शान्तस्वरूपा है, अपाप=शिवभक्तों में इष्टलिङ्गरूप से प्रकाशमान होकर स्थित रहती है—इसका गुणगान यजुर्वेद द्वारा किया जाता है। अतः लिङ्गधारक शिवभक्त सर्वदा अघवर्जित होता है=पापमुक्त होता है।"

भाष्यकार श्रीपतिपण्डिताराध्य ने भी जिज्ञासाधिकरण में विस्तार के साथ वेद एवम् आगमवचनों का प्रमाणरूप से उपन्यास कर इष्टलिङ्ग धारण को वैदिक विधिसम्मत-रूप में समर्थन प्रदान किया है। तद्यथा— 'लिङ्गधारणसिद्धान्तस्तु .........अग्निहोत्रादिवद् वैदिकत्वं सिद्धम्।"

---

१. ऋग्वेदे ९।८३।१.

२. सि० शि० तत्त्वप्रदीपिका, पृ० ९८.

३. वा० सं० १६।२, तै० सं० ४।५।१।१.

४. सि० शि० तत्त्वप्रदीपिका, पृ० ९९.

५. ब्र० सू० श्रीकर० १।१।१.

वेदागमादिप्रमाणैरिष्टलिङ्गधारणस्य वैदिकत्वं समर्थितवन्तः।

वीरशैवसिद्धान्ते यथा पुरुषा दीक्षया इष्टलिङ्गधारणाधिकारिणो भवन्ति, तथा स्त्रियोऽपि दीक्षाधिकारिण्यो भवन्ति। इदमस्य सम्प्रदायस्य वैशिष्ट्यम्। स्त्रीणां दीक्षाधिकारः पुनरन्यैर्न प्रतिपादितः।

## इष्टलिङ्गपूजायां सूतकानामबाधकत्वम्

ननु वीरशैवसम्प्रदाये स्त्रियोऽपि दीक्षाधिकारिण्यः, दीक्षायां प्राप्तेष्टलिङ्गपूजाधिकारिण्यश्चेत्युक्तम्। प्रसूतादिसूतकप्राप्तौ धर्मशास्त्रेऽशौचं विधीयते। अशौचे प्राप्ते च तद्गृहे कतिपयदिवसपर्यन्तं वैदिकपूजादीनां निषेध आदिष्टः। एवं सति यावज्जीवं कर्तव्यत्वेन संकल्पिताया नित्यकर्मात्मकेष्टलिङ्गपूजायाः कथं निर्वाहः? इति चेन्मैवम्, इष्टलिङ्गपूजायां सूतकानामबाधकत्वात्। तदुक्तमाचार्यवर्यै रेणुकभगवत्पादैः—

> लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम्।
> तथा प्रसूतिकायाश्च सूतकं नैव विद्यते।।
> गृहे यस्मिन् प्रसूता स्त्री सूतकं नात्र विद्यते।
> शिवपादाम्बुसंस्पर्शात् सर्वपापं प्रणश्यति।।[१] इति।

---

वीरशैवसिद्धान्त में यथा पुरुष दीक्षाद्वारा इष्टलिङ्गधारण के लिए अधिकारी=पात्र होते हैं तद्वत् स्त्रियाँ भी दीक्षा की अधिकारिणी होती हैं। यह इस सम्प्रदाय का वैशिष्ट्य है। स्त्रियों को अन्यसम्प्रदायों में दीक्षाधिकार नहीं दिया गया है।

## इष्टलिङ्गपूजा में सूतक बाधक नहीं

जिज्ञासा होती है कि वीरशैवसम्प्रदाय में स्त्रियाँ भी दीक्षा के लिए अधिकृत होती हैं परिणामस्वरूप दीक्षा में प्राप्त इष्टलिङ्गपूजा का अधिकार भी उन्हें प्राप्त होता है। प्रसूतादि-सूतक की प्राप्ति होने पर धर्मशास्त्र में अशौच का विधान प्राप्त होता है। अशौच प्राप्त होने पर उस घर में कई दिनों तक वैदिक पूजादि का निषेध रहता है। ऐसी स्थिति में यावत् जीवन कर्तव्यरूप से संकल्पित (नित्यकर्म) इष्टलिङ्गपूजा का निर्वाह कैसे हो सकता है।

इसका समाधान है— इष्टलिङ्गपूजा में सूतक को प्रतिबन्धक नहीं माना गया है। आचार्य रेणुक भगवत्पादने सुस्पष्ट कहा है—

'लिङ्गार्चनरतायाश्च........सर्वपापं प्रणश्यति।।२।।'

---

१. सि० शि० ९।४४-४५, पृ० १५०-१५१.

अत्रायं भावः—इष्टलिङ्गधारणं तत्पूजा च वीरशैवानां नित्यकर्मे-त्युच्यते। यथाग्निहोत्रादीनां नित्यकर्मणामकरणे प्रत्यवायः श्रूयते, तथेष्टलिङ्गपूजारूपनित्यकर्मणोऽकरणेऽपि प्रत्यवायः प्रतिपाद्यते। तदुदाहृतं श्रीशङ्करशास्त्रिभिः—

लिङ्गस्य धारणं यस्य स्थूलदेहे न विद्यते।
तद्देहं निष्फलं ज्ञेयं जीवत्यक्तशरीरवत्।।
तस्मात्तद्धारणं प्रोक्तं यावज्जीवाग्निहोत्रवत्।[१] इति।

तस्माद्यथा "प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः" इत्युक्तप्रकारेण संकल्पितपौण्डरीकादिदीर्घसत्रदीक्षितयज्वपत्न्यास्तथाविधदीक्षाविषये रजस्वलाद्यशौचाभाववद् यज्वनोऽपि तत्र जाताशौचाद्यभाववत्,

प्राणवद्धारणीयं तत्प्राणलिङ्गमिदं तव।
कदाचित्कुत्रचिद्वापि न वियोजय देहतः।।[२]

इति गुरुकृतलिङ्गधारणदीक्षाया यावज्जीवभावित्वेन,

लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोरमम्।
अर्चयेद् गन्धपुष्पाद्यैः करपीठे समाहितः।।[३]

---

आशय यह है— इष्टलिङ्गधारण एवम् उनकी पूजा वीरशैव साधकों के लिए नित्यकर्म मान्य है। यथा अग्निहोत्र प्रभृति नित्यकर्म के अननुष्ठान (नहीं करने से) प्रत्यवाय होता है तद्वत् इष्टलिङ्ग पूजा (नित्यकर्म) के अकरण से प्रत्यवाय प्राप्त होगा। श्रीशंकरशास्त्री जी ने सुस्पष्ट कहा है—

'लिङ्गस्य धारणं यस्य...........यावज्जीवाग्निहोत्रवत्।।१½।।'

अतः 'प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः।' इस कथन के अनुसार संकल्पित पौण्डरीकप्रभृति दीर्घसत्र में दीक्षित यजमान की पत्नी को तथाविध दीक्षा विषय में रजस्वलादि अशौच अमान्य होता है तथा यजमान का भी अशौचादि अमान्य होता है। तद्वत् गुरुकृत लिङ्गधारणदीक्षा यावज्जीवभावनीय होती है और लिङ्गपूजा भी यावज्जीवभावनीय होती है। अतः लिङ्गधारण एवं लिङ्गपूजा में अशौच की प्रसक्ति होने

---

१. सिद्धान्तशिखो० वी० भा०, पृ० ४२.
२. सि० शि० ६।५, पृ० ९०.
३. सि० शि० ६।३२, पृ० ९७.

इति लिङ्गपूजायाश्च यावज्जीवभावित्वेन लिङ्गधारणतत्पूजादेरशौच-प्रसक्तावपि कर्तव्यत्वमेव। अतो लिङ्गधारणे तत्पूजायाश्चाशौचं न विधीयते। तदुक्तं सिद्धान्तशिखोपनिषदि–

**अत्याश्रमित्वाद् गणवंशजानां लिङ्गाङ्गसङ्गिनां तत्र जन्मान्तदीक्षा।**
**यथा गङ्गा शिवसङ्गात् तथैव न सूतकं वा नाप्यशुचित्वमेषाम्।।** [1]इति।

अत्रेदमैदम्पर्यम्–वर्षाकाले नदीनां सूतकप्राप्तिरिति तदानीं नदीस्नानं धर्मशास्त्रे निषिध्यते, किन्तु शिवसंयुक्ताया गङ्गायाः कदापि सूतकप्राप्तिर्न विहिता। एवमेवान्यासां स्त्रीणां सूतकप्राप्तिसम्भवेऽपि दीक्षायां प्राप्तेष्टलिङ्गानां वीरशैवस्त्रीणां नैव सूतकप्राप्तिरिति। तदुक्तं लिङ्गसारेऽपि–

**यथा विश्वेशनिकटात् गङ्गा सूतकवर्जिता।**
**तथा लिङ्गाङ्किता भक्ताः पञ्चसूतकवर्जिताः।।**इति।

किञ्च सूतकिनां स्त्रीणामिष्टलिङ्गधारणतत्पूजामात्रे शुचित्वाङ्गीकारेऽपि पाकादिकार्येष्वशुचित्वमेवाङ्गीक्रियते। ननु रजस्वलादीनां स्त्रीणां लिङ्गपूजादिषु शुचित्वमिति, पाकादिगृहकार्येष्वशुचित्वमिति कथमुच्यते? एकस्यैव शुचित्वाशुचित्वयोर्विरोधात्, इति चेन्मैवम्। श्रूयतां रहस्यम्–यथा 'मा हिंस्यात्

---

पर भी उनकी अवश्य अनुष्ठेयता है। एवंच लिङ्गधारण एवं लिङ्गपूजा में अशौच दोष नहीं होता। सिद्धान्तशिखोपनिषद् में सदृष्टान्त विशद विवेचन किया गया है। तद्यथा—

'अत्याश्रमित्वाद् गणवंशजानां.........नाप्यशुचित्वमेति।।१।।

अभिप्राय यह है— वर्षाकाल में नदी सूतकग्रस्त होती है अतः उक्तकाल में धर्मशास्त्र, नदीस्नान का निषेध करता है। तथापि शिवसंयुक्ता गङ्गा को कभी भी सूतकप्राप्ति नहीं होती। तद्वत् अन्य स्त्रियों को सूतक की प्राप्ति होती है किन्तु दीक्षा में इष्टलिङ्ग को प्राप्त कर लेने वाली वीरशैवस्त्रियों को सूतकप्राप्ति नहीं होती। लिङ्गसार में यह बात सुस्पष्ट प्रतिपादित है—

'यथा विश्वेशनिकटात् .........पञ्सूतकवर्जिताः।।१।।

यह भी ध्यातव्य है कि इष्टलिङ्गधारण एवम् इष्टलिङ्गपूजन में ही दीक्षाप्राप्त वीरशैव स्त्रियों की शुचिता है पाकादि कार्य में तो अशौच यथाविधि बना रहता है। अब जिज्ञासा उदित होती है कि रजस्वला या अन्य निमित्त से होने वाला अशौच पाकादि

---

१. सिद्धान्तशिखोपनिषत्,१२ श्लो०।

सर्वा भूतानि', 'न मांसमश्नीयात्', 'नोच्छिष्टं कस्यचिद् दद्यात्' इत्यादिशास्त्रेण निषिद्धत्वेऽपि, प्रत्यक्षलोकाचारविरुद्धत्वेऽपि, 'अग्नीषोमीयं पशुमालभेत', 'सोमेन यजेत सोमेनोच्छिष्टम्' इत्यादिविशेष-शास्त्रविहितपशुहननमांस-भक्षणसुरापानादेः प्राकृतकर्तव्यत्ववत् 'तत्र जन्मान्तदीक्षा', 'सर्वलिङ्गं स्थापयति', 'नित्यं स्ववामहस्ताग्रे सावधानेन पूजयेत्' इत्यादिविधिना लिङ्गधारण-लिङ्गपूजादेर्यावज्जीवकर्तव्यत्वविधाने 'लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम्' इत्यादिविशेषशास्त्रबलाद् रजस्वलादीनां लिङ्गधारण-लिङ्गपूजाद्यंशे परिशुद्धत्वमित्यवगन्तव्यम्। तदुक्तं सिद्धान्तागमे—

**स्वेष्टलिङ्गैकपूजायां नैवाशौचं विधीयते।**
**पौण्डरीके रजःस्त्रीणां स्वाग्निहोत्रे यथा तथा।।**
**अकरस्पर्शयोग्यापि यथा जिह्वा महेश्वरी।**
**मन्त्रोच्चारणमात्रस्य पूता भवति भूतले।।**
**तथा सूतकिनः शैवाः पूजामात्रसुनिर्मलाः।**
**नान्यस्पर्शानुकूलाः स्युरिति वेदानुशासनम्।।**[1] **इति।**

**तस्मान्मोक्षोपयुक्तसाङ्गशिवार्चनादिनित्यकर्मेतरान्यस्पर्शपाकादिकार्ये**

---

कार्य में बना रहता है तथा लिङ्गपूजादि में निवृत्त हो जाता है। एक की ही शुचिता और अशुचिता एक साथ कैसे हो सकती है।

इसका समाधान है— एक की उभयरूपता हिंसा में दृष्ट है। तद्यथा 'मा हिंस्यात् सर्वभूतानि।' 'न मांसमश्नीयात्।' 'नोच्छिष्टं कस्यचिद् दद्यात्।' इत्यादि वचनों से हिंसा की निषेध्यता है। प्रत्यक्षलोकाचारविरुद्ध भी है। तथापि 'अग्नीषोमीयं पशुमालभेत।' 'सोमेन यजेत सामेनोच्छिष्टम्।' इत्यादि विशेषशास्त्रों द्वारा यज्ञाधिकरणक पशुहिंसाप्रभृति प्राकृतकर्मों की कर्तव्यता विहित होती है। तद्वत् 'तत्र जन्मान्तदीक्षा।' 'सर्वलिङ्गं स्थापयति' 'नित्यं स्ववामहस्ताग्रे सावधानेन पूजयेत्।' लिङ्गधारण-पूजनादि की यावज्जीवकर्तव्यता विहित है। विशेष शास्त्रवचन 'लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम्।' के बल पर रजस्वलादिस्थिति में लिङ्गधारण-लिङ्गपूजादि कर्म में शैवदीक्षा प्राप्त नारी की परिशुद्धि अविरुद्ध है। तद्यथा—

'स्वेष्टलिङ्गैक पूजायां .................. वेदानुशासनम्।।३।।'

अतः निष्कर्ष प्राप्त होता है कि मोक्षोपयोगि साङ्गशिवार्चनादि नित्यकर्म में

१. सिद्धान्तशिखो० वी० भा०, पृ० ४३-४४.

रजस्वलादीनां लिङ्गधारणदीक्षासम्पन्नानामशौचमभ्युपगन्तव्यमिति बोध्यम्।

ननु यथाशौचस्त्रीणां स्पर्शेन स्थावरलिङ्गानां संस्कारनाशेन तेषामपूज्यकत्वम्, तथा रजस्वलादिसूतकयुक्ताभिः स्त्रीभिरिष्टलिङ्गस्पर्शेनापि दीक्षासमये आचार्यकृतपूजनीयताप्रयोजकसंस्कारस्यापि नाशे तस्याप्यपूज्यकत्वापत्तिरिति चेन्मैवम्, इष्टलिङ्गस्थावरलिङ्गयोर्वैषम्यात्। तथाहि–स्थावरलिङ्गे पूजायां कर्तृनियमाभावादेकस्याशुचित्व पुरुषान्तरेण तत्पूजाया निर्वाहः स्वेष्टलिङ्गपूजादेः स्वेनैव यावज्जीवकर्तव्यत्वनियमाद् यावज्जीव–कर्तव्यताबोधकत्वमभ्युपगम्यते। अत एव–

> अपगच्छतु सर्वस्वं शिरच्छेदनमस्तु वा।
> माहेश्वरो न मुञ्चेत लिङ्गपूजामहाव्रतम्।।[१]

इति श्रीरेणुकभगवत्पादाः कदापि स्वेष्टलिङ्गपूजादेस्त्यागायोग्यत्वं प्रतिपादितवन्तः। तस्मात् स्थावरलिङ्गे आचार्यकृतपूजनीयताप्रयोजकसंस्कारस्याशुचिशरीरस्पर्शेन नाशे कल्पितेऽपि स्वेष्टलिङ्गे तदभावः स्वीकर्तव्यः।

---

रजस्वलातदन्यनिमित्तक अशौच नहीं लगता। पाक एवम् अन्य स्पर्शादि में उक्त अशौच लगता है।

जिज्ञासा उदित होती है कि अशौचग्रस्त स्त्री के स्पर्श से स्थावरलिङ्गों में संस्कारनाश द्वारा अपूजनीयता आ जाती है तद्वत् तादृश स्त्रीस्पर्श से दीक्षाकाल में आचार्यकृत पूजनीयता प्रयोजक संस्कार का नाश होने से इष्टलिङ्ग में अपूजनीयता आपतित होगी।

इसका समाधान है— स्थावरलिङ्ग तथा इष्टलिङ्ग में मौलिक वैषम्य है। स्थावर लिङ्ग में पूजा कर्म का कर्ता प्रतिनियत नहीं होता। एक की अशुचिता में दूसरे पूजक द्वारा पूजा का निर्वाह हो जाता है।

तद्विपरीत-इष्टलिङ्गपूजा का त्याग कभी भी धारक व्यक्ति को नहीं करना चाहिए। तद्यथा—

'अपगच्छतु सर्वस्वं.........लिङ्गपूजामहाव्रतम्।।१।।'

अतः स्थावरलिङ्ग में अशुचिशरीरस्पर्शप्रयुक्त पूजनीयताप्रयोजक संस्कार का नाश कल्पित होने पर भी इष्टलिङ्ग में अशुचिशरीरस्पर्श से पूजनीयताप्रयोजकसंस्कार के नाशाभाव को स्वीकृत किया गया है।

---

१. सि० शि० १०।२, पृ० १७३.

तस्माद् यथा दीर्घकालीनेषु पौण्डरीकादिसत्रेषु रजस्वलादिसूतकप्राप्तापि यजमानपत्नी स्नात्वा आर्द्रवस्त्रपरिधानेन तात्कालिकशुद्धिं विधाय यज्ञे सहभागिनी भवति, तथा वैरशैवस्त्रियोऽपि रजस्वलादिसूतकप्राप्तौ स्नात्वा गुरोर्जङ्गमस्य वा पादप्रक्षालितजलेन (पादोदकेन) स्वात्मानं गृहं च संप्रोक्ष्य तात्कालिकशुद्धिं विधायेष्टलिङ्गपूजाधिकारिण्यो भवन्तीति संक्षेपः।

तदिदमष्टावरणेषु द्वितीयत्वेन प्राप्तमिष्टलिङ्गं साधकस्यानिष्टपरिहारेणेष्टप्रदानेन च परिरक्षकं भवतीतीदमप्यावरणमित्येवोच्यते। एतदतिरिक्तं वीरशैवदर्शने आन्तरिकयोः प्राणभावाख्ययोरपि लिङ्गयोरभ्युपगमः कृतः। तदुक्तं श्रीरेणुकभगवत्पादैः–"लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम्"[१] इति। अत्र स्थूलमुपर्युक्तमिष्टलिङ्गम्। अवशिष्टे सूक्ष्म–परात्पराख्ये तु प्राणभावाख्यलिङ्गे इत्युच्येते।

**प्राणलिङ्गस्वरूपम्**

प्राणापानसमाघातात् कन्दमध्याद्यदुत्थितम्।
प्राणलिङ्गं तदाख्यातं प्राणापाननिरोधिभिः।।[२]

---

यथा दीर्घकालसम्पादनीय पौण्डरीकप्रभृति सत्रों में रजस्वलादि-अशौच युक्त यजमानपत्नी स्नान कर आर्द्रवस्त्रपरिधान से तात्कालिक शुद्धि से यज्ञ में सहभागिता करती है तद्वत् वीरशैवस्त्रियाँ रजस्वलादि अशौच प्राप्त होने पर स्नान कर पादोदक-द्वारा स्वयं को तथा स्वगृह को प्रोक्षित कर तात्कालिक शुद्धि का विधान कर इष्टलिङ्ग पूजा के अधिकार से वंचित नहीं होती।

अष्टविध आवरणों में द्वितीयस्थानापन्न इष्टलिङ्ग है। यह साधक के अनिष्ट का परिहार करता है तथा अभीष्टदान से परिरक्षण करता है। अतः इसकी आवरणसंज्ञा यथार्थ है। इष्टलिङ्ग (सूक्ष्म एवं परात्पर) प्राणलिङ्ग एवं भावलिङ्ग नामों से वीरशैवदर्शन में स्वीकृत है। श्रीरेणुकाचार्य ने सुस्पष्टता से इसका अभिधान किया है—

'लिङ्गन्तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम्।।½।।'

**प्राणलिङ्गस्वरूप**

प्राणलिङ्ग का लक्षण श्रीरेणुकाचार्यजी ने प्रतिपादित किया है—

'प्राणापानसमाघातात् ......................प्राणापाननिरोधिभिः।।१।।

---

१. सि० शि० ६।२८, पृ० ९६.

२. सि० शि० १२।६, पृ० २.

इति श्रीरेणुकभगवत्पादाः प्राणलिङ्गस्य लक्षणमुक्तवन्तः। श्लोकस्यायं भावः–गुरोरुपदेशेन साधको यदा प्राणायामप्रक्रियया मूलाधारस्थितमपानवायुं प्राणवायुना संघट्टयति, तदा तयोः संघर्षेण मूलाधाराज्ज्योतिरुत्पद्य सुषुम्नामार्गेणोर्ध्वं गच्छति। तज्ज्योतिरनाहतचक्रे, अर्थात् द्वादशदलहृदय–कमलकर्णिकायामङ्गुष्ठ–परिमाणेन विद्रुमवर्णेन च स्फुरत् तिष्ठति। हृदये प्रकाशमानमिदं ज्योतिरेव वीरशैवाचार्यैः प्राणलिङ्गमित्युच्यते। यथा सूर्योदये तुहिनकणास्तस्मिन् ज्योतिषि लीना भवन्ति, तथा हृदयस्थितेऽस्मिन् ज्योतिषि प्राणवायोरपि विलयो जायत इति कृत्वास्य प्राणलिङ्गमित्यभिधानम्। तथा चोक्तम्–

प्राणो यत्र लयं याति भास्करे तुहिनं यथा।
तत्प्राणलिङ्गमुद्दिष्टं.....................................।।[१]इति।

इदं प्राणलिङ्गमेव स्वकीयचिद्रूपताया बोधरूपम्।

**भावलिङ्गस्वरूपम्**

क्रिया यत्र लयं प्राप्ता तथा भावोऽपि लीयते।
यत्र तद्देशिकैरुक्तं भावलिङ्गमिति स्फुटम्।।[२]

---

इसका अर्थ है— गुरु के उपदेश से साधक जब प्राणायाम प्रक्रिया द्वारा मूलाधार स्थित अपानवायु को प्राणवायु से संघट्ट करता है तब उन दोनों के संघर्ष से मूलाधार से ज्योति उत्पन्न होकर सुषुम्ना मार्ग से ऊर्ध्वगमनशील होता है। वह ज्योति अनाहत चक्र में (द्वादशदल हृदयकमलकर्णिका में) अङ्गुष्ठपरिणाम एवं विद्रुमवर्ण से स्फुरित होकर स्थित होती है। हृदय में प्रकाशमान होने वाली इस ज्योति को वीरशैवाचार्य लोग **प्राणलिङ्ग** कहते हैं। यथा सूर्योदय होने पर ओसकण सूर्यज्योति में विलीन हो जाते हैं तथा हृदयस्थित इस ज्योति में प्राणवायु का विलय हो जाता है अतः इसका नाम प्राणलिङ्ग कहा गया है। तद्यथा—

'प्राणो यत्र ..........।।इति।।'

यह प्राणलिङ्ग ही निजचिद्रूपता का बोध है।

**भावलिङ्ग का स्वरूप**

भावलिङ्ग का स्वरूप श्रीरेणुकाचार्य जी ने प्रतिपादित किया है—

'क्रिया यत्र लयं प्राप्ता.........भावलिङ्गमिति स्फुटम्।।

---

१. सि० शि० १२।७, पृ० ३.
२. सि० शि० १५।१, पृ० ५९.

इति श्रीरेणुकभगवत्पादैर्भावलिङ्गस्वरूपमुक्तम्। यथा हृदयेऽष्टदलकमलमध्ये परमात्मा प्राणरूपेण वर्तते, तथा शिरसि सहस्रारकमले भावरूपेण विराजते। इदं च भावलिङ्गं प्रमाणाद्यगोचरं भावैकसमधिगम्यं निराकाररूपम्। हृदयस्थं प्राणलिङ्गं निर्मलेन मनसा, शिरःस्थं भावलिङ्गं च प्रशान्तया 'शिवोऽहम्' इति भावनयोपास्यम्। अस्याः शिवोऽहंभावनाया यत्र लयो भवति, तदेव भावलिङ्गमिति बोध्यम्।

तदेवमिष्टलिङ्गेन नेत्रयोः, प्राणलिङ्गेन मनसः, भावलिङ्गेन बुद्धेश्च पावित्र्यं सम्पाद्य साधकस्त्रिभिः करणैः परिशुद्धो भवति। एवमिन्द्रियमनोबुद्धीनां नैर्मल्यकारणीभूतानीष्ट–प्राण–भावाख्यानि लिङ्गानि सांसारिकविषयैः साधकस्य परिरक्षकाणीति कृत्वेमान्यावरणानीत्युच्यन्ते। तत्रापीष्टलिङ्गं स्थूलशरीरस्य, प्राणलिङ्गं सूक्ष्मशरीरस्य, भावलिङ्गं कारणशरीरस्यावरणमिति बोध्यम्।

---

यद्वत् हृदय के अन्तर्गत अष्टदलकमल के मध्य में परमात्मज्योति प्राणरूप से विद्यमान रहती है तद्वत् शिरोभाग में सहस्रारकमल पर वह भावरूप से विराजमान होती है. यह भावलिङ्ग कहलाती है। यह भावलिङ्ग प्रमाणादि का अविषय है भावमात्रगम्य है तथा निराकारस्वरूप है। हृदयस्थ प्राणलिङ्ग यद्वत् निर्मल मनस् से उपासनीय होते हैं तद्वत् शिरःस्थ भावलिङ्ग प्रशान्तभावना (शिवोऽहम्) की भावना से उपास्य होते हैं। यह शिवोऽहम् की भावना जिसमें विलय को प्राप्त होती है वह भावलिङ्गपदवाच्य है।

इष्टलिङ्ग से नेत्रों की शुद्धि, प्राणलिङ्ग से मनस् की शुद्धि, तथा भांवलिङ्ग से बुद्धि की पवित्रता को सम्पादित कर साधक अपने तीन करणों की परिशुद्धि से चमत्कृत होता है।

एतावता सुस्पष्ट है कि इन्द्रिय, मनस् एवं बुद्धि को निर्मल बनाने वाले इष्टलिङ्ग, प्राणलिङ्ग एवं भावलिङ्ग-साधक को सांसारिक विषयों से त्राण करने वाले हैं। अतः इन तीनों को आवरण माना जाता है। इष्टलिङ्ग स्थूलशरीर की रक्षा करता है, प्राणलिङ्ग सूक्ष्मशरीर की रक्षा करता है तथा भावलिङ्ग कारणशरीर की रक्षा करता है—यह प्रविवेक है।

३. जङ्गमस्वरूपम्

जानन्त्यतिशयाद्ये तु शिवं विश्वप्रकाशकम्।
स्वस्वरूपतया ते तु जङ्गमा इति कीर्तिताः।।[१]

इति सिद्धान्तशिखामणौ जङ्गमस्य लक्षणमुक्तम्। श्लोकस्यायमर्थः– "तस्य भासा सर्वमिदं विभाति"[२] इति श्रुत्या स्वकीयचित्क्रियाशक्तिभ्यां प्रपञ्चप्रकाशकं शिवं ये स्वस्वरूपतया, अर्थात् स्वात्मानं शिवस्वरूपेणातिशयाज्जानन्ति, अर्थान्निश्चितरूपेण जानन्ति, ते जङ्गमा इति कीर्त्यन्त इति। एतेन जीवन्मुक्ता महापुरुषा जङ्गमपदवाच्या भवन्ति। अत एव–

जकाराज्जननं दूरं गकाराद् गतिनाशनम्।
मकारान्मरणं नष्टं जङ्गमस्त्र्यक्षरात्मकः।।
यस्य नास्ति पुनर्जन्म गतिर्नास्ति कदाचन।
बाधते यं न मरणं शृणु नाथे स जङ्गमः।।
जरामरणशून्यत्वाद् गमागमनवर्जनात्।
मनुष्याचाररहित्याज्जङ्गमोऽयमुदाहृतः ।।[३]

इति वीरशैवसदाचारसंग्रहे जङ्गमशब्दस्याक्षरार्थैरपि तस्य जरामरण–

---

३. जङ्गमस्वरूप–

सिद्धान्तशिखामणि कार ने जङ्गम का लक्षण प्रतिपादित किया है। तद्यथा— 'जानन्त्यतिशयाद् ये तु....जङ्गमा इति कीर्तिताः।।१।।'

इस श्लोक का अर्थ है— 'तस्य भासा सर्वमिदं विभाति।' इस श्रुति से विदित होता है कि निजचिच्छक्ति एवं क्रियाशक्ति से प्रपञ्चप्रकाशक शिव को जो स्वरूपतया (निजात्म रूप से) अतिशय विश्वास के साथ जान लेते हैं ऐसे साधक **जङ्गम** कहलाते हैं। जीवन्मुक्त महापुरुष जङ्गमपदवाच्य होते हैं। वीरशैवसदाचारसंग्रह-ग्रन्थ में जङ्गम शब्द के अक्षरार्थ को पुरस्कृत कर जङ्गम का अर्थ— 'जरामरणशून्य जङ्गम' बतलाया है। यतश्च जङ्गम, शिव के साथ योग (ऐक्य) को प्राप्त कर लेते हैं अतः ये शिवयोगी कहलाते हैं। महापुरुष जङ्गम की तीन अवस्थाएँ मानी जाती हैं। १. स्वजङ्गम २. चरजङ्गम एवं ३. परजङ्गम।

---

१. सि० शि० ११।२, पृ० २०४.
२. मुण्ड० २।२।१०.
३. वी० स० स० १५।६–८.

शून्यत्वमत एव तस्य जीवन्मुक्तत्वं च प्रतिपादितम्। शिवेन योगम्, अर्थाद् ऐक्यमापन्नत्वादयं शिवयोगीति नाम्नापि व्यवह्रियते। जीवन्मुक्तस्यास्य महापुरुषस्य स्वयं-चर-परभेदेनावस्थात्रयमभ्युपगम्यते। तस्मादयं जङ्गमः स्वयंजङ्गमः, चरजङ्गमः, परजङ्गमश्चेत्यवस्थाभेदेन व्यवह्रियते।

**स्वयंजङ्गमः**

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते।।**[1]

इति श्रुत्युक्त्यनुसारेणाऽयं जङ्गमः सर्वत्र स्वात्मानमेव पश्यतीति स्वयंजङ्गम इत्युच्यते। तदुक्तं श्रीरेणुकभगवत्पादैः-

**स्वच्छन्दाचारसन्तुष्टो ज्योतिर्लिङ्गपरायणः।**
**आत्मस्थसकलाकारः स्वाभिधो मुनिसत्तमः।।**[2] **इति।**

अस्य च महात्मनः शिवज्ञानम्, भिक्षाहारः, एकान्तशीलत्वं चेति कर्माणि भवन्ति। तदुक्तम्-

**ध्यानं शैवं तथा ज्ञानं भिक्षा चैकान्तशीलता।**
**यतेश्चत्वारि कर्माणि न पञ्चममिहेष्यते।।**[3] **इति।**

---

**स्वजङ्गम**

जो सर्वत्र स्वात्मशिव का दर्शन करता हो ऐसे जङ्गम को स्वजङ्गम कहा जाता है। श्रुति सुस्पष्ट प्रतिपादन करती है—

'यस्तु सर्वाणि ....................न विजुगुप्सते।।१।।'

आचार्य रेणुकभगवत्पाद ने भी कहा है—

'स्वच्छन्दाचारसन्तुष्टो ....................मुनिसत्तमः।।१।।'

स्वजङ्गम सदा शिवध्यान करते हैं, शिवज्ञानसम्पन्न रहते हैं, भिक्षाटन से जीवनयापन करते हैं तथा एकान्तवास को पसन्द करते हैं। स्वात्मशिवानुशीलनपरायण स्वजङ्गम किसी से द्वेष अथवा घृणा नहीं करते। तद्यथा—

'ध्यानं शैवं ............................पञ्चममिहेष्यते।।१।।'

---

१. ई उ० ६.

२. सि० शि० १५।२, पृ० ६४.

३. सि० शि० १५।६, पृ० ६५.

सर्वत्र स्वात्मानमेव दर्शनशीलोऽयं न कमपि द्वेष्टि, न वा विजुगुप्सते।

**चरजङ्गमः**

**स्वरूपज्ञानसम्पन्नो ध्वस्ताहंममताकृतिः।**
**स्वयमेव स्वयं भूत्वा चरतीति चराभिधः।।**[1]

इति श्रीरेणुकभगवत्पादोक्त्या स्वस्वरूपज्ञानसम्पन्नः, अत एवाहङ्कारमम-कारशून्यो जीवन्मुक्तो यदा लोककल्याणार्थं सर्वत्र संचरति, तदाऽयं चरजङ्गम इत्युच्यते। अयं स्वसंचारे कांश्चिद्दर्शनमात्रेण कांश्चित् स्पर्शतः कांश्चिदुपदेशेन च जनानुद्धरति। एवं लोकोद्धारकोऽयं चरजङ्गमश्चरपट्टाधिकारीत्यप्युच्यते[2]।

**परजङ्गमः**

'परश्चासौ जङ्गमश्च परजङ्गमः' इति व्युत्पत्त्या जीवन्मुक्तेष्वेव श्रेष्ठः परजङ्गम इत्युच्यते। अपरं च, परो नाम विश्वोत्तीर्णः परशिवः, तं स्वात्मरूपेण तैलधारावन्निरन्तरं ध्यायतोऽस्य परं स्वस्माद् भिन्नं किञ्चिदपि वस्तु न प्रतीयत इत्ययं परजङ्गम इत्यभिधीयते। तदुक्तं श्रीरेणुकभगवत्पादैः–

---

**चरजङ्गम**

जो जङ्गम स्वरूपज्ञानसम्पन्न होकर अहंकार एवं ममकार से वर्जित होते हैं तथा जीवन्मुक्त होकर लोककल्याणार्थ सर्वत्र संचरण करते हैं वह **चरजङ्गम** कहलाते हैं। श्रीरेणुकाचार्यजी ने स्पष्ट कहा है—

'स्वरूपज्ञानसम्पन्नो ..........................चरतीति चराभिधः।।

चरजङ्गम निजसंचरणक्रम में कतिपय पुण्यात्मा के निजदर्शन से अन्य पुण्यात्मा को स्पर्शदान से तथा तद्भिन्न पुण्यात्मा को निज उपदेश से उद्धार करते हैं। लोकोद्धारक चरजङ्गम को **पट्टाधिकारी** भी कहा जाता है।

**परजङ्गम**

व्युत्पत्ति (परश्चासौ जङ्गमश्च) के आधार पर जीवन्मुक्त जङ्गमसाधकों में श्रेष्ठ जङ्गम **'परजङ्गम'** कहलाते हैं। दूसरा भी अर्थ, परजङ्गम की परिभाषा प्रस्तुत करता है— विश्वोत्तीर्ण शिव को **पर** कहा जाता है। जो जङ्गम परशिव (विश्वोत्तीर्ण) को

---

१. सि० शि० १५।१, पृ० ६६.
२. वी० स० स०, पृ० १३१.

स्वमेव स्वयं भूत्वा चरतः स्वस्वरूपतः।
परं नास्तीति बोधस्य परत्वमभिधीयते।।[1]इति।

अत्रेदं बोध्यम्–स्वयंजङ्गमो घटपटादिसर्वपदार्थेषु स्वात्मानं पश्यति, परजङ्गमस्य तु घटपटादयो न प्रतीयन्ते, किन्तु सर्वत्र स्वात्मानमेव पश्यति, अर्थादस्य व्यावहारिकभेदस्यापि प्रतीतिर्न भवति। अयं परमहंसः, शिवयोगिराड् इत्यप्युच्यते।

एतदवस्थात्रयमापन्नो जङ्गमः शिवज्ञानोपदेशेन शिवभक्तान् संसार-दुःखात् परित्रायत इति जङ्गमोऽप्यावरणशब्देन व्यवह्रियते।

किञ्चेदमप्यत्रावधेयम्–यथा ब्राह्मणशब्दो 'ब्रह्म जानातीति ब्राह्मणः' इति व्युत्पत्त्या ब्रह्मज्ञानिवाचकत्वेऽपि वर्णव्यवहारे ब्राह्मणजाति–वाचकोऽपि भवति, तथा जङ्गमशब्दः शिवज्ञानसम्पन्नस्य जीवन्मुक्तस्य वाचकत्वेऽपि वीरशैवसम्प्रदाये वीरमाहेश्वरवंशोत्पन्नानामपि वाचको भवति। तथा चोक्तम्–

---

स्वात्मरूप से तैलधारावत् निरन्तर ध्यान करते हैं, स्व से भिन्न किसी व्यक्ति या वस्तु को नहीं देखते अतः वह **परजङ्गम** कहलाते हैं। श्रीरेणुकाचार्य जी ने कहा है—

'स्वयमेव स्वयं भूत्वा.......परत्वमभिधीयते।।१।।'

यहाँ विशेषरूप से ध्यातव्य है— स्वजङ्गम, घटपटादि समस्त पदार्थों में स्वात्मदर्शन करते हैं। इसके विपरीत परजङ्गम को घटपदादि की प्रतीति होती ही नहीं। उन्हें तो अखण्डस्वात्मदर्शन ही होता है, खण्ड व्यावहारिक पदार्थों का नहीं। परजङ्गम परमहंस को शिवयोगिराट् भी कहा जाता है।

उपर्युक्त त्रिविध अवस्था में विद्यमान रहने वाले जङ्गम यतः शिवज्ञानोपदेश द्वारा शिवभक्तों को संसार दुःख से परित्राण करते हैं अतः इन्हें आवरण की संज्ञा से विभूषित किया जाता है।

यह भी विशेषरूप से ध्यातव्य है— यथा 'ब्रह्म जानाति इति ब्राह्मणः' व्युत्पत्ति के आधार पर ब्रह्मज्ञानी अर्थ का वाचक होने पर भी ब्राह्मण शब्द, ब्राह्मणजाति का भी वाचक होता है। तद्वत् जङ्गमशब्द, शिवज्ञानसम्पन्न जीवन्मुक्त का वाचक होने पर भी वीरशैवसम्प्रदाय में वीरमाहेश्वर-वंशोत्पन्न जनों का भी वाचक है। तद्यथा—

---

१. सि० शि० १५।१, पृ० ६८.

अतो विशिष्टवीरेति वीरमाहेश्वरेति च।
पर्यायो वर्तते देवि जङ्गमस्य महात्मनः।।[२] इति।

तस्माज्जङ्गमशब्दो जातिवाचकोऽपि वर्तते। अत्राष्टावरणेषु जीवन्मुक्तस्य प्राधान्येन, जातिवाचकजङ्गमस्य च गौणरीत्याऽभ्युपगमो भवति।

## ४. पादोदकम्

परमानन्द एवोक्तः पादशब्देन निर्मलः।
ज्ञानं चोदकशब्देन तयोरैक्यं तु दीक्षया।।[३]

इति श्रीरेणुकभगवत्पादोक्त्या स्वकीयपरमानन्दज्ञानमेव पादोदकशब्दस्य तात्त्विकोऽर्थो भवति। वीरशैवसम्प्रदाये एतादृशज्ञानप्राप्तये साधनीभूत-गुरुजङ्गमयोश्चरणामृतमपि पादोदकमिति कथ्यते। पादोदकनिर्माणावसरे–

अङ्गुष्ठे भावयेद् रुद्रं तर्जन्यां शङ्करं स्मरेत्।
मध्यमायां महादेवमनामिक्यां त्रियम्बकम्।।
कनिष्ठिकायामीशानं पादोपरि कपर्दिनम्।
पादाधः पञ्चवदनं गुल्फयोरुग्रभर्गकौ।।

---

'अतो विशिष्टवीरेति........जङ्गमस्य महात्मनः।।'

अष्टावरण में प्रधान्येन जीवन्मुक्त को जङ्गमशब्द से गृहीत किया जाता है तथा गौणरीत्या जातिवाचक जङ्गमों को गृहीत किया जाता है।

## ४. पादोदक–

स्वकीय परमानन्दज्ञान पादोदक-शब्द का तात्त्विक अर्थ है। श्रीरेणुकाचार्य ने सुस्पष्ट कहा है—

परमानन्द एवोक्तः ......................... तु दीक्षया।।

वीरशैवसम्प्रदाय में एतादृश ज्ञान की प्राप्तिहेतु साधनरूपतया स्वीकृत गुरु एवं जङ्गमों के चरणामृत को भी **पादोदक** कहा जाता है। पादोदक निर्माण के विषय में पारमेश्वर तन्त्र में कहा गया है—

'अङ्गुष्ठे भावयेद्रुद्रं...........पीत्वा शिरसि धारयेत्।।३।।'

---

१. वी० स० स० ११।४५.
२. सि० शि० १९।८, पृ० १५७.

**सर्वं लिङ्गमयं ध्यात्वा पादं जङ्गमलिङ्गिनः।**
**पिबेत् संक्षालितं तोयं पीत्वा शिरसि धारयेत्।।**[१]

इति पारमेश्वरतन्त्रोक्त्यनुसारं जङ्गमस्य (जीवन्मुक्तमहापुरुषस्य) पादस्याङ्गुष्ठाद्यङ्गुलीषु शिवस्य नानामूर्तीर्ध्यात्वा पादौ सम्पूज्य पादयोरधः पात्रविशेषं निधाय अङ्गुष्ठयोरुपरि जलं प्रवाह्याधस्तनपात्रे तत् संगृह्यते। एवं विधिना संगृहीतं चरणामृतमेव पादोदकमिति कथ्यते। वीरशैवसम्प्रदाये प्रतिदिनं पादोदकस्य ग्रहणमादिष्टम्। इदं च पादोदकं गुरुपादपूजया प्राप्तं चेद् गुरुपादोदकमिति, इष्टलिङ्गपूजया प्राप्तं चेल्लिङ्गपादोदकमिति चाभिधीयते। वीरशैवास्त्रिविधमपि पादोदकं भक्त्या स्वीकुर्वन्ति। तदुक्तम्—

**पादोदकं यथा भक्त्या स्वीकरोति महेशितुः।**
**तथा शिवात्मनोर्नित्यं गुरुजङ्गमयोरपि।।**[२]इति।

त्रिविधपादोदकसेवनेन सर्वपापक्षयः संजायते। एवं पादोदकं पापपरिहारेण शिवभक्तं परिरक्षतीति पादोदकमप्यावरणशब्दभाग् भवति।

---

इसका आशय है— मुक्तमहापुरुष के पैर के अङ्गुष्ठादि अङ्गुलियों में शिव की अनेक मूर्तियों का ध्यान कर पैरों की पूजा कर उनके नीचे पात्रविशेष को रखकर अङ्गुष्ठोपरि जल को प्रवाहित कर पात्र में उस जल को संगृहीत किया जाता है। इस विधि से संगृहीत चरणामृत पादोदक कहलाता है। वीरशैवसम्प्रदाय में प्रतिदिन पादोदकग्रहण प्रतिपादित है। गुरुपादपूजा से प्राप्त यह जल गुरुपादोदक कहलाता है। जङ्गम पादपूजा से प्राप्त होने पर जङ्गमपादोदक तथा इष्टलिङ्गपूजा से प्राप्त होने पर लिङ्गपादोदक कहलाता है। वीरशैव साधक त्रिविध पादोदक को शक्तिपूर्वक स्वीकार करते हैं। श्रीरेणुकाचार्य जी ने सुस्पष्ट कहा है—

'पादोदकं यथा .............................. गुरुजङ्गमयोरपिं।।१।।'

पादोदकसेवन द्वारा सर्वपापक्षय होता है। पापपरिहार से शिवभक्तों का परिरक्षक **पादोदक** आवरणशब्द से कथित होता है।

---

१. पा० तन्त्र० ७।४७-५०.
२. सि० शि० ९।९, पृ० १५८.

## ५. प्रसादः

"नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते"[१] इत्याचार्योक्त्या चित्तस्य निर्मलत्वचिह्नं प्रसाद इत्यभिधीयते। शिवसमर्पितानामेव वस्तूनां सेवनेन मनसो नैर्मल्यं जायते। वस्तूनि भोग्य-धार्यभेदेन द्विप्रकाराणि भवन्ति। तत्रान्नादिर्भोग्यमिति, वस्त्रादिर्धार्यमिति कथ्यते। शिवभक्तः स्वकीयानि भोग्यानि, धार्याणि च वस्तूनि शिवाय समर्प्यैवोपभुङ्क्ते परिधत्ते च। एवं शिवार्पितानां वस्तूनां प्रसादरूपेण सेवनेन मनसो नैर्मल्यं जायते। तदुक्तमाचार्यैः–

> **शिवप्रसादं यद् द्रव्यं शिवाय विनिवेदितम्।**
> **निर्माल्यं तत्तु शैवानां मनोनैर्मल्यकारणम्।।**[२]**इति।**

निर्मले च मनसि शिवभक्तेरुदयो भवति, भक्त्युदये च शिवप्रसादो जायते। तस्मात् शिवप्रसाद-शिवभक्त्योर्बीजाङ्कुरवदन्योन्यसम्बन्धो वर्तते। तथा चोक्तम्–

> **प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः।**
> **यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः।।**[३]**इति।**

---

## ५. प्रसाद

सिद्धान्तशिखामणि का वचन है— 'नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते।' तदनुसार चित्त की निर्मलता के लक्षणविशेष को प्रसाद कहा जाता है। शिवसमर्पित वस्तुओं के सेवन से मनस् का नैर्मल्य उत्पन्न होता है। वस्तु दो प्रकार के होते हैं— भोग्य एवं धार्य। अन्नादि वस्तु भोग्य कहलाती है तथा वस्त्रादि धार्य। शिवभक्त अपने योग्यएवं धार्यवस्तु को शिवार्पण कर प्रसाद रूप में उनका ग्रहण करता है। इस प्रकार प्रसाद के सेवन से मनस् का नैर्मल्य उत्पन्न होता है। आचार्योक्ति है—

'शिवप्रसादं यद्द्रव्यं................मनोनैर्मल्यकारणम्।।१।।'

निर्मलमनस् में शिवभक्ति का उदय होता है तथा भक्ति का उदय होने पर शिवप्रसाद प्राप्त होता है। अतः शिवप्रसाद एवं शिवभक्ति के मध्य बीजाङ्कुरवद् अन्योन्य सम्बन्ध है। तद्यथा—

प्रसादादेव सा..............................वा यथाङ्कुरः।।१।।

---

१. सि० शि० ११।६, पृ० १९४.
२. सि० शि० ११७, पृ० १९४.
३. सि० शि० ९।११ पृ० १४०.

अपरं च–

भुञ्जीयाद् रुद्रभुक्तान्नं रुद्रपीतं जलं पिबेत्।
रुद्राघ्रातं सदा जिघ्रेदिति जाबालिकी श्रुतिः।।
अर्पयित्वा निजे लिङ्गे पत्रं पुष्पं फलं जलम्।
अन्नाद्यं सर्वभोज्यं च स्वीकुर्याद् भक्तिमान्नरः।।[१]

इति श्रीरेणुकभगवत्पादा जाबालश्रुतिमुदाहरन्तः शिवप्रसादग्रहणं विहितवन्तः। "तेन त्यक्तेन भुञ्जीथाः"[२] इत्युपनिषदापि स एवार्थः प्रतिपादितः। यथा शिवप्रसादो ग्राह्यस्तथा गुरुजङ्गमयोरपि प्रसादो वीरशैवैरवश्यं ग्राह्य एव। तत्र गुरुमुखात् प्राप्तः प्रसादः शुद्धप्रसाद इति, लिङ्गमुखात् प्राप्तः सिद्धप्रसाद इति, जङ्गममुखात् प्राप्तः प्रसिद्धप्रसाद इति व्यवह्रियते। तदुक्तं श्रीमरितोण्टदार्यैः–

प्रसादस्त्रिविधः प्रोक्तः शुद्धः सिद्धः प्रसिद्धकः।
शुद्धो गुरुमुखात् प्राप्तः सिद्धो लिङ्गमुखात्तथा।
प्रसिद्धो जङ्गममुखात् प्रसादस्त्रिविधो मतः।।[३]इति।

तदयं प्रसादोऽपि मनसः प्रसादकारणं भूत्वा शिवभक्तं संसारसागरात् परिरक्षतीति प्रसादोऽप्यावरणमित्युच्यते।

---

एवम्—

'भुञ्जीयाद्रुद्रभुक्तान्नं........स्वीकुर्याद् भक्तिमान्नरः।।१½।।'

इस प्रकार जाबालश्रुति का उपस्थापन कर श्रीरेणुकभगवत्पाद ने शिवप्रसाद-ग्रहण का विधान किया है। 'तेन त्यक्तेन भुञ्जीथाः।' इस उपनिषद् द्वारा भी यही अर्थ प्रतिपादित किया गया है।

शिवप्रसादवत् गुरु एवं जङ्गम के प्रसाद का भी ग्रहण वीरशैवसाधकों को करना चाहिए। गुरुमुख से प्राप्त प्रसाद को **शुद्धप्रसाद** लिङ्गमुख से प्राप्त प्रसाद को **सिद्धप्रसाद** एवं जङ्गममुख से प्राप्त प्रसाद को **प्रसिद्धप्रसाद** कहा जाता है। श्री मरितोण्डदार्य जी नें कहा है—

'प्रसादस्त्रिविधः प्रोक्तः..........प्रसादस्त्रिविधो मतः।।१½।।

---

१. सि० शि० ९।४-५, प-० १५८-१५९.

२. ई० उ० १.

३. वी० आ० च०, पृ० १३२.

## ६. विभूतिः

परिशुद्धगोमयोत्पादितं हि भस्म विभूतिरित्युच्यते। अस्य च–विभूतिः, भसितम्, भस्म, क्षारम्, रक्षा इति पञ्च नामानि भवन्ति। तत्र भूति–हेतुत्वात्, अर्थाद् अणिमाद्यष्टैश्वर्यकारणत्वाद्विभूतिरिति, शिवतत्त्वप्रकाशनाद् भसितमिति, मनोवाक्कायजन्यानां पापानां भर्त्सनाद् भस्म इति, तापत्रयोत्पन्नविपदां क्षारणात् क्षारमिति, सर्वभूतेभ्यो रक्षणाद् रक्षेति विभूतेः सहेतुकानि पञ्च नामान्युपपादितानि। तदुक्तम्–

> विभूतिर्भूतिहेतुत्वाद् भसितं तत्त्वभासनात्।
> पापानां भर्त्सनाद् भस्म क्षरणात् क्षारमापदाम्।।
> रक्षणात् सर्वभूतेभ्यो रक्षेति परिगीयते।।[१]इति।

तत्र शिवस्य सद्योजातमुखोत्पन्नायाः 'नन्दा' इत्याख्यायाः कपिलवर्णाया गोर्गोमयेन विनिर्मितस्य विभूतिरिति नाम। अस्य चोपयोगो नित्यकर्मणः कर्तव्यावसरे विधीयते।

---

त्रिविध प्रसाद में मन:प्रसाद की कारणता प्रतिपादित है। यतश्च प्रसाद भी शिवभक्त को संसारसागर से रक्षित करता है अत: इसे भी आवरण कहा जाता है।

## ६. विभूति

परिशुद्ध गोमय से उत्पादित भस्म कहलाता है। भस्म के अन्य चार पर्याय हैं— विभूति, भसित, क्षार एवं रक्षा। भूति अर्थात् अणिमाप्रभृति आठ ऐश्वर्यों का प्रदान करना है अत: भस्म को **विभूति** कहा जाता है। शिवतत्त्व का प्रकाशन करने के कारण इसका दूसरा नाम **भसित** है। मनस्, वाक् एवं काय से उत्पन्न पापों का भर्त्सन करने के कारण यह भस्म कहलाता है। तापत्रय से उत्पन्न विपदाओं का क्षरण (विनाश) करने से भस्म का दूसरा नाम **क्षार** है। ग्रहादि एवम् अन्य प्राणियों से रक्षा करने के कारण भस्म का एक अन्य नाम है रक्षा। इस प्रकार अनेक नाम सहेतुक हैं। तद्यथा—

'विभूतिर्भूतिहेतुत्वाद् ...........रक्षेति परिगीयते।।१½।।

शिव के सद्योजातमुख से उत्पन्न नन्दानाम वाली कपिलवर्णवाली गो के गोमय से निर्मित भस्म को **विभूति** कहा जाता है। इसका उपयोग नित्यकर्म अनुष्ठान के अवसरपर किया जाता है।

---

१. सि० शि० ७।५-६, पृ० १०२.

शिवस्य वामदेवमुखोत्पन्नकृष्णवर्णकभद्रानाम्न्या गोर्गोमयेन निर्मिता विभूतिर्भसितमिति कथ्यते। अस्य चोपयोगो नैमित्तिककर्मणः कर्तव्यावसरे क्रियते। भसितस्य धारणेन शिवतत्त्वस्य भासनं भवति।

शिवस्याघोरमुखोत्पन्नायाः शुभ्रवर्णायाः 'सुरभि' इति नाम्न्या गोर्गोमयेन भस्मनो निर्मितिर्भवति। प्रायश्चित्तकर्मणि भस्मन उपयोगः क्रियते। अस्य धारणेन सर्वेषामपि पापानां भर्त्सनं भवति।

शिवस्य तत्पुरुषमुखोत्पन्नाया धूम्रवर्णायाः सुशीलाख्याया गोर्गोमयेन क्षाराख्यभस्मनो निर्मितिर्जायते। काम्यकर्मणां कर्तव्यावसरे क्षारस्य धारणं विहितम्। अनेन सर्वेषामप्यापदां क्षारणं भवतीत्यस्य नाम क्षारेति।

शिवस्येशानमुखोत्पन्नाया रक्तवर्णायाः सुमनाख्याया गोर्गोमयेन रक्षाख्यभस्मनो निर्मितिर्जायते। मोक्षकार्येष्वस्य धारणं क्रियते। अस्य धारणेन भूतप्रेतादिभ्योऽस्य परिरक्षणं भवतीत्यस्य नाम[1] रक्षेति।

तदेतेषु पञ्चविधेषु भस्मसु नित्यादिकर्मकर्तव्यावसरे वीरशैवशास्त्रोक्तविधानेन[2]

---

शिव के वामदेवमुख से उत्पन्न कृष्णवर्णवाली भद्रानामवाली गो के गोमय से निर्मित विभूति को **भसित** कहा जाता है। इसका उपयोग नैमित्तिक कर्मानुष्ठान के अवसर पर किया जाता है। भसित के धारण करने से शिवतत्त्व का अवभासन होता है।

शिव के अघोरमुख से उत्पन्न शुभ्रवर्णवाली सुरभिनामवाली गो के गोमय से सारसंज्ञक भस्म निर्मित होता है। वाक्य कर्म के अनुष्ठान के अवसर पर **क्षार** का धारण विहित है। इसके धारण से समस्त आपदों का क्षय (क्षरण) होता है।

शिव के ईशानमुख से उत्पन्न रक्तवर्ण वाली सुमनानाम वाली गो के गोमय से **रक्षा**-संज्ञक भस्म की उत्पत्ति होती है। मोक्षोद्देश्यक अनुष्ठान में इसका उपयोग होता है। इसके धारण से भूतप्रेतादि-बाधा से सुरक्षाप्राप्त होती है अतः इसे **रक्षा** नाम दिया गया है।

---

१. सि० शि० ७/५-११, पृ० १०२-१०४.

२. त्रिपुण्ड्रं धारयेन्नित्यं भस्मना सलिलेन च।
स्थानेषु पञ्चदशसु शरीरे साधकोत्तमः।।
उत्तमाङ्गे ललाटे च श्रवणद्वितये तथा।
गले भुजद्वये चैव हृदि नाभौ च पृष्ठके।।

तत्तदसाधारणभस्मधारणेन साधकस्यानिष्टपरिहार इष्टप्राप्तिश्च संजायत इति विभूतिरपि साधकस्य रक्षाकवचमिति तस्याप्यावरणशब्दवाच्यत्वं भवति।

### ७. रुद्राक्षः

पुरा त्रिपुरसंहारे त्रिनेत्रो जगतां पतिः।
उदपश्यत् पुरा योगमुन्मीलितविलोचनः।।
निपेतुस्तस्य नेत्रेभ्यो बहवो जलबिन्दवः।
तेभ्यो जाता हि रुद्राक्षा रुद्राक्षा इति कीर्तिताः।।[1]

इति श्रीरेणुकभगवत्पादोक्त्या रुद्रनेत्रसमुत्पन्नानामेतेषां रुद्राक्ष इति नाम। तत्र रुद्रस्य सूर्यनेत्राद् द्वादशविधाः कपिलवर्णाः, सोमनेत्रात् श्वेताः षोडशविधाः, अग्निनेत्रात् कृष्णवर्णा दशविधा इत्याहत्याष्टात्रिंशद्धा रुद्राक्षा उत्पन्नाः। एते च रुद्राक्षा एकमुखाच्चतुर्दशमुखपर्यन्ता भवन्ति। वीरशैवाः स्वेष्टलिङ्गपूजायां शरीरे शिरःकरादिस्थानेषु शास्त्रोक्तविधिना भिन्नभिन्नमुखान् रुद्राक्षान् परिधारयन्ति[2]।

---

उपर्युक्त पञ्चविध भस्म को नित्यनैमित्तिक प्रभृति कर्मानुष्ठानों में शास्त्रोक्त विधि से धारण करने पर साधक को अनिष्टपरिहार के साथ इष्टप्राप्ति होती है। अतः साधक के रक्षाकवच तुल्य होने से विभूति को भी **आवरण** कहा जाता है।

### ३. रुद्राक्ष

आचार्य श्रीरेणुक भगवत्पाद ने रुद्रनेत्रनिर्गत जलबिन्दु से उत्पन्न होने के कारण रुद्राक्ष-नामकरण की अन्वर्थता प्रतिपादित की है— तद्‌यथा—

'पुरा त्रिपुरसंहारे........रुद्राक्षा इति कीर्तिताः।।२।।'

रुद्र के सूर्यरूपनेत्र से १२ प्रकार के कपिलवर्णवाले रुद्राक्ष उत्पन्न हुए। तद्वत् सोमनेत्र से १६ प्रकार के श्वेत रूपवाले एवं अग्निनेत्र से १० प्रकार के कृष्णवर्णवाले रुद्राक्ष उत्पन्न हुए। सबके योग करने से ३८ प्रकार के रुद्राक्ष

---

बाहुयुग्मे ककुद्देशे मणिबन्धद्वये तथा।
त्रिपुण्ड्रं भस्मना धार्यं मूलमन्त्रेण साधकैः।। (सि० शि० ७।३१-३३, पृ० १०९)

१. तत्रैव ७।३-४, पृ० ११३.

२. शिखायामेकमेकास्यं रुद्राक्षं धारयेद् बुधः।
द्वित्रिद्वादशवक्त्राणि शिरसि त्रीणि धारयेत्।।

एतादृशस्य शिवाङ्गसम्भूतस्य रुद्राक्षस्य धारणाद् भावशुद्धिः शिवाभिमर्शश्च संजायते।

दर्शनात् स्पर्शनाच्चैव स्मरणादपि पूजनात्।
रुद्राक्षधारणाल्लोके मुच्यन्ते पातकैर्जनाः।।[1]

इति श्रीरेणुकभगवत्पादोक्त्या रुद्राक्षधारणेन सर्वविधपातकानां निवृत्तिर्जायत इति रुद्राक्षाः पातकनिवारणेन शिवभक्तस्य परिरक्षका भवन्तीति तेषामप्यावरणशब्दाभिधेयत्वं युक्तमेव।

---

होते हैं। ये एक मुख से लेकर १४ मुख वाले रुद्राक्ष होते हैं। वीरशैवसाधक इष्टलिङ्ग पूजा के समय शरीर के विभिन्न अङ्गों (शिरस्, कर, बाहु) में शास्त्रोक्त विधि से भिन्न-भिन्न मुखवाले रुद्राक्षों को धारित करते थे।

एतादृश शिवाङ्ग-सम्भूत रुद्राक्ष के धारण से भावशुद्धिपुरःसर शिवस्वरूप का अभिमर्शन होता है।

रुद्राक्ष का दर्शन, स्पर्श, स्मरण अथवा धारण, सर्वविध पातकों का नाशक होता है। तद्यथा—

'दर्शनात् स्पर्शनाच्चैव.......मुच्यन्ते पातकैर्जनाः।।१।।

यतश्च रुद्राक्ष पापों के नाशक होते हैं तथा शिवभक्त (साधकों) के रक्षक होते हैं अतः रुद्राक्ष को भी **आवरण** की संज्ञा से विभूषित किया जाता है।

---

षट्त्रिंशद्धारयेन्मूर्ध्नि नित्यमेकादशाननान्।
दशसप्तपञ्चवक्त्रान् षट् षट् कर्णद्वये वहेत्।।
षडष्टवदनान् कण्ठे द्वात्रिंशद्धारयेत् सदा।
पञ्चाशद् धारयेद् विद्वान् चतुर्वक्त्राणि वक्षसि।।
त्रयोदशमुखान् बाह्वोर्धरेत् षोडश षोडश।
प्रत्येकं द्वादश बहेन्नवास्यान्मणिबन्धयोः।।
चतुर्दशमुखं यज्ञसूत्रमष्टोत्तरं शतम्।
धारयेत् सर्वकालं तु रुद्राक्षं शिवपूजकः।।
(सि० शि० ७।१०-१४, पृ० ११५-११६)

१. तत्रैव ७।१७, पृ० ११७.

## ८. मन्त्रः

तत्र तावदाचार्यवर्याः श्रीरेणुकभगवत्पादाः–

नमःशब्दं वदेत्पूर्वं शिवायेति ततः परम्।
मन्त्रः पञ्चाक्षरो ह्येष सर्वश्रुतिशिरोगतः।।[१]

इति पञ्चाक्षरमन्त्रस्वरूपं निरूपितवन्तः। शिवतत्त्वप्रबोधकः शिवपञ्चाक्षर एव वीरशैवानां प्रमुखो मन्त्रः। मन्त्रदीक्षावसरे गुरुः शिष्यस्य दक्षिणकर्णे शिवपञ्चाक्षरमहामन्त्रं समुपदिशति। अयं मन्त्रः सप्तकोटिमन्त्रेषु प्रधानत्वेन परिगण्यते। तदुक्तमाचार्यैः–

सप्तकोटिषु मन्त्रेषु मन्त्रः पञ्चाक्षरो महान्।
ब्रह्मविष्ण्वादिदेवेषु यथा शम्भुर्महत्तरः।।[२] इति।

अयमेव मन्त्रो यदा ॐकारविशिष्टो भवति तदा षडक्षर इति[३] कथ्यते। अस्य पञ्चाक्षरमहामन्त्रस्य मूलम्, विद्या, शिवः, शैवसूत्रम्, पञ्चाक्षर इति पञ्च

---

## ८. मन्त्र

रेणुक भगवत्पाद ने पञ्चाक्षर मन्त्र के स्वरूप को प्रतिपादित किया है। तद्यथा—

'नमःशब्दं वदेत् ........................ सर्वश्रुतिशिरोगतः।।

यह पञ्चाक्षर शिवमंन्त्र यतः शिवतत्त्व का प्रबोधक है अतः इसे वीरशैव का प्रमुख मन्त्र कहा जाता है। मन्त्रदीक्षा के अवसर पर गुरु, शिष्य को दाहिने कान में इस पञ्चाक्षर शिवमन्त्र का उपदेश करते हैं। सात करोड़ मन्त्रों में पञ्चाक्षर मन्त्र को सर्वप्रमुख माना जाता है। तद्यथा—

'सप्तकोटिषु मन्त्रेषु.............यथा शम्भुर्महत्तरः।।१।।

यही मन्त्र जब ओंकार से युक्त होता है तब षडक्षर मन्त्र कहलाता है। इस महामन्त्र (पञ्चाक्षर) के पाँच नाम शास्त्र एवं लोक में प्रसिद्ध हैं—

१. मूल मन्त्र २. विद्यामन्त्र ३. शिवमन्त्र ४. शैवसूत्र तथा ५ पञ्चाक्षर मन्त्र। यतश्च यह मन्त्र, सात करोड़ मन्त्रों का मूल कारण है अतः इसे **मूल** संज्ञा से विभूषित किया

---

१. सि० शि० ८।७, पृ० १२३.

२. तत्रैव ८।४, पृ० १२१.

३. ॐकारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः।
शैवागमेषु वेदेषु षडक्षर इति स्मृतः।। (तत्रैव ८।१७, पृ० १२६)

नामानि प्रसिद्धानि सन्ति[१]। तत्र सप्तकोटिमन्त्राणां मूलकारणत्वादस्य मूलमिति नाम। अस्य मननेन शिवजीवयोरेकत्वबोधिकाया विद्याया उदयो भवति, अतो विद्योत्पादने कारणीभूतोऽयं मन्त्रो विद्याशब्देन व्यवह्रियते। शिवदर्शनस्य निमित्तकारणत्वात् शिव इति कथ्यते। शिवसम्बन्धिनः सर्वे विषयाः पञ्चस्वक्षरेष्वेव सूत्ररूपेण निहिता इति मन्त्रोऽयं शैवसूत्रमित्युच्यते। 'नमः शिवाय' इति पञ्चभिरक्षरैर्युक्तत्वादयं पञ्चाक्षर इति भण्यते।

पञ्चाक्षरमहामन्त्रस्य वामदेव ऋषिः, पङ्क्तिछन्दः, शिवो देवता, ॐकारो बीजम्, उमा च शक्तिर्वर्तते। एतत् सर्वं गुरुमुखाज्ज्ञात्वा प्राणायामत्रयं कृत्वा पूर्वमुख उदङ्मुखो वोपविश्य स्वेष्टलिङ्गसाक्षित्वेन वीरशैवोऽष्टोत्तरशतवारमितोऽप्यधिकं वा यथाशक्ति रुद्राक्षमालया[२] जपं करोति। अयं जपो वाचिकः, उपांशुः, मानसिकश्चेति त्रिविधो भवति।

तदुक्तमाचार्यवर्यैः—

> **जपस्तु त्रिविधः प्रोक्तो वाचिकोपांशुमानसः।**
> **श्रूयते यस्तु पार्श्वस्थैर्यथा वर्णसमन्वयः।।**
> **वाचिकः स तु विज्ञेयः सर्वपापप्रभञ्जनः।**
> **ईषत्स्पृष्ट्वाऽधरपुटं यो मन्दमभिधीयते।।**

---

जाता है। इसके मनन करने से शिव और जीव के एकत्व की बोधिका विद्या का उदय होता है। अतः विद्योत्पादन में कारणीभूत यह मन्त्र **विद्या** शब्द से व्यवहृत होता है। तद्वत् शिवदर्शन में निमित्त बनने से मन्त्र को **शिव** कहा जाता है। यतश्च शिव-सम्बन्धी सभी विषय पाँच अक्षरों में ही सूत्र रूप से अनुस्यूत हैं अतः इस मन्त्र को शैवसूत्र कहा जाता है। 'नमः शिवाय'— इन पाँच अक्षरों से युक्त यह पञ्चाक्षर कहलाता है।

पञ्चाक्षर महामन्त्र के वामदेव ऋषि हैं, पङ्क्ति छन्द है, शिव देवता हैं, ओंकार बीज है तथा उमा देवी शक्ति हैं। इन बातों के गुरुमुख से उपदेश द्वारा जान लेने के पश्चात् तीन बार प्राणायाम करके पूर्वाभिमुख अथवा उत्तराभिमुख आसन में उपविष्ट होकर अपने इष्टलिङ्ग को साक्षी बनाकर वीरशैव १०८ बार या इससे भी अधिक यथाशक्ति रुद्राक्ष माला द्वारा साधक जप करता है। यह जप तीन प्रकार का होता है— वाचिक, उपांशु

---

१. मूलं विद्या शिवः शैवं सूत्रं पञ्चाक्षरस्तथा।
एतानि नामधेयानि कीर्तितानि महामनोः।। (तत्रैव ८।२३, पृ० १२९)

२. सि० शि० ८।२५-२६, पृ० १३.

पार्श्वस्थैरश्रुतः सोऽयमुपांशुः परिकीर्तितः।
अस्पृष्ट्वाऽधरमस्पन्दि जिह्वाग्रं योऽन्तरात्मना।
भाव्यते वर्णरूपेण स मानस इति स्मृतः।।[1]इति।

एतेषु त्रिविधजपेषु मानसिक एव श्रेष्ठतमः।

अयं पञ्चाक्षरमहामन्त्र एव विभिन्नैर्बीजाक्षरैर्युक्तः सन् प्रसादपञ्चाक्षरः, मायापञ्चाक्षरः, सूक्ष्मपञ्चाक्षरः, स्थूलपञ्चाक्षरः, मूलपञ्चाक्षर इत्यभिधानभाग् भवति। एते च क्रमशो दश-नव-अष्ट-सप्तषड्वर्णका भवन्ति। एतेषां स्वरूपं गोपनीयं भवति। बीजाक्षरयुक्तानामेतेषां मन्त्राणामुपदेशो न सर्वसाधारणेभ्यो विधीयते, किन्त्वेतत्सम्प्रदायमठेषु पट्टाभिषिक्तेभ्य आचार्येभ्यस्तदीयपट्टाभिषेकसमये उपदिश्यते। तत्र वीरगोत्राचार्येभ्यः प्रसादपञ्चाक्षरः, नन्दिगोत्राचार्येभ्यो मायापञ्चाक्षरः भृङ्गि-गोत्राचार्येभ्यः सूक्ष्मपञ्चाक्षरः, वृषभगोत्राचार्येभ्यः स्थूलपञ्चाक्षरः, स्कन्दगोत्राचार्येभ्यो मूलपञ्चाक्षरमन्त्र उपदिश्यत इति विज्ञेयम्[2]। अयं पञ्चाक्षरमन्त्रो मननेन जपतो नास्ति पातकम्' इत्युक्त्यनुसारेण पापनिवारणद्वारा सांसारिकदोषैस्तं साधकं परिरक्षतीति मन्त्रोऽप्यावरणशब्दभाग् भवति।

---

एवं मानसिक। इनमें मानसिक जप सर्वश्रेष्ठ माना जाता है। तद्यथा—

'जपस्तु त्रिविधः ......................................इति स्मृतः।।४½।।

यह पञ्चाक्षर महामन्त्र ही विभिन्न बीजाक्षरों से युक्त होकर प्रसाद पञ्चाक्षर, मायापञ्चाक्षर, सूक्ष्मपञ्चाक्षर, स्थूलपञ्चाक्षर एवं मूलपञ्चाक्षर की संज्ञाओं से विभूषित होता है। इन मन्त्रों में क्रमशः १०, ०९, ०८, ०७ एवं ०६ वर्ण होते हैं। इनका स्वरूप अत्यन्त गोपनीय होता है। बीजाक्षर युक्त इन मन्त्रों का उपदेश सर्वसाधारण को नहीं दिया जाता है। किन्तु वीरशैव सम्प्रदाय के मठों में जो पट्टाभिषिक्त होते हैं उन आचार्यों के प्रति उनके पट्टाभिषेक के समय उपदेश दे दिया जाता है। इनमें वीर गोत्राचार्यों को प्रसाद पञ्चाक्षर, नन्दिगोत्राचार्यों को मायापञ्चाक्षर, शृङ्गिगोत्राचार्यों को सूक्ष्म पञ्चाक्षर, वृषभगोत्राचार्यों को स्थूलपञ्चाक्षर एवं स्कन्द गोत्राचार्यों को मूलपञ्चाक्षर मन्त्र का उपदेश किया जाता है। यह पञ्चाक्षर मन्त्र मनन द्वारा 'जपतो नास्ति पातकम्' इस कथन के अनुसार पापनिवारण द्वारा सांसारिक दोषों से साधक की रक्षा करता है। अतः मन्त्र को भी आवरणसंज्ञा से विभूषित किया जाता है।

---

१. सि० शि० ८।२७-२९, प-० १३०-१३१.

२. वी० स० स० ५।१४-४०.

तदेवमुपर्युक्तैर्गुरु-लिङ्ग-जङ्गम-पादोदक-प्रसाद-विभूति-रुद्राक्ष-मन्त्राख्यै-रष्टभिरावरणैः शिवभक्तस्य सांसारिकदोषैः परिरक्षा भवतीति वीरशैवाचार्यास्तान्यष्टावरणानीति व्यपदिष्टवन्तः।

करचरणाद्यवयवयुक्तमपि शरीरं यथा प्राणैर्विना न व्यवहारयोग्यं भवति, तथाष्टावरणरूपाङ्गविशिष्टो वीरशैवः पञ्चाचाराख्यप्राणरहितश्चेत् तस्य धार्मिकं जीवनं न पूर्णतामापद्यत इति वीरशैवाचार्याः पञ्च आचारानुपदिष्टवन्तः। तेषां परिपालनं सर्वैरपि वीरशैवैः क्रियते। तदधुना तेषां स्वरूपं तावद्विचारयामः।

## पञ्चाचारसमीक्षा

वीरशैवदर्शनपथप्रवृत्तस्य साधकस्य पञ्चाचाराः प्राणस्वरूपा इति पूर्वमुक्तम्। तेषां कानि नामानीति जिज्ञासायामुक्तं चन्द्रज्ञानागमे—

**लिङ्गाचारः सदाचारः शिवाचारस्तथैव च।**
**भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः।।**[१] **इति।**

---

उपर्युक्त विवेचना से सुविदित होता है— उपर्युक्त ८ आवरणों (गुरु, लिङ्ग, जङ्गम, पादोदक, प्रसाद, विभूति, रुद्राक्ष एवं मन्त्र) से शिवभक्त की सांसारिक दोषों से रक्षा होती है अतः वीरशैवाचार्य इन्हें आवरण संज्ञा से विभूषित करते हैं।

कर-चरण प्रभृति अवयवों से युक्त होने पर भी शरीर जिस प्रकार प्राणों के बिना व्यवहारयोग्य नहीं होता है। तद्वत् अष्टविध आवरणों (अङ्गों) से युक्त होने के बावजूद वीरशैव यदि पञ्चविध आचाररूपी प्राणोंसे वर्जित हो तो उसका धार्मिक जीवन परिपूर्ण नहीं होता। अतः वीरशैवाचार्यों ने पञ्चविध आचारों का उपदेश किया है। उनका परिपालन सभी वीरशैव करते हैं। अतः सम्प्रति उनके स्वरूप का विचार करते हैं।

## पञ्चविध आचार की समीक्षा

वीरशैवदर्शन के पथिक साधक के ५ प्रकार के आचार, प्राणस्वरूप होते हैं। यह ऊपर कहा जा चुका है। उनके नाम चन्द्रज्ञानागम में प्रतिपादित हैं—

'लिङ्गाचार : सदाचारः..................पञ्चाचाराः प्रकीर्तिताः॥१॥

---

१. च० ज्ञा० आ०, क्रियापादे, ९।४.

### १. लिङ्गाचारः

अङ्गस्य (जीवस्य) लिङ्गस्वरूपप्राप्तये उपदिष्ट आचारो लिङ्गाचारः। शरीरेण लिङ्गपूजनम्, मनसा तच्चिन्तनम्, भावनया तस्यैव निदिध्यासनं लिङ्गाचार इत्युच्यते। तदुक्तमागमे–

गुरुणा दत्तलिङ्गान्न परो देवो महीतले।
इति भावानुसन्धानं लिङ्गाचारः स उच्यते।।[1]इति।

अत्रेदमैदम्पर्यम्–वीरशैवसम्प्रदाये गुरुः क्रियादीक्षयेष्टलिङ्गं प्रददाति, मन्त्रदीक्षया प्राणलिङ्गस्वरूपमुपदिशति, वेधदीक्षया च भावलिङ्गं बोधयति। एवं त्रिविधदीक्षया प्राप्तानामिष्ट–प्राण–भावलिङ्गानां गुरोरुपदेशानुसारेणार्चन–चिन्तन–निदिध्यासनासक्तिरेव लिङ्गाचारः। दीक्षासम्पन्नानां वीरशैवानां स्वेष्ट–प्राण–भावाख्यलिङ्गव्यतिरिक्तानामन्यदेवानामर्चनादिकं निषिद्धं वर्तते। अत एव श्रीरेणुकभगवत्पादाः–

नार्चयेदन्यदेवांस्तु न स्मरेन्न च कीर्तयेत्।
न तन्नैवेद्यमश्नीयाच्छिवभक्तो दृढव्रतः।।

---

### १. लिङ्गाचार–

अङ्गसंज्ञकजीव को लिङ्गसंज्ञक शिवस्वरूप की प्राप्ति हेतु उपदिष्ट आचार **लिङ्गाचार** कहलाता है। शरीरद्वारा लिङ्गपूजन, मनस् से उसका चिन्तन तथा भावना द्वारा उसी का पुनः पुनः निदिध्यासन (ध्यान) **लिङ्गाचार** कहलाता है। चन्द्रज्ञानागम में कहा गया है—

"गुरुणा दत्तलिङ्गाद्वै............लिङ्गाचारः स उच्यते।।१।।

तात्पर्य यह है– वीरशैवसम्प्रदाय में साधक को गुरु क्रियादीक्षा द्वारा इष्टलिङ्ग प्रदान करते हैं। तदनन्तर वह मन्त्रदीक्षा द्वारा भावलिङ्ग का बोधन करते हैं। एवंच तीन प्रकार की दीक्षा से प्राप्त लिङ्गों (इष्ट, प्राण एवं भावलिङ्ग) का गुरु के उपदेशानुसार अर्चन, चिन्तन एवं निदिध्यासन के प्रति अनुराग-लिङ्गाचार कहलाता है। दीक्षासम्पन्न वीरशैवों का इन त्रिविध (इष्ट, प्राण एवं भाव) लिङ्ग के व्यतिरिक्त किसी अन्य देव का, अर्चन-पूजन निषिद्ध है। श्रीरेणुकभगवत्पाद ने सुस्पष्ट कहा है—

'नार्चयेदन्यदेवांस्तु न ................निर्माल्याद्युपयुज्यते।।३।।'

---

१. च० ज्ञा० आ०, क्रियापादेष ९।५।

यद्गृहेष्वन्यदेवोऽस्ति तद्गृहाणि परित्यजेत्।
नान्यदेवार्चकान् मर्त्यान् पूजाकाले निरीक्षयेत्।।
सदा शिवैकनिष्ठानां वीरशैवाध्ववर्तिनाम्।
नहि स्थावरलिङ्गानां निर्माल्याद्युपयुज्यते।।[१]

इतीष्ट-प्राण-भावलिङ्गव्यतिरिक्तानां स्थावरलिङ्गानां तथान्यदेवानामर्चनं निषिध्य लिङ्गनिष्ठाप्रतिपादनमुखेन लिङ्गाचारस्वरूपमुपवर्णितवन्तः। अत्रान्यदेवार्चनादेर्निषेधो न तदपकृष्टत्वप्रतिपादनार्थम्, किन्त्विष्टलिङ्गादिषु श्रद्धादार्ढ्यार्थमित्यवधेयम्।

**२. सदाचारः**

सज्जनः शिवभक्तश्च येन मार्गेण सर्वदा।
तोष्यते च महादेवि सदाचारः स वै स्मृतः।।[२]

इति सूक्ष्मागमोक्त्या शिवस्य शिवभक्तानां च सन्तोषप्रद आचारः सदाचार इत्युच्यते। ननु कीदृशाचरणेन सज्जनानां सन्तोषो जायत इति

---

इस कथन से लिङ्ग के प्रति अतिशय निष्ठा का प्रतिपादन किया गया है। यहाँ अन्यदेवादि के अर्चन का निषेध उनकी अपकृष्टता के लिए नहीं है प्रत्युत इष्टलिङ्गादि के प्रति दृढ श्रद्धाबुद्धि के उदय के लिए है।

**२. सदाचार**

सूक्ष्मागम में प्रतिपादित है— शिव एवं शिवभक्तों के सन्तोषप्रद आचार को सदाचार कहा जाता है। तद्यथा—

'सज्जनः शिवभक्तश्च........सदाचारः स वै स्मृतः।।१।।

स्वरसतः जिज्ञासा उदित होती है किस प्रकार के आचरण से सज्जनों को सन्तोष प्राप्त होता है? उसका समाधान चन्द्रज्ञानामम में प्राप्त होता है—

'धर्मार्जितेन द्रव्येण ..........................इति स्मृतः।।

इसका तात्पर्य है— वीरशैवदर्शन में अष्टावरणप्रकरण में गुरु-लिङ्ग एवं जङ्गम को आराध्य बताया गया है। अतः शिवभक्त इन तीनों से अनुग्रहप्राप्ति हेतु धर्म-मार्ग

---

१. सि० शि० ९।३१-३३, पृ० १४७.

२. सूक्ष्माग० क्रियापादे, ८।७.

जिज्ञासायामुक्तं चन्द्रज्ञानागमे–

धर्मार्जितेन द्रव्येण यत्सन्तर्पणमन्वहम्।
गुरुलिङ्गजङ्गमानां सदाचार इति स्मृतः।।[1] इति।

अस्यायं भावः–वीरशैवदर्शने गुरु-लिङ्ग-जङ्गमा आराध्यरूपा इत्युक्तमष्टावरणप्रकरणे। तस्माच्छिवभक्तस्तेषामनुग्रहप्राप्त्यर्थं धर्ममार्गेणार्थं सम्पाद्य यथाशक्ति गुरवे, लिङ्गाय, जङ्गमाय च दद्यात्। तच्च दानं सोपाधि-निरुपाधि-सहजभेदेन त्रिविधं भवति। तत्र तुच्छसांसारिकफलाभिलाषया विहितं सोपाधिकम्[2], तुच्छफलेच्छारहितमीश्वरार्पणबुद्ध्या क्रियमानं दानं निरुपाधिकम्[3], "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्"[4] इति श्रुत्युक्त्यनुसारेण परिग्रहीतृ-प्रदातृ-देयानां शिवत्वं चिन्तयन् स्वस्य चाकर्तृत्वं भावयन् यद्दानं वितरति तत् सहजदानमिति[5] बोध्यम्।

एतेषु त्रिविधदानेषु सहजदानमेव सर्वोत्कृष्टं जननमरणलक्षणमहारोगनिवारकं शिवतादात्म्यज्ञानप्रदं चास्ति। तदुक्तं श्रीरेणुकभगवत्पादैः–

---

से अर्थ का उपार्जन कर यथाशक्ति गुरु, लिङ्ग एवं जङ्गम को दान देवे। इस दान के तीन भेद शास्त्रों में प्रतिपादित हैं— सोपधि, निरुपधि एवं सहज। तुच्छ सांसारिक फलाभिलाष से विहित दान **सोपधिक** कहलाता है। जनि एवं मृति से युक्त सर्वविध फल तुच्छ हैं अतः तुच्छ फल की इच्छा से वर्जित होकर ईश्वरार्पण बुद्धि से क्रियमाण दान को **निरुपधिक** दान कहा जाता है। 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतत्' इस श्रुति के अनुसार परिग्रहीता, प्रदाता तथा प्रदेय वस्तुओं में शिवता का चिन्तन करने वाला साधक अपनी अकर्तृता की भावना करता हुआ जो दान (वितरण) करता है, वह **सहजदान** कहलाता है। यह दान जनन-मरण स्वरूप महारोग का निवारण करता है। अथच शिवतादात्म्यज्ञान का लाभ कराता है। तद्यथा—

---

१. च० ज्ञा० आ० क्रियापादे, ९।६.

२. फलाभिसन्धिसंयुक्तं दानं यद्विहितं भवेत्।
तत्सोपाधिकमाख्यातं मुमुक्षुभिरनादृतम्।। (सि० शि० ९।३, पृ० १६२)

३. फलाभिसन्धिनिर्मुक्तमीश्वरार्पितकाङ्क्षितम्।
निरुपाधिकमाख्यातं दानं दानविशारदैः।। (तत्रैव ९।४, पृ० १६२)

४. श्वे उ० १२.

५. अदातदातृदेयानां शिवभावं विचिन्तयन्।
आत्मनोऽकर्तृभावं च यद्दत्तं सहजं भवेत्।। (सि० शि० ९।५, पृ० १६२)

सहजं दानमुत्कृष्टं सर्वदानोत्तमोत्तमम्।
शिवज्ञानप्रदं पुंसां जन्मरोगनिवर्तकम्।।[३]इति।

तस्माद् धर्मार्जितेन धनेन स्वशक्त्यनुसारं गुरु-लिङ्ग-जङ्गमानां सन्तर्पणमेव सदाचारः। अयं सदाचारोऽष्टशीलाढ्यो वर्तते। तथा चोक्तम्–

सदाचारोऽष्टशीलाढ्यः सेवितः कल्पपादपः।
सद्भक्तानां सुमनसां ददातीष्टफलं महत्।।[४]इति।

अस्मिन् सदाचारे अङ्कुर-उत्पन्न-द्विदल-प्रवृद्ध-सप्रकाण्ड-सशाख-सपुष्प-सफलाख्यान्यष्टौ शीलान्युक्तानि। तत्र १. गुरुकारुण्यकलितषडध्वन्यास-शोभिता स्वीया तनुरप्राकृतेति यो भावस्तत् स्वाङ्कुरशीलम्। २. शिवदीक्षायुतैर्दारादिभिर्यः सहवासस्तदुत्पन्नं शीलम्। ३. भस्मादीनां लाञ्छनानामप्रमादेन धारणं द्विदलं शीलम्। ४. शिवधर्माणां माहात्म्यस्य विभावनं प्रवृद्धं शीलम्। ५. इष्टलिङ्गमनभ्यर्च्य यदभोजनं तत् सप्रकाण्डं शीलम्। ६. इष्टलिङ्गानर्पितस्य द्रव्यस्याग्रहणं सशाखशीलम्। ७. शिवार्पितस्य प्रसादस्यापरित्यजनं सपुष्पं शीलम्। ८. गुरु-लिङ्ग-जङ्गमानां यदेकत्वभावनं तत् सफलं शीलम्। एतदष्टशीलाढ्य एव सदाचारः[५]। एतादृशाष्टशीलाढ्यस्य सदाचारस्याचरणेन शीघ्रमेव तस्य मनोरथसिद्धिर्जायते। तदुक्तम्–

---

'सहजं दानमुत्कृष्टं...........जन्मरोगनिवर्तकम्।।१।।

अतः धर्मार्जित धन से निजशक्ति के अनुरूप गुरु, लिङ्ग एवं जङ्गमों को तृप्ति का उत्पादन सदाचार कहलाता है। यह सदाचार अष्टविध शील से समृद्धि को प्राप्त करता है। तद्यथा— 'सदाचारोऽष्टशीलाख्यः..........ददातीष्टफलं महत्।।१।।

इस सदाचार में आठ शील सुशोभित होते हैं— १. अङ्कुर २. उत्पन्न ३. द्विदल ४. प्रवृद्ध ५. सप्रकाण्ड ६. सशाख ७. सपुष्प ८. सफल। गुरु की करुणा से आकलित षडध्वन्यास से सुशोभित स्वतनु अप्राकृत है— इस निज स्वभाव (भावना संभार) को **अङ्कुरशील** कहा जाता है। शिवदीक्षा से युक्त दारा (भार्या) प्रभृति के (साथ) सहवास को **उत्पन्नशील** कहते हैं। भस्म-प्रभृति शिवभक्त चिह्नों का बिना प्रमाद धारण

---

१. सि० शि० ९।६, पृ० १६३.
२. च० ज्ञा० आ० क्रियापादे, ९।२२.
३. च० ज्ञा० आ० क्रियापादे, ९।१९-३०.

य: सदाचारमष्टाङ्गं भक्तिनिष्ठो निषेवते।
स सद्यः सिद्धिमाप्नोति परां शम्भोरनुग्रहात्।।[1] इति।

श्रीरेणुकभगवत्पादा अपि–

सदाचारप्रियः शम्भुः सदाचारेण पूज्यते।
सदाचारं विना तस्य प्रसादो नैव जायते।।[2]

इति सदाचारेणैव परमेश्वरस्य कृपाप्राप्तिर्भवति, लोकादरश्च प्राप्यत इति सदाचारस्यैहिकामुष्मिकफलद्वयं निरूप्य सदाचारस्य माहात्म्यमुपदर्शितवन्तः।

**३. शिवाचारः**

शिव एव परं ब्रह्म पञ्चकृत्यपरायणः।
न ततोऽन्या गतिरिति शिवाचारो हि कीर्तितः।।[3]

---

करना **द्विदलशील** कहलाता है। शिवधर्मों के माहात्म्य का विभावन (अनुध्यानानुशीलन) **प्रवृद्धशील** कहलाता है। इष्टलिङ्ग के अर्चन बिना भोजन नहीं करना **सप्रकाण्डशील** कहलाता है। इष्टलिङ्ग को असमर्पित द्रव्य का अग्रहण **सशाखशील** कहलाता है। शिवार्पित प्रसाद का अपरित्याग **सपुष्पशील** है एवम् गुरु-लिङ्ग-जङ्गम– इन तीनों में एकत्व (अभेद) की भावना **सफलशील** कहलाता है। उपर्युक्त अष्टविधशील से समृद्ध आचार **सदाचार** कहलाता है। एवंच जो साधक अष्टविध शील से समृद्ध सदाचार का आचरण करते हैं उनके मनोरथ की सिद्धि शीघ्र ही हो जाती है। तद्यथा— चन्द्रज्ञानागम में प्रोक्त है—

'य: सदाचारमष्टाङ्गं...........शम्भोरनुग्रहात्।।१।।

भगवत्पाद श्रीरेणुकाचार्य जी ने भी कहा है— सदाचार.........नैव जायते।।१।।

अर्थात् सदाचार से ही परमेश्वर की कृपा प्राप्त होती है। अथ च लोकादर की प्राप्ति भी सदाचार से ही होता है। अत: इस लोक एवम् परलोक के सभी फल को देने वाले सदाचार की अपरम्पार महिमा है।

**३. शिवाचार**

सृष्टि, स्थिति, लय, तिरोधान एवम् अनुग्रह–ये पाँच **शिवकृत्य** कहलाते हैं। पञ्चकृत्यपरायण शिव ही मेरे अनन्य संरक्षक हैं— यह दृढ भावना **शिवाचार**

---

१. च० ज्ञा० आ० क्रियापादे, ९।२१.
२. सि० शि० १६।९, पृ० ९३.
३. च० ज्ञा० आ० क्रियापादे, ९।७.

इत्यागमोक्त्या सृष्ट्यादिपञ्चकृत्यपरायणः परः शिव एव ममानन्यपरिरक्षक इति दृढा भावनैव शिवाचार इति कथ्यते। अत एव श्रीरेणुकभगवत्पादाः–

**शिवभक्तो महातेजाः शिवभक्तिपराङ्मुखान्।**
**न स्पृशेन्नैव वीक्षेत न तैः सह वसेत् क्वचित्।।**[1]

इति शिवभक्तस्य शिवस्यानन्यशरणागतित्वप्रतिपादनमुखेन शिवाचारं सूचयामासुः।

अस्मिन् शिवाचारे द्रव्य-क्षेत्र-गृह-भाण्ड-तृण-काष्ठ-वीटिका-पाक-रस-भव-भूत-भाव-काल-वाक्-जनाख्यषोडशपदार्थानां शिवशास्त्रोक्तमार्गणे शोधनं विहितम्। तत्र १. फलमूलादीनां भस्मप्रोक्षणेन शुद्धिकरणं द्रव्यशुद्धिः। २. क्षेत्रस्य चतुष्कोणे नन्दिमुद्राङ्कितशिलान्यासकरणं क्षेत्रशुद्धिः। ३. गृहस्य महाद्वारे शिवलिङ्गाङ्कनं गृहशुद्धिः। ४. भोजनपानोपयोगिपात्रेष्वपि शिवलिङ्गाङ्कनं भाण्डशुद्धिः। ५. गवां भक्ष्यभूतस्य तृणस्य भस्मप्रोक्षणं तृणशुद्धिः। ६. भस्मप्रोक्षितकाष्ठपरिग्रहणं काष्ठशुद्धिः। ७. भक्तारामे समुत्पन्नस्य भस्मसंस्कृतस्य

---

कहलाती है। श्रीरेणुकाचार्य जी ने प्रतिपादित किया है कि शिवभक्त शिव का अनन्य शरणागत होता है– यह शिवाचार को सूचित करता है।

इस शिवाचार में द्रव्य, क्षेत्र, गृह, भाण्ड, तृण, काष्ठ, वीटिका, पाक, रस, भव, भूत, भाव, मार्ग, काल वाक् तथा जन-इन १६ पदार्थों के (शिवशास्त्रोक्त पद्धति से) शोधन प्रतिपादित हैं।

१. फलमूलादि नैवेद्य का भस्म से प्रोक्षण कर शुद्ध करना **द्रव्यशुद्धि** कहलाता है।

२. क्षेत्र के चारों कोण में नन्दिमुद्रा से अङ्कित शिलान्यास **क्षेत्रशुद्धि** है।

३. गृह के महाद्वार में शिवलिङ्ग का अङ्कन करना **गृह-शुद्धि** है।

४. भोजन एवं पान के उपयोगी पात्रों में भी शिवलिङ्ग का अङ्कन **भाण्डशुद्धि** है।

५. गो के खाद्य तृण में भी भस्मप्रोक्षण करना **तृणशुद्धि** है।

६. भस्म से प्रोक्षित काष्ठ का परिग्रह करना **काष्ठ शुद्धि** कहलाता है।

७. भक्त के आराम (वाटिका) में उत्पन्न अथवा भस्म से संस्कृत ताम्बूल का ग्रहण **वीटिकाशुद्धि** कहलाता है।

---

१. सि० शि० ९।२७, पृ० १४६.

वा ताम्बूलस्य ग्रहणं वीटिकाशुद्धिः। ८. शिवदीक्षान्वितैः पक्वस्य भोज्यस्य ग्रहणं पाकशुद्धिः। ९. महिष्यादिघृतदधिपयस्तक्रादिकं परित्यज्य गव्यं तु सर्वदा ग्राह्यमिति रसशुद्धिः। १०. काम्यकर्मविसर्जनेन जन्मराहित्यापतिर्भवशुद्धिः। ११. सर्वभूतदयालुत्वं भूतशुद्धिः। १२. सर्वकामान् समुज्झित्य सदा शिवभावानुभावनं भाव-शुद्धिः। १३. पद्भ्यां पिपीलिकादीनां हिंसनं यथा न भवेत् तथा गमनं मार्गशुद्धिः १४. शास्त्रसंशोधिते निःशब्दे च मनोरमे काले शिवलिङ्गाराधनं कालशुद्धिः १५. अनृत-परुष-बीभत्स-दाम्भिक-वचसो विसर्जनं वाक्शुद्धिः। १६. आशने शयने याने गोष्ठ्यां सर्वत्र सद्भक्तजनसाङ्गत्यं जनशुद्धिः[1]। एवं जीवने उपर्युक्तषोडशपदार्थानां परिशोधनरूपशिवाचारस्याचरणेन शिवसायुज्य-प्राप्तिर्भवति। तथा चोक्तम्–

---

८. शिवदीक्षा से संस्कृत जनों द्वारा पाकनिर्मित भोज्य वस्तु (प्रसाद) का ग्रहण **पाकशुद्धि** कहलाता है।

९. महिषी आदि के घृत, दधि, दूध एवं तक्र का परित्याग कर गव्य दुग्धादि का सर्वदा ग्रहण करना रसशुद्धि कहलाता है।

१०. काम्य कर्म का विसर्जनपुरःसर जन्मराहित्य को अर्जित करना भवशुद्धि कहलाता है।

११. सभी प्राणियों पर दया करना भूतशुद्धि है।

१२. समस्त कामनाओं का परित्याग कर सदा शिवभाव का अनुध्यान भावशुद्धि है।

१३. चलते समय पैरों से चींटी पिपीलिका प्रभृति की हिंसा जिस प्रकार न होने पावे उस प्रकार से चलना **मार्गशुद्धि** है।

१४. शास्त्र -संशोधित निःशब्द एवं मनोज्ञ काल में शिवलिङ्ग की आराधना **कालशुद्धि** कहलाती है।

१५. अनृत (मिथ्या) परुष=कठोर, बीभत्स=घृणित तथा दाम्भिक-घमण्ड के वचन का परित्याग **वाक्शुद्धि** कहलाता है।

१६. आसन में, शयन में, यान में, गोष्ठी में सर्वत्र सदा सद्भक्तजन की सङ्गति को **जनशुद्धि** कहते हैं।

---

१. च० ज्ञा० आ० क्रियापादे, ९।३२-४९.

**विद्वन्नयं शिवाचारः सर्वशास्त्रेषु गोपितः।**
**एतदाचरणान्मर्त्यः शिवसायुज्यमश्नुते।।इति।**[१]

**४. गणाचारः**

"अनुष्ठितो भक्तगणैर्गणाचार इतीरितः" इत्यागमोक्त्या भक्तगणैरनुष्ठीयमान आचारो गणाचार इति कथ्यते।

**शिवस्य शिवभक्तस्य शिवधर्मादिकस्य च।**
**न शृणोति च यन्निन्दां स गणाचार उच्यते।।**[२]

इति चन्द्रज्ञानागमे शिवस्य शिवभक्तानां वा कदापि निन्दाया अश्रवणं गणाचार इत्युक्तम्। अत एव श्रीरेणुकभगवत्पादा अपि–

**शिवनिन्दाकरं दृष्ट्वा घातयेदथवा शपेत्।**
**स्थानं वा तत्परित्यज्य गच्छेद् यद्यक्षमो भवेत्।।**

---

उपर्युक्त प्रकार से जीवन में १६ पदार्थों के परिशोधनस्वरूप शिवाचार का आचरण करने से शिवसायुज्य की प्राप्ति होती है। तद्यथा— 'विद्वन्नयं शिवाचारः..........शिवसायुज्यमश्नुते।।१।।

**४. गणाचारः**

भक्तगणों द्वारा अनुष्ठान किये जाने वाले आचरण को **गणाचार** कहा जाता है। तद्यथा— 'अनुष्ठितो भक्तगणैर्गणाचार इतीरितः।।½।।'

चन्द्रज्ञानागम में प्रतिपादित है— शिव अथवा शिवभक्त की निन्दा कदापि कथमपि श्रवण नहीं करना गणाचार कहलाता है। तद्यथा—

'शिवस्य शिवभक्तस्य.......सगणाचार उच्यते।।१।।'

आचार्य श्री रेणुकभगवत्पाद ने प्रतिपादित किया है— समर्थ शिवभक्त शिवनिन्दक को प्रताड़ित करे यदि अक्षम हो तो उस स्थान से अन्यत्र चला जाय जिससे शिवनिन्दा का अश्रवण हो। गणाचार में शिवनिन्दा के अश्रवण को प्रधानरूप से उपदिष्ट किया जाता है। तद्यथा—

'शिवनिन्दाकरं दृष्ट्वा........तदगृहाणि परित्यजेत्।।२।।'

---

१. च० ज्ञा० आ० क्रियापादे, ९५०.
२. च० ज्ञा० आ० क्रियापदे, ९।८.

यत्र चाचारनिन्दाऽस्ति कदाचित्तत्र न व्रजेत्।
यद्गृहे शिवनिन्दाऽस्ति तद्गृहाणि परित्यजेत्।।[1]

इति सक्षमश्चेत् शिवनिन्दकं घातयेत्, अक्षमश्चेत् तत्स्थानं परित्यज्य गच्छेदिति शिवनिन्दाया अश्रवणमेवास्मिन्नाचारे प्रधानतयोपदिष्टवन्तः। अस्मिन् गणाचारे कायिक-वाचिक-मानसिकभेदेष्वाहत्य चतुष्षष्टिशीलानि प्रतिपादितानि सन्ति[2]। तथाहि–

**सप्तविधं वाचिकं शीलम्**–१. यथार्थभाषणम्। २. सत्यं प्रियं हितं च भाषणम्। ३. प्रत्यहं वेदागमादिसच्छास्त्रपठनम्। ४. शिवभक्तानां गुरोश्च प्रशंसनम्। ५. अन्यदेवानां सामान्यमनुष्याणां वा प्रशंसावर्जनम्। ६. आत्मस्तुतिवर्जनम्। ७. परनिन्दाराहित्यं चेति सप्तविधं वाचिकं शीलमित्युच्यते[3]।

**पाणिगतं पञ्चविधं शीलम्**–८. गुरु-जङ्गम-लिङ्गानां नमस्कृतिः। ९. पूजापरिकराणां सम्पादनम्। १०. रुद्राक्षमालया मूलमन्त्रस्यान्वहं जपः। ११. गुरु-लिङ्ग-जङ्गमानां प्रत्यहमाराधनम्। १२. गुरु-जङ्गमयोः शिवधर्माय च यथाशक्ति दानम्। एतत् पञ्चविधं शीलं पाणिसम्बद्धमीरितम्।

---

इस गणाचार में कायिक, वाचिक तथा मानसिक प्रभेदों का योग करने से ६४ शील प्रतिपादित किये गये हैं। तद्यथा—

वाचिकशील के सात भेद हैं— १. यथार्थभाषण २. सत्य, प्रिय एवं हित का सम्भाषण ३. प्रतिदिन वेदशास्त्रों (आगमों) का पठन=स्वाध्याय ४. शिवभक्तों एवं गुरु की प्रशंसा वाक् ५. अन्यदेव अथवा सामान्यमनुष्यों का प्रशंसावर्जन ६. आत्मस्तुति-वर्जन ७. परनिन्दा का वर्जन।

**पाणिगत** शील के ५ भेद हैं— ८. गुरु, जङ्गम एवं लिङ्ग के प्रति नमस्कार करना ९. पूजनसामग्री का संग्रह करना १०. रुद्राक्ष माला से प्रतिदिन मूलमन्त्र का जप। ११. गुरु, लिङ्ग एवं जङ्गम का प्रतिदिन आराधन। १२. गुरु, जङ्गम एवं शिवधर्म के लिए यथाशक्ति दान करना।

---

१. सि० शि० ९।३६-३७, पृ० १४८.

२. सर्वोत्तमे गणाचारे सद्यःसिद्धिकरे परे।
शीलानि तु चतुःषष्टिर्वर्तन्ते तानि संशृणु।। (च० ज्ञा० आ० क्रियापादे, ९।५२)

३. च० ज्ञा० आ० क्रियापादे, ९।५४-६०.

**पादगतं चतुर्विधं शीलम्**–१३. गुरोर्माहेश्वरस्याभिगमनम्। १४. गुरोर्माहेश्वरस्य च प्रदक्षिणीकरणम्। १५. पूजापरिकराणां सम्पादनाय गमनम्। १६. इष्टलिङ्गपूजार्थं स्थिरमासनम्। एतत् पादगतं चतुर्विधं शीलमीरितम्।

**त्वक्सम्बद्धं द्विविधं शीलम्**– १७. नित्यमिष्टलिङ्गस्यावियोगतः स्पर्शनम्। १८. इष्टलिङ्गस्पर्शजन्यरोमाञ्चसमलङ्कृतिश्चेति। द्विविधं त्वक्सम्बद्धं शीलं परिकीर्तितम्।

**चक्षुर्गतं द्विविधं शीलम्**–१९. अश्रान्तं सानुरागमिष्टलिङ्गनिरीक्षणम्, २०. इष्टलिङ्गेक्षणसमूद्भूतानन्दबाष्पसमुद्गमश्चेति द्विविधं शीलं चक्षुःसम्बद्धमीरितम्।

**जिह्वागतमेकं शीलम्**–२१. अन्वहं शिवाय विनिवेदितप्रसादीयरसास्वादो जिह्वागतं शीलमित्युच्यते।

**घ्राणगतं शीलम्**–२२. शिवनिर्माल्यानां गन्धपुष्पादीनां सौरभाघ्राणनं घ्राणगतं शीलमीर्यते।

**श्रोत्रगतं शीलद्वयम्**–२३. गुरोः शिवस्य शिवभक्तानां च स्तोत्राकर्णनम्, २४. गुरोः शिवस्य शिवभक्तानां निन्दानाकर्णनं चेति द्विविधं श्रोत्रगतं शीलम्।

---

**पादगत** शील के चार प्रभेद हैं— १३. गुरु, महेश्वर भक्त के पास पहुँचना

१४. गुरु एवं माहेश्वर की परिक्रमा १५. पूजासामग्री के सम्पादनार्थ एक स्थान से दूसरे स्थानों में १६. इष्टलिङ्ग की पूजा हेतु सुस्थिर आसन। त्वगिन्द्रिय के शील दो प्रकार के हैं— १७. इष्टलिङ्ग का प्रतिदिन अवियोगेन स्पर्श करना तथा १८. इष्टलिङ्ग स्पर्शजन्य रोमाञ्च से युक्त होना। **चाक्षुष शील** के दो प्रभेद होते हैं १९. अश्रान्त भाव से अनुराग से इष्टलिङ्ग का निरीक्षण २०. इष्टलिङ्ग दर्शन जनित आनन्दवाष्प का समुद्गम। **जिह्वागत** एक शील है— २१. प्रतिदिन शिव को अर्पित प्रसाद का रसास्वादन करना।

**घ्राणगत** एक शील है— २२. शिवजी के निर्माल्य-गन्ध पुष्पादि के सौरभ का घ्राणेन्द्रिय से ग्रहण करना।

**श्रोत्रेन्द्रिय** के शील द्विविध हैं— २३ गुरु, शिव तथा शिवभक्तों के स्तोत्रों का श्रवण करना तथा २४. गुरु, शिव तथा शिवभक्तों की निन्दा नहीं सुनना।

**पञ्चविधं कायशोधशीलम्**–२५. गुरोः, इष्टलिङ्गस्य, जङ्गमस्य च प्रसादतः कायसंशोधनम्। २६. निषिद्धविषयेभ्य इन्द्रियनिग्रहः। २७. अस्पृश्यवस्तुसंस्पर्शे जलेन भस्मना वा स्नानम्। २८. आसने, शयने, गोष्ठ्यां [1]भविसम्बन्धवर्जनम्। २९. विभूति–रुद्राक्ष–लिङ्गानां शरीरे धारणमित्येतत् पञ्चविधं कायशोधनं शीलमित्युच्यते।

**पञ्चत्रिंशद्विधं मानसिकं शीलम्**– ३०. निषिद्धभोगविषये सङ्कल्पराहित्यम्। ३१. भक्तिरतौ कामो न विषयेषु। ३२. अधर्मे क्रोधो न वैरिषु। ३३. शिवस्याराधने लोभो न धनादिषु। ३४. भक्तजने मोहो न कान्तादिविषयेषु। ३५. करणेष्वेव मात्सर्यं न जनेषु। ३६. मायाजये मदो न धर्मे। ३७. गुरौ जङ्गमे वा गुणागुणविमर्शत्यागः। ३८. प्राणिनोऽहिंसा। ३९. प्राणिदुःखवीक्षायां दया। ४०. क्रियायां वचने चार्जवम्। ४१. रिपौ निजसुते वापि वैषम्यविवर्जनम्। ४२. गुरूदिते निगमागमवचसि विश्वासः। ४३. दुरन्तायामापद्यपि धर्मस्यावर्जनरूपा धृतिः। ४४. अपकारिष्वपि वैरिजनेष्वदूषणरूपा क्षमा। ४५. मानसे

---

कायशोधशील के पाँच प्रभेद हैं— २५ गुरु, इष्टलिङ्ग एवं जङ्गम के प्रसाद का ग्रहण करने से काय का शोधन २६. निषिद्ध विषयों से इन्द्रिय को हटाना २७. अस्पृश्य वस्तु के स्पर्श हो जाने पर जल अथवा भस्म से स्नान करना। २८. आसन, शयन तथा गोष्ठी में वीरशैव नियम का पालन नहीं करने वाले **भवि** के संसर्ग का वर्जन। २९. विभूति, रुद्राक्ष तथा इष्टलिङ्ग का शरीर में यथास्थान धारण करना।

**मानसिक** शील के ३५ प्रभेद हैं— ३०. निषिद्ध भोग के विषय में संकल्प वर्जन ३१. भक्तिविषयक अनुरागपूर्ण कामना, वैषयिक नहीं ३२. अधर्म पर क्रोध, वैरी पर नहीं ३३. शिवाराधन का लोम, धनादिका नहीं ३४. भक्तजन के प्रतिमोह, नारी सुतादि में नहीं ३५. बाह्य एवम् आभ्यन्तर करणों में मात्सर्य, अन्यजन में नहीं ३६. माया पर विजय प्राप्त करने का मद, धर्म का नहीं ३७. गुरु एवं जङ्गम में गुण एवम् अवगुण का विमर्श नहीं करना ३८. प्राणियों की अहिंसा ३९. प्राणियों में दुःख देखने पर दया का भाव ४०. वाणी तथा कर्म में ऋजुता ४१. रिपु तथा स्वपुत्र में वैषम्य का वर्जन ४२. गुरुवाक्य एवं निगमागमवचन में विश्वास ४३. दुरन्त आपद् में भी धैर्य (धर्म का वर्जन नहीं करना) ४४. अपकार करने वाले वैरिजन में भी क्षमा (अदूषण भाव) ४५. मनसा

---

१. योहि गुरुद्वारा दीक्षासंस्कारेणेष्टलिङ्गमवाप्य स्वशरीरस्य वक्षःस्थलादिस्थानेषु तत्र धारयति, स वीरशैवदर्शने 'भवि' इति कथ्यते।

भोगासक्तिच्युतिः। ४६. क्रियायां वचने वापि प्रमादराहित्यम्। ४७. शिवान्यवस्तुसङ्कल्पवर्जनाख्यं दमः। ४८. परद्रव्यापरिग्रहरूपमस्तेयम्।४९. अलब्धवस्तुविषयव्यसनाभावरूपा सन्तुष्टिः। ५०. नित्यं परमेश्वरनामरूपयोः स्मरणम्। ५१. शम्भुनामगुणादीनामनारतं चिन्तनम्। ५२. सदा शम्भोः पादसंवाहनादिभावनम्। ५३. शम्भोरावाहनादिना मानसमर्चनम्। ५४. शम्भुपादाब्जयोर्नित्यं मानसिकप्रणामः। ५५. शम्भोर्मनसा कैङ्कर्यकरणरूपं दास्यम्। ५६. शम्भोः कल्याणरूपस्य मनसा सख्यताभावरूपं सख्यम्। ५७. बन्धमोचनभारस्य कृत्स्नस्येश्वरे समर्पणरूपमात्मसमर्पणम्। ५८. मूलमन्त्रस्य सदा मनसा जपः। ५९. शम्भोर्दिव्यरूपानुसन्धानरूपं ध्यानम्। ६०. तैलधारावदविच्छिन्नं शिवमूर्तेर्मनसि धारणम्। ६१. निवातदीपवद् ध्याने चेतसः स्थितिरूपः समाधिः। ६२. शिवस्य सोऽहंभावेन ध्यानपूर्वकं कार्यकरणम्। ६३. महेशितुरपरिच्छिन्नरूपानुसन्धानम्। ६४. देवस्यानन्तरूपस्य निजरूपतो भावनमित्येतत् पञ्चत्रिंशद्विधं मानसिकं शीलमुच्यते तदेवं त्रिकरणेष्वाहत्य

---

भोगासक्ति से च्युति ४६. क्रिया एवं मनस् में प्रमादरहित होना ४७. दम अर्थात् शिव से भिन्न वस्तु के संकल्प का वर्जन ४८. अस्तेय अर्थात् परद्रव्य का अपरिग्रह ४९. सन्तोष अर्थात् अलब्धवस्तु विषयक व्यसन का अभाव ५०. नित्य नाम एवं रूप (परमेश्वर के) का स्मरण ५१. शम्भु के नाम एवं गुणों का सतत चिन्तन ५२. सदा शम्भु का पादसंवाहनादि द्वारा भावन (अनुध्यान) ५३. भगवान् शिवशम्भु का आवाहनादिविधि से मानस पूजन ५४. शिवचरणकमलों में नित्य मानस प्रणाम ५५. शम्भु का दास्य (मानस कैङ्कर्यानुभूति) ५६. शम्भु के कल्याणमय स्वरूप के प्रति सख्य (मन से मैत्री) ५७. बन्धन मुक्ति के सम्पूर्ण बोझ को ईश्वर में समर्पित कर आत्मसमर्पण ५८. मूलमन्त्र का सदा मानस जप ५९. शम्भु के दिव्यरूप का अनुसन्धान अर्थात् ध्यान रखना ६०. तैलधारावत् अविच्छिन्न शिवमूर्ति का मनस् में धारण ६१. निवातदीप- सदृश ध्यान में चेतस् की स्थितिस्वरूप समाधि। ६२. शिव का सोऽहंभाव से ध्यानपूर्वक कार्य करना। ६३. महेश्वर के अपरिच्छिन्न स्वरूप का अनुसन्धान ६४. देव के अनन्त रूप का निजरूपतया भावन। यह मानस शील ३५ प्रकार का होता है। इस प्रकार त्रिप्रकार में विभाजित शीलों का पूर्णयोग करने से ६४ शील होते हैं। इन ६४

---

१. च० ज्ञा० आ० क्रियापादे, ९।५२-११२.

चतुःषष्टिः शीलान्युक्तानि[1]। चतुःषष्टिशीलाढ्यस्य गणाचारस्य सम्यगाचरणेन साधकः शिवसायुज्यमाप्नोति। तथा चोक्तम्–

यश्चतुःषष्टिशीलाढ्यः शिव एव न चापरः।
एतदभ्यासयोगेन शिवसायुज्यमश्नुते।।[2]इति।

## ५. भृत्याचारः

शिवभक्ता जनाः सर्वे वरिष्ठाः पृथिवीतले।
तेषां भृत्योऽहमिति यद् भृत्याचार इति स्मृतः।।[3]

इत्यागमोक्त्या शिवस्य शिवभक्तानां चात्मानं भृत्य इति मत्वा तेषां संसेवनमेव भृत्याचार इत्युच्यते। तदुक्तं श्रीरेणुकभगवत्पादैरपि–

शिवयोगी शिवः साक्षादिति कैङ्कर्यभक्तितः।
पूजयेदादरेणैव यथा लिङ्गं यथा गुरुम्।।[4]इति।

---

शीलों से सम्पन्न **गणाचार** का सम्यक् आचरण करने से साधक शिवसायुज्य को प्राप्त करता है। तद्यथा—

'यश्चतुःषष्टिशीलाढ्यः..............शिवसायुज्यमश्नुते।।१।।

## ५. भृत्याचार

पृथिवी पर जो भी मुझसे ज्येष्ठ श्रेष्ठ शिवभक्त हैं वे मेरे द्वारा शिवसमान पूज्य हैं। मैं उन सबका भृत्य हूँ— ऐसा मानकर उनका सेवा करना **भृत्याचार** कहलाता है। तद्यथा— चन्द्रज्ञानागम में प्रोक्त है—

'शिवभक्ता जनाः सर्वे...........भृत्याचार इति स्मृतः।।१।।'

तद्वत् सिद्धान्तशिखामणि में भी प्रोक्त है—

'शिवयोगी शिवः साक्षात्.........यथा लिङ्गं यथा गुरुम्।।१।।'

भृत्याचार के दो प्रभेद होते हैं— १. भृत्यभाव एवम् २. वीरभृत्यभाव गुरु,

---

१. तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरपि कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।। (सां० का० ६२)
२. च० ज्ञा० आ० क्रियापादे, ९।१२३.
३. च० ज्ञा० आ० क्रियापादे, ९।९.
४. सि० शि० ९।९, पृ० १५७.

अयं भृत्याचारो भृत्यभावः, वीरभृत्यभाव इति द्विधा भवति। तत्र गुरुलिङ्गजङ्गमानां कैङ्कर्यभक्तितोऽर्चनं भृत्यभाव इत्युच्यते। पुनर्यदा भक्तेः समुत्कर्षेण गुरवे तनुम्, लिङ्गाय मनः, जङ्गमाय च स्वाखिलं सर्वस्वं प्रदाय पारलौकिकसुखेष्वपि निःस्पृहो भूत्वा मोक्षमात्रमभिलषमाणस्तिष्ठति तदा वीरभृत्य इत्युच्यते। एतादृशवीरभृत्यभावनयैव भक्तः शिवानुग्रहमाप्नोति। तथा चोक्तम्–

देशिकाय तनुं चित्तं शम्भवे च धनं तथा।
जङ्गमाय समर्प्यैवं महोत्साहसमन्वितः।।
मुक्तिमेव परां काङ्क्षमाणो यदवतिष्ठते।
तन्मतं वीरभृत्यत्वं शिवानुग्रहसाधनम्।।[1] इति।

तदेते उपर्युक्ताः पञ्चविधा आचाराः पञ्चाचारा इति कथ्यन्ते। वीरशैवसम्प्रदाये प्रायः सर्वेऽप्येतदाचरणशीला भवन्ति। एतादृशाचाराणां परिपालनेन सर्वेषामपि व्यावहारिकं जीवनं सुचारुरूपेण प्रचलति। आचारहीनः पुरुषस्तत्त्वज्ञानसम्पन्नोऽपि लोके निन्दितो भवति। तस्मादज्ञानां कृते यथाचाराणां परिपालनमावश्यकम्, तथा तत्त्वज्ञानामपि कृते तदावश्यकमेव। तदुक्तं श्रीमद्भिः श्रीरेणुकभगवत्पादैः–

---

लिङ्ग एवं जङ्गमों का कैङ्कर्यभक्ति से अर्चन करना भृत्यभाव कहलाता है।

शनैः शनैः जब भक्ति का समुत्कर्ष होता है तब गुरु को तनु, लिङ्ग का मनस् एवम् जङ्गम को अपना सर्वस्व धन देकर साधक, पारलौकिक सुखों में भी निःस्पृह होकर मोक्षमात्र की अभिलाषा करता हुआ स्थित होता है तब वह **वीरभृत्य** कहलाता है।

इस वीरभृत्यभावना से ही साधक भक्त शिवानुग्रह को प्राप्त करता है। तद्यथा—

'देशिकाय तनुं चित्तं...........शिवानुग्रहसाधनम्।।२।।'

उपर्युक्त ५ प्रकार के आचारों को पञ्चाचार कहा जाता है। वीरशैव सम्प्रदाय में प्रायेण सभी भक्त पञ्चाचारशील होते हैं। एतादृश आचारों के परिपालन से ही सभी लोगों का व्यावहारिक जीवन सुचारु रूप से चलता है। आचारहीन पुरुष तत्त्वज्ञानसम्पन्न होकर भी लोक में निन्दा का भाजन बनता है। अतः अज्ञानी जन के लिए यद्वत् आचारों का परिपालन आवश्यक होता है तद्वत् तत्त्वज्ञ महापुरुषों के लिए भी वह आवश्यक है। तद्यथा—

---

१. च० ज्ञा० आ० क्रियापादे, ९।१२५-१२६.

आचार एव सर्वेषामलङ्काराय कल्प्यते।
आचारहीनः पुरुषो लोके भवति निन्दितः।।
ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्।।[१] इति।

तस्माद् वीरशैवाः पञ्चाचारान् पञ्चप्राणानिव संरक्षन्ति। तदेवं वीरशैवाध्यात्मपुरुषस्य अष्टावरणमङ्गम्, पञ्चाचाराः प्राणाः इति कथ्यन्ते। एवमष्टावरणाङ्गः पञ्चाचारप्राणश्च वीरशैवसाधको भक्त-माहेश्वर-प्रसादि-प्राणलिङ्गि-शरण-ऐक्याख्यषट्स्थलमार्गेण गच्छन् शिवसायुज्यमाप्नोतीति वीरशैवदर्शने मोक्षस्य सहकारिकारणभूतानामष्टावरण-पञ्चाचाराणामतीव माहात्म्यं वर्तते। अत एव क्रियासारे श्रीनीलकण्ठशिवाचार्याः—

अष्टावरणविज्ञानी पञ्चाचारपरायणः।
वैदिकं कर्म कुर्वीत ज्ञानैकफलसाधनम्।।
न कुर्यात् पाशवं कर्म वीरशैवः कदाचन।

इति वीरशैवानां कृतेऽष्टावरणपञ्चाचाराणामावश्यकतां प्रतिपादयामासुः। एतैरेव साधनविशेषैर्वीरशैवानामन्यदार्शनिकेभ्यो वैशिष्ट्यमिति शिवम्।।

---

'आचार एवं सर्वेषाम्.....भवेदादेहपातनम्।।२।।

अतः वीरशैव भक्त, ५ आचारों को ५ प्राणों की तरह सुरक्षित रखते हैं। एवंच वीरशैव के अध्यात्मपुरुष के अष्टविध आवरण **अङ्ग** कहे जाते हैं। तद्वत् पञ्चविध आचार उनके प्राण कहे जाते हैं। एवंच अष्टावरण रूप अङ्ग से युक्त तथा पञ्चाचार रूप प्राणों से संयुक्त वीरशैव साधक, षड्विध (भक्त, माहेश्वर, प्रसादि, प्राणलिङ्गी, शरण एवम् ऐक्य) स्थल संज्ञक मार्ग से विकास को प्राप्त करता हुआ शिवसायुज्य को प्राप्त करता है। अतः वीरशैवदर्शन में माहात्म्य-मण्डित अष्टावरण एवम् पञ्चाचार को मोक्षप्राप्ति में सहकारिकारण माना जाता है। यही कारण है कि क्रियासारग्रन्थ में श्रीनीलकण्ठशिवाचार्य ने वीरशैवों के लिए अष्टावरण की तरह पञ्चाचार को अत्यावश्यक प्रतिपादित किया है। तद्यथा—
'अष्टावरणविज्ञानी.........वीरशैवः कदाचन।।१½।।'

अङ्ग एव प्राणसंज्ञक साधन विशेष से सम्पन्न होने के कारण अन्य दार्शनिकों की अपेक्षा वीरशैवों का वैशिष्ट्य प्रतिपादित होता है।

***

१. सि० शि० १६।१३-१४, पृ० ७५

**श्रीमदमरेश्वराय नमः**

# उपसंहारः

तत्र कस्यचिदपि वाक्यसन्दर्भरूपस्य पञ्चावयवात्मकविचारस्यान्ते उपसंहारस्य लेख आवश्यकः। उपक्रमोपसंहाराभ्यां हि शास्त्रकारैः शास्त्रस्य तात्पर्यं निर्णीयते। अत एव तात्पर्यनिर्धारकेषु षट्सु लिङ्गविशेषेषु–

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।**

इति कारिकोक्तेषूपक्रमोपसंहारौ मिलित्वा एकत्वेनैव गण्येते। तत्र तावद् गौडब्रह्मानन्दस्वामिनोऽपि–"'उपक्रमोपसंहारा........तात्पर्यनिर्णये' इति वृद्धोक्तावुपक्रमोपसंहाराभ्यां विचार्यवाक्यस्याद्यन्तभागयोरेकार्थपर्यवसानं लक्ष्यते। अभ्यासोऽनन्यपरं पुनः श्रवणम्। अर्थवादः स्तुतिनिन्दान्यतरबोधकवाक्यम्। एतत्त्रयं शब्दघटित्वाच्छब्दनिष्ठम्। तत्राद्यस्यैकार्थ–तात्पर्यनिर्णायकत्वेन लिङ्गत्वम्, तात्पर्यविषयत्वेन सन्दिग्धानां बहूनां मध्ये यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं तस्मिन्नेव तात्पर्यनिर्णयात्, अन्यथा तस्य वैयर्थ्यात्"[१] इत्यादिना

---

**श्रीअमरेश्वर महादेव को नमस्कार अर्पित हो**

# उपसंहार

किसी भी वाक्यसन्दर्भरूप पञ्चावयवात्मक विचार के अन्त में उपसंहार का होना आवश्यक होता है। उपक्रम एवम् उपसंहार के माध्यम से शास्त्रकारों द्वारा शास्त्र का तात्पर्य निर्धारित किया जाता है। अतएव तात्पर्यनिर्धारक षड्विध लिङ्ग-गणना में उपक्रम एवम् उपसंहार को मिलित रूप में एकलिङ्ग माना गया है।—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता.....................तात्पर्यनिर्णये।।१।।

आचार्य गौडब्रह्मानन्दस्वामीजी ने उपक्रम एवं उपसंहार के मिलित रूप को एकलिङ्ग माननेकी उपपत्ति की है। तद्यथा—

'उपक्रमोपसंहारा............तात्पर्यनिर्णये।' इति वृद्धोक्तौ...... बहूनां मध्ये यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं तस्मिन्नेव.......अन्यथा तस्य वैयर्थ्यात्।।'

---

१. अ० सि० लघुचन्द्रिका, पृ० ४२५.

ग्रन्थसन्दर्भणोपक्रमोपसंहारयोरेकलिङ्गत्वं निरूपितवन्तः।

प्रकृते त्विदं वक्तव्यं वर्तते यदेतत् प्रमाणवाक्यदर्शनेनोपक्रमोपसंहारयो-रेकार्थकत्वेनैवैक्यादेकार्थत्वं निश्चितम्। तथा च "सिद्धान्तशिखामणेर्दर्श-नान्तरीयसिद्धान्तैः सह समीक्षा" इति नामके शोधप्रबन्धे उपक्रमे मया यन्निरूपितं तदेव उपसंहारेऽपि वक्तव्यम्। युक्तं चैतत्। यतो हि द्वयोरपि तात्पर्यग्रहणोपाययोरेकार्थकत्वं वर्तते। किन्त्वत्र महती बाधेयं भवति यदुपक्रमे प्रतिपादितमेवात्रापि निगद्यते तर्हि पुनरुक्तिर्भवति। अन्यदुच्यते चेत्तर्हि भिन्नार्थनिरूपणेन विरुद्धार्थापत्तिरित्युभयतः पाशारज्जुः। तर्हि कं पन्थानमाश्रित्योपसंहरणीयं येन तद्दोषापत्तेरवसरोऽपि न भवेदिति विचारे समाधानमिदं स्फुरति यद् यथा पञ्चावयवात्मके न्यायप्रयोगे प्रतिज्ञावाक्या-र्थमात्रावगाहित्वेऽपि निगमनस्य न वैयर्थ्यं किन्तु पोषकत्वमेव, तच्च शङ्का-न्तरनिराकरणमुखेन, तथैव प्रकृतेप्युपक्रमोपलब्धार्थावगाहित्वेऽप्युपसंहारस्य न दोषः।

किञ्च, यदा नित्योपलब्धस्यात्मन उपलब्धये नवकृत्वः श्रुतिरुपदिशति "तत्त्वमसि श्वेतकेतो"[१] इत्यादिवाक्यैः, तदा उपक्रमोपसंहारयोरेकार्थकत्वे कथं

---

प्रकृत में यह मुख्यरूप से वक्तव्य है— उपर्युक्त प्रमाणवाक्य के दर्शन से उपक्रम एवम् उपसंहार वाक्यों के एकार्थक हो से ही अभेद होने के साथ एकार्थता सुनिश्चित होती है। एवंच प्रकृत ग्रन्थ (शोधप्रबन्ध)- 'सिद्धान्तशिखामणेर्दर्शनान्तरीयसिद्धान्तैः सह समीक्षा' के उपक्रम में मैंने जो निरूपित किया है उसी को उपसंहार में भी प्रतिपादित करना है। यह समुचित भी है। क्योंकि तात्पर्यग्राहक उभय (उपक्रम+उपसंहारः) वाक्यों की एकार्थकता होती है। किन्तु इस स्थिति में एक बड़ी बाधा खड़ी होती है। जो बात उपक्रम में निरूपित हुई है वही उपसंहार में निरूपित होती है तो पुनरुक्ति आपतित होती है। यदि पुनरुक्ति दोष से बचने के लिए दोनों की भिन्नार्थता मानें तो विरुद्ध अर्थ की आपत्ति होगी। ऐसे में उभयतः पाशा रज्जुः की स्थिति बनती है।

ऐसी स्थिति में किस मार्ग का अवलम्बन कर उपसंहार करना चाहिए जिससे दोषापत्ति का अवसर भी प्राप्त न हो। ऐसा विचार करने पर यह समाधान स्फुरित होता है— यद्वत् पञ्चावयवरूप न्यायवाक्य के प्रयोग में प्रतिज्ञावाक्यार्थमात्र को

१. छा० उ० ६।८।७.

पुनरुक्तिः? कथं वा सिद्धसाधनम्? तथा चोपक्रमेणोक्तस्योपसंहारे संक्षेपेण निरूपणं भवतीति किञ्चिदत्र ब्रवीमि।

इह जगति सर्वोऽपि प्राणभृद्वर्गो निसर्गत एवेष्टमभीप्सुरनिष्टपरिजिहीर्षुश्च भवति। तत्र सर्वाभीष्टविषयस्तु सुखमेव। अत एव–"सर्वेषामनुकूलतया वेदनीयं सुखम्"[१] इति तल्लक्षणमभिदधति दार्शनिकाः। इदं च सुखं नित्यानित्यभेदेन द्विविधम्। तत्र वैषयिकं सुखमनित्यम्, मोक्षसुखं च नित्यम्। वैषयिकमपि सुखं न सर्वदा सर्वेषां सुखरूपं भवति, किन्तु कदाचित् कस्यचित् किञ्चिदेव। अत एव शीतकाले आह्लादका अपि दिनमणिरश्मयो निदाघे क्लेशमुत्पादयन्ति। निदाघे च सुखसाधनीभूतश्चन्दनानुलेपो शीतकाले वर्षासु वा न सौख्यमुत्पादयति। अपरं च, एकस्य यत् सुखसाधनं तदेवापरस्य दुःखसाघनं प्रतीयते लोके। तस्माद् मोक्षसुखमेव सर्वाभीप्सितमिति निश्चीयते।

---

विषय बनाने वाले निगमनवाक्य का वैयर्ध्य नहीं माना जाता प्रत्युत उसे पोषक माना जाता है। अन्यशंका के निराकरण द्वारा प्रतिज्ञातार्थ का पोषण, निगमनवाक्य द्वारा किया जाता है। तद्वत् प्रकृत में भी उपक्रमवाक्य से उललब्ध अर्थ का अवगाहन करने वाला उपसंहारवाक्यसन्दर्भ, अन्यशङ्काके निराकरण द्वारा षोषण करता है। वह निरर्थक नहीं है।

अन्यत्र दृष्टिपात करने से सुविदित होता है— आत्मा सभी प्राणियों को नित्य उपलब्ध है तथापि सम्यक्तया आत्मा की उपलब्धि हेतु छान्दोग्योपनिषद् 'तत् त्वमसि'–इत्यादि वाक्यों द्वारा नववार उपदेश करती है। ऐसी स्थिति में उपक्रमवाक्य एवम् उपसंहारवाक्य का एकार्थक होने पर भी **पुनरुक्ति** एवम् **सिद्धसाधन** का आपादन करना समुचित नहीं। उपक्रमवाक्यों द्वारा प्रतिपादित विषयवस्तु का उपसंहार वाक्यसन्दर्भ से संक्षिप्त निरूपण सम्पुष्ट होता है। इस सन्दर्भ में यह अनुनिवेदनीय है—

इस संसार में सभी प्राणी, स्वभावतः इष्टप्राप्ति एवम् अनिष्टपरिहार के लिए यत्नशील होते हैं। सभी प्राणियों को अभीष्टतम वस्तु सुख ही है। अतएव दार्शनिक जन सुख की परिभाषा बताते हैं— सर्वेषामनुकूलवेदनीयं सुखम्। यह सुख दो भागों में विभक्त होता है— १. नित्यसुख २. अनित्यसुख। मोक्षसुख नित्य है तथा विषयसुख अनित्य है। वैषयिकसुख भी सभी प्राणी को सर्वदा सुखरूप नहीं होता किन्तु कदाचित् किसी को किञ्चिन्मात्र ही सुख होता है। अतएव शीतकाल में आह्लाद

---

१. त० सं०, पृ० ७०.

तत्र चतुरशीतिलक्षयोनिपरिभ्रमणसम्प्राप्तखेदखिन्नः प्राणिनिवहोऽन्ते मनुष्यशरीरमवाप्नोतीति शास्त्रसम्मतिः। प्राप्तमनुष्यशरीरोऽयं जीवो नित्यसुखलिप्सया प्रवृत्तो भूत्वा मुहुर्मुहुर्दुःखमधिगच्छतीति तद्दुःखोपशान्तये नित्यसुखलाभाय वाऽकारणकरुणाशालिनो गौतम–कणाद–कपिल–पतञ्जलि–जैमिनि–बादरायण–प्रमुखा महर्षयः क्रमशो न्याय–वैशेषिक–सांख्य–योग–पूर्वमीमांसा–उत्तरमीमांसाख्यानि शास्त्राणि रचयामासुः। वेदमार्गानुसारित्वादेतानि वैदिकषड्दर्शनानीत्युच्यन्ते।

मानवमात्रस्य कल्याणाय प्रवृत्तेष्वेतेषु दर्शनेषु सिद्धान्तभेदेन न परस्परं मतैक्यं दरीदृश्यते। "मृग्याभेदेऽपि मार्गभेदस्य सम्भवः" इत्यभियुक्तोक्त्या "रुचीनां वैचित्र्यात्" इति पुष्पदन्तोक्त्या च भिन्नभिन्नपथजुषां महर्षीणां मिथो भेदपरिहारः "अधिकारभेदेन शास्त्राण्युक्तान्यशेषतः" इत्युक्त्यनुसारेणाधिकारिभेदेन,

---

प्रदान करने वाले भास्कर के किरण ग्रीष्मऋतु में क्लेशकारी होते हैं। तद्वत् ग्रीष्म में सुखसाधन बने हुए चन्दनानुलेप शीत एवं वर्षाऋतु में सौख्यसम्भार का उपजनन नहीं करते।

इतना ही नहीं जो लौकिक वस्तु एक व्यक्ति के लिए सुखसाधन है वही दूसरे व्यक्ति के लिए दुःखसाधन बन जाती है। अतः प्राणिमात्र के लिए सर्वाभीप्सिततम वस्तु मोक्षसुख ही है अन्य नहीं।

शास्त्रकारों की सर्वसम्मति है— चौरासीलाख योनिभ्रमण के अन्तर्गत खेद की खेती करने से अत्यन्त खिन्न प्राणियों को दुःख से छुटकारा प्राप्त करने हेतु मानवशरीर को प्राप्त कर लेने के अनन्तर यह जीव नित्यसुख की लिप्सा से प्रवृत्त होने पर भी पुनः पुनः दुःख को ही पाता है सुख को नहीं। अतः अकारण करुणाशील महर्षिजन (गौतम, कणाद, कपिल, पतञ्जलि, जैमिनि एवं बादरायण-प्रभृति) द्वारा जीवों के दुःखोपशम द्वारा नित्यसुख की प्राप्ति हेतु शास्त्रों (न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा तथा उत्तरमीमांसा) की रचना की गई है। यतश्च ये शास्त्र वेदमार्गों का अनुसरण करते हैं अतः ये छह दर्शन **वैदिकदर्शन** कहलाते हैं।

मानवमात्र के लिए कल्याण को उद्देश्य बनाकर प्रवृत्त इन दर्शनों में सिद्धान्तभेद होने से मतैक्य उपलब्ध नहीं है। 'एक अन्वेषणीय वस्तु केलिए मार्गभेद सम्भव होता है'—इस अभियुक्तोक्ति से 'रुचिभेद होने से मार्गभेद होता है'–इस पुष्पदन्तवचन से विभिन्न मार्गोपदेशक महर्षियों के मतभेदनिराकरण हेतु अधिकारिभेद से शास्त्रभेद के सार्थक्य को प्रतिपादित कर क्रमिक विकास की

क्रमिकविकासप्रक्रियामुखेन च कर्तुं शक्यते। तदेवोक्तं श्रीमद्भिर्मधुसूदनसरस्वतीभिः— "न हि ते मुनयो भ्रान्ताः, सर्वज्ञत्वात् तेषाम्, किन्तु बहिर्विषयप्रवणानामापाततः पुरुषार्थे प्रवेशो न सम्भवतीति नास्तिक्यवारणाय तैः प्रकारभेदाः प्रदर्शिताः। तत्र तेषां तात्पर्यमबुद्ध्वा वेदविरुद्धेऽप्यर्थे तात्पर्यमुत्प्रेक्षमाणास्तन्मतमेवोपादेयत्वेन गृह्णन्तो जना नानापथजुषो भवन्तीति सर्वमनवद्यम्"[१] इति।

ननु दर्शनानां क्रमिकविकासः कथमिति चेत्, श्रूयताम्—तत्र न्याय-वैशेषिकयोस्तत्त्वज्ञानादपवर्ग इत्यङ्गीक्रियते। किं तत् तत्त्वज्ञानमिति जिज्ञासायां देहेन्द्रियाद्यनुयोगिकात्मप्रतियोगिकभेदज्ञानम्, अथवा आत्मानुयोगिकदेहेन्द्रियादि-प्रतियोगिकभेदज्ञानमित्युच्यते। भेदज्ञानेऽनुयोगिप्रतियोगिनोरुभयोरपि ज्ञानमावश्यकमिति न्यायवैशेषिकदर्शनयोः स्थूलानामनात्मपदार्थानां विस्तरेण विवेचनं कृत्वा तद्भिन्नत्वेनात्मनो ज्ञानं प्रतिपादितम्। सांख्ययोगदर्शनयोः प्रकृतिपुरुषयोर्विवेकख्यात्या

---

प्रक्रिया का अवलम्बन किया जाता है। अतएव श्रीमान् मधुसूदनसरस्वतीजी ने सुस्पष्ट कहा है— 'न हि ते मुनयोभ्रान्ताः......... सर्वमनवद्यम्।'

अब जिज्ञासा होती है— दर्शनों के क्रमविकास का स्वरूप कैसा है और वह कैसे उपपन्न होगा? इसका समाधान है— न्याय एवं वैशेषिक दर्शनों में तत्त्वज्ञान से अपवर्ग की प्राप्ति बतायी गयी है। तत्त्वज्ञान कौन सा है इस जिज्ञासा का समाधान दो प्रकार से किया जाता है— १. देहिन्द्रियादि में आत्मा के भेद का ज्ञान होना तत्त्वज्ञान है। तथा २. आत्मा में देहेन्द्रियादि के भेद का ज्ञान होना तत्त्वज्ञान है। भेदज्ञान में अनुयोगी एवं प्रतियोगी दोनों का ज्ञान आवश्यक होता है। अतः न्याय एवं वैशेषिक दर्शनों में स्थूल अनात्मपदार्थों का विस्तृत विवेचन किया गया है। तदनन्तर तद्भिन्नतया आत्मा का ज्ञान प्रतिपादित किया गया है।

सांख्य एवं योगदर्शनों में प्रकृति तथा पुरुष की विवेकख्याति से मोक्ष की प्राप्ति प्रतिपादित है। एतदर्थ इन दोनों सूक्ष्म तत्त्वों (प्रकृति एवं पुरुष) के स्वरूप का प्रतिपादन किया गया है।

अद्वैतवेदान्त में ब्रह्मज्ञान को ही मोक्षहेतु प्रतिपादित किया गया है। ब्रह्मज्ञान की दृढ़ता के उद्देश्य से प्रपञ्च में मिथ्यात्व का साधन किया गया है।

निष्कर्ष यह है— न्याय-वैशेषिक के आचार्यों ने स्थूलप्रपञ्चगत पदार्थ की विवेचना प्रयत्नपूर्वक की है। तद्वत् सांख्य एवं योग दर्शनों के आचार्यों ने सूक्ष्म

---

१. प्रस्थानभेदः, पृ० १०.

मोक्ष इति स्वीकारात् तयोरुभयोः सूक्ष्मतत्त्वयोः स्वरूपविचारो विहितः। अद्वैतवेदान्ते ब्रह्मज्ञानमेव मोक्षहेतुरित्यङ्गीकृत्य तस्य च ज्ञानं प्रपञ्चस्य मिथ्यात्वसाधनद्वारा दृढीकृतम्। तदेवं नैयायिकवैशेषिकाः स्थूलप्रपञ्चगत-पदार्थविवेचने, सांख्ययोगदर्शनाचार्यः सूक्ष्मयोः प्रकृतिपुरुषयोर्विवेकख्यातौ, अद्वैतवेदान्तिनश्च सूक्ष्मातिसूक्ष्मब्रह्मस्वरूपज्ञाने कृतप्रयासा इति तेषां क्रमिकविकासो विज्ञायते।

दृष्टान्तद्वारा तेषां दर्शनानां क्रमिकविकासो दर्शयितुं शक्यते। तथा हि– आत्मस्वरूपविवेचनायां नैयायिकवैशेषिकाश्चार्वाकादिभिरात्मत्वेना-भिमतशरीरेन्द्रियमनोबुद्धीनामनात्मत्वं संसाध्य ततोऽपि भिन्नं नित्यं सद्रूपमात्मानं साधितवन्तः। सद्रूपोऽप्ययमात्मा न चिद्रूपः, किन्तु स्वरूपतो पाषाणवज्जडः। मनःसंयोगे च तत्र ज्ञानगुणमुत्पद्यते। तदेवं नैयायिकवैशेषिकयोरात्मा सद्रूपो ज्ञानादिगुणाधारश्च।

सांख्ययोगदर्शनाचार्याः–"असङ्गो ह्ययं पुरुषः"[1], "साक्षी चेता केवलो निर्गुणश्च"[2] इत्यादिश्रुत्या आत्मा असङ्ग इति, तस्य न कस्यापि गुणाधारत्वं

---

तत्त्वों (प्रकृति एवं पुरुष) की विवेकख्याति एवम् अद्वैत वेदान्त के आचार्यों ने सूक्ष्मातिसूक्ष्म ब्रह्मस्वरूप ज्ञान की विवेचना में पूर्ण सफलप्रयत्न किया है। इनका क्रमिक विकास सुस्पष्ट ज्ञातव्य है।

दृष्टान्त के माध्यम से उन दर्शनों का क्रमिकविकास दिखाया जा सकता है। तद्यथा— आत्मस्वरूपविवेचना की कर्तव्यता में न्यायवैशेषिक के आचार्यों ने चार्वाकप्रभृति द्वारा आत्मरूप से मान्य देह, इन्द्रिय, मनस्, बुद्धि, प्राण को अनात्मा प्रसाधित किया है तथा शरीरादि से भिन्न नित्य सद्रूप आत्मा को सिद्ध किया है। तदनुसार यह सद्रूप आत्मा चिद्रूप नहीं है। प्रत्युत वह स्वरूपतः पाषाणतुल्य जड़ है। मनस् के साथ संयोग होने पर ही उस सद्रूपआत्मा में ज्ञानगुण की उत्पत्ति होती है। एतावता यह निष्कर्ष प्राप्त होता है– न्याय एवं वैशेषिक दर्शनों में आत्मा सद्रूप है तथा ज्ञानादि गुणों का आधार है।

सांख्य एवं योग दर्शनों के आचार्यों ने 'असङ्गो ह्ययं पुरुषः।' तथा 'साक्षी चेता केवलो निर्गुणश्च।' इत्यादि श्रुतियों को आधार मानकर आत्मा को असङ्ग एवं पुष्कर-

---

१. बृ० उ० ४।३।१५-१६.
२. श्वे० उ० ६।११.

सम्भवतीति च स निर्गुणः, स्वाभाविकचिद्रूपश्चेत्यङ्गीकृत्य न्यायाभिमतसद्रूपेण साकमस्य चिद्रूपत्वं निरूपयामासुः। सांख्यनये आनन्दस्य सत्त्वगुणपरिणामत्वादात्मनश्च निर्गुणत्वात् तस्यानन्दरूपत्वं नाङ्गीक्रियते।

अद्वैतवेदान्ते–"सत्यं ज्ञानमनन्तं ब्रह्म"[१], "विज्ञानमानन्दं ब्रह्म"[२] इत्यादिश्रुतिप्रमाणेन यदेव सत्, तदेव चित्, तदेव चानन्दरूपमपीत्यङ्गीकृत्यात्मनः सच्चिदानन्दरूपत्वं प्रतिपाद्यते। तदेवमात्मविषयकविचाराणां परिशीलनेन न्यायादद्वैतवेदान्तपर्यन्तं क्रमिकविकासः स्पष्टतया दृष्टिपथमायाति। एतेषु षड्दर्शनेष्वद्वैतवेदान्तः पूर्णरूपः। अत एव केनचिन्नैयायिकेन–"इदं तु कण्टकावरणं तत्त्वं तु बादरायणात्" इति न्यायदर्शनमद्वैततत्त्वस्य परिरक्षकमित्युक्तम्। तस्मादेतेषां मिथो न पारमार्थिकरूपेण वैमत्यम्। अपरं च,

---

पलाशवत् निर्लेप माना है। यतश्च असङ्ग आत्मा किसी गुण का आधार नहीं हो सकता अतः वह निर्गुण है। असङ्ग आत्मा स्वाभाविक रूप से चिद्रूप है— ऐसा अङ्गीकार कर सांख्ययोग के आचार्यों ने न्याय-वैशेषिकाभिमतसद्रूपता के साथ चिद्रूपता का भी समावेश किया है। यतश्च सांख्यसिद्धान्त में आनन्द को सत्त्वगुण का परिणाम माना गया है तथा आत्मा को निर्गुण माना गया है अतः उसकी आनन्दरूपता स्वीकार्य नहीं है।

अद्वैतवेदान्त में 'सत्यं ज्ञानमनन्तं ब्रह्म।' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतियों का सम्पूर्ण प्रामाण्य माना गया है। तदनुसार जो सत् है वही चित् है तथा वही आनन्दरूप है। यह सिद्धान्त मान्य है। अतएव आत्मा को सद्रूप, चिद्रूप तथा आनन्दरूप माना गया है। उपर्युक्त प्रकार से आत्मविषयक विचारों के परिशीलन से विदित होता है न्याय से आरम्भ होकर सांख्य माध्यम से वेदान्तपर्यन्त क्रमिकविकास सुस्पष्टतया दृष्टिगोचर होता है। न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा तथा उत्तरमीमांसा (वेदान्त) नामक छह दर्शनों में अद्वैतवेदान्त का सिद्धान्त स्वयं में परिपूर्ण है। यही कारण है जिससे प्रेरित होकर किसी न्यायाचार्य की यह उक्ति प्रसिद्ध है— 'यह न्यायदर्शन कण्टकाकीर्ण आवरण (रक्षक) है मुख्य रक्षणीय तत्त्व वेदान्तसिद्धान्तरूपी फलशस्यादि है।' तदनुसार न्यायदर्शन को अद्वैततत्त्व का रक्षक माना जाता है। अतः निष्कर्ष प्राप्त होता है कि दर्शनों में परस्परवैमत्य पारमार्थिक नहीं अपितु बुद्धिवैशद्यसंवर्धक है। वस्तुस्थिति यह है— अधिकारिभेद से (मन्दाधिकारी,

---

१. तै० उ० २।१.

२. बृ० उ० ३।९।२८.

एतानि दर्शनानि क्रमशो मन्द–मध्यम–उत्तमाधिकारिणां कृते उपदिष्टानीत्यवधार्यम्।

एवं क्रमिकविकसितेष्वेतेषु दर्शनेषु न्यायवैशेषिकयोराकाश–काल–दिग्–आत्म–मनसां पृथिव्यादीनां परमाणूनां च नित्यत्वाभ्युपगमात्, सांख्ययोगदर्शनयोः प्रकृतिपुरुषयोर्नित्यत्वस्वीकारात्, मीमांसादर्शने च प्रपञ्चस्य वेदानां च प्रवाहरूपेण नित्यत्वाङ्गीकारादेतानि द्वैतदर्शनानीति, शाङ्करवेदान्ते "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः"[१] इति श्रीशङ्करभगवत्पादोक्त्या द्वैतमात्रस्य मिथ्यात्वप्रतिपादनाच्छाङ्करवेदान्तदर्शनमद्वैतमिति कथ्यते।

एतेषां द्वैताद्वैतदर्शनानां परस्परं कलहः समन्वयं विना नोपशाम्यति। अयं समन्वयो द्वैताद्वैतात्मके विशेषाद्वैतसंज्ञिते वीरशैवदर्शने भवति। अत एव सिद्धान्तशिखामणौ–

**अगस्त्य! खलु सिद्धान्ता विख्याता रुचिभेदतः।**
**भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः।।**
**सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।**
**एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।**

---

मध्याधिकारी तथा उत्तमाधिकारी) सभी दर्शनों की उपयोगिता एक समान है। अतः इनके उपदेश करुणा से प्रेरित हैं तथा कल्याण फलदायी है।

इस प्रकार क्रमिकरूप से विकसित होने वाले इन दर्शनों में मुख्यरूप से निम्नाङ्कित सिद्धान्तभेद प्राप्त होते हैं। न्याय-वैशेषिक दर्शनों में आकाश, काल, दिक्, आत्मा तथा मनस् को नित्य माना जाता है। तदतिरिक्त पृथिवी, जल, तेजस् एवं वायु के परमाणुओं को भी नित्य माना जाता है।

सांख्य एवं योगदर्शनों में प्रकृति तथा पुरुष को नित्य माना गया है। मीमांसादर्शन में प्रपञ्च जगत् के साथ वेदों को भी प्रवाहनित्य माना गया है, अतः सुस्पष्टरूप से उपर्युक्त ५ दर्शनों में द्वैतवाद का साम्राज्य परिलक्षित होता है।

शाङ्करवेदान्तदर्शन में यतः द्वैतमात्र को मिथ्या माना जाता है अतःयह अद्वैतदर्शन कहलाता है। भगवत्पाद श्रीशंकराचार्य की सुस्पष्ट उक्ति है— 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।'

उपर्युक्त विवेचना से द्वैत और अद्वैतरूप में विभाजित षड्दर्शनों में पारस्परिक खण्डन-मण्डन का कलह परिलक्षित होता है। इस कलह का उपशमन समन्वय से

---

१. ब्रह्मज्ञानावली, २० श्लो०।

वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने।
वेदानुसरणादेषां प्रामाण्यमिति निश्चितम्।।[१]

इति श्रीरेणुकभगवत्पादा नानागमश्रवणसंशयिनमगस्त्यं प्रति वेदानुवर्तिनां सांख्यादीनां खण्डनं न विधेयमिति निरूप्य, पुनः–

वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने।
सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते।।
शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत् सदा।।
सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्।।[२]

इति सांख्यादीनां वेदैकदेशित्वं सूचयित्वा, सर्ववेदमयस्य सिद्धान्तागमस्योत्तरभागे निर्दिष्टस्य वीरशैवदर्शनस्य च सर्ववेदमयत्वं प्रतिपाद्य, वीरशैवदर्शनस्य द्वैताद्वैतश्रुतीनां द्वैताद्वैतदर्शनानां च समन्वयरूपत्वं प्रबोधितवन्तः।

---

ही सम्भव है अन्यथा नहीं। यह समन्वय वीरशैवदर्शन में प्राप्त है। यह दर्शन द्वैतमतों के अङ्गीकार एवम् अद्वैत के साक्षात्कार से कृतार्थीकृत विशेषाद्वैत का संस्थापक है। अतएव सिद्धान्तशिखामणिकार ने वेदानुवर्ती होने से सांख्यादिदर्शन को प्रामाणिक माना है तथा उनकी उपेक्षा का प्रतिषेध किया है। भगवत्पाद श्रीरेणुकाचार्य जी ने नाना-सिद्धान्त के शास्त्रों के श्रवण से संशयालु अगस्त्यजी (जिज्ञासु) के प्रति सुस्पष्ट कहा है—

'वेदैकदेशवर्तिभ्यः..........वीरशैवमतं परम्।।३।।'

इस वचन के अनुसार प्रमाणभूत सांख्यादिदर्शन वैदेकदेशी हैं। यह बात सूचित होती है। तदनन्तर वीरशैवदर्शन को सर्ववेदमय प्रतिपादित किया गया है। यह दर्शन सर्ववेदमय सिद्धान्तागम के उत्तर भाग में निर्दिष्ट है। तदनन्तर यह प्रतिबोधित कराया गया है कि वीरशैवदर्शन, द्वैतश्रुतिवचनों तथा अद्वैतश्रुतिवचनों का समन्वय कर द्वैतदर्शन एवम् अद्वैतदर्शनों के समन्वय को पुरस्कृत करता है।

सिद्धान्त निष्कर्ष यह है— द्वैतदर्शनों में न्यायवैशेषिक के आचार्यों ने

---

१. सि० शि० ५।३-५, पृ० ५३-५४.
२. सि० सि० ५।७-८, १४; पृ० ५५-५७.

अत्रेदमाकूतम्–द्वैतदर्शनेषु नैयायिकवैशेषिकाः–"एकमेवाऽद्वितीयं ब्रह्म"[१] इत्यत्राद्वितीयत्वं नामैकत्वसमनियतविजातीयवैलक्षण्यमिति, "सर्वं खल्विदं ब्रह्म"[२] इत्यस्य सर्वं ब्रह्मव्याप्तम्, व्याप्तत्वं नाम सम्बन्धत्वम्, अन्यथा घटादीनामपि ब्रह्मत्वापत्त्या ब्रह्मणोऽनित्यत्वापत्तिर्जडतापत्तिश्चेति "तत्त्वमसि"[३], "ब्रह्म वेद ब्रह्मैव भवति"[४] इत्यादीनां क्वचित् कैवल्यपरत्वम्, क्वचिद् ब्रह्मसाम्यपरत्वम्, क्वचिच्च सर्वप्रपञ्चनियन्तृपरमात्मैकत्वपरत्वं व्यवस्थापयन्तस्तेषां गौणार्थत्वमभ्युपगच्छन्ति[५]। उक्तं च श्रीधरभट्टेन–अभेदश्रुतयस्तु गौणार्था इति दिक्"[६] इति।

सांख्ययोगदर्शनयोः–"नाद्वैतश्रुतिविरोधः जातिपरत्वात्"[७] इति सूत्रेण महर्षिणा कपिलेनाद्वैतश्रुतीनां विजातीयद्वैतनिषेधपरत्वं व्यवस्थापितम्।

---

अद्वैतश्रुतियों की गौणार्थता को स्वीकृत कर अपने सिद्धान्तानुकूल व्यवस्था को उपपादित किया है। तद्यथा— 'एकमेवाद्वितीयं ब्रह्म' इस श्रुति में प्राप्त **अद्वितीयत्व** की परिभाषा की जाती है। एकत्वसमनियत विजातीयवैलक्षण्य अर्थ को बोधित करने वाला अद्वितीय शब्द है। तद्वत् 'सर्वं खल्विदं ब्रह्म' इस अद्वैतश्रुति में सर्वं ब्रह्मव्याप्तम्–अर्थ की बोधकता को स्वीकारा जाना है। यहाँ व्याप्त का अभिप्राय है सम्बद्ध होना। यथाश्रुत अर्थ को स्वीकार करना अनुचित होगा। अन्यथा घट, पट आदि में भी ब्रह्मरूपता प्राप्त होने से ब्रह्म की अनित्यता एवम् जडता आपादित होगी। 'तत्त्वमसि।' एवम् 'ब्रह्म वेद ब्रह्मैव भवति।' इत्यादि अद्वैतश्रुतियों में कहीं परकैवल्यार्थता प्रतिपादित की जाती है तथा अन्यत्र ब्रह्मशब्द से ब्रह्मसाम्य अर्थ को बताया जाता है। तद्वत् क्वचित् समस्त प्रपञ्च के नियन्ता परमात्मा के साथ एकत्व की व्यवस्था प्रतिपादित की जाती है। द्वैतपक्ष में भी इन श्रुतियों के उपर्युक्तव्याख्यान की समीचीनता को आचार्य श्रीधरभट्ट ने सुस्पष्ट शब्दावली में समर्थित किया है। तद्यथा— 'अभेदश्रुतयस्तु गौणार्था इति दिक्।'

द्वैतप्रतिपादक सांख्य-योग दर्शनों में महर्षि कपिल ने अद्वैतश्रुतियों का

---

१. त्रि० म० ना० ३।३.
२. छा० उ० ३।१४।१.
३. छा० उ० ६।८।७.
४. मुण्ड० ३।२।९.
५. सि० च०, पृ० ४०–४१.
६. न्या० क०, पृ० २१३.
७. सां० सू० १।१५४.

अतोऽद्वैतवाक्यानि "निरञ्जनः परमं साम्यमुपैति"[१] इत्यादिश्रुतिबलेन चिदेकरूपत्वादवैधर्म्यलक्षणाभेदपराण्येव, न त्वखण्डार्थपराणीति विज्ञानभिक्षुरत्र प्रतिपादयति[२]। मीमांसादर्शनेऽप्यद्वैतश्रुतयो जातिपरत्वेन व्यवस्थापिताः[३]।

तदेवं वास्तविकद्वैतप्रतिपादकेषु न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसादर्शनेषु द्वैतश्रुतीनां सावकाशत्वेऽप्यद्वैतश्रुतीनामनवकाशः। उत्तरमीमांसा-दर्शने तु "जीवो ब्रह्मैव नापरः" इति श्रीशङ्करभगवत्पादोक्त्या उपर्युक्ताद्वैतश्रुतीनां सावकाशत्वेऽपि "द्वा सुपर्णा सयुजा सखाया"[४], "द्वे ब्रह्मणी वेदितव्ये"[५] इत्यादिद्वैतश्रुतीनां लोकसिद्धद्वैतानुवादकत्वेन व्यवस्थापनादेषां द्वैतश्रुतीनामत्रानवकाश इतीमानि दर्शनानि श्रुत्यैकदेशीनीत्युच्यन्ते।

वीरशैवदर्शने तूभयविधश्रुतीनां समानरूपेण प्रामाण्यस्वीकारादिदं दर्शनं

---

विजातीय द्वैतनिषेध में तात्पर्य प्रतिपादित किया है। तद्यथा— 'नाद्वैतश्रुतिविरोधः जातिपरत्वात्।' इस सूत्र की व्याख्या करते हुए आचार्य विज्ञानभिक्षु ने अद्वैत वाक्यों के अखण्डार्थबोधकता का खण्डन कर अवैधर्म्यलक्षण अभेदबोधकता का मण्डन किया है। एतदर्थ 'निरञ्जनः परमं साम्यमुपैति।' श्रुति को उन्होंने पुरस्कृत किया है। मीमांसादर्शन ने भी अद्वैतश्रुतियों की जातिपरक व्याख्या कर द्वैतसिद्धान्त का पोषण किया है।

एवंच यह सुविदित होता है कि द्वैत को वास्तव मानने वाले न्याय, वैशेषिक, सांख्य, योग, पूर्वमीमांसा दर्शनों में द्वैतश्रुतियों के सावकाश होने पर भी अद्वैतश्रुतियों की सावकाशता (चरितार्थता) उपपन्न नहीं होती। जबकि उत्तरमीमांसादर्शन में भगवत्पाद शंकराचार्य की उक्ति 'जीवो ब्रह्मैव नापरः।' द्वारा उपर्युक्त अद्वैत श्रुतियों की सावकाशता उपपन्न होती है किन्तु द्वैतश्रुतियों ('द्वा सुपर्णा सयुजा सखाया....' तथा 'द्वे ब्रह्मणी वेदितव्ये।') की लोकसिद्ध द्वैत की अनुवादकता की व्यवस्थापना करने से द्वैतश्रुतियों की अनवकाशता सुस्पष्ट होने से षड्दर्शनों की श्रुत्येकदेशिता सुस्पष्ट है।

---

१. मुण्ड० ३।१।३.

२. सां० सू० १।१५४ प्र० भा०।

३. शा० दी०, तर्कपादे, पृ० १२५.

४. श्वे० उ० ४।६.

५. त्रि० ता० ५।१७.

सर्वश्रुतिसमन्वयात्मकमिति विज्ञेयम्। तदुक्तं भाष्यकृद्भिः श्रीपतिपण्डिताराध्यभगवत्पादैः—

श्रुत्यैकदेशप्रामाण्यं द्वैताद्वैतमतादिषु।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञिते।
वीरशैवकसिद्धान्ते सर्वश्रुतिसमन्वयः।।[1] इति।

अस्यायमर्थः—"विश्च शेषश्च विशेषौ = परमात्मजीवौ, तयोरद्वैतं विशेषाद्वैतमिति विशेषाद्वैतशब्दस्य व्युत्पत्तिः। अत्र 'वि' इत्यनेन 'विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि"[2] इति निघण्टुषु पक्षिवाचकस्य विशब्दस्य परमात्मनोऽपि वाचकत्वात् 'द्वा सुपर्णा", "हंस हंसेति"[3] इत्यादिश्रुतिषु च परमात्मनः पक्षिरूपेण वर्णनादत्र विशब्देन परमात्मा गृह्यते। एवमेव "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति"[4] इत्यादिश्रुतिषु जीवानां परमेश्वरांशत्वव्यपदेशात् शेषशब्देन जीवो व्यवह्रियते। अद्वैतपदेन "यथा नद्यः"[5] इत्यादिश्रुतिसिद्धं

---

अब षड्दर्शनों से विलक्षण वीरशैवदर्शन का अवलोकन करें। यहाँ उभयविध श्रुतियों का प्रामाण्य समानभाव से स्वीकार्य है। अतः यह दर्शन सर्वश्रुतिसमन्वय स्वरूप है। अतएव भगवत्पाद श्रीपतिपण्डिताराध्य ने उद्घोष किया है—

'श्रुत्येकदेशप्रामाण्यं..........वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः।।१½।।'

श्लोकार्थ है— विश्व शेषश्च विशेषौ। इस पद का अर्थ है— परमात्मा एवं जीव। इन दोनों का अद्वैत विशेषाद्वैत कहलाता है। विशेषयोः अद्वैतम्=विशेषाद्वैतम्। विशब्द पक्षी अर्थ का बोधक है। निघण्टु में इसे परमात्मा अर्थ का बोधक भी माना गया है। तद्यथा— 'विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि।'

'द्वा सुपर्णा.....' तथा 'हंस हसेति....' इत्यादि श्रुतियों में परमात्मा का पक्षिरूप से वर्णन प्राप्त होता है। अतः विशेष के विशब्द से परमात्मा ग्रहीत होते हैं। तद्वत् 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति।' इत्यादि श्रुतियों में जीवों के परमेश्वरांशरूपता का व्यपदेश होने से (विशेष के) शेष शब्द से जीव का ग्रहण होता है। तद्वत् **विशेषाद्वैत** समस्तपद के अद्वैत शब्द से जीव एवं ब्रह्म का सायुज्य अर्थ

---

१. ब्र० सू० श्रीकर० मङ्गलश्लो० १५.
२. एका० को०, पृ० १८.
३. ब्र० वि० ३४.
४. बृ० उ० २।१।२०.
५. मुण्ड० ३।२।८.

सायुज्यं जीवब्रह्मणोरुपदिष्टम्। तस्माज्जीवेश्वरयोः संसारदशायां भेदः, मोक्षदशायामभेदो भ्रमरकीटन्यायेन[१]। अर्थाद् यथा भ्रमराद् भिन्नः कीटो निरन्तरभ्रमरध्यानेन भ्रमरो भवति, तथा संसारदशायां परमात्मनो भिन्नो जीवो निरन्तरध्यानमहिम्ना जीवभावं परित्यज्य शिवस्वरूपो भवति। तदेवं भाष्यकारा वीरशैवदर्शनस्य 'विशेषाद्वैतम्' इति संज्ञयात्र द्वैताद्वैतश्रुत्योः समन्वयं सूचितवन्तः। उक्तं च तैरेव—

**विशब्देनोच्यते शम्भुर्हंसहंसेति मन्त्रतः।**
**शेषशब्देन शारीरो यथाग्नेरिति मन्त्रतः।।**
**अद्वैतेन भवेद्योगो यथा नद्य इति श्रुतेः।[२]इति।**

एवं द्वैताद्वैतश्रुतीनामत्र यथा समन्वय उक्तस्तथान्येषामपि परस्परविरुद्धश्रुतीनामत्र समन्वयो निरूप्यते। तदेवात्र संक्षेपेण प्रतिपाद्यते।

तत्र तावत् श्रुतिः—'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च"[३] इति ब्रह्मणः

---

परिगृहीत होता है। जिसका उपदेश 'यथानद्यः......' इत्यादि मुण्डकश्रुति में प्राप्त होता है। अतः वीरशैव का सिद्धान्त भ्रमरकीटन्याय पर आधारित है— संसार दशा में जीव एवम् ईश्वर का भेद है तथा मोक्षदशा में इनका अभेद रहता है। यथा भ्रमर से भिन्न कीट निरन्तर भ्रमर का ध्यान कर स्वयं कीट से भ्रमर बन जाता है तद्वत् संसारदशा में परमात्मा से भिन्नजीव निरन्तर ध्यान की महिमा से जीवभाव का परित्याग कर शिवस्वरूप हो जाता है। श्रीकरभाष्यकार ने वीरशैवदर्शन की विशेषाद्वैतसंज्ञा द्वारा द्वैत एवम् अद्वैत श्रुतियों का समन्वय सूचित किया है। तद्यथा— 'विशब्देनोच्यते शम्भुः......यथा नद्य इति श्रुतेः।।१½।।

वीरशैवदर्शन में यथा परस्परविरुद्ध द्वैतश्रुति एवम् अद्वैतश्रुति का परस्पर समन्वय किया जाता है तद्वत् अन्यविध विरुद्धश्रुतियों का भी समन्वय किया जाता है। संक्षेप में इसे प्रतिपादित करना अभीष्ट है। तद्यथा— श्रुति में ब्रह्म के दो भेद प्रतिपादित हैं— सगुण ब्रह्म एवं निर्गुण ब्रह्म। निर्गुणरूपता (ब्रह्म की) की प्रतिपादिका निम्नाङ्कित श्रुतियाँ हैं— 'अशब्दमस्पर्शमरूपमव्ययम्...., 'निष्कलं

---

१. कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्।
मानवः शिवयोगेन शिवो भवति सर्वदा।। (ब्र० सू० श्रीकर० १।२।६।)

२. ब्र० सू० श्रीकर० मङ्गलश्लो० १६.

३. बृ० उ० २।३।१.

सगुणनिर्गुणभेदेन द्वैविध्यमुक्त्वा, "अशब्दमस्पर्शमरूपमव्ययम्"[१], "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"[२], "अस्थूलमनण्वह्रस्वमदीर्घमलोहितम्"[३] इत्यादिवचनैस्तस्य निर्गुणरूपत्वम्, "तदैक्षत बहु स्यां प्रजायेयेति"[४], "यः सर्वज्ञः सर्ववित्"[५], "सत्यकामः सत्यसंकल्पः"[६] इत्यादिवचनैस्तस्य सगुणरूपत्वं प्रतिपादितवती।

न्यायवैशेषिकदर्शनयोरीश्वरस्तदभिमतनवद्रव्यान्तर्गतात्मद्रव्येऽन्तर्भवतीति स सगुण एव न निर्गुणः, द्रव्यमात्रस्य गुणक्रियावत्त्वाङ्गीकारात्। योगदर्शने पुरुषविशेष ईश्वर इत्यङ्गीकृत्य तस्य सर्वज्ञत्वाद्युत्कृष्टगुणयुक्तत्वं प्रतिपाद्य सगुणरूपत्वमेव समर्थितम्। तदेवं न्याय-वैशेषिक-योगदर्शनेष्वीश्वरस्य सगुणत्वप्रतिपादकश्रुतीनां समन्वयेऽपि निर्गुणत्वप्रतिपादकश्रुतीनामनवकाश इति तेषां श्रुत्यैकदेशित्वम्।

---

निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।' 'अस्थूलमनणु अह्रस्वमदीर्घमलोहितम्।' इत्यादि। सगुणरूपता की प्रतिपादिका श्रुतियाँ निम्नाङ्कित हैं— 'तदैक्षत बहु स्यां प्रजायेय 'यः सर्वज्ञः स सर्ववित्।' 'सत्यकामः सत्यसंकल्पः।' इत्यादि। दो प्रभेदों की प्रतिपादिका श्रुति हैं— 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च।' इत्यादि।

न्याय एवं वैशेषिक दर्शनों में क्लृप्त नवविधद्रव्यान्तर्गत आत्मपदार्थ में ईश्वर का अन्तर्भाव होने से वह सगुण ही होते हैं निर्गुण नहीं हो सकते। क्योंकि द्रव्यमात्रको गुणवान् अथवा क्रियावान् (उभयरूप) होना अपेक्षित है।

योगदर्शन में पुरुषविशेष को ईश्वर कहा गया है। सर्वज्ञता आदि से युक्त होने के कारण ईश्वर की सगुणरूपता ही समर्थित होती है। एवंच सगुणत्वप्रतिपादक श्रुतियों का समन्वय होने पर भी निर्गुणत्वप्रतिपादक श्रुतियाँ सावकाश नहीं होतीं अतः इनकी श्रुत्येकदेशिता सुस्पष्ट है।

अद्वैतवेदान्त में मायाशबलित ब्रह्म सगुण होते हैं तथा निरुपाधिक ब्रह्म

---

१. कठ० १।३.
२. श्वे० उ० ६।१९.
३. बृ० उ० ३।८।८.
४. छा० उ० ६।२।३.
५. मुण्ड० १।१।९.
६. छा० उ० ८।१।५.

अद्वैतवेदान्ते मायाशबलितस्य ब्रह्मणः सगुणत्वमिति, निरुपाधिकस्य च निर्गुणत्वमिति निरूपणेऽपि सगुणरूपस्य कारणीभूताया मायाया मिथ्यात्वेनेश्वरस्य सगुणरूपमपि मिथ्येति निर्गुणरूपस्यैव सत्यत्वमिति स्वीकारात् तन्मते सगुणश्रुतीनामनवकाशः। तस्मादद्वैतदर्शनमपि श्रुत्यैकदेशिदर्शनमिति वक्तुं शक्यते।

वीरशैवदर्शने तु परशिवो विमर्शाख्यशक्तिविशिष्ट इत्यङ्गीक्रियते। इयं च शक्तिश्चन्द्रचन्द्रिकयोरिव परशिवेन साकमविनाभूता। अस्याश्च शक्तेरवस्थाद्वयं भवति। तत्रैका प्रलयकालीनाऽविभागपरामर्शरूपा, द्वितीया सृष्टिकालीना विभागपरामर्शरूपा। अविभागपरामर्शरूपेयं शक्तिः सच्चिदानन्दरूपा, विभागपरामर्शरूपा च शक्तिरिच्छा-ज्ञान-क्रियात्मिका। इच्छादिरूपेण विभागमप्राप्तया सच्चिदानन्दरूपया शक्त्या विशिष्टः परशिवो निर्गुण इति, सृष्टिकारणीभूतेच्छादिरूपेण विभागं प्राप्तया शक्त्या विशिष्टश्च परशिवः सगुण इति कथ्यते। तदेवं शक्तिसंकोचावस्थायां तस्य निर्गुणत्वम्, तद्विकासावस्थायां च परशिवस्य सुगणत्वमिति बोध्यम्। तदेवोक्तं भाष्यकारैः श्रीपतिपण्डिताराध्यैः-

---

निर्गुण होते हैं— ऐसा निरूपण यद्यपि प्राप्त होता है तथापि सगुण रूप की कारणभूता माया यतः मिथ्या है अतः ईश्वर का सगुणरूप भी मिथ्या है अतः निर्गुणरूप की ही सत्यता स्वीकार्य है। एवञ्च इस मत में सगुण श्रुतियाँ निरवकाश हैं। एतावता अद्वैतदर्शन भी श्रुत्येकदेशि दर्शन है-यह कथन असमीचीन नहीं होगा।

वीरशैवदर्शन में परशिव, विमर्शनामवाली शक्ति से विशिष्ट मान्य हैं। यथा चन्द्र, चन्द्रिका को अविनाभावशक्ति के रूप में आत्मसात् करता है तद्वत् विमर्शशक्ति शिव की अविनाभूता शक्ति है। इस शक्ति की द्विविध अवस्था होती है। १. प्रलयकालीन अविभाग परामर्शरूपा शक्ति तथा २. सृष्टिकालीन विभागपरामर्शरूपा। प्रथम शक्ति सच्चिदानन्दरूपा है तथा द्वितीयशक्ति के तीन अवान्तर भेद होते हैं— इच्छाशक्ति, ज्ञानशक्ति एवं क्रियाशक्ति। विभाग को अप्राप्त सच्चिदानन्दरूपा शक्ति से विशिष्ट परशिव निर्गुण होते हैं। तद्विपरीत सृष्टि में कारण रूप से मान्य त्रिविध शक्ति से विशिष्ट परशिव सगुण होते हैं।

निष्कर्षतः शक्ति की संकोचावस्था में परशिव की निर्गुणरूपता होती है एवं विकासावस्था में परशिव की सगुणरूपता होती है। तद्यथा—

सृष्टेः पूर्वं महादेवः शक्तिसंकोचहेतुना।
निर्गुणत्वेन शास्त्रेषु गीयते तत्त्ववेदिभिः।।
सृष्ट्यादौ परमेशस्य शक्तेः प्राचुर्यवैभवात्।
सर्वज्ञत्वादिकल्याणगुणवानिति कीर्त्यते।।
तस्माद् द्वैतश्रुतीनां तु सृष्ट्युत्तरसमन्वयः।
अद्वैतश्रुतिबोधस्तु सृष्टेः प्रागेव कथ्यते।।
अथ सत्त्वादिवैशिष्ट्यात् सगुणत्वं सदाशिवे।
तत्साक्षिकत्वात् चिच्छक्त्यानिर्गुणत्वं विधीयते।
सकलो निष्कलश्चेति तस्माद् वेदेषु गीयते।। [१]इति।

तदेवमेकस्यैव परशिवस्य सृष्टेः पूर्वतनकाले निर्गुणत्वम्, सृष्टिप्रारम्भकाले च सगुणत्वमिति व्यवस्थाप्योभयविधश्रुतीनां समानरूपेण प्रामाण्यप्रतिपादनादिदं दर्शनं सर्वश्रुतिसमन्वयात्मकमिति बोध्यते।

अपरं च, "निरवद्यं निरञ्जनम्"[१] इति श्रुतिर्ब्रह्मणो निर्विकारत्वं बोधयति। "बहु स्यां प्रजायेयेति"[२] इति श्रुतिर्ब्रह्मणः परिणामरूपविकारं बोधयति। तदत्र ब्रह्म जगदाकारेण परिणमते न वेति ब्रह्मण उपादानत्वजिज्ञासा जागर्ति। तत्र नैयायिकवैशेषिकाः परमाणवो जगदुपादानम्, ईश्वरश्च निमित्तकारणमिति,

---

'सृष्टेः पूर्वं महादेवः.....तस्माद् वेदेषु गीयते।।४।।

एवं च एक ही परशिव की सृष्टिनिरपेक्ष (पूर्वकाल में) निर्गुणरूपता होती है तथा सृष्टि के प्रारम्भकाल में सगुणरूपता होती है। इस प्रकार की व्यवस्था द्वारा शैवमत में उभयविद्य श्रुतियों में समानरूप से प्रामाण्य स्वीकृत है। अतः वीरशैवदर्शन सर्वश्रुति- समन्वयात्मा है।

अन्य विमर्शनीय वस्तु यह है— 'निरवद्यं निरञ्जनम्'—यह श्रुति ब्रह्म की निर्विकारता को बोधित करती है जबकि 'बहुयस्यां प्रजायेय'– यह श्रुति ब्रह्म के परिणामरूप विकार को बोधित करती है।

जिज्ञासा उदित होती है— ब्रह्म, जगदाकारतया परिणत होता है या नहीं? इसका समाधान न्यायवैशेषिक दर्शनों में परमाणु को जगत् का उपादान कारण

---

१. ब्र० सू० श्रीकर० १।३।७.
२. श्वे० उ० ६।१९.
३. छा० उ० ६।२।३.

सांख्ययोगदर्शनाचार्याः प्रकृतिर्जगदुपादानम्, पुरुषश्च निमित्तकारणमिति; मीमांसादर्शने परमाणव उपादानम्, अदृष्टश्च निमित्तकारणमिति; अद्वैतवेदान्ते च निर्विकारं ब्रह्म न जगतः परिणाम्युपादानम्, किन्तु विवर्तोपादानमित्येतेषु दर्शनेषु ब्रह्मण ईश्वरस्य वा परिणाम्युपादानकारणत्वानङ्गीकारेण तस्य निर्विकारत्वबोधक-श्रुतिवाक्यानां तत्र प्रामाण्यसम्भवेऽपि परिणामित्वबोधकश्रुतीनामनवकाशः।

वीरशैवदर्शने तु–

**आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः।**
**कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात्।।**[१]

इति श्रीरेणुकभगवत्पादा यथा पटो विलक्षणप्रसारणे कुटीभावमापद्यते, तत्संकोचे च पटरूपेणावतिष्ठते; न चाभ्यां संकोचविकासाभ्यां पटस्य स्वरूपे विक्रिया जायते, तथा शक्तिविशिष्टः शिवोऽपि स्वात्मशक्तिविकासेन विश्वात्मना तिष्ठन् न विक्रियत इति पटदृष्टान्तेनाविकृतपरिणामवादं प्रतिपादितवन्तः। तस्माद्

---

मानकर तथा ईश्वर को केवल निमित्तकारण मानकर किया जाता है।

सांख्य-योग दर्शनों में प्रकृति को जगत् का उपादानकारण तथा पुरुष को निमित्त- कारण माना गया है।

मीमांसादर्शन में परमाणुओं को उपादानकारण एवम् अदृष्ट को निमित्तकारण माना जाता है।

अद्वैतवेदान्त में निर्विकार ब्रह्म को जगत् का परिणामी उपादानकारण नहीं माना जाता अपितु विवर्तोपादानकारण माना जाता है। एतावता इन दर्शनों में ब्रह्म अथवा ईश्वर को परिणामी उपादान कारण नहीं माना जाता। एवंच निर्विकारत्वबोधक श्रुतियों का परतत्त्व में प्रामाण्य सम्भव होने पर भी परिणामित्वबोधक श्रुतियों का अनवकाश होता है।

**वीरशैवदर्शन** में इस सन्दर्भ में एककारिका उपस्थापित की जाती है— 'आत्मशक्तिविकासेन..........पटः स्वस्य प्रसारणात्॥१॥

श्रीरेणुकाचार्य का यह आशय है—'यद्वत् पट विलक्षणरूप से प्रसारण किये जाने पर कुटीभाव में परिणत हो जाता है तथा उसके संकोच होने पर पटरूप से स्थित होता है। इस संकोच अथवा विकास से पट के स्वरूप में

---

१. सि० शि० १०।५, पृ० १८८.

विश्वात्मावस्थायां विश्वरूपेण परिणामः, विश्वोत्तोर्णावस्थायां निर्विकारभावेना-वस्थानमित्युभयविधश्रुतीनामत्र समन्वयः संजायते।

किञ्च, भगवती श्रुतिः–"तमेव विदित्वातिमुत्युमेति नान्यः पन्था विद्यतेऽयनाय"[१] इति ज्ञानतिरिक्तस्य मोक्षसाधनत्वं निषेधयति, पुनः "विद्यां चाविद्यां च यस्तद्वेदोभयं सह"[२] इति कर्मणोऽपि मोक्षसाधनत्वं प्रतिपादितवती। अतः किं केवलाद् ज्ञानान्मोक्षः? उत कर्मज्ञानाभ्यामिति विवादः।

तत्र न्याय–वैशेषिक–सांख्य–योग–अद्वैतवेदान्तेषु ज्ञानादेव मोक्षः, कर्माणि तु चित्तशुद्ध्यर्थमिति ज्ञानस्यैव प्राधान्यमभ्युपगम्यते। तस्मादेतेषु दर्शनेषूभयविधश्रुतीनां न समानरूपेण प्रामाण्यम्, किन्तु गौणमुख्यरूपेण। वीरशैवास्तु–

अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी।
फलोत्पत्तौ विरक्तस्तु तस्मात् तद्द्वयमाचरेत्।।

---

विकार नहीं होता। तद्वत् शक्तिविशिष्ट शिव भी स्वात्मशक्तिविकास से विश्वात्मना स्थित होकर भी विकृत नहीं होते। इस प्रकार वीरशैवमत में पटदृष्टान्त द्वारा अविकृत परिणामवाद को प्रतिपादित किया जाता है। एवंच विश्वात्मावस्था में विश्वरूप से परिणाम होता है तथा विंश्वोत्तीर्णावस्था में निर्विकारभाव से ब्रह्म का अवस्थान होता है। एवंच इस मत में उभयविध श्रुतियों का समन्वय होता है।

भगवती श्रुति ज्ञानातिरिक्त की मोक्षसाधनता का निषेध करती है। तद्यथा— 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।' अन्यश्रुति, कर्म में भी मोक्षसाधनता का प्रतिपादन करती है। अतः विवाद विषय उपस्थित होता है— केवल ज्ञान से मोक्ष होता है? अथवा कर्मसहकृत ज्ञान से?

इस विवाद का समाधान— न्याय, वैशेषिक, सांख्य, योग एवम् अद्वैतवेदान्त में दिया गया है– ज्ञानमात्र से मोक्ष की प्राप्ति होती है। कर्म तो चित्तशुद्धि में उपयुक्त होता है। अतः ज्ञान का ही प्राधान्य माना जाता है। अतः इन दर्शनों में उभयविध श्रुतियों का समानरूप से प्रामाण्य नहीं है किन्तु गौण मुख्य रूप से प्रामाण्य है।

---

१. श्वे० उ० ३।८.

२. ई० उ० ११.

३. सि० शि० १६।११-१२, पृ० ७४-७५.

**ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते।**
**फलाभिसन्धिरहितं तस्मात् कर्म न संत्यजेत्[१]।।**

इति श्रीरेणुकभगवत्पादोक्त्या शिवलिङ्गपूजारूपं नित्यकर्म शिवज्ञानं चेत्युभयोः समसमुच्चयत्वं स्वीकुर्वन्तीत्यत्र मोक्षसाधनत्वेन प्रतिपादित-योरुभयविधश्रुत्योः समानरूपेण प्रामाण्यमपि सम्भवतीत्युभयविधश्रुतिसमन्वयः।

एवमेव यत्र यत्र द्वैताद्वैतदर्शनानि परस्परं विरुद्धार्थयोः श्रुत्योर्विषये कलहायन्ते, तत्र तत्र सर्वत्र वीरशैवदर्शनाचार्याः समन्वयदृष्ट्या कलहं निवारयन्ति। एतादृशश्रुतीनां समन्वयस्तु प्रकृतप्रबन्धे तत्र तत्र प्रसङ्गानुसारेण दर्शितः। अत्रोपसंहारे तु तस्यैव कश्चनांशो दर्शितः। विस्तरस्तु विद्वद्भिस्तत्रैव द्रष्टव्यः। एतेन सिद्धान्तशिखामण्युक्तमिदं वीरशैवदर्शनं न कस्यापि दर्शनस्य खण्डनार्थं प्रवृत्तम्, किन्तु समन्वयार्थमिति विज्ञायते। इदमेवास्य दर्शनस्य माहात्म्यम्।

---

वीरशैवदर्शन में इस सन्दर्भ में दो कारिकायें उपलब्ध होती हैं—

'अन्धपङ्गुवदन्योन्य.......तस्मात् कर्म न संत्यजेत्।।२।।

एवंच शिवलिङ्गपूजारूप **नित्यकर्म** तथा **शिवज्ञान** इन दोनों के समसमुच्चित रूप को मोक्षसाधन माना जाता है। अतः मोक्षसाधनतया प्रतिपादित उभयविध श्रुति को समान रूप से प्रामाण्य सम्भव होता है इस प्रकार उभयविध श्रुतियों का समन्वय वीरशैवमत में सुघटित होता है। जिन सन्दर्भों में द्वैतदर्शन एवं अद्वैतदर्शन, विरुद्धार्थक द्विविध श्रुतियों में विवादपरायण होते हैं वहाँ सर्वत्र वीरशैवदर्शन के आचार्य समन्वय दृष्टि से विवाद (कलह) का निवारण करते हैं। इस प्रकार की श्रुतियों का समन्वय प्रस्तुत ग्रन्थ में प्रसङ्गानुसार दिखाया गया है। इस उपसंहारप्रकरण में उस समन्वय का निदर्शनस्वरूप अंशमात्र का उपस्थापन किया गया है। जो विस्तारपूर्वक जानना चाहते हैं उन्हें उन अवसरों में निरूपित समन्वय का यथास्थान अवलोकन करना चाहिए।

एतावता यह निष्कर्ष प्राप्त होता है कि सिद्धान्तशिखामणि में निरूपित वीरशैवदर्शन, किसी अन्य दर्शन के खण्डन के लिए प्रवृत्त नहीं होता किन्तु समन्वय के लिए प्रवृत्त होता है। यह अत्युत्कृष्ट माहात्म्य इस दर्शन का है।

---

१. सि० शि० ५।४, पृ० ५४.

एवं दार्शनिकतत्त्वैर्विशिष्टत्वेन प्रतीयमानमिदं दर्शनं साम्प्रदायिकतत्त्वैरपि सम्प्रदायान्तरानतिशेते। तथाहि–"एकेन जन्मना मुक्तिर्वीराणां तु महेश्वरि" इत्यागमोक्त्या वीरशैवाः पुनर्जन्म नाङ्गीकुर्वन्ति। पुनर्जन्माभावे इदं कारणम्– मलावृतस्यैव जीवस्य पुनर्जन्म भवति न पुनर्निवृत्तमलस्य। वीरशैवाचार्या आणवादिमलत्रयनिवृत्त्यर्थं क्रिया–मन्त्र–वेधाख्यं दीक्षात्रयं विदधति। एवं दीक्षात्रयेण निर्दग्धमलस्य जीवस्य कथं पुनर्जन्म भवेत्?

एतादृशदीक्षायां यावानधिकारः पुरुषस्य तावानेव स्त्रीणामपीतीदमप्यत्र वैशिष्ट्यम् दीक्षाप्राप्तस्येष्टलिङ्गस्य पूजाया यावज्जीवं कर्तव्यत्वनियमात्, ऋतुकाले सूतकप्राप्तौ स्त्रीणामिष्टलिङ्गपूजाया लोपो मा भूदिति यथाऽकरस्पर्श-योग्यापि जिह्वा मन्त्रोच्चारणे सदा सुनिर्मला, तथा ऋतुस्नातापि नारी यद्यप्यकरणस्पर्शयोग्या, तथापीष्टलिङ्गपूजामात्रार्थं सुनिर्मला भवतीति स्वेष्टलिङ्गैकपूजायामशौचं निषिध्य ऋतुमत्या अपि लिङ्गपूजाधिकारं प्रदाय वीरशैवाचार्या धार्मिकजीवने स्त्रीपुरुषयोर्भेदं निराकृत्य साम्यवादं प्रतिष्ठापयामासुः।

---

इस प्रकार अनेक दार्शनिक तत्त्वों से संयुक्त यह वीरशैवदर्शन अतिविशिष्ट है। इसके अलावा साम्प्रदायिक तत्त्वों के अतिशय होने से भी यह अन्य सम्प्रदायों की अपेक्षा विशिष्ट सम्प्रदाय है।

आगमवचनप्रामाण्यात् वीरशैव का पुनर्जन्म नहीं होता। तद्यथा— 'एकेन जन्मना मुक्तिर्वीराणान्तु महेश्वरि।'

पुनर्जन्म के अभाव में कारण यह है— मलावृत जीव का ही पुनर्जन्म होता है, न कि निवृत्तमल का। वीरशैवाचार्य आणवप्रभृति मलत्रय की निवृत्ति हेतु त्रिविध दीक्षा का विधान करते हैं— १. क्रियादीक्षा २. मन्त्रदीक्षा तथा ३. वेधदीक्षा। इस त्रिविध दीक्षा से दग्धमल जीव का पुनर्जन्म कैसे सम्भव है?

एतादृशदीक्षा में जितना अधिकार पुरुष का है उतना ही स्त्री का भी यह भी इस दर्शन का एक वैशिष्ट्य है। यतश्च दीक्षाविधिद्वारा प्राप्त इष्टलिङ्ग की पूजा यावज्जीवन अवश्यकर्तव्य है। अतः ऋतुकाल में सूतक की प्राप्ति होने पर स्त्रियों की इष्टलिङ्गपूजा का लोप न हो जाय एतदर्थ ऋतुस्नाता नारी करस्पर्श योग्य नहीं होती किन्तु इष्टलिङ्ग- पूजाकर्म में उसकी निर्मलता मानी जाती है। इसमें

इदानीन्तनसर्वकारः सामाजिकधार्मिकजीवने स्त्रीपुरुषयोर्भेदनिराकरणे प्रयतते। प्रयासोऽयं बहुकालात् पूर्वमेव वीरशैवाचार्यैः कृतः, प्रयासे साफल्यं च प्राप्तम्। तस्मादेतदर्थमपि वीरशैवसम्प्रदायः सम्प्रदायान्तराणां मार्गदर्शकोऽभूदित्यत्र नातिशयोक्तिः एवं च स्त्रीपुरुषयोर्भेदं विनैव सर्वेऽपि मानवाः सच्चारित्र्येण, सौशील्येन, हृदयशुद्ध्या, प्रशान्तया धियेष्टलिङ्गार्चनाधिकृताः सन्त इह जन्मन्येव शिवसायुज्यं वीरशैवसम्प्रदायसम्मतं साधयितुं प्रभवन्ति।

अपरं च, एतत्सम्प्रदाये पञ्चप्राणरूपत्वेन प्रतिपादिता लिङ्गाचार-सदाचार-शिवाचार-भृत्याचार-गणाचाराख्याः पञ्चाचाराः सर्वेषां मानवानां करणंत्रितयं परिशोध्य तेषां नैतिकजीवननिर्माणे कारणीभूताः सन्ति वीरशैवा एव यद्यन्येऽपि तानाचारानाचरेयुस्तर्हि शीघ्रमेव भारतीयानां मनसि विश्वकुटुम्बभावना जागृयादित्यत्र न शङ्कालवलेशोऽपि।

---

दृष्टान्त है— जिह्वा की जुठाई करस्पर्शयोग्य नहीं होती अथापि मन्त्रोच्चारण कर्म में वह निर्मल मान्य है एवंच एकमात्र इष्टलिङ्ग पूजा में अशौच का निषेध कर ऋतुमती को भी लिङ्गपूजाधिकार प्रदान कर वीरशैवाचार्य, धार्मिक जीवन में स्त्री और पुरुष के लिङ्गभेद को निराकृत कर साम्यवाद को प्रतिष्ठापित करते हैं।

आज की सरकार सामाजिक धार्मिक जीवन में स्त्री और पुरुष के भेदनिराकरण हेतु प्रयत्नशील है। किन्तु यह प्रयत्न, बहुत पूर्व में वीरशैवाचार्यों द्वारा किया गया था। उनका यह प्रयत्न सार्थक भी हुआ जो शैवसाधना के पुरुष एवं महिला साधकों में आचरण रूप से विद्यमान होकर चला आ रहा है।

एवञ्च इस सन्दर्भ में भी वीरशैवसम्प्रदाय, अन्य सम्प्रदायों का मार्गदर्शक बना है-यह कथन अतिशयोक्ति नहीं है। अतः स्त्रीपुरुषों के लिए लिङ्गभेद के विना सभी मानव सच्चरित्र, सुशील होकर हृदयशुद्धि के साथ प्रशान्त निर्मल बुद्धि से इष्टलिङ्गार्चन में अधिकृत रहकर इस वर्तमान जीवन में ही वीरशैवसम्प्रदाय-सम्मत शिवसायुज्य को प्राप्त करने में समर्थ हो सकते हैं।

एवंच इस सम्प्रदाय में पञ्चप्राणरूप से प्रतिपादित ५ आचार (लिङ्गाचार, सदाचार, शिवाचार, भृत्याचार तथा गणाचार) समस्त मानवोंके त्रिविधकरण का

इदानीन्तने विज्ञानप्रगतियुक्ते जगति विनैव तत्त्वज्ञानं विज्ञानमात्रेण मानवकुलस्य शान्तिः समाधानं च न प्राप्येत। तत्त्वज्ञानबोधनाय प्रवृत्तेषु भारतीयदर्शनेषु सिद्धान्तवैमत्या प्रायः परस्परं खण्डनमण्डनादिकं वर्तते, किन्तु–

**सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।**
**एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।**[१]

इति श्रीरेणुकभगवत्पादाः परस्परं खण्डनादिकं निराकृत्य समन्वयार्थं प्रयतितवन्तः। तस्मात्–

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।।**

---

परिशोधन कर उनके नैतिक जीवन निर्माण में कारण होते हैं।

वीरशैवों की तरह यदि अन्य लोग उन आचारों का अनुपालन करें तो शीघ्र ही भारतीयों के मन में विश्वकुटुम्बभावना जागृत होगी इसमें तनिक भी सन्देह नहीं है।

अभी विज्ञान की प्रगति का युग है। प्रगतिशील जगत् में तत्वज्ञान के बिना ही आधुनिक विज्ञानमात्र से मानवकुल की शान्ति अथवा समाधान सम्भव नहीं है। तत्त्वज्ञानबोधन हेतु प्रवृत्त भारतीय दर्शनों में सिद्धान्तों की एकरूपता नहीं होने से प्रायेण परस्पर खण्डन-मण्डन का क्रम चलता रहता है।

श्रीरेणुक भगवत्पाद ने परस्पर के खण्डनविधि का अनादर कर समन्वय हेतु प्रयत्न किया है। तद्यथा—

'सांख्यं योगः पाञ्चरात्रं........नोपहन्यानि युक्तिभिः।।१।।

एवंच यह निष्कर्ष प्राप्त होता है कि हमारी प्राचीनतम संस्कृति विश्वकुटुम्ब की भावना से ओतप्रोत है। तद्यथा—

'सर्वेभवन्तु सुखिनः.........मा कश्चिद् दुःखभाग् भवेत्।।१।।'

---

१. सि० शि० ५।४, पृ ५४

इति विश्वकुटुम्बभावनायुक्तैर्वीरशैवाचार्यैः सिद्धान्तशिखामणौ प्रतिपादितमिदं वीरशैवदर्शनमेकमेव सर्वस्यापि जगतो हिताय अभ्युदयाय च प्रभवेदित्यत्र न कश्चन संशयावकाश इति शिवम्।।

।।इति श्रीसिद्धान्तशिखामणिसमीक्षाग्रन्थः सम्पूर्णः।।

---

इस भावना से भावित वीरशैवाचार्यों ने सिद्धान्तशिखामणि में प्रतिपादित यह एक मात्र वीरशैवदर्शन ही सम्पूर्ण जगत् के हित एवम् अभ्युदय के लिए पूर्ण समर्थ है इस वृत्तान्त में किसी प्रकार के संशय की सावकाशता नहीं है।

।।शिवमस्तु।।

**यया विना योन बिभर्ति रूपं पृथग्यतो या न दधाति सत्ताम्।**
**तदात्मिकायै च तदात्मने च नमः शिवायै च नमः शिवाय।।**

***

# सहायक-ग्रन्थसूची

**संस्कृत**


१. अद्वैतब्रह्मसिद्धिः, कलकत्ता विश्वविद्यालय, कलकत्ता १९३२ ई०।

२. अद्वैतसिद्धिः, निर्णयसागर प्रेस, मुम्बई १९३७ ई०।

३. अनुभवसूत्रम् (तन्त्रसंग्रहः, भाग १), सं० सं० वि० वि० वाराणसी १९७० ई०।

४. अमरकोशः, निर्णयसागर प्रेस, बम्बई १९६९ ई०।

५. अर्थसंग्रहः, चौखम्बा संस्कृत सीरीज, वाराणसी १९७६ ई०।

६. ईशाद्यष्टोत्तरशतोपनिषदः, नि० सा० प्रेस, बम्बई १९२५ ई०।

७. ईशावास्योपनिषत् शाङ्करीव्याख्या, शङ्करविलास संस्कृत पाठशाला, मैसूर १९७६ ई०।

८. उपनिषद्वाक्यमहाकोशाः, गुजराती प्रिंटिंग प्रेस, बम्बई १९४० ई०।

९. ऋग्वेदसंहिता, वैदिक संशोधन मण्डल, पूना १९४१ ई०।

१०. एकाक्षरनामकोषसंग्रह, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर, १९६४ ई०।

११. कारिकावली, मुक्तावली-प्रभा-दिनकर्यादिटीकासमन्विता, बाल-मनोरमा प्रेस, मद्रास १९२३ ई०।

१२. किरणावली, उदयनाचार्यकृता, १०, रघुनाथ चटर्जी स्ट्रीट, कलकत्ता १९६३ बं०।

१३. किरातार्जुनीयम्, निर्णयसागर प्रेस,बम्बई १९२२ ई०।

१४. कुलार्णवतन्त्रम्, मोतीलाल बनारसीदास, दिल्ली १९७५ ई०।

१५. क्रियासारः, भाग १-३, प्राच्यविद्या संशोधनालय, मैसूर १९५४, ५७, ५८ ई०।

१६. गुरुवंशकाव्यम्, वाणीविलास मुद्रणालय, श्रीरङ्गम्।

१७. चन्द्रज्ञानागमः, काशीनाथ ग्रन्थमाला, मैसूर १९५६ ई०।

१८. तत्त्वप्रदीपिका (चित्सुखी) उदासीन संस्कृत विद्यालय, काशी १९५६ ई०।

१९. तत्त्वप्रदीपिका (चित्सुखी) उदासीन संस्कृत विद्यालय, काशी १९५६ ई०।

२०. तत्त्वावली, चन्द्रकान्ततर्कालङ्कारकृता, कलकत्ता १९२६ वि० सं०।
२१. तन्त्रयात्रा, रत्ना प्रकाशन, कमच्छा, वाराणसी १९८२ ई०।
२२. तन्त्राधिकारिनिर्णयः, राजराजेश्वरी मुद्रणालय, वाराणसी १९४५ वि० सं०।
२३. तन्त्रालोकः, काश्मीर संस्कृत ग्रन्थावलिः, श्रीनगर, १९३६ ई०।
२४. तर्कभाषा, चौखम्बा संस्कृत संस्थान, वाराणसी १९७७ ई०।
२५. तर्कभाषा, आचार्यबदरीनाथशुक्लकृतहिन्दीटीकायुता, मोतीलाल बनारसीदास, वाराणसी १९७६ ई०।
२६. तर्कसंग्रहः, नवटीकोपेतः, चौखम्भा संस्कृत संस्थान, वाराणसी १९७६ ई०।
२७. नयविवेकः, मद्रास विश्वविद्यालय, मद्रास १९३७ ई०।
२८. नैषधीयचरितम्, निर्णयसागर प्रेस, बम्बई १९२८ ई०।
२९. नैष्कर्म्यसिद्धिः, बनारस संस्कृत सीरीज, बनारस १८९० ई०।
३०. न्यायकुसुमाञ्जलिः, सं० सं० वि० वि०, वाराणसी १९७३ ई०।
३१. न्यायकोशः, भाण्डारकर प्राच्यविद्या संशोधनालय, पूना १९२८ ई०।
३२. न्यायदर्शनम्, चौखम्बा संस्कृत संस्थान, वाराणसी १९७० ई०।
३३. न्यायदर्शनम्, भाष्य-वार्त्तिक-तात्पर्यटीकासहितम्, एम० पी० एण्ड पी०एच० कलकत्ता १९३६ ई०।
३४. न्यायभूषणम्, षड्दर्शनप्रकाशनप्रतिष्ठानम्, वाराणसी १९६८ ई०।
३५. न्यायमञ्जरी, चौखम्बा संस्कृत सीरीज, वाराणसी १९७१ ई०।
३६. न्यायसारः, निर्णयसागर प्रेस, बम्बई १९१० ई०।
३७. न्यायसुधा, चौखम्बा संस्कृत सीरीज, वाराणसी १९०९ ई०।
३८. न्यायसूत्रवृत्तिः, मेडिकल हाल प्रेस, बनारस।
३९. न्यालीलावती, चौखम्बा संस्कृत सीरीज, वाराणसी १९३४ ई०।
४०. पञ्चदशी, भार्गव पुस्तकालय, वाराणसी १९५६ ई०।
४१. पातञ्जलयोगदर्शनम्, चौखम्बा संस्कृत संस्थान, वाराणसी १९७० ई०।
४२. पारमेश्वरतन्त्रम्, वीरशैवलिङ्गब्राह्मणग्रन्थमाला, सोलापुर १९०४ ई०।
४३. पाराशरस्मृतिः, श्रीवेङ्कटेश्वर स्टीम प्रेस, बम्बई १९८१ वि० सं०।
४४. प्रकरणपञ्चिका, चौखम्बा संस्कृत ग्रन्थमाला, वाराणसी १९०४ ई०।

४५. प्रकरणपञ्चिका, न्यायसिद्धिव्याख्यासंवलिता, काशी हिन्दू विश्वविद्यालय, वाराणसी १९६१ ई०।
४६. प्रत्यभिज्ञाहृदयम्, मोतीलाल बनारसीदास, वाराणसी १९७३ ई०।
४७. प्रभाकरविजयः, संस्कृत साहित्य परिषत्, कलकत्ता १९२६ ई०।
४८. प्रशस्तपादभाष्यम्, न्यायकन्दलीसंवलितम्, सं० सं० वि० वि०, वाराणसी १९७७ ई०।
४९. प्रस्थानभेदः, आनन्दाश्रम, पूना १९७७ ई०।
५०. बृहदारण्यकवार्त्तिकसारः, १-२ भाग, अच्युत ग्रन्थमाला, वाराणसी १९७७, १९९९ वि० सं०।
५१. बृहदारण्यकोपनिषत्, शाङ्करभाष्यम्, गीताप्रेस, गोरखपुर।
५२. ब्रह्मसूत्रपूर्णप्रज्ञभाष्यम्, श्रीनिम्बार्क पीठ, प्रयाग २०३१ वि० सं०।
५३. ब्रह्मसूत्रशाङ्करभाष्यम्, रत्नप्रभा-भामती-न्यायनिर्णयव्याख्यात्रयोपेतम्, निर्णयसागर प्रेस, बम्बई १९०९ ई०।
५४. ब्रह्मसूत्रशाङ्करीवृत्तिः, शङ्करविलास संस्कृत पाठशाला, मैसूर १९७४ ई०।
५५. ब्रह्मसूत्रश्रीकरभाष्यम्, १-२ भाग, प्राच्यविद्या संशोधनालय, मैसूर १९७७ ई०।
५६. भास्करी, सरस्वतीभवन टेक्स्ट नं० ८३, इलाहाबाद १९५० ई०।
५७. मनुस्मृतिः, मन्वर्थमुक्तावलीसमेता, खेमराज श्रीकृष्णदास, बम्बई १९४५ वि० सं०।
५८. महाभारतम् (वनपर्व, शान्तिपर्व), चित्रशाला प्रेस, पुणे १९३०, १९३२ ई०।
५९. मानमेयोदयः, षड्दर्शनप्रकाशनप्रतिष्ठानम्, वाराणसी १९७८ ई०।
६०. मीमांसादर्शनम्, शाबरभाष्यसहितम्, आनन्दाश्रम, पूना १९७६ ई०।
६१. मीमांसान्यायप्रकाशः, भाण्डारकर प्राच्यविद्या संशोधनालय, पूना १९७२ ई०।
६२. याज्ञवल्क्यस्मृतिः, निर्णयसागर प्रेस, बम्बई १९४२ ई०।
६३. योगवासिष्ठः, भाग १-२, निर्णयसागर प्रेस, बम्बई १९१८ ई०।
६४. योगसारसंग्रहः, मोतीलाल बनारसीदास, वाराणसी २०१४ वि० सं०।
६५. योगसूत्रभाष्यम्, तत्त्ववैशारदीसहितम्, जीवानन्द विद्यासागर, कलकत्ता १९४० ई०।

६६. योगसूत्रभोजवृत्तिः, जीवानन्द विद्यासागर, कलकत्ता, १९३६ ई०।
६७. रघुवंशमहाकाव्यम्, छन्नूलाल ज्ञानचन्द पाठक, वाराणसी
६८. रत्नत्रयम्, वाणीविलास मुद्रणालय, श्रीरङ्गम् १९२३ ई०।
६९. लिङ्गधारणचन्द्रिका, जंगमवाडी मठ, वाराणसी १९०५ ई०।
७०. वातुलशुद्धाख्यतन्त्रम् (तन्त्रसंग्रहः, भाग ) सं० सं० वि० वि०, वाराणसी १९७० ई०।
७१. वायुपुराणम्, खेमराज श्रीकृष्णदास, बम्बई १९३३ ई०।
७२. विवरणप्रमेयसंग्रहः, अच्युत ग्रन्थमाला, वाराणसी १९९६ वि० सं०।
७३. विशेषार्थप्रकाशिका, मुरुघामठ, धारवाड १९६१ ई०।
७४. विष्णुपुराणम्, खेमराज श्रीकृष्णदास, बम्बई १९६७ वि० सं०।
७५. वीरशैवधर्मशिरोमणिः, कन्यका परमेश्वरी प्रेस, मैसूर १९०८ ई०।
७६. वीरशैवसदाचारसंग्रहः, वीरशैवलिङ्गब्राह्मणग्रन्थमाला, सोलापुर १९०५ ई०।
७७. वीरशैवानन्दचन्द्रिका, मुरुसाविर मठ, हुबली १९३६ ई०।
७८. वेदान्तकल्पलतिका, भाण्डारकर प्राच्यविद्या संशोधनालय, पूना १९६२ ई०।
७९. वैदान्तपरिभाषा, चौखम्बा विद्याभवन, वाराणसी, १९७७ ई०।
८०. वेदान्तसारः, निर्णयसागर प्रेस, बम्बई १९३४ ई०।
८१. वेदान्तसारवीरशैवचिन्तामणिः, वी०लि०ब्रा० ग्रन्थमाला, सोलापुर १९०५ ई०।
८२. वेदान्तसिद्धान्तमुक्तावली, जीवानन्द विद्यासागर, कलकत्ता १९३५ ई०।
८३. वैराग्यशतकम्, चौखम्बा विद्याभवन, वाराणसी १९६७ ई०।
८४. वैशेषिकसूत्ररसायनव्याख्या, व्हि० एस्० वेङ्कट राघवाचार्य, मद्रास १९५८ ई०।
८५. वैशेषिकसूत्रोपस्कारः, चौखम्बा संस्कृत संस्थान, वाराणसी १९६९ ई०।
८६. शक्तिविशिष्टाद्वैतदर्शनम्, रम्भापुरी संस्थान मठ, बालेहोन्नूर, १९६१ ई०।
८७. शङ्करदिग्विजयः, ज्ञानमन्दिर, हरिद्वार, २००० वि० सं०।
८८. शास्त्रदीपिका, निर्णयसागर प्रेस, बम्बई, १९१५ ई०।
८९. शिवगीता, पीताम्बरा पीठ, दतिया, १९६० ई०।
९०. शिवतत्त्वरत्नाकरः, बी० एम्० नाथ एण्ड कं०, मद्रास १९२७ ई०।

९१. शिवतत्त्वरत्नाकरः, भाग १-२ प्राच्यविद्या संशोधनालय, मैसूर १९६४, १९६९ ई०।
९२. शिवमहापुराणम्, पण्डित पुस्तकालय, काशी २०२० वि० सं०।
९३. शिवसूत्रविमर्शिनी, काश्मीर संस्कृत ग्रन्थावलि, श्रीनगर १९९१ ई०।
९४. शिवाद्वैतदर्पणः, पूवल्ली बृहन्मठ ग्रन्थमाला, हूली १९२८ ई०।
९५. शिवाद्वैतपरिभाषा, काशीनाथ ग्रन्थमाला, मैसूर १९६४ ई०।
९६. शिवाद्वैतमञ्जरी, वीरशैवलिङ्गिब्राह्मणग्रन्थमाला, सोलापुर १९०९ ई०।
९७. शिवाद्वैतमञ्जरी, कन्नडटीकासहिता, काशीनाथ ग्रन्थमाला, मैसूर १९३४ ई०।
९८. श्रीकरभाष्यचतुःसूत्री, जंगमवाडी मठ, वाराणसी १९५६ ई०।
९९. श्रीमद्भगवद्गीता, अष्टटीकोपेता, मुंशीराम मनोहरलाल पब्लिशर्स प्रा० लि०, नई दिल्ली १९७८ ई०।
१००. श्रीमद्भगवद्गीता, शङ्करानन्दीव्याख्योपेता, अच्युत ग्रन्थमाला, वाराणसी २०२३ वि० सं०।
१०१. श्रीमद्भागवतम्, श्रीभागवत विद्यापीठ, अहमदाबाद २०२९, २०३१ वि० सं०।
१०२. श्रीशङ्कराचार्यविरचितप्रकरणग्रन्थाः, ओरियण्टल बुक एजेंसी, पूना १९५२ ई०।
१०३. श्लोकवार्त्तिकम्, न्यायरत्नाकरव्याख्यायुतम्, रत्ना पब्लिकेशन्स, वाराणसी १९७८ ई०।
१०४. षड्दर्शनसमुच्चयः, चौखम्बा संस्कृत सीरीज, वाराणसी १९०५ ई०।
१०५. संस्कृतसाहित्यविमर्शः, पं० द्विजेन्द्रनाथशास्त्रिकृतः, भारती प्रतिष्ठान, मेरठ, १९५६ ई०।
१०६. संक्षेपशारीरकम्, उदासीन संस्कृत विद्यालय, वाराणसी २०१५ वि० सं०।
१०७. सप्तपदार्थी, कलकत्ता संस्कृत सीरीज, कलकत्ता १९३४ ई०।
१०८. सर्वदर्शनसंग्रहः, चौखम्भा विद्याभवन, वाराणसी १९६४ ई०।
१०९. सर्वमतसंग्रहः, त्रिवेन्द्रं संस्कृत सीरीजि, त्रिवेन्द्रम्।
११०. सांख्यतत्त्वकौमुदी, सारबोधिनीयुता, नि० सा० प्रेस, बम्बई १९४० ई०।
१११. सांख्ययोगकोशः, आचार्यकेदारनाथत्रिपाठिकृतः, का० हि० वि० वि०, वाराणसी १९७४ ई०।

११२. सांख्यसूत्रप्रवचनभाष्यम्, जीवानन्द विद्यासागर, कलकत्ता १९३५ ई०।
११३. सांख्यसूत्रानिरुद्धवृत्तिः, जीवानन्द विद्यासागर, कलकत्ता १९३५ ई०।
११४. सारस्वती सुषमा (त्रैमासिकी अनुसंधानपत्रिका), सं० सं० वि० वि०, वाराणसी।
११५. सिद्धान्तकौमुदी, चौ० सं० सी०, वाराणसी १९६६ ई०।
११६. सिद्धान्तचन्द्रोदयः (तर्कसंग्रहव्याख्या), नि० सा० प्रे० बम्बई १८२२ श०सं०।
११७. सिद्धान्तबिन्दुः, दक्षिणामूर्ति मठ, वाराणसी १९७८ ई०।
११८. सिद्धान्तलेशसंग्रहः, अच्युत ग्रन्थमाला, वाराणसी २०११ वि० सं०।
११९. सिद्धान्तशिखामणिः, तत्त्वप्रदीपिकाख्यासहितः, भाग १-२, वीरशैवलिङ्ग-ब्राह्मणग्रन्थमाला, सोलापुर १९०५ ई०।
१२०. ,, एन्० आर० करिबसवशास्त्रिकृतः कन्नडतात्पर्यदीपिकासहितः, वीरशैवग्रन्थप्रकाशिकाग्रन्थावलिः, मैसूर १९२१ ई०।
१२१. ,, काशीनाथशास्त्रीकृतभावप्रकाशाख्यकन्नडव्याख्यासहितः, काशीनाथ ग्रन्थमाला, मैसूर १९७२ ई०।
१२२. सिद्धान्तशिखोपनिषद्वीरशैवभाष्यम्, काशीनाथ-ग्रन्थमाला, मैसूर, १९३० ई०।
१२३. सुप्रभेदागमान्तर्गतपञ्चाचार्यपञ्चमोत्पत्तिप्रकरणम्, वीरशैवलिङ्गिब्राह्मणग्रन्थमाला, सोलापुर १९०३ ई०।
१२४. सूक्ष्मागमः, काशीनाथ ग्रन्थमाला, मैसूर १९५६ ई०।
१२५. स्कन्दपुराणम्, खेमराज श्रीकृष्णदास, बम्बई १९६५ वि० सं०।
१२६. स्याद्वादमञ्जरी, श्रीरमद्रामचन्द्र आश्रम, बोरिया (गुजरात) १९७० ई०।
१२७. हनुमन्नाटकम्, चौखम्भा संस्कृत सीरीज, वाराणसी १९७८ ई०।

**हिन्दी**

१२८. कल्याण मासिक पत्रिका 'शिवाङ्क' गीताप्रेस, गोरखपुर १९९० वि० सं०।
१२९. निरीश्वरवाद भारतीय एवं पाश्चात्य, बिहार हिन्दी ग्रन्थ अकादमी, पटना १९७३ ई०।
१३०. न्यायपरिचय, म०म० पणिभूषण तर्कवागीश कृत, चौखम्बा विद्याभवन, वाराणसी १९६८ ई०।
१३१. न्यायप्रकाश, लक्ष्मीवेंकटेश्वर स्टीम प्रेस, बम्बई १९३४ ई०।

१३२. बसवेश्वर के वचन, १-२ भाग, कर्णाटक, विश्वविद्यालय, धारवाड, १९७८ ई०।
१३३. भारतीयदर्शन, चटर्जी एवं दत्त कृत, पुस्तक भण्डार, पटना द्वि० संस्करण।
१३४. भारतीयदर्शन, आचार्य बलदेव उपाध्याय कृत, चौखम्भा ओरियण्टालिया, वाराणसी १९७६ ई०।
१३५. भारतीयदर्शन, भाग २, डा० राधाकृष्णन्, राजपाल एण्ड संस, दिल्ली १९७२ ई०।
१३६. भारतीयदर्शन का इतिहास, भाग १, डा० एस्० एन्० दासगुप्त कृत, राजस्थान हिन्दी ग्रन्थ अकादमी, जयपुर १९७८ ई०।
१३७. भारतीय दर्शन में मोक्ष चिन्तन, अशोककुमार लाड कृत।
१३८. भारतीय न्यायशास्त्र एक अध्ययन, डॉ० ब्रह्ममित्र अवस्थीकृत, इन्द्र प्रकाशन, दिल्ली १९६७ ई०।
१३९. विचारचन्द्रोदय, पीताम्बरजी कृत, कर्णाटक प्रेस, बम्बई १८१९ ई०।
१४०. विचारसागर, खेमराज श्रीकृष्णदास, बम्बई १९६२ ई०।
१४१. विभिन्न धर्मों में ईश्वर कल्पना, डा० प्रभाकर माचवे तथा सुरेन्द्र नारायण दफ्तुआर कृत, बिहार हिन्दी ग्रन्थ अकादमी, १९७४ ई०।
१४२. वृत्तिप्रभाकर, आनन्द कुटीर ट्रस्ट, पुष्कर २०२६ वि० सं०।
१४३. वैशेषिक दर्शन : एक अध्ययन, श्रीनारायणमिश्र कृत, चौखम्बा संस्कृत सीरीज, वाराणसी १९६८ ई०।
१४४. शक्तिविशिष्टाद्वैतसिद्धान्त जङ्गमवाडी मठ, वाराणसी १९३७ ई०।
१४५. शैवमत, डा० यदुवंशी कृत, बिहार राष्ट्रभाषा परिषत्, पटना १९५५ ई०।
१४६. हिन्दुत्व, रामदास गौड़ कृत, शिवप्रसाद गुप्त, सेवा उपवन, वाराणसी १९३८ ई०।

**कन्नड**

१४७. अष्टावरणविवेक, श्री ष०ब्र० शम्भुलिङ्ग शिवाचार्य, बिजापुर १९२३ ई०।
१४८. मणिकान्ति, डा० ज०च० नि० कृत, एस्० एस्० चित्तरगी वागलकोट, १९५१ ई०।
१४९. मणिमुकुर प्रभे, ताराग्रन्थ प्रकाशन, धारवाड १९७६ ई०।

१५०. महादेवियक्कन वचनगलु, कर्णाटक विश्वविद्यालय, धारवाड १९७३ ई०।
१५१. वचनगलल्लि वीरशैव धर्मं, डा० एच्० तिप्पे रुद्रस्वामी कृत, डि० वि० के० मूर्ति, मैसूर १९६९ ई०।
१५२. वीरशैवसाहित्य मत्तु इतिहास, भाग १, बी० शिवमूर्तिशास्त्री कृत, शरणसाहित्य कार्यालय, बंगलोर, १९६२ ई०।
१५३. श्रीजगद्गुरुपञ्चाचार्य रे वीरशैवमत स्थापकरु, श्रीचन्द्रशेखर शास्त्री, रायचूर १९७१ ई०।
१५४. सिद्धराम शिवयोगि, कन्नड शोधप्रबन्ध, कर्णाटक विश्वविद्यालय, धारवाड, १९७५ ई०।
१५५. सिद्धान्तशिखामणि सौन्दर्यदर्शन, डा० ज० च० नि०, १९७६ ई०।
१५६. हिन्दू दर्शनसार, श्रीनिवासाचार्यकृत, मैसूर विश्वविद्यालय, मैसूर १९४० ई०।

**मराठी**

१५७. वीरशैवरत्न, काशीनाथशास्त्री कृत, जङ्गवाडी मठ, वाराणसी १९५२ ई०।

**अंग्रेजी**

१५८. इण्डियन फिलासफी, वाल्यूम २, डॉ० राधाकृष्णन्, डी० आर० भागी फार ब्लैकी एण्ड सन् प्रा० लि०, बाम्बे १९७७ ई०।
१५९. इण्ट्रोडक्शन टू श्रीकरभाष्य, वाल्यूम १, सी० हयवदन राव, बंगलोर १९३६ ई०।
१६०. ए हिस्ट्री आफ इण्डियन फिलासफी, वाल्यूम ५, डॉ०० एस० एन० दासगुप्त, कैम्ब्रिज यूनिवर्सिटी प्रेस १९५५ ई०।
१६१. ए हिस्ट्री आफ साउथ इण्डिया, के० ए० नीलकण्ठ शास्त्री, आक्सफोर्ड यूनिवर्सिटी प्रेस, १९६६।
१६२. ए हैण्डबुक आफ वीरशैविज्म, एस० सी० नन्दीमठ, मोतीलाल बनारसीदास, दिल्ली १९७९ ई०।
१६३. दी इण्डियन रिव्यू, (जर्नल), वाल्यूम १६, मई १९१५, मद्रास।









श्रीसिद्धान्तशिखामणि एक अपूर्व चिन्तामणि है। श्रीजगद्गुरु रेणुकाचार्य और अगस्त्य महर्षि के संवादरूप में विद्यमान इस ग्रन्थ में व्यक्तित्व विकास के १०१ स्थल बताये गये हैं। अन्तःकरण शुद्धि से लेकर आत्मज्ञान पर्यन्त जो साधना पद्धति है वह इस ग्रन्थ में विस्तार से प्रतिपादित है। इस ग्रन्थ के लेखक श्री शिवयोगी शिवाचार्य सिद्धयोगी एवं वेदागमों के परिनिष्ठित विद्वान् थे। दार्शनिक क्षेत्र के अन्तर्गत वे समन्वयवादी रहे। अतः इन्होंने ग्रन्थारम्भ में ''नोपहन्यानि युक्तिभिः'' इस युक्ति के द्वारा स्वयं भी किसी अन्य सिद्धान्तों का खण्डन न करते हुए दूसरों को भी खण्डन नहीं करने का उपदेश दिया है।

इस समन्वयात्मक सिद्धान्त की भारतीय षड् दर्शनों के साथ तुलनात्मक समीक्षा श्रीकाशीजगद्गुरु डॉ. चन्द्रशेखर शिवाचार्य महास्वामीजी ने अपने छात्रावस्था में शोध कार्य करके सम्पूर्णानन्द संस्कृत विश्वविद्यालय से विद्यावारिधि प्राप्त किया। इस शोध प्रबन्ध का प्रथम संस्करण १९८९ ई. में जंगमवाड़ीमठ के शैवभारती भवन से संस्कृत में प्रकाशित हुआ। मूल संस्कृत शोध प्रबन्ध के विषय में सम्पूर्णानन्द संस्कृत विश्वविद्यालय के तत्कालीन कुलपति प्रो. विश्वनाथ वेंकटाचलम, उसी विश्वविद्यालय के वेदान्तविभागध्यक्ष पं. देवस्वरूप मिश्र, सांख्ययोगतन्त्रागम विभागाध्यक्ष पं. व्रजवल्लभ द्विवेदी और उसी विश्वविद्यालय के अनुसन्धान निदेशक डॉ. भगीरथ प्रसाद त्रिपाठी ''वागीश शास्त्री'' आदि विद्वानों ने अपनी विद्वत्पूर्ण सम्मति देकर इस ग्रन्थ का गौरव बढ़ाया है। इस ग्रन्थ का अनुवाद श्रीमती भुवनेश्वरी भारद्वाज ने राष्ट्रभाषा हिन्दी में किया है। काशी जंगमवाड़ीमठ के शैवभारती शोध प्रतिष्ठान के ७३वें ग्रन्थ के रूप में यह मुद्रित हुआ है और काशीजगद्गुरु महास्वामीजी के पीठारोहण के रजत जयन्ती के उपलक्ष्य में ११.११.२०१४ के दिन यह ग्रन्थ लोकार्पित हुआ है। इसमें षड् दर्शनों का स्वतन्त्र रूप से परिचय एवं उनके सिद्धान्तों की समीक्षा श्रीसिद्धान्तशिखामणि के साथ की गयी है। दर्शनशास्त्र के विद्यार्थियों के लिए यह ग्रन्थ अत्यन्त उपयोगी है।

**प्रवीण कुमार द्विवेदी,** शोध छात्र
विशिष्ट संस्कृत अध्ययन केन्द्र,
जवाहरलाल नेहरू विश्वविद्यालय, नई दिल्ली - ६७

**शैव भारती शोध प्रतिष्ठान**
डी.३५/७७, जंगमवाडीमठ, वाराणसी - २२१००१

Rs. 1000

ISBN : 978-93-82639-13-8